बादरायणप्रणीतं

ब्रह्मसूत्रं नाम

# वेदान्तदर्शनम् ।

श्रीगोविन्दानन्दकृतया भाष्यरत्नप्रभाख्यया
टीकया भासितेन शाङ्करभाष्येण सहितम् ।

आसियाटिकाख्य-समाजानुमत्या
श्रीयुक्त-रामनारायण-विद्यारत्नेन
यत्नतः परिशोधितम् ॥

कलिकाताराजधान्यां
ब्याप्टिष्ट मिशन् यन्त्रे
सि, वि, लूइस् साहेबेन मुद्रितम् ।
शकाब्दाः १७८५ । खी १८६२ ।

# ADVERTISEMENT.

THIS Edition of the Vedánta Sútras was originally commenced by Dr Roer, who published two fasciculi, but it was discontinued on the suspension of the Bibliotheca Indica in 1856. Its publication was resumed in 1861, but, as Dr. Roer had left India, the task of editing it was entrusted to Pandit Ráma Náráyaṇa Vidyáratna. To ensure a correct text of the Commentary and Gloss, several MSS. have been compared,—of these an account is given in the Sanskrit Introduction. At the end of the work has been added the text of the Adhikaraṇa Málá of Bháratí-tírtha Yati, as this contains a useful summary of the different topics, with the arguments employed on both sides.

E B. C.

*Secy. B. A. S.*

*Calcutta, August 17th,* 1863.

आसादिताज्ञः खीष्टाब्दे अतोपुनरभूमिमे ।
तस्याः प्रारभतेमं च स ग्रन्थं मुद्रयाऽङ्कितुं ॥ १० ॥
अस्य षोडशपादस्य ग्रन्थस्य पादयुग्मके ।
मुद्रितेऽस्मद्देश्योऽसौ स्वदेशमगमत्तदा ॥ ११ ॥
गते तु तस्मिंस्तत् कार्यं स्थितमेव हि तद्दशम् ।
स्वसाधनमपेक्ष्यैव तद्धस्तेन हितार्थिना ॥ १२ ॥
सार्धात् संवत्सरादूर्ध्वं स्वदेशात् स पराऽऽगतः ।
किन्तु कार्यवशादत्रावस्थातुं प्रबभूव न ॥ १३ ॥
वङ्गदक्षिणपाश्चात्यभागावस्थानतः क्षमः ।
प्रारब्धं साधितुं केनाप्युपायेन स नाभवत् ॥ १४ ॥
एवं कतिषु वर्षेषु व्यतीतेषु चिरागतः ।
स लब्धवृत्तिरभवत् स्वदेशगमनोद्यतः ॥ १५ ॥
तद्देशसंसदारूढं साध्वर्थं सभ्यमण्डलम् ।
स मामन्ववृणत् तस्मिन् नियोजयितुमङ्कने ॥ १६ ॥
तस्मादध्यापकोऽध्यक्षः श्रीमान् क्वावेल ईदृशीं ।
धुरं समर्पयामास मद्धस्ते तस्य कर्मणः ॥ १७ ॥
मया तदनुसारेण प्रतिनैतत् समापितुम् ।
न कृता त्रुटिरेतस्मिन् यथामतिकृतोद्यमम् ॥ १८ ॥
पाठभेदप्रकाशाय मयैतच्छोधनाय च ।
पञ्चाहृतानि पुस्तानि तेषां प्रत्येकमङ्कितम् ॥ १९ ॥
मु-लब्धलक्षिता पुस्ती प्रथमा मुद्रिता हि सा ।
वर्धं चिह्नाङ्किता पूता द्वितीया लिखिता मता ॥ २० ॥

वर्धमानेश्वरसभासूरिणा सा सुरचिता ।
न्यायरत्नोपाधिना श्रीपद्मलोचनशर्मणा ॥ २१ ॥
का-ऽङ्काङ्किता तृतीया च लिखिता मोक्षधामतः ।
श्रीवाणेश्वरविद्यालङ्कारेणानीतरचिता ॥ २२ ॥
सो-चिह्नचिह्निता सोसाइटीपुस्तकालयस्थिता ।
चिमल्ल्याकारतो हस्तलिखिता तुर्यपुस्तिका ॥ २३ ॥
एषा तु टीकया युक्ता भाष्यरत्नप्रभाख्यया ।
टीकामाला पञ्चमी च प्रोक्तचिह्ना समालया ॥ २४ ॥
एता वंगाक्षरैः सर्वाः केवलां पञ्चमीं विना ।
नागराक्षरसम्बद्धां पवित्रां लिखिता बुधैः ॥ २५ ॥
एतेषां पुस्तकानान्तु पञ्चानां तुर्यपुस्तकम् ।
एतन्मुद्रणकार्यार्थमादर्शत्वे वृतं मया ॥ २६ ॥
मुद्रायन्त्रगृहात् प्रूफपत्रमङ्कितमागतम् ।
आदिपञ्चमपुस्ताभ्यामादौ शोधितमञ्जसा ॥ २७ ॥
ततस्तन्मुद्रितायातं संशोधनपुरःसरम् ।
द्वितीयेन तृतीयेन पुस्तेनापि च संस्कृतम् ॥ २८ ॥
ततः पाठान्तरयुतं संशोधनमुपस्थितम् ।
नीतानेकसमालोकं मुद्रणार्थं स्थिरीकृतम् ॥ २९ ॥
विचारासङ्गतं पाठान्तरं निम्ने निवेशितम् ।
तत्तत्पुस्तकबोधार्थसङ्केताक्षरलक्षितम् ॥ ३० ॥
भाष्यरत्नप्रभा रम्या वस्तुतो नात्र संशयः ।
कष्टमत्र त्विदं भग्नशेषपादा तृतीयके ॥ ३१ ॥

सोमाद्दटीप्पितं पुस्तोदयमेवावलम्बितम् ।
श्रस्था मुद्रासमाधानक्षमं तत्पादवर्जितम् ॥ ३२ ॥
महोदयेन रोरेण श्रीमताऽप्यवलम्बितम् ।
तदेव पुस्तकद्वन्द्वमेतत्कार्यप्रवर्त्तिना ॥ ३३ ॥
प्रकृतार्थोपयोगित्वात् कामिनी भामिनीव सा ।
यद्यङ्गसौष्ठवाऽस्थास्यदभविष्यत् परं सुखम् ॥ ३४ ॥
इमामङ्गीनसर्वाङ्गसौन्दर्यां कर्तुमुद्यमाः ।
विफलत्वं गता मेऽहं न दूयेऽत्र मनागपि ॥ ३५ ॥
श्रस्तीति सर्वविदितं विश्वकृत्सृष्टिकौशलम् ।
सर्वाङ्गसुन्दरं वस्तु स्पष्टं नापि सुरच्यते ॥ ३६ ॥
तत्पादभाष्यसंक्षिप्तटिप्पनीमात्रदित्सुना ।
मया विज्ञापितः श्रीमानिति कावेलकोविदः ॥ ३७ ॥
विशदीक्रियतामेष पादोऽगत्याऽन्यटीकया ।
साकल्येन समादिष्टं तदा तेनेति मां प्रति ॥ ३८ ॥
अतो मयाऽऽनन्दगिरेष्टीका तत्र निवेशिता ।
सा तत्त्वबोधिनीपुस्त्यालयस्याऽऽदर्शरूपिणी ॥ ३९ ॥
एतद्ग्रन्थस्य सूत्रांशप्रणेता वादरायणः ।
सूत्राण्यस्मिन् पञ्चशतं पञ्चपञ्चाशदुत्तरम् ॥ ४० ॥
भाष्यभागो भगवता प्रणीतः शङ्करेण तु ।
भाष्यरत्नप्रभाकारो गोविन्दानन्दपण्डितः ॥ ४१ ॥
ग्रन्थस्य त्रीणि नामानि सूत्रान्तानि यथाक्रमम् ।
ब्रह्मवेदान्तशारीरकादीनि कल्पितानि च ॥ ४२ ॥

तथैव मीमांसान्तानि चीण्यन्यानि यथाक्रमम् ।
पूर्व्ववत्तत्तदादीनि नामानि कल्पितानि च ॥ ४३ ॥
तथा व्यवहृते अन्ये वर्त्तेते नामनी शुभे ।
एकं ब्रह्मविचाराख्यं व्यासाधिकरणं परम् ॥ ४४ ॥
न्यायनामान्तरैश्चाधिकरणैः ख-भ-भूमितैः ।
वेदान्तवाक्यतात्पर्य्यैर्ग्रन्थोऽयं भागमागतः ॥ ४५ ॥
अस्याधिकरणव्यूहश्लोकसंग्रहरूपिणी ।
कस्यचिद्भारतीतीर्थाभिधस्यास्ते यतेः कृतिः ॥ ४६ ॥
सा तत्त्वबोधिनीयन्त्रे सटीकाऽनूदिताऽङ्किता ।
आनन्दचन्द्रवेदान्तवागीशेन च संस्कृता ॥ ४७ ॥
साऽप्येतत्सूत्रभाष्यीयनिखिलार्थोपयोगिनी ।
यत्नतो दर्शनीयेतीतः परं समसुद्यत ॥ ४८ ॥
सा त्वत्र गौरवभिया मूलमात्रैव मुद्रिता ।
तदाद्यानुक्रमणिकाश्लोकानां दशकं विना ॥ ४९ ॥
मूलश्लोकार्थसन्देहसन्दोहोद्घाटकुञ्चिका ।
विवृतिर्द्दर्शनीया चेत्, का चिन्ता, सा न दुर्लभा ॥ ५० ॥

फोर्ट उइलियम् कालेज ॥
शकाब्दे १७८५ ।

श्रीरामनारायण शर्म्मणः ।

# ब्रह्मसूत्रीयषोडशपादार्थदर्शनं

## निर्घण्टपत्रम्।

# व्यासाधिकरणार्थदर्शनं निर्घण्टपत्रम् ।

## समन्वयाख्यप्रथमाध्यायस्य प्रथमपादे ।



## उक्ताध्यायस्य द्वितीयपादे ।

## उक्ताध्यायस्य तृतीयपादे।

---

## उक्ताध्यायस्य चतुर्थपादे।



इति प्रथमाध्यायस्य समाप्तं ॥ ॰ ॥

---

## अविरोधाख्यद्वितीयाध्यायस्य प्रथमपादे।



## उक्ताध्यायस्य द्वितीयपादे।

## उक्ताध्यायस्य तृतीयपादे।

## उक्ताध्यायस्य चतुर्थपादे ।



इति द्वितीयाध्यायस्य समाप्तं ॥ ※ ॥

## साधनाख्यतृतीयध्यायस्य प्रथमपादे।



---

## उक्ताध्यायस्य द्वितीयपादे।



---

# उक्ताध्यायस्य तृतीयपादे।

---

## उक्ताध्यायस्य चतुर्थपादे।

इति तृतीयाध्यायस्य समाप्तं ॥ ※ ॥

## फलाख्यचतुर्थपादस्य प्रथमपादे।



---

## उत्ताध्यायस्य द्वितीयपादे।

## उत्तराध्यायस्य तृतीयपादे।



## उत्तराध्यायस्य चतुर्थपादे।

इति चतुर्थाध्यायस्य समाप्तम् ॥ ॥

# रत्नप्रभाभासितशाङ्करब्रह्मसूत्रभाष्यस्य शुद्धिपत्रं।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | २ | जनकजावरमनन्त-सुखाकृतिं | जनकजाङ्गमनन्त-सुखाकृतिं |
| १ | ११ | भार्यास्मितांऽस्य | भासा स्मितास्य |
| २ | १७ | सस्यादि | शस्यादि |
| २ | २८ | प्रतिष्ठा काम | प्रतिष्ठाकाम |
| ३ | १७ | स्वाध | स्वार्थ |
| ११ | २४ | लच्चण | लक्षणं |
| १४ | १७ | शून्यत्व | शून्यत्वं |
| १६ | १६ | व ते | वर्ण्यते |
| २५ | १४ | कर्म्मणा | कर्म्मणां |
| २६ | २८ | मुक्ति | मुक्तिः |
| २७ | २६ | प्रवृत्ति वैध | प्रवृत्तिबोध |
| २८ | ११ | प्रवर्त्तते | प्रवर्त्तते |
| ३२ | १७ | व्युत्पत्या | व्युत्पत्त्या |
| ३४ | १९ | शुक्तित्त्व | शुक्तित्व |
| ३५ | २९ | वदा | वेदा |
| ३५ | १० | विप्रतित्तीनां | विप्रतिपत्तीनां |
| ४० | १३ | मुख्य | मुख्य |
| ४२ | २१ | शाखास | शाखासु |
| ४६ | २२ | ज्ञात् | ज्ञानात् |
| ४८ | २७ | ज्ञात् | ज्ञानात् |
| ४९ | ५ | र्थत्व | र्थत्वं |
| ५० | २२ | दाद् | दीत् |
| ५१ | ५ | त्वाद् | त्वात् |
| ५२ | ९ | दीद् | दीत् |
| ५३ | ७ | तद् | तत् |

इह खलु "स्वाध्यायोऽध्येतव्य" इति नित्याध्ययनविधिनाऽधीतसाङ्गस्वाध्याये "तद्विजिज्ञासस्व" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इति श्रवणविधिरुपलभ्यते। तस्यार्थः। अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्त्तव्य इति। तेन कामेन नियमविधिनाऽर्थादेवा*न्यशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः। तत्र कश्चिदिह जन्मनि जन्मान्तरे वानुष्ठितयज्ञादिभिर्नितान्तं निर्मलस्वान्तोऽस्य श्रवणविधेः को विषयः? किं फलं? कोऽधिकारी? कः सम्बन्धः? इति जिज्ञासते। तं जिज्ञासमुपलभमानो भगवान् बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयाञ्चकार "अथातो ब्रह्मजिज्ञासा" इति।

नन्वनुबन्धजातं विधिसन्निहितार्थवादवाक्यैरेव ज्ञातुं शक्यं। तद्यथा "इह कर्म्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इति श्रुत्या "यत् कृतकं तदनित्यं" इति न्यायवत्या "न जायते म्रियते वा विपश्चित्" "यो वै भूमा तदमृतमन्यदार्त्तं" इत्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति विवेको लभ्यते। कर्म्मणा कृष्यादिना चितः सम्पादितः सस्यादिर्लोको भोग्य इत्यर्थः। विपश्चित् नित्यज्ञानस्वरूपः। "परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" "आत्मनस्तु कामाय सर्व्वं प्रियं भवति" इत्यादिश्रुत्या अनात्ममात्रे वैराग्यं लभ्यते। परीक्ष्यानित्यत्वेन निश्चित्य। अकृतो मोक्षः कृतेन कर्म्मणा नास्तीति। कर्म्मतत्फलेभ्यः वैराग्यं प्राप्नुयादित्यर्थः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुत्या शमादिषट्कं लभ्यते। "समाहितो भूत्वा" इति काण्वपाठः। उपरतिः सन्न्यासः। "न च पुनरावर्त्तते" इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते। तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यं। यथा "एता रात्रीरुपयन्तीति" रात्रिसत्रविधौ प्रतितिष्ठन्तीत्यर्थवादस्थप्रतिष्ठा कामकृत्। तथा "श्रोतव्य" इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः। विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुं। "आत्मा द्रष्टव्य"

---

* अर्थाद्विमा इति ७६५ संख्याक पुस्तकपाठः।

इत्यद्वैतात्मदर्शनमुद्दिश्य "श्रोतव्य" इति विचारविधानात्। न हि विचारः साक्षाद्दर्शनहेतुः अप्रमाणत्वात् अपि तु प्रमाणविषयत्वेन। प्रमाणञ्चाद्वैतात्मनि वेदान्ता एव। "तन्त्वौपनिषदं पुरुषं" "वेदान्तविज्ञानसुनिश्चितार्थाः" इति श्रुतेः। वेदान्तानाञ्च प्रत्यग्ब्रह्मैक्यं विषयः "तत्त्वमसि" "अहं ब्रह्मास्मि" इति श्रुतेः। एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः "तरति शोकमात्मवित्" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादि श्रुतेः। तथा सम्बन्धोऽप्यधिकारिणा विचारस्य कर्त्तव्यतारूपः फलस्य प्राप्यतारूप इति यथायोगं सुबोधः। तस्मादिदं सूत्रं व्यर्थमिति चेत्। न। तासामधिकार्य्यादिश्रुतीनां स्वार्थे तात्पर्य्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी उतान्यः? किं वेदान्ताः पूर्व्वतन्त्रेण गतार्था अगतार्था वा? किं ब्रह्म प्रत्यगभिन्नं न वा? किं मुक्तिः स्वर्गादिवत् लोकान्तरमात्मस्वरूपा वेति संशयानिवृत्तेः। तस्मादागमवाक्यैरापाततः प्रतिपन्नाधिकार्य्यादिनिर्णयार्थमिदं सूत्रमावश्यकं। तदुक्तं प्रकाशात्मश्रीचरणैः। "अधिकार्य्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रं" इति। येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्य्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापततीति इत्यलं प्रसङ्गेन।

तथा चास्य सूत्रस्य श्रवणविध्यपेक्षिताधिकार्य्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वात् हेतुहेतुमद्भावश्रुतिसङ्गतिः। शास्त्रारम्भहेत्वनुबन्धनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ सङ्गतिः। अधिकार्य्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसङ्गतिः। "ऐतदात्म्यमिदं सर्व्वं" "तत् सत्यं" "स आत्मा" "तत्त्वमसि" इत्यादिश्रुतीनां सर्व्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः पादसङ्गतिः। एवं सर्व्वसूत्राणां श्रुत्यर्थनिर्णायकत्वात् श्रुतिसङ्गतिः। तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन सङ्गतिरूहनीया। प्रमेयञ्च शास्त्रस्य ब्रह्म, अध्यायानां तु समन्वयाविरोधसाधनफलानि। तत्र प्रथमपादस्य स्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयः। द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानां। चतुर्थपादस्य पदमात्रसमन्वय इति भेदः। अस्याधिकरणस्य प्राथम्यान्नाधिकरणसङ्गतिरपेक्षिता।

अथाधिकरणमारभ्यते। "श्रोतव्य" इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं विषयः। तत् किमारब्धव्यं न वेति विषयप्रयोजनसम्भ-

वासम्भवाभ्यां संशयः। तत्र "नाहं ब्रह्म" इति भेदग्राहिप्रत्यक्षेण कर्तृत्वाकर्तृत्वादिविरुद्धधर्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासम्भवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासम्भवाच्चानारम्भणीयमिति प्राप्ते सिद्धान्तः "अथातो ब्रह्मजिज्ञासा" इति। अत्र श्रवणविधिसमानार्थत्वाय "कर्त्तव्या" इति पदमध्याहर्त्तव्यं। अध्याहृतञ्च भाष्यकृता "ब्रह्मजिज्ञासा कर्त्तव्या" इति। तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्त्तव्यत्वानन्वयात् प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते। प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया। तथा च "ब्रह्मज्ञानाय विचारः कर्त्तव्य" इति सूत्रस्य श्रौतार्थः सम्पद्यते। तत्र ज्ञानस्य स्वतः फलत्वायोगात् प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यं। तच्चानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात् सूचितं। तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः। तथा हि शास्त्रमारभ्यं विषयप्रयोजनवत्त्वाद् भोजनादिवत्। शास्त्रं प्रयोजनवद् बन्धनिवर्त्तकज्ञानहेतुत्वात् "रज्जुरियं" इत्यादिवाक्यवत्। बन्धो ज्ञाननिवर्त्त्योऽध्यस्तत्वात् रज्जुसर्पवत्, इति प्रयोजनसिद्धिः। एवमर्थाद् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिं फलं सूचयन् जीवब्रह्मणोरैक्यं विषयमप्यर्थात् सूचयति। अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः। जीवो ब्रह्माभिन्नः तज्ज्ञाननिवर्त्त्याध्यासाश्रयत्वात्, यदित्थं तत्तथा यथा शुक्त्यभिन्न इदमंश इति। विषयसिद्धिहेतुरध्यास इत्येव विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति। अत्र पूर्वपक्षे बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलं। सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेकः। इति सर्वं मनसि निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् भाष्यकारः सूत्रेण विचारकर्त्तव्यतारूपश्रौतार्थान्यथानुपपत्त्याऽर्थात् सूचितविषयप्रयोजनवत्त्वमुपोद्घातत्वात् तत्सिद्धिहेत्वध्यासाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति "युष्मदस्मत्प्रत्ययगोचरयोः" इति। एतेन सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति निरस्तं। आर्थिकार्थस्पर्शित्वात्।

यत्तु मङ्गलाचरणाभावादव्याख्येयमिदं भाष्यमिति। तन्न। स्वतरामितरेतरभावानुपपत्तिरित्यन्तभाष्यरचनार्थं तदर्थस्य सर्वोपप्लवरहितस्य विज्ञानघनप्रत्यगर्थस्य तत्त्वस्य स्मृतत्वात्। अतो निर्दोषत्वादिदं भाष्यं व्याख्येयं॥

ॐ नमो भगवते वासुदेवाय ॥

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्वि-

---

लोके शुक्ताविदं रजतमिति भ्रमः सत्यरजते इदं रजतमित्यधि-ष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्ट इति। अ-त्राप्यात्मन्यनात्माहङ्काराध्यासे पूर्वं प्रमा वाच्या, सा चात्मानात्मनो-र्वास्तवैक्यमपेक्षते, न हि तदस्ति। तथा हि आत्मानात्मानावैक्यशून्यौ परस्परैक्यायोग्यत्वात् तमःप्रकाशवदिति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च साधयति॥ युष्मदस्मत्प्रत्ययगोचरयो-रिति॥ न च "प्रत्ययोत्तरपदयोश्च" इति [पा०७।२।९८] सूत्रेण "प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्तः" इति वि-धानात् "त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्र" इतिवत् "त्वन्मत्प्रत्यय-गोचरयोः" इति स्यादिति वाच्यं। "त्वमावेकवचने" [पा० ७।२।९७] इत्येकवचनाधिकारात्। अत्र च युष्मदस्मदोरेकार्थवाचित्वाभावाद-नात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचैतन्यस्याप्युपाधितो बहुत्वात्।

नन्वेवं सति कथमत्र भाष्ये विग्रहः? न च "यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोरिति विग्रह" इति वाच्यं। शब्दसाधुत्वेऽप्यर्थासाधुत्वात्। न ह्यहङ्काराद्यनात्मनो यूयमिति प्रत्ययविषयत्वमस्तीति चेत्। न। गोचरपदस्य योग्यतापर-त्वात्। चिदात्मा तावदस्मत्प्रत्यययोग्यः। तत्प्रयुक्तसंशयादिनिवृत्ति-फलभाक्त्वात्, न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वा-दिति भाष्योक्तेश्च। यद्यप्यहङ्कारादिरपि तद्योग्यस्तथापि चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते।

आश्रमश्रीचरणास्तु टीकायोजनायामेवमाहुः। "सम्बोध्यचेतनो युष्मत्पदवाच्यः, अहङ्कारादिविशिष्टचेतनोऽस्मत्पदवाच्यः, तथा च यु-ष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशनियमो न लाक्षणिकयोः "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावाविति"[पा०८।१।२०] सूत्रासाङ्गत्यप्रसङ्गात् अत्र शब्दलक्षकयोरिव चिन्मात्रजडमात्रलक्ष-कयोरपि न त्वमादेशो लक्षकत्वाविशेषादिति"। यदि तयोः शब्दबो-धकत्वे सत्येव त्वमादेशाभाव इत्यनेन सूत्रेण ज्ञापितं तदाऽस्मिन् भाष्ये

रुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्म्माणामपि

---

युष्मत्पदेन युष्मच्छब्दजन्यप्रत्यययोग्यः परागर्थो लक्ष्यते, अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा। तथा च लक्ष्यतावच्छेदकतया शब्दोऽपि बोध्यत इति न त्वमादेशः। न च पराक्त्वप्रत्यक्त्वयोरेव लक्ष्यतावच्छेदकत्वं न शब्दयोग्यत्वांशस्य गौरवादिति वाच्यं। पराक्प्रतीचोर्विरोधस्फुरणार्थं विरुद्धशब्दयोग्यत्वस्यापि वक्तव्यत्वात्। अत एवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दोऽस्मदर्थे लोके वेदे च बहुशः "इमे वयमास्महे" "इमे विदेहाः" "अयमहमस्मि" इति च प्रयोगदर्शनात् नास्मच्छब्दविरोधीति मत्वा युष्मच्छब्दः प्रयुक्तः। इदंशब्दप्रयोगे विरोधास्फूर्त्तेः। एतेन चेतनवाचित्वादस्मच्छब्दः पूर्व्वं प्रयोक्तव्यः "अभ्यर्हितं पूर्व्वमिति न्यायात्" "त्यदादीनि सर्व्वैर्नित्यमिति" [पा०१।२।७२] सूत्रेण विहित एकशेषश्च स्यादिति निरस्तं। "युष्मदस्मदोरिति" सूत्र इवात्रापि पूर्व्वनिपातैकशेषयोरप्राप्तेः, एकशेषे विवक्षितविरोधास्फूर्त्तेश्च। वृद्धास्तु "युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणं" इत्याहुः। तत्र युष्मदस्मत्पदार्थाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोर्वस्तुतो विरोध उक्तः॥

प्रत्ययपदेन प्रतीतितो विरोध उक्तः। प्रतीयत इति प्रत्ययोऽहङ्कारादिरनात्मा दृश्यतया भाति, आत्मा तु प्रतीतित्वात् प्रत्ययः स्वप्रकाशतया भाति। गोचरपदेन व्यवहारतो विरोध उक्तः। युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्त्ताहमित्यादिव्यवहारगोचरः, अस्मदर्थस्त्वनात्मप्रविलापेन "अहं ब्रह्मेति" व्यवहारगोचर इति त्रिधा विरोधः स्फुटीकृतः। युष्मच्चास्मच्च युष्मदस्मदी, ते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ तयोस्त्रिधा विरुद्धस्वभावयोरितरेतरभावोऽत्यन्ताभेदस्तादात्म्यं वा तदनुपपत्तौ सिद्धायामित्यन्वयः। ऐक्यासम्भवेऽपि शुक्लो घट इतिवत्तादात्म्यं किं न स्यादित्यत आह॥ विषयविषयिणोरिति॥ चिज्जडयोर्विषयविषयित्वाद्दीपघटयोरिव न तादात्म्यमिति भावः। युष्मदस्मदी पराक्प्रत्यग्वस्तुनी, ते एव प्रत्ययस्य गोचरश्चेति विग्रहः। अत्र प्रत्ययगोचरपदाभ्यां आत्मानात्मनोः प्रत्यक्प-

सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि

---

अनात्मनो ग्राह्यत्वादचित्त्वं आत्मनस्तु ग्राहकत्वाच्चित्त्वं वाच्यं । अचित्त्वे स्वस्य स्वेन ग्रहस्य कर्म्मकर्तृत्वविरोधेनासम्भवादप्रत्यक्षत्वापत्तेरित्यर्थः । यथेष्टं वा हेतुहेतुमद्भावः । नन्वेवमात्मानात्मनोः पराक्प्रत्यक्त्वेन चिदचित्त्वेन ग्राह्यग्राहकत्वेन च विरोधात् तमःप्रकाशवदैक्यस्य तादात्म्यस्य वानुपपत्तौ सत्यां तत्प्रमित्यभावेनाध्यासाभावेऽपि तद्धर्म्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासोऽस्त्वित्यत आह ॥ तद्धर्म्माणामपीति ॥ तयोरात्मानात्मनोर्धर्म्मास्तद्धर्म्मास्तेषामपि इतरेतरभावानुपपत्तिः । इतरत्र धर्म्मान्तरे इतरेषां धर्म्माणां भावः संसर्गस्तस्यानुपपत्तिरित्यर्थः । न हि धर्म्मिणोः संसर्गं विना धर्म्माणां विनिमयोऽस्ति । स्फटिके लोहितवस्तुसान्निध्यात् लौहित्यधर्म्मसंसर्गः । असङ्गात्मधर्म्मिणः केनाऽप्यसंसर्गाद्धर्म्मिसंसर्गपूर्व्वको धर्म्मसंसर्गः कुतस्त्य इत्यभिप्रेत्योक्तं ॥ सुतरामिति ॥ नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्म्मसंसर्गस्य चाभावेऽप्यध्यासः किं न स्यादित्यत आह ॥ इत्यत इति ॥ इत्युक्तरीत्या तादात्म्याद्यभावेन तत्प्रमाया अभावादतः प्रमाजन्यसंस्कारस्याध्यासहेतोरभावादध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः । मिथ्याशब्दो द्व्यर्थः, अपह्नववचनः अनिर्वचनीयतावचनश्चेति । अत्र चापह्नवार्थः । ननु कुत्र कस्याध्यासोऽपह्नूयते इत्याशङ्क्य आत्मन्यनात्मतद्धर्म्माणां अनात्मन्यात्मतद्धर्म्माणामध्यासो निरस्यत इत्याह ॥ अस्मत्प्रत्ययगोचर इत्यादिना ॥ अहमितिप्रत्यययोग्यत्वं बुद्ध्यादेरप्यस्तीति मत्वा तत आत्मानं विवेचयति ॥ विषयिणीति ॥ बुद्ध्यादिसाक्षिणीत्यर्थः । साक्षित्वे हेतुः ॥ चिदात्मक इति ॥ अहमिति भासमाने चिदंशात्मनीत्यर्थः ॥ युष्मत्प्रत्ययगोचरस्येति ॥ त्वंकारयोग्यस्य इदमर्थस्येति यावत् । नन्वहमिति भासमानबुद्ध्यादेः कथमिदमर्थत्वमित्यत आह ॥ विषयस्येति ॥ साक्षिभास्यस्येत्यर्थः । साक्षिभास्यत्वरूपलक्षणयोगाद् बुद्ध्यादेर्घटादिवदिदमर्थत्वं न प्रतिभासत इति भावः । अथ वा यदात्मनो मुख्यं सर्व्वान्तरत्वरूपं प्रत्यक्त्वं प्रतीतित्वं ब्रह्मास्मीति व्यवहारगोचरत्वं चोक्तं तदसिद्धं, अहमिति प्रतीयमानत्वात् अहङ्कारवदित्याशङ्क्याह ॥ अस्मत्प्रत्ययगोचर इति ॥ अस्मच्चासौ प्रत्ययश्चासौ गोचरश्च तस्मिन्नित्यर्थः । अहंवृत्त्य-

चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः।

---

शस्फुरणत्वं स्फुरणविषयत्वं वा हेतुः। आद्ये दृष्टान्ते हेत्वसिद्धिः। द्वितीये तु पक्षे तदसिद्धिरित्यात्मनो मुख्यं प्रत्यक्त्वादि युक्तमिति भावः। ननु यदात्मनो विषयित्वं तदसिद्धं "अनुभवामि" इति शब्दवत्त्वात् अहङ्कारवदित्यत आह ॥ विषयिणीति॥ वाच्यत्वं लक्ष्यत्वं वा हेतुः। नाद्यः। पक्षे तदसिद्धेः। नान्त्यः। दृष्टान्ते तदैकल्यादिति भावः। "देहं जानामि" इति देहाहङ्कारयोर्विषयविषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदात्माहङ्कारयोरप्यध्यासः स्यादित्यत आह॥ चिदात्मक इति। तयोर्जाड्याल्पत्वाभ्यां सादृश्यादध्यासेऽपि चिदात्मन्यनवच्छिन्ने जडात्माहङ्कारादेर्नाध्यास इति भावः। "अहं" इति भास्यत्वादात्मवदहङ्कारस्यापि प्रत्यक्त्वादिकं मुख्यमेव, ततः पूर्वोक्तपराक्त्वासिद्धिरित्याशङ्क्याह॥ युष्मदिति॥ अहंवृत्तिभास्यत्वमहङ्कारे नास्ति कर्तृकर्मत्वविरोधात्, चिद्भास्यत्वं चिदात्मनि नास्ति इति हेत्वसिद्धिः। अतो बुद्ध्यादेः प्रतिभासतः प्रत्यक्त्वेऽपि पराक्त्वादिकं मुख्यमेवेति भावः। युष्मत् पराक् तच्चासौ प्रतीयत इति प्रत्ययश्चासौ कर्तृत्वादिधर्मवदहङ्कारगोचरश्च तस्येति विग्रहः। तस्य हेयत्वार्थमाह॥ विषयस्येति॥ षिञ् बन्धने। विषिणोति बध्नाति इति विषयस्तस्येत्यर्थः। आत्मन्यनात्मतद्धर्माध्यासो मिथ्या भवतु, अनात्मन्यात्मतद्धर्माध्यासः किं न स्यात्? "अहं स्फुरामि" "सुखी" इत्याद्यनुभवादित्याशङ्क्याह॥ तद्विपर्ययेणेति॥ तस्मादनात्मनो विपर्ययो विरुद्धस्वभावश्चैतन्यं, इत्थम्भावे तृतीया। चैतन्यात्मना विषयिणस्तद्धर्माणाञ्च योऽहङ्कारादौ विषयेऽध्यासः स मिथ्येति नास्तीति भवितुं युक्तं अध्याससामग्र्यभावात्। न ह्यत्र पूर्वप्रमाहितसंस्कारसादृश्यमज्ञानं वास्ति। निरवयवनिर्गुणस्वप्रकाशात्मनिर्गुणावयवसादृश्यस्य चाज्ञानस्य चायोगात्।

नन्वात्मनो निर्गुणत्वे तद्धर्माणामिति भाष्यं कथमिति चेत्। उच्यते। शुभकबुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं विषयाभेदेनाभिव्यक्तं स्फुरणं। शुभकर्मजन्यवृत्तिव्यक्तमानन्द इत्येवं वृत्त्युपाधिकृतभेदात् ज्ञानादीनामात्मधर्मत्वव्यपदेशः। तदुक्तं टीकायां "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त" इति। अतो

तद्विपर्य्ययेण विषयिणस्तद्धर्म्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तं। तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्म्मांश्चाध्यस्येतरेतरा*विवेकेनात्यन्तविविक्तयोर्धर्म्मधर्म्मिणोर्मिथ्याज्ञाननि-

---

निर्गुणब्रह्मात्मत्वमते "अहङ्करोमि" इति प्रतीतेरर्थस्य चाध्यासत्वायोगात् प्रमात्वं। "अहं नर इति सामानाधिकरण्यस्य गौणत्वमिति" मतमास्थेयं। तथा च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासम्भवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन विषयासम्भवात् शास्त्रं नारम्भणीयमिति पूर्व्वपक्षभाष्यतात्पर्य्यं। युक्तग्रहणात् पूर्व्वपक्षस्य दुर्बलत्वं सूचयति। तथा हि किमध्यासस्य नास्तित्वमयुक्तत्वादभानाद्वा कारणाभावाद्वा? आद्य इष्ट इत्याह॥ तथापीति॥ एतदनुरोधादादौ यद्यपीति पठितव्यं। अध्यासस्यासङ्गस्वप्रकाशात्मन्ययुक्तत्वमलङ्कार इति भावः। न द्वितीय इत्याह॥ अयमिति॥ "अज्ञः कर्त्ता मनुष्योऽहं" इति प्रत्यक्षानुभवादध्यासस्याभानमसिद्धमित्यर्थः। न चेदं प्रत्यक्षं कर्त्तृत्वादौ प्रमेति वाच्यं। अपौरुषेयतया निर्द्दोषेणोपक्रमादिलिङ्गावधृततात्पर्य्येण च "तत्त्वमस्यादि" वाक्येनाकर्त्तृब्रह्मबोधनेनास्य भ्रमत्वनिश्चयात्। न च ज्येष्ठप्रत्यक्षविरोधादागमज्ञानस्यैव बाध इति वाच्यं देहात्मवादप्रसङ्गात्। "मनुष्योऽहं" इति प्रत्यक्षविरोधेन "अयमयमशरीर" इत्यादिश्रुत्या देहान्यात्मासिद्धेः। "तस्मादिदं रजतं" इति वत् सामानाधिकरण्यप्रत्यक्षस्य भ्रमत्वशङ्काकलङ्कितस्य नागमात् प्राबल्यमित्यास्थेयं। किञ्च ज्येष्ठत्वं पूर्व्वभावित्वं वा? आगमज्ञानं प्रत्युपजीव्यत्वं वा? आद्ये न प्राबल्यं। ज्येष्ठस्यापि रजतभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्शनात्। न द्वितीयः। आगमज्ञानोत्पत्तौ प्रत्यक्षादिमूलवृद्धव्यवहारे च संगतिग्रहद्वारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्यत्वेऽपि तात्त्विकप्रामाण्यस्यानपेक्षितत्वादनपेक्षितांशस्यागमेन बाधसंभवादिति।

यत्तु क्षणिकयागस्य श्रुतिबलात् कालान्तरभाविफलहेतुत्ववत् "तथा विद्वान्नामरूपाद्विमुक्त" इति श्रुतिबलात् सत्यस्यापि ज्ञाना-

---

* विवेकेनात्यन्तविविक्तयोः मु० पु० पाठः।

मित्त सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽय

---

न्निवृत्तिसम्भवादध्यासवर्णनं व्यर्थमिति तन्न। ज्ञानमात्रनिवर्त्यस्य क्वापि सत्यत्वादर्शनात्, सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च, अयोग्यता निश्चये सति सत्यबन्धस्य ज्ञानान्निवृत्तिश्रुतेर्बोधकत्वायोगात्। न च सेतुदर्शनात सत्यस्य पापस्य नाशदर्शनान्नायोग्यतानिश्चय इति वाच्य। तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वात, बन्धस्य च "नान्य पन्था" इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीते। अत अतज्ञाननिवर्त्त्यत्वनिर्वाहार्थमध्यस्तत्व वर्णनीय। किञ्च ज्ञानैकनिवर्त्त्यस्य किं नाम सत्यत्व? न तावदज्ञानाजन्यत्व। "मायान्तु प्रकृति" इति श्रुतिविरोधात मायाविद्ययोरैक्यात्। नापि स्वाधिष्ठाने स्वाभावशून्यत्व। "अस्थूल" इत्यादि निषेधश्रुतिविरोधात्। नापि ब्रह्मवद्बाधायोग्यत्व ज्ञानान्निवृत्तिश्रुतिविरोधात्। अथ व्यवहारकाले बाधशून्यत्व। तर्हि व्यावहारिकमेव सत्यत्वमित्यागत*मध्यस्तत्व। तच्च श्रुत्यर्थे योग्यताज्ञानार्थं वर्णनीयमेव यागस्यापूर्व्वद्वारत्ववत। न च तदनन्यत्वाधिकरणे तस्य वर्णनात पौनरुक्त्यं। तत्रोक्ताध्यासस्यैव प्रत्यक्त्वविषयादिसिद्ध्यर्थमादौ स्मार्य्यमाणत्वादिति दिक्। अध्यास द्वेधा दर्शयति॥ लोकव्यवहार इति। लोक्यते • मनुष्योऽहमित्यभिमन्यत इति लोकोऽर्थाध्यास तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यासो दर्शित। द्विविधाध्यासस्वरूपलक्षणमाह॥ अन्योन्यस्मिन्नित्यादिना धर्म्मधर्म्मिणोरित्यन्तेन॥ जाड्यचैतन्यादिधर्म्माणां धर्म्मिणावहङ्कारात्मानौ तयोरत्यन्तभिन्नयोरितरेतरभेदाग्रहेणान्योन्यस्मिन् अन्योन्यतादात्म्य अन्योन्यधर्म्मांश्च अध्यासेनाध्यस्य लोकव्यवहार इति योजना। अत "सोऽय" इति प्रमाया नाध्यासत्व तदिदमर्थयो कालभेदेन कल्पितभेदेऽपि अत्यन्तभेदाभावात, इति वक्तुमत्यन्तेत्युक्तं। न च धर्म्मितादात्म्याध्यासे धर्म्माध्यासासिद्धे "धर्म्मांश्चेति" व्यर्थमिति वाच्य। अन्धत्वादीनामिन्द्रियधर्म्माणां धर्म्म्यध्यासास्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात। अन्यात्मानात्मनो परस्पराध्यस्तत्वे शून्यवाद स्यादित्याशङ्क्याह॥ सत्यानृते मिथुनीकृत्येति॥ सत्यमनिद चैतन्य, तस्यानात्मनि संसर्गमात्राध्यासो न स्वरूप

---

* सत्यत्वमित्यध्यस्तत्वमिति १९९ स० पुस्तकपाठ।

पस्य। अन्तत युष्मदर्थं तस्य स्वरूपतोऽप्यध्यासात् तयोर्मिथुनीकरण-
मध्यास इति न शून्यतेत्यर्थः।

नन्वध्यासमिथुनीकरणलोकव्यवहारशब्दानामेकार्थत्वेऽध्यस्य मिथु-
नीकृत्येति पूर्व्वकालत्ववाचि "त्वा" प्रत्ययादेशस्य ल्यपः कथं प्रयोग इति
चेन्न अध्यासव्यक्तिभेदात्। तत्र पूर्व्वपूर्व्वाध्यासस्योत्तरोत्तराध्यासं प्रति
संस्कारद्वारा पूर्व्वकालत्वेन हेतुत्वद्योतनार्थं ल्यपः प्रयोगः। तदेव स्पष्ट-
यति॥ नैसर्गिक इति॥ प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहोऽना-
दिरित्यर्थः। ननु प्रवाहस्यावस्तुत्वादध्यासव्यक्तीनां सादित्वात् कथम-
नादित्वमिति चेत्? उच्यते। अध्यासत्वावच्छिन्नव्यक्तीनां मध्येऽन्यतमया
व्यक्त्या विनाऽनादिकालस्यावर्त्तनं कार्य्यानादित्वमिति, अङ्गीकारात्।
एतेन कारणाभावादिति वाच्यो निरस्तः संस्कारस्य निमित्तस्य नैस-
र्गिकपदेनोक्तत्वात्। न च पूर्व्वप्रमाजन्य एव संस्कारो हेतुरिति वाच्य
लाघवेन पूर्व्वानुभवजन्यसंस्कारस्य हेतुत्वात्। अतः पूर्व्वाध्यासजन्यसं
स्कारोऽस्तीति सिद्धं अध्यासस्योपादानमाह॥ मिथ्याज्ञाननिमित्त
इति॥ मिथ्या च तदज्ञानञ्च मिथ्याज्ञानं तन्निमित्तमुपादानं यस्य स
तन्निमित्तस्तदुपादान इत्यर्थः। अज्ञानस्योपादानत्वेऽपि संस्फुरदात्म
तत्त्वावरकतया दोषत्वेनाहङ्काराध्यासकर्त्तुरीश्वरस्योपाधित्वेन संस्का-
रकालकर्म्मादिनिमित्तपरिणामित्वेन च निमित्तत्वमिति द्योतयितुं नि
मित्तपदं। स्वप्रकाशात्मन्यसङ्गे कथमविद्यासङ्गः संस्कारादिसामग्र्यभा-
वात, इति शङ्कानिरासार्थं मिथ्यापदं। प्रचण्डमार्त्तण्डमण्डले पेचका-
नुभवसिद्धान्धकारवत् "अहमज्ञः" इत्यनुभवसिद्धमज्ञानं दुरपह्नवं
कल्पितस्याधिष्ठानास्पर्शित्वात् नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति।
यद्वा अज्ञानं ज्ञानाभाव इति शङ्कानिरासार्थं मिथ्यापदं। मिथ्यात्वे
सति साक्षाज्ज्ञाननिवर्त्त्यत्वमज्ञानस्य लक्षणं मिथ्याज्ञानपदेनोक्तं।
ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्त्यत इति वदन्तं प्रति मिथ्यात्वे सती-
त्युक्तं। अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्त्यबन्धेऽतिव्याप्तिनिरासाय सा
क्षादिति। अनाद्युपादानत्वे सति मिथ्यात्वं वा लक्षणं। ब्रह्मनिरासार्थं
मिथ्यात्वमिति। मृदादिनिरासार्थमनादीति। अविद्यात्मनो सम्बन्ध-
निरासार्थमुपादानत्वे सतीति। सम्प्रति अध्यासं दृढयितुमभिलपति॥
अहमिदं ममेदमिति॥ आध्यात्मिककार्य्याध्यासेष्वहमिति प्रथमोऽध्या-
सः। न चाधिष्ठानारोप्यांशद्वयानुपलम्भात् नायमध्यास इति वाच्य।

लोकव्यवहारः। आह कोऽयमध्यासो नामेति? उच्यते। स्मृति-

---

"अयो दहति" इतिवत् "अहमुपलभे" इति दृक्दृश्यांशयोरुपलम्भात्। इदंपदेन भोग्यः संघात उच्यते। "अत्राहमिदं" इत्यनेन "मनुष्योऽहं" इति तादात्म्याध्यासो दर्शितः। "ममेदं शरीरं" इति संसर्गाध्यासः।

ननु देहात्मनोस्तादात्म्यमेव संसर्ग इति चेत्। सत्यं। सत्यैक्ये सति मिथोऽभेदस्तादात्म्यं। तत्र "मनुष्योऽहम्" इत्यैक्यांशभानं "ममेदमिति" भेदांशरूपसंसर्गभानमिति भेदः। एवं सामग्रीसत्त्वादनुभवसत्त्वादध्यासोऽस्तीत्यतो ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वात् शास्त्रमारम्भणीयमिति सिद्धान्तभाष्यतात्पर्यं। एवञ्च सूत्रेणार्थात् सूचिते विषयप्रयोजने प्रतिपाद्य तद्धेतुमध्यासं लक्षणसम्भावनाप्रमाणैः साधयितुं लक्षणं पृच्छति॥ आहेति॥ किंलक्षणकोऽध्यास इत्याह पूर्ववादीत्यर्थः। अस्य शास्त्रस्य तत्त्वनिर्णयप्रधानत्वेन वादकथात्वद्योतनार्थं आहेति परोक्तिः। "आहेत्यादि" "कथं पुनः प्रत्यगात्मनीत्यन्त"मध्यासलक्षणपरं भाष्यं तदारभ्य संभावनापरं। "तमेतमविद्याख्य" इत्यारभ्य "सर्वलोकप्रत्यक्ष" इत्यन्तं प्रमाणपरमिति विभागः। लक्षणमाह॥ उच्यते स्मृतिरूप इति॥ अध्यास इत्यनुषङ्गः। अत्र परत्रावभास इत्येव लक्षणं। शिष्टं पदद्वयं तदुपपादनार्थं। तथाहि अवभास्यत इत्यवभासो रजताद्यर्थः तस्यायोग्यमधिकरणं परत्रपदार्थः। अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभाववत्त्वं तद्वत्त्वं वा? तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववति अवभास्यत्वमध्यस्तत्वमित्यर्थः। इदञ्च साधनाद्यध्याससाधारणं लक्षणं। संयोगेऽतिव्याप्तिनिरासाय एकावच्छेदेनेति। संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यव-भास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रावच्छेदकभेदान्नातिव्याप्तिः। पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिनिरासाय संसृज्यमान इति पदं। तेनावभासकाले प्रतियोगिसंसर्गस्य विद्यमानत्वं बोध्यते इति नातिव्याप्तिः। भूतलावच्छेदेनावभास्यगन्धेऽतिव्याप्तिवारणाय स्वात्यन्ताभाववतीति पदं। शुक्त्याविदंत्वावच्छेदेन रजतसंसर्गकालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिः। नन्वत्र लक्षणस्यासम्भवः शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वात्। न च [illegible]-

: परत्र पूर्व्वदृष्टावभासः। तं केचिद् "अन्यत्रान्यधर्माध्यास"

---

स्यैव परत्र शुक्तावनवभास्यत्वेनाध्यस्तत्वोक्तिरिति वाच्यं अन्यथाख्या-
प्रसङ्गादित्यत आह॥ स्मृतिरूप इति॥ स्मर्य्यते इति स्मृतिः सत्यर-
ादिः तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्य्यमाणसदृश इत्यर्थः।
दृश्योक्त्या स्मर्य्यमाणादारोप्यस्य भेदान्नान्यथाख्यातिरित्युक्तं भवति।
दृश्यमुपपादयति॥ पूर्व्वदृष्टेति॥ दृष्टं दर्शनं संस्कारद्वारा पूर्व्व-
र्शनादवभास्यत इति पूर्व्वदृष्टावभासः। तेन संस्कारजन्यज्ञानविष-
त्वं स्मर्य्यमाणारोप्ययोः सादृश्यमुक्तं भवति स्मृत्यारोपयोः संस्कार-
न्यत्वात्। न च संस्कारजन्यत्वादारोपस्य स्मृतित्वापत्तिरिति वाच्यं
ाषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन संस्कारमात्रजन्यत्वाभावात्।
त्र संप्रयोगशब्देन अधिष्ठानसामान्यज्ञानमुच्यते। अहङ्काराध्यासे
न्द्रियसंप्रयोगाभावात्। एवञ्च दोषसंप्रयोगसंस्कारबलाच्छुक्त्यादौ
जतमुत्पन्नमस्तीति परत्र परावभासत्वलक्षणमुपपन्नमिति स्मृतिरूप-
र्व्वदृष्टपदाभ्यामुपपादितं। अन्ये तु "ताभ्यां दोषादित्रयजन्यत्व कार्य्या-
ध्यासलक्षणमुक्तं" इत्याहुः। अपरे तु "स्मृतिरूपः स्मर्य्यमाणसदृशः"
सादृश्यञ्च प्रमाणाजन्यज्ञानविषयत्वं, स्मृत्यारोपयोः प्रमाणाजन्यत्वात्
पूर्व्वदृष्टपदं तज्जातीयपरं, अभिनवरजतादेः पूर्व्वदृष्टत्वाभावात्;
तथाच प्रमाणाजन्यज्ञानविषयत्वे सति पूर्व्वदृष्टजातीयत्वं प्रातीतिका-
ध्यासलक्षणं ताभ्यामुक्तं; परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणं व्या-
ख्यातमेव; तत्र स्मर्य्यमाणगङ्गादावभिनवघटे चातिव्याप्तिनिरासाय
प्रमाणेत्यादिपदद्वयं" इत्याहुः। तत्रार्थाध्यासे स्मर्य्यमाणसदृशः परत्र
पूर्व्वदर्शनादवभास्यत इति योजना। ज्ञानाध्यासे तु स्मृतिसदृशः परत्र
पूर्व्वदर्शनादवभासत इति वाक्यं योजनीयं इति संक्षेपः। ननु अध्यासे
वादिविप्रतिपत्तेः कथमुक्तलक्षणसिद्धिरित्याशङ्क्याधिष्ठानारोप्यस्वरूप-
विवादेऽपि "परत्र परावभास" इति लक्षणे संवादाद्युक्तिभिः सत्या-
धिष्ठाने मिथ्यार्थावभाससिद्धेः सर्व्वतन्त्रसिद्धान्त इदं लक्षणमिति मत्वा
अन्यथात्मख्यातिवादिनोर्म्मतमाह॥ तं केचिदिति॥ केचिदन्यथाख्याति-
वादिनोऽन्यत्र शुक्त्यादावन्यधर्म्मस्य स्वावयवधर्म्मस्य देशान्तरस्थरूप्यादे-
रध्यास इति वदन्ति। आत्मख्यातिवादिनस्तु वाह्यशुक्त्यादौ बुद्धिरूपा-

न्ति। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवंलक्षणमध्यासं पण्डिता "अविद्या" इति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं "विद्याम्" आहुः। तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते। तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमा-

---

तथापीन्द्रनीलकटाहकल्पं नभो मलिनं पीतमित्येवमपरोक्षमध्यस्यन्ति। तत्रेन्द्रियग्राह्यत्वं नास्तीति व्यभिचारान्न व्याप्तिः। एतेनात्मानात्मनोः सादृश्याभावान्नाध्यास इत्यपास्तं। नीलनभसोस्तदभावेऽप्यध्यासदर्शनात्। सिद्धान्ते त्वालोकाकारचाक्षुषवृत्तिव्यक्तसाक्षिवेद्यत्वं नभस इति ध्येयं। संभावनां निगमयति॥ एवमिति॥ ननु ब्रह्मज्ञाननाश्यत्वेन सूत्रितामविद्यां हित्वा अध्यासः किमिति वर्ण्यत इत्यत आह॥ तमेतमिति॥ आक्षिप्तं समाहितमुक्तलक्षणलक्षितमध्यासमविद्याकार्यत्वादविद्येति मन्यन्त इत्यर्थः। विद्यानिवर्त्यत्वाच्चास्याविद्यात्वमित्याह। तद्विवेकेनेति॥ अध्यस्तनिषेधेनाधिष्ठानस्वरूपनिर्धारणं विद्यामध्यासनिवर्त्तिकामाहुरित्यर्थः। तथापि कारणाविद्यां त्यक्त्वा कार्याविद्या किमिति च वर्ण्यत इत्यत आह॥ तत्रेति॥ तस्मिन्नध्यासे उक्तन्यायेनाविद्यात्मके सतीत्यर्थः। मूलाविद्यायाः सुषुप्तावनर्थत्वादर्शनात् कार्यात्मना तस्या अनर्थत्वज्ञापनार्थं तद्वर्णनमिति भावः। अध्यस्तकृतगुणदोषाभ्यामधिष्ठानं न लिप्यत इत्यक्षरार्थः। एवमध्यासस्य लक्षणसंभावने उक्त्वा प्रमाणमाह॥ तमेतमिति॥ तं वर्णितमेतं साक्षिप्रत्यक्षसिद्धं पुरस्कृत्य हेतुं कृत्वा लौकिकः कर्म्मशास्त्रीयो मोक्षशास्त्रीयश्चेति त्रिविधो व्यवहारः प्रवर्तत इत्यर्थः। तत्र विधिनिषेधपराणि कर्म्मशास्त्राणि वेदादीनि, विधिनिषेधशून्यप्रत्यग्ब्रह्मपराणि मोक्षपराणि वेदान्तवाक्यानीति विभागः। एवं व्यवहारहेतुत्वेनाध्यासे प्रत्यक्षसिद्धेऽपि प्रमाणान्तरं पृच्छति॥ कथं पुनरिति॥ अविद्यावानध्यासवानात्मा प्रमाता स विषय आश्रयो येषां तानि अविद्यावद्विषयाणीति विग्रहः। तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमाया आध्यासिकप्रमात्राश्रितत्वात् प्रमाणानामविद्यावद्विषयत्वं यद्यपि प्रत्यक्षं [illegible]तथापि कथं वेद

मेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः। सर्व्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि। कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति? उच्यते। देहेन्द्रियादिष्वहं ममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः। न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति। न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः* सम्भवति।

---

माण्येनाविद्यावद्विषयत्वमिति योजना। यद्वाऽविद्यावद्विषयाणि कथं प्रमाणानि स्युः? आश्रयदोषादप्रामाण्यापत्तेरित्याक्षेपः। तत्र प्रमाणप्रश्ने व्यवहारार्थापत्तिं तल्लिङ्गकानुमानञ्चाह॥ "उच्यते" इत्यादिना "तस्मात्" इत्यन्तेन॥ देवदत्तकर्तृको व्यवहारस्तदीयदेहादिष्वहंममाध्यासमूलस्तदन्वयव्यतिरेकेणानुसारित्वात्, यदित्थं तत्तथा। यथा मृन्मूलो घट इति प्रयोगः। तत्र व्यतिरेकं दर्शयति॥ देहेति॥ देवदत्तस्य सुषुप्तावध्यासाभावे व्यवहाराभावो दृष्टः, जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वयः स्फुटत्वान्नोक्तः। अनेन लिङ्गेन कारणतयाध्यासः सिद्ध्यति, व्यवहाररूपकार्य्यानुपपत्त्या वेति भावः। ननु मनुष्यत्वादिजातिमति देहेऽहमित्यभिमानमात्राद्व्यवहारः सिद्ध्यतु किमिन्द्रियादिषु ममाभिमानेनेत्याशङ्क्याह॥ न हीति॥ इन्द्रियपदं लिङ्गादेरप्युपलक्षणं प्रत्यक्षादीत्यादिपदप्रयोगात्। तथाच प्रत्यक्षलिङ्गादिप्रयुक्तो यो व्यवहारो द्रष्टा अनुमाता श्रोताऽहमित्यादिरूपः स इन्द्रियादीनि ममतास्पदान्यगृहीत्वा न सम्भवतीत्यर्थः। यद्वा तानि ममत्वेनानुपादाय यो व्यवहारः स नेति योजना। पूर्व्वत्रानुपादानासम्भवक्रिययोरेको व्यवहारः कर्त्ता इति क्त्वाप्रत्ययः साधुः। उत्तरत्रानुपादानव्यवहारयोरेकात्मकर्तृकत्वात् तत्साधुत्वमिति भेदः। इन्द्रियादिषु ममेत्यध्यासाभावेऽन्धादेरिव द्रष्टृत्वादिव्यवहारो न स्यादिति भावः। इन्द्रियाध्यासेनैव व्यव-

---

* व्यवहारः ८ सं॰ पु॰ पाठः।

इति वदन्ति। केचित्तु "यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम" इति। अन्ये तु "यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत" इति। सर्व्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति। तथाच लोकेऽनुभवः "शुक्तिका हि रजतवदवभासते एकश्चन्द्रः सद्वितीयवद्" इति। कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयधर्म्माणां? सर्व्वो हि पुरोऽवस्थिते विषये विष

---

त्मनो धर्म्मस्य रजतस्याध्यास आन्तरस्य रजतस्य बहिर्वदवभास इति वदन्तीत्यर्थः। अख्यातिमतमाह॥ केचिदिति॥ यत्र यस्याध्यासो लोक सिद्धस्तयोरर्थयोस्तद्धियोश्च भेदाग्रहे सति तन्मूलो भ्रमः, इदं रूप्यमिति विशिष्टव्यवहार इति वदन्तीत्यर्थः। तैरपि विशिष्टव्यवहारान्यथानुपपत्त्या विशिष्टभ्रान्तेः स्वीकार्य्यत्वात् परत्र परावभासस्सम्मतिरिति भावः। शून्यमतमाह॥ अन्ये त्विति॥ तस्यैवाधिष्ठानस्य शुक्त्यादेर्विपरीतधर्म्मत्वकल्पना विपरीतो विरुद्धो धर्म्मो यस्य तद्भावस्तस्य रजतादेरत्यन्तासतः कल्पनामाचक्षत इत्यर्थः। एतेषु मतेषु परत्र परावभासत्वलक्षणसंवादमाह॥ सर्व्वथापि त्विति॥ अन्यथाख्यातित्वादिप्रकारविवादेऽप्यध्यासः परत्र परावभासत्वलक्षणं न जहातीत्यर्थः। शुक्त्यवच्छिन्नस्य रजतस्य देशान्तरे बुद्धौ वा सत्त्वायोगात् शून्यत्वं प्रत्यक्षत्वायोगात् शुक्तौ सत्त्वे बाधायोगान्मिथ्यात्वमेवेति भावः। आरोप्यमिथ्यात्वेन युक्त्यपेक्षा तस्यानुभवसिद्धत्वादित्याह॥ तथा चेति॥ बाधानन्तरकालीनोऽयमनुभवः। ततः पूर्व्वं शुक्तिकात्वज्ञानायोगात् रजतस्य बाधप्रत्यक्षसिद्धं मिथ्यात्वं च वक्ष्यच्छब्देनोच्यते। आत्मनि निरुपाधिकेऽहङ्काराध्यासे दृष्टान्तमुक्त्वा ब्रह्मजीवान्तरभेदस्याविद्याद्युपाधिकस्याध्यासे दृष्टान्तमाह। एक इति। द्वितीयचन्द्रसहितवदेक एवाङ्गुल्या द्विधा भासीत्यर्थः। लक्षणप्रकरणोपसंहारार्थ इतिशब्दः। भवत्वध्यासः शुक्त्यादौ, आत्मनि तु न सम्भवतीत्याक्षिपति। कथं पुनरिति। यत्राध्यासः ...ध्यासाधिष्ठानत्वं तत्रेन्द्रियसंयुक्तत्वं विषयत्वञ्चेति व्याप्तिः शुक्त्यादौ तत्र व्यापकाभावादात्मनोऽधिष्ठानत्वं न सम्भवतीत्यभिप्रायः।

न्तरमध्यस्यति। युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनो विष-
त्वं ब्रवीषि। उच्यते। न तावदयमेकान्तेनाविषयः। अस्मत्-
प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः। न चाय-
मस्ति नियमः "पुरोऽवस्थित एव विषये विषयान्तरमध्यसित-
व्यमिति"। अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्य-

---

प्रत्यगात्मनीति॥ प्रतीचि पूर्वं इन्द्रियाग्राह्ये विषयस्याहङ्कारादेस्तद्-
धर्माणाञ्चाध्यासः कथमित्यर्थः। उक्तव्याप्तिमाह॥ सर्वो हीति। पुरोऽ-
वस्थितत्वमिन्द्रियसंयुक्तत्वं। नन्वात्मनोऽप्यधिष्ठानत्वार्थं विषयत्वादिक-
मस्त्वित्यत आह॥ युष्मदिति॥ इदंप्रत्ययानर्हस्य प्रत्यगात्मनो "न चक्षु-
षा गृह्यते" इत्यादि श्रुतिमनुसृत्य त्वमविषयत्वं ब्रवीषि। संप्रत्यध्यास-
लोभेन विषयत्वाङ्गीकारे श्रुतिसिद्धान्तयोर्बाधः स्यादित्यर्थः। आत्म-
न्यध्याससंभावनां प्रतिजानीते॥ उच्यत इति॥ अधिष्ठानारोप्ययोरे-
कस्मिन् ज्ञाने भासमानत्वमात्रमध्यासव्यापकं, तच्च भानप्रयुक्तसंशय-
निवृत्त्यादिफलभाक्त्वं, तदेव भानभिन्नत्वघटितं विषयत्वं, तन्न व्यापकं
गौरवादिति मत्वाह॥ न तावदिति॥ अयमात्मा नियमेनाविषयो न
भवति तत्र हेतुमाह॥ अस्मदिति॥ अस्मत्प्रत्ययोऽहमित्यध्यासस्तत्र
भासमानत्वादित्यर्थः। अस्मदर्थश्चिदात्मा प्रतिबिम्बत्वेन यत्र प्रतीयते
सोऽस्मत्प्रत्ययोऽहङ्कारस्तत्र भासमानत्वादिति वार्थः। न चाध्यासे सति
भासमानत्वं, तस्मिन् सति स इति परस्पराश्रय इति वाच्यम् अना-
दित्वात्। पूर्वाध्यासे भासमानात्मन उत्तराध्यासाधिष्ठानत्वसम्भवात्।

नन्वहमित्यहङ्कारविषयकभानरूपस्यात्मनो भासमानत्वं कथं?
तद्विषयत्वं विना तत्फलभाक्त्वायोगादित्यत आह॥ अपरोक्षत्वाच्चेति॥
चशब्दः शङ्कानिरासार्थः। स्वप्रकाशकत्वादित्यर्थः। स्वप्रकाशत्वं साध-
यति॥ प्रत्यगिति॥ आबालपण्डितमात्मनः संशयादिशून्यत्वेन प्रसिद्धेः
स्वप्रकाशत्वमित्यर्थः। अतः स्वप्रकाशत्वेन भासमानत्वादात्मनोऽध्यासा-
धिष्ठानत्वं संभवतीति भावः। यदुक्तमपरोक्षाध्यासाधिष्ठानत्वस्येन्द्रि-
यसंयुक्ततया ग्राह्यत्वव्यापकमिति तत्राह॥ न चायमिति॥ तत्र हेतु-
माह॥ अप्रत्यक्षेऽपीति॥ इन्द्रियाग्राह्येऽपीत्यर्थः। बाला

न्ति। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवंलक्षणमध्यासं पण्डिता "अविद्या" इति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं "विद्याम्" आहुः। तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते। तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमा-

---

तस्मिन्नीलकटाहकल्पं नभो मलिनं पीतमित्येवमपरोक्षमध्यस्यन्ति। तत्रेन्द्रियग्राह्यत्वं नास्तीति व्यभिचारान्न व्याप्तिः। एतेनात्मानात्मनोः सादृश्याभावान्नाध्यास इत्यपास्तं। नीलनभसोस्तदभावेऽप्यध्यासदर्शनात्। सिद्धान्ते आलोकाकारचाक्षुषवृत्तिव्यक्तसाक्षिवेद्यत्वं नभसि इति ज्ञेयं। संभावना निगमयति॥ एवमिति॥ ननु ब्रह्मज्ञाननाश्यत्वेन सूचितामविद्यां हित्वा अध्यासः किमिति वर्ण्यत इत्यत आह। तमेतमिति॥ आक्षिप्तं समाहितमुक्तलक्षणलक्षितमध्यासमविद्याकार्यत्वादविद्येति मन्यन्त इत्यर्थः। विद्यानिवर्त्यत्वाच्चास्याविद्यात्वमित्याह। तद्विवेकेनेति॥ अध्यस्तनिषेधेनाधिष्ठानस्वरूपनिर्द्धारणं विद्यामध्यासनिवर्त्तिकामाहुरित्यर्थः। तथापि कारणाविद्या त्यक्ता कार्याविद्या किमिति व ते तत्राह॥ तत्रेति॥ तस्मिन्नध्यासे उक्तन्यायेनाविद्यात्मके सतीत्यर्थः। मूलाविद्यायाः सुषुप्तावनर्थत्वादर्शनात् कार्यात्मना तस्या अनर्थत्वज्ञापनार्थं तद्वर्णनमिति भावः। अध्यस्तकृतगुणदोषाभ्यां अधिष्ठानं न लिप्यत इत्यक्षरार्थः। एवमध्यासस्य लक्षणसंभावने उक्त्वा प्रमाणमाह॥ तमेतमिति॥ तं वर्णितमेतं साक्षिप्रत्यक्षसिद्धं पुरस्कृत्य हेतुं कृत्वा लौकिकः कर्म्मशास्त्रीयो मोक्षशास्त्रीयश्चेति त्रिविधो व्यवहारः प्रवर्त्तत इत्यर्थः। तत्र विधिनिषेधपराणि कर्म्मशास्त्राण्यावेदादीनि, विधिनिषेधशून्यप्रत्यग्ब्रह्मपराणि मोक्षपराणि वेदान्तवाक्यानीति विभागः। एवं व्यवहारहेतुत्वेनाध्यासे प्रत्यक्षसिद्धेऽपि प्रमाणान्तरं पृच्छति। कथं पुनरिति। अविद्यावानहमित्यध्यासवानात्मा प्रमाता स विषयः आश्रयो येषां तानि अविद्यावद्विषयाणीति विग्रहः। तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमाया अध्यासात्मकप्रमात्राश्रितत्वात् प्रमाणानामविद्यावद्विषयत्वं यद्यपि प्रत्यक्षं तथापि पुनरपि कथं केन

प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः। सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि। कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति? उच्यते। देहेन्द्रियादिष्वहं ममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः। न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति। न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः*सम्भवति।

---

प्रमाणेनाविद्यावद्विषयत्वमिति योजना। यद्वाऽविद्यावद्विषयाणि कथं प्रमाणानि स्युः? व्याश्रयदोषादप्रामाण्यापत्तेरित्याक्षेपः। तत्र प्रमाणप्रश्ने व्यवहारार्थापत्तिं तल्लिङ्गकानुमानञ्चाह॥"उच्यते"इत्यादिना"तस्मात्" इत्यन्तेन॥ देवदत्तकर्तृको व्यवहारस्तदीयदेहादिष्वहंममाध्यासमूलस्तदन्वयव्यतिरेकेणानुसारित्वात्, यदित्थं तत्तथा। यथा मृन्मूलो घट इति प्रयोगः। तत्र व्यतिरेकं दर्शयति॥ देहेति॥ देवदत्तस्य सुषुप्तावध्यासाभावे व्यवहाराभावो दृष्टः, जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वयः स्फुटत्वान्नोक्तः। अनेन लिङ्गेन कारणतयाऽध्यासः सिद्ध्यति, व्यवहाररूपकार्य्यानुपपत्त्या वेति भावः। ननु मनुष्यत्वादिजातिमति देहेऽहमित्यभिमानमात्राद्व्यवहारः सिद्ध्यतु किमिन्द्रियादिषु ममाभिमानेनेत्याशङ्क्याह॥ न हीति॥ इन्द्रियपदं लिङ्गादेरप्युपलक्षणं प्रत्यक्षादीत्यादिपदप्रयोगात्। तथाच प्रत्यक्षलिङ्गादिप्रयुक्तो यो व्यवहारो द्रष्टा अनुमाता श्रोताऽहमित्यादिरूपः स इन्द्रियादीनि ममतास्पदान्यगृहीत्वा न सम्भवतीत्यर्थः। यद्वा तानि ममत्वेनानुपादाय यो व्यवहारः स नेति योजना। पूर्व्वत्रानुपादानासम्भवक्रिययोरेको व्यवहारः कर्त्ता इति क्त्वाप्रत्ययः साधुः। उत्तरत्रानुपादानव्यवहारयोरेकात्मकर्तृकत्वात् तत्साधुत्वमिति भेदः। इन्द्रियादिषु ममेत्यध्यासाभावेऽन्धादेरिव द्रष्टृत्वादिव्यवहारो न स्यादिति भावः। इन्द्रियाध्यासेनैव व्यव-

---

* व्यवहारः ८ सं० पु० पाठ।

न चानध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते। न चैतस्मिन् सर्व्वस्मिन्नसत्यासङ्गस्यात्मनः प्रमातृत्वमुपपद्यते। न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति। तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति। पश्वादिभिश्चाविशेषात्। यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति

---

हारादलं देहाध्यासेनेत्यत आह॥ न चेति॥ इन्द्रियाणामधिष्ठानं आश्रयः शरीरमित्यर्थः। नन्वस्त्वात्मना संयुक्तं शरीरं तेषामाश्रयः किमध्यासेनेत्यत आह॥ न चानध्यस्तात्मभावेनेति॥ अनध्यस्त आत्मभावः आत्मतादात्म्यं यस्मिन् तेनेत्यर्थः। "असङ्गो हि" इति श्रुतेराध्यासिक एव देहात्मनोः सम्बन्धो न संयोगादिरिति भावः। नन्वात्मनो देहादिभिराध्यासिकसम्बन्धोऽपि मास्तु। स्वतश्चेतनतया प्रमातृत्वोपपत्तेः, न च सुषुप्तौ प्रमातृत्वापत्तिः करणोपरमादिति तत्राह॥ न चैतस्मिन्निति॥ प्रमाश्रयत्वं हि प्रमातृत्वं। प्रमा यदि नित्यचिन्मात्रं तर्ह्याश्रयत्वायोगः, करणवैयर्थ्यञ्च। यदि वृत्तिमात्रं, जगदान्ध्यप्रसङ्गः वृत्तेर्जडत्वात्, अतो वृत्तीद्धो बोधः प्रमा, तदाश्रयत्वमसङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासं विना न सम्भवतीति भावः। देहाध्यासे, तद्धर्म्माध्यासे चासतीत्यस्यार्थः, तर्ह्यात्मनः प्रमातृत्वं मास्तु इति वदन्तं प्रत्याह॥ न चेति॥ तस्मादात्मनः प्रमातृत्वादिव्यवहारार्थमध्यासोऽङ्गीकर्त्तव्य इत्यनुमानार्थापत्त्योः फलमुपसंहरति॥ तस्मादिति॥ प्रमाणसत्त्वादित्यर्थः। यद्वा प्रमाणप्रश्नं समाधायाक्षेपं परिहरति॥ तस्मादिति॥ अहमित्यध्यासस्य प्रमात्रन्तर्गतत्वेनादोषत्वादविद्यावदाश्रयाण्यपि प्रमाणान्येवेति योजना। सति प्रमातरि पश्चाद्भवन्दोष इत्युच्यते यथा काचादि, अविद्या तु प्रमात्रन्तर्गतत्वान्न दोषः, येन प्रत्यक्षादीनामप्रामाण्यं भवेदिति भावः। ननु यदुक्तमन्वयव्यतिरेकाभ्यां व्यवहारोऽध्यासकार्य्य इति तदयुक्तं विदुषामध्यासाभावेऽपि व्यवहारदृष्टेरित्यत आह॥ पश्वादिभिश्चेति॥ "च" शब्दः शङ्कानिरासार्थः। किं विद्वत्त्वं "ब्रह्मास्मीति" साक्षात्कारः? उत यौक्तिकमात्मानात्मभेदज्ञानं? आद्ये "बाधिताध्यासानुवृत्त्या व्यवहार" इति समन्वयसूत्रे वक्ष्यते। द्वितीये परोक्षज्ञानस्यापरोक्षभ्रान्त्यनिवर्त्तक-

शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्त्तन्ते अनुकूले च प्रवर्त्तन्ते, यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्त्तन्ते, तद्विपरीतान् प्रति अभिमुखीभवन्ति। अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः। पश्वादीनाञ्च प्रसिद्ध एवाविवेकपूर्व्वकः प्रत्यक्षादिव्यवहारः तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते।

---

त्वात् विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषादध्यासवत्त्वेन तुल्यत्वाद्व्यवहारोऽध्यासकार्य्यं इति युक्तमित्यर्थः। अत्रायं प्रयोगः विवेकिनोऽध्यासवन्तो व्यवहारत्वात् पश्वादिवदिति। तत्र संग्रहवाक्यं व्याकुर्व्वन् दृष्टान्ते हेतुं स्फुटयति॥ यथाहीति॥ विज्ञानस्यानुकूलत्वं प्रतिकूलत्वं चेष्टानिष्टसाधनगोचरत्वं, तदेवोदाहरति॥ यथेति॥ अयं दण्डो मदनिष्टसाधनं दण्डत्वात् अनुभूतदण्डवत्। इदं तृणं इष्टसाधनं अनुभूतजातीयत्वात् अनुभूततृणवत् इत्यनुमाय व्यवहरन्तीत्यर्थः। अधुना हेतोः पक्षधर्म्मतामाह॥ एवमिति॥ व्युत्पन्नचित्ता अपीत्यन्वयः। विवेकिनोऽपीत्यर्थः। फलितमाह॥ अत इति॥ अनुभवबलादित्यर्थः॥ समान इति॥ अध्यासकार्य्यत्वेन तुल्य इत्यर्थः। नन्वस्माकं प्रवृत्तिरध्यासादिति न पश्वादयो ब्रुवन्ति, नापि परेषामेतत् प्रत्यक्षं; अतः साध्यविकलो दृष्टान्त इति नेत्याह॥ पश्वादीनाञ्चेति॥ तेषामात्मानात्मनोर्ज्ञानमात्रमस्ति न विवेकः, उपदेशाभावात्, अतः सामग्रीसत्त्वादध्यासस्तेषां प्रसिद्ध इत्यर्थः। निगमयति॥ तत्सामान्येति॥ तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वं तस्य दर्शनाद्विवेकिनामप्ययं व्यवहारः समान इति निश्चीयत इति सम्बन्धः। समानत्वं व्यवहारस्याध्यासकार्य्यत्वेनेत्युक्तं पुरस्तात्। तत्रोक्तान्वयव्यतिरेकौ स्मारयति॥

शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते, तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते । अनुपयोगादधिकारे विरोधाच्च । प्राक् च तथाभूतात्मविज्ञानात् प्रवर्त्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्त्तते। तथा हि ब्राह्मणो यजेतेत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्त्तन्ते। अध्यासो नाम "अतस्मिंस्तद्बुद्धिरिति" अवोचाम। तद्यथा पुत्रभार्य्यादिषु विकलेषु सकलेषु

---

तत्काल इति ॥ तस्याध्यासस्य काल एव कालो यस्य स तत्काल । यदा ह्यध्यासस्तदा व्यवहार । तदभावे सुषुप्तौ तदभाव इत्युक्तान्वयादिमानिति यावत। अतो व्यवहारलिङ्गादविवेकिनामपि देहादिष्वहंममाभिमानोऽस्तीत्यनवद्य। ननु लौकिकस्य व्यवहारस्याध्यासिकत्वेऽपि ज्योतिष्टोमादिव्यवहारस्य नाध्यासजन्यत्वं, तस्य देहातिरिक्तात्मज्ञानपूर्वकत्वादित्याशङ्क्य हेतुमङ्गीकरोति ॥ शास्त्रीये त्विति ॥ तर्हि कथं वैदिककर्म्मणोऽध्यासजन्यत्वसिद्धिरित्याशङ्क्य किमत्र देहान्यात्मधीमात्रमपेक्षितं उत आत्मतत्त्वज्ञान? आद्ये तस्याध्यासाबाधकत्वात् तत्सिद्धिरित्याह ॥ तथापीति ॥ न द्वितीय इत्याह ॥ न वेदान्त इति ॥ क्षुत्पिपासादिमत्तो जातिविशेषवानहं संसारीति ज्ञानं कर्म्मण्यपेक्षितं न तद्विपरीतात्मतत्त्वज्ञानं, अनुपयोगात् प्रवृत्तिबाधकत्वाच्च । शास्त्रीयकर्म्मणोऽध्यासजन्यत्व निगमयति ॥ प्राक् चेति ॥ अध्यासे आगमं प्रमाणयति ॥ तथा हीति ॥ यथा प्रत्यक्षानुमानार्थापत्तयोऽध्यासे प्रमाणं तथागमोऽपीत्यर्थं । "ब्राह्मणो यजेत" "न ह वै स्नात्वा भिक्षेत" "अष्टवर्षमुपनयीत" "कृष्णकेशोऽग्नीनादधीत" इत्यागमो ब्राह्मणादिपदैरधिकारिणं वर्णाद्यभिमानिनमनुवदन् अध्यासं गमयतीति भाव। एवमध्यासे प्रमाणसिद्धेऽपि कस्य कुत्राध्यास इति जिज्ञासायां तमुदाहर्त्तुं लक्षणं स्मारयति ॥ अध्यासो नामेति ॥ उदाहरति ॥ तद्यथेति ॥ सकलत्वं यथा

वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति। तथा देहधर्मान् स्थूलोऽहं कृशोऽहं गौरोऽहं* तिष्ठामि गच्छामि लङ्घयामि चेति। तथेन्द्रियधर्मान् मूकः क्लीवो बधिरः काणो ऽन्धोऽहमिति। तथान्तःकरणधर्मान् कामसङ्कल्पविचिकित्साध्यवसायादीन्। एवमहम्प्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तञ्च प्रत्यगात्मानं सर्व्वसाक्षिणं तद्विपर्य्ययेणान्तःकरणादिष्वध्यस्यति। एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्या-

---

स्यं भवति तयोदाक्रियत इत्यर्थः। स्वदेहाद्भेदेन प्रत्यक्षाः पुत्रादयो बाह्या, तद्धर्म्मान् साकल्यादीन देहविशिष्टात्मन्यध्यस्यति, तद्धर्म्मज्ञानात् स्वस्मिंस्तत्तुल्यधर्म्मानध्यस्यतीत्यर्थ। भेदापरोक्षज्ञाने तद्धर्म्माध्यासायोगात् अन्यथाख्यात्यनङ्गीकाराच्चेति द्रष्टव्यं। देहेन्द्रियधर्म्मात्मनो विशिष्टात्मन्यध्यस्यतीत्याह॥ तथेति॥ स्थूलत्वादिधर्म्मवतो देहादेरात्मनि तादात्म्येन कल्पितत्वात्तद्धर्म्मा साक्षादात्मन्यध्यस्ता इति मन्तव्यं। अज्ञातप्रत्यग्रूपे साक्षिणि मनोधर्म्माध्यासमाह॥ तथान्तःकरणेति॥ धर्म्माध्यासमुक्ता तद्वदेव धर्म्म्यध्यासमाह॥ एवमिति॥ अन्तःकरणसाक्षिण्यभेदेनाध्यस्य तद्धर्म्मान् कामादीन् अध्यस्यतीति मन्तव्यं। स्वप्रचारा मनोवृत्तय प्रातिलोम्येनासञ्जडदुःखात्मकाहङ्कारादिविलक्षणतया सच्चित्सुखात्मकत्वेनाञ्चति प्रकाशत इति प्रत्यक्। एवमात्मन्यनात्मतद्धर्म्माध्यासमुदाहृत्यानात्मन्यात्मनोऽपि संसृष्टत्वेनाध्यासमाह॥ तञ्चेति॥ अहमित्यध्यासे चिदात्मनो भानं वाच्यं, अन्यथा जगदान्ध्यापत्ते। न चानध्यस्ताध्यासे भानमस्ति। तस्मादनृतादाविदम इवात्मनः संसर्गाध्यास एष्टव्य। "तद्विपर्य्ययेणेति" तस्याध्यस्तस्य जडस्य विपर्य्ययोऽधिष्ठानत्वं चैतन्यञ्च तदात्मना स्थितमिति यावत्। तत्राज्ञाने केवलात्मनः संसर्गं, मनस्यज्ञातस्य ज्ञानोपहितस्य देहादौ मनउपहितस्येति विशेषः। एवमात्मनि बुद्ध्याद्यध्यासात् कर्त्तृत्वादिलाभः, बुद्ध्यादौ चात्माध्यासाच्चैतन्यलाभ इति भाव। वर्णिताध्यासमुपसंहरति॥ एवमयमिति॥

---

* कृशोऽहं कृष्णोऽहं इति मुद्रित पुस्तके पाठः।

प्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्त्तकः सर्व्वलोकप्रत्यक्षः। अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्व्वे वेदान्ता आरभ्यन्ते। यथा चायमर्थः सर्व्वेषां वेदान्तानां, तथाच वयमस्यां

---

अनाद्यविद्यात्मकतया कार्य्याध्यासस्यानादित्वं अध्यासात् संस्कारस्ततोध्यास इति प्रवाहतो नैसर्गिकत्वं॥ एवमुपादानं निमित्तञ्चोक्तं भवति। ज्ञानं विना ध्वंसाभावादानन्त्यं। तदुक्तं भगवद्गीतासु। "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठेति"। हेतुमुक्त्वा स्वरूपमाह। मिथ्येति॥ मिथ्या माया तया प्रतीयते इति प्रत्ययः कार्य्यप्रपञ्चः, तत्प्रतीतिस्थैत्येवं स्वरूपः इत्यर्थः। तस्य कार्य्यमाह॥ कर्तृत्वेति॥ प्रमाणं निगमयति॥ सर्व्वेति॥ साक्षिप्रत्यक्षमेवाध्यासधर्म्मिग्राहकं मानं, अनुमानादिकन्तु सम्भावनार्थमित्यभिप्रेत्य प्रत्यक्षोपसंहारः कृतः। एवमध्यासं वर्णयित्वा तत्साध्ये विषयप्रयोजने दर्शयति॥ अस्येति॥ कर्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्यात्यन्तिकनाशो मोक्षः स केनेत्यत आह॥ आत्मेति॥ ब्रह्मात्मैक्यसाक्षात्कारस्य प्रतिपत्तिः श्रवणादिभिरप्रतिबन्धेन लाभस्तस्या इत्यर्थः॥ विद्याया कारणमाह॥ सर्व्वे इति॥ आरभ्यन्ते अधीत्य विचार्य्यन्ते इत्यर्थः। विचारितवेदान्तानां ब्रह्मात्मैक्यं विषयो मोक्षफलमित्युक्तं भवति। अर्थात्तद्विचारात्मकशास्त्रस्यापि ते एव विषयप्रयोजने इति ज्ञेयं। ननु वेदान्तेषु प्राणाद्युपास्तीनां भानादात्मैक्यमेव तेषामर्थ इति कथमित्यत आह॥ यथा चेति॥ शरीरमेव शरीरकं कुत्सितत्वात्तन्निवासी शारीरको जीवस्तस्य ब्रह्मत्वविचारो मीमांसा तस्यामित्यर्थः। उपास्तीनां चित्तैकाग्र्यद्वारात्मैक्यज्ञानार्थत्वात्तद्वाक्यानामपि महातात्पर्य्यमैक्ये इति विवक्ष्यते। एवमध्यासोक्त्या ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति दर्शितं॥ *॥ इति प्रथमवर्णकं॥*॥ विचारस्य साक्षाद्विषया वेदान्ताः, तेषां गतार्थत्वागतार्थत्वाभ्यामारम्भसन्देहे कृत्स्नस्य वेदस्य विधिपरत्वाद्विधेय "अथातो धर्म्मजिज्ञासा" इत्यादिना पूर्व्वतन्त्रेण विचारितत्वादवगतार्था*इत्यव्यवहितविषयाभावान्नारम्भ इति प्राप्ते ब्रूते। वेदान्तेति॥ वेदान्तविष-

---

* एव वेदान्ता ८ सङ्ख्याकपुस्तके पाठः।

शारीरकमीमांसायां प्रदर्शयिष्यामः। वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रं।

अथातो ब्रह्मजिज्ञासेति। १।

तत्राथशब्द आनन्तर्य्यार्थः परिगृह्यते नाधिकारार्थः ब्रह्मजिज्ञासाया अनधिकार्य्यत्वात्। मङ्गलस्य च वाक्यार्थे समन्वयाभावात्। अर्थान्तरप्रयुक्त एव हि अथशब्दः श्रुत्या मङ्गल-

---

यकपूजितविचारात्मकशास्त्रस्य व्याख्यातुमिष्टस्य सूत्रसन्दर्भस्येदं प्रथमसूत्रमित्यर्थः। यदि विधिरेव वेदार्थः स्यात्तदा सर्व्वज्ञो बादरायणो ब्रह्मजिज्ञासां न ब्रूयात्, ब्रह्मणि मानाभावात्। अतो ब्रह्मणो जिज्ञास्यत्वोक्त्या केनापि तन्त्रेणानवगतब्रह्मपरवेदान्तविचार आरम्भणीय इति सूत्रकृद्दर्शयति। तच्च "व्याचिख्यासितस्य" इति पदेन भाष्यकारो बभाषे ॥ * ॥ इति द्वितीयवर्णकं ॥ * ॥ एवं वर्णकद्वयेन वेदान्तविचारस्य कर्त्तव्यताया विषयप्रयोजनवत्त्वं अगतार्थत्वञ्चेति हेतुद्वयं सूत्रस्यार्थिकार्थं व्याख्यायाक्षरव्याख्यामारभमाणः पुनरप्यधिकारिभावाभावाभ्यां शास्त्रारम्भसन्देहे सति अथशब्दस्यानन्तर्य्यार्थकत्वोक्त्या अधिकारिणं साधयति॥ "तत्राथशब्द" इति॥ सूत्र इत्यर्थः। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेति" अथशब्दस्य बहवोऽर्थाः सन्ति। तत्राथ "योगानुशासनं" इत्यत्र सूत्रे यथा अथशब्द आरम्भार्थकः योगशास्त्रमारभ्यत इति तद्वदत्र किं न स्यादित्यत आह॥ नाधिकारार्थ इति॥ अयमाशयः। किं जिज्ञासापदं ज्ञानेच्छापरं उत विचारविलक्षकं? आद्येऽथशब्दस्यारम्भार्थत्वे ब्रह्मज्ञानेच्छाऽऽरभ्यत इति सूत्रार्थः स्यात् स चासङ्गतः। तस्यानारभ्यत्वात्। न हि प्रत्यधिकरणं इच्छा क्रियते किन्तु तया विचारः। न द्वितीयः। कर्त्तव्यपदाध्याहारं विना विचारलक्षकत्वायोगात्। अध्याहृते च तेनैवारम्भोक्तेरथशब्दवैयर्थ्यात् किन्त्वधिकारिसिद्ध्यर्थमानन्तर्य्यार्थत्वैव युक्तेति। अधुना सम्भावितमर्थान्तरं दूषयति॥ मङ्गलस्येति॥ वाक्यार्थो विचारकर्त्तव्यता। न हि तत्र मङ्गलशब्दस्य कर्तृत्वादिनान्वयोऽस्तीत्यर्थः। ननु सूत्रकृता शास्त्रादौ मङ्गलं कार्य्यमिति अथशब्दः

प्रयोजनो भवति। पूर्व्वप्रकृतापेक्षायाश्च फलत आनन्तर्य्याव्यतिरेकात्। सति चानन्तर्य्यार्थत्वे यथा धर्म्मजिज्ञासापूर्व्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञासापि यत्पूर्व्ववृत्तं नियमेनापेक्षते तद्वक्तव्यं। स्वाध्यायानन्तर्य्यं तु समानं।

---

प्रयुक्त इति चेत् सत्यं। न तस्यार्थो मङ्गलं किन्तु तच्छ्रवणमुच्चारणञ्च मङ्गलकृत्यं करोति तदर्थस्त्वानन्तर्य्यमेवेत्याह ॥ अर्थान्तरेति ॥ अर्थान्तरं आनन्तर्य्यं। श्रुत्या श्रवणेन मृदङ्गवीणादिनादश्रवणवदोङ्काराथशब्दयोः श्रवणं मङ्गलफलकं।

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकाविमौ॥"

इति स्मरणादिति भावः। ननु प्रपञ्चो मिथ्येति प्रकृते सति, अथ मतं। प्रपञ्चः सत्य इत्यत्र पूर्व्वप्रकृतार्थादुत्तरार्थस्यार्थान्तरत्वार्थोऽथशब्दो दृष्ट। तथात्र किं न स्यादित्यत आह ॥ पूर्व्वेति ॥ फलतः फलस्येत्यर्थः। ब्रह्मजिज्ञासायाः पूर्व्वं अर्थविशेषः प्रकृतो नास्ति यस्मात्तस्या अर्थान्तरत्वमथशब्देनोच्येत। यतः कुतश्चिदर्थान्तरं सूत्रकृता न वक्तव्यं, फलाभावात्। यदि फलस्य जिज्ञासापदोक्तकर्त्तव्यविचारस्य हेतुत्वेन यत्पूर्व्वं प्रकृत तदपेक्षास्तीति अपेक्षावलात् प्रकृतहेतुमाक्षिप्य ततोऽर्थान्तरत्वमुच्येत, तदर्थान्तरत्वमानन्तर्य्येऽन्तर्भवति हेतुफलभावज्ञानायानन्तर्य्यस्यावश्यवाच्यत्वात्। तस्मादिदमर्थान्तरमित्युक्ते तस्य हेतुत्वाप्रतीतेः। तस्मादिदमनन्तरमित्युक्ते भवत्येव हेतुत्वप्रतीतिः। न चाश्वादनन्तरो गौरित्यत्र हेतुत्वभानापत्तिरिति वाच्यं। तयोर्देशतः कालतो वा व्यवधानेनानन्तर्य्यस्यामुख्यत्वात्। अतः सामग्रीफलयोरेव मुख्यमानन्तर्य्यं, अव्यवधानात्। तस्मिन्नुक्ते त्वर्थान्तरत्वं न वाच्यं ज्ञातत्वाद्वैफल्याच्चेति भाव। फलस्य विचारस्य पूर्व्वकृतहेत्वपेक्षाया बलाद्यदर्थान्तरत्वं तस्यानन्तर्य्याभेदात् न पृथगथशब्दार्थत्वमित्यध्याहृत्य भाष्यं योजनीयं। यद्वा पूर्व्वप्रकृतेऽर्थेऽपेक्षा यस्या अर्थान्तरतायास्तस्याः फलं ज्ञानं तद्वाराऽऽनन्तर्य्याव्यतिरेकात्तज्ज्ञाने तस्याः ज्ञानतोऽन्तर्भावान्नाथशब्दार्थतेत्यर्थः। ननु आनन्तर्य्यार्थकत्वेऽप्यानन्तर्य्यस्यावधिः क इत्याशङ्क्याह॥ सति चेति॥

नन्विह कर्म्मावबोधानन्तर्य्यं विशेषः। न। धर्म्मजिज्ञासायाः प्राग-प्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। यथा च* हृदयाद्यवदानानामानन्तर्य्यनियमः क्रमस्य विवक्षितत्वात्, न तथेह क्रमो

---

यन्नियमेन पूर्व्ववृत्तं पूर्व्वभावि असाधारणकारणं पुष्कलकारणमिति यावत्, तदेवावधिरिति वक्तव्यमित्यर्थ। नन्वस्तु धर्म्मविचार इव ब्रह्मविचारेऽपि वेदाध्ययनं पुष्कलकारणमित्यत आह॥ स्वाध्यायेति॥ समानं ब्रह्मविचारे साधारणकारणं न पुष्कलकारणमित्यर्थः। ननु संयोगपृथक्त्वन्यायेन "यज्ञेन दानेन" इत्यादिश्रुत्या "यज्ञादिकर्म्माणि ज्ञानाय विधीयन्ते" इति सर्व्वापेक्षाधिकरणे वक्ष्यते। तथा च पूर्व्वतन्त्रेण तदवबोध पुष्कलकारणमिति शङ्कते॥ नन्विति॥ इह ब्रह्मजिज्ञासायां। विशेषोऽसाधारणं कारणं। "एकस्य तूभयत्वे संयोगपृथक्त्वं" इति जैमिनिसूत्रं। तदर्थस्तु। एकस्य कर्म्मण उभयत्वे ऽनेकफलसम्बन्धे संयोग, उभयसम्बन्धबोधकं वाक्यं तस्य पृथक्त्वं भेदः सहेतुः। ततश्चात्रापि ज्योतिष्टोमादिकर्म्मणा स्वर्गादिफलकानामपि "यज्ञेन दानेन" इत्यादि वचनात् ज्ञानार्थत्वञ्चेति परिहरति॥ नेत्यादिना॥ अयमाशयः। न तावत् पूर्व्वतन्त्रस्थं न्यायसहस्रं ब्रह्मज्ञाने तद्विचारे वा पुष्कलं कारणं, तस्य धर्म्मनिर्णयमात्रहेतुत्वात्, नापि कर्म्मनिर्णय, तस्यानुष्ठानहेतुत्वात्। न हि धूमाग्न्योरिव धर्म्मब्रह्मणोर्व्याप्तिरस्ति, यया धर्म्मज्ञानाद् ब्रह्मज्ञानं भवेत्। यद्यपि शुद्धिविवेकादिद्वारा कर्म्माणि हेतवस्तथापि तेषां नाधिकारिविशेषणत्व, अज्ञातानां तेषां जन्मान्तरकृतानामपि फलहेतुत्वात्। अधिकारिविशेषणं ज्ञायमानं प्रवृत्तिपुष्कलकारणमानन्तर्य्यावधित्वेन वक्तव्यं। अतः कर्म्माणि तदवबोधस्तन्न्यायविचारो वा नावधिरिति न ब्रह्मजिज्ञासाया धर्म्मजिज्ञासानन्तर्य्यमिति। ननु धर्म्मब्रह्मजिज्ञासयोः कार्य्यकारणत्वाभावेऽप्यानन्तर्य्योक्तिद्वारा क्रमज्ञानार्थोऽथशब्द। "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस" इत्यवदानानां क्रमज्ञानार्थोऽथशब्दवदित्याशङ्क्याह॥ यथेति॥ अवदानानामानन्तर्य्यनियमः क्रमो यथाऽथशब्दार्थस्तस्य विवक्षितत्वात्

---

* यथेति नं० ट सो० पुस्तकपाठ।

विवक्षितः । शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावाद्धर्मब्रह्मजिज्ञासयोः, फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्मज्ञानं,

---

न तथेह धर्म्मब्रह्मजिज्ञासयोः क्रमो विवक्षितः। एककर्तृकत्वाभावेन तयोः क्रमानपेक्षत्वात्। अतो न क्रमार्थोऽथशब्द इत्यर्थः। ननु तयोरेककर्तृकत्वं कुतो नास्तीत्यत आह॥ शेषेति॥ येषामेकप्रधानशेषता यथाग्नेयादीनां प्रयाजादीनाञ्च, ययोश्च शेषशेषित्वं यथा प्रयाजदर्शयोः, यस्य चाधिकृताधिकारत्वं यथा अपां प्रणयनं दर्शपूर्णमासाङ्गमाश्रित्य "गोदोहनेन पशुकामस्य" इति विहितस्य गोदोहनस्य, यथा वा "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति दर्शाद्युत्तरकाले विहितस्य सोमयागस्य दर्शाद्यधिकृताधिकारत्वं, तेषामेककर्तृकत्वं भवति। तत्रैकप्रयोगवचनगृहीतानां तेषां युगपदनुष्ठानासम्भवात् क्रमाकाङ्क्षायां श्रुत्यादिभिर्हि क्रमो बोध्यते; नैवं जिज्ञासयोः शेषशेषित्वश्रुतिलिङ्गादिकं मानमस्ति। ननु "ब्रह्मचर्य्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेत्" इति श्रुत्या।

"अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्" ॥

इति स्मृत्या चाधिकृताधिकारत्वं भातीति। तन्न।
"ब्रह्मचर्य्यादेव प्रव्रजेत्"।
"आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे"।

इति श्रुतिस्मृतिभ्यां। त्वयोदाहृतश्रुतिस्मृत्योरशुद्धचित्तविषयत्वावगमात् एतदुक्तं भवति "यदि जन्मान्तरकृतकर्म्मभिः शुद्धं चित्तं तदा ब्रह्मचर्य्यादेव सन्न्यस्य ब्रह्म जिज्ञासितव्यं, यदि न शुद्धमिति रागेण ज्ञायते तदा गृही भवेत्, तत्राप्यशुद्धौ वनी भवेत्, तत्राप्यशुद्धौ तथैव कालमाकलयेत्, वने शुद्धौ प्रव्रजेदिति"। तथा च श्रुतिः "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति तस्मान्नानयोरधिकृताधिकारत्वे किञ्चिन्मानमिति भावः। ननु मीमांसयोः शेषशेषित्वमधिकृताधिकारत्वञ्च मास्तु। एकमोक्षफलकत्वेनैककर्तृकत्वं स्यादेव। वदन्ति हि "ज्ञानकर्म्मभ्यां मुक्तिः" इति समुच्चयवादिनः। एवमेकवेदार्थजिज्ञास्यकत्वाच्चैककर्तृकत्वं। तथा चाग्नेयादिषड्यागानामेकस्वर्गफलकानां द्वादशाध्यायानाञ्चैकध-

तच्चानुष्ठानापेक्षं। निःश्रेयसफलन्तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षं। भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात्। इह तु भूतं ब्रह्म जिज्ञास्यं नित्यवृत्तत्वात्, न पुरुषव्यापारतन्त्रं, चोदनाप्रवृत्तिभेदाच्च। या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव न पुरुषमवबोधयति। ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं, अवबोधस्य चोदनाजन्यत्वान्न पुरुषो

---

र्म्मजिज्ञास्यकाणां क्रमवत्तयोः क्रमो विवक्षित इति क्रमार्थोऽथशब्द इत्याशङ्क्याह॥ फलेति॥ फलभेदाज्जिज्ञास्यभेदाच्च न क्रमो विवक्षित इत्यनुषङ्गः। यथा सौर्य्यार्य्यम्णप्राजापत्यचरूणां ब्रह्मवर्चसस्वर्गायुःफलभेदात्, यथा वा कामचिकित्सातन्त्रयोर्जिज्ञास्यभेदान्न क्रमापेक्षा तद्वन्मीमांसयोर्न क्रमापेक्षेति भावः, तत्र फलभेदं विवृणोति॥ अभ्युदयेति॥ विषयाभिमुख्येनोदेतीत्यभ्युदयो विषयाधीनं सुखं स्वर्गादि, तच्च धर्म्मज्ञानहेतोर्मीमांसायाः फलमित्यर्थः। न केवलं फलस्य स्वरूपतो भेदः किन्तु हेतुतोऽपीत्याह॥ तच्चेति॥ ब्रह्मज्ञानहेतोर्मीमांसाया फलन्तु तद्विरुद्धमित्याह॥ निःश्रेयसेति॥ नित्यं निरपेक्षं श्रेयो निःश्रेयसं मोक्षस्तत्फलमित्यर्थः। ब्रह्मज्ञानञ्च स्वोत्पत्तिव्यतिरिक्तमनुष्ठानं नापेक्षत इत्याह॥ न चेति॥ स्वरूपतो हेतुतश्च फलभेदान्न समुच्चय इति भावः। जिज्ञास्यभेदं विवृणोति॥ भव्यश्चेति॥ भवतीति भव्यः साध्य इत्यर्थः। साध्यत्वे हेतुमाह॥ नेति॥ तर्हि तुच्छत्वं नेत्याह॥ पुरुषेति॥ पुरुषव्यापारः प्रयत्नस्तत्तन्त्रं हेतुर्यस्य तत्त्वादित्यर्थः। कृतिसाध्यत्वात् कृतिजनकज्ञानकाले धर्म्मस्यासत्त्वं न तुच्छत्वादित्यर्थः। ब्रह्मणो धर्म्माद्वैलक्षण्यमाह॥ इह त्विति॥ उत्तरमीमांसायामित्यर्थः॥ भूतमसाध्यं। तत्र हेतुः॥ नित्येति॥ सदा सत्त्वादित्यर्थः। साध्यासाध्यत्वेन धर्म्मब्रह्मणोः स्वरूपभेदमुक्त्वा हेतुतोऽप्याह॥ नेति॥ धर्म्मवत् कृत्यधीनं नेत्यर्थः। मानतोऽपि भेदमाह॥ चोदनेति॥ अज्ञातज्ञापकं वाक्यमत्र चोदना। तस्याः प्रवृत्तिर्बोधकत्वं तद्वैलक्षण्याच्च जिज्ञास्यभेद इत्यर्थः। संगृहवाक्यं विवृणोति॥ या हीति॥ लक्षणं प्रमाणं "स्वर्गकामो यजेत" इत्यादिवाक्यं हि स्वविषये धर्म्मे यागादिकरणस्वर्गादिफलकभावनारूपे फलहेतुयागादिगोचर-

ऽवबोधे नियुज्यते। यथा अक्षसन्निकर्षेणार्थावबोधे तद्वत्। तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति। उच्यते। नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वञ्च। तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्द्ध्वञ्च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुञ्च, न विपर्यये। तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्य्यमुपदिश्यते। अतःशब्दो हेत्वर्थः। यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानाम-

---

नियोगे वा हितसाधने यागादौ वा पुरुषं प्रवर्त्तयदेवावबोधयति। "अयमात्मा ब्रह्म" इत्यादि वाक्य तु स्वमर्थं केवलमप्रपञ्चं ब्रह्म बोधयत्येव न प्रवर्त्तयति, विषयाभावादित्यर्थः। नन्ववबोध एव विषयस्तत्राह॥ न पुरुष इति॥ ब्रह्मचोदनया पुरुषोऽवबोधे न प्रवर्त्त्यत इत्यत्र हेतुं पूर्व्ववाक्येनाह॥ अवबोधस्येति॥ स्वजन्यज्ञाने स्वय प्रमाण न प्रवर्त्तकमित्यत्र दृष्टान्तमाह॥ यथेति॥ मानादेव बोधस्य जातत्वात् जाते च विध्ययोगात् न वाक्यार्थज्ञाने पुरुषप्रवृत्तिः। तथा च प्रवर्त्तकमानमेयो धर्म्मः, उदासीनमानमेयं ब्रह्म, इति जिज्ञास्यभेदात् न तन्मीमांसयोः क्रमार्थोऽथशब्द इति भावः। एवमथशब्दस्यार्थान्तरासम्भवादानन्तर्य्यवाचित्वे सति तदवधित्वेन पुष्कलकारणं वक्तव्यमित्याह॥ तस्मादिति॥ उपदिश्यते सूत्रकृतेति शेषः। तत्किमित्यत आह॥ उच्यत इति॥ विवेकादीनामागमिकत्वेन प्रामाणिकत्व पुरस्तादेवोक्त। लौकिकव्यापारान्मनस उपरमः शमः। बाह्यकरणानामुपरमो दमः। ज्ञानार्थं विहितनित्यादिकर्म्मसन्न्यास उपरतिः। शीतोष्णादिद्वन्द्वसहनं तितिक्षा। निद्रालस्यप्रमादत्यागेन मनःस्थितिः समाधानं। सर्व्वत्रास्तिकता श्रद्धा। एतत्षट्कप्राप्तिः शमादिसम्पत्। अत्र विवेकादीनामुत्तरोत्तरहेतुत्वेनाधिकारिविशेषणत्वं मन्तव्यं। तेषामन्वयव्यतिरेकाभ्यां ब्रह्मजिज्ञासाहेतुत्वमाह॥ तेष्विति॥ अथ कथञ्चित् कुतूहलितया ब्रह्मविचारप्रवृत्तस्यापि फलपर्य्यन्तं तज्ज्ञानानुदयाद्व्यतिरेकसिद्धिः। अथशब्दव्याख्यानमुपसंहरति॥ तस्मादिति॥ ननूक्तविवेका-

नित्यफलतां दर्शयति, "तद्यथेह कर्म्मचितो लोकः क्षीयत एव-मेवामुत्र पुण्यचितो लोकः क्षीयत इत्यादि" तथा ब्रह्मविज्ञा-नादपि परं पुरुषार्थं दर्शयति, "ब्रह्मविदाप्नोति परमित्यादि", तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्या। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च वक्ष्यमाणलक्षणं "जन्माद्यस्य

---

दिकं न सम्भवति। "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्या-दिश्रुत्या कर्म्मफलस्य नित्यत्वेन ततो वैराग्यासिद्धेः। जीवस्य ब्रह्म-स्वरूपमोक्षस्यायुक्तः, भेदात्, तस्य लोष्टादिवत् पुरुषार्थत्वायोगाच्च। ततो न मुमुक्षासम्भव इत्याक्षेपपरिहारार्थोऽतःशब्दः, तं व्याचष्टे॥ अतःशब्द इति॥ अथशब्देनानन्तर्य्यवाचिना तदवधित्वेनार्थाद्विवेका-दिचतुष्टयस्य ब्रह्मजिज्ञासाहेतुत्व यदुक्तं तस्यार्थिकहेतुत्वस्याक्षेपनि-रासायानुवादकोऽतःशब्द इत्यर्थ। उक्तं विवृणोति॥ यस्मादिति॥ तस्मादित्युत्तरेण सम्बन्धः। "यदल्पं तन्मर्त्यं यत् कृतकं तदनित्यं" इति न्यायवती "तद्यथेह" इत्यादिश्रुतिः कर्म्मफलाक्षयत्वश्रुतेर्बाधिका। तस्मात् "अतोऽन्यदार्त्तम्" इति श्रुत्या अनात्ममात्रस्यानित्यत्वविवेकाद्वै-राग्यलाभ इति भावः। मुमुक्षां सम्भावयति॥ तथेति॥ यथा वेदः कर्म्मफलानित्यत्व दर्शयति तथा ब्रह्मज्ञानात् प्रशान्तशोकानलमपारं स्वयंज्योतिरानन्द दर्शयतीत्यर्थ। जीवत्वादेरध्यासोक्त्या ब्रह्मत्वसम्भव उक्त एवेति भावः। एवमथातःशब्दाभ्यां पुष्कलकारणवतोऽधिका-रिणः समर्थनाच्छास्त्रमारब्धव्यमित्याह॥ तस्मादिति॥ सूत्रवाक्यपूर-णार्थमध्याहृतकर्त्तव्यपदान्वयार्थं ब्रह्मजिज्ञासापदेन विचारं लक्षयितुं तस्य स्वाभिमतसमासकथनेनावयवार्थं दर्शयति॥ ब्रह्मण इति॥ ननु "धर्म्माय जिज्ञासा" इतिवत् "ब्रह्मजिज्ञासा" इति चतुर्थीसमासः किं न स्यादिति चेत्। उच्यते। जिज्ञासापदस्य हि मुख्यार्थ इच्छा, तस्याः प्रथमं कर्म्मकारकमपेक्षितं पश्चात् फलं, तत्रादौ कर्म्मज्ञानार्थं षष्ठी-समासो युक्तः। कर्म्मण्युक्ते सत्यर्थात् फलमुक्तं भवति, इच्छायाः कर्म्मण एव फलत्वात्। यथा "स्वर्गस्येच्छा" इत्युक्ते स्वर्गस्य फलत्वं लभ्यते तद्वत्। अत एव "धर्म्मजिज्ञासा" इत्यत्रापि सा हि तस्य ज्ञातुमिच्छेति

यत इति"। अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यं। ब्रह्मण इति कर्मणि षष्ठी न शेषे। जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च। ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, सम्बन्धसामान्यस्य विशेषनिष्ठत्वात्, एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात्, न व्यर्थो ब्रह्माश्रिताशेष-

---

इच्छां गृहीत्वा षष्ठीसमासो दर्शितः। विचारलक्षणायान्तु विचारस्य क्लेशात्मकतया प्रथमं वृत्तिविषयत्वेन प्रतिबिम्बितत्वेन च फलाकाङ्क्षत्वात् धर्माय जिज्ञासेति चतुर्थीसमास उक्तः, तथा वृत्तिकारैः "ब्रह्मणो जिज्ञासा" इत्युक्तश्चेदस्तु ज्ञानत्वेन ब्रह्मणः फलत्वादिति। अधुना ब्रह्मपदार्थमाह॥ ब्रह्म चेति॥ ननु "ब्रह्म क्षत्रमिदं ब्रह्म आयाति ब्रह्म स्वयम्भुर्ब्रह्म प्रजापतिः" इति श्रुतिः लोके च ब्राह्मणत्वजातौ जीवे वेदे कमलासने च ब्रह्मशब्दः प्रयुज्यत इत्याशङ्क्याह॥ अत एवेति॥ जगत्कारणत्वलक्षणप्रतिपादकसूत्रीसाङ्गत्यप्रसङ्गादेवेत्यर्थः। वृत्त्यन्तरे शेषे षष्ठीत्युक्तं दूषयति॥ ब्रह्मण इतीति॥ सम्बन्धसामान्यं शेषः। जिज्ञासेत्यत्र सन्प्रत्ययवाच्याया इच्छाया ज्ञानं कर्म। तस्य ज्ञानस्य ब्रह्म कर्म। तत्र सकर्मकक्रियायाः कर्म ज्ञानं विना ज्ञातुमशक्यत्वात्। इच्छाया विषयज्ञानजन्यत्वाच्च प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यं न शेष इत्यर्थः। ननु प्रमाणादिकमन्यदेव तत् कर्मास्तु ब्रह्म तु शेषितया सम्बध्यतां तत्राह॥ जिज्ञास्यान्तरेति॥ श्रुतं कर्म त्यक्त्वान्यदश्रुतं कल्पयन् "पिण्डमुत्सृज्य करं लेढि" इति न्यायमनुसरतीति भावः। गूढाभिसन्धिः शङ्कते॥ नन्विति॥ षष्ठी शेषे [पा०२।३।५०] इति विधानात् षष्ठ्या सम्बन्धमात्रं प्रतीतमपि विशेषाकाङ्क्षायां सकर्मकक्रियासन्निधानात् कर्मत्वे पर्यवस्यतीत्यर्थः। अभिसन्धिमजानन्निवोत्तरमाह॥ एवमपीति॥ कर्मत्वलाभेऽपि प्रत्यक्षा कर्तृकर्मणोः कृतीति [पा०२।३।६५] सूत्रेण जिज्ञासापदस्याप्यव्ययान्तत्वेन कृदन्तस्य योगे विहितं प्रथमापेक्षितं च कर्मत्वं त्यक्त्वा परोक्षमशब्दं कल्पयत इत्यर्थः। शेषवादी स्वाभिस

विचारप्रतिज्ञानार्थत्वादिति चेत्। न। प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात्। ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानं। तस्मिन् प्रधाने जिज्ञासाकर्म्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि। यथा "राजासौ गच्छति" इत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत्। श्रुत्यनुगमाच्च। "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः श्रुतयः, "तद्विजिज्ञासस्व तद्ब्रह्म" इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तच्च कर्म्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्माद्ब्रह्मण इति कर्म्मणि षष्ठी। ज्ञातुमिच्छा जिज्ञासा। अवगतिपर्य्यन्तं ज्ञानं

---

न्धिमुद्घाटयति॥ न व्यर्थ इति॥ शेषषष्ठ्यां ब्रह्मसम्बन्धिनी जिज्ञासा प्रतिज्ञाता भवति। तत्र यानि ब्रह्माश्रितानि लक्षणप्रमाणयुक्तिज्ञानसाधनफलानि तेषामपि विचारः प्रतिज्ञातो भवति। तज्जिज्ञासाया अपि ब्रह्मज्ञानार्थत्वेन ब्रह्मसम्बन्धित्वात्। कर्म्मणि षष्ठ्यान्तु ब्रह्मकर्म्मक एव विचारः प्रतिज्ञातो भवतीत्यभिसन्धिना शेषषष्ठीत्युच्यते। अतो मत्प्रयासो न व्यर्थः। ब्रह्मतत्सम्बन्धिनां सर्व्वेषां विचारप्रतिज्ञानमर्थः फलं यस्य तत्त्वादित्यर्थः। तत्प्रयासस्येदं फलं न युक्तं। सूत्रेण मुखतः प्रधानस्य ब्रह्मणो विचारे प्रतिज्ञाते सति तदुपकरणानां विचारस्यार्थिकप्रतिज्ञाया उदितत्वादित्याह सिद्धान्ती॥ न प्रधानेति॥ सङ्गृहीतमर्थं सदृष्टान्तं व्याकरोति॥ ब्रह्म हीत्यादिना॥ "तद्विजिज्ञासस्व" इति मूलश्रुत्यनुसाराच्च कर्म्मणि षष्ठीत्याह॥ श्रुत्यनुगमाच्चेति॥ श्रुतिसूत्रयोरेकार्थत्वलाभाच्चेत्यर्थः। जिज्ञासापदस्यावयवार्थमाह॥ ज्ञातुमिति॥ नन्वनवगते वस्तुनीच्छाया अदर्शनात्तस्या मूलं विषयज्ञानं वक्तव्यं, ब्रह्मज्ञानन्तु जिज्ञासायाः फलं, तदेव मूलं कथमित्याशङ्क्याह॥ अवगतीति॥ आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिः पर्य्यन्तोऽवधिर्यस्याखण्डसाक्षात्कारवृत्तिज्ञानस्य तदेव जि-

सन्वाच्याया इच्छायाः कर्म्म, फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः। निःशेष-संसारवीजाविद्याद्यनर्थनिवर्हणात्। तस्माद्ब्रह्म जिज्ञासितव्यं॥ तत् पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्? यदि प्रसिद्धं, न जिज्ञासितव्यं, अथाप्रसिद्धं, नैव शक्यं जिज्ञासितुमिति।

---

ज्ञासायाः कर्म्म, तदेव फलं। मूलन्त्वापातज्ञानमित्यधुना वक्ष्यत इति फलमूलज्ञानयोर्भेदान्न जिज्ञासानुपपत्तिरित्यर्थः। ननु गमनस्य ग्रामं कर्म्म, तत्प्राप्तिः फलमिति भेदात कर्म्म एव फलमित्ययुक्तं तत्राह॥ फले-ति॥ क्रियान्तरे तयोर्भेदेऽपि इच्छायाः फलविषयत्वात् कर्म्मैव फलमि-त्यर्थः। ननु ज्ञानावगत्योरैक्याद्भेदोक्तिरयुक्तेत्यत आह॥ ज्ञानेनेति॥ ज्ञान वृत्तिः अवगतिस्तत्फल इति भेद इति भावः। अवगन्तुमभिव्यञ्जयितुं। अवगतेः फलत्व स्फुटयति॥ ब्रह्मेति॥ हिशब्दोक्तं हेतुमाह॥ निःशे-षेति॥ वीजमविद्या आदिर्यस्यानर्थस्य तन्नाशकत्वादित्यर्थः। अव-यवार्थमुक्त्वा सूत्रवाक्यार्थमाह॥ तस्मादिति॥ अत्र सन्प्रत्ययस्य वि-चारलक्षकत्वं तव्यप्रत्ययेन सूचयति। अथातःशब्दाभ्यामधिकारिण साधितत्वात् तेन ब्रह्मज्ञानाय विचारः कर्त्तव्य इत्यर्थः॥ इति तृतीय-वर्णकं॥

प्रथमवर्णके बन्धस्याध्यासत्वोक्त्या विषयादिसिद्धावपि ब्रह्मप्रसिद्ध्य-प्रसिद्ध्योर्विषयादिसम्भवासम्भवाभ्यां शास्त्रारम्भसन्देहे पूर्व्वपक्षमाह। तत् पुनरिति। पुनःशब्दो वर्णकान्तरद्योतनार्थः॥ यदि वेदान्तवि-चारात् प्रागेव ब्रह्मज्ञानं तर्ह्यज्ञातत्वरूपविषयत्वं नास्ति। अज्ञाना भावेन तन्निवृत्तिरूपफलमपि नास्तीति न विचारयितव्यं। यथाज्ञातं केनापि तर्हि तदुद्देशेन विचारः कर्त्तुं न शक्यते, अज्ञातस्योद्देशायो-गात्। तथा च बुद्ध्यारोहाभावात् विचारात्मकशास्त्रेण वेदान्तैश्च प्रति-पादनायोगात्। तत्प्रतिपाद्यत्वरूपः सम्बन्धो नास्तीति ज्ञानानुत्पत्तेः फलमपि नास्तीत्यनारभ्यं शास्त्रमित्यर्थः।

आपाततप्रसिद्ध्या विषयादिलाभादारम्भणीयमिति सिद्धान्तयति।

उच्यते। अस्ति तावन्नित्यशुद्धबुद्धमुक्तस्वभावं सर्व्वज्ञं सर्व्वशक्तिसमन्वितं ब्रह्म। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्था प्रतीयन्ते, बृहतेर्धातोरर्थानुगमात्, सर्व्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्व्वो हि आत्मास्तित्वं प्रत्येति, न नाहमस्मीति। यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्व्वो

---

उच्यत इत्यादिना॥ प्रसिद्ध तावदित्यर्थ। अस्तित्वस्याप्रकृतत्वेनास्तिपदस्य प्रसिद्धिपरत्वात। ननु केन मानेन ब्रह्मण प्रसिद्धि। न च "सत्य ज्ञानमनन्त ब्रह्म" इति श्रुत्या सेति वाच्य। ब्रह्मपदस्य लोके सङ्गतिग्रहाभावेन तद्घटितवाक्यस्याबोधकत्वादित्याशङ्क्य ब्रह्मपदव्युत्पत्त्या प्रथमं तस्य निर्गुणस्य सगुणस्य च प्रसिद्धिरित्याह॥ ब्रह्मशब्दस्य होति॥ अस्यार्थ। श्रुतौ सूत्रे ब्रह्मशब्दस्य प्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते, प्रमाणवाक्ये निरर्थकशब्दप्रयोगादर्शनात्। स चार्थो "महत्त्वरूप" इति व्याकरणान्निश्चीयते, "बृहि वृद्धाविति" स्मरणात। सा च वृद्धिर्निरवधिकमहत्त्वमिति सङ्कोचकाभावात् श्रुतावनन्तपदेन सह प्रयोगाच्च ज्ञायते। निरवधिकमहत्त्वञ्चान्तवत्त्वादिदोषवत्त्वे सर्व्वज्ञत्वादिगुणहीनत्वे च न सम्भवति। लोके गुणहीनदोषवतोरल्पत्वप्रसिद्धे। अतो बृहणाद् ब्रह्मेति व्युत्पत्त्या देशकालवस्तुत परिच्छेदाभावरूप नित्यत्व प्रतीयते। अविद्यादिदोषशून्यत्व शुद्धत्व। जाड्यराहित्य बुद्धत्व। बन्धकालेऽपि स्वतो बन्धाभावो मुक्तत्वञ्च प्रतीयते। एव सकलदोषशून्य निर्गुण प्रसिद्ध। तथा सर्व्वज्ञत्वादिगुणकञ्च तत्पदवाच्य प्रसिद्ध। ईश्वरस्य कार्य्यस्य चापरिशेषेऽल्पत्वप्रसङ्गेन सर्व्वज्ञत्वस्य सर्व्वकार्य्यशक्तिमत्त्वस्य च लाभादिति। एव "तत्पदाप्रसिद्धेरप्रमाणत्वेनायातत्वादज्ञानानिवर्त्तकत्वाज्जिज्ञासानुपपत्तिः" इति उक्ता त्वपदार्थात्मनापि ब्रह्मण प्रसिद्धा तदुपपत्तिरित्याह॥ सर्व्वस्येति॥ सर्व्वस्य लोकस्य योऽयमात्मा तदभेदाद् ब्रह्मण प्रसिद्धिरित्यर्थ। नन्वात्मन प्रसिद्धि केत्यत आह॥ सर्व्वो होति॥ "अहमस्मीति" न "प्रत्येति" इति। न। किन्तु प्रत्येत्येव सैव सच्चिदात्मन प्रसिद्धिरित्यर्थ।

लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्म। यदि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नं। न। तद्विशेषं प्रति विप्रतिपत्तेः। "देहमात्रं चैतन्यविशिष्टमात्मा" इति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः। "इन्द्रियाण्येव चेतनान्यात्मा" इत्यपरे। "मन" इत्यन्ये। "विज्ञानमात्रं क्षणिकं" इत्येके। "शून्यं" इत्यपरे। "अस्ति देहादिव्यतिरिक्तः संसारी कर्त्ता भोक्ता" इत्यपरे। "भोक्तैव केवलं न कर्त्ता" इत्येके। "अस्ति तद्व्यतिरिक्त ईश्वरः सर्व्वज्ञः सर्व्वशक्तिः" इति केचित्।

---

आत्मनः कुतः सत्तेति शून्यमतमाशङ्क्याह ॥ यदि हीति॥ आत्मनः शून्यस्य प्रतीतौ "अहं नास्मि" इति लोको जानीयात्। लोकस्तु "अहमस्मि" इति जानाति, तस्मादात्मनोऽस्तित्वप्रसिद्धिरित्यर्थः। आत्मप्रसिद्धावपि ब्रह्मणः किमायातं तत्राह ॥ आत्मा चेति ॥ "अयमात्मा ब्रह्म" इत्यादि श्रुतेरिति भावः। प्रसिद्धिपक्षोक्तं दोषं पूर्व्वपक्षी स्मारयति॥ यदीति ॥ अज्ञातत्वाभावे न विषयाद्यभावादविचार्य्यत्वं प्राप्तमित्यर्थः। यथा "इदं रजतं" इति वस्तुतः शुक्तिप्रसिद्धिस्तद्वत् "अहमस्मि" इति सा त्वचैतन्यरूपात्मसामान्येन वस्तुतो ब्रह्मणः प्रसिद्धिः, नेयं पूर्णानन्दब्रह्मत्वरूपविशेषगोचरा, वादिना विवादाभावप्रसङ्गात्। न हि शुक्तित्वविशेषदर्शने सति "रजतं रङ्गमन्यद्वा" इति विप्रतिपत्तिरस्ति। अतो विप्रतिपत्त्यन्यथानुपपत्त्या सामान्यतः प्रसिद्धावपि विशेषस्याज्ञातत्वाद्विषयादिसिद्धिरिति सिद्धान्तयति ॥ नेत्यादिना ॥ सामान्यविशेषभावः स्वात्मनि सच्चित्पूर्णादिपदवाच्यभेदात् कल्पित इति मन्तव्यं। तत्र स्थूलसूक्ष्मक्रमेण विप्रतिपत्तीरुपन्यस्यति। देहमात्रमित्यादिना। शास्त्रज्ञानशून्याः प्राकृताः। वेदबाह्यमतान्युक्त्वा तार्किकादिमतमाह। अस्तीति । साङ्ख्यमतमाह। भोक्तेति । किमात्मा देहादिरूपः उत तद्भिन्न इति विप्रतिपत्तिकोटित्वेन देहेन्द्रियमनोबुद्धिशून्यान्युक्त्वा त-

"आत्मा स भोक्तुः" इत्यपरे। एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः। तत्राविचार्य्य यत् किञ्चित् प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येतानर्थञ्चेयात्। तस्माद्

---

द्भिन्नोऽपि कर्तृत्वादिमान्न वेति विप्रतिपत्तिकोटित्वेन तार्किकसाङ्ख्यपक्षावुपन्यस्याकर्त्तापीश्वराद्भिन्नो न वेति विवादकोटित्वेन योगिमतमाह ॥ अस्ति तद्व्यतिरिक्त ईश्वर इति ॥ निरतिशयसत्वं गृहीत्वा ईश्वरः सर्व्वज्ञत्वादिसम्पन्न इति योगिनो वदन्ति।

भेदकोटिमुक्त्वा सिद्धान्तकोटिमाह ॥ आत्मा स भोक्तुरिति ॥ भोक्तुर्जीवस्याकर्त्तुः साक्षिणः स ईश्वर आत्मा स्वरूपमिति वेदान्तिनो वदन्तीत्यर्थः ॥ विप्रतिपत्तीरुपसंहरति॥ एवं बहव इति ॥ विप्रतिपत्तीनां प्रपञ्चो निरासश्च विवरणोपन्यासेन दर्शितः सुखबोधायेतोहोपरम्यते; तत्र युक्तिवाक्याश्रयाः सिद्धान्तिनो "जीवो ब्रह्मैव आत्मत्वाद् ब्रह्मवत्" इत्यादि युक्तेः, "तत्त्वमसि" इत्यादि श्रुतेश्चाबाधितायाः सत्वात्। अन्ये तु देहादिरात्माहंप्रत्ययगोचरत्वाद्व्यतिरेकेण घटादिवदित्यादियुक्त्याभासं, "स वा एष पुरुषोऽन्नरसमयः" इन्द्रियसंवादे "चक्षुरादयः ते ह वाचमूचुः, मैन उवाच, योऽयं विज्ञानमयः, असदेवेदमग्र आसीत्, कर्त्ता बोद्धा, अनन्योऽन्तर आत्मानन्दमयः" इति वाक्याभासञ्चाश्रिता इति विभागः। "देहादिरनात्मा भौतिकत्वाद्दृश्यत्वात्" इत्यादिन्यायैः "आनन्दमयोऽभ्यासात्" इत्यादिसूत्रैश्चाभासत्वं वक्ष्यते। ननु सन्तु विप्रतिपत्तयस्तथापि यस्य यन्मते श्रद्धा तदाश्रयणात्तस्य स्वार्थः सेत्स्यति किं ब्रह्मविचारारम्भेणेत्यत आह ॥ तत्राविचार्य्येति ॥ ब्रह्मात्मैक्यज्ञानादेव मुक्तिरिति वस्तुगतिः। मतान्तराश्रयणे तदभावान्मोक्षासिद्धिः। किञ्चात्मानमन्यथा ज्ञात्वा तत्पापेन संसारान्धकूपे पतेत् ॥

"अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः"

इति श्रुतेः।

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा" ॥

इति वचनाच्चेत्यर्थः। अतः सर्व्वेषां मुमुक्षूणां निःश्रेयसफलाय वदा-

ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥ १ ॥

"ब्रह्म जिज्ञासितव्यम्" इत्युक्तं। किंलक्षणकं पुनस्तद्ब्रह्म? इत्यत आह भगवान् सूत्रकारः।

## जन्माद्यस्य यत इति ॥ २ ॥

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। जन्म-

---

न्तविचारः कर्त्तव्य इति सूत्रार्थमुपसंहरति ॥ तस्मादिति ॥ बन्धस्याध्यस्तत्वेन विषयादिसद्भावादगतार्थत्वादधिकारिलाभादामतप्रसिद्धा विषयादिसम्भवाच्च वेदान्तविषया मीमांसापूजिता विचारणा वेदान्ताविरोधिनो ये तर्कास्तन्त्रान्तरस्थास्तान्युपकरणानि यस्याः सा निःश्रेयसायारभ्यत इत्यर्थः। ननु सूत्रे विचारवाचिपदाभावात्तदारम्भः कथं सूत्रार्थ इत्यत आह॥ ब्रह्मेति॥ ब्रह्मज्ञानेच्छोक्तिद्वारा विचारं लक्षयित्वा तत्कर्त्तव्यतां ब्रवीतीति भावः। एवं प्रथमसूत्रस्य चत्वारोऽर्था व्याख्यानचतुष्टयेन दर्शिताः। सूत्रस्य चानेकार्थत्वं भूषणं। नन्विदं सूत्रं शास्त्राद्बहिः स्थित्वा शास्त्रमारम्भयति अन्तर्भूत्वा वा? आद्ये तस्य हेयता, शास्त्रासम्बन्धात्। द्वितीये तस्यारम्भकं वाच्यं। न च स्वयमेवारम्भकं स्वस्मात् स्वोत्पत्तेरित्यात्माश्रयात्, न चारम्भकान्तरं पश्याम इति। उच्यते। श्रवणविधिना आरब्धमिदं शास्त्रं शास्त्रान्तर्गतमेव शास्त्रारम्भं प्रतिपादयति। यथाऽध्ययनविधिर्वेदान्तर्गत एव कृत्स्नवेदस्याध्ययने प्रयुङ्क्ते तद्वदित्यनवद्यं॥ १ ॥ प्रथमसूत्रं समाप्तं ॥

प्रथमसूत्रेण शास्त्रारम्भमुपपाद्य शास्त्रमारभमाणः पूर्व्वोत्तराधिकरणयोः सङ्गतिं वक्तुं वृत्तं कीर्त्तयति॥ ब्रह्मेति॥ मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तविचारः कर्त्तव्य इत्युक्तं। ब्रह्मणो विचार्य्यत्वोक्त्या अर्थात् प्रमाणादिविचाराणां प्रतिज्ञातत्वेऽपि ब्रह्मप्रमाणं ब्रह्मयुक्तिरित्यादिविशिष्टविचाराणां विशेष्यब्रह्मज्ञानं विना कर्त्तुमशक्यत्वात्तत्स्वरूपज्ञानायादौ लक्षणं वक्तव्यं तच्च सम्भवतीत्याक्षिप्य सूत्रकृतं पूजयन्नेव लक्षणसूत्रमवतारयति ॥ किंलक्षणकमिति ॥ किमाक्षेपे, नास्त्येव लक्षणमित्यर्थः।

स्थितिभङ्गं समासार्थः। जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षञ्च। श्रुतिनिर्देशस्तावत्, "यतो वा इमानि भूतानि जायन्ते" इति। अस्मिन् वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्। वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य*धर्मिणः स्थितिप्रलयसम्भवात्। "अस्य" इति प्रत्यक्षादिसन्निधापितस्य धर्मिण

---

आक्षेपेणास्योत्थानादाक्षेपसङ्गतिः। लक्षणद्योतिवेदान्तानां स्पष्टब्रह्मलिङ्गानां लक्ष्ये ब्रह्मणि समन्वयोक्तेः श्रुतिशास्त्राध्यायपादसङ्गतयः। तथा हि। "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं विषयः॥ तत्किं ब्रह्मणो लक्षणं वक्ति न वेति सन्देहः। तत्र पूर्व्वपक्षे ब्रह्मस्वरूपासिद्ध्या मुक्त्यसिद्धिः फलं सिद्धान्ते तत्सिद्धिरिति भेदः। यद्यप्याक्षेपसङ्गतौ पूर्व्वाधिकरणफलमेव फलमिति कृत्वा पृथक् न वक्तव्यं। तदुक्तं,

"आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्म्मणि।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्त्तत इति"॥

तथापि स्पष्टार्थमुक्तमिति मन्तव्यं, यत्र पूर्व्वाधिकरणसिद्धान्तेन पूर्व्वपक्षः तत्रापवादिकी सङ्गतिः। प्राप्तिस्तदर्था चिन्ता। तत्र न वक्तीति प्राप्तं। जन्मादेर्जगद्धर्म्मत्वेन ब्रह्मलक्षणत्वायोगात्। न च जगदुपादानत्वे सति कर्त्तृत्वं लक्षणमिति वाच्यं। कर्त्तुरुपादानत्वे दृष्टान्ताभावेनानुमानाप्रवृत्तेः। न च श्रौतस्य ब्रह्मणः श्रुत्यैव लक्षणसिद्धेः किमनुमानेनेति वाच्यं। अनुमानस्य श्रुत्यनुग्राहकत्वेन तदभावे तद्विरोधे वा श्रुत्यर्थासिद्धेः। न च जगत्कर्त्तृत्वमुपादानत्वं वा प्रत्येकं लक्षणमस्त्विति वाच्यं। कर्त्तृमात्रस्योपादानाद्भिन्नस्य ब्रह्मत्वायोगात्। वस्तुतः परिच्छेदादिति प्राप्ते पुरुषाभ्यूहमात्रस्यानुमानस्याप्रतिष्ठितस्यातीन्द्रियार्थे स्वातन्त्र्यायोगात्। अपौरुषेयतया निर्दोषश्रुत्युक्तोभयकारणत्वस्य सुखादिदृष्टान्तेन सम्भावयितुं शक्यत्वात्। तदेव लक्षणमिति सिद्धान्तयति॥ जन्माद्यस्य यत इतीति॥ अत्र यद्यपि जगज्जन्मस्थितिलयकारणत्वं लक्षणं प्रतिपाद्यते तथाप्यग्रे "प्रतिज्ञातिश्च" इत्यधिकरणे तत्का-

---

* लब्धात्मकस्येति पू॰ मु॰ पु॰ पाठः॥

इदमा निर्द्देशः। षष्ठी जन्मादिधर्म्मसम्बन्धार्था। "यत इति" कारणनिर्द्देशः। अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्व्वज्ञात् सर्व्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः। अन्येषामपि भाव-

---

रणत्वं न कर्तृत्वमात्रं किन्तु कर्तृत्वोपादानत्वोभयरूपत्वमिति वक्ष्यमाणं सिद्धवत्कृत्योभयकारणत्वं लक्षणमित्युच्यत इति न पौनरुक्त्यं। ननु जिज्ञास्यनिर्गुणब्रह्मणः कारणत्वं कथं लक्षणमिति चेत्। उच्यते। यथा रजतं शुक्तेर्लक्षणं यद्रजतं सा शुक्तिरिति, तथा यज्जगत्कारणं तद् ब्रह्मेति कल्पितं कारणत्वं तटस्थं सदेव ब्रह्मणो लक्षणमित्यनवद्यं। सूत्रं व्याचष्टे॥ जन्मेत्यादिना॥ बहुव्रीहौ पदार्थाः सर्व्वे वाक्यार्थस्यान्यपदार्थस्य विशेषणानि। यथा चित्रगोर्देवदत्तस्य चित्रा गावः तद्वदत्रापि जन्मादीति नपुंसकैकवचनद्योतितस्य समाहारस्य जन्मस्थितिभङ्गस्य जन्मविशेषणं, तथा च जन्मनः समासार्थैकदेशस्य गुणत्वेन संविज्ञानं यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञान इत्यर्थः। तत्र यज्जन्मकारणं तद् ब्रह्मेति ब्रह्मत्वविधानमयुक्तं, स्थितिलयकारणाद्भिन्नत्वे न ज्ञाते ब्रह्मत्वस्य ज्ञातुमशक्यत्वात्। अतो जन्मस्थितिभङ्गैर्निरूपितानि त्रीणि कारणत्वानि मिलितान्येव लक्षणमिति मत्वा सूत्रे समाहारो द्योतित इति ध्येयं। नन्वादित्वं जन्मनः कथं ज्ञातव्यं संसारस्यानादित्वादित्यत आह॥ जन्मनश्चेति॥ मूलश्रुत्या वस्तुगत्या चादित्वं ज्ञात्वा तदपेक्ष्य सूत्रकृता जन्मन आदित्वमुक्तमित्यर्थः। इदमः प्रत्यक्षार्थमात्रवाचित्वमाशङ्क्योपस्थितसर्व्वकार्य्यवाचित्वमाह॥ अस्येतीति॥ वियदादिजगतो नित्यत्वान्न जन्मादिसम्बन्ध इत्यत आह॥ षष्ठीति॥ वियदादेर्महाभूतानां जन्मादिसम्बन्धो वक्ष्यत इति भावः। ननु जगतो जन्मादेर्वा ब्रह्मसम्बन्धाभावान्न लक्षणत्वमित्याशङ्क्य तत्कारणत्वं लक्षणमिति पञ्चम्यर्थमाह॥ यत इतीति॥ यच्छब्देन सत्यं ज्ञानमनन्तं आनन्दरूपं वस्तूच्यते। "आनन्दाद्ध्येवेति" निर्णीतत्वात्। तथा च स्वरूपलक्षणसिद्धिरिति मन्तव्यं। पदार्थमुक्त्वा पूर्व्वसूत्रस्थब्रह्मपदानुषङ्गेण तच्छब्दा-

विकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणं। यास्कपरिपठितानान्तु "जायते अस्ति" इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले सम्भाव्यमानत्वात् मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृह्येरन्निति आशङ्क्येत तन्मा शङ्कीति या उत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च ते गृह्यन्ते। न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वा ऽन्यतः प्रधाना-

---

ध्याहारेण च सूत्रवाक्यार्थमाह॥ अस्येत्यादिना॥ कारणस्य सर्व्वज्ञत्वादिसम्भावनार्थानि जगतो विशेषणानि। यथा कुम्भकारः प्रथमं कुम्भशब्दाभेदेन विकल्पितं पृथुबुध्नोदराकारस्वरूपं बुद्धावालिख्य तदात्मना कुम्भं व्याकरोति बहिः प्रकटयति, तथा परमकारणमपि स्वेप्सितनामरूपात्मना व्याकरोति इत्यनुमीयत इति मत्वाह॥ नामरूपाभ्यामिति॥ इत्थम्भावे तृतीया। व्याकार्य्यं चेतनजन्यं कार्य्यत्वात् कुम्भवदिति प्रधानशून्ययोर्निरासः। हिरण्यगर्भादिजीवजन्यत्वं निरस्यति॥ अनेकेति॥ श्राद्धवैश्वानरेष्ट्यादौ पितापुत्रयोः कर्तृभोक्त्रोर्भेदात् पृथगुक्तिः। "यो ब्रह्माणं विदधाति पूर्व्वं सर्व्वं एत आत्मानो व्युच्चरन्ति" इति श्रुत्या स्थूलसूक्ष्मदेहोपाधिद्वारा जीवानां कार्य्यत्वेन जगन्मध्यपातित्वान्न जगत्कारणत्वमित्यर्थः। कारणस्य सर्व्वज्ञत्व सम्भावयति॥ प्रतिनियतेति॥ प्रतिनियतानि व्यवस्थितानि देशकालनिमित्तानि येषां क्रियाफलानां तदाश्रयस्येत्यर्थः। स्वर्गस्य क्रियाफलस्य मेरुपृष्ठं देशः। देहपाताद्रूर्द्ध काल उत्तरायणमरणादिनिमित्तं प्रतिनियतं। एवं राजसेवाफले ग्रामादेर्देशादिव्यवस्था ज्ञेया। तथा च यथा सेवाफलं देशाद्यभिज्ञदातृकं तथा कर्म्मफल फलत्वादिति सर्व्वज्ञत्वसिद्धिरिति भावः। सर्व्वशक्तित्वं सम्भावयति॥ मनसापीति॥ नन्वन्येऽपि विपरिणामादयो भावविकाराः सन्तीति किमिति जन्मादीत्यादिपदेन न गृह्यन्ते तत्राह॥ अन्येषामिति॥ वृद्धिपरिणामयोर्जन्मनि अपक्षयस्य नाशेऽन्तर्भाव इति भावः॥ "देहो जायते अस्ति वर्द्धते परिणमते अपक्षीयते नश्यति" इति यास्कमुनिवाक्यं एतत्सूत्रमूलं किं न स्यादत आह॥

दचेतनादणुभ्यो वाभावाद्वा संसारिणो वोत्पत्त्यादि सम्भावयितुं शक्यं, न च स्वभावतः। विशिष्टदेशकालनिमित्तानामिहोपादानात्। एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्त ईश्वरकारणिनः। नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे। न। वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणां। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननि-

---

यास्केति ॥ यास्कमुनिः किल महाभूतानामुत्पन्नानां स्थितिकाले भौतिकेषु प्रत्यक्षेण जन्मादिषट्कमुपलभ्य निरुक्तवाक्यञ्चकार तन्मूलीकृत्य जन्मादिषट्ककारणत्वं लक्षणं सूत्रार्थ इति ग्रहणे सूत्रकृता ब्रह्मलक्षणं न सङ्गृहीतं किन्तु महाभूतानां लक्षणमुक्तमिति शङ्का स्यात् सा मा भूदिति ये श्रुत्युक्ता जन्मादयस्त एव गृह्यन्त इत्यर्थः। यदि निरुक्तस्यापि श्रुतिर्मूलमिति महाभूतजन्मादिकमर्थस्तर्हि सा श्रुतिरेव सूत्रस्य मूलमस्तु किमन्तर्गडुना निरुक्तेनेति भावः। यदि जगतो ब्रह्मातिरिक्तं कारणं स्यात् तदा ब्रह्मलक्षणस्य तत्रातिव्याप्त्यादिदोषः स्यात्, अतस्तन्निरासाय लक्षणसूत्रेण ब्रह्म विना जगज्जन्मादिकं न सम्भवति कारणान्तरासम्भवादिति युक्तिः सूचिता, सा तर्कपादे विस्तरेण वक्ष्यते ; अधुना सङ्क्षेपेण तां दर्शयति ॥ न यथोक्तेत्यादिना ॥ नामरूपाभ्यां व्याकृतस्येत्यादीनाञ्च चतुर्णां जगद्विशेषणानां व्याख्यानावसरे प्रधानशून्ययोः संसारिणश्च निरासो दर्शितः। परमाणूनामचेतनानां स्वतः प्रवृत्त्ययोगाज्जीवान्यस्य ज्ञानशून्यत्वनियमेनानुमानात् सर्वज्ञेश्वरासिद्धौ तेषां प्रेरकाभावात् जगदारम्भकत्वासम्भव इति भावः। स्वभावादेव विचित्रं जगदिति लोकायतस्तं प्रत्याह ॥ न चेति॥ जगत उत्पत्त्यादि सम्भावयितुं न शक्यमित्यन्वयः। किं स्वयमेव स्वस्य हेतुरिति स्वभाव उत कारणानपेक्षत्वं? नाद्यः, आत्माश्रयात्। न द्वितीय इत्याह ॥ विशिष्टेति ॥ विशिष्टान्यसाधारणानि देशकालनिमित्तानि तेषां कार्य्यार्थिभिरुपादीयमानत्वात् कार्य्यस्य कारणानपेक्षत्वं न युक्तमित्यर्थः। अनपेक्षत्वे धान्यार्थिनां भूविशेषे वर्षादिकाले बीजादिनिमित्ते च प्रवृत्तिर्न स्यादिति भावः। पूर्वोक्तसर्वज्ञत्वादिविशेषणकमी-

र्त्तत्ता हि ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता। सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्य्यते। श्रुत्यैव च तर्कस्याप्यभ्युपेतत्वात्। तथाहि "श्रोतव्यो मन्त-

---

श्वरं मुक्त्वा जगत उत्पत्त्यादिकं न सम्भवतीति भाष्येण कर्त्तारं विना कार्य्यं नास्तीति व्यतिरेक उक्तः। तेन "यत् कार्य्यं तत् सकर्त्तृकमिति" व्याप्तिर्ज्ञायते। एतदेव व्याप्तिज्ञानं जगति पक्षे कर्त्तारं साधयन् सर्व्वज्ञेश्वरं साधयति किं श्रुत्येति तार्किकाणां भ्रान्तिमुपन्यस्यति॥ एतदेवेति॥ एतदेवानुमानमेव साधनं न श्रुतिरिति मन्यन्त इति योजना। अथवा एतद्व्याप्तिज्ञानमेव श्रुत्यनुग्राहकयुक्तिमात्रत्वेनास्मत्सम्मतं सदनुमानं स्वतन्त्रमिति मन्यन्त इत्यर्थः। सर्व्वज्ञत्वमादिशब्दार्थः। यद्वा व्याप्तिज्ञानसहकृतमेतल्लक्षणमेवानुमानं मन्यन्त इत्यर्थः। तत्रायं विभागः। व्याप्तिज्ञानात् जगतः कर्त्तास्तीत्यस्तित्वसिद्धिः, पश्चात् स कर्त्ता सर्व्वज्ञः जगत्कारणत्वाद्व्यतिरेकेण कुलालादिवदिति सर्व्वज्ञत्वसिद्धिः, "लक्षणाद्" इत्यत्र "मन्यन्त" इत्यनुमानस्याभासत्वं सूचितं। तथा हि। अङ्कुरादौ तावज्जीवः कर्त्ता न भवति जीवाद्भिन्नस्य घटवदचेतनत्वनियमादन्यः कर्त्ता नास्त्येवेति व्यतिरेकनिश्चयात्, "यत् कार्य्यं तत् सकर्त्तृकं" इति व्याप्तिज्ञानासिद्धिः। लक्षणलिङ्गकानुमाने तु बाधः, अशरीरस्य जन्यज्ञानायोगात्, "यज्ज्ञानं तन्मनोजन्यं" इति व्याप्तिविरोधेन नित्यज्ञानासिद्धेर्ज्ञानाभावनिश्चयात्, तस्मादतीन्द्रियार्थे श्रुतिरेव शरणं। श्रुत्यर्थसम्भावनार्थत्वेनानुमानं युक्तिमात्रं न स्वतन्त्रमिति भावः। नन्विदमयुक्तं, श्रुतेरनुमानान्तर्भावमभिप्रेत्य भवदीयसूत्रघाताऽनुमानस्यैवोपन्यस्तत्वादिति वैशेषिकः शङ्कते॥ नन्विति॥ अतो "मन्यन्त"इत्यनुमानस्याभासोक्तिरयुक्तेति भावः। यदि श्रुतीनां स्वतन्त्रमानत्वं न स्यात्तर्हि"तत्तु समन्वयाद्"इत्यादिना तासां तात्पर्य्यं सूत्रकृन्न विचारयेत्, तस्मादुत्तरसूत्राणां श्रुतिविचारार्थत्वाज्जन्मादिसूत्रेऽपि श्रुतिरेव स्वातन्त्र्येण विचार्य्यते नानुमानमिति परिहरति॥ नेति॥ किञ्च मुमुक्षोर्ब्रह्मावगतिरभीष्टा यदर्थमस्य शास्त्रस्यारम्भः, सा च नानुमा-

व्य" इति श्रुतिः, "पण्डितो मेधावी गन्धारानेवोपसम्पद्येत एवमेवेहाचार्य्यवान् पुरुषो वेद" इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति। न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायां किन्तु श्रुत्यादयोऽनुभवादयश्च यथासम्भवमिह प्रमाणं, अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च। ब्रह्मविज्ञानस्य कर्त्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्, पुरुषाधीनात्मलाभत्वाच्च कर्त्तव्यस्य। कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यं लौकिकं वैदिकञ्च कर्म्म। यथा अश्वेन गच्छति पद्भ्यामन्यथा

---

नात्, "तन्त्वौपनिषदम्" इति श्रुते, अतो नानुमानं विचार्य्यमित्याह॥ वाक्यार्थेति॥ वाक्यस्य तदर्थस्य च विचाराद्यदध्यवसानं तात्पर्य्यनिश्चय. प्रमेयसम्भवनिश्चयश्च तेन जाता ब्रह्मावगतिर्मुक्तये भवतीत्यर्थ। सम्भवो बाधाभाव'। ननु किमनुमानमनपेक्षितमेव नेत्याह॥ सत्स्विति॥ विमतमभिन्ननिमित्तोपादानकं विमत चेतनप्रकृतिकं कार्य्यत्वात् सुखादिवदित्यनुमानं श्रुत्यर्थदार्ढ्यायापेक्षितमित्यर्थ। दार्ढ्यं संशयविपर्य्यासनिवृत्ति। "मन्तव्य" इति श्रुत्यर्थस्तर्केण सम्भावनीय इत्यर्थ। यथा कश्चिद् गन्धारदेशेभ्यश्चोरैरन्यत्रारण्ये बद्धनेत्र एव त्यक्त केनचिन्मुक्तबन्धस्तदुक्तमार्गग्रहणसमर्थ. पण्डित स्वयं तर्ककुशलो मेधावी स्वदेशानेव प्राप्नुयात्, एवमेवेहाविद्याकामादिभि' स्वरूपानन्दात् प्रच्याव्यास्मिन्नरण्ये संसारे क्षिप्त केनचिद्दयापरवशेनाचार्य्येण "नासि त्व संसारी" किन्तु "तत्त्वमसि" इत्युपदिष्टस्वरूप स्वयं तर्ककुशलश्चेत् "स्वरूप जानीयान्नान्यथा" इति श्रुते स्वस्य पुरुषमतिरूपतर्कापेक्षा दर्शयतीत्याह॥ पण्डित इति॥ आत्मन श्रुतेरित्यर्थ। ननु ब्रह्मणो मननाद्यपेक्षा न युक्ता वेदार्थत्वाद्धर्म्मवत् किन्तु श्रुतिलिङ्गवाक्यादय एवापेक्षिता इत्यत आह॥ नेति॥ जिज्ञास्ये धर्म्मं इव जिज्ञास्ये ब्रह्मणि इति व्याख्येय। अनुभवो ब्रह्मसाक्षात्काराख्यो विद्वदनुभव। आदिपदान्मननिदिध्यासनयोर्ग्रह। तत्र हेतुमाह॥ अनुभवेति॥

वा न गच्छतीति, तथा "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति", "उदिते जुहोति अनुदिते जुहोति" इति विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः विकल्पोत्सर्गापवादाश्च। न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते। विकल्पनास्तु पुरुष-

---

मुक्त्यर्थं ब्रह्मज्ञानस्य शाब्दस्य साक्षात्कारावसानत्वापेक्षणात् प्रत्यग्भूतसिद्धब्रह्मगोचरत्वेन साक्षात्कारफलकत्वसम्भवात्तदर्थं मननाद्यपेक्षा युक्ता। धर्मे तु नित्यपरोक्षे साध्ये साक्षात्कारस्यानपेक्षितत्वादसम्भवाच्च श्रुत्या निर्णयमात्रमनुष्ठानायापेक्षितं। लिङ्गादयस्तु श्रुत्यन्तर्भूता एव श्रुतिद्वारा निर्णयोपयोगित्वेनापेक्ष्यन्ते न मननादयः, अनुपयोगादित्यर्थः। निरपेक्षः शब्दः श्रुतिः। शब्दस्यार्थप्रकाशनसमर्थं लिङ्गं पदं। योग्येतरपदाकाङ्क्षं वाक्यं। अङ्गवाक्यसापेक्षं प्रधानवाक्यं प्रकरणं। क्रमपठितानामर्थानां क्रमपठितैर्यथाक्रमं सम्बन्धः स्थानं। यथा ऐन्द्राग्न्यादय इष्टयो दश क्रमेण पठिताः, दशमन्त्राश्च "इन्द्राग्नी रोचनादिवि इत्याद्याः" तत्र प्रथमेष्टौ प्रथममन्त्रस्य विनियोग इत्याद्यूहनीयं। संज्ञासाम्यं समाख्या। यथाध्वर्य्यवसञ्ज्ञकानां मन्त्राणामाध्वर्य्यवसञ्ज्ञके कर्मणि विनियोग इति विवेकः, एवं तावद्ब्रह्म मननाद्यपेक्ष वेदार्थत्वात् धर्मवदित्यनुमाने साध्यत्वेन धर्मस्यानुभवायोग्यत्वं, अनपेक्षितानुभवत्वञ्चोपाधिरित्युक्तं, उपाधिव्यतिरेकाद् ब्रह्मणि मननाद्यपेक्षत्वञ्चोक्तं। तत्र यदि वेदार्थत्वमात्रेण ब्रह्मणो धर्मेण साम्यन्त्वयोच्येत तर्हि कृतिसाध्यत्वं विधिनिषेधविकल्पोत्सर्गापवादाश्च ब्रह्मणि धर्मवत् स्युरिति। विपक्षे बाधकमाह॥ पुरुषेत्यादिना॥ पुरुषव्यत्ययधीना आत्मलाभ उत्पत्तिर्यस्य तद्भावाच्च धर्मे श्रुत्यादीनामेव प्रामाण्यमित्यन्वयः। धर्मस्य साध्यत्वं लौकिककर्मदृष्टान्तेन स्फुटयति॥ कर्त्तुमिति॥ लौकिकवदित्यर्थः। दृष्टान्तं स्फुटयति॥ यथेति॥ दार्ष्टान्तिकमाह॥ तथेति॥ तद्धर्मस्य कर्त्तुमकर्त्तुंशक्यत्वमुक्त्वा अन्यथाकर्त्तुंशक्यत्वमाह॥ उदित इति॥ धर्मस्य साध्यत्वमुपपाद्य तत्र विध्यादियोग्यतामाह॥ विधीति॥ विधिप्रतिषेधाश्च विकल्पादयश्च धर्मे साध्ये येऽर्थवन्तः सावकाशा भवन्ति ते ब्रह्मण्यपि स्युरित्यर्थः। "यजेत न सुरां पिबेत्" इत्यादयो विधिनिषेधाः।

बुद्ध्यपेक्षा, न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षं, किन्तर्हि वस्तुतन्त्र-
मेव तत्। न हि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं
भवति। तत्र पुरुषो वान्यो वेति मिथ्याज्ञानं, स्थाणुरेवेति तत्त्व-
ज्ञानं वस्तुतन्त्रत्वात्। एवम्भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रं।
तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव भूतवस्तुविषयत्वात्। ननु
भूतवस्तुविषयत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्य-
विचारणाऽनर्थिकैव प्राप्ता, न, इन्द्रियाविषयत्वे सम्बन्धाग्रहणात्।
स्वभावतो बहिर्विषयविषयाणि इन्द्रियाणि न ब्रह्मविषयाणि।

---

व्रीहिभिर्यवैर्वा यजेतेति सम्भावितो विकल्पः ग्रहणाग्रहणयोरैच्छिकः
उदितानुदितहोमयोर्व्यवस्थितविकल्पः। "न हिंस्यात्" इत्युत्सर्गः। "अ-
ग्नीषोमीयं पशुमालभेत" इत्यपवादः। तथा "आहवनीये जुहोति" इत्यु-
त्सर्गः, "अश्वस्य पदे पदे जुहोति" इत्यपवाद इति विवेकः, एते ब्रह्मण्यपि
स्युरित्यनिष्टापत्तिं वारयति॥ न त्वित्यादिना भूतवस्तुविषयत्वादित्यन्तेन॥
इदं वस्तु एवं नैवं घटः पटो वेति प्रकारविकल्पः। अस्ति नास्ति वेति
सत्तास्वरूपविकल्पः। ननु वस्तुन्यपि आत्मादौ वादिनामस्ति नास्ती-
त्यादिविकल्पा दृश्यन्ते तत्राह॥ विकल्पनास्त्विति॥ अस्तित्वादिकोटि-
स्मरणं पुरुषबुद्धिस्तन्मूला मनःस्पन्दितमात्राः संशयविपर्ययविकल्पा न
प्रमारूपा इत्यक्षरार्थः। अयं भावः, "धर्मो हि यथा यथा ज्ञायते
तथा तथा कर्तुं शक्यते" इति यथाशास्त्रं पुरुषबुद्ध्यपेक्षा विकल्पाः
सर्वे प्रमारूपा एव भवन्ति, तत्साम्ये ब्रह्मण्यपि सर्वे विकल्पा यथार्थाः
स्युरिति। तत्राप्येवमिति वदन्तं प्रत्याह॥ नेति॥ यदि सिद्धवस्तुज्ञा-
नमपि साध्यज्ञानवत् पुरुषबुद्धिमपेक्ष्य जायेत तदा सिद्धविकल्पा
यथार्थाः स्युः, न सिद्धवस्तुज्ञानं पौरुषं किन्तर्हि प्रमाणवस्तुजन्यं
तथा च वस्तुन एकरूपत्वादेकमेव ज्ञानं प्रमा, अन्ये विकल्पा अयथार्था
एवेत्यर्थः। अत्र दृष्टान्तमाह॥ न हि स्थाणाविति॥ स्थाणुरेवेत्यवधारणे
सिद्धे सर्वे विकल्पा यथार्था न भवन्तीत्यर्थः। तत्र यद्वस्तुतन्त्रं ज्ञानं
तद्यथार्थं यत् पुरुषतन्त्रं तन्मिथ्येति विभजते॥ तत्रेति॥ स्थाणावित्यर्थः।

सति द्वीन्द्रियविषयत्वे ब्रह्मण इदं ब्रह्मणा सम्बद्धं कार्य्यमिति गृह्येत। कार्य्यमात्रमेव गृह्यमाणं किं ब्रह्मणा सम्बद्धं किमन्येन केनचिद्वा सम्बद्धमिति न शक्यं निश्चेतुं। तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं किन्तर्हि वेदान्तवाक्यप्रदर्शनार्थं। किं पुनस्तद्वेदान्तवाक्यं यत् सूत्रेणेह लिलक्षयिषितं। "भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति" इत्युपक्रम्याह "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। तस्य च निर्णयवाक्यं

---

स्थाणावुक्तन्यायं घटादिष्वतिदिशति॥ एवमिति॥ प्रकृतमाह॥ तत्रैवं सतीति॥ सिद्धेऽर्थे ज्ञानप्रमात्वस्य वस्त्वधीनत्वे सति ब्रह्मज्ञानमपि वस्तुजन्यमेव यथार्थं न पुरुषतन्त्रं भूतार्थविषयत्वात् स्थाणुज्ञानवदित्यर्थः॥ अतः साध्येऽर्थे सर्व्वे विकल्पाः युक्ताः न सिद्धार्थ इति वैलक्षण्यात्, न धर्म्मसाम्यं ब्रह्मण इति मननाद्यपेक्षा सिद्धेति भावः। ननु तर्हि ब्रह्म प्रत्यक्षादिगोचरं धर्म्मविलक्षणत्वाद्घटादिवत्। तथा च जन्मादिसूत्रे जगत्कारणानुमानं विचार्य्यं सिद्धार्थे तस्य मानत्वात् न श्रुतिः, सिद्धार्थे तस्या अमानत्वेन तद्विचारस्य निष्फलत्वादिति शङ्कते॥ नन्विति॥ प्रमाणान्तरविषयत्वमेव प्राप्तमिति कृत्वा प्रमाणान्तरस्यैव विचारप्राप्ताविति शेषः। अत्र पूर्व्वपक्षी प्रष्टव्यः, किं यत् कार्य्यं तद्ब्रह्मजमित्यनुमानं ब्रह्मसाधकं किं वा यत् कार्य्यं तत् सकारणमिति? नाद्यः, व्याप्त्यसिद्धेरित्याह॥ नेति॥ ब्रह्मण इन्द्रियाग्राह्यत्वात् प्रत्यक्षेण व्याप्तिग्रहायोगान्न प्रमाणान्तरविषयत्वमित्यर्थः। इन्द्रियाग्राह्यत्वं कुत इत्यत आह॥ स्वभावत इति॥ "पराञ्चि खानि व्यतृणत् स्वयम्भूः" इति श्रुतेः, ब्रह्मणो रूपादिहीनत्वाच्चेत्यर्थः। इन्द्रियाग्राह्यत्वेऽपि व्याप्तिग्रहः किं न स्यादत आह॥ सति हीति॥ तन्नास्तीति शेषः। इदं कार्य्यं ब्रह्मजमिति व्याप्तिप्रत्यक्षं ब्रह्मणोऽतीन्द्रियत्वान्न सम्भवतीत्यर्थः। द्वितीये कारणसिद्धावपि कारणस्य ब्रह्मत्वं श्रुतिं विना ज्ञातुमशक्यमित्याह॥ कार्य्यमात्रमिति॥ सम्बन्धं कृतं यस्मात्. श्रुतिमन्तरेण जगत्कारणं ब्र-

"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति" इति। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभाव,* सर्व्वज्ञस्वरूपकारणविषयाण्युदाहर्त्तव्यानि ॥ २ ॥

जगत्कारणत्वप्रदर्शनेन सर्व्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाह।

---

ह्मेति निश्चयलाभस्तस्मात् तल्लाभाय श्रुतिरेव प्राधान्येन विचारणीया, अनुमानं तूपादानत्वादिसामान्यद्वारा मृदादिवद् ब्रह्मणः स्वकार्य्यात्मकत्वादिश्रौतार्थसम्भावनार्थं गुणतया विचार्य्यमित्युपसंहरति ॥ तस्मादिति ॥ एतत्सूत्रस्य विषयवाक्यं पृच्छति ॥ किं पुनरिति ॥ इह ब्रह्मणि लक्षणार्थत्वेन विचारयितुमिष्टं वाक्यं किमित्यर्थः। अत्र हि प्रथमसूत्रे विशिष्टाधिकारिणो ब्रह्मविचारं प्रतिज्ञाय ब्रह्म ज्ञातुकामस्य द्वितीयसूत्रे लक्षणमुच्यते, तथैव श्रुतावपि मुमुक्षोर्ब्रह्म ज्ञातुकामस्य जगत्कारणत्वोपलक्षणानुवादेन ब्रह्म ज्ञाप्यत इति श्रौतार्थक्रमानुसारित्वं सूत्रस्य दर्शयितुं सोपक्रमवाक्यं पठति ॥ भृगुरिति ॥ अधीहि स्मारय उपदिशेत्यर्थः। अत्र येनेत्येकत्वं विवक्षितं, नाद्यत्वे ब्रह्मत्व विधानायोगात्। यज्जगत्कारणं तदेकमित्यवान्तरवाक्यं, यदेकं कारणं तद् ब्रह्मेति, वा यत्कारणं तदेकं ब्रह्मेति वा महावाक्यमिति भेदः किन्तर्हि स्वरूपलक्षणमित्याशङ्क्य वाक्यशेषमान्निसौति यत.शब्दार्थं सत्यज्ञानानन्द इत्याह ॥ तस्य चेति॥ "यः सर्व्वज्ञः" "तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायते" "विज्ञानमानन्दं ब्रह्म" इत्यादि शाखान्तरीयवाक्यान्यप्यस्य विषय इत्याह ॥ अन्यान्यपीति ॥ एवंजातीयकत्वमेवाह ॥ नित्येति ॥ तदेवं सर्व्वासु शाखासु लक्षणद्वयवाक्यानि जिज्ञास्ये ब्रह्मणि समन्वितानि तद्धिया मुक्तिरिति सिद्धं ॥ २ ॥

यस्य निश्वसितं वेदाः सर्व्वार्थज्ञानशक्तयः।
श्रीरामं सर्व्ववेत्तारं वेदवेद्यमहं भजे ॥

वृत्तानुवादेन सङ्गतिं वदन्नुत्तरसूत्रमवतारयति ॥ जगदिति ॥

---

* स्वभावेति पाठो मुद्रितपुस्तके नास्ति।

## शास्त्रयोनित्वादिति।३।

महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्व्वार्थावद्योतिनः सर्व्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्व्वज्ञगुणान्वितस्य सर्व्वज्ञा-

---

चैतन्यस्य ब्रह्मणो जगत्कारणत्वोक्त्या सर्व्वज्ञत्वमर्थात् प्रतिज्ञातं सूत्रकृता चेतनस्येक्षापूर्व्वकत्वात्। तथा च ब्रह्म सर्व्वज्ञं सर्व्वकारणकत्वात्, यो यत्कर्त्ता स तज्ज्ञः यथा कुलाल इति स्थितं; तदेवार्थिकं सर्व्वज्ञत्वं प्रधानादिनिरासाय वेदकर्तृत्वहेतुना द्रढयतीत्यर्थः। हेतुद्वयस्यैकार्थसाधनत्वादेकविषयत्वमवान्तरसङ्गतिः। यद्वा वेदस्य नित्यत्वाद् ब्रह्मणः सर्व्वहेतुता नास्तीत्याक्षेपसङ्गत्या वेदहेतुत्वमुच्यते "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्व्वाङ्गिरस" इतिवाक्यं विषयः। तत् किं वेदहेतुत्वेन ब्रह्मणः सर्व्वज्ञत्वं साधयति उत न साधयति इति सन्देहः; तत्र व्याकरणादिवद्वेदस्य पौरुषेयत्वे मूलप्रमाणसापेक्षत्वेनाप्रामाण्यापातान्न साधयतीति पूर्व्वपक्षे जगद्धेतोश्चेतनत्वासिद्धिः फलं। सिद्धान्ते तत्सिद्धिः। अस्य वेदान्तवाक्यस्य स्पष्टब्रह्मलिङ्गस्य वेदकर्त्तरि समन्वयोक्तेः श्रुतिशास्त्राध्यायसङ्गतयः। एवमापादं श्रुत्यादिसङ्गतय ऊह्याः। वेदे हि सर्व्वार्थप्रकाशनशक्तिरुपलभ्यते, सा तदुपादानब्रह्मगतशक्तिपूर्व्विका तद्गता वा? प्रकाशनशक्तित्वात् कार्य्यगतशक्तित्वाद्वा प्रदीपशक्तिवदिति वेदोपादानत्वेन ब्रह्मणः स्वसम्बद्धाशेषार्थप्रकाशनसामर्थ्यरूपं सर्व्वसाक्षित्वं सिद्ध्यति। यद्वा यथा अध्येतारः पूर्व्वक्रमं ज्ञात्वा वेदं कुर्व्वन्ति, तथा विचित्रगुणमायासहायोऽनावृतानन्तस्वप्रकाशचिन्मात्रः परमेश्वरः स्वं ज्ञातपूर्व्वकल्पीयक्रमसजातीयक्रमवन्तं वेदराशिं तदर्थांश्च युगपज्ज्ञानन्नेव करोतीति न वेदस्य पौरुषेयता। यत्र ह्यर्थज्ञानपूर्व्वकं वाक्यज्ञानं वाक्यसृष्टौ कारणं तत्र पौरुषेयता, अत्र च यौगपद्यान्न सा; अतो वेदकर्त्ता वेदमिव तदर्थमपि स्वसम्बद्धं नान्तरीयकतया जानातीति सर्व्वज्ञ इति सिद्धान्तयति।

शास्त्रेति॥ शास्त्रं प्रति हेतुत्वात् ब्रह्म सर्व्वज्ञं सर्व्वकारणञ्च

द्भ्यतः सम्भवोऽस्ति। यद्यद्विस्तारार्थं शास्त्रं यस्मात् पुरुषविशेषात् सम्भवति, यथा व्याकरणादि पाणिन्यादेः ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके, किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्य्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोः ऋग्वेदाद्याख्यस्य सर्व्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिश्वासवद्यस्मान्महतो भूताद्योनेः सम्भवः "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद" इत्यादिश्रुतेस्तस्य महतो भूतस्य निरतिशयं सर्व्वज्ञत्वं सर्व्वशक्तिमत्त्वञ्चेति। अथवा यथोक्तमृग्वेदा-

---

इति सङ्गतिद्वयानुसारेण सूत्रयोजनामभिप्रेत्य पदानि व्याचष्टे॥ महत इति॥ हेतोः सर्व्वज्ञत्वसिद्धये वेदस्य विशेषणानि। तत्र ग्रन्थतोऽर्थतश्च महत्त्वं, हितशासनात् शास्त्रत्वं। शास्त्रशब्दः शब्दमात्रोपलक्षणार्थ इति मत्वाह॥ अनेकेति॥ "पुराणन्यायमीमांसाधर्म्मशास्त्राणि, शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाणि 'षडङ्गानि" इति दशविद्यास्थानानि वेदार्थज्ञानहेतव तैरुपकृतस्येत्यर्थः। अनेन *मन्वादिभिः परिगृहीतत्वेन वेदस्य प्रामाण्यं सूचितं। अबोधकत्वाभावादपि प्रामाण्यमित्याह॥ प्रदीपवदिति॥ सर्व्वार्थप्रकाशनशक्तिमत्त्वेऽप्यचेतनत्वात् सर्व्वज्ञकल्पत्वं योनिरुपादानं कर्त्ता च। ननु सर्व्वज्ञस्य यो गुणः सर्व्वार्थज्ञानशक्तिमत्त्वं वेदस्य तदन्वितत्वेऽपि तद्योनेः सर्व्वज्ञत्व कुत इत्यत आह॥ न हीति॥ उपादाने तच्छक्तिं विना कार्य्ये तदयोगाद्वेदोपादानस्य सर्व्वज्ञत्वं। अनुमानन्तु पूर्व्वं दर्शितं। न चाविद्यायास्तदापत्तिः। शक्तिमत्त्वेऽप्यचेतनत्वादिति भावः। वेदः स्वविषयादधिकार्थज्ञानवज्जन्यः, प्रमाणवाक्यत्वात्, व्याकरणरामायणादिवदित्यनुमानान्तर, तत्र व्याप्तिमाह॥ यद्यदिति॥ विस्तर. शब्दाधिक्य, अनेनार्थतोऽल्पत्वं वदन् कर्त्तुर्ज्ञानस्यार्थाधिक्यं सूचयति; दृश्यते चार्थवादाधिक्यं वेदे। अत्रैषा योजना यद्यच्छास्त्रं यस्मादाप्तात् सम्भवति स ततः शास्त्रादधिकार्थज्ञान इति प्रसिद्धं यथा शब्दसाधुत्वादिर्ज्ञेयैकदेशोऽर्थो यस्य तदपि व्याकरणादि पाणिन्यादेरधिकार्थज्ञात् सम्भवति। यद्यल्पार्थमपि

दिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत् स्वरूपाधिगमे। शास्त्रादेव प्रमाणात् जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः। तच्छास्त्रमुदाहृतं पूर्व्वसूत्रे "यतो वा इमानि भूतानि जायन्त" इत्यादि। किमर्थं तर्हि इदं सूत्रं यावता पूर्व्व-

---

शास्त्रमधिकार्थज्ञात् सम्भवति तदा "अस्य महत" इत्यादिश्रुतेर्यस्मान्महतोऽपरिच्छिन्नाद्भूतात् सत्याद्योनेः सकाशादनेकशाखेत्यादिविशिष्टस्य वेदस्य पुरुषनिश्वासवदप्रयत्नेनैव सम्भवः तस्य सर्व्वज्ञत्वं सर्व्वशक्तिमत्त्वञ्चेति किमु वक्तव्यमिति, तत्र वेदस्य पौरुषेयत्वशङ्कानिरासार्थं श्रुतिस्थनिश्वसितपदार्थमाह ॥ अप्रयत्नेनेति ॥ प्रमाणान्तरेणार्थज्ञानप्रयासं विना निमेषादिन्यायेनेत्यर्थः। अत्रानुमानेन "यः सर्व्वज्ञ" इति श्रुत्युक्तसर्व्वज्ञत्वदार्ढ्याय पाणिन्यादिवद्वेदकर्त्तरि अधिकार्थज्ञानसत्तामात्रं साध्यते न त्वर्थज्ञानस्य वेदहेतुत्वं, निश्वसितश्रुतिविरोधात्, वेदज्ञानमात्रेणाध्येतृवद्वेदकर्तृत्वोपपत्तेश्च। इयान् विशेषः, अध्येता परापेक्षः; ईश्वरस्तु स्वकृतवेदानुपूर्व्वीं स्वयमेव स्मृत्वा तथैव कल्पादौ ब्रह्मादिष्वाविर्भावयन्ननारतज्ञानत्वात्तदर्थमप्यवर्जनीयतया जानातीति सर्व्वज्ञ इत्यनवद्यं। अधुना ब्रह्मणो लक्षणान्तरं प्रमाणजिज्ञासायां वर्णकान्तरमाह ॥ अथ वेति॥ लक्षणप्रमाणयोर्ब्रह्मनिर्णयार्थत्वादेकफलकत्वं सङ्गतिः। "तन्त्वौपनिषदं पुरुष" इति श्रुतिर्ब्रह्मणो वेदैकवेद्यत्वं ब्रूते न वेति संशये, कार्य्यलिङ्गेनैव लाघवात् कर्त्तुरेकस्य सर्व्वज्ञस्य ब्रह्मणः सिद्धेर्न ब्रूत इति प्राप्ते वेदप्रमाणकत्वात् ब्रह्मणो न प्रमाणान्तरवेद्यत्वमिति सिद्धान्तयति ॥ शास्त्रयोनित्वादिति ॥ तद्व्याचष्टे ॥ यथोक्तमिति ॥ सर्व्वत्र पूर्व्वोत्तरपक्षयुक्तिद्वयं संशयबीजं द्रष्टव्यं। अत्र पूर्व्वपक्षे अनुमानस्यैव विचार्य्यतासिद्धिः फलं सिद्धान्ते वेदान्तानामिति भेदः। अनुमानादिना ब्रह्मसिद्धिः पूर्व्वसूत्रे प्रसङ्गान्निरस्ता। किञ्च विचित्रप्रपञ्चस्य प्रासादादिवदेककर्तृकताबाधान्न लाघवावतारः। न च सर्व्वज्ञत्वात् कर्त्तुरेकत्वसम्भवः, एकत्वज्ञानात् सर्व्वज्ञत्वज्ञानं ततस्तदित्यन्योन्याश्रयमभिप्रेत्याह॥ शास्त्रादेवेति॥ किं तच्छास्त्रमिति तत्राह॥ शास्त्रमिति॥ पृथगारम्भमाक्षिपति॥

सूत्र एवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितं ? उच्यते। तत्र सूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानात् जगतो*जन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत, तामाशङ्कां निवर्त्तयितुमिदं सूत्रं प्रववृते॥ "शास्त्रयोनित्वादिति"॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते ? यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां" इति क्रियापरत्वं शास्त्रस्य प्रदर्शितं,

---

किमर्थमिति॥ येन हेतुना दर्शितं ततः किमर्थमित्यर्थः। 'जन्मादिलिङ्गकानुमानस्य स्वातन्त्र्येणोपन्यासशङ्कानिरासार्थं पृथक्सूत्रमित्याह॥ उच्यत इति॥ वेदान्ताः सिद्धब्रह्मपरा उत कार्य्यपरा इति निष्फलत्वसापेक्षत्वयोः प्रसङ्गाप्रसङ्गाभ्यां संशये पूर्व्वसूत्रे द्वितीयवर्णकेनाक्षेपसङ्गत्या पूर्व्वपक्षमाह॥ कथं पुनरित्यादिना॥ "सदेव सोम्य" इत्यादीनां सर्व्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां ब्रह्मणि समन्वयोक्तेः श्रुत्यादिसङ्गतयः पूर्व्वपक्षे वेदान्तेषु मुमुक्षुप्रवृत्त्यसिद्धिः सिद्धान्ते तत्सिद्धिरिति विशेषः। कथमित्याक्षेपे हेतुः॥ यावतेति॥ यतो जैमिनिसूत्रेण शास्त्रस्य वेदस्य क्रियापरत्वं दर्शितमतोऽक्रियार्थत्वाद्वेदान्तानामानर्थक्यं फलवदर्थशून्यत्वं प्राप्तमित्यन्वयः। सूत्रस्यायमर्थः। प्रथमसूत्रे तावद्वेदस्याध्ययनकारकभावनाविधिभाव्यस्य फलवदर्थपरत्वमुक्तं। "चोदनालक्षणोऽर्थो धर्म्मः" इति द्वितीयसूत्रे धर्म्मे कार्य्ये चोदना प्रमाणमिति वेदप्रामाण्यव्यापकं कार्य्यपरत्वमवसितं। तत्र "वायुर्वै क्षेपिष्ठा" इत्याद्यर्थवादानां धर्म्म प्रामाण्यमस्ति न वेति संशये आम्नायप्रामाण्यस्य क्रियार्थत्वेन व्याप्तत्वादर्थवादेषु धर्म्मस्याप्रतीतेरक्रियार्थानां तेषामानर्थक्यं निष्फलार्थत्वं, न चाध्ययनविध्युपात्तानां निष्फले सिद्धेऽर्थे प्रामाण्यं युक्तं, तस्मादनित्यमेषां प्रामाण्यमुच्यते। व्यापकाभावाद्व्याप्यं प्रामाण्यं नास्त्येवेति यावत्। एवं पूर्व्वपक्षेऽपि "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति सूत्रेण सिद्धान्तमाह॥ क्रियापरत्वमिति॥ अनित्यमिति प्राप्ते

---

* जगत इति पदं मु० पुस्तके नास्ति।

अतो वेदान्तानामानर्थक्यं, अक्रियार्थत्वात्; कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिविशेषत्वमुपासनादिक्रियान्तरविधानार्थत्वं वा? न हि परिनिष्ठितवस्तुस्वरूप*प्रतिपादनं सम्भवति प्रत्यक्षादिविषयत्वात् परिनिष्ठितवस्तुनः। तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात्। अत एव "सोऽरोदीद्"

---

दर्शितमित्यर्थः। "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्येवं विधेयार्थानां स्तुतिरूपार्थेन द्वारेण "वायव्यं श्वेतमालभेत" इत्यादि विधिवाक्यैरेकवाक्यत्वादर्थवादाः सफलाः स्युः। स्तुतिलक्षणया सफलकार्यपरत्वात् प्रमाणमर्थवादा इति यावत्। नन्वध्ययनविधिगृहीतानां वेदान्तानामानर्थक्यं न युक्तमित्यत आह॥ कर्त्रिति। न वयं वेदान्तानामानर्थक्यं साधयामः किन्तु लोके सिद्धस्य मानान्तरवेद्यत्वान्निष्फलत्वाच्च सिद्धब्रह्मपरत्वे तेषां मानान्तरसापेक्षत्वनिष्फलत्वयोः प्रसङ्गादप्रामाण्यापातात् कार्यशेषकर्तृदेवताफलानां प्रकाशनद्वारा कार्यपरत्वं वक्तव्यमिति ब्रूमः। तत्र त्वंतत्पदार्थवाक्यानां कर्तृदेवतास्तावकत्वं विविदिषादिवाक्यानां फलस्तावकत्वं। ननु कर्मविशेषमनारभ्य प्रकरणान्तराधीतानां वेदान्तानां कथं तच्छेषत्वं? मानाभावादित्यरुच्या पक्षान्तरमाह॥ उपासनेति॥ मोक्षकामोऽसद्ब्रह्माभेदमारोप्य "अहं ब्रह्मास्मि" इत्युपासीत इत्युपासनाविधिः। आदिशब्दाच्छ्रवणादयः, तत्कार्यपरत्वं वा वक्तव्यमित्यर्थः। ननु श्रुतब्रह्मविषयाश्रुतकार्यपरत्वं किमर्थं वक्तव्यमिति तत्राह॥ न हीति॥ परितः समन्तान्निश्चयेन स्थितं परिनिष्ठितं कृत्यनपेक्षं सिद्धमिति यावत्। तस्य प्रतिपादनमज्ञातस्य वेदेन ज्ञापनं तन्न सम्भवति, मानान्तरयोग्येऽर्थे वाक्यस्य संवादे सत्यनुवादकत्वाद् "अग्निर्हिमस्य भेषजं" इति वाक्यवत् विसंवादे च बाधकत्वाद् "आदित्यो यूप" इति वाक्यवदित्यर्थः। सिद्धो न वेदार्थः। मानान्तरयोग्यत्वाद् घटवदित्युक्ता निष्फलत्वाच्च तथेत्याह॥ तदिति॥ सिद्धज्ञापने हेयोपादेयागोचरे फलाभावाच्च तन्न सम्भव-

---

* स्वरूपेति पदं मु॰ पुस्तके नास्ति।

इत्यादीनामानर्थक्यं माभूदिति "विधिनात्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति स्तावकत्वेनार्थवत्त्वमुक्तं। मन्त्राणाञ्च "इषेत्वा" ऽऽदीनां क्रियातत्साधनाभिधायित्वेन कर्म्मसमवायित्वमुक्तं। न कचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता

---

तीत्यर्थं। फलं हि सुखावाप्तिर्दुःखहानञ्च। तच्च प्रवृत्तिनिवृत्तिभ्यां साध्यं। ते चोपादेयस्य प्रवृत्तिप्रयत्नकार्य्यस्य हेयस्य निवृत्तिप्रयत्नकार्यस्य ज्ञानाभ्यां जायेते, न सिद्धज्ञानादिति भावः। तर्हि सिद्धबोधिवेदवादानां साफल्यं कथमित्याशङ्क्य "आम्नायस्य" इत्यादिसङ्ग्रहवाक्यं विवृणोति ॥ अतएवेति॥ "देवैर्निरुद्धः सोऽग्निररोदीद्" इति वाक्यस्याश्रुजत्वेन रजतस्य निन्दाद्वारा "बर्हिषि न देयं" इति सफलनिषेधशेषत्ववद्वेदान्तानां विध्यादिशेषत्वं वाच्यमित्यर्थः। ननु तर्हि मन्त्रवत् स्वातन्त्र्यमस्तु नार्थवादवद्विध्येकवाक्यत्वमित्याशङ्क्य दृष्टान्तासिद्धिमाह ॥ मन्त्राणाञ्चेति॥ प्रमाणलक्षणेऽर्थवादलक्षणचिन्तानन्तरं मन्त्रचिन्ता न कृता * "इषेत्वा" इति मन्त्रे "छिनद्मि" इत्यध्याहाराच्छाखाच्छेदनक्रियाप्रतीतेः "अग्निर्मूर्द्धा," इत्यादौ च क्रियासाधनदेवतादिप्रतीतेर्मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः, ते किमुच्चारणमात्रेणादृष्टं कुर्व्वन्तः क्रतावुपकुर्व्वन्ति उत दृष्टेनैवार्थस्मरणेनेति सन्देहे चिन्तादिभाष्याध्ययनकालावगतमन्त्रार्थस्य स्मृतिसम्भवादादृष्टार्था मन्त्रा इति प्राप्ते सिद्धान्तः। "अविशिष्टस्तु वाक्यार्थः" इति लोकवेदयोर्वाक्यार्थस्याविशेषान्मन्त्रवाक्यानां दृष्टेनैव स्वार्थप्रकाशनेन क्रतूपकारकत्वसम्भवात् दृष्टे सम्भवति अदृष्टकल्पनानुपपत्तेः फलवदनुष्ठानापेक्षितेन क्रियातत्साधनस्मरणेन द्वारेण मन्त्राणां कर्म्माङ्गत्वं। "मन्त्रैरेवार्थाः स्मर्त्तव्याः" इति नियमस्त्वदृष्टार्थं इति। तथा चार्थवादानां स्तुतिपदार्थद्वारा पदैकवाक्यत्वं विधिभिर्मन्त्राणान्तु वाक्यार्थज्ञानद्वारा क्रत्वङ्गेष्वेकवाक्यत्वमिति विभागः। नन्वस्तु कर्म्मप्रकरणस्थवाक्यानां विध्येकवाक्यत्वं वेदान्तानान्तु सिद्धे प्रामाण्यं किं न स्यादिति तत्राह॥ न

---

* चिन्ताकृतेति ०२५ स० टी० पुस्तकपाठ।

दृष्टा उपपन्ना वा। न च परिनिष्ठिते वस्तुस्वरूपे विधिः सम्भवति, क्रियाविषयत्वाद्विधेः। तस्मात् कर्म्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिविशेषत्वं वेदान्तानां। अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतोपासनादिकर्मपरत्वं। तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते॥

## तत्तु समन्वयात्॥ ४॥

तुशब्दः पूर्व्वपक्षव्यावृत्त्यर्थः। तद् ब्रह्म सर्व्वज्ञं सर्व्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यते। कथं? समन्वयात्। सर्व्वेषु हि वेदान्तेषु वाक्यानि तात्पर्य्येणैव तस्यार्थस्य*

---

क्वचिदिति॥ वेदान्ता विध्येकवाक्यत्वेनैवार्थवन्तः सिद्धार्थकवेदत्वान्मन्त्रार्थवादादिवदित्यर्थः, अन्यता दृष्टापि वेदान्तेषु कल्प्यतामिति तत्राह॥ उपपन्ना वेति॥ नेत्यनुषङ्गः। सिद्धे फलाभावस्योक्तत्वादिति भावः। तर्हि ब्रह्मण्येव स्वार्थो विधिः कल्प्यतां इति वेदान्तानां विध्यन्तरशेषत्वेनेत्यत आह॥ न चेति॥ ननु "दध्ना जुहोति" इति सिद्धे दधनि विधिर्दृष्टस्तत्राह॥ क्रियेति॥ दध्नः क्रियासाधनस्य प्रयुज्यमानतया साध्यत्वाद्विधेयता, निष्क्रियब्रह्मणः कथमप्यसाध्यत्वान्न विधेयत्वमित्यर्थः॥ भाट्टमतमुपसंहरति॥ तस्मादिति॥ स्वयमेवारुचिं वदन् पक्षान्तरमाह॥ अथेति॥ सिद्धान्तसूत्रं व्याचष्टे॥ तु शब्द इति॥ तद् ब्रह्म वेदान्तप्रमाणकं इति प्रतिज्ञातेऽर्थे हेतुं पृच्छति॥ कथमिति॥ हेतुमाह॥ समिति॥ अन्वयस्तात्पर्य्यविषयत्वं, तस्मादित्येव हेतुः तात्पर्य्यस्य सम्यक्त्वं अखण्डार्थविषयकत्वं सूचयितुं सम्पदं प्रतिज्ञान्तर्गतमेव, तथा चाखण्डं ब्रह्म वेदान्तजप्रमाविषयः, वेदन्ततात्पर्य्यविषयत्वात्। यो यद्वाक्यतात्पर्य्यविषयः स तद्वाक्यप्रमेयः, यथा कर्म्मवाक्यप्रमेयो धर्म्म इति प्रयोगः। वाक्यार्थस्याखण्डत्वं असंसृष्टत्वं, वाक्यस्य

---

* तस्यार्थस्य स्थाने स्वार्थस्येति मु० पुस्तके पाठः।

प्रतिपादकत्वेन समनुगतानि "सदेव सोम्येदमग्र आसीत्"। "एकमेवाद्वितीयं"। "आत्मा वा इदमेक एवाग्र आसीत्"। "तदेतद् ब्रह्मापूर्व्वमनपरमनन्तरमवाह्यमयमात्मा ब्रह्म सर्व्वा-

---

चाखण्डार्थकत्वं, स्वपदोपस्थिता ये पदार्थास्तेषां यः संसर्गः तद्गोचर-प्रमाजनकत्व। न चेदमप्रसिद्ध। प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्यानां लोके लक्षणया चन्द्रादिव्यक्तिमात्रप्रमाहेतुत्वात् सर्व्वपदलक्षणा चाविरुद्धा। सर्व्वैरर्थवादपदैरेकस्याः स्तुतेर्लक्ष्यत्वाङ्गीकारात्। तथा सत्यज्ञानादिपदैरखण्डं ब्रह्म भातीति न पक्षासिद्धि·। नापि हेत्वसिद्धि·। उपक्रमादिलिङ्गैर्वेदान्तानामद्वितीयाखण्डब्रह्मणि तात्पर्य्यनिर्णयात् तत्र छान्दोग्यषष्ठे उपक्रमं दर्शयति॥ सदेवेति॥ उद्दालकः पुत्रमुवाच, हे सौम्य प्रियदर्शन इदं सर्व्वं जगद् अग्रे उत्पत्तेः प्राक्काले सदबाधितं ब्रह्मैवासीत्। एवकारेण जगतः पृथक्सत्ता निषिध्यते। सजातीयविजातीयस्वगतभेदनिरासार्थम् "एकमेवाद्वितीयम्" इति पदत्रयं। एवमद्वितीय ब्रह्मोपक्रम्य "ऐतदात्म्यमिदं सर्व्वम्"इत्युपसंहरति।* इदमुपक्रमोपसंहारैकरूप्य तात्पर्य्यलिङ्गं, तथा "तत्त्वमसि" इति नवकृत्वोऽभ्यास·। रूपादिहीनाद्वितीयब्रह्मणो मानान्तरायोग्यत्वात् अपूर्व्वत्वमुक्तं, "अत्र वाव किल सत् सौम्य न निभालयसे" इति। सङ्घाते स्थित प्रत्यग्ब्रह्म न जानासीत्यर्थः। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति ब्रह्मज्ञानात् फलमुक्तं विदुषस्तस्य यावत् कार्य्यं देहो न विमोक्ष्यते तावदेव देहपातपर्य्यन्तो विलम्बः। अथ देहपातानन्तरं विद्वान् ब्रह्म सम्पत्स्यते विदेहकैवल्यमनुभवतीत्यर्थः। "अनेन जीवेनात्मनानुप्रविश्य" इत्याद्यद्वितीयज्ञानार्थोऽर्थवादः। मृदादिदृष्टान्तैः प्रकृत्यतिरेकेण विकारो नास्तीत्युपपत्तिरुक्ता। एवं षड्विधानि तात्पर्य्यलिङ्गानि व्यस्तानि समस्तानि वा प्रतिवेदान्तं द्रष्टव्यानि। ऐतरेयोपक्रमवाक्यं पठति। "आत्मा वै" इति। बृहदारण्यकमधुकाण्डोपसंहारवाक्यं सदात्मनो निर्विशेषत्वार्थमाह। तदे-

---

* देहतेतिपदं मु० पुस्तके नास्ति।

नुभूः"। "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादीनि। न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमाने ऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च तेषां कर्तृदेवतादिस्वरूप*प्रतिपादनपरतावसीयते। "तत् केन कं पश्येत्" इत्यादिक्रियाकारकफलनिराकरणश्रुतेः। न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं। "तत्त्वमसि" इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्। यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति। नैष दोषः। हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्व्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः।

---

तदिति॥ मायाभिर्बहुरूपं तद् ब्रह्म। एतदपरोक्षं। अपूर्व्वं कारणशून्यं। अनपरं कार्य्यरहितं। अनन्तरं जात्यन्तरं यस्य नास्त्यनन्तरं, एकरसमित्यर्थ। अबाह्यं अद्वितीयं। तस्यापरोक्षत्वमुपपादयति॥ अयमिति॥ सर्व्वमनुभवतीति सर्व्वानुभूः, चिन्मात्रमित्यर्थः। ऋग्यजुःसामवाक्यान्युक्त्वा आथर्व्वणवाक्यमाह॥ ब्रह्मैवेदमिति॥ यत् पुरस्तात् पूर्व्वदिग्वस्तुजातमिदं ब्रह्मैवाविदुषा भाति तदमृतं ब्रह्मैव वस्तु इत्यर्थः। आदिपदेन "सत्यं ज्ञानम्" इत्यादिवाक्यानि गृह्यन्ते। नन्वस्तु ब्रह्मणस्तात्पर्य्यविषयत्वं वेदान्तानां कार्य्यमेवार्थः किं न स्यादिति तत्राह॥ न चेति॥ वेदान्तानां ब्रह्मणि तात्पर्य्ये निश्चीयमाने कार्य्यार्थत्वं न युक्तं "यत्परः शब्दः स शब्दार्थः" इति न्यायादित्यर्थः। यदुक्तमर्थवादन्यायेन वेदान्तानां कर्त्रादिस्तावकत्वमिति तत्राह॥ न च तेषामिति॥ तेषां कर्म्मशेषस्तावकत्वं न भाति किन्तु ज्ञानद्वारा कर्म्म तत्साधननाशकमेव, तत्तत्र विद्याकाले "कः कर्त्ता केन करणेन कं विषयं पश्येत्" इति श्रुतेरित्यर्थः, अर्थवादानान्तु स्वार्थे फलाभावात् स्तुतिलक्षणेति भावः। यदुक्तं सिद्धत्वेन मानान्तरवेद्यं ब्रह्म न वेदार्थ इति तत्राह॥ न च परीति॥ "तत्त्वमसि" इति शास्त्रमन्तरेणेति सम्बन्धः। धर्म्मो न वेदार्थः साध्यत्वेन पाकवन्मानान्तरवेद्यत्वात्। यदि वेदं विना धर्म्मस्यानिर्णयात् मानान्तरवेद्यता तदा ब्रह्मण्यपि तुल्यं।

देवतादिप्रतिपादनस्य तु स्व*वाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः। ननु तथा ब्रह्मण उपासनाविधिशेषत्वं सम्भवति। एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः। न हि ब्रह्मैकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः सम्भवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्म प्रतिपाद्येत।

---

यच्चोक्तं निष्फलत्वाद् ब्रह्म न वेदार्थ इति तदनूद्य परिहरति॥ यत्त्वित्यादिना॥ रहितत्वाद्भिन्नत्वाद् ब्रह्मण इति शेषः। यदप्युक्तं "उपासनापरत्वं वेदान्तानाम्" इति तत्र किं प्राणपञ्चाग्न्यादिवाक्यानामुत सर्वेषामिति? तत्राद्यमङ्गीकरोति॥ देवतादीति॥ श्रेष्ठत्वादिगुणसत्त्वादिशब्दार्थः। न द्वितीयः, विधिशून्यानां "सत्यज्ञानम्" इत्यादीनां स्वार्थे फलवतामुपासनापरत्वकल्पनायोगात्। किञ्च तदर्थस्य ब्रह्मणः शेषत्वं ज्ञानात् प्रागूर्ध्वं वा? आद्ये, अध्यस्तगुणवत्तस्य तच्छेषत्वेऽपि न द्वितीय इत्याह॥ ननु तथेति॥ प्राणादिदेवतावदित्यर्थः। "अहं ब्रह्मास्मि" इत्येकत्वे ज्ञाते सति हेयोपादेयशून्यतया ब्रह्मात्मनः फलाभावादुपास्योपासकद्वैतज्ञानस्य कारणस्य नाशाच्च नोपासनाशेषत्वमित्याह॥ एकत्व इति॥ द्वैतज्ञानस्य संस्कारवशात् पुनरुदये विधानमिति नेत्याह॥ न हीति॥ दृढस्येति शेषः। भ्रान्तित्वानिश्चयो दार्ढ्यं, संस्कारोत्थमपि भ्रान्तित्वेन निश्चितं न विधिनिमित्तं। "येनेति" उपासनायां कारणस्य सत्त्वेनेत्यर्थः। वेदप्रामाण्यस्य व्यापकं क्रियार्थकत्वमनुवदति॥ यद्यपीति॥ कर्मकाण्डेऽर्थवादादीनामित्यर्थः। तथा च व्यापकाभावाद्वेदान्तेषु व्याप्याभावानुमानमिति भावः। वेदान्ता न स्वार्थे मानं अक्रियार्थत्वात्, "सोऽरोदीद्" इत्यादिवदित्यनुमाने निष्फलार्थकत्वमुपाधिरित्याह॥ तथापीति॥ अर्थवादानां निष्फलं स्वार्थमानत्वेऽपीत्यर्थः। तद्विषयस्य तत्परस्य स्वार्थे प्रमाणत्वमिति शेषः। सफलज्ञानकरत्वेन वेदान्तानां स्वार्थे मानत्वसिद्धेर्न क्रियार्थकत्वं तद्व्यापकमिति भावः। मा भूद्वेदप्रामाण्यस्य व्यापकं क्रियार्थकत्वं व्याप्यन्तु भविष्यति तदभावा-

---

* स्ववेदान्तवाक्यगतेति पाठो मुद्रितपुस्तकेऽस्ति।

यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं, तथाप्यात्मविज्ञानस्य फलपर्य्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुं। न चानुमानगम्यं शास्त्रप्रामाण्यं येनान्यत्र दृष्टं निदर्शनमपेक्षेत। तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वं।

अत्रापरे प्रत्यवतिष्ठन्ते "यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते, यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते

---

वेदान्तानां प्रामाण्यं दुर्ज्ञानमिति नेत्याह॥ न चेति॥ येन वेदप्रामाण्यं स्वस्यानुमानगम्यत्वेनान्यत्र क्वचिद् दृष्टान्तमपेक्षेत तदेव नास्तीत्यर्थः। चक्षुरादिवद्वेदस्य स्वतः प्रामाण्यज्ञानान्न तद्व्याप्तिलिङ्गाद्यपेक्षा। प्रामाण्यसंशये तु फलवदज्ञाताबाधितार्थतात्पर्य्यात् प्रामाण्यनिश्चयो न क्रियार्थत्वेन *"न कूपे पतेद्"* इति वाक्ये *व्यभिचारादिति भाव*॥ वर्णकार्थमुपसंहरति॥ तस्मादिति॥ समन्वयादित्यर्थः। विधिवाक्यानामपि फलवदज्ञातार्थत्वेन प्रामाण्यं तत्तुल्यं वेदान्तानामपीति स्थितं। एवं पदाना सिद्धेऽर्थे व्युत्पत्तिमिच्छता ब्रह्मनास्तिकाना मतं ब्रह्मणो मानान्तरायोग्यत्वात् सफलत्वाच्च वेदान्तैकमेयत्वनिरुक्त्या निरस्तं। सम्प्रति सर्व्वेषां पदाना कार्य्यान्वितार्थे शक्तिमिच्छता विधिशेषत्वेन प्रत्यग्ब्रह्मवेदान्तैर्बोध्यते न स्वातन्त्र्येणेति वदता वृत्तिकाराणां मतनिरासाय सूत्रस्य वर्णकान्तरमारभ्यते। तत्र वेदान्ताः किमुपासनाविधिशेषत्वेन ब्रह्म बोधयन्ति उत स्वातन्त्र्येण? इति सिद्धे व्युत्पत्त्यभावभावाभ्यां संशये पूर्व्वपक्षमाह॥ अत्रापर इति॥ ब्रह्मणो वेदान्तवेद्यत्वोक्तौ वृत्तिकाराः पूर्व्वपक्षयन्तीत्यर्थः। उपासनातो मुक्तिः पूर्व्वपक्षे तत्त्वज्ञानादेवेति सिद्धान्ते फलं विधिर्नियोगः तस्य विषयः प्रतिपत्तिरुपासना। अस्याः को विषयः, इत्याकाङ्क्षाया सत्यादिवाक्यैर्विधिपरैरेव ब्रह्म समर्प्यत इत्याह॥ प्रतिपत्तीति॥ विधिविषयप्रतिपत्तिविषयतयेत्यर्थः। विधिपरादाक्यात्तच्छेषलाभे दृष्टान्तमाह॥ यथेति॥ "यूपे पशुं बध्नाति"

तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य, तथा हि शास्त्रतात्पर्य्यविद आहुः, "दृष्टो हि तस्यार्थः कर्मावबोधनं नाम" इति * चोदनेति क्रियायाः प्रवर्त्तकं वचनं। तस्य ज्ञानमुपदेशः। "तद्भूतानां क्रियार्थेन समाम्नाय" "आम्नायस्य

"आहवनीये जुहोति" "इन्द्र यजेत" इति विधिषु के यूपादय, इत्याकाङ्क्षाया "यूपं तक्षत्यष्टाश्रीकरोति" इति तक्षणादिसंस्कृतं दारु यूप। "अग्नीनादधीत" इत्याधानसंस्कृतोऽग्निराहवनीय। "वज्रहस्तः पुरन्दर" इति विधिपरैरेव वाक्यैः समर्प्यते तद्वद् ब्रह्मेत्यर्थः। विधिपरवाक्यस्यापि अन्यार्थबोधित्वे वाक्यभेदः स्यादिति शङ्कानिरासार्थमपिशब्दः। मानान्तराज्ञातान्यपि शेषतयोच्यन्ते न प्रधानत्वेनेति न वाक्यभेद, प्रधानार्थभेदस्यैव वाक्यभेदकत्वादिति भाव। ननूक्तविधलिङ्गैस्तात्पर्य्यविषयस्य ब्रह्मणः कुतो विधिविशेषत्वमिति शङ्कते॥ कुत इति॥ वृद्धव्यवहारेण हि शास्त्रतात्पर्य्यनिश्चय। वृद्धव्यवहारे च श्रोतृप्रवृत्तिनिवृत्ती उद्दिश्याप्तप्रयोगो दृश्यते। अतः शास्त्रस्यापि ते एव प्रयोजने, ते च कार्य्यज्ञानजन्ये इति कार्य्यपरत्वं शास्त्रस्य तत कार्य्यशेषत्वं ब्रह्मण इत्याह॥ प्रवृत्तीति॥ शास्त्रस्य नियोगपरत्वे वृद्धसम्मतिमाह॥ तथा हीत्यादिना॥ क्रिया कार्य्यं, नियोगो विधि, धर्मोऽपूर्व्वमित्यनर्थान्तर। को वेदार्थ, इत्याकाङ्क्षाया भाष्यकृतोक्तं। दृष्टो हीति॥ तस्य वेदस्य कार्य्यं वेदार्थ इत्यत्र चोदनासूत्रस्थं भाष्यमाह॥ चोदनेति॥ क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्त्तकं वाक्यं चोदनेत्युच्यत इत्यर्थः। शबरस्वामिसम्मतिमुक्त्वा जैमिनिसम्मतिमाह॥ तस्य ज्ञानमिति॥ तस्य धर्मस्य ज्ञापकमपौरुषेयविधिवाक्यमुपदेश, तस्य धर्मेऽव्यतिरेकादित्यर्थः। पदानां कार्य्यान्वितार्थशक्तिरित्यत्र सूत्रं पठति॥ तद्भूतानामिति॥ तत्तत्र वेदे भूतानां सिद्धार्थनिष्ठानां पदानां क्रियार्थेन कार्य्यवाचिना लिङादिपदेन समाम्नायः सहोच्चारणं कर्त्तव्य। पदार्थज्ञानस्य वाक्यार्थरूपकार्य्यधीनिमित्तत्वादित्यर्थः। कार्य्यान्वितार्थे शक्तानि पदानि कार्य्यवाचिपदेन सह पदार्थ

* नामेति मु० पुस्तके पाठो नास्ति।

क्रियार्थत्वादानर्थक्यमतदर्थानामिति” च। अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्त्तयत् कुतश्चिद्विषयविशेषान्निवर्त्तयच्चार्थवच्छास्त्रं, तच्छेषतया चान्यदुपयुक्तं, तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादि साधनं विधीयते, एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयते इति युक्तं *। नन्विह जिज्ञास्यवैलक्षण्यमुक्तं। कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति। † तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुं। कार्य्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात्। “आत्मा वा अरे द्रष्टव्यः” “य आ-

स्मृतिद्वारा कार्य्यमेव वाक्यार्थं बोधयन्तीति भावः। फलितमाह॥ अत इति॥ यतो वृद्धा एवमाहुः, अतो विधिनिषेधवाक्यमेव शास्त्रं, अर्थवादादिकं तु तच्छेषतयोपक्षीणं, तेन कर्मशास्त्रेण सामान्यं शास्त्रत्वं, तस्माद्वेदान्तानां कार्य्यपरत्वेनैव अर्थवत्त्वं स्यादित्यर्थः। ननु वेदान्तेषु नियोज्यस्य विधेयस्य चादर्शनात् कथं कार्य्यधीरिति तत्राह॥ सति चेति॥ ननु धर्मब्रह्मजिज्ञासासूत्रकाराभ्यामिह काण्डद्वयेऽर्थभेद उक्तः, एककार्य्यार्थत्वे शास्त्रभेदानुपपत्तेः। तत्र काण्डद्वये जिज्ञास्यभेदे सति फलवैलक्षण्यं वाच्य। तथा च न मुक्तिफलाय ज्ञानस्य विधेयता, मुक्तेर्विधेयक्रियाजन्यत्वे कर्मफलादविशेषप्रसङ्गादविशेषे जिज्ञास्यभेदासिद्धेः। अतः कर्मफलविलक्षणत्वान्नित्यसिद्धमुक्तेस्तद्व्यञ्जकज्ञानविधिरयुक्त इत्याशङ्कते॥ नन्विहेति॥ मुक्तेः कर्मफलाद्वैलक्षण्यमसिद्धमिति तदर्थं ज्ञानं विधेयं। न च तर्हि सफलं कार्य्यमेव वेदान्तेष्वपि जिज्ञास्यमिति तद्भेदासिद्धेरिति वाच्यं, इष्टत्वात्। न च ब्रह्मणो

* इतियुक्तमिति मु॰ पुस्तकधृतपाठः।

† अत्रेति टीकासम्मतः पाठः।

त्मापहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीत" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादिषु हि विधानेषु सत्सु "कोऽसावात्मा, ब्रह्म" इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः, "नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म" इत्येवमादयः। तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यति। कर्त्तव्यविध्यननुप्रवेशे तु वस्तुमात्रकथने हानोपादानासम्भवात् "सप्तद्वीपा वसुमती" "राजासौ गच्छति" इत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात्। ननु वस्तुमात्रकथनेऽपि "रज्जुरियं नायं सर्पः" इत्यादौ भ्रान्तिजनितभीतिनिवर्त्तनेनार्थवत्त्वं दृष्टं। तथेहाप्यसंसार्य्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्त्तनेनार्थवत्त्वं स्यात्। स्यादेतदेवं यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्त्तेत न तु निवर्त्तते। श्रुतब्रह्मणोऽपि यथापूर्वं

---

जिज्ञास्यत्वसूत्रविरोधः, ज्ञानविधिशेषत्वेन सूत्रकृता ब्रह्मप्रतिपादनादिति परिहरति। नेति। ब्रह्मणो विधिप्रयुक्तत्वं स्फुटयति। आत्मा वा इति। "ब्रह्म वेद" इत्यत्र ब्रह्मभावकामो ब्रह्मवेदनं कुर्य्यादिति विधिः परिणम्यत इति द्रष्टव्यं। लोकं ज्ञानस्वरूपं वेदान्तानेवार्थतो दर्शयति। नित्य इति। ननु किं विधिफलमिति तदाह। तदुपासनादिति। प्रत्यग्ब्रह्मोपासनात् "ब्रह्मविदाप्नोति परम्" इति शास्त्रोक्तो मोक्षः स्वर्गवल्लोकाप्रसिद्धं फलमित्यर्थः। ब्रह्मणः कर्त्तव्योपासनाविषयत्वाविधिशेषत्वानङ्गीकारे बाधकमाह। कर्त्तव्येति। विध्यसम्बद्धसिद्धबोधे प्रवृत्त्यादिफलाभावाद्वेदान्तानां वैफल्यं स्यादित्यर्थः। नन्विति शङ्का स्पष्टार्था। दृष्टान्तवैषम्येण परिहरति। स्यादिति।

सुखदुःखादिसंसारित्वधर्मादर्शनात्। "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्दर्शनात्। तस्मात् प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति"।

अत्राभिधीयते, न, कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। शारीरं वाचिकं मानसञ्च कर्म श्रुतिस्मृतिप्रसिद्धं धर्माख्यं यद्विषया जिज्ञासा, "अथातो धर्मजिज्ञासा" इति सूचिता। अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वात् जिज्ञास्यः परिहाराय। तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिस्थावरान्ते प्रसिद्धे। मनुष्यत्वादारभ्य ब्रह्मान्तेषु देह-

---

एतदर्थवत्त्वमेवश्चेत् स्यादित्यर्थः। एवंशब्दार्थमाह॥ यदीति॥ किञ्च, यदि ज्ञानादेव मुक्तिस्तदा श्रवणजन्यज्ञानानन्तरं मननादिविधिर्न स्यात्, तद्विधेश्च कार्य्यसाध्या मुक्तिरित्याह॥ श्रोतव्य इति॥ शब्दानां कार्य्यान्वितशक्तेः प्रवृत्त्यादिफलस्यैव शास्त्रत्वात् सिद्धे फलाभावान्मननादिविधेश्च कार्य्यपरा वेदान्ता इति पूर्व्वपक्षमुपसंहरति॥ तस्मादिति॥ वेदान्ता न विधिपराः स्वार्थे फलवत्त्वे सति नियोज्यविधुरत्वात्,"नायं सर्पः" इति वाक्यवत "सोऽरोदीत्" "स्वर्गकामो यजेत" इति वाक्ययोर्निरासाय द्वौ विशेषणद्वयमिति सिद्धान्तयति॥ अत्रेति॥ यदुक्तं मोक्षकामस्य नियोज्यस्य ज्ञानं विधेयमिति तन्नेत्याह॥ नेति॥ मोक्षो न विधिजन्यः कर्म्मफलविलक्षणत्वादात्मवदित्यर्थः। उक्तहेतुज्ञानाय कर्म्मतत्फले प्रपञ्चयति॥ शारीरमित्यादिना वर्णितं संसाररूपं अनुवदतीत्यन्तेन॥ अथ वेदाध्ययनानन्तरं। अतो वेदस्य फलवदर्थपरत्वात् धर्म्मनिर्णयाय कर्म्मवाक्यविचारः कर्त्तव्य इति सूत्रार्थः। न केवलं धर्म्माख्यं कर्म्म किन्तु अधर्म्मोऽपीत्याह॥ अधर्म्मोऽपीति॥ निषेधवाक्यप्रमाणत्वादित्यर्थः। कर्म्मात्मा फलमाह॥ तयो-

वत्सु सुखतारतम्यमनुश्रूयते। ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते। धर्मतारतम्यादधिकारितारतम्यं। प्रसिद्धञ्चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यं। तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनं। केवलैरिष्टापूर्त्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनं। तत्रापि सुखतारतम्यं तत्साधनतारतम्यञ्च शास्त्राद् "यावत् सम्पातमुषित्वा" इत्यस्माद् गम्यते। तथा मनुष्यादिषु नारकस्थावरान्तेषु सुखल-

---

रिति॥ मोक्षस्तु अतीन्द्रियो विशोकः शरीराद्यभोग्यो विषयाद्यजन्योऽनात्मवित् स्वप्रसिद्ध इति वैलक्षण्यज्ञानाय प्रत्यक्षत्वादीनि विशेषणानि। सामान्येन कर्म्मफलमुक्त्वा धर्म्मफलं पृथक् प्रपञ्चयति। मनुष्यत्वादिति॥ "स एको मानुष आनन्दस्ततः शतगुणो गन्धर्व्वादीनाम्" इति श्रुतेरनुभवानुसारित्वमनुशब्दार्थः। ततश्च सुखतारतम्यादित्यर्थः। मोक्षस्तु निरतिशयस्तत्साधनञ्च तत्त्वज्ञानमेकरूपमिति वैलक्षण्यं। किञ्च साधनचतुष्टयसम्पन्न एकरूप एव मोक्षविद्याधिकारी। कर्म्मणि तु नानाविध इति वैलक्षण्यमाह॥ धर्म्मेति॥ गम्यते न केवलं किन्तु प्रसिद्धञ्चेत्यर्थः। अर्थित्वं फलकामित्वं। सामर्थ्यं लौकिकं पुत्रादि। आदिपदादिदत्त्वं शास्त्रानिन्दितत्वञ्च। किञ्च, कर्म्मफलं मार्गप्राप्यं, मोक्षस्तु नित्याप्त इति भेदमाह॥ तथेति॥ उपासनायां चित्तस्थैर्य्यप्रकर्षादर्चिरादिमार्गेण ब्रह्मलोकगमनं "तेऽर्च्चिषम्" इत्यादिना श्रूयत इत्यर्थः।

"अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनं।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते"॥
"वापीकूपतडागादि देवतायतनानि च।
अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते"॥
"शरणागतसन्त्राणं भूतानाञ्चाप्यहिंसनं।
बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते"॥

तत्रापि॥ चन्द्रलोकेऽपीत्यर्थः। सम्पतति गच्छति अस्माल्लोकादमुं लोकमनेनेति सम्पातः कर्म्म, यावत् कर्म्म भोक्तव्यं तावत् स्थित्वा पुन-

प्रस्तुता। तद्यदि कर्त्तव्यशेषत्वेनोपदिश्येत तेन च कर्त्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत अनित्य एव स्यात्। तत्रैवं सति यथोक्तकर्म्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत। नित्यश्च मोक्षः सर्व्वैर्मोक्षवादिभिरभ्युपगम्यते। अतो न कर्त्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः। अपि च "ब्रह्म वेद

---

माह॥ व्योमवदिति॥ परिणामाभावमाह॥ सर्व्वक्रियारहितमिति॥ फलानपेक्षित्वान्न फलार्थापि क्रियेत्याह॥ नित्यतृप्तमिति॥ तृप्तिरनपेक्षत्वं विशोकं सुखं वा निरवयवत्वान्न क्रिया तस्य भागार्थमपि न क्रिया स्वयंज्योतिष्ट्वात्, अतः कूटस्थत्वान्न कर्म्मसाध्यो मोक्ष इत्युक्तं। कर्म्मतत्कार्य्यासङ्गित्वाच्च तथेत्याह॥ यत्रेति॥ कालानवच्छिन्नत्वाच्चेत्याह॥ कालेति॥ कालत्रयञ्च नोपावर्त्तत इति योग्यतया सम्बन्धनीयं। धर्म्माद्यनवच्छेदे मानमाह॥ अन्यत्रेति॥ अन्यदित्यर्थं। कृतात् कार्य्यात्। अकृताच्च कारणात्। भूताद्भव्याच्च। चकाराद्वर्त्तमानाच्च। अन्यद्यत् पश्यसि तद्वदेत्यर्थः। ननु उक्ताः श्रुतयो ब्रह्मणः कूटस्थासङ्गित्वं वदन्तु मोक्षस्य नियोगफलत्वं किं न स्यादिति तत्राह॥ अत इति॥ तत् कैवल्यं ब्रह्मैव, कर्म्मफलविलक्षणत्वादित्यर्थः। ब्रह्माभेदान्मोक्षस्य कूटस्थत्वं धर्म्माद्यसङ्गित्वञ्चेति भावः। यद्वा यज्जिज्ञास्यं तद् ब्रह्म अतः पृथक्जिज्ञास्यत्वात् धर्म्माद्यस्पृष्टमित्यर्थ। अतः शब्दाभावपाठेऽप्ययमेवार्थः ब्रह्मणो विधिस्पर्शे शास्त्रपृथक्त्वं न स्यात्, कार्य्यविलक्षणानधिगतविषयालाभात्। न हि ब्रह्मात्मैक्यं भेदप्रमाणे जाग्रति विधिपरवाक्याल्लब्धुं शक्यं न वा तद्विना विधेरनुपपत्तिः योषिदग्न्यैक्योपास्तिविधिदर्शनादिति भावः। अथ वा मोक्षस्य नियोगासाध्यत्वे फलितं सूत्रार्थमाह॥ अत इति॥ यदत्र जिज्ञास्यं ब्रह्म तत् स्वतन्त्रमेव वेदान्तैरुपदिश्यते, समन्वयादित्यर्थः। विपक्षे दण्डं पातयति॥ तद्यदीति॥ तत्रैवं सतीति मोक्षे स[illegible]ानित्ये सतीत्यर्थः॥ अत इति॥ मुक्तेर्नियोगासाध्यत्वेन नियोग[illegible]त् कर्त्तव्यनियोगाभावादित्यर्थः। प्रदीपात् तमोनिवृत्तिवज्ज्ञा[illegible] [illegible]मो। [illegible]फलत्वाच्च न नियोगसाध्यत्वमि[illegible] [illegible]ब्रह्म। [illegible] वेद स ब्रह्मैव

रीरं शरीरेषु अनवस्थेष्ववस्थितं। महान्तं विभुमात्मानं मत्वा धीरो न शोचति"।"अप्राणो ह्यमनाः शुभ्रोऽसङ्गो ह्ययं पुरुषः" इत्यादि श्रुतिभ्यः। अतएवानुष्ठेयफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धं। तत्र किञ्चित्परिणामिनित्यं स्याद्यथा* यस्मिन् विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते। यथा पृथिव्यादिजगन्नित्यत्ववादिनां, यथा च साङ्ख्यानां गुणाः। इदन्तु पारमार्थिकं कूटस्थ नित्यं व्योमवत् सर्व्वव्यापि सर्व्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावं। यत्र धर्माधर्मौ सह कार्य्येण कालत्रयञ्च नोपावर्त्तेते तदशरीरं मोक्षाख्यं। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् अन्यत्र भूताच्च भव्याच्च" इत्यादिश्रुतिभ्यः। अतस्तद्ब्रह्म यस्येयं जिज्ञासा

क्रिलमशरीरत्व तस्यानादित्वान्न कर्म्मसाध्यतेत्याह ॥ नेति ॥ अशरीरं स्थूलदेहशून्य देहेष्वनेकेषु अनित्येषु एक नित्यमवस्थितं महान्तं व्यापिनं, आपेक्षिकमहत्त्व वारयति॥ विभुमिति॥ तमात्मानं ज्ञात्वा धीर सन् शोकोपलक्षित संसार नानुभवतीत्यर्थं। सूक्ष्मदेहाभावे श्रुतिमाह॥ अपाण इति॥ प्राणमनसो क्रियाज्ञानशक्त्योर्निषेधात, तदधीनाना कर्म्मज्ञानेन्द्रियाणा निषेधो हि यत, अत शुद्ध इत्यर्थं। देहद्वयाभावे श्रुति "असङ्गो हि" इति, निर्देहात्मस्वरूपमोक्षस्यानादिभावत्वे सिद्धे फलितमाह॥ अत एवेति॥ नित्यत्वेऽपि परिणामितया धर्म्मकार्य्यत्व मोक्षस्येत्याशङ्क्य नित्यं द्वेधा विभजते॥ तत्र किञ्चिदिति॥ नित्यवस्तुमध्य इत्यर्थं। परिणामि च तन्नित्यञ्चेति परिणामिनित्य आत्मा तु कूटस्थनित्य इति न कर्म्मसाध्य इत्याह॥ इदन्त्विति॥ परिणामिनो नित्यत्वं प्रत्यभिज्ञाकल्पितं मिथ्यैव, कूटस्थस्य तु नाशकाभावान्नित्यत्वं पारमार्थिक कूटस्थत्वसिद्ध्यर्थं परिस्पन्दाभाव-

* स्याद्यथेति मु० पुस्तकधृतपाठ।

प्रसुता। तद्यदि कर्त्तव्यशेषत्वेनोपदिश्येत तेन च कर्त्तव्येन साध्यत्वेनोचोऽभ्युपगम्येत अनित्य एव स्यात्। तत्रैवं सति यथोक्तकर्म्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत। नित्यश्च मोक्षः सर्व्वैर्मोक्षवादिभिरभ्युपगम्यते। अतो न कर्त्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः। अपि च "ब्रह्म वेद

---

माह॥ व्योमवदिति॥ परिणामाभावमाह॥ सर्व्वक्रियारहितमिति॥ फलानपेक्षित्वान्न फलार्थमपि क्रियेत्याह॥ नित्यतृप्तमिति॥ तृप्तिरनपेक्षत्वं विशोकं सुखं वा निरवयवत्वान्न क्रिया तस्य भानार्थमपि न क्रिया स्वयंज्योतिष्ट्वात्, अतः कूटस्थत्वान्न कर्म्मसाध्यो मोक्ष इत्युक्तं। कर्म्मतत्कार्य्यासङ्गित्वाच्च तथेत्याह॥ यत्रेति॥ कालानवच्छिन्नत्वाच्चेत्याह॥ कालेति॥ कालत्रयञ्च नोपावर्त्तत इति योग्यतया सम्बन्धनीयं। धर्म्माद्यनवच्छेदे मानमाह॥ अन्यत्रेति॥ अन्यदित्यर्थ। कृतात् कार्य्यात्। अकृताच्च कारणात्। भूताद्भव्याच्च। चकाराद्वर्त्तमानाच्च। अन्यद्यत् पश्यसि तद्वदेत्यर्थः। ननु उक्ताः श्रुतयो ब्रह्मणः कूटस्थासङ्गित्वं वदन्तु मोक्षस्य नियोगफलत्वं किं न स्यादिति तत्राह॥ अत इति॥ तत् कैवल्यं ब्रह्मैव, कर्म्मफलविलक्षणत्वादित्यर्थ। ब्रह्माभेदान्मोक्षस्य कूटस्थत्वं धर्म्माद्यसङ्गित्वञ्चेति भावः। यद्वा यज्जिज्ञास्यं तद् ब्रह्म अतः पृथक्जिज्ञास्यत्वात् धर्म्माद्यस्पृष्टमित्यर्थ। अतः शब्दाभावपाठेऽप्ययमेवार्थः ब्रह्मणो विधिस्पर्शे प्राक्दृष्टधर्म्मा न स्यात्, कार्य्यविलक्षणानधिगतविषयालाभात्। न हि ब्रह्मात्मैक्यं भेदप्रमाणे जायते विधिपरवाक्यात्तत्त्वम्प्रुक्यं न वा तद्विना विधेरनुपपत्तिः योषिदग्न्यैक्योपास्तिविधिदर्शनादिति भावः। अथ वा मोक्षस्य नियोगासाध्यत्वे फलितं सूत्रार्थमाह॥ अत इति॥ यदत्र जिज्ञास्यं ब्रह्म तत् स्वतन्त्रमेव वेदान्तैरुपदिश्यते, समन्वयादित्यर्थ। विपक्षे दण्डं पातयति॥ तद्यदीति॥ तत्रैवं सतीति मोक्षे साध्यत्वेनानित्ये सतीत्यर्थः॥ अत इति॥ मुक्तेर्नियोगासाध्यत्वेन नियोज्यालाभात् कर्त्तव्यनियोगाभावादित्यर्थः। प्रदीपात् तमोनिवृत्तिवज्ज्ञानादज्ञाननिवृत्तिरूपमोक्षस्य दृष्टफलत्वाच्च न नियोगसाध्यत्वमित्याह॥ अपि चेति॥ "यो ब्रह्माहं" इति वेद स ब्रह्मैव

ब्रह्मैव भवति" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"
"आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" "अभयं वै जनक
प्राप्तोऽसि" "तदात्मानमेवावेदहं ब्रह्मास्मीति" तस्मात्तत्सर्वम-
भवत्" "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इत्येवमाद्याः
श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वार-
यन्ति। तथा "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं
सूर्यश्च" इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्त्तव्यान्तरवार-
णायोदाहार्यं। यथा तिष्ठन् गायतीति तिष्ठतिगायत्योर्मध्ये
तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते। "त्वं हि नः पिता योऽस्मा-

---

भवति। परं कारणमवरं कार्यं तद्रूपे तदधिष्ठाने तस्मिन् दृष्टे सति
अस्य द्रष्टुरनारब्धफलानि कर्माणि नश्यन्ति। ब्रह्मणः स्वरूपमानन्दं
विद्वान् निर्भयो भवति द्वितीयाभावात्। "अभयं ब्रह्म प्राप्तोऽसि"।
अज्ञानहानात् तज्जीवाख्यं ब्रह्म गुरूपदेशादात्मानमेव "अहं ब्रह्मास्मि"
इत्यवेत् विदितवत्। तस्माद्वेदनात्तद्ब्रह्म पूर्णमभवत् परिच्छेदभ्रान्तिहा-
नादेकत्वं, "अहं ब्रह्म" इत्यनुभवः तत्रानुभवकाले मोहशोकौ न स्त इति
श्रुतीनामर्थं, तासां तात्पर्यमाह ॥ ब्रह्मेति ॥ विद्यातत्फलयोर्मध्य इत्यर्थं
मोक्षस्य विधिफलत्वे स्वर्गादिवत् कालान्तरभावित्वं स्यात्। तथा च
श्रुतिबाध इति भाव। इतश्च मोक्षो वैधो नेत्याह ॥ तथेति ॥ तद्
ब्रह्मैतत् प्रत्यगस्मीति पश्यन् तस्मात् ज्ञानात् वामदेवो मुनीन्द्रः सुअ
ब्रह्म प्रतिपेदे ह तत्र ज्ञाने तिष्ठन् दृष्टवानात्ममन्त्रान् स्वस्य सर्वात्मत्व
प्रकाशकान् "अहं मनु" इत्यादीन् ददर्शेत्यर्थं। यद्यपि स्थितिर्गानक्रि-
याया लक्षणं, ब्रह्मदर्शनन्तु ब्रह्मप्रतिपत्तिक्रियाया हेतुरिति वैषम्य-
मस्ति, तथापि "लक्षणहेत्वोः क्रियायाः" इति [पा०३।२।१२६] सूत्रेण
क्रियां प्रति लक्षणहेत्वोरर्थयोर्वर्त्तमानाद्धातोः परस्य लटः। शतृशा-
नचावादेशौ भवत इति विहितशतृप्रत्ययसामर्थ्यात् तिष्ठन् गायति
इत्युक्ते तत्कर्तृकं कार्यान्तरं मध्ये न भातीत्येतावता पश्यन् प्रतिपेदे

कमविद्यायाः परं पारं तारयसि; श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविद्" इति। "सोऽहं भगवः शोचामि तन्मा भगवाञ्छोकस्य पारं तारयतु" इति "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति। तथा चाचार्य्यप्रणीतं न्यायोपबृंहितं सूत्रं "दुःखजन्मप्रवृत्ति-दोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"

---

इत्यस्य दृष्टान्तमाह॥ यथेति॥ किञ्च, ज्ञानादज्ञाननिवृत्तिः श्रूयते, ज्ञानस्य विधेयत्वे कर्म्मत्वादविद्यानिवर्त्तकत्वं न युक्तं, अतो बोधका एव वेदान्ता न विधायका इत्याह॥ त्वं हीति॥ भारद्वाजादयः षड् ऋषयः पिप्पलादं गुरुं पादयोः प्रणम्य ऊचिरे त्वं खल्वस्माकं पिता यस्त्वमविद्यामहोदधेः परं पुनरावृत्तिशून्यं पारं ब्रह्मविद्याप्लवेनास्मां-स्तारयसि प्रापयसि ज्ञानेनाज्ञानं नाशयसीति यावत्। प्रश्नवाक्य-मुक्त्वा छान्दोग्यमाह॥ श्रुतमिति॥ अत्र तारयत्वित्यन्तमुपक्रमस्यं शेषमुपसंहारस्थमिति भेदः। "आत्मविच्छोकं तरति" इति भगव-त्तुल्येभ्यो मया श्रुतमेव हि न दृष्टं, "सोऽहमज्ञत्वात् हे भगवः शो-चामि तं शोचन्तं मां भगवानेव ज्ञानप्लवेन शोकसागरस्य परं पारं प्रापयतु" इति नारदेनोक्तः सनत्कुमारस्तस्मै तपसा दग्धकिल्बिषाय नारदाय तमसः शोकनिदानाज्ञानस्य ज्ञानेन निरूप्यं पारं ब्रह्म दर्शि-तवानित्यर्थः "एतद्यो वेद सो विद्याग्रन्थिं विकिरति" इति वाक्य-मादिशब्दार्थः। एवं श्रुतेस्तत्त्वधीरत्तिप्रमा मुक्तिहेतुर्न कर्म्मेत्युक्तं। तत्राक्ष-पादगौतममुनिसम्मतिमाह॥ तथा चेति॥ "गौरोऽहम्" इति मिथ्या-ज्ञानस्यापाये रागद्वेषमोहादिदोषाणां नाशः, दोषापायाद्धर्म्माधर्म्मरू-रूपप्रवृत्तेरपायः, प्रवृत्त्यपायात् पुनर्देहप्राप्तिरूपजन्मापायः, एवं पाठ-क्रमेणोत्तरोत्तरस्य हेतुनाशान्नाशे सति तस्य प्रवृत्तिरूपहेतोरनन्तरस्य कार्य्यस्य जन्मनोऽपायात् दुःखध्वंसरूपापवर्गो भवतीत्यर्थः। ननु पूर्व्वसूत्रे "तत्त्वज्ञानान्निःश्रेयसाधिगम" इत्युक्ते सतीतरपदार्थभिन्ना-

इति। मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति। न चेदं ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपं, "यथानन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति" इति। नचाध्यासरूपं यथा "मनो ब्रह्म" इत्युपासीत, "आदित्यो ब्रह्म" इत्यादेश इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासो, नापि विशिष्टक्रियायोगनिमित्तं "वायुर्वाव संवर्गः प्राणो वाव संवर्गः" इतिवत्। नाप्याज्यावेक्षणादिकर्मवत् कर्माङ्गसंस्काररूपं। सम्पदादिरूपे

---

त्मतत्त्वज्ञानं कथं मोक्षं साधयतीत्याकाङ्क्षायां मिथ्याज्ञाननिवृत्तिद्वारेणेति वक्तुमिदं सूत्रं प्रवृत्तं। तथा च भिन्नात्मज्ञानान्मुक्तिं वदत् सूत्रं सम्मतञ्चेत् परमतानुज्ञा स्यादित्यत आह॥ मिथ्येति॥ "तत्त्वज्ञानान्मुक्तिः" इत्यंशे सम्मतिरुक्ता, भेदज्ञानन्तु "यत्र हि द्वैतमिव भवति" इति श्रुत्या भ्रान्तित्वात् "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति श्रुत्या अनर्थहेतुत्वाच्च न मुक्तिहेतुरिति भावः। ननु ब्रह्मात्मैकत्वविज्ञानमपि भेदज्ञानवन्न प्रमा, सम्पदादिरूपत्वेन भ्रान्तित्वादित्यत आह॥ न चेदमित्यादिना॥ अल्पालम्बनतिरस्कारेणोत्कृष्टवस्त्वभेदध्यानं सम्पद्यथा मनः स्ववृत्त्यानन्त्यादनन्तं तत उत्कृष्टा विश्वेदेवा अप्यनन्ता इत्यनन्तत्वसाम्याद् "विश्वेदेवा एव मनः" इति सम्पत्तया ऽनन्तफलप्राप्तिर्भवति तथा चेतनत्वसाम्याज्जीवे ब्रह्माभेदः सम्पदिति न चेत्यर्थः। आलम्बनस्य प्राधान्येन ध्यानं, प्रतीकोपास्तिरध्यासः। यथा ब्रह्मदृष्ट्या मनस आदित्यस्य वा। तथा "अहं ब्रह्म" इति ज्ञानमध्यासो नेत्याह॥ नचेति॥ आदेशः उपदेशः क्रियाविशेषो विशिष्टक्रिया तया योगो निमित्तं यस्य ध्यानस्य तत्तथा। यथा प्रलयकाले वायुरग्न्यादीन् संवृणोति संहरतीति संवर्गः, स्वापकाले प्राणो रागादीन् संहरतीति संहारक्रियायोगात् संवर्ग इति ध्यानं छान्दोग्ये विहितं तथा बृंहिक्रियायोगाज्जीवो ब्रह्मेति ज्ञानमिति नेत्याह॥ नापीति॥ यथा "पत्न्यवेक्षितमाज्यं भवति" इति उपांशुयाजाद्यङ्गस्याज्यस्य

हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने "तत्त्वमसि" "अहं ब्रह्मा-
स्मि" "अयमात्मा ब्रह्म" इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्व-
वस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत। "भिद्यते हृदयग्रन्थि-
श्छिद्यन्ते सर्व्वसंशयाः" इति चैवमादीन्यविद्यानिवृत्तिफलश्र-
वणान्युपरुध्येरन्। "ब्रह्म वेद ब्रह्मैव भवति" इति चैवमादीनि
तद्भावापत्तिवचनानि सम्पदादिपक्षे न सामञ्जस्येनोपपद्येरन्।
तस्मान्न सम्पदादिरूपं ब्रह्मात्मैकत्वविज्ञानं। अतो न पुरुषव्या-
पारतन्त्रा ब्रह्मविद्या किं तर्हि प्रत्यक्षादिप्रमाणविषयवस्तुज्ञान-
वद्वस्तुतन्त्रैव। एवम्भूतस्य ब्रह्मणस्तज्ज्ञानस्य वा न कयाचिद्युक्त्या
शक्यः कार्य्यानुप्रवेशः कल्पयितुं। न च विदिक्रियाकर्म्मत्वेन का-

---

संस्कारकमवेक्षणं विहितं तथा कर्म्मणि कर्त्तृत्वेनाङ्गस्यात्मन संस्का-
रार्थं ब्रह्मज्ञानं नेत्याह ॥ नाप्याज्येति ॥ प्रतिज्ञाचतुष्टये हेतुमाह ॥
सम्पदादीति ॥ उपक्रमादिलिङ्गैर्ब्रह्मात्मैकत्ववस्तुनि प्रमितिहेतुर्यं
समानाधिकरणवाक्याना पदनिष्ठ समन्वय तात्पर्य्यं निश्चित तत्पीड्येत।
किञ्च। एकत्वज्ञानादज्ञानिकहृदयस्यान्तःकरणस्य यो रागादिग्रन्थि-
श्चिन्मनसोदात्मरूपाहङ्कारग्रन्थिर्वा नश्यतीत्यज्ञाननिवृत्तिफलवाक्य
बाध स्यात सम्पदादिज्ञानस्याप्रमात्वेनाज्ञानानिवर्त्तकत्वात्। किञ्च।
जीवस्य ब्रह्मत्वसम्पदा कथ तद्भावः। पूर्व्वरूपे स्थिते नष्टे वान्य
स्यान्यात्मतायोगात्। तस्मान्न सम्पदादिरूपमित्यर्थं। सम्पदादि-
रूपत्वाभावे फलितमाह॥ अत इति॥ प्रमात्वान्न कृतिसाध्या किं
तर्हि नित्यैव न प्रमाणसाध्येत्यर्थं। उक्तरीत्या सिद्धब्रह्मरूपमोक्षस्य
कार्य्यसाध्यत्व तज्ज्ञानस्य नियोगविषयत्वञ्च कल्पयितुमशक्य कृत्यसा-
ध्यत्वादित्याह॥ एवम्भूतस्येति॥ ननु ब्रह्म कार्य्याङ्ग कारकत्वात् प्रत्य-
वेक्षणकर्म्मकारकाज्यवदिति चेत्, किं ज्ञाने ब्रह्मणः कर्म्मकारकत्व
उतोपासनायां? नाद्य इत्याह॥ न चेति॥ शाब्दज्ञानं विदिक्रियाश-
ब्दार्थं, विदितं कार्य्यं अविदितं कारणं तस्मादधि अन्यदित्यर्थं। येना

र्यानुप्रवेशो ब्रह्मणः। "अन्यदेव तद्विदितादथोऽविदितादधि" इति विदिक्रियाकर्मत्वप्रतिषेधात्। "येनेदं सर्व्वं विजानाति तं केन विजानीयाद्" इति च। तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति। "यद्वाचानभ्युदितं येन वागभ्युद्यते" इत्याद्यविषयत्वं ब्रह्मण उपन्यस्य, "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति। अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेन्न, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति किं तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति। तथा च शास्त्रं "यस्यामतं तस्य मतं मतं यस्य न वेद सः"। "अविज्ञातं विजानतां विज्ञातमविजानतां" "न

---

त्मना इदं सर्व्वं दृश्यं लोको जानाति तं केन करणेन जानीयात्, तस्मादविषय आत्मेत्यर्थः। न द्वितीय इत्याह ॥ तथेति ॥ "यन्मनसा न मनुते" इति श्रुत्या लोको मनसा यत् ब्रह्म न जानातीत्यविषयत्वमुक्त्वा "तदेव वेद्यं ब्रह्म त्वं विद्धि" यत्तूपाधिविशिष्टं देवतादिकमित्युपासते जनाः नेदं ब्रह्मेत्यर्थः। ब्रह्मणः शाब्दबोधाविषयत्वे प्रतिज्ञाहानिरिति शङ्कते ॥ अविषयत्व इति ॥ वेदान्तजन्यवृत्तिहताविद्यानिवृत्तिफलशालितया शास्त्रप्रमाणकत्वं वृत्तिविषयत्वेऽपि स्वप्रकाशब्रह्मणो वृत्त्यभिव्यक्तस्फुरणाविषयत्वादप्रमेयत्वमिति परिहरति ॥ नेति ॥ परत्वात् फलत्वादित्यर्थः। निवृत्तिरूपब्रह्मतात्पर्य्यादिति वार्थः। उक्तं विवृणोति ॥ न हीति ॥ चिद्विषयत्वमिदन्त्वं। अविषयतया अनिदन्तया। अदृश्यत्वे श्रुतिमाह ॥ तथा चेति ॥ यस्य ब्रह्मामतं चैतन्याविषय इति निश्चयस्तेन सम्यगवगतं। यस्य त्वज्ञस्य ब्रह्म चैतन्यविषय इति मतं स न वेद। उक्तमेव दार्ष्टार्थमनुवदति ॥ अविज्ञातमिति ॥ अविषयतया ब्रह्म विजानतामविज्ञातमदृश्यमिति यत्नः। अज्ञानान्तु

दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न विज्ञातेर्विज्ञातारं विजानीयाः" इति चैवमादि। अतोऽविद्याकल्पितसंसारित्वनिवर्त्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः। यस्य तूत्पाद्यो मोक्षस्तस्य मानसं वाचिकं कायिकं वा कार्य्यमपेक्षत इति युक्तं। तथा विकार्य्यत्वे च। तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वं। न हि दध्यादि विकार्य्यमुत्पाद्यं वा घटादि नित्यं दृष्टं लोके। न चाप्यत्वेनापि कार्य्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात्। स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं। सर्व्वगतत्वेन नित्याप्तस्वरूपत्वात् सर्व्वेण ब्रह्मण आकाशस्येव। नापि संस्कार्य्यो मोक्षो येन व्यापारमपेक्षेत। संस्कारो हि नाम संस्कार्य्यस्य गुणाधानेन वा स्याद्दोषापनयेन वा? न तावद् गुणाधानेन सम्भवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य।

---

ब्रह्म विज्ञातुं दृश्यमिति पक्ष इत्यर्थः। दृष्टेर्द्रष्टारं चाक्षुषमनोवृत्तेः साक्षिणं अनया दृश्यया दृष्ट्या न पश्येर्विज्ञातेर्बुद्धिवृत्तेर्निश्चयरूपायाः साक्षिणं तथा न विषयीकुर्य्या इत्याह॥ नेति॥ नन्वविद्यादिनिवर्त्तकत्वेन शास्त्रस्य प्रामाण्येऽपि निवृत्तेरागन्तुकत्वात् मोक्षस्यानित्यत्वं स्यादिति नेत्याह॥ अत इति॥ तत्त्वज्ञानादित्यर्थ। ध्वंसस्य नित्यत्वादात्मरूपत्वाच्च नानित्यत्वप्रसङ्ग इत्यर्थः। उत्पत्तिविकाराप्तिसंस्काररूपं चतुर्व्विधमेव क्रियाफलं तद्भिन्नत्वान्मोक्षस्य नोपासनासाध्यत्वमित्याह॥ यस्य त्वित्यादिना तस्मात् ज्ञानमेकं मुक्त्वेत्यन्तेन। तत्रोत्पाद्यत्ववद्विकार्य्यत्वे चापेक्षत इति युक्तमित्यन्वयं दूषयति॥ तयोरिति॥ स्थितस्यावस्थान्तरं विकारः। नन्वनित्यत्वनिरासाय क्रियया स्थितस्यैव ब्रह्मणो ग्रामवदाप्तिरस्तु नेत्याह॥ न चेति॥ ब्रह्म जीवाभिन्नं न वा? उभयथाप्याप्तत्वात् न क्रियापेक्षेत्याह॥ स्वात्मेत्यादिना॥ यथा व्रीहीणां संस्कार्य्यत्वेन प्रोक्षणापेक्षा तथा मोक्षस्य नेत्याह॥ नापीत्यादिना॥

नापि दोषापनयेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य। स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते। यथाऽऽदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेन्न, क्रियाश्रयत्वानुपपत्तेरात्मनः। यदाश्रया हि क्रिया तमविकुर्व्वती नैवात्मानं लभते। यद्यात्मा क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत। "अविकार्य्योऽयमुच्यते" इति चैवमादीनि वाक्यानि बाध्येरन्। तच्चानिष्टं। तस्मान्न स्वाश्रया क्रियात्मनः सम्भवति। अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते। ननु देहाश्रयया स्नानाचमनयज्ञोपवीतधारणादिकया क्रियया देही संस्क्रियमाणो दृष्टः। न देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात्। प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वं। तया देहाश्रयया तत्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियत इति

---

गुणाधानं व्रीहिषु प्रोक्षणादिना, क्षालनादिना वस्त्रादौ मलापनयः। शङ्कते॥ स्वात्मधर्म्म इति॥ ब्रह्मात्मस्वरूप एव मोक्षोऽनाद्यविद्यामलावृतः उपासनया मले नष्टेऽभिव्यज्यते इत्यत्र दृष्टान्तः॥ यथेति॥ संस्कारो मलनाशः, किमात्मनि मलः सत्यः कल्पितो वा? द्वितीये ज्ञानादेव तन्नाशो न क्रियया; आद्ये क्रिया किमात्मनिष्ठा अन्यनिष्ठा वा? नाद्य इत्याह॥ न क्रियेति॥ अनुपपत्तिं स्फुटयति॥ यदीति॥ क्रिया हि स्वाश्रये संयोगादिविकारमकुर्व्वती न जायत इत्यर्थः। तत्र वाक्यबाधनं न द्वितीय इत्याह॥ अन्येति॥ अविषयत्वात् क्रियाश्रयद्रव्यासंयोगादिति यावत्। दर्पणन्तु सावयवं क्रियाश्रयेष्टकचूर्णादिद्रव्यसंयोगित्वात् संस्क्रियत इति भावः। अन्यक्रियया अन्यो न संस्क्रियत इत्यत्र व्यभिचारं शङ्कते॥ नन्विति॥ आत्मनो मूलाविद्याप्रतिवि

युक्तं। यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलं "अहमरोगः" इति यत्र बुद्धिरुत्पद्यते, एवं स्नानाचमनयज्ञोपवीतादिधारणाकया क्रियया "अहं शुद्धः संस्कृतः" इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते, स च देहेन संहत एव। तेनैव ह्यहंकर्त्राहंप्रत्ययविषयेण प्रत्ययिना सर्व्वाः क्रिया निर्वर्त्त्यन्ते तत्फलं च स एवाश्नाति। "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति मन्त्रवर्णात् "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति च। तथा "एको देवः सर्व्वभूतेषु गूढः सर्व्वव्यापी सर्व्वभूतान्तरात्मा। कर्म्माध्यक्षः सर्व्वभूताधिवासः साक्षी चेता केवलो

---

भिन्नत्वेन गृहीतस्य नरोऽहमिति भ्रान्त्या देहतादात्म्यमापन्नस्य क्रियाश्रयत्वभ्रान्त्या संस्कार्य्यत्वभ्रमान्न व्यभिचार इत्याह॥ नेति॥ क्वचिदिति॥ अनिश्चितब्रह्मस्वरूप इत्यर्थः। यत्रात्मनि विषये आरोग्यबुद्धिरुत्पद्यते तस्य देहसंहतस्यैवारोग्यफलमित्यन्वयः। ननु देहाभिन्नस्य कथं संस्कारः? तस्यामुष्मिकफलभोक्तृत्वायोगादित्यत आह॥ तेनेति॥ देहसंहतेनैवान्तःकरणप्रतिबिम्बात्मना कर्त्ताहमिति भासमानेन प्रत्ययाः कामादयो मनस्तादात्म्यादस्य सन्तीति प्रत्ययिना क्रियाफलं भुज्यत इत्यर्थः, मनोविशिष्टस्यामुष्मिकभोक्तुः संस्कारो युक्त इति भावः। विशिष्टस्य भोक्तृत्वं न केवलस्य साक्षिण इत्यत्र मानमाह॥ तयोरिति॥ प्रमातृसाक्षिणोर्मध्ये सत्वसंसर्गमात्रेण कल्पितकर्तृत्वादिमान् प्रमाता पिप्पलं कर्म्मफलं भुङ्क्ते, स एव शोधिततत्त्वेनान्यः साक्षितया प्रकाशत इत्यर्थः। आत्मा देहः, देहादियुक्तं प्रमातात्मानमित्यर्थः। एवं सोपाधिकस्य चिद्धातोर्मिथ्यासंस्कार्य्यत्वमुक्त्वा निरुपाधिकस्यासंस्कार्य्यत्वे मानमाह॥ एक इति॥ सर्व्वभूतेष्वद्वितीय एको देवः स्वप्रकाशः, तथापि मायावृतत्वान्न प्रकाशत इत्याह॥ गूढ इति॥ ननु जीवेभ्यो भिन्नत्वाद्वा देवस्याभानं न तु मायागूहनादिति नेत्याह॥

निर्गुणश्च” इति। “स पर्य्यगात् शुक्रमकायमव्रणमस्नाविरं शुद्ध-मपापविद्धं” इति चैतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धताञ्च ब्रह्मणो दर्शयतः। ब्रह्मभावश्च मोक्षः। तस्मान्न संस्कार्य्योऽपि मोक्षः। अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचि-द्दर्शयितुं। तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनु-प्रवेश इह नोपपद्यते। ननु ज्ञानं नाम मानसी क्रिया, न, वैलक्षण्यात्। क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च। यथा “यस्यै देवतायै

---

सर्व्वव्यापी सर्व्वभूतान्तरात्मेति॥ देवस्य विभुत्वात् सर्व्वप्राणिप्रत्य-क्त्वाच्चावरणादेवाभानमित्यर्थः। प्रत्यक्त्वे कर्तृत्वं स्यादिति चेत्। न। कर्म्माध्यक्षः क्रियासाक्षीत्यर्थः। तर्हि साक्ष्यमस्तीति द्वैतापत्तिः। न। सर्व्वभूतानामधिष्ठानं भूत्वा साक्षी भवति, साक्ष्यमधिष्ठाने साक्षिणि कल्पितमिति भावः। साक्षिशब्दार्थमाह॥ चेता केवल इति॥ बोद्धृत्वे सति, अकर्त्ता साक्षीति लोकप्रसिद्धं। चकारो दोषाभावसमुच्चयार्थः, निर्गुणत्वान्निर्दोषाच्च। गुणो दोषनाशो वा संस्कारो नेत्यर्थः। स इत्यु-पक्रमात्। शुक्रादिशब्दाः पुंस्त्वेन वाच्याः, स आत्मा परि सर्व्वमगात् व्याप्तः, शुक्रो दीप्तिमान्, अकायो लिङ्गशून्यः, अव्रणो ऽक्षतः, अस्ना-विरः शिराविधुरः, अनश्वर इति वा। आभ्यां पदाभ्यां स्थूलदेह-शून्यत्वमुक्तं। शुद्धो रागादिमलशून्यः, अपापविद्धः पुण्यपापाभ्यामसं-स्पृष्ट इत्यर्थः। अत इति। उत्पत्त्याप्तिविकारसंस्कारेभ्योऽन्यत् पञ्चमं क्रियाफलं नास्ति यन्मोक्षस्य क्रियासाध्यत्वे द्वारं भवेदित्यर्थः। ननु मोक्षस्यासाध्यत्वे शास्त्रारम्भो वृथा, न, ज्ञानार्थत्वादित्याह॥ तस्मा-दिति॥ द्वाराभावादित्यर्थः। व्याघातं शङ्कते॥ नन्विति॥ तथा च मोक्षे क्रियानुप्रवेशो नास्तीति व्याहतमिति भावः। मानसमपि ज्ञानं न विधियोग्या क्रिया वस्तुतन्त्रत्वात् कृत्यसाध्यत्वाच्चेत्याह॥ नेति॥ वैलक्षण्यं प्रपञ्चयति॥ क्रिया हीति॥ यत्र विषये तदनपेक्षैव या चोद्यते तत्र सा हि क्रियेति योजना विषयवस्त्वनपेक्षा, कृतिसाध्या च

हविर्गृहीतं स्यात् तां ध्यायेद्वषट्करिष्यन्" इति "सन्ध्यां मनसा ध्यायेत्" इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं तथापि पुरुषेण कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यं पुरुषतन्त्रत्वात्। ज्ञानन्तु प्रमाणजन्यं, प्रमाणञ्च यथाभूतवस्तुविषयं, अतो ज्ञानं कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुमशक्यं केवलं वस्तुतन्त्रमेव, तत् न चोदनातन्त्रं नापि पुरुषतन्त्रं, तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यं। यथा च "पुरुषो वाव गौतमाग्निर्योषा वाव गौतमाग्निः," इत्यत्र *योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति केवलचोदनाजन्यत्वात्तु क्रियैव सा पुरुषतन्त्रा च। या तु प्रसिद्धेऽग्नावग्निबुद्धिः न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि, प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेव तन्न क्रिया। एवं सर्व्वप्रमाणविषय-

---

क्रियेत्यत्र दृष्टान्तमाह ॥ यथेति ॥ गृहीतमध्वर्युणेति शेषः। "वषट् करिष्यन् होता सन्ध्यां" देवता इति चैवमादिवाक्येषु यथा यादृशी ध्यानक्रिया वस्त्वनपेक्षा पुन्तन्त्रा च चोद्यते तादृशी क्रियेत्यर्थः। ध्यानमपि मानसत्वात् ज्ञानवन्न क्रियेत्यत आह ॥ ध्यानमित्यादिना ॥ तथापि क्रियैवेति शेषः। कृत्यसाध्यत्वमुपाधिरिति भावः। ध्यानक्रियामुक्त्वा ततो वैलक्षण्यं ज्ञानस्य स्फुटयति ॥ ज्ञानन्त्विति ॥ अतः प्रमात्वान्न चोदनातन्त्रं न विधेर्विषयः। पुरुषः कृतिद्वारा तन्त्रं हेतुर्यस्य तत्पुरुषतन्त्रं, तस्माद्वस्त्वव्यभिचारादपुंतन्त्रत्वाच्च ध्यानात् ज्ञानस्य महान् भेद इत्यर्थः। भेदमेव दृष्टान्तान्तरेणाह ॥ यथा चेति ॥ अभेदासत्त्वेऽपि विधितो ध्यानं कर्त्तुं शक्यं न ज्ञानमित्यर्थः। ननु प्रत्यक्षज्ञानस्य विषयजन्यतया तत्तन्त्रत्वेऽपि शाब्दबोधस्य तदभावाद्विधेयक्रियात्वमिति नेत्याह ॥ एवं सर्व्वेऽपि ॥ शब्दानुमानाद्यर्थेष्वपि ज्ञानमविधेयक्रियात्वेन ज्ञातव्यं। तत्रापि मानादेव ज्ञानस्य प्राप्तेर्विध्ययोगादित्यर्थः।

---

* योषा वाव गौतमाग्निरिति मु० पुस्तके नास्ति।

वस्तुषु वेदितव्यं । तस्मिन्नेवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रं। अतस्तद्विषया लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात् कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात्। किमर्थानि तर्हि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादीनि विधिच्छायानि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानि इति ब्रूमः। यो हि बहिर्मुखः प्रवर्त्तते पुरुषः "इष्टं मे भूयादनिष्टं मे मा भूत्" इति, न च तत्रात्यन्तिकं पुरुषार्थं लभते। तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसङ्घातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्म-

---

तत्रैवं सति लोके ज्ञानस्याविधेयत्वे सतीत्यर्थः। यथाभूतत्वमबाधितत्वं। ननु "आत्मानं पश्येत्" "ब्रह्मत्वं विद्धि" "आत्मा द्रष्टव्यः" इति विज्ञाने लिङ्लोटतव्यप्रत्यया विधायकाः श्रूयन्ते, अतो ज्ञानं विधेयमित्यत आह॥ तद्विषया इति॥ तस्मिन् ज्ञानरूपविषये विधयः पुरुषं प्रवर्त्तयितुमशक्ता भवन्ति। अनियोज्यं कृत्यसाध्यं नियोज्यशून्यं वा ज्ञानं तद्विषयकत्वादित्यर्थः। "ममायं नियोगः" इति बोद्धा नियोज्यो विषयश्च विधेर्नास्तीति भावः। तर्हि ज्ञेयं ब्रह्म विधीयतां नेत्याह॥ अहेयेति॥ वस्तुस्वरूपो विषयस्तत्त्वात् ब्रह्मणो निरतिशयस्यासाध्यत्वान्न विधेयत्वमित्यर्थः। उदासीनवस्तुविषयकत्वात् ज्ञानस्य न विधेयं, प्रवृत्त्यादिफलाभावादित्यर्थः। विधिपदानां गतिं पृच्छति॥ किमर्थानीति॥ विधिच्छायानि प्रसिद्धयागादिविधितुल्यानीत्यर्थः। विधिप्रत्ययैरात्मज्ञानं परमपुरुषार्थसाधनमिति स्तूयते स्तुत्या आयन्तिकेष्टहेतुत्वभ्रान्त्या या विषयेषु प्रवृत्तिः आत्मश्रवणादिप्रतिबन्धिका तन्निवृत्तिफलानि विधिपदानीत्याह॥ स्वाभाविकेति॥ विमुखीकरणेति॥ यो हीत्यादिना॥ तत्र विषयेषु सङ्घातस्य या प्रवृत्तिः तद्गोचराच्छब्दादेरित्यर्थः। स्रोतश्चित्तवृत्तिप्रवाहः। प्रवर्त्तयन्ति ज्ञानसाधनश्रवणादाविति शेषः। श्रवणस्वरूपमाह॥ तस्येति॥ अन्वेषणं ज्ञानं। यदिदं जगत्तत् सर्वं आत्मैवेत्यनात्मबाधेनात्मा बोध्यते। अद्वितीया

णि स्रोतसया प्रवर्त्तयन्ति "आत्मा वा अरे द्रष्टव्यः" इत्यादीनि। तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते "इदं सर्व्वं यदयमात्मा" "यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कम्पश्येत् केन क विजानीयात्" "विज्ञातारमरे केन विजानीयादयमात्मा ब्रह्म" इत्येवमादिभिः। यद्यप्यकर्त्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति तथैवेत्यभ्युपगम्यते। अलङ्कारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्व्वकर्त्तव्यताहानिः कृतकृत्यता चेति। तथा च श्रुतिः।

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्"॥*
इति।

"एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इति च स्मृतिः। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणं। यदपि केचिदाहुः "प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति" इति। तन्न। औपनिषदस्य पुरुषस्या-

दृश्यात्मबोधः क्व विधिः तपस्वा द्वैतवनोपजीवनः क्व स्थास्यतीति भावः। आत्मज्ञानिनः कर्त्तव्याभावे मानमाह॥ तथा चेति॥ "अयं स्वयंप्रभानन्दः परमात्माहमस्मि" इति। यदि कश्चित् पुरुषः आत्मानं जानीयात्तदा किं फलमिच्छन् कस्य वा भोक्तुः प्रीतये शरीरं तप्यमानमनुसञ्ज्वरेत् तप्येत, भोक्तृभोग्यद्वैताभावात, कृतकृत्य आत्मविदित्यभिप्रायः। आनर्थक्यार्थश्छन्दः। एतद् गुह्यतमं तत्त्वं वृत्तिकारमतनिरासमुपसंहरति॥ तस्मादिति॥ प्राभाकरोक्तमुपन्यस्यति॥ यदपि केचिदिति॥ कर्त्तात्मा लोकसिद्धत्वान्न वेदान्तार्थः। तदन्यत् ब्रह्म नास्त्येव

* संसारमनुसंसरेदित्यपि पाठः।

नन्यशेषत्वात्। योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्मोत्पाद्यादिचतुर्व्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषो नासौ नास्ति नाधिगम्यत इति वा वदितुं शक्यं "स एष नेति नेत्यात्मा" इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्। नन्वात्माहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नं। न, तत्साक्षित्वेन प्रत्युक्तत्वात्। न ह्यहंप्रत्ययविषयकर्त्तृव्यतिरेकेण तत्साक्षी सर्व्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्व्वस्यात्मा; अतः स न केनचित्

---

वेदस्य कार्य्यपरत्वेन मानाभावादित्यर्थः। मानाभावोऽसिद्ध इत्याह॥ नेति॥ अज्ञातस्य फलस्वरूपस्यात्मन उपनिषदेकवेद्यस्याकार्य्यशेषत्वात् कृत्स्नवेदस्य कार्य्यपरत्वमसिद्धं। न च प्रवृत्तिनिवृत्तिलिङ्गाभ्यां श्रोतुस्तद्धेतुकार्य्यबोधमनुमाय वक्तृवाक्यस्य कार्य्यपरत्वं निश्चित्य वाक्यस्थपदानां कार्य्यान्विते शक्तिग्रहान्न सिद्धस्य पदार्थस्य वाक्यार्थत्वमिति वाच्यं "पुत्रस्ते जातः" इति वाक्यश्रोतुः पितुर्हर्षलिङ्गेनेष्टपुत्रजन्मानुमाय पुत्रादिपदानां सिद्धे सङ्गतिग्रहात् कार्य्यान्वितापेक्षयान्वितार्थे शक्तिरित्यङ्गीकारे लाघवात् सिद्धस्यापि वाक्यार्थत्वादित्यलं। किञ्च ब्रह्मणो नास्तित्वादेव कृत्स्नवेदस्य कार्य्यपरत्वं उत वेदान्तेषु तस्याभानात् अथ वा कार्य्यशेषत्वात् किंवा लोकसिद्धत्वादाहोस्वित् मानान्तरविरोधात्? तत्राद्यं पक्षत्रयं निराचष्टे॥ योऽसाविति॥ अनन्यशेषत्वार्थमसंसारि इत्यादि विशेषणं नास्तित्वाभावे हेतुं वेदान्तमानसिद्धत्वमुक्त्वा हेत्वन्तरमात्मत्वमाह। स एष इति॥ इतिरिदमर्थे "इदं न इदं न" इति सर्व्वदृश्यनिषेधेन य आत्मा उपदिष्टः स एष इत्यर्थः। चतुर्थं शङ्कते। नन्वात्माहमिति॥ आत्मनोऽहङ्कारादिसाक्षित्वेनाहंधीविषयत्वस्य निरस्तत्वान्न लोकसिद्धतेत्याह। नेति॥ ये तीर्थकरा अपि न जानन्ति तस्यालौकिकत्वं किमु वाच्यमित्याह। न हीति॥ समस्तताद-रूप्यपर्य्यन्त, तत्सम्मते आत्मानधिगमसिद्धोतकानि विशेषणानि। पञ्चमं निरस्यति। अत इति॥ केनचिदादिना प्रमाणेन नेत्यर्थः। अनन्यत्वाम

प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुं य एव निराकर्त्ता तस्यै-
वात्मत्वात्। आत्मत्वादेव च सर्व्वेषां न हेयो नाप्युपादेयः।
सर्व्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति। पुरुषो हि
विनाशहेत्वभावादविनाशी विक्रियाहेत्वभावाच्च कूटस्थनित्योऽत
एव नित्यशुद्धमुक्तस्वभावः। तस्मात् "पुरुषात् न परं किञ्चित्
सा काष्ठा सा परा गतिः" "तन्त्वौपनिषदं पुरुषं पृच्छामि"
इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रका-
श्यमानत्वे उपपद्यते। अतो भूत*वस्तुपरो वेदभागो नास्तीति
वचनं साहसमात्रं। यदपि शास्त्रतात्पर्य्यविदामनुक्रमणं। दृष्टो
हि तस्यार्थः कर्म्मावबोधनमित्येवमादिः तद्धर्म्मजिज्ञासाविषय-

---

मानान्तरविरोध इति भावः॥ साक्षी कर्म्माङ्गचेतनत्वात् कर्तृवदिति
तत्राह॥ विधीति॥ अज्ञातसाक्षिणोऽनुपयोगाज्ज्ञातस्य व्याघातकत्वान्न
कर्म्मशेषत्वमित्यर्थः। साक्षिणः सर्व्वशेषित्वादहेयानुपादेयत्वाच्च न कर्म्म-
शेषत्वमित्याह॥ आत्मत्वादिति॥ अनित्यत्वेनात्मनो हेयत्वमाशङ्क्याह॥
सर्व्वं हीति॥ परिणामित्वेन हेयतां निराचष्टे॥ विक्रियेति॥ उपा-
देयत्वं निराचष्टे॥ अत एवेति॥ निर्विकारित्वादित्यर्थः। उपादेयत्वं
हि साध्यस्य न त्वात्मनः नित्यसिद्धत्वादित्यर्थः। परप्राप्त्यर्थं चात्मा
हेय इत्यत आह॥ तस्मात् पुरुषान्न परं किञ्चिदिति॥ काष्ठा सर्व्व-
स्यावधिः। एवमात्मनोऽनन्यशेषत्वादबाध्यत्वादपूर्व्वत्वाद्वेदान्तेषु स्फुटभा-
नाच्च वेदान्तैकवेद्यत्वमुक्तं॥ तत्र श्रुतिमाह॥ तन्त्वेति॥ तं सकारण-
सूत्रस्याधिष्ठानं पुरुषं पूर्णं हेशाकल्पत्वात्त्वां पृच्छामीत्यर्थः। अत इति।
उक्तलिङ्गैः श्रुत्या च वेदान्तानामात्मवस्तुपरत्वनिश्चयादित्यर्थः॥ पूर्व्वो-
क्तमनुवदति॥ यदपीति॥ वेदस्य नैरर्थक्ये शङ्किते तस्यार्थवत्तापर-
मिदं भाष्यं॥ दृष्टो हीति॥ तत्र फलवदर्थावबोधनमिति वक्तव्ये धर्म्मवि-
चारप्रक्रमात् कर्म्मावबोधनमित्युक्तं नैतावता वेदान्तानां ब्रह्मपरत्वनि-

---

* भूतेति मु० पुस्तके नास्ति।

लादिविधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यं। अपि च "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः प्रवृत्तिनिवृत्तिविधितच्छेष*व्यतिरेकेण भूतञ्चेदवस्तूपदिशति भव्यार्थत्वेन कूटस्थनित्यत्वं भूतं नोपदिश-

---

रासः। अत एवानुपलब्धेऽर्थे "तत्प्रमाणमिति" सूत्रकारो धर्मस्य फलवदज्ञातत्वेनैव वेदार्थतां दर्शयति।"तच्चावशिष्टं प्रमाणः" इति वृद्धवाक्यैर्विरोध इत्याह॥ तद्धर्मेति॥ निषेधशास्त्रस्यापि निवृत्तिकार्य्यपरत्वमस्ति, तत् सूत्रभाष्यवाक्यजातं कर्म्मकाण्डस्य कार्य्यपरत्वाभिप्रायमित्यर्थः। वस्तुतस्तु लिङर्थे कर्म्मकाण्डस्य तात्पर्य्यं, लिङर्थश्च लोके प्रवर्त्तकज्ञानगोचरत्वेन क्लृप्तं यागादिक्रियागतमिष्टसाधनत्वमेव न क्रियातोऽतिरिक्तं कार्य्यं तस्य कूर्म्मलोमवदप्रसिद्धत्वादिति तस्यापि पराभिमतकार्य्यविलक्षणे सिद्धे प्रामाण्यं किमुत ज्ञानकाण्डस्येति मन्तव्यं। किञ्च। वेदान्ताः सिद्धवस्तुपराः फलवद्भूतशब्दत्वाद्दध्यादिशब्दवदित्याह॥ अपि चेति॥ किमक्रियार्थकशब्दानामानर्थक्यमभिधेयाभावः फलाभावो वा? आद्य आह॥ आम्नायस्येति॥ इति न्यायेन एतदभिधेयराहित्यं नियमेनाङ्गीकुर्व्वतां "सोमेन यजेत" "दध्ना जुहोति" इत्यादिवाक्येषु दधिसोमादिशब्दानामर्थशून्यत्वं स्यादित्यर्थः। ननु केनोक्तमभिधेयराहित्यमित्याशङ्क्याह॥ प्रवृत्तीति॥ कार्य्यातिरेकेण भव्यार्थत्वेन कार्य्यशेषत्वेन दध्यादिशब्दो भूतं वक्ति चेत्, तर्हि सत्यादिशब्दः कूटस्थं न वक्तीत्यत्र को हेतुः किं कूटस्थस्याक्रियात्वादुताक्रियाशेषत्वादिति प्रश्नः? ननु दध्यादेः कार्य्यान्वयित्वेन कार्य्यत्वादुपदेश, न कूटस्थस्याकार्य्यत्वादित्याद्यमाशङ्क्य निरस्यति॥ न हीति॥ दध्यादेः कार्य्यत्वे कार्य्याभेदे शेषत्वहानिः। अतो भूतस्य कार्य्याद्भिन्नस्य शब्दार्थत्वं लब्धमिति भाव। द्वितीयं शङ्कते॥ अक्रियात्वेऽपीति॥ क्रियार्थः कार्य्यशेषपरः कूटस्थस्य त्वकार्य्यशेषत्वान्नोपदेश इति भावः। भूतस्य कार्य्यशेषत्वं शब्दार्थत्वाय फलाय वा? नाद्य इत्याह। नैष दोष इति॥ दध्यादेः कार्य्यशेषत्वे सत्यपि शब्देन वस्तुमात्रमेवोपदिष्टं न कार्य्यान्वयी

---

* तच्छेषव्यतिरेकेणेति मु० पुस्तके नास्ति।

तीति को हेतुः। न हि भूतमुपदिश्यमानं क्रिया भवति। अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः। क्रियार्थत्वेऽपि क्रियानिर्वर्त्तनशक्तिमद्वस्तूपदिष्टमेव। क्रियार्थत्वन्तु प्रयोजनं तस्य। न चैतावता वस्त्वनुपदिष्टं भवति। यदि नामोपदिष्टं किं तव तेन स्यादिति। उच्यते, अनवगतात्मवस्तूपदेशस्य तथैव भवितुमर्हति; तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन। अपि च "ब्राह्मणो न हन्तव्यः" इति चैवमाद्यानिवृत्तिरुपदिश्यते। न च सा क्रिया नापि क्रिया-

---

शब्दार्थः। अन्वितार्थमात्रे शब्दानां शक्तिग्रहणादित्यर्थः। द्वितीयमङ्गीकरोति॥ क्रियार्थत्वन्त्विति॥ तस्य भूतविशेषस्य दध्यादेः क्रियाशेषत्वं फलमुद्दिश्याङ्गीक्रियत इत्यर्थः, न तु अज्ञाय इति तु शब्दार्थः। ननु भूतस्य कार्य्यशेषत्वाङ्गीकारे स्वातन्त्र्येण कथं शब्दार्थतेति तत्राह॥ न चेति॥ फलार्थं शेषत्वाङ्गीकारमात्रेण शब्दार्थत्वभङ्गो नास्तीत्यर्थः। आनर्थक्यं फलाभाव इति पक्षं शङ्कते॥ यदीति॥ यद्यपि दध्यादि स्वतो निष्फलमपि क्रियाद्वारा सफलत्वादुपदिष्टं तथापि कूटस्थब्रह्मवादिनः क्रियाद्वाराभावात् तेन दृष्टान्तेन किं फलं स्यादित्यर्थः। भूतस्य साफल्ये क्रियैव द्वारमिति न नियमः, रज्जुज्ञानमात्रेण साफल्यदर्शनादित्याह॥ उच्यत इति॥ तथैव दध्यादिवदेवेत्यर्थः। दध्यादेः क्रियाद्वारा साफल्य, ब्रह्मणस्तु स्वत इति विशेषे सत्यपि वेदान्तानां सफलभूतार्थकत्वमात्रेण दध्याद्युपदेशसाम्यमित्यनवद्यं। इदानीं वेदान्तानां निषेधवाक्यवत् सिद्धार्थपरत्वमित्याह॥ अपि चेति॥ नञः प्रकृत्यर्थेन सम्बन्धात् हननाभावो नञर्थः इष्टसाधनत्वं तव्यादिप्रत्ययार्थः, इष्टञ्चात्र नरकदुःखाभावः, तत्परिपालको हननाभाव इति निषेधवाक्यार्थः, हननाभावो दुःखाभावहेतुरित्युक्तावर्थाद्धननस्य दुःखसाधनत्वधिया पुरुषो निवर्त्तते, नात्र नियोगः कश्चिदस्ति, तस्य क्रिया तत्सा-

साधनं। अक्रियार्थानामुपदेशोऽनर्थकश्चेत् "ब्राह्मणो न हन्तव्यः" इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तं, तच्चानिष्टं। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यत्

---

धनदध्यादिविषयत्वात्। न च हननाभावरूपा नञ्वाच्या निवृत्तिः क्रिया। अभावत्वान्नापि क्रियासाधनं। अभावस्य भावार्थहेतुत्वाद्भावार्थासत्त्वाच्चेत्यर्थः। अतो निषेधशास्त्रस्य सिद्धार्थे प्रामाण्यमिति भावः। विपक्षे दण्डमाह॥ अक्रियेति॥ ननु स्वभावतो रागतः प्राप्तेन हन्त्यर्थेनानुरागेण नञ्सम्बन्धेन हेतुना हननविरोधिनी सङ्कल्पक्रिया बोध्यते, सा च नञर्थरूपा तत्राप्राप्तत्वाद्विधीयते "अहननं कुर्यात्" इति। तथा च कार्य्यार्थमिदं वाक्यमित्याशङ्क्य निषेधति॥ न चेति॥ औदासीन्यं पुरुषस्य स्वरूपं, तच्च हननक्रियानिवृत्त्युपलक्षितं निवृत्त्यौदासीन्यं हननभाव इति यावत् तद्व्यतिरेकेण नञ क्रियार्थत्व कल्पयितुं न च शक्यमिति योजना, मुख्यार्थस्याभावस्य नञर्थत्वसम्भवे तद्विरोधिक्रियालक्षणाया अन्याय्यत्वात् निषेधवाक्यस्यापि कार्य्यार्थत्वे विधिनिषेधभेदविप्लवापत्तेश्चेति भावः। ननु तदभाववत्तदन्यतद्विरुद्धयोरपि नञ शक्तिः किं न स्यात्, "अब्राह्मणः अधर्म्म." इति प्रयोगदर्शनादिति चेत्। न। अनेकार्थत्वस्यान्याय्यत्वादित्याह॥ नञश्चेति॥ गवादिशब्दानान्तु अगत्या नानार्थत्वं, स्वर्गेषुवाग्वज्रादीनां शक्यपशुसम्बन्धाभावेन लक्षणानवतारात्। अन्यविरुद्धयोस्तु लक्षत्वं युक्तं शक्यसम्बन्धात्। ब्राह्मणादन्यस्मिन् क्षत्रियादौ धर्म्मविरुद्धे वा पापे ब्राह्मणाद्यभावस्य नञ्शक्यस्य सम्बन्धात्, प्रकृते च आख्यातयोगात् नञ् प्रसज्यप्रतिषेध एव न पर्य्युदासलक्षक इति मन्तव्यं। यदा नञ प्रकृत्या न सम्बन्धः। प्रकृतेः प्रत्ययार्थोपसर्ज्जनत्वात् प्रधानसम्बन्धाच्चाप्रधानाना किन्तु प्रकृत्यर्थनिष्ठेन प्रत्ययार्थेनेष्टसाधनत्वेन सम्बन्धो नञ। इष्टञ्च सापेक्षया बलवदनिष्टाननुबन्धि यत्तदेव न तात्कालिकसुखमात्रं विषयसंयुक्तत्वान्न भोगस्यापि इष्टत्वापत्तेः, तथा च "न हन्तव्यः" हननं बलवदनिष्टासाधनत्वे सति इष्टसाधनं न भवतीत्यर्थं। अत्र "हन्तव्यः" इति

स्वसम्बन्धिनोऽभावं बोधयति, अभावबुद्धिश्चौदासीन्यकारणं, सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति, तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव "ब्राह्मणो न हन्तव्यः" इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्य, तस्मात् पुरुषार्थानुपयो-

---

हनने विशिष्टेष्टसाधनत्वं भ्रान्तिप्राप्तमनूद्य नेत्यभावबोधने बलवद-निष्टसाधनं हननमिति बुद्धिर्भवति, हनने तात्कालिकेष्टसाधनत्वरूप-विशेष्यसत्त्वेन विशिष्टाभावबुद्धेर्विशेषणाभावपर्य्यवसानात्। विशेषणं बलवदनिष्टासाधनत्वमिति तदभावो बलवदनिष्टसाधनत्वं नञर्थ इति पर्य्यवसन्नं तद्बुद्धिरौदासीन्यपरिपालिकेत्याह॥ अभावेति॥ चोऽप्यर्थः पक्षान्तरद्योती प्रकृत्यर्थाभावबुद्धिवत् प्रत्ययार्थाभावबुद्धिरपीत्यर्थः। बुद्धेः क्षणिकत्वात्तदभावे सत्यौदासीन्यात् प्रच्युतिरूपा हननादौ प्रवृत्तिः स्यात् इति तत्राह॥ सा चेति॥ यथाग्निरिन्धनं दग्ध्वा शाम्यति एवं सा नञर्थाभावबुद्धिः हननादाविष्टसाधनत्वभ्रान्तिमूलं रागेन्धनं दग्ध्वैव शाम्यतीत्यक्षरार्थः, रागनाशे कृते प्रच्युतिरिति,भावः। यदा रागतः प्राप्ता सा क्रिया रागनाशे स्वयमेव शाम्यतीत्यर्थः। परपक्षे तु हननविरोधिक्रिया कार्य्येत्युक्तेऽपि हननस्येष्टसाधनत्वभ्रान्त्यनिरासात् प्रच्युतिर्दुर्व्वारा। तस्मात्तदभाव एव नञर्थ इत्युपसंहरति॥ तस्मादिति॥ भावार्थाभावेन तद्विषयकर्त्तव्यभावात् कार्य्याभावस्तच्छब्दार्थः। यद्वे-त्युक्तपक्षे निवृत्त्युपलक्षितमौदासीन्यं यस्माद्विशिष्टाभावापन्नमेवेति व्याख्येयं स्वतः सिद्धस्यौदासीन्यस्य नञर्थसाध्यत्वोपादानार्थं निवृत्त्युप-लक्षितत्वमिति ध्येयं। तस्य वटोर्व्रतमित्यनुष्ठेयक्रियावाचिव्रतशब्देन कार्य्यमुपक्रम्य "नेक्षेतोद्यन्तमादित्यं" इति प्रजापतिव्रतमुक्तं; अत उप-क्रमबलात्तत्र नञ ईक्षणविरोधिसङ्कल्पक्रियालक्षणयाङ्गीकृता एवमसौ-रस्वरा अधर्म्म इत्यादौ नाम धात्वर्थयुक्तस्य नञ· प्रतिषेधवाचित्वायो-गात् अन्यविरुद्धलक्षकत्वं। एतेभ्य प्रजापतिव्रतादिभ्योऽन्यत्राभावमेव नञर्थं मन्यामहे इत्यर्थः। दुःखाभावफलके नञर्थे सिद्धे निषेधशा-स्त्रमानत्ववद्वेदान्तानां ब्रह्मणि मानत्वमिति भावः; तर्ह्यक्रियार्थाना-मानर्थक्यमिति सूत्रं किंविषयमिति तत्राह॥ तस्मादिति॥ वेदा-

गुपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यं। यदप्युक्तं कर्त्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् सप्तद्वीपा वसुमतीत्यादिवदिति तत् परिहृतं, रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्। ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनात् न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तं। अत्रोच्यते। नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं *ब्रह्मात्मभावविरोधात्। न हि, शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति, तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुं। न हि, धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति, तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति। न च कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वनिमित्तं सुखं भवति। तदुक्तं श्रुत्या "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति। शरीरे पतिते अशरीरत्वं स्यात् न जीवत

---

न्तानां स्वार्थे फलवत्त्वाद्यर्थकथाविषयं तदित्यर्थः। यदपीत्यादिस्पष्टार्थं अवयवज्ञानमात्रात् संसारानिवृत्तावपि साक्षात्काराज्जीवत एव मुक्तिदुरपह्नवे सति दृष्टान्तमाह। अत्रोच्यत इत्यादिना। ब्रह्माहमिति साक्षात्कारे विरोधादित्यर्थः। तत्त्वविदो जीवन्मुक्तौ मानमाह।

---

* वेदप्रमाणजनितेति ८ सं० पु० पाठः।

इति चेत्, न, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्। न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुं। नित्यमशरीरत्वं अकर्मनिमित्तत्वादित्यवोचाम। तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेत्, न, शरीरसम्बन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः। शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैवैषा अनादित्वकल्पना क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः। सन्निधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न। धन-

---

तदुक्तं श्रुत्येति॥ जीवतोऽशरीरत्वं विरुद्धमिति शङ्कते॥ शरीर इति॥ आत्मनो देहसम्बन्धस्य भ्रान्तिप्रयुक्तत्वादतत्त्वधिया तन्नाशरूपमशरीरत्वं जीवतो युक्तमित्याह॥ नेत्यादिना॥ असङ्गात्मरूपत्वमशरीरत्वं तत्त्वधिया जीवतो व्यज्यत इत्याह॥ नित्यमिति॥ देहात्मनोः सम्बन्धः सत्य इति शङ्कते॥ तत्कृतेति॥ तन्नाशार्थं कार्य्यापेक्षेति भावः। आत्मनः शरीरसम्बन्धे जाते धर्माधर्मोत्पत्तिः, तस्यां सत्यां सम्बन्धजन्मेत्यन्योन्याश्रयादेकस्यासिद्धा द्वितीयस्यासिद्धिः स्यादिति परिहरति॥ नेत्यादिना॥ नन्वेतद्देहजन्यधर्माधर्मकर्म्मण एतद्देहसम्बन्धहेतुत्वे स्यादन्योन्याश्रयः, पूर्व्वदेहकर्म्मण एतद्देहसम्बन्धोत्पत्तिः, पूर्व्वदेहस्य तत्पूर्व्वदेहकर्म्मण एतद्देहसम्बन्धोत्पत्तिः,पूर्व्वदेहस्य पूर्व्वदेहकृतकर्म्मण इति वीजाङ्कुरवदनादित्वान्नायं दोष इत्यत आह॥ अन्धेति॥ अप्रामाणिकीत्यर्थः। न हि वीजादङ्कुरः ततो वीजान्तरञ्च यथा प्रत्यक्षेण दृश्यते तद्वदात्मनो देहसम्बन्धः पूर्व्वकर्म्मकृतः प्रत्यक्षः, नाप्यस्ति कश्चिदागमः प्रत्युतासङ्गो हीत्यादिः श्रुतिः सर्व्वकर्तृत्वं वारयतीति भावः। तत्र युक्तिमाह॥ क्रियेति॥ कूटस्थस्य कृत्ययोगान्न कर्तृत्वमित्यर्थः। ननु निष्क्रियस्यापि कारकसन्निधिना कर्तृत्वमिति शङ्कां दृष्टान्तवैषम्येण निरस्यति॥ नेति॥ राजादीनां स्वक्रीतभृत्यकार्य्ये कर्तृत्वं युक्तं नात्मन इत्यर्थः। देहकर्म्मणोरविद्याभूमौ वीजाङ्कुरवदावर्त्तमानयो-

दानाद्युपार्जितभृत्यसम्बन्धित्वात्तेषां कर्तृत्वोपपत्तेर्न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिसम्बन्धनिमित्तं किञ्चिच्छक्यं कल्पयितुं। मिथ्याभिमानस्तु प्रत्यक्षः सम्बन्धहेतुः। एतेन यजमानत्वमात्मनो व्याख्यातं। अत्राहुः, देहादिव्यतिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति। न। प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदो यथा केशरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धस्ततश्चान्यः पुरुषः प्रायिकैः क्रौर्य्यशौर्य्यादिभिः सिंहगुणैः सम्पन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः नाप्रसिद्धवस्तुभेदस्य तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतः, न गौणौ। यथा मन्दान्धकारे "स्थाणुरयं"इत्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ। यथा वा, शुक्तिकायामकस्मात् "रजतमिदं" इति निश्चितग-

---

त्मना सम्बन्धो भ्रान्तिकृत एवेत्याह॥ मिथ्येति॥ ननु "यजेत" इति विध्यनुपपत्त्यात्मनः कर्तृत्वमेष्टव्यमिति तत्राह॥एतेनेति॥ भ्रान्तिकृतेन देहादिसम्बन्धेन यागादिकर्तृत्वमात्मनोऽबाधाद्व्याख्यातमित्यर्थः॥ अत्राहुः॥ प्राभाकरा इत्यर्थः। भ्रान्त्यभावाद्देहसम्बन्धादिकं सत्यमिति भावः भेदज्ञानाभावान्न गौण इत्याह॥ नेति॥ प्रसिद्धो ज्ञातो वस्तुनोर्भेदो येन तस्य गौणमुख्यज्ञानाश्रयत्वप्रसिद्धेरित्यर्थः। यस्य तस्य पुंसो गौणौ भवतः इत्यन्वयः। शौर्य्यादिगुणविषयावित्यर्थं॥ तस्य त्विति॥ भेदज्ञानशून्यस्य पुंस इत्यर्थः शब्दप्रत्ययाविति॥ शब्दः शाब्दबोधस्तेत्यर्थं संशयमूलौ तावुदाहरति॥ यथा मन्देति॥ यदा संशयमूलयोर्न गौणत्वं तदा भ्रान्तिमूलयोः किं वाच्यमित्याह॥ यथा वेति॥ अकस्मादिति॥ अतर्कितादृष्टादिना संस्कारोद्बोधे सतीत्यर्थः। निरुपचारेण मुख्यज्ञानं विनेत्यर्थः। देहादिव्यतिरिक्तात्मास्तित्ववादिनामिति, देहा-

ब्दप्रत्ययौ तद्वद्देहादिष्वनात्मस्वहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्म*विवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुं। आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः। तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः, तस्मान्मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वं। तथा च ब्रह्मविद्विषया श्रुतिस्तद्यथा "अहिनिर्ल्वयनी वल्मीके मृतप्रत्यस्ता शयीतैवमेवेदं शरीरं शेते अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव" इति। "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव" इति च। स्मृतिरपि च "स्थितप्रज्ञस्य का भाषा" इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसम्बन्धं दर्शयति। तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं। यस्य तु यथापूर्वं संसा-

---

त्मवादिनान्तु नेत्यभिमान इति भावः। जीवन्मुक्तौ प्रमाणमाह ॥ तथा चेति ॥ तत्र जीवन्मुक्तस्य देहे यथा दृष्टान्तः। अहिनिर्ल्वयनी सर्पत्वक् वल्मीकादौ प्रत्यस्ता निक्षिप्ता मृतसर्पेण त्यक्ताभिमाना वर्त्तते, एवमेवेदं विदुषा त्यक्ताभिमानं शरीरं तिष्ठति। अथ तथा त्वचा निर्मुक्तसर्पवदेवायं देहस्थोऽशरीरः, विदुषो देहसर्पस्य त्वचीवाभिमानाभावादशरीरत्वादमृतः प्राणितीति प्राणो जीवन्नपि ब्रह्मैव किं तद्ब्रह्म तेजः स्वयं ज्योतिरानन्द एवेत्यर्थः, वस्तुतोऽचक्षुरपि बाधितचक्षुराद्यनुवृत्त्या सचक्षुरिवेत्यादि योज्यं ॥ इत्यनवद्यमिति ॥ ब्रह्मात्मज्ञानान्मुक्तिलाभात् सिद्धं वेदान्तानां प्रामाण्यं हितशासनाच्छास्त्रत्वञ्च निर्दो-

---

* विवेकिनः इति मु० पु० पाठः।

रित्वं नाभाववगतब्रह्मात्मभाव इत्यनवद्यं। यत्तु पुनरुक्तं श्रवणात् पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वमिति, न, अवगत्यर्थत्वात् मनननिदिध्यासनयोः। यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत् तदा विधिशेषत्वं। न तु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्। तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्त-

---

परतया स्थितमित्यर्थः। ब्रह्मज्ञानमुद्दिश्य श्रवणवन्मनननिदिध्यासनयोरप्यवान्तरवाक्यभेदेन विध्यङ्गीकारान्न ब्रह्मणो विधिशेषत्वमुद्दिश्य ज्ञानलभ्यतया प्राधान्यादित्याह॥ नेति॥ श्रवणं ज्ञानकरणवेदान्तगोचरत्वात् प्रधानं मनननिदिध्यासनयोः प्रमेयगोचरत्वात्तदङ्गत्वं नियमादृष्टस्य ज्ञान उपयोगः सर्व्वापेक्षान्यायादिति मन्तव्यं। तर्हि ज्ञाने विधिः किमिति त्यक्तस्तत्राह॥ यदि हीति॥ यदि ज्ञाने विधिमङ्गीकृत्य वेदान्तैरवगतं ब्रह्मविधेयसत्यादिवाक्यैर्लब्धज्ञानेनाज्ञाननिवृत्तिरूपफललाभे सतीत्यर्थः ज्ञाने कर्म्म कारकत्वेन विनियुज्येत तदा विधिशेषत्वं स्यात्। न त्ववगतस्य विनियुक्तत्वमस्ति, प्राप्तावगत्या फललाभे विध्ययोगादित्यर्थः॥ तस्माद्विध्यसम्भवात्। अतः शेषत्वासम्भवात्॥ सूत्रं योजयति॥ स्वतन्त्रमिति॥ एवञ्च सतीति। चोऽवधारणे उक्तरीत्या ब्रह्मणः स्वातन्त्र्ये सत्येव भगवतो व्यासस्य पृथक्शास्त्रकृतिर्युक्ता, धर्म्मविलक्षणप्रमेयलाभात् वेदान्तानां कार्य्यपरत्वे तु प्रमेयाभेदान्न युक्तेत्यर्थः। ननु मानसधर्म्मविचारार्थं पृथगारम्भ इत्याशङ्क्याह॥ आरभ्यमाणस्येति॥ अथ बाह्यसाधनधर्म्मविचारानन्तरं ज्ञातो बाह्यधर्म्मस्य शुद्धिद्वारा मानसोपासना धर्म्महेतुत्वात् परिशिष्टो मानसधर्म्मो जिज्ञास्य इति सूत्रं स्यादित्यत्र दृष्टान्तमाह॥ यथेति॥ तृतीयाध्याये श्रुत्यादिभिः शेषशेषित्वमित्यंशागतं शेषिणामंशस्य प्रयोगसम्भवात् कः क्रतुशेषः को वा पुरुषशेष इति जिज्ञास्यत इत्यर्थः। एवमारभ्येत नैत्वारब्धं तस्मादवान्तरधर्म्मार्थमारम्भ इत्ययुक्तमिति

वाक्यसमन्वयादिति सिद्धं, एवञ्च सत्यथातो ब्रह्मजिज्ञासेति शास्त्रारम्भ उपपद्यते। प्रतिपत्तिविधिपरत्वे हि अथातो धर्मजिज्ञासेत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत, आरभ्यमानं चैवं आरभ्येत अथातः परिशिष्टधर्मजिज्ञासेत्यथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेतिवत् ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति, तदर्थो युक्तः शास्त्रारम्भोऽथातो ब्रह्मजिज्ञासेति। तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्व्वे विधयः सर्व्वाणि चेतराणि प्रमाणानि। न ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि प्रमाणानि भवितुमर्हन्तीति। अपि चाहुः॥

"गौणमिथ्यात्मनोऽसत्त्वे पुत्त्रदेहादिबाधनात्।
सत् ब्रह्मात्माहमित्येवंबोधे कार्य्यं कथं भवेत्॥
अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः।
अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्ज्जितः॥
देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति॥

चतुःसूत्री समाप्ता॥*

---

भावः। स्वमते सूत्रानुगुण्यमस्तीत्याह॥ ब्रह्मेति॥ जैमिनिना ब्रह्म न विचारितमिति तज्जिज्ञास्यत्वसूत्रणं युक्तमित्यर्थः। वेदार्थश्चेदद्वैतं तर्हि द्वैतसापेक्षविध्यादीनां का गतिरित्याशङ्क्य, ज्ञानात् प्रागेव तेषां प्रामाण्यं न पश्चादित्याह॥ तस्मादिति॥ ज्ञानस्य प्रमेयप्रमातृबाधकत्वादित्यर्थः। ब्रह्म न कार्य्यशेषः तद्बोधात् प्रागेव सर्व्वव्यवहार इत्यत्र ब्रह्मविदां गाथामुदाहरति॥ अपि चेति॥ सदबाधितं ब्रह्म पूर्णमा-

---

* ८ चिह्नपुस्तके चतुःसूत्रीसमाप्तेति पाठो नास्ति।

एवं तावद्वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि* तात्पर्येण समन्वितानामन्तरेणापि कार्य्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तं। ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणमित्युक्तं। साङ्ख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणान्तर-

---

त्मा विषयानादत्त इति सर्वसाक्ष्यहमित्येवम्बोधे जाते सति पुत्रदेहादेः सत्ताबाधनात् मायामात्रत्वनिश्चयात् पुत्रदारादिभिरहमिति स्वीयदुःखसुखभाक्त्वगुणयोगाद्गौणात्माभिमानस्य "नरोऽहं कर्त्ता मूढ" इति मिथ्यात्माभिमानस्य च सर्वव्यवहारहेतोरसत्वे कार्य्यं विधिनिषेधादिव्यवहारः कथं भवेत्, हेत्वभावात् न कथञ्चिद्भवेदित्यर्थः। नन्वहं ब्रह्मेति बोधो बाधितः, अहमर्थस्य प्रमातुः ब्रह्मत्वायोगादित्याशङ्क्य, प्रमातृत्वस्याज्ञानविलसितान्तःकरणतादात्म्यकृतत्वान्न बाध इत्याह ॥ अन्वेष्टव्यः इति ॥ "य आत्मापहतपाप्मा विरजा विमृत्युर्विशोकः सोऽन्वेष्टव्य" इति श्रुतेः ज्ञातव्यपरमात्मविज्ञानात् प्रागेवाज्ञानाच्चिदात्मनः प्रमातृत्वं, प्रमातैव ज्ञातः सन् पाप्मरागद्वेषमरणविवर्ज्जितःपरमात्मा स्यादित्यर्थः। प्रमातृत्वस्य कल्पितत्वे तदाश्रितानां प्रमाणानां प्रामाण्यं कथमित्यत आह ॥ देहेति ॥ यथा देहात्मप्रत्ययः कल्पितो भ्रमेऽपि व्यवहाराङ्गतया मानत्वेनेष्यते वैदिकैः,तद्वल्लौकिकमध्यक्षादिकमात्मबोधावधिव्यवहारकाले बाधाभावात् व्यावहारिकं प्रामाण्यमिष्यतां, वेदान्तानान्तु कालत्रयाबाध्यबोधितत्वात् तत्त्वावेदकं प्रामाण्यमिति तु शब्दार्थः ॥ आत्मनिश्चयात् ॥ आत्मनिश्चयादित्याङमर्य्यादायां। प्रमातृत्वस्य कल्पितत्वेऽपि विषयाबाधात् प्रामाण्यमिति भावः।

"रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः।
कार्य्यतात्पर्य्यबाधेन साधितः शुद्धबुद्धये" ॥

वृत्तमनूद्याक्षेपलक्षणमवान्तरसङ्गतिमाह ॥ साङ्ख्यादयस्त्विति ॥ भवतु सिद्धे वेदान्तानां समन्वयः, तथापि मानान्तरायोग्ये ब्रह्मणि शक्तिग्रहायोगात् कूटस्थत्वेन अविकारित्वेन कारणत्वायोगाच्च न समन्वयः, किन्तु सर्गाद्य कार्य्यं जडप्रकृतिकं कार्य्यत्वात् घटवत् इत्यनुमानगम्ये

---

* ब्रह्मात्मनीति पाठो मुद्रितपुस्तके नास्ति ।

गम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानास्तत्परतयैव वेदान्तवाक्यानि योजयन्ति। सर्व्वेष्वेव तु वेदान्तवाक्येषु सृष्टिविषयेषु अनुमानेनैव कार्य्येण कारणं लिलक्षयिषितं। प्रधानपुरुषसंयोगा नित्यानुमेया इति साङ्ख्या मन्यन्ते। काणादास्त्वेतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमते, अणूंश्च समवायिकारणं। एवं अन्येऽपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्व्वपक्षवादिन इहोत्तिष्ठन्ते। तत्र पदवाक्यप्रमाणज्ञेनाचार्य्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्व्वपक्षीकृत्य निराक्रियन्ते। तत्र साङ्ख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति

---

त्रिगुणे प्रधाने समन्वय इत्याक्षिपन्तीत्यर्थः। सिद्धं मानान्तरगम्यमेवेत्याग्रहः शक्तिग्रहार्थं, अत एव प्रधानादावनुमानोपस्थिते शक्तिग्रहसम्भवात् तत्परतया वाक्यानि योजयन्तीत्युक्तं। किञ्च "तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" इत्याद्याः श्रुतयः। शुङ्गेन लिङ्गेन कार्य्येण कारणस्य सतो ऽन्वेषणं दर्शयन्त्यो मानान्तरसिद्धमेव जगत्कारणं वदन्तीत्याह॥ सर्व्वेष्विति॥ नन्वतीन्द्रियत्वेन प्रधानादेर्व्याप्तिग्रहायोगात् कथमनुमानं तत्राह॥ प्रधानेति॥ यत्कार्य्यं तज्जडप्रकृतिकं यथा घटः, यज्जडं तच्चेतनसंयुक्तं यथा रथादिरिति सामान्यतोदृष्टानुमानगम्याः प्रधानपुरुषसंयोगा इत्यर्थः। अद्वितीयब्रह्मणः कारणत्वविरोधिमतान्तरमाह॥ काणादास्त्विति॥ सृष्टिवाक्येभ्य एव परार्थानुमानरूपेभ्यो यत् कार्य्यं तत् बुद्धिमत्कर्त्तृकमिति। ईश्वरं कर्त्तारं परमाणूंश्च यत् कार्य्यद्रव्यं तत् स्वन्यूनपरिमाणद्रव्यारब्धमित्यनुमिमत इत्यर्थः। अन्येऽपि बौद्धादयः "असद्वा इदमग्र आसीत्" इत्यादिवाक्याभासः। यदस्तु तच्छून्यावसानं यथा दीप इति युक्त्याभासः। एवं वादिविप्रतिपत्तिमुक्त्वा तन्निरासायोत्तरसूत्रसन्दर्भमवतारयति॥ तत्रेति॥ वादिविवादे सतीत्यर्थः॥ व्याकरणमीमांसान्यायनिधित्वात् पदवाक्यप्रमाणज्ञत्वं यज्जगत्कारणं तच्चे-

मन्यमाना आहुः “यानि वेदान्तवाक्यानि सर्व्वज्ञस्य सर्व्वशक्तेर्ब्रह्मणो जगत्कारणत्वं प्रदर्शयन्ति, इत्यवोचस्तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते। सर्व्वशक्तित्वं तावत् प्रधानस्यापि स्वविकारविषयमुपपद्यते, एवं सर्व्वज्ञत्वमुपपद्यते। कथं। यत्तं ज्ञानं मन्यसे स सत्त्वधर्म्मः “सत्त्वात् सञ्जायते ज्ञानम्” इति स्मृतेः। तेन च सत्त्वधर्म्मेण ज्ञानेन कार्य्यकारणवन्तः पुरुषाः सर्व्वज्ञा योगिनः प्रसिद्धाः, सत्त्वस्य हि निरतिशयोत्कर्षे सर्व्वज्ञत्वं प्रसिद्धं। न च केवलस्याकार्य्यकरणस्य पुरुषस्योपलब्धिमात्रस्य सर्व्वज्ञत्वं किञ्चिज्ज्ञत्वं वा कल्पयितुं शक्यं, त्रिगुणत्वात्तु प्रधानस्य सर्व्वज्ञानकारणभूतं सत्त्वं प्रधानावस्थायामपि विद्यते, इति प्रधानस्याचेतनस्यैव सतः सर्व्वज्ञत्वमुपचर्य्यते वेदान्तवाक्येषु। अवश्यञ्च त्वयापि सर्व्वज्ञं ब्रह्माभ्युपगच्छता सर्व्वज्ञानशक्तिमत्त्वेनैव सर्व्वज्ञत्वमभ्युपगन्तव्यं। न हि सर्व्वविषयं ज्ञानं कुर्व्वदेव ब्रह्म वर्त्तते। तथा हि ज्ञानस्य

---

तनमचेतनं वेति ईक्षणस्य मुख्यत्वगौणत्वाभ्यां संशये पूर्व्वपक्षमाह॥ तत्र साङ्ख्या इति॥ अपिशब्दादेवकारार्थौ स देवेत्यादिस्यब्रह्मलिङ्गवाक्यानां प्रधानपरत्वनिरासेन ब्रह्मपरत्वोक्तेः श्रुत्यादिसङ्गतयः। पूर्व्वपक्षे जीवस्य प्रधानैक्योपास्तिः सिद्धान्ते ब्रह्मैक्यज्ञानमिति विवेकः। अचेतनसत्त्वस्यैव सर्व्वज्ञत्वं, न चेतनस्येत्याह॥ तेन च सत्त्वधर्म्मेणेति॥ न केवलस्येति अन्यज्ञानस्य सत्त्वधर्म्मत्वात् नित्योपलब्धेरकार्य्यत्वाच्चिन्मात्रस्य न सर्व्वज्ञानकर्तृत्वमित्यर्थः। ननु गुणानां साम्यावस्थायां सत्त्वस्योत्कर्षाभावात् कथं सर्व्वज्ञतेत्याह॥ त्रिगुणत्वादिति॥ त्रयो गुणा एव प्रधानं तस्य साम्यावस्था तदभेदात् प्रधानमित्युच्यते॥ तदवस्थायामपि॥ प्रलये सर्व्वज्ञानशक्तिमत्त्वरूपं सर्व्वज्ञत्वमक्षतमित्यर्थः। ननु मया किमिति शक्तिमत्त्वरूपं गौणं सर्व्वज्ञत्वमङ्गीकार्य्यमिति तत्राह॥ न हीति॥

नित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयेत। अथानित्यं तदिति ज्ञानक्रियाया उपरमे उपरमेतापि ब्रह्म। तदा सर्व्वज्ञानशक्तिमत्त्वेनैव सर्व्वज्ञत्वमापतति। अपि च प्रागुत्पत्तेः सर्व्वकारकशून्यं ब्रह्मेष्यते त्वया। न च ज्ञानसाधनानां शरीरेन्द्रियादीनामभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना। अपि च प्रधानस्यानेकात्मकस्य परिणामसम्भवात् कारणत्वोपपत्तिः मृदादिवत् नासंहतस्यैकात्मकस्य ब्रह्मणः" इत्येवं प्राप्ते इदं सूत्रमारभते॥

## ईक्षतेर्नाशब्दं॥ ५॥

न साङ्ख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुं। अशब्दं हि तत्। कथमशब्दं। ईक्षतेः ईक्षितृत्वश्रवणात् कारणस्य। कथं। एवं हि श्रूयते "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं" इत्युपक्रम्य "तदैक्षत बहु स्यां प्रजायेय" इति "तत्तेजोऽसृजत" इति तत्रेदं शब्दवाच्यं नामरूपव्याकृतं जगत् प्रागुत्पत्तेः सदात्मनावधार्य्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्येक्षणपूर्व्वकतेजःप्रभृतेः स्रष्टृत्वं दर्शयति। तथाच अन्यत्र "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चनमिषत्

---

अनित्यज्ञानस्य प्रलये नाशात् शक्तिमत्त्वं वाच्यं कारकाभावाचेत्याह॥ अपि चेति॥ ब्रह्मणः कारणत्वं स्मृतिपादे समर्थ्यते प्रधानादेः कारणत्वं तर्कपादे युक्तिभिर्निरस्यति। अधुना तु श्रुत्या निरस्यति॥ ईक्षतेर्नाशब्दमिति॥ ईक्षणश्रवणात् वेदशब्दावाच्यमशब्दं प्रधानं। अशब्दत्वान्न कारणमिति सूत्रयोजना। तत् सच्छब्दवाच्यं कारणमैक्षत ईक्षणमेवाह॥ बह्विति॥ बहुप्रपञ्चरूपेण स्थित्यर्थमहमेवोपादानतया

स ऐक्षत लोकान्नुसृजा इति" "स इमाँल्लोकानसृजत" इति ईक्षापूर्व्विकामेव सृष्टिमाचष्टे। क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह "स ईक्षाञ्चक्रे स प्राणमसृजत" इति। ईक्षतेरिति च धात्वर्थनिर्देशोऽभिप्रेतः यजतेरितिवत् न धातुनिर्देशः। तेन "यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इत्येवमादीन्यपि सर्व्वज्ञेश्वरकारणपराणि वाक्यानि उदाहर्त्तव्यानि। यत्तु उक्तं सत्त्वधर्म्मेण ज्ञानेन सर्व्वज्ञं प्रधानं भविष्यतीति, तन्नोपपद्यते। न हि प्रधानावस्थायां गुणसाम्यात् सत्त्वधर्म्मो ज्ञानं सम्भवति। ननूक्तं सर्व्वज्ञानशक्तिमत्त्वेन सर्व्वज्ञं भविष्यतीति। तदपि नोपपद्यते। यदि गुणसाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्व्वज्ञं प्रधानमुच्येत कामं

---

कार्य्यभेदाञ्जनिष्यामीत्याह॥ प्रेति॥ एवं तत् सदीक्षित्वा आकाशं वायुञ्च सृष्ट्वा तेजः सृष्टवदित्याह॥ तदिति॥ मिषच्चलत् सत्त्वाक्रान्तमिति यावत्। "सजीवाभिन्नः परमात्मा" "प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्य्यं तपो मन्त्राः कर्म्म लोकाः लोकेषु नाम च" इत्युक्ताः षोडशकलाः, ननु इक्श्तिपौ धातुनिर्देशे इति कात्यायनस्मरणादीक्षतेरिति पदेन तिबन्तेन धातुरुच्यते। तेन धात्वर्थ ईक्षणं कथं व्याख्यायत इत्याशङ्क्य लक्षणयेत्याह॥ ईक्षतेरिति चेति॥ इतिकर्त्तव्यताविधेर्यजतेः पूर्व्वत्वमिति जैमिनिसूत्रे यथा यजतिपदेन लक्षणया धात्वर्थो याग उच्यते तद्वदिहापीत्यर्थः सौर्य्यादिविकृतियागस्याङ्गानामविधानात् पूर्व्ववत्त्वं दर्शादिप्रकृतिस्थाङ्गवत्त्वमिति सूत्रार्थः। धात्वर्थनिर्देशेन लाभमाह॥ तेनेति॥ सामान्यतः सर्व्वज्ञो विशेषतः सर्व्वविदिति भेदः ज्ञानमीक्षणमेव तपः। तपस्विनः फलमाह॥ तस्मादिति॥ एतत्कार्य्यं सूत्राख्यं ब्रह्म। केवलसत्त्ववृत्तेर्ज्ञानत्वमङ्गीकृत्य प्रधानस्य सर्व्वज्ञत्वं निरस्तं। सम्प्रति न केवलजडवृत्ति-

रजस्तमोव्यपाश्रयामपि ज्ञानप्रतिबन्धकशक्तिमाश्रित्य किञ्चि-ज्ज्ञत्वमुच्यते। अपि च नासाक्षिका सत्त्ववृत्तिर्जानाति नाभि-धीयते। न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति। तस्मादनुपपन्नं प्रधानस्य सर्व्वज्ञत्वं। योगिनान्तु चेतनत्वात् सर्व्वोत्कर्षनिमित्तं स-र्व्वज्ञत्वमुपपन्नमित्यनुदाहरणं। अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्प्येत यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वं। तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्व्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तं। यत् पुनरुक्तं ब्रह्मणोऽपि न मुख्यं सर्व्व-ज्ञत्वमुपपद्यते, नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्या सम्भवादित्यत्रोच्यते। इदं तावद्भवान् प्रष्टव्यः कथं नित्यज्ञान-क्रियत्वे सर्व्वज्ञत्वहानिरिति; यस्य हि सर्व्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सो सर्व्वज्ञ इति विप्रतिषिद्धं; अनित्यत्वे हि ज्ञानस्य कदाचित् जानाति कदाचिन्न जानाति, इत्यसर्व्वज्ञत्व-मपि स्यात्, नासौ ज्ञाननित्यत्वे दोषोऽस्ति। ज्ञाननित्यत्वे ज्ञान-विषयः स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेत्, न प्रततौष्ण्यप्रकाशे ऽपि सवितरि दहति प्रकाशयति, इति स्वातन्त्र्यव्यपदेशदर्शनात्। ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः

---

ज्ञानशब्दार्थः किन्तु साक्षिबोधविशिष्टा वृत्तिर्वृत्तिव्यक्तबोधो वा ज्ञानं। तच्चास्य प्रधानस्य नास्तीत्याह॥ अपि चेति॥ साक्षित्वमस्ति येनोक्त-ज्ञानवत्त्वं स्यादिति शेषः। ननु सत्त्ववृत्तिमात्रेण योगिनां सर्व्वज्ञत्व-मुक्तमित्यत आह॥ योगिनान्त्विति॥ सेश्वरसाङ्ख्यमतमाह॥ अथेति॥ सर्व्वज्ञत्वं नाम सर्व्वगोचरज्ञानवत्त्वं न ज्ञानकर्तृत्वं ज्ञानस्य क्रियसा-ध्यत्वादिति हृदि कृत्वा पृच्छति॥ इदं तावदिति॥ सर्व्वं जानातीति

स्यात्, न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः। नासत्यपि कर्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनादेवमसत्यपि ज्ञानकर्मणि ब्रह्मणस्तदैक्षतेति कर्तृत्वव्यपदेशोपपत्तेर्न वैषम्यं कर्मापेक्षायां तु ब्रह्मणि ईक्षितृत्वश्रुतयः सुतरामुपपन्नाः, किं पुनस्तत्कर्म यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयीभवति इति। तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः, यत् प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः किमु वक्तव्यं तस्य नित्यशुद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति। यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसम्बन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति, न तचोद्यमवतरति

---

शब्दसाधुत्वं शङ्कते॥ ज्ञाननित्यत्व इति॥ नित्यस्यापि ज्ञानस्य तदर्थोपहितत्वेन ब्रह्मस्वरूपाद्भेदं कल्पयित्वा कार्य्यत्वोपचाराद्ब्रह्मणस्तत्कर्तृत्वव्यपदेशः साधुरिति। दृष्टान्तमाह॥ न प्रततेति॥ सन्ततेत्यर्थः। असत्यपि अविवक्षितेऽपि, ननु प्रकाशतेरकर्म्मकत्वात् सविता प्रकाशते इति प्रतियोगेऽपि जानातेः सकर्म्मकत्वात् कर्म्माभावे तदैक्षतेत्ययुक्तं इति तत्राह॥ कर्म्मापेक्षायान्त्विति॥ कर्म्माविवक्षायामपि प्रकाशरूपे सवितरि प्रकाशत इति कथञ्चित् प्रकाशक्रियाश्रयत्वेन कर्तृत्वोपचारवच्चिदात्मन्यपि चिद्रूपेण कर्तृत्वोपचारान्न वैषम्यमित्युक्तं पूर्व्वं। अधुना तु कुम्भकारस्य स्वोपाध्यन्तःकरणवृत्तिरूपेक्षणवदीश्वरस्यापि स्वोपाध्यविद्यायाः विविधसृष्टिसंस्कारायाः प्रलयावसानेनोद्बुद्धसंस्कारायाः सर्गान्मुखः कश्चित् परिणामः तस्यां सूक्ष्मरूपेण निलीनसर्व्वकार्य्यविषयकं ईक्षणं तस्य कार्य्यत्वात् कर्म्मसद्भावाच्च तत्कर्तृत्वं मुख्यमिति द्योतयति॥ सुतरामिति॥ ननु मायोपाधिकविम्बचिन्मात्रस्येश्वरस्य कथमीक्षणं प्रति मुख्यं कर्तृत्वं कृत्यभावादिति चेत्। न। कार्य्यानुकूल

# रत्नप्रभाभासितशाङ्करब्रह्मसूत्रभाष्यस्य शुद्धिपत्र।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | २ | जनकजावरमनन्त-, सुखाकृतिं | जनकजाङ्कमनन्त-सुखाकृतिं |
| १ | ११ | भाभास्सिताऽस्य | भासा स्सितास्य |
| २ | १७ | सस्यादि | शस्यादि |
| २ | २८ | प्रतिष्ठा काम | प्रतिष्ठाकाम |
| ३ | १७ | स्वाथ | स्वार्थं |
| ११ | २४ | लब्धया | लब्धायां |
| १४ | १० | शून्यत्व | शून्यत्वं |
| १६ | १६ | व ते | वर्ण्यते |
| २५ | १४ | कर्म्मणा | कर्म्मणां |
| २६ | २८ | मुक्ति | मुक्तिः |
| २७ | २६ | प्रवृत्ति र्वैध | प्रवृत्तिर्वोध |
| २८ | ११ | प्रवर्त्यते | प्रवर्त्तते |
| ३३ | १० | व्युत्पत्त्या | व्युत्पत्त्या |
| ३४ | १६ | मुक्तित्व | मुक्तित्व |
| ३५ | २६ | वदा | वेदा |
| ३५ | १० | विप्रतिपत्तीनां | विप्रतिपत्तीनां |
| ४० | १३ | मुख्य | मुख्य |
| ४२ | २१ | शाखास | शाखासु |
| ४६ | १२ | ज्ञात् | ज्ञानात् |
| ४८ | २७ | ज्ञात् | ज्ञानात् |
| ४९ | ५ | र्थत्व | र्थत्वं |
| ५० | २२ | दीद् | दीत् |
| ५१ | ५ | त्वाद् | त्वात् |
| ५२ | ६ | दीद् | दीत् |

| पृष्ठाङ्क | पंक्त्यङ्क | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| ५३ | ७ | तद् | तत् |
| ५६ | २२ | चास्वं | चाख |
| ५७ | ७।८ | प्यंते | थ्यंते |
| ५८ | ८ | प्रक्षण | प्रज्ञण |
| ७१ | ६ | छननभाव | छननाभाव |
| ६१ | २४ | युग्मावभास | युग्माभास |
| ६६ | २२ | सगान्मुख | सर्गोन्मुख |

सवितृप्रकाशवद्ब्रह्मणो ज्ञानस्वरूपनित्यत्वेन ज्ञानसाधनापेक्षानुपपत्तेः। अपि चाविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात् न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य। मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः।

"न तस्य कार्य्यं करणञ्च विद्यते
न तत् समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ॥ इति ॥

"अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्य वेत्ता
तमाहुरग्र्यं पुरुषं महान्तं" ॥ इति च ॥

---

ज्ञानवत एव कर्तृत्वादीश्वरस्यापि ईक्षणानुकूलनित्यज्ञानवत्त्वात्। न च नित्यज्ञानेनैव कर्तृत्वनिर्व्वाहात् किमीक्षणेनेति वाच्यं। वाय्वादेरेव शब्दवत्त्वसम्भवात् किमाकाशेनेत्यतिप्रसङ्गात्, अतः श्रुतत्वाद्वाय्वादिकारणत्वेनाकाशवदीक्षतेत्यागन्तुकत्वेन श्रुतमीक्षणमाकाशादिहेतुत्वेनाङ्गीकार्य्यमित्यलं। अव्याकृते सूक्ष्मात्मना स्थिते व्याकर्तुं स्थूलीकर्तुमिष्टे इत्यर्थः। अव्याकृतकार्य्योपरक्तचैतन्यरूपेक्षणस्य कारकानपेक्षत्वेऽपि वृत्तिरूपेक्षणस्य कारकं वाच्यमित्याशङ्क्याह॥ अपि चाविद्यादिमत इति॥ यथैकस्य ज्ञानं तथान्यस्यापीति नियमाभावान्मायिनोऽशरीरस्यापि जन्येक्षणकारकत्वमिति भावः। ननु यत् जन्यज्ञानं तत् शरीरसाध्यमिति व्याप्तिरस्तीत्याशङ्क्य श्रुतिबाधमाह॥ मन्त्रौ चेति॥ कार्य्यं शरीरं। करणमिन्द्रियं। अस्येश्वरस्य शक्तिर्माया स्वकार्य्यापेक्षया परा, विचित्रकार्य्यकारित्वाद्विविधा सा लौकिकश्रुतिमात्रसिद्धा न प्रमाणसिद्धे-

ननु नास्ति तावज्ज्ञानप्रतिबन्धकारणवानीश्वरादन्यः संसारी "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता" इति श्रुतेः। तत्र किमिदमुच्यते संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येति? अत्रोच्यते। सत्यं नेश्वरादन्यः संसारी, तथापि देहादिसङ्घातोपाधिसम्बन्ध इष्यत एव घटकरकगिरिगुहाद्युपाधिसम्बन्ध इव व्योम्नः, तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टो घटच्छिद्रं करकादिच्छिद्रमित्यादिराकाशाव्यतिरेकेऽपि, तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा; तथेहापि देहादिसङ्घातोपाधिसम्बन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः। दृश्यते चात्मन एव सतो देहादिसङ्घाते ऽनात्मन्यात्मत्वाभिनिवेशो

---

त्याह॥ श्रूयत इति॥ ज्ञानरूपेण बलेन या सृष्टिक्रिया सा स्वाभाविकी अनादिमायात्मकत्वादित्यर्थः। ज्ञानस्य चैतन्यस्य बलं मायावृत्तिप्रतिविम्बितत्वेन स्फुटत्वं तस्य क्रियानामविम्बत्वेन ब्रह्मणो जनकता ज्ञातृतापि स्वाभाविकीति वार्थः॥ अपाणिरपि ग्रहीता। अपादोऽपि जवनः॥ ईश्वरस्य स्वकार्ये लौकिकहेत्वपेक्षा नास्तीति भावः। अग्र्यमनादिं पुरुषं अनन्तं महान्तं विभुमित्यर्थः। अपसिद्धान्तं शङ्कते॥ नन्विति॥ ज्ञाने प्रतिबन्धककारणान्यविद्यारागादीनि श्रुतावत ईश्वरादन्यो नास्तीत्यन्वयः। औपाधिकस्य जीवेश्वरभेदस्य मयोक्तत्वान्नापसिद्धान्त इत्याह॥ अत्रोच्यत इति॥ तत्कृत उपाधिसम्बन्धकृतः शब्दतज्जन्यप्रत्ययरूपो व्यवहारः, असङ्कीर्ण इति शेषः। अव्यतिरेके कथमसङ्करस्तत्राह॥ तत्कृता चेति॥ उपाधिसम्बन्धकृतेत्यर्थः, देहादिसम्बन्धस्य हेतुरविवेकोऽनाद्यविद्यातया कृत इत्यर्थः। अविद्यायां हि प्रतिबिम्बो जीव, विम्बचैतन्यमीश्वर इतिभेदोऽविद्याधीनसत्ताकः। अनादिभेदस्य कार्यत्वायोगात्। कार्यबुद्ध्यादिकृतप्रमात्रादिभेदस्तु कार्य एवेति विवेकः। नन्वखण्डस्वप्रकाशात्मनि कथमविवेकः तत्राह॥ दृश्यते चेति॥ वस्तुतो

मिथ्याबुद्धिमात्रेण पूर्व्वपूर्व्वेण, सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः। यदप्युक्तं प्रधानस्यानेकात्मकत्वात् मृदादिवत् कारणत्वोपपत्तिर्नासंहतस्य ब्रह्मण इति, तत् प्रधानस्याशब्दत्वेनैव प्रत्युक्तं। यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्व्वोढुं शक्यते न प्रधानादीनां तथा प्रपञ्चयिष्यते न विलक्षणत्वादस्य इत्येवमादिना। अत्राह। यदुक्तं, नाचेतनं प्रधानं जगत्कारणमीक्षितृत्वश्रवणादिति, तदन्यथाप्युपपद्यते। अचेतनेऽपि चेतनवदुपचारदर्शनात् प्रत्यासन्नपतनतां कूलस्यालक्ष्य कूलं पिपतिषतीत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टस्तद्वदचेतनेऽपि प्रधाने प्रत्यासन्नसर्गे चेतनवदुपचारो भविष्यति तदैक्षतेति। यथा लोके कश्चिच्चेतनः स्नात्वा भुक्त्वा चापराह्णे ग्रामं रथेन गमिष्यामीतीक्षित्वा अनन्तरं तथैव नियमेन प्रवर्त्तते,

---

देहादिभिन्नस्वप्रकाशस्यैव सत आत्मनो नरोऽहमिति भ्रमो दृष्टत्वादुरपह्नवः। स च मिथ्याबुद्ध्या मीयत इति मिथ्याबुद्धिमात्रेण भ्रान्तिसिद्धाज्ञानेन कल्पित इति चकारार्थः। यद्वोक्तमिथ्याबुद्धौ लोकानुभवमाह, दृश्यते चेति इत्थं भावे तृतीया। भ्रान्त्यात्मना दृश्यत इत्यर्थः। पूर्व्वपूर्व्वभ्रान्तिमात्रेण दृश्यते न च प्रमेयतयेति वार्थः। कूटस्थस्यापि मायिकं कारणत्वं युक्तमित्याह॥ यथा त्विति॥ यत्त्ववेद्यशब्दशक्तिग्रहायोग इति तन्न। सत्यादिपदानामबाधितार्थेषु लोकावगतशक्तिकानां वाच्यैकदेशत्वेनोपस्थिताखण्डब्रह्मलक्षकत्वादिति स्थितं सम्प्रत्युत्तरसूत्रे ब्रह्म निरस्याशङ्कामाह॥ अत्राहेति॥ अन्यथापि अचेतनत्वेऽपि। ननु प्रधानस्य चेतनेन किं साम्यं येन गौणमीक्षणमिति। तत्राह॥ यथेति॥ नियतक्रमवत् कार्य्यकारित्वं साम्यमित्यर्थः। उपचारप्राये वचनादिति गौणार्थप्रचुरे प्रकरणे समाम्नातादित्यर्थः। अप्तेजसोरिवाचेतने सति गौणी ईक्षतिरिति चेत्, न, आत्मशब्दात् सतश्चेतनत्वनिश्चयादिति सूत्रा-

तथा प्रधानमपि महदाद्याकारेण नियमेन प्रवर्त्तते तस्माच्चेतनवदुपचर्य्यते। कस्मात् पुनः कारणात् विहाय मुख्यमीक्षितृत्वमौपचारिकं कल्प्यते? "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति चाचेतनयोरप्यप्तेजसोश्चेतनवदुपचारदर्शनात्। तस्मात् सत्कर्तृकमपीक्षणमौपचारिकमिति गम्यते। उपचारप्राये वचनादित्येवं प्राप्त इदं सूत्रमारभ्यते॥

## गौणश्चेन्नात्मशब्दात्॥ ६॥

यदुक्तं प्रधानमचेतनं सच्छब्दवाच्यं तस्मिन्नौपचारिकी ईक्षतिः अप्तेजसोरिवेति तदसत्। कस्मात्। आत्मशब्दात्। "सदेव सोम्येदमग्र आसीत्" इत्युपक्रम्य "तदैक्षत" "तत्तेजोऽसृजत" इति च तेजोऽबन्नानां सृष्टिमुक्त्वा तदेव प्रकृतं सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह। "सेयं देवतैक्षत" "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति। तत्र यदि प्रधानमचेतनं गुणवृत्त्येक्षितृ कल्प्येत तदेव प्रकृतत्वात् सेयं देवतेति परामृश्येत, न तदा देवता जीवमात्मशब्देनाभिदध्यात्। जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता*प्रसिद्धेर्निर्वचनाच्च। स कथमचेतनस्य प्रधानस्यात्मा भवेत्? आत्मा हि नामस्वरूपं, नाचेत-

---

धर्माच्च॥ यदुक्तमित्यादिना॥ सा प्रकृता सच्छब्दवाच्या इयमीक्षित्री देवता परोक्षा हन्त इदानीं भूतसृष्ट्यनन्तरं इमाः सृष्टास्तिस्रस्तेजोऽ-

* मुद्रितपुस्तके मतप्रसिद्धेरिति पाठः।

नस्य प्रधानस्य चेतनो जीवः स्वरूपं भवितुमर्हति; अत्र तु चेतनं ब्रह्म मुख्यमीक्षितृ परिगृह्यते, तस्य जीवविषय आत्मशब्दप्रयोग उपपद्यते। तथा "स य एषोऽणिमैतदात्म्यमिदं सर्व्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र स आत्मेति प्रकृतं सदणिमानमात्मानमात्मशब्देनोपदिश्य तत्त्वमसि श्वेतकेतो इति चेतनस्य श्वेतकेतोरात्मत्वेनोपदिशति। अप्तेजसोस्तु विषयत्वात् अचेतनत्वं नामरूपव्याकरणादौ च प्रयोज्यत्वेनैव निर्द्देशात्, न चात्मशब्दवत् किञ्चिन्मुख्यत्वे कारणमस्तीति युक्तं कूलवत् गौणत्वमीक्षितृत्वस्य। तयोरपि च सदधिष्ठितत्वापेक्षमेवेक्षितृत्वं। सतस्त्वात्मशब्दात् न गौणमीक्षितृत्वमित्युक्तं। अथोच्यतेऽचेतनेऽपि

---

वन्नरूपाः,परोक्षत्वाद्देवता इति द्वितीयाबहुवचनं,अनेन पूर्व्वकल्पानुभूतेन जीवेनात्मना मम स्वरूपेण ता अनुप्रविश्य तासां भोग्यत्वाय नाम च रूपञ्च स्थूलं करिष्यामीत्यैक्षतेत्यन्वयः। लौकिकप्रसिद्धेर्जीव-प्राणधारणे इति धातोर्ज्जीवति प्राणान् धारयतीति निर्व्वचनाच्चेत्यर्थः। अत्र त्विति॥ स्वपक्षे तु विम्बप्रतिविम्बयोर्लोके भेदस्य कल्पितत्वदर्शनाज्जीवो ब्रह्मणः सत आत्मेति युक्तमित्यर्थः। जीवस्य सच्छब्दार्थं प्रत्यात्मशब्दात् सन्न प्रधानमित्युक्त्वा सतो जीवं प्रत्यात्मशब्दान्न प्रधानमिति विधान्तरेण हेतुं व्याचष्टे॥ तथेति॥ स यः सदाख्य एषोऽणिमा परमसूक्ष्मः एतदात्मकमिदं सर्व्वं जगत् तत्सदेव सत्यं विकारस्य मिथ्यात्वात्, सत्पदार्थः सर्व्वस्यात्मा हे श्वेतकेतो, त्वञ्च नासि संसारी, किन्तु तदेव सदबाधितं सर्व्वात्मकं ब्रह्मासीति श्रुत्यर्थः॥ इत्यनेनोपदिशति॥ अतश्चेतनात्मकत्वात् सच्चेतनमेवेति वाक्यशेषः। यदुक्तमप्तेजसोरिव सत ईक्षणं गौणमिति तत्राह॥ अप्तेजसोस्त्विति॥ नामरूपयोर्व्याकरणं सृष्टिः।आदिपदान्नियमनं अप्तेजसोर्दृग्विषयत्वात् सृज्यत्वान्नियम्यत्वाच्चाचेतनत्वमीक्षणस्य मुख्यत्वे बाधकमस्ति साधकञ्च नास्तीति हेतोर्युक्तमीक्षणस्य गौणत्वमिति योजना; चेतनवत् कार्य्यकारित्वं गुणः तेज ऐक्षत चेतनवत्

प्रधाने भवत्यात्मशब्दः आत्मनः सर्व्वार्थकारित्वात् यथा राज्ञः सर्व्वार्थकारिणि भृत्ये भवत्यात्मशब्दो ममात्मा भद्रसेन इति; प्रधानं हि पुरुषात्मनो भोगापवर्गौ कुर्व्वदुपकरोति राज्ञ इव भृत्यः सन्धिविग्रहादिषु वर्त्तमानः। अथवैक एवात्मशब्दश्चेतनाचेतनविषयो भविष्यति भूतात्मेन्द्रियात्मेति च प्रयोगदर्शनात्, यथैक एव ज्योतिःशब्दः क्रतुज्वलनविषयः। तत्र कुत एतदात्मशब्दादीक्षतेरगौणत्वं इत्यत उत्तरं पठति।

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

न प्रधानमचेतनमात्मशब्दालम्बनं भवितुमर्हति "स आत्मा" इति प्रकृतं सदणिमानमादाय "तत्त्वमसि श्वेतकेतो" इति चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य तन्निष्ठामुपदिश्य "आचार्य्यवान् पुरुषो वेद" "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति मोक्षोपदेशात्। यदि ह्यचेतनं प्रधानं सच्छब्दवाच्यं तदसीति ग्राहयेत् मुमुक्षुं चेतनं सन्तमचेतनोऽसीति तदा विपरीतवा-

---

कार्य्यकारीत्यर्थः। यद्वा तेजःपदेन तदधिष्ठानं सम्लक्ष्यते तथा च मुख्यमीक्षणमित्याह॥ तयोरिति॥ स्यादेतत् यदि सत ईक्षणं मुख्यं स्यात्तदेव कुत इत्यत आह॥ सतस्त्विति॥ गौणमुख्ययोरतुल्ययोः संशयाभावेन गौणप्रायपाठस्यानिश्चायकत्वादात्मशब्दाच्च सत ईक्षणं मुख्यमित्यर्थः। आत्महितकारित्वगुणयोगादात्मशब्दोऽपि प्रधाने गौण इति शङ्कते॥ अथेत्यादिना॥ आत्मशब्दः प्रधानेऽपि मुख्यो नानार्थकत्वादित्याह॥ अथ वेति॥ नानार्थकत्वे दृष्टान्तः॥ यथेति॥ अथैकज्योतिरिति श्रुत्या सहस्रदक्षिणाके क्रतौ ज्योतिष्टोमे लोकप्रयोगादग्नौ च ज्योतिःशब्दो यथा मुख्यस्तद्वदित्यर्थः। तस्मिन् सत्पदार्थे निष्ठा अभेदज्ञानं यस्य स तन्निष्ठस्तस्य मुक्तिश्रवणादिति सूत्रार्थमाह॥ नेत्यादिना॥ श्रुतिः समन्वयसूत्रे व्याख्याता। अनर्थायेत्युक्तं प्रपञ्चयति॥ यदि चाज्ञस्येति॥ कश्चित् किल

दिशास्त्रं पुरुषस्यानर्थायेत्यप्रमाणं स्यात्; न तु निर्दोषशास्त्रं अप्रमाणं कल्पयितुं युक्तं। यदि चाज्ञस्य सतो मुमुक्षोरचेतनमनात्मानमात्मेत्युपदिशेत् प्रमाणभूतं शास्त्रं, स श्रद्दधानतयान्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत्, तद्व्यतिरिक्तञ्चात्मानं न प्रतिपद्येत, तथा सति पुरुषार्थाद्विहन्येतानर्थञ्च च्छेत्। तस्माद्यथा स्वर्गाद्यर्थिनोऽग्निहोत्रादिसाधनं यथाभूतमुपदिशति तथा मुमुक्षोरपि "स आत्मा" "तत्त्वमसि श्वेतकेतो" इति यथाभूतमेवात्मानमुपदिशतीति युक्तं। एवञ्च सति तप्तपरशुग्रहणमोक्षदृष्टान्तेन सत्याभिसन्धस्य मोक्षोपदेश उपपद्यते। अन्यथा हि अमुख्ये सदात्मतत्त्वोपदेशे अहमुक्थमस्मीति विद्यादितिवत् सम्पन्मात्रमिदमनित्यफलं स्यात्। तत्र मोक्षोपदेशो नोपपद्येत; तस्मान्न सदणिमन्यात्मशब्दस्य गौणत्वं, भृत्ये तु स्वामिभृत्यभेदस्य प्रत्यक्षत्वादुपपन्नो गौण आत्मशब्दो ममात्मा भद्रसेन, इति। अपि च क्वचिद्गौणः शब्दो दृष्ट इति

---

दुष्टात्मा महारण्यमार्गे पतितमन्धं स्वबन्धुनगरं जिगमिषुं बभाषे किमत्रायुष्मता दुःखितेन स्थीयत इति। स चान्धः सुखवाणीमाकर्ण्य तमाप्तमत्वोवाच। अहो मद्भागधेयं यदत्र भवान् मां दीनं स्वाभीष्टनगरप्राप्तिसमर्थं भाषत इति। स च विप्रलिप्सु र्दुष्टगोयुवानमानीय तदीयलाङ्गूलं अन्धं ग्राहयामास, उपदिदेश च एनमन्धं एष गोयुवा त्वां नगरं नेष्यति, मा त्यज लाङ्गूलमिति। स चान्धः श्रद्धालुतया तदत्यजन् स्वाभीष्टमप्राप्यानर्थपरम्परां प्राप्तः, तेन न्यायेनेत्यर्थः॥ तथा सतीति॥ आत्मज्ञानाभावे सति विहन्येत मोक्षं न प्राप्नुयात् प्रत्युतानर्थसंसारञ्च प्राप्नुयादित्यर्थः। ननु जीवस्य प्रधानैक्यसम्पदुपासनार्थमिदं वाक्यमस्त्विति तत्राह॥ एवञ्च सतीति॥ अबाधितात्मप्रमायां सत्यामित्यर्थः।

नैतावता शब्दप्रमाणकेऽर्थे गौणीकल्पनाऽन्याय्या सर्व्वत्रानाश्वास-
प्रसङ्गात्। यत्तूक्तं चेतनाचेतनयोः साधारन आत्मशब्दः क्रतु-
ज्वलनयोरिव ज्योतिःशब्दः इति, तन्न, अनेकार्थत्वस्यान्याय्य-
त्वात्। तस्माच्चेतनविषय एव मुख्य आत्मशब्दश्चेतनत्वोपचारा-
द्भूतादिषु प्रयुज्यते भूतात्मेन्द्रियात्मेति च, साधारणत्वेऽप्यात्म-
शब्दस्य न प्रकरणमुपपदं वा किञ्चिन्निश्चायकमन्तरेणान्यतर-
वृत्तिता निर्द्धारयितुं शक्यते। न चात्राचेतनस्य निश्चायकं
किञ्चित् कारणमस्ति प्रकृतन्तु सदीक्षितृ सन्निहितस्य चेतनः श्वे-
तकेतुः, न हि चेतनस्य श्वेतकेतोरचेतन आत्मा सम्भवतीत्यवो-
चाम। तस्माच्चेतनविषय इहात्मशब्द इति निश्चीयते, ज्यो-
तिःशब्दोऽपि लौकिकेन प्रयोगेन ज्वलन एव रूढः अर्थवाद-
कल्पितेन तु ज्वलनसादृश्येन क्रतौ प्रवृत्त इत्यदृष्टान्तः।
अथवा पूर्व्वसूत्र एवात्मशब्दं निरस्तसमस्तगौणत्वसाधारणत्वा-

---

कस्यचिदारोपितचोरत्वस्य सत्येन तप्तं परशुं गृह्णतो मोक्षो दृष्टः
तद्दृष्टान्तेन सत्ये ब्रह्मणि अहमित्यभिसन्धिमतः मोक्षो यथा सत्या-
भिसन्धः तप्तपरशुं गृह्णाति स न दह्यते अथ मुच्यत इति श्रुत्योप-
दिष्टः स उपदेशः सम्पत्पक्षे न युक्त इत्याह॥ अन्यथेति॥ देहमुत्थाप-
यतीत्युक्थं प्राणस्तस्मान्मोक्षोपदेशान्मुख्ये सम्भवति गौणत्वस्यान्याय्य-
त्वाच्चात्मशब्दः सति मुख्य इत्याह॥ अपि चेति॥ क्वचिद्भृत्यादौ सर्व्व-
त्राहमात्मेत्यत्रापि मुख्य आत्मशब्दो न स्यादित्यर्थः। चेतनत्वोपचारात्
भूतादिषु सर्व्वत्र चैतन्यतादात्म्यादित्यर्थः आत्मशब्दश्चेतनस्यैवासाधारण
इत्युक्तं। अस्तु वा अव्यापिवस्तूनां साधारण्यं तथापि तस्यात्र श्रुतौ प्रधा-
नपरत्वेऽपि निश्चायकाभावान्न प्रधानवृत्तितेत्याह॥ साधारणत्वेऽपीति॥
चेतनवाचित्वे तु प्रकरणं श्वेतकेतुपदस्य निश्चायकमस्तीत्याह॥ प्रकृत-
न्त्विति॥ उपपदस्य निश्चायकत्वं स्फुटयति॥ न हीति॥ ततः किमत्राह॥

शक्ततया व्याख्याय ततः स्वतन्त्र एव प्रधानकारणनिराकरणहेतुर्व्याख्येयः, तन्निष्ठस्य मोक्षोपदेशादिति। तस्मान्नाचेतनं प्रधानं सच्छब्दवाच्यं। कुतश्च न प्रधानं सच्छब्दवाच्यं।

हेयत्वावचनाच्च ॥ ८ ॥

यदि अनात्मैव प्रधानं सच्छब्दवाच्यं "स आत्मा" "तत्त्वमसि" इति चोपदिष्टं स्यात् स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षुस्तस्य हेयत्वं ब्रूयात्। यथा अरुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलां ताराममुख्यां प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति तद्वन्नायमात्मेति ब्रूयात्। न चैवमवो-

---

तस्मादिति॥ आत्मशब्दो ज्योतिःशब्दवदनैकार्थक इत्युक्तं दृष्टान्तं निरस्यति॥ ज्योतिरिति॥ कथं तर्हि ज्योतिषा यजेतेति ज्योतिष्टोमे प्रयोगस्तत्राह॥ अर्थवादेति॥ "एतानि वाव तानि ज्योतींषि य एतेऽस्य स्तोमाः" इत्यर्थवादेन कल्पितं ज्वलनेन सादृश्यं, "त्रिवृत्पञ्चदशस्त्रिवृत्सप्तदशस्त्रिवृदेकविंशस्तोमाः" तत्तदर्थप्रकाशकत्वेन गुणेन ज्योतिःपदोक्ता ऋक्सङ्घाः, तथा च ज्योतींषि स्तोमा अस्येति ज्योतिष्टोम इत्यत्र ज्योतिःशब्दो गौण इत्यर्थः। नन्वात्मशब्दादिति पूर्व्वसूत्र एवात्मशब्दस्य प्रधाने गौणत्वसाधारणत्वशङ्कानिरासः कर्त्तुमुचितः मुख्यार्थस्य लाघवेनोक्तिसम्भवे गौणत्वनानार्थकत्वशङ्काया दुर्बलत्वेन तन्निरासार्थं पृथक्सूत्रायासानपेक्षणात्। तथा च शङ्कोत्तरत्वेन सूत्रव्याख्यानं नातीव शोभते, इत्यरुचेराह॥ अथवेति॥ निरस्ता समस्ता गौणत्वनानार्थत्वशङ्का यस्यात्मशब्दस्य स तच्छङ्कस्तस्य भावस्तत्ता तया इत्यर्थः॥ तत इति॥ सत आत्मशब्देन जीवाभिन्नत्वादिति हेत्वपेक्षया मोक्षोपदेशः स्वतन्त्र एव प्रधानकारणत्वनिरासे हेतुरित्यर्थः। ननु यथा कथञ्चिदरुन्धतीं दर्शयितुं निकटस्थां स्थूलां तारां अरुन्धतीत्वेनोपदिशति तद्वदनात्मन एव प्रधानस्य

चत्। सन्मात्रात्मावगतिनिष्ठैव हि षष्ठप्रपाठके परिसमाप्ति-र्दृश्यते। चशब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः। सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत, कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातं। "उत तमादेशमप्राक्षः, येनाश्रुतं श्रुतं भवति अमतं मतं अविज्ञातं विज्ञातं" इति। "कथं नु भगवः स आदेशो भवति" इति। "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकारो नामधेयं मृत्ति-केत्येव सत्यं, एवं सोम्य स आदेशो भवति" इति वाक्योपक्रमे

---

सत्पदार्थस्यात्मत्वोपदेश इति शङ्कते॥ कुतश्चेति॥ प्रधानं सच्छब्दवाच्यं नेति कुत इत्यर्थः। सौत्रश्चकारोऽनुक्तसमुच्चयार्थ इत्याह॥ चशब्द इति॥ विरोधेति॥ सत्यपीति॥ अपिशब्दान्नास्त्येवेति सूचयति। वेदानधीत्यागतं स्तब्धं पुत्रं पितोवाच, हे पुत्र उत अपि आदिश्यत इत्यादेशः उपदे-शैकलभ्यः सदात्मा तमप्यप्राक्षः गुरुनिकटे पृष्टवानसि यस्य श्रवणेन मननेन विज्ञानेनान्यस्य श्रवणादिकं भवतीत्यन्वयः। नन्वन्येन ज्ञातेन कथमन्यदज्ञातमपि ज्ञातं स्यादिति पुत्रः शङ्कते॥ कथमिति॥ हे भगवः कथं नु खलु स भवतीत्यर्थः, कार्य्यस्य कारणान्यत्व नास्तीत्याह॥ यथेति॥ पिण्डः स्वरूपं तेन विज्ञातेनेति शेष। तत्र युक्तिमाह॥ वाचेति॥ वाचा वागिन्द्रियेणारभ्यत इति विकारो वाचारम्भणं। ननु वाचा नाम्नैवारभ्य-ते, न घटादिरित्याशङ्का नाममात्रमेव विकार इत्याह॥ नामधेयमिति॥ नामधेयं विकारोऽयं वाचा केवलमुच्यते वस्तुतः कारणाद्भिन्नो नास्ति तस्मान्मृषैव स इति भावः। विकारस्य मिथ्यात्वे तदभिन्नकारणस्यापि मिथ्यात्वमिति नेत्याह॥ मृत्तिकेति॥ कारणं कार्य्याद्भिन्नसत्ताकं न कार्य्यं कारणाद्भिन्नं, अतः कारणातिरिक्तस्य कार्य्यस्वरूपस्याभावात् कारणज्ञानेन तज्ज्ञानं भवतीति स्थिते दार्ष्टान्तिकमाह॥ एवमिति॥ मृद्वद्ब्रह्मैव सत्यं वियदादिविकारो मृषेति ब्रह्मज्ञाने सति ज्ञेयं किञ्चि-न्नावशिष्यते इत्यर्थः। यद्यपि प्रधाने ज्ञाते तादात्म्याद्विकाराणां ज्ञानं

श्रवणात्। न च सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वे-
नाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति अप्रधानवि-
कारत्वाद्भोक्तृवर्गस्य,* तस्मान्न प्रधानं सच्छब्दवाच्यं। कुतश्च न
प्रधानं सच्छब्दवाच्यं॥

## स्वाप्ययात्॥ ९॥

तदेव सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते "यत्रैतत्पुरुषः
स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो
भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" इति
एषा श्रुतिः स्वपितीत्येतत्पुरुषस्य लोकप्रसिद्धं नाम निर्व्वक्ति।
स्वशब्देनेहात्मोच्यते यः प्रकृतः सच्छब्दवाच्यस्तमपीतो भवत्यपि
गतो भवतीत्यर्थः।अपि पूर्व्वस्य एतेर्लयार्थत्वं प्रसिद्धं,प्रभवाप्यया-
वित्युत्पत्तिप्रलययोः प्रयोगदर्शनात्। मनःप्रचारोपाधिविशेष-

---

भवति न पुरुषाणां, तेषां प्रधानकारणत्वादित्याह॥ न चेति॥ अस्माकं
जीवाना सद्रूपत्वात्तज्ज्ञाने ज्ञानमिति भावः॥ कुतश्चेति॥पुनरपि कस्मा-
द्धेतोरित्यर्थः, सुषुप्तौ जीवस्य सदात्मनि स्वस्मिन् अप्ययश्रवणात् सचे-
तनमेवेति सूत्रयोजना। एतत् स्वपन यथा स्यात्तथा यत्र सुषुप्तौ
स्वपितीति नाम भवति तदा पुरुषः सता सम्पन्न एकीभवति सदैक्ये
ऽपि नामप्रवृत्तिः कथं तत्राह॥ स्वमिति॥ तत्र लोकप्रसिद्धिमाह॥ तस्मा-
दिति॥ हि यस्मात् स्वं सदात्मानमपीतो भवतीति तस्मादित्यर्थः॥
श्रुतेस्तात्पर्य्यमाह॥ एषा इत्यादिना॥ इतेर्धातोर्गत्यर्थस्यापि पूर्व्वस्य ल-
यार्थत्वेऽपि कथं नित्यस्य जीवस्य लय इत्याशङ्क्य उपाधिलयादिति वक्तुं
जाग्रत्स्वप्नयोरुपाधिमाह॥ मन इति॥ ऐन्द्रियकमनोवृत्तय उपाधयः,
तैर्घटादिस्थूलार्थविशेषाणां चात्मना सम्बन्धादात्मा तानिन्द्रियार्थान् प-
श्यन् स्थूलविशेषेण देहेन क्यभ्रान्तिमापन्नो विश्वसंज्ञो जागर्त्ति जाग्रदा-

सम्बन्धादिन्द्रियार्थान् गृह्णंस्तद्विशेषापन्नो जीवो जागर्त्ति, तद्वासनाविशिष्टः स्वप्नान् पश्यन् मनःशब्दवाच्यो भवति, स उपाधिद्वयोपरमे सुषुप्त्यवस्थायां उपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इवेति स्वं ह्यपीतो भवतीत्युच्यते। यथा हृदयशब्दनिर्वचनं श्रुत्या दर्शितं "स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययं" इति, तस्माद्धृदयमिति, यथा वा अशनायोदन्याशब्दप्रवृत्तिमूलं दर्शयति श्रुतिः "आप एव तदशितं नयन्ते तेज एव तत्पीतं नयते" इति च, एवं "स्वमात्मानं सच्छब्दवाच्यमपीतो भवति" इति इममर्थं स्वपितिनामनिर्वचनेन दर्शयति। न च चेतन आत्मा अचेतनं प्रधानं स्वरूपत्वेन प्रतिपद्यते। यदि पुनः प्रधानमेवात्मीयत्वात् स्वशब्देनोच्येतैवमपि चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत, श्रुत्यन्तरञ्च "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदान्तरं" इति सुषुप्त्यवस्थायां

---

सनाश्रयमनोविशिष्टः सत्तैजससंज्ञः स्वप्ने विचित्रवासनासहकृतमायापरिणामान् पश्यन् "सोम्य तन्मनः" इति श्रुतिस्थमनःशब्दवाच्यो भवति, स चात्मा स्थूलसूक्ष्मोपाधिद्वयोपरमेऽहं नरः कर्त्तेति विशेषाभिमानाभावाल्लीन इत्युपचर्य्यत इत्यर्थः। ननु स्वपितीतिनामनिरुक्तिरर्थवादत्वान्न यथार्थेत्यत आह। यथेति। तस्य हृदयशब्दस्यैतन्निर्वचनं "तदशितमन्नं द्रवीकृत्य नयन्ते जरयन्तीत्याप एवाशनाया पदार्थः तत्पीतं उदकं नयते शोषयति" इति "तेज एवोदन्यं" अत्र दीर्घश्छान्दसः। एवमिदमपि निर्वचनं यथार्थमित्याह। एवमिति। इदञ्च प्रधानपक्षे न युक्तमित्याह। न चेति। स्वशब्दस्यात्मनीवात्मीयेऽपि शक्तिरस्तीत्याशङ्क्याह। यदीति। प्राज्ञेन बिम्बचैतन्येनेश्वरेण सम्परिष्वक्तो भेदभ्रमाभावेनाभेद इत्यर्थः। तस्माद्वेदान्तजन्यानामवगतीनां चेतनकारणविषयकत्वेन सामान्याच्चेतनं

चेतनेऽप्ययं दर्शयति, अतो यस्मिन्नप्ययः सर्व्वेषां चेतनानां तच्चेतन मच्छब्दवाच्यं जगतः कारण, न प्रधान। कुतश्च न प्रधान जगत. कारण ॥ *

## गतिसामान्यात् ॥ १० ॥

यदि तार्किकसमय इव वेदान्तेष्वपि भिन्ना कारणावगतिरभविष्यत् क्वचिच्चेतनं ब्रह्म जगत. कारण क्वचिदचेतनं प्रधान क्वचिदन्यदेवेति ततः कदाचित् प्रधानकारणवादानुरोधेनापीचत्यादिश्रवणमकल्पयिष्यत्, न त्वेतदस्ति, समानैव हि सर्व्वेषु वेदान्तेषु चेतनकारणावगति, यथाग्नेर्ज्वलत. सर्व्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मन. सर्व्वे प्राणा यथायतन विप्रतिष्ठन्ते। "प्राणेभ्यो देवा देवेभ्यो लोका." इति "तस्माद्वा एतस्मादात्मन आकाश.सम्भूत." इति "आत्मन.एवेद सर्व्वं" इति "आत्मन एष प्राणो जायते" इति चात्मन. कारणत्व दर्शयन्ति सर्व्वे वेदान्ता.। आत्मशब्दश्च चेतनवचन इत्यवोचाम। महच्च प्रामाण्यकारणमेतद्यद्वेदान्तवाक्याना चेतनकारणत्वे समानगतित्व चक्षुरादीनामिव रूपादिषु, अतो गति-

---

जगत कारणमिति सूत्रार्थं व्यतिरेकमुखेनाह॥ यदि तार्किकेत्यादिना॥ अन्यत् परमाण्वादिक॥ न त्वेतदिति॥ अवगतिवैषम्यमित्यर्थः। विप्रतिष्ठेरन विविध नानादिश प्रतिगच्छेयु प्राणाश्चक्षुरादयो यथा गोलक प्रादुर्भवन्ति प्राणेभ्योऽनन्तर देवा सूर्य्यादयस्तदनुग्राहका, तदनन्तर लोक्यन्त इति लोकविषया इत्यर्थ। ननु वेदान्ताना स्वत प्रामाण्यत्वेन प्रत्येक स्वार्थनिश्चायकत्वसम्भवात् कि गतिसामान्येनेत्याह॥ महच्चेति॥ एकरूपावगतिहेतुत्व वेदान्ताना प्रामाण्यसंशयनिवृत्तिहेतुरित्यत्र दृष्टा-

सामान्यात् सर्व्वज्ञं ब्रह्म जगतः कारणं। कुतश्च सर्व्वज्ञं ब्रह्म जगतः कारणं॥

## श्रुतत्वाच्च॥ ११॥

स्वशब्देनैव च सर्व्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते श्वेताश्वतराणां मन्त्रोपनिषदि सर्व्वज्ञमीश्वरं प्रकृत्य "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति, तस्मात् सर्व्वज्ञं ब्रह्म जगतः कारणं, नाचेतनं प्रधानमन्यद्वेति सिद्धं। जन्माद्यस्य यत इत्यारभ्य श्रुतत्वाच्चेत्येवमन्तैः सूत्रैर्यान्युदाहृतानि वेदान्तवाक्यानि, तेषां सर्व्वज्ञः सर्व्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वं न्यायपूर्व्वकं प्रति-

---

न्तमाह॥ चक्षुरिति॥ यथा सर्व्वेषां चक्षुषां एकरूपावगतिहेतुत्वं श्रवणानां शब्दावगतिहेतुत्वं घ्राणादीनां गन्धादिषु, एवं ब्रह्मणि वेदान्तानां गतिसामान्यं प्रामाण्यदार्ढ्ये हेतुरित्यर्थः। एवमीक्षत्यादिलिङ्गैरचेतने वेदान्तानां समन्वयं निरस्य चेतनवाचकशब्देनापि निरस्यति॥ श्रुतत्वाच्चेति॥ सूत्रं व्याचष्टे॥ स्वशब्देनेति॥ स्वस्य चेतनस्य वाचकः "सर्व्वविच्छब्दः" "ज्ञः कालकालो गुणीसर्व्वविद्य" इति सर्व्वज्ञं परमेश्वरं प्रकृत्य "स सर्व्ववित् कारणं" इति श्रुतत्वान्नाचेतनं कारणमिति सूत्रार्थः। करणाधिपा जीवास्तेषामधिपः, अधिकरणार्थमुपसंहरति॥ तस्मादिति॥ ईक्षणात्मशब्दादिकं परमाण्वादावप्ययुक्तमिति मत्वाह॥ अन्यद्वेति॥ वृत्तानुवादेनोत्तरसूत्रसन्दर्भमाक्षिपति॥ जन्मादीति॥ प्रथमसूत्रस्य शास्त्रोपोद्घातत्वात् जन्मादिसूत्रमारभ्येत्युक्तं सर्व्ववेदान्तानां कार्य्ये प्रधानाद्यचेतने च समन्वयनिरासेन ब्रह्मपरत्वं व्याख्यातं, अतः प्रथमाध्यायार्थस्य समाप्तत्वादुत्तरग्रन्थारम्भे किं कारणमित्यर्थः, वेदान्तेषु सगुणनिर्गुणब्रह्मवाक्यानां बहुलमुपलब्धेः। तत्र कस्य वाक्यस्य सगुणोपासनाविधिद्वारा निर्गुणे समन्वयः कस्य वा गुणविवक्षां विना सा-

पादितं। गतिसामान्योपन्यासेन च सर्व्वे वेदान्ताश्चेतनकारण-वादिन इति व्याख्यातं,अतः परस्य ग्रन्थस्य किमुत्थानमिति उच्यते,द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतञ्च सर्व्वोपाधिविवर्जितं। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्व्वमात्मैवाभूत्तत् केन कं पश्येत्, यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा,अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति, तदल्पं, यो वै भूमा, तदमृतं, अथ यदल्पं, तन्मर्त्यं, सर्व्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाभिवदन् यदास्ते, निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं, अमृतस्य परं सेतुं दग्धेन्धनमिवानलं, नेति नेति,

---

त्वादेव ब्रह्मणि समन्वय इत्याकाङ्क्षैव कारणमित्याह॥ उच्यत इति॥ सङ्क्षिप्य सगुणनिर्गुणवाक्यार्थमाह॥ द्विरूपं हीति॥ नामरूपात्मको विकारः सर्व्वं जगत् तद्भेदो हिरण्यश्मश्रुत्वादिविशेष इति वाक्यार्थः। वाक्यान्युदाहरति॥ यत्र हीत्यादिना॥ यस्यां खल्वज्ञानावस्थायां द्वैतमिव कल्पितं भवति तत्तदितरः सन्नितरं पश्यतीति दृश्योपाधिकं वस्तु भाति। यत्र ज्ञानकाले विदुषः सर्व्वं जगदात्ममात्रमभूत्तदा तु केन कं पश्येदित्याक्षेपान्निरुपाधिकं तत्त्वं भाति, यत्र भूम्नि निश्चितो विद्वान् द्वितीयं किमपि न वेत्ति सोऽद्वितीयो भूमा परमात्मा निर्गुणः। अथ निर्गुणोक्त्यनन्तरं सगुणमुच्यते, यत्र सगुणे स्थिते द्वितीयं वेत्ति तदल्पं परिच्छिन्नं, यस्तु भूमा तदमृतं नित्यं॥ अथेति॥ पूर्व्ववत् व्याख्येयं। धीरः परमात्मैव सर्व्वाणि रूपाणि विचित्य सृष्ट्वा नामानि च कृत्वा बुद्ध्यादौ प्रविश्य जीवसञ्ज्ञो व्यवहरन् यो वर्त्तते सगुणस्तं निर्गुणत्वेन विद्वानप्यमृतो भवति, निर्गताः कला अंशा यस्मात्तन्निष्कलं. अतो निरंशत्वान्निष्क्रियं, अतः शान्तमपरिणामि निरवद्यं रागादिदोषशून्यं, अञ्जनं मूलतमः सम्बन्धो धर्म्मादिकं वा तच्छून्यं निरञ्जनं, किञ्चामृतस्य मोक्षस्य स्वय-

अस्थूलमनण्वह्रस्वमदीर्घं" इति "न्यूनमन्यत् स्थानं, सम्पूर्णमन्यत्" इति च, एवं सहस्रशो विद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वाक्यानि। तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्व्वो व्यवहारः। तत्र कानिचित् ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्म्मसमृद्ध्यर्थानि, तेषां गुणविशेषोपाधिभेदेन भेदः। एक एव तु परमात्मेश्वरस्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति, तथापि यथा गुणोपासनमेव फलानि भिद्यन्ते "तं यथा यथोपासते तदेव भवति" इति श्रुतेः "यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतःप्रेत्य भवति" इति च। स्मृतेश्च।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं।
तं तमेवैति कौन्तेय सदा तद्भावभावित इति॥

---

मेव वाक्योत्थवृत्तिस्थत्वेन परमुत्कृष्टं सेतुं लौकिकसेतुवत् प्रापकं यथा दग्धेन्धनोऽनलः शाम्यति तमिवाविद्या तज्जं दग्ध्वा प्रशान्तं निर्गुणमात्मानं विद्यादित्यर्थं॥ नेति नेतीति॥ व्याख्यातं। स्थूलादिद्वैतशून्यं। रूपद्वये श्रुतिमाह॥ न्यूनमिति॥ द्वैतस्थानं न्यूनं ऋल्पं सगुणरूपं निर्गुणादन्यत् तथा सम्पूर्णं निर्गुणं सगुणादन्यदित्यर्थः, एकस्य द्विरूपत्वं विरुद्धमित्यत आह॥ विद्येति॥ विद्याविषयो ज्ञेयं निर्गुणत्वं सत्यं, अविद्याविषय उपास्यं सगुणत्वं कल्पितमित्यविरोधः। तत्राविद्याविषयं विवृणोति॥ तत्रेति॥ निर्गुणज्ञानार्थमारोपितप्रपञ्चमाश्रित्य बाधात् प्राक्काले जडजिज्ञासान्यायेन तत्त्वफलार्थान्युपासनानि विधीयन्ते तेषां चित्तैकाग्र्यद्वारा ज्ञानं मुख्यं फलमिति तद्वाक्यानामपि महातात्पर्यं ब्रह्मणीति मन्तव्यं, नाम ब्रह्मेत्याद्युपास्तीनां कामचारादिरभ्युदयः फलं, दहराद्युपास्तीनां क्रममुक्तिः उद्गीथादिध्यानस्य कर्म्मसमृद्धि फलमिति, भेदः, ध्यानानां मानसत्वात्, स्नानाद्यङ्गत्वाच्च, ज्ञानकाण्डे विधानमिति

यद्यप्येक एव आत्मा सर्व्वभूतेषु स्थावरजङ्गमेषु गूढस्तथापि चित्तोपाधिविशेषतारतम्यात् आत्मनः कूटस्थनित्यैकरूपस्याप्युत्तरोत्तरमाविष्कृतस्य तारतम्यमैश्वर्य्यशक्तिविशेषैः श्रूयते "तस्य य आत्मानमाविस्तरां वेद" इति। अत्र स्मृतावपि।

यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा।

तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवं। इति॥

यत्र यत्र विभूत्याद्यतिशयः स ईश्वर इत्युपास्यतया चोद्यते, एवमिहापि आदित्यमण्डले हिरण्मयः पुरुषः सर्व्वपाप्मोदय-

---

भावः॥ ननूपास्यब्रह्मण एकत्वात् कथमुपासनानां भेदस्तत्राह॥ तेधामिति॥ गुणविशेषाः सत्यकामत्वादयो हृदयादिरुपाधिः। अत्र स्वयमेवाशङ्क्य परिहरति॥ एक इति॥ परमात्मस्वरूपाभेदेऽप्युपाधिभेदेनोपहितोपास्यरूपभेदादुपासनानां भेदे सति फलभेद इति भावः। तं परमात्मानं यद्गुणत्वेन लोका राजानमिवोपासते तत्तद्गुणवत्त्वमेव तेषां फलं भवति, क्रतुः सङ्कल्पो ध्यानं इह यादृशध्यानवान् भवति मृत्वा तादृशोपास्यरूपो भवतीत्यत्रैव भगवद्वाक्यमाह॥ स्मृतेश्चेति॥ ननु सर्व्वभूतेषु निरतिशयात्मन एकत्वादुपास्योपासकयोस्तारतम्यश्रुतयः कथमित्याशङ्क्य परिहरति॥ यद्यप्येक इति॥ उक्तानामुपाधीनां शुद्धितारतम्यादैश्वर्य्यज्ञानसुखरूपशक्तीनां तारतम्यरूपा विशेषा भवन्ति तैरेकरूपस्यात्मन उत्तरोत्तरं मनुष्यादिहिरण्यगर्भान्तेष्वाविर्भावतारतम्यं श्रूयते। तस्यात्मन आत्मानं स्वरूपमाविस्तरां प्रकटतरं यो वेद उपास्ते सोऽश्नुते तदिति तरप्प्रत्ययादित्यर्थः। तथा च निकृष्टोपाधिरात्मैवोपासकः उत्कृष्टोपाधिरीश्वर उपास्य इत्यौपाधिकं तारतम्यमविरुद्धमिति भावः। अत्रार्थे भगवद्गीतामुदाहरति॥ स्मृताविति॥ अत्र सूर्य्यादेरपि न जीवत्वेनोपास्यता किन्त्वीश्वरत्वेनेत्युक्तं भवति। तत्र सूत्रकारसम्मतिमाह॥ एवमिति॥ उदयः अस्सम्बन्धः एवं यस्मिन् वाक्ये उपाधिर्विवक्षितः तद्वाक्यमुपासनापरमिति वक्तुमुत्तरसूत्रसन्दर्भस्यारम्भ इत्युक्त्वा यत्र

लिङ्गात् पर एवेति वक्ष्यति, एवमाकाशस्तल्लिङ्गादित्यादिषु द्रष्टव्यं, एवं सद्योमुक्तिकारणमप्यात्मज्ञानमुपाधिविशेषद्वारेणोपदिश्यमानमप्यविवक्षितोपाधि*सम्बन्धविशेषं परापरविषयं परापरविषयत्वेन सन्दिह्यमानं वाक्यगतिपर्यालोचनया निर्णेतव्यं भवति। यथेव हि तावदानन्दमयोऽभ्यासादिति, एवमेकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धञ्चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषु उपदिश्यत इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते। यच्च गतिसामान्यादित्यचेतनकारणान्तरनिराकरणमुक्तं तदपि वाक्यान्तराणि ब्रह्मविषयाणि व्याचक्षाणेन ब्रह्म विपरीतकारणनिषेधेन प्रपञ्च्यते॥

## आनन्दमयोऽभ्यासात्॥ १२॥

तैत्तिरीयके "अन्नमयं" "प्राणमयं" "मनोमयं" "विज्ञानमयञ्च" अनुक्रम्याम्नायते "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः" इति। तत्र संशयः। किमिह आनन्दमयशब्देन

---

न विवक्षितः तद्वाक्यं ज्ञेयब्रह्मपरमिति निर्णयार्थमारम्भ इत्याह॥ एवं सद्य इति॥ अन्नमयादिकोशा उपाधिविशेषाः, वाक्यगतिस्तात्पर्यं। आरम्भसमर्थनमुपसंहरति॥ एवमेकमपीति॥ सिद्धवदुक्तगतिसामान्यस्य साधनार्थमप्युत्तरारम्भ इत्याह॥ यच्चेति॥ अन्नं प्रसिद्धं प्राणमनोबुद्धयः हिरण्यगर्भरूपाः, विम्बचैतन्यमीश्वर आनन्दः "तेषां पञ्चानां विकारा आध्यात्मिका देहप्राणमनोबुद्धिजीवा अन्नमयादयः पञ्चकोशाः" इति श्रुतेः परमार्थः। पूर्वाधिकरणे गौणमुख्येक्षणयोरतुल्यत्वेन संशयाभावाद्गौणप्रायपाठो न निश्चायक इत्युक्तं तर्हि मयटो विकारे प्राचुर्ये

---

* सम्बन्धेति मु॰ पु॰ नास्ति॥

परमेव ब्रह्मोच्यत "यत् प्रकृतं सत्यं ज्ञानमनन्तं ब्रह्म" इति, किम्वा अन्नमयादिवत् ब्रह्मणोऽर्थान्तरमिति किं तावत् प्राप्तं ब्रह्मणोऽर्थान्तरममुख्य आत्मा आनन्दमयः स्यात्। कस्मात्, अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात्। अथापि स्यात् सर्व्वान्तरत्वादानन्दमयो मुख्य एवात्मेति न स्यात् प्रियाद्यवयवयोगात्, शारीरत्वश्रवणाच्च। मुख्यश्चेदात्मा स्यान्न प्रियादिसंस्पर्शः स्यात्, इह तु "तस्य प्रियमेव शिरः" इत्यादि श्रूयते, शारीरत्वञ्च श्रूयते "तस्यैष एव शारीर आत्मा यः पूर्व्वस्य" इति तस्य पूर्व्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इत्यर्थः। न च शरीरस्य सतः प्रियाप्रियसंस्पर्शो वारयितुं शक्यः, तस्मात् संसार्य्येवानन्दमय आत्मा इत्येवं प्राप्ते इदमुच्यते, आनन्दमयोऽभ्यासात्, परमात्मानन्दमयो भवितुमर्हति। कुतोऽभ्यासात्। परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते आनन्दमयं

---

च मुख्यत्वात् संशये विकारप्रायपाठादानन्दविकारो जीव आनन्दमय इति निश्चयोऽस्तीति प्रत्युदाहरणसङ्गत्या पूर्व्वपक्षमाह॥ कस्मादिति॥ आकाङ्क्षापूर्व्वकं अन्नमयादीति श्रुत्यादिसङ्गतयः स्फुटा एव, पूर्व्वपक्षे वृत्तिकारमते जीवोपास्त्या प्रियादिप्राप्तिः फलं, सिद्धान्ते तु ब्रह्मोपास्तीति भेदः, शङ्कते॥ अथापीति॥ परिहरति॥ न स्यादिति॥ संग्टहीतं विवृणोति॥ मुख्य इति॥ परमात्मेत्यर्थः, शरीरत्वेऽपीश्वरत्वं किं न स्यादित्यत आह॥ न चेति॥ जीवत्वं दुर्व्वारमित्यर्थः। नन्वानन्दपदाभ्यासेऽप्यानन्दमयस्य ब्रह्मत्वं कथमित्याशङ्क्य ज्योतिष्टोमाधिकारे ज्योतिःपदस्य ज्योतिष्टोमपरत्ववदानन्दमयप्रकरणस्थानन्दमयपदस्यानन्दमयपरत्वात् तदभ्यासस्तस्य ब्रह्मत्वसाधक इत्यभिप्रेत्याह॥ आनन्दमयं प्रस्तुत्येति॥ रसः सार आनन्द इत्यर्थः। अयं लोकः यत् यदि एष आकाशः पूर्णः आ-

प्रस्तुत्य "रसो वै सः" इति तस्यैव रसत्वमुक्तोच्यते। "रसं ह्येवायं लब्ध्वानन्दी भवतीति को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति, सैषानन्दस्य मीमांसा भवति" एतमानन्दमयात्मानमुपसंक्रामति। "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति। "आनन्दो ब्रह्मेति व्यजानात्" इति च। श्रुत्यन्तरे च "विज्ञानमानन्दं ब्रह्म" इति ब्रह्मण्येव आनन्दशब्दो दृष्टः, एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासात् आनन्दमय आत्मा ब्रह्मेति गम्यते। यत्तूक्तं अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्यमुख्यात्मत्वमिति, नासौ दोषः, आनन्दमयस्य सर्वान्तरत्वात्। मुख्यमेव ह्यात्मानं उपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरत् अन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत् ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मा इति ग्राहयत् प्रतिपत्तिसौकर्यापेक्षया

---

नन्दः साक्षिप्रेरको न स्यात् तदा को वान्याच्चलेत् को वा विशिष्य प्राण्याज्जीवेत तस्मादेष एवानन्दयाति, आनन्दयतीत्यर्थः। "युवा स्यात् साधुयुवा" इत्यादिना वक्ष्यमाणामनुष्ययुवानन्दमारभ्य ब्रह्मानन्दावसाना एषा सन्निहिता आनन्दस्य तारतम्यमीमांसा भवति, उपसंक्रामति "विद्वान् प्राप्नोति" इत्येकदेशिनामर्थः। मुख्यसिद्धान्ते तूपसंक्रमणं विदुषः कोशानां प्रत्यङ्मात्रत्वेन विलापनमिति ज्ञेयं शिष्टमुक्तार्थं। आनन्दशब्दाद्ब्रह्मावगतिः सर्वत्र समानेति गतिसामान्यार्थमाह॥ श्रुत्यन्तरे चेति॥ लिङ्गादमुख्यात्मसन्निधेर्बाध इति मत्वाह॥ नासाविति॥ सर्वान्तरत्वं न श्रुतमित्याशङ्क्य ततोऽन्यस्यानुक्तेस्तस्य सर्वान्तरत्वमिति विवृणोति॥ मुख्यमिति॥ लोकबुद्धिमिति॥ तस्याः स्थूलग्राहितामनुसरदित्यर्थः।

सर्व्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरं। यथा- रुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहाप्यान- न्दमयस्य सर्व्वान्तरत्वान्मुख्यमात्मत्वं। यत्तु ब्रूषे प्रियादीनां शिरस्त्वादिकल्पना अनुपपन्ना मुख्यस्यात्मनः इत्यतीतानन्तरो- पाधिजनिता सा न स्वाभाविकीत्यदोषः। शारीरत्वमप्यानन्द- मयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात् न पुनः सा- क्षादेव शारीरत्वं संसारिवत्, तस्मादानन्दमयः पर एवात्मा॥

## विकारशब्दान्नेति चेन्न प्राचर्य्यात्॥ १३॥

अत्राह नानन्दमयः परमात्मा भवितुमर्हति। कस्मात्। विकारशब्दात्, प्रकृतवचनादयमन्यः शब्दो विकारवचनः सम- धिगत आनन्दमय इति मयटो विकारार्थत्वात्, तस्मादन्नमया- दिशब्दवत् विकारविषय एवायमानन्दमयशब्द इति चेत्, न, प्राचुर्य्यार्थेऽपि मयटः स्मरणात्तत्प्रकृतवचने मयडिति हि प्रचु-

---

तास्रस्य मूषाकारत्ववत् प्राणस्य देहाकारत्वं देहेन सामान्यं तथा मनः प्राणाकारं तेन सममित्याह॥ पूर्व्वेणेति॥ अतीतो योऽनन्तर उपा- धिर्विज्ञानकोशस्तत्कृता सावयवत्वकल्पना शरीरेण ज्ञेयत्वाच्छारीर- त्वमिति लिङ्गद्वयं दुर्ब्बलं, अतः सद्बाधाभावादभ्याससर्व्वान्तरत्वाभ्यां विकारसन्निधेर्बाध इति भावः। विकारार्थकमयट्श्रुतिसहाय इत्या- शङ्क्य मयटः प्राचुर्य्येऽपि विधानान्मैवमित्याह॥ विकारेत्यादिना॥ तत्प्रकृतवचने मयडिति तदिति प्रथमासमर्थाच्छब्दात् प्राचुर्य्यविशि- ष्टस्य प्रस्तुतस्य वचनेऽभिधाने गम्यमाने मयट्प्रत्ययो भवतीति सूत्रार्थः। अत्र वचनग्रहणात् प्रकृतस्य प्राचुर्य्यवैशिष्ट्यसिद्धिः, तादृशस्य

रतायामपि मयट् स्मर्य्यते, यथान्नमयो यज्ञ इति अन्नप्रचुर उच्यते, एवमानन्दप्रचुरं ब्रह्मानन्दमय उच्यते। आनन्दप्रचुरत्वञ्च ब्रह्मणो मनुष्यत्वादारभ्योत्तरस्मिन् उत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात्, तस्मात् प्राचुर्य्यार्थे मयट्॥

## तद्धेतुव्यपदेशाच्च॥ १४॥

इतश्च प्राचुर्य्यार्थे मयट् यस्मादानन्दहेतुत्वं ब्रह्मणो व्यपदिशति श्रुतिः "एष ह्येवानन्दयाति" इति आनन्दयतीत्यर्थः; यो ह्यन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति। यथा लोके योऽन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते तद्वत्, तस्मात् प्राचुर्य्यार्थेऽपि मयटः सम्भवादानन्दमयः पर एव आत्मा॥

## मान्त्रवर्णिकमेव च गीयते॥ १५॥

इतश्चानन्दमयः पर एवात्मा यस्मात् "ब्रह्मविदाप्नोति परं" इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म" इति अस्मिन्मन्त्रे यत् ब्रह्म प्रकृतं सत्यज्ञानानन्तविशेषणैर्निर्धारितं, यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा ता-

---

लोके मयटोऽभिधानाद्यथा अन्नमयो यज्ञ इति, अत्र ह्यन्नं प्रचुरमस्मिन्नित्यन्नशब्दः प्रथमाविभक्तिशक्तस्तस्मान्मयट् यज्ञस्य प्रकृत्यर्थान्नप्राचुर्य्यवाचि दृश्यते न शुद्धप्रकृतवचन इति ध्येयं। सूत्रस्थचशब्दोऽनुक्तसमुच्चयार्थं इति मत्वा व्याचष्टे॥ इतश्चेति॥ तच्चानुक्तं ब्रह्मानन्दस्य निरतिशयत्वावधारणं पूर्व्वमुक्तं। आनन्दमयस्य ब्रह्मत्वे लिङ्गमुक्त्वा प्रकरण-

न्यनुप्रविश्य गुहायामवस्थितं सर्वान्तरं, यस्य विज्ञानायान्योऽन्तर आत्मेति प्रक्रान्तं तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते योऽन्योऽन्तर आत्मानन्दमय इति। मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तं अविरोधात्; अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम्, न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माऽभिधीयते। "एतन्निष्ठैव च"सैषा भार्गवी वारुणीविद्या। आनन्दो ब्रह्मेति व्यजानात्" इति तस्मादानन्दमयः पर एवात्मा ॥

नेतरोऽनुपपत्तेः ॥ १६ ॥

इतश्चानन्दमयः पर एवात्मा नेतरः। इतर ईश्वरादन्यः संसारी जीव इत्यर्थः। न जीव आनन्दमयशब्देनाभिधीयते। कस्मात्, अनुपपत्तेः। आनन्दमयं हि प्रकृत्य श्रूयते"सोऽकामयत बहु स्यां प्रजायेय" इति "स तपो तप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च" इति। तत्र प्राक् शरीराद्युत्पत्तेरभि-

---

माह ॥ मान्त्रेति ॥ यस्मादेवं ह्यतं तस्मान्मान्त्रवर्णिकमेव ब्रह्मानन्दमय इति वाक्ये गीयत इति योजना। ननु मन्त्रोक्तमेवात्र ग्राह्यमिति को निर्बन्धस्तत्राह ॥ मन्त्रेति ॥ ब्राह्मणस्य मन्त्रव्याख्यानत्वादुपायत्वमस्ति मन्त्रस्तूपेयः तदिदमुक्तं ॥ अविरोधादिति ॥ तयोरुपायोपेयभावादित्यर्थः। तर्ह्यन्नमयादीनामपि मान्त्रवर्णिकब्रह्मत्वं स्यादित्यत आह ॥ न चेति ॥ भृगवे प्रोक्ता वरुणेनोपदिष्टा भृगुवल्लीपञ्चमपर्य्यायस्यानन्दे प्रतिष्ठिता तत्र स्थानन्यायेन तदेकार्थब्रह्मवल्ल्या आनन्दमये निष्ठेत्याह ॥ एतन्निष्ठैवेति ॥ स ईश्वरः तपः स्रष्टा लोचनमतप्यत कृतवानित्यर्थः, अभिध्यानं कामना, बहु स्यामित्यव्यतिरेकाधिकारे स प्रकरणे आनन्दमयो रसः। ननु स्रष्टृसृज्ययभावेऽप्यभेदः किं न स्यादत आह ॥ न हि स्रष्टैवेति ॥ ननु स्रष्टृस्रष्टव्ययोर्भेदस्यावश्यकत्वे श्रुतिस्मृत्योर्बाधः स्यादित्याशङ्कते ॥ कथमिति ॥

ध्यानं सृज्यमानानां विकाराणां स्रष्टुरव्यतिरेकः सर्व्वविकार-
सृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ॥

भेदव्यपदेशाच्च ॥ १७ ॥

इतश्च नानन्दमयः संसारी यस्मादानन्दमयाधिकारे "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" इति जीवानन्दमयौ भेदेन व्यपदिशति। न हि लब्धैव लब्धव्यो भवति। कथं तर्ह्यात्माऽन्वेष्टव्यः "आत्मलाभान्न परं विद्यते" इति च श्रुतिस्मृती यावता न लब्धैव लब्धव्यो भवतीत्युक्तं ॥ वाढं ॥ तथाप्यात्मनोऽप्रच्युतात्मभावस्यैव सतस्तत्त्वानवबोधनिमित्तो देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः, तेन देहादिभूतस्यात्मनोऽप्यात्माऽनन्विष्टोऽन्वेष्टव्योऽलब्धो लब्धव्योऽश्रुतः श्रोतव्योऽमतो मन्तव्योऽविज्ञातो विज्ञातव्य इत्यादिभेदव्यपदेश उपपद्यते। प्रतिषिध्यत एव तु परमार्थतः सर्व्वज्ञात् परमेश्वरादन्यो द्रष्टा श्रोता वा "नान्योतोऽस्ति द्रष्टा" इत्यादिना परमेश्वरस्त्वविद्याकल्पिताच्छारीरात् कर्त्तुर्भोक्तुर्विज्ञानात्माख्यादन्यः, यथा मायाविनश्चर्म्मखड्गधरात् सूत्रेणाकाशमधिरोहतः स एव मायावी

---

यावता यतस्त्वयेत्युक्तं अतः श्रुतिस्मृती कथमित्यन्वयः उक्तां शङ्कामङ्गीकरोति ॥ वाढमिति ॥ तर्ह्यात्मन एवात्मना लभ्यत्वोक्तिबाधः अभेदादित्याशङ्क्य कल्पितभेदान्न बाध इत्याह ॥ तथापीति ॥ अभेदेपीत्यर्थः लौकिकभ्रमः आत्मनः स्वाज्ञानजभ्रमेण देहाद्यभिन्नस्य भेदभ्रान्त्या परमात्मनो ज्ञेयत्वाद्युक्तिरित्यर्थः। अन्वेष्टव्यो देहादिव्यतिरिक्ततया ज्ञेयः विवेकज्ञानेन लब्धव्यः साक्षात्कर्त्तव्य. तदर्थं श्रोतव्य. विज्ञानं निदिध्यासनं साक्षात्कारो वा श्रुत्यन्तरस्यार्थानुवादपौनरुक्त्यं। ननु भेदः

परमार्थरूपो भूमिष्ठोऽन्यः। यथा वा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिपरिच्छिन्न आकाशोऽन्यः। ईदृशञ्च विज्ञानात्मपरमात्मभेदमाश्रित्य नेतरोऽनुपपत्तेर्भेदव्यपदेशाच्चेत्युक्तं॥

कामाच्च नानुमानापेक्षा॥ १८॥

आनन्दमयाधिकारे च "सोऽकामयत बहु स्यां प्रजायेय" इति कामयितृत्वनिर्द्देशान्नानुमानिकमपि सांख्यपरिकल्पितमचेतनं प्रधानमानन्दमयत्वेन कारणत्वेन चापेक्षितव्यं। ईक्षतेर्नाशब्दमिति निराकृतमपि प्रधानं पूर्व्वसूत्रोदाहृतां कामयितृत्वश्रुतिं आश्रित्य प्रसङ्गात् पुनर्निराक्रियते गतिसामान्यप्रपञ्चनाय॥

अस्मिन्नस्य च तद्योगं शास्ति॥ १९॥

इतश्च न प्रधाने जीवे वाऽऽनन्दमयशब्दः, यस्मादस्मिन्नानन्दमये प्रकृते आत्मनि प्रतिबुद्धस्यास्य जीवस्य। तद्योगं शास्ति

---

सत्य एवास्तु तत्राह॥ प्रतिषिद्ध्यत इति॥ अत ईश्वरात् द्रष्टा जीवोऽन्यो नास्तीति चेत् जीवाभेदादीश्वरस्यापि मिथ्यात्वं स्यादत आह॥ परमेश्वर इति॥ अविद्याप्रतिविम्बत्वेन कल्पिताज्जीवाच्चिन्मात्र ईश्वरः पृथगस्तीति न मिथ्यात्वं। कल्पितस्याधिष्ठानाभेदेऽप्यधिष्ठानस्य ततो भेद इत्यत्र दृष्टान्तमाह॥ यथेति॥ सूत्रारूढ स्ततोऽपि मिथ्या न जीव इत्यरुच्या भेदमात्रमिथ्यात्वे दृष्टान्तमाह॥ यथा वेति॥ ननु सूत्रबलाद्भेदः सत्य इत्यत आह॥ ईदृशञ्चेति॥ कल्पितमेवेत्यर्थः। सूत्रे भेदः सत्य इति पदाभावात्तदनन्यत्वादिसूत्रश्रुत्यनुसाराच्चेति भाव.। नन्वानन्दात्मकसत्त्वप्रचुरं प्रधानमानन्दमयमस्तु। तत्राह॥ कामाच्चेति॥ अनुमानगम्यमानुमानिकं। पुनरुक्तिमाशङ्क्याह॥ ईक्षतेरिति॥ अस्मिन्निति॥ विषयसप्तमी, आनन्दमयविषयप्रबोधवतो जीवस्य तद्योगं

तदात्मना योगस्तद्योगस्तद्भावापत्तिः, मुक्तिरित्यर्थः। तद्योगं शास्ति शास्त्रं। "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति; यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति" इति। एतदुक्तं भवति यदि तस्मिन्नानन्दमयेऽल्पमप्यन्तरं अतादात्म्यरूपं पश्यति तदा संसारभयान्न निवर्त्तते। यदा त्वेतस्मिन्नानन्दमये निरन्तरं तादात्म्येन प्रतितिष्ठति तदा संसारभयान्निवर्त्तते इति; तच्च परमात्मपरिग्रहे घटते न प्रधानपरिग्रहे जीवपरिग्रहे वा, तस्मादानन्दमयः परमात्मेति सिद्धं। इदन्त्विह वक्तव्यं "स वा एष पुरुषोऽन्नरसमयः", "तस्माद्वा एतस्मादन्नरसमयात्, अन्योऽन्तरात्मा प्राणमयः", "तस्मादन्योऽन्तरात्मा मनोमयः", "तस्मादन्योऽन्तरात्मा विज्ञानमयः" इति च विकारार्थे मयट्प्रवाहे सत्यानन्दमय एवाकस्मादर्द्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं वा आश्रीयते इति। मान्त्रवर्णिकब्रह्माधिका-

---

यस्माच्छास्ति तस्मान्न प्रधानमिति योजना। जीवस्य प्रधानयोगोऽप्यस्तीत्यत आह॥ तदात्मेति॥ जीवस्य ब्रह्माभेदोऽस्तीत्यत आह॥ मुक्तिरिति॥ अदृश्ये स्थूलप्रपञ्चशून्ये आत्मसम्बन्धमात्म्यं लिङ्गशरीरं तद्रहिते। निरुक्तं शब्दशक्यं तद्भिन्ने। निःशेषलयस्थानं निलयनं माया तच्छून्ये। ब्रह्मण्यभयं यथा स्यात्तथा यदैवं प्रतिष्ठां मनसः प्रशान्तां वृत्तिमेष विन्दते लभते अथ तदैवाभयं ब्रह्म प्राप्नोतीत्यर्थः। उत अपि अरमल्पमल्पमप्यन्तरं भेदं यदैवैष नरः पश्यति अथ तदा तस्य भयमिति योजना इति। वृत्तिकारमतं दूषयति॥ इदन्त्विति॥ इह परव्याख्याया विकारार्थके मयटि बुद्धिस्थे सत्यकस्मात् कारणं विना एकप्रकरणस्थस्य मयटः पूर्व्वं विकारार्थकत्वं, अन्ते प्राचुर्यार्थकत्वमित्यर्द्धजरतीयं कथमिव केन

रादिति चेत्, अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः। अत्राह यु-
क्तमन्नमयादीनामब्रह्मत्वं तस्मात्तस्मादन्तरस्यान्तरस्यान्यस्यान्य-
स्यात्मन उच्यमानत्वात्, आनन्दमयात्तु न कश्चिदन्योऽन्तर आ-
त्मोच्यते। तेनानन्दमयस्य ब्रह्मत्वं, अन्यथा प्रकृतहानाऽप्रकृतप्र-
क्रियाप्रसङ्गादिति। अत्रोच्यते, यद्यप्यन्नमयादिभ्य इवानन्दमया-
दन्योऽन्तर आत्मेति न श्रूयते तथापि नानन्दमयस्य ब्रह्मत्वं, यत
आनन्दमयं प्रकृत्य श्रूयते "तस्य प्रियमेव शिरः, मोदो दक्षिणः
पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा"
इति। तत्र यद्ब्रह्मेह मन्त्रवर्णे प्रकृतं "सत्यं ज्ञानमनन्तं ब्रह्म" इति
तदिह ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते तद्विजिज्ञापयिषयैवान्नमयादय
आनन्दमयपर्य्यन्ताः पञ्चकोशाः कल्प्यन्ते, तत्र कुतः प्रकृतहाना-
प्रकृतप्रक्रियाप्रसङ्गः। नन्वानन्दमयस्यावयवत्वेन ब्रह्म पुच्छं प्रति-

---

दृष्टान्तेन व्याश्रीयत इति इदं वक्तव्यमित्यन्वय। प्रश्नं प्रत्याशङ्कते॥ मा-
न्त्वेति॥ स्फुटमुत्तरं। किमान्तर इति न श्रूयते किं वा वस्तुतोऽप्यान्तरं
ब्रह्म न श्रूयत इति विकल्प्य व्याद्यमङ्गीकरोति॥ अत्रोच्यते यद्यपीति॥
विकारप्रायपाठानुगृहीतमयट्श्रुतेः सावयवलिङ्गाच्चेत्याह॥ तथा-
पीति॥ इष्टार्थस्य दृष्ट्या जातं सुखं प्रियं, स्मृत्याऽऽमोदः, स चाभ्यासात्
प्रकृष्टः प्रमोदः, आनन्दस्तु कारणं। विम्बचैतन्यमात्मा, शिरः पुच्छयोर्म-
ध्यकायः ब्रह्म शुद्धमिति श्रुत्यर्थः। द्वितीय प्रत्याह॥ तत्र यदिति॥ यन्मन्त्रे
प्रकृतं गुहानिहितत्वेन सर्वान्तरं ब्रह्म तदिह पुच्छवाक्ये ब्रह्मशब्दात्
प्रत्यभिज्ञायते तस्यैव विज्ञापनेच्छया पञ्चकोशरूपा गुहा प्रपञ्चिता,
तत्र तात्पर्य्यं नास्तीति वक्तुं कल्प्यन्त इत्युक्तं। एवं पुच्छवाक्ये प्रकृतस्व-
प्रधानब्रह्मपरे सति न प्रकृतहान्यादिदोष इत्यर्थः। ब्रह्मण. प्रधानत्वं
पुच्छश्रुतिविरुद्धमिति शङ्कते॥ नन्विति॥ अत्र ब्रह्मशब्दात् प्रकृतस्वप्रधान-
ब्रह्मप्रत्यभिज्ञाने सति पुच्छशब्दविरोधप्रमाणैकस्मिन् वाक्ये प्रथम-

ष्ठेत्युच्यते। अन्नमयादीनामिवेदं पुच्छं प्रतिष्ठेत्यादि, तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुं,प्रकृतत्वादिति ब्रूमः। नन्वानन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते आनन्दमयस्य ब्रह्मत्वादिति। अत्रोच्यते तथा सति तदेव ब्रह्मानन्दमय आत्मावयवी तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यात्। अन्यतरपरिग्रहे तु युक्तं ब्रह्म पुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मनिर्देश आश्रयितुं ब्रह्मशब्दसंयोगान्नानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावादिति। अपि च ब्रह्म पुच्छं प्रतिष्ठेति उक्त्वेदमुच्यते "तदप्येष श्लोको भवति, असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनन्ततो विदुः" इति। अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते ब्रह्म पुच्छं प्रतिष्ठेत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति। न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता प्रियमोदादिविशेषस्यानन्दमयस्य सर्व्वलोकप्रसिद्धत्वात् कथं पुनः स्वप्रधानं सद्ब्रह्मा-

---

चरमश्रुतशब्दयोराद्यस्यानुपसञ्जातविरोधिनो बलीयस्त्वात् पुच्छशब्देन प्राप्तगुणत्वस्य बाध इति मत्वाह ॥ प्रकृतत्वादिति ॥ प्रकरणस्यान्यथासिद्धिमाह ॥ नन्विति ॥ एकस्यैव गुणत्वं प्रधानत्वं च विरुद्धमित्याह। अत्रोच्यत इति ॥ तत्र विरोधनिरासायान्यतरस्मिन् वाक्ये ब्रह्मस्वीकारे पुच्छवाक्ये ब्रह्म स्वीकार्यमित्याह ॥ अन्यतरेति ॥ वाक्यशेषाच्चैवमित्याह ॥ अपि चेति ॥ तत्र ब्रह्मणि श्लोकोऽपीत्यर्थः । पुच्छशब्दस्य गतिं पृच्छति ॥ कथं पुनरिति ॥ त्वयापि पुच्छशब्दस्य मुख्यार्थो वाच्यः ब्रह्मण आनन्दमयस्य लाङ्गूलत्वाभावात् पुच्छदृष्टिलक्षणयाऽऽधारत्वलक्षणा युक्ता प्रतिष्ठापदयोगात्, ब्रह्मशब्दस्य मुख्यार्थत्वलाभाच्च। स्वपक्षे ब्रह्मपदस्याप्यवयवलक्षकत्वादित्याह ॥ नैष दोष इति ॥ पुच्छमित्याधारमात्र-

नन्दमयस्य पुच्छत्वेन निर्दिश्यते ब्रह्म पुच्छं प्रतिष्ठेति। नैष दोषः पुच्छवत् पुच्छं प्रतिष्ठापरायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वं। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात्। अपि चानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यं। निर्विशेषन्तु ब्रह्मवाक्यशेषे श्रूयते वाङ्मनसयोरगोचरत्वाभिधानात्, "यतो वाचो निवर्त्तन्ते, अप्राप्य मनसा सह", "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति। अपि चानन्दप्रचुर इत्युक्ते दुःखास्तित्वमपि गम्यते प्राचुर्य्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात्। तथाच सति "यत्र नान्यत् पश्यति,नान्यच्छृणोति,नान्यद्विजानाति,स भूमा"इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुद्ध्येत। प्रतिशरीरञ्च प्रियादिभेदादानन्दमयस्यापि

मुक्तं प्रतिष्ठेत्येकनीडत्वं एकं मुख्यं नीडं अधिष्ठानं सोपादानस्य जगत इत्यर्थः। ननु वृत्तिकारैरपि तैत्तिरीयवाक्यं ब्रह्मणि समन्वितं इष्टं, तत्र किमुदाहरणभेदेनेत्याशङ्क्याह ॥ अपि चेति ॥ यत्र सविशेषत्वं तत्र वाङ्मनसगोचरत्वमिति व्याप्तेरत्र व्यापकाभावोक्त्या निर्विशेषमुच्यत इत्याह ॥ निर्विशेषमिति ॥ निवर्त्तन्ते अशक्ता इत्यर्थः। सविशेषस्य मृषात्वादभयस्यायुक्तं, अतो निर्विशेषज्ञानार्थं पुच्छवाक्यमेवोदाहरणमिति भावः। प्राचुर्य्यार्थकमयटा सविशेषोक्तौ निर्विशेषश्रुतिबाध उक्तः। दोषान्तरमाह ॥ अपि चेति ॥ प्रत्ययार्थत्वेन प्रधानस्य प्राचुर्य्यस्य प्रकृत्यर्थो विशेषणं, विशेषणस्य यः प्रतियोगी विरोधीति तस्याल्पत्वमपेक्ष्यते यथा विप्रमयो ग्राम इति शूद्राल्पत्वं। अस्तु को दोषस्तत्राह ॥ तथा चेति ॥ प्रकृत्यर्थप्राधान्ये त्वयं दोषो नास्ति,प्रचुरप्रकाशः सवितेत्यत्र तमसोऽल्पस्याप्यभावात् परन्त्वानन्दमयपदस्य प्रचुरानन्दे लक्षणादोषः

भिन्नत्वं, ब्रह्म तु न प्रतिशरीरं भिद्यते "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यानन्त्यश्रुतेः, "एको देवः सर्व्वभूतेषु गूढः सर्व्वव्यापी सर्व्वभूतान्तरात्मा" इति च श्रुत्यन्तरात्। न चानन्दमयाभ्यासः श्रूयते, प्रातिपदिकार्थमात्रमेव हि सर्व्वत्राभ्यस्यते "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति, को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति, सैषानन्दस्य मीमांसा भवति" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन", "आनन्दो ब्रह्मेति व्यजानात्" इति च। यदि चानन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत् तत उत्तरेष्वानन्दमात्रप्रयोगेष्वप्यानन्दमयाभ्यासः कल्प्येत, न त्वानन्दमयस्य ब्रह्मत्वमस्ति प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम। तस्माच्छ्रुत्यन्तरे "विज्ञानमानन्दं" ब्रह्म इति आनन्दप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात् "यदेष आकाश आनन्दो न स्यात्" इत्यादि ब्रह्मविषयः प्रयोगो न त्वानन्दमयाभ्यास इत्यवगन्तव्यं। यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यास एतमानन्दमयमात्मानमुपसङ्क्रामतीति न तस्य ब्रह्मविषयत्वमस्ति

---

स्यादिति मन्तव्यं। किञ्च भिन्नत्वाद्घटवन्न ब्रह्मतेत्याह॥ प्रतिशरीरमिति॥ नन्वभ्यस्यमानानन्दपदं लक्षणयानन्दमयपरं इत्यभ्याससिद्धिरित्यत आह॥ यदि चेति॥ आनन्दमयस्य ब्रह्मत्वे निर्णीते सत्यानन्दपदस्य तत्परत्वज्ञानादभ्याससिद्धिः, तत्सिद्धौ तन्निर्णय इति परस्पराश्रय इति भावः। अयमभ्यासः पुच्छब्रह्मण इत्याह॥ तस्मादिति॥ उपसंक्रमणं बाधः॥ ननु स एवंविदिति ब्रह्मविदं प्रक्रम्योपसंक्रमणवाक्येन फलं निर्दिश्यते तत्तस्याब्रह्मत्वेन सिध्यतीति शङ्कते॥ नन्विति॥ उपसंक्रमणं प्राप्तिरित्यङ्गीकृत्य विशिष्टप्राप्त्युक्त्या विशेष्यप्राप्तिफलमुक्तमित्याह॥ नैष इति॥ आनेनाकाशानां बाधस्तदिति सिद्धान्ते बाधावधिप्रत्यगानन्दा-

विकारात्मनामेवान्नमयादीनामनात्मनामुपसङ्क्रमितव्यानां प्रवाहे पतितत्वात्। नन्वानन्दमयस्योपसङ्क्रमितव्यस्यान्नमयादिवद्ब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिफलं निर्द्दिष्टं भवेत्। नैष दोषः। आनन्दमयोपसङ्क्रमणनिर्द्देशेनैव विदुषः पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्द्दिष्टत्वात् "तदप्येष श्लोको भवति, यतो वाचो निवर्त्तन्ते" इत्यादिना प्रपञ्च्यमानत्वात्। *यच्चानन्दमयसन्निधाने "सोऽकामयत, बहु स्यां प्रजायेय" इतीयं श्रुतिरुदाहृता सा "ब्रह्म पुच्छं प्रतिष्ठा" इत्यनेन सन्निहिततरेण ब्रह्मणा सम्बध्यमानानानन्दमयस्य ब्रह्मतां प्रतिबोधयति, तदपेक्षत्वाच्चोत्तरस्य ग्रन्थस्य "रसो वै सः" इत्यादेर्नानन्दमयविषयता। ननु सोऽकामयत इति ब्रह्मणि पुंलिङ्गनिर्द्देशो नोपपद्यते। नायं दोषः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यत्र पुंलिङ्गेनाप्यात्मशब्देन ब्रह्मणः प्रकृतत्वात्। या तु भार्गवी वारुणी विद्या "आनन्दो ब्रह्मेति व्यजानात्" इति तस्यां मयड्श्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वं। तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते, न चेह सविशेषं

---

भोऽर्थादुक्त उत्तरश्लोकेन स्फुटीकृत इत्याह॥ तदपीति॥ तदपेक्षत्वादिति कामयितृपुच्छब्रह्मविषयत्वादित्यर्थः। यदुक्तं पञ्चमस्थानस्थत्वादानन्दमये ब्रह्मवल्ली समाप्ता भृगुवल्लीवदिति तत्राह॥ यत्त्विति॥ या त्वित्यर्थः। मयट्-श्रुत्या सावयवत्वादिलिङ्गेन च स्थानं बाध्यमिति भावः। गोचरातिक्रमो गोचरत्वाभावः। पूर्व्वमोच्यतेः संशयाभावात् इति युक्त्या प्रायपाठो न निश्चायक इत्युक्तं। तर्हि अत्र पुच्छपदस्याधारावयवयोर्लक्षणासाम्यात्

* यद्येति पाठान्तरं।

ब्रह्म प्रतिपिपादयिषितं वाङ्मनसगोचरातिक्रमश्रुतेः। तस्मा-
दन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयट् विज्ञेयो न
प्राचुर्य्यार्थः। सूत्राणि त्वेवं व्याख्येयानि ब्रह्म पुच्छं प्रतिष्ठेत्यत्र
किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति।
पुच्छशब्दादवयवत्वेनेति प्राप्त उच्यते। आनन्दमयोऽभ्यासात्।
आनन्दमय आत्मेत्यत्र ब्रह्म पुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मो-
पदिश्यते ऽभ्यासात्। असन्नेव स भवति, इत्यस्मिन्निगमनश्लोके
ब्रह्मण एव केवलस्याभ्यस्यमानत्वात्। विकारशब्दान्नेति चेन्न प्राचु-
र्य्यात्। विकारशब्दोऽवयवशब्दोऽभिप्रेतः, पुच्छमित्यवयवशब्दान्न
स्वप्रधानत्वं ब्रह्मण इति यदुक्तं तस्य परिहारो वक्तव्यः। अत्रो-
च्यते नायं दोषः प्राचुर्य्यादप्यवयवशब्दोपपत्तेः। प्राचुर्य्यं प्राया-
पत्तिरवयवप्रायवचनमित्यर्थः। अन्नमयादीनां हि शिर आदिषु
अवयवेषूक्तेष्वानन्दमयस्यापि शिर आदीन्यवयवान्तराण्युक्त्वावय-
वप्रायापत्त्या ब्रह्म पुच्छं प्रतिष्ठेत्याह नावयवविवक्षया यत्कारण-
मभ्यासादिति स्वप्रधानत्वं ब्रह्मणः समर्थितं। तद्धेतुव्यपदेशाच्च।

---

संशयोऽस्तीत्यवयवप्रायपाठो निश्चायक इति पूर्व्वाधिकरणसिद्धान्तयु-
क्त्यभावेन पूर्व्वपक्षयति॥ पुच्छशब्दादिति॥ तथा च प्रत्युदाहरणसङ्गतिः
पूर्व्वपक्षे सगुणोपास्तिः सिद्धान्ते निर्गुणप्रमितिः फलं वेदान्तवाक्यसम-
न्वयोक्तेः श्रुत्यादिसङ्गतयः स्फुटा एव, सूत्रस्थानन्दमयपदेन तद्वाक्यस्थं
ब्रह्मपदं लक्ष्यते। विक्रियतेऽनेनेति विकारोऽवयवः प्रायापत्तिरिति
ष्ववयवक्रमस्य बुद्धौ प्राप्तिरित्यर्थः। यत्र हि प्रकृतस्य ब्रह्मणो आनार्ष-
कोशाः प्रक्षिप्तेन कल्प्यन्ते नात्र तात्पर्य्यमस्ति, तत्रानन्दमयस्यापि अव-
यवान्तरोपायमन्तरं कस्मिंश्चित् पुच्छे वाक्ये प्रकृतं ब्रह्म पुच्छपदेनोक्तं
तस्यानन्दमयाधारत्वेनावश्यंवक्तव्यत्वादित्यर्थः॥ तद्धेतु व्यपदेशाच्च॥ तस्य

सर्व्वस्य विकारजातस्य आनन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते "इदं सर्व्वमसृजत यदिदं किञ्च" इति, न च कारणं सद्ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्याऽवयव उपपद्यते। अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्द्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्याणि ॥

अन्तस्तद्धर्म्मोपदेशात् ॥ २० ॥

इदमाम्नायते "अथ य एषो ऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स

---

ब्रह्मणः सर्व्वकार्य्यहेतुत्वव्यपदेशात् प्रियादिविशिष्टत्वाकारेणानन्दमयस्य जीवस्य कार्य्यत्वात्तं प्रति शेषत्वं ब्रह्मणो न युक्तमित्यर्थः। मान्त्रवर्णिकमेव च गीयते ब्रह्मविदाप्नोति परमिति, यस्य ज्ञानान्मुक्तिरुक्ता यत् सत्यं ज्ञानमिति मन्त्रोक्तं ब्रह्म तदेवैव पुच्छवाक्ये गीयते ब्रह्मपदसुयोगात, नानन्दमयवाक्य इत्यर्थ.। नेतरोऽनुपपत्ते.। इतर आनन्दमयो जीवोऽत्र न प्रतिपाद्यः सर्व्वस्रष्टृत्वाद्यनुपपत्तेरित्यर्थः। भेदव्यपदेशाच्च। अयमानन्दमयो ब्रह्मरसं लब्ध्वानन्दोभवतीति, भेदोक्तेश्च तस्याप्रतिपाद्यतेत्यर्थ'। आनन्दमयो ब्रह्म तैत्तिरीयकपञ्चमस्थानस्थत्वात्। आनन्दवदित्याशङ्क्याह। कामाच्च नानुमानापेक्षा काम्यत इति काम आनन्दः तस्य भृगुवल्ल्यां पञ्चमस्य ब्रह्मत्वदृष्टेरानन्दमयस्यापि ब्रह्मत्वानुमानापेक्षा न कार्य्या, विकारार्थकमयड्विरोधादित्यर्थः। भेदव्यपदेशश्चेत् सगुणब्रह्मात्र वेद्यं स्यादित्याशङ्क्याह। अस्मिन्नस्य च तद्योगं शास्ति। गुहानिहितत्वेन प्रतीचि स एक इत्युपसंहृते पुच्छवाक्योक्तं ब्रह्मण्यहमेव परं ब्रह्मेति प्रबोधवत आनन्दमयस्य यदा ह्येति शास्त्रे ब्रह्मभावं शास्ति, अतो निर्गुणब्रह्मैक्यज्ञानार्थं जीवभेदानुवाद इत्यभिप्रेत्याह ॥ अपराण्यपीति ॥ अन्तस्तधर्म्मोपदेशात्। छान्दोग्यवाक्यमुदाहरति॥ अथ य इति॥ अथेत्युपास्तिप्रारम्भार्थ'। हिरण्मयो ज्योतिर्विकारः, पुरुषः मूर्त्तोऽपि मूर्त्तिमानुपासकैर्दृश्यते। मूर्त्तिमाह॥ हिरण्येति॥ प्रणखो

एष सर्व्वेभ्यः पाप्मभ्य उदित, उदेति ह वै सर्व्वेभ्यः पाप्मभ्यो य एवं वेद" इत्यधिदैवतं। अथाध्यात्ममप्यथ "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यादि। तत्र संशयः। किं विद्याकर्म्मातिशयवशात् प्राप्तोत्कर्षः कश्चित् संसारी सूर्य्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते, किं वा नित्यसिद्धः परमेश्वर इति। किन्तावत् प्राप्तं संसारीति, कुतः, रूपवत्त्वश्रवणात्। आदित्यपुरुषे तावद्धिरण्यश्मश्रुरित्यादिरूपमुदाहृतं, अक्षिपुरुषेऽपि तदेवातिदेशेन प्राप्यते तस्यैतस्य तदेव रूपं यदमुष्य रूपमिति। न च परमेश्वरस्य रूपवत्त्वं युक्तं "अशब्दमस्पर्शमरूपमव्ययं" इति श्रुतेः। आधारश्रवणाच्च "य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणि" इति। न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्व्वव्यापिनः परमेश्वरस्याधार उपदिश्येत "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति "आकाशवत्सर्व्वगतश्च नित्यः" इति च श्रुती भवतः। ऐश्वर्य्यमर्य्यादाश्रुतेश्च "स एष ये

---

नखाग्रं तेन सहेत्यभिविधावाङ्। नेत्रयोर्विशेषमाह॥ तस्येति। कपेर्मर्कटस्य आसः पुच्छभागोऽत्यन्ततेजस्वी तत्तुल्यं पुण्डरीकं यथा, दीप्तिमदेवं तस्य पुरुषस्याक्षिणी सद्योविकसितरक्ताम्भोजनयन इत्यर्थः। उपासनार्थमादित्यमण्डलं स्थानं रूपञ्चोक्त्वा नाम करोति॥ तस्योदिति॥ उन्नाम निर्वक्ति॥ स इति॥ उदित उद्गतः सर्व्वपाप्मास्पृष्ट इत्यर्थः। नामज्ञानफलमाह॥ उदेति हेति॥ देवतास्थानं आदित्यमधिकृत्योपास्यमुक्त्वा अन्तरमात्मानं देहमधिकृत्यापि तदुक्तिरित्याह॥ अथेति॥ पूर्व्वत्र ब्रह्मपदमानन्दमयपदमानन्दपदाभ्यासस्येति मुख्यश्रुत्यादिबहुप्रमाणवशान्निर्गुणनिर्णयवद्रूपवत्त्वादिबहुप्रमाणवशाज्जीवो हिरण्मय इति पूर्व्वसिद्धान्तदृष्टान्तसङ्गत्या पूर्व्वमुत्सर्गतः सिद्धनिर्गुणसमन्वयस्यापवादार्थं पूर्व्वपक्षयति। संसारीति॥ अत्र पूर्व्वोत्तरपक्षयोर्जीवब्रह्मणोरुपास्तिः फलं, अक्षिण्याधारश्रवणाच्च संसारीति सम्बन्धः। श्रुतिमाह। स एष इति।

चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानाञ्च" इत्यादित्यपुरुषस्यैश्वर्य्यमर्य्यादा "स एष ये चैतस्मादर्व्वाञ्चो लोकास्तेषाञ्चेष्टे मनुष्यकामानाञ्च" इत्यक्षिपुरुषस्य। न च परमेश्वरस्य मर्य्यादावदैश्वर्य्यं युक्तं "एष सर्व्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इत्यविशेषश्रुतेः। तस्मान्नाक्ष्यादित्ययोरन्तः परमेश्वर इत्येवं प्राप्ते ब्रूमः, अन्तस्तद्धर्मोपदेशात्, इति "य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणि" इति च श्रूयमाणः पुरुषः परमेश्वर एव न संसारी। कुतः। तद्धर्मोपदेशात्। तस्य हि परमेश्वरस्य धर्म्मा इहोपदिष्टास्तद्यथा "तस्योदिति नाम" इति श्रावयित्वा "अस्यादित्यपुरुषस्य नाम स एष सर्व्वेभ्यः पाप्मभ्य उदितः" इति सर्व्वपाप्मापगमेन निर्व्वक्ति, तदेव च कृतनिर्व्वचनं नामाक्षिपुरुषस्याप्यतिदिशति "यन्नाम तन्नाम" इति। सर्व्वपाप्मापगमश्च परमात्मन एव श्रूयते "य आत्मा अपहतपाप्मा" इत्यादौ।

---

आदित्यस्थः पुरुषः, अमुष्मादादित्यादूर्द्ध्वगा ये केचन लोकास्तेषामीश्वरो देवभोगानाञ्चेत्यर्थः। स एषोऽक्षिस्थः पुरुष एतस्मादक्ष्णोऽधस्तना ये लोका ये च मनुष्यकामा भोगास्तेषामीश्वर इति मर्य्यादा श्रूयते। अतः श्रुतेश्च संसारीत्यर्थ। एष सर्व्वेश्वर इत्यविशेषश्रुतेरिति सम्बन्धः। भूताधिपतिर्यमः, भूतपाल इन्द्रादिश्च एष एव। किञ्च जलानामसङ्कराय लोके विधारको यथा सेतुरेवमेषां लोकाना वर्णाश्रमादीनां मर्य्यादाहेतुत्वात् सेतुरेष एव, अतः सर्व्वेश्वर इत्यर्थः। सूत्रं व्याचष्टे॥ य एष इति॥ यद्यप्येकस्मिन् वाक्ये प्रथमश्रुतानुसारेण चरमं नेयं, तथाप्यत्र प्रथमं श्रुतं रूपवत्त्व निष्फलं ध्यानार्थमीश्वरे नेतुं शक्यञ्च सर्व्वपापासङ्गित्वं सर्व्वात्मकत्वन्तु सफलं जीवे नेतुमशक्यञ्चेति प्रबलं, न च "न ह वै देवान् पापं गच्छति" इति श्रुतेरादित्यजीवस्यापि पाप्मास्पर्शित्वमिति वाच्यं। श्रुतेरधुना कर्म्मानधिकारिणां देवानां क्रियमाणपाप्मासम्बन्धे तत्पाला-

तथा "चाक्षुषे पुरुषे सैव ऋक् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म" इत्यृक्सामाद्यात्मकतां निर्द्धारयति, सा च परमेश्वरस्योपपद्यते सर्व्वकारणत्वात् सर्व्वात्मकत्वोपपत्तेः। पृथिव्यग्न्याद्यात्मके चाधिदैवतमृक्सामे वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याह तस्यर्क्च साम च गेष्णौ इत्यधिदैवतं तथाध्यात्ममपि "यावमुष्य गेष्णौ तौ गेष्णौ" इति। तच्च सर्व्वात्मकत्वे सत्येवोपपद्यते "तद्य इमे वीणायां गायन्त्येतन्त्वेव ते गायन्ति तस्मात्ते धनसनयः" इति च लौकिकेष्वपि गानेष्वस्यैव गीयमानत्वं दर्शयति। तच्च परमेश्वरपरिग्रहे घटते॥

यद् यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।

तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवं।

---

स्पर्शो वा तात्पर्यात् तेषां सञ्चितपापाभावे क्षीणे पुण्ये मर्त्त्यलोकं विशन्तीति श्रुयोगादित्यभिप्रेत्याह॥ सर्व्वपाप्मापगमस्य परमात्मन एवेति॥ सार्व्वात्म्यमाह॥ तथेति॥ अत्र तच्छब्दैश्चाक्षुषः पुरुष उच्यते ऋगाद्यपेक्षया लिङ्गव्यत्ययः॥ उक्थं शस्त्रविशेषः। तत्साहचर्य्यात् सामस्तोत्रं उक्थादन्यच्छस्त्रमृगुच्यते, यजुर्वेदो यजुः, ब्रह्म त्रयो वेदा इत्यर्थः॥ पृथिव्यग्न्याद्यात्मक इति॥ अधिदैवतमृक् पृथिव्यन्तरीक्षद्युनक्षत्रादित्यगतशुक्लाभा रूपा पञ्चविधा श्रुत्युक्ता, साम चाग्निवाय्वादित्यचन्द्रादित्यगतातिकृष्णरूपमुक्तं पञ्चविधं। अध्यात्मन्तु ऋक् वाक् चक्षुः श्रोत्राक्षिस्थशुक्लाभा रूपा चतुर्व्विधा, साम च प्राणच्छायात्मनोऽक्षिगतातिनीलरूपं चतुर्व्विधमुक्तं। एवं क्रमेण ऋक्सामे अनुक्रम्याह श्रुतिः॥ तस्येति॥ यौ सर्व्वात्मकऋक्सामात्मकौ गेष्णावमुष्यादित्यस्थस्य तावेवाक्षिस्थस्य गेष्णौ पर्व्वणौत्यर्थः॥ तथेति॥ ऋक्सामगेष्णत्वमित्यर्थः। सर्व्वगानगेयत्वं लिङ्गान्तरमाह॥ तद्य इति॥ तस्मात् लोके धनस्य सनिर्लाभो येषां ते धनसनयो विभूतिमन्त इत्यर्थः। ननु लोके राजानो गीयन्ते नेश्वर इत्यत आह॥ यद्यदिति॥ पशुवित्तादिर्विभूतिः, श्रीः कान्तिः। ऊर्ज्जितत्वं बलं, तद्युक्तं सत्त्व राजादिकं मदंश एवेति न

इति भगवद्गीतादर्शनात् लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति। यत्तूक्तं हिरण्यश्मश्रुरित्यादिरूपश्रवणं परमेश्वरे नोपपद्येत इत्यत्र ब्रूमः, स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थं।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्व्वभूतगुणैर्युक्तं न त्वं मां द्रष्टुमर्हसि॥

इति स्मरणात्। अपि च यत्र निरस्तसर्व्वविशेषं पारमेश्वरं रूपमुपदिश्यते भवति तत्र शास्त्रं "अशब्दमस्पर्शमरूपमव्ययं" इत्यादि। सर्व्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते "सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः" इत्यादिना, तथा हिरण्यश्मश्रुत्वादिनिर्द्देशोऽपि भविष्यति। यदप्याधारश्रवणान्न परमेश्वर इत्यत्रोच्यते स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेश उपासनार्थो भविष्यति सर्व्वगतत्वाद्ब्रह्मणो व्योमवत् सर्व्वान्तरत्वोपपत्तेः। ऐश्वर्य्यमर्य्यादाश्रवणमप्याध्यात्माधिदैवतविभागापेक्षमुपासनार्थमेव, तस्मात्परमेश्वर एवाक्ष्यादित्ययोरन्तरुपदिश्यते॥

---

इगानमीश्वरस्यैवेत्यर्थः। निरङ्कुशमनन्याधीनं, एषा विचित्ररूपा मूर्त्तिर्माया विकृतित्वान्माया मया सृष्टेत्यर्थः। यदुक्तमशब्दमित्यादिवाक्यं तत् ज्ञेयपरमित्याह॥ अपि चेति॥ तर्हि रूपं कुतस्तत्राह॥ सर्व्वेति॥ यत्र नूपास्यत्वेनोच्यते तत्रेत्यध्याहृत्य सर्व्वकारणत्वात् प्राप्तरूपत्वं सर्व्वकर्म्मेत्यादिश्रुत्या निर्द्दिश्यत इति योजना। मर्य्यादावदैश्वर्य्यमीश्वरस्य नेत्युक्तं निराकरोति॥ ऐश्वर्य्येति॥ अध्यात्माधिदैवध्यानयोर्विभागः पृथक्प्रयोगः, तदपेक्षमेव न त्वैश्वर्य्यस्य परिच्छेदार्थमित्यर्थः। ननु उमा-

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

अस्ति च आदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति श्रुत्यन्तरे भेदव्यपदेशात्। तत्र ह्यादित्यादन्तरोऽयं आदित्यो न वेदेति वेदितुरादित्यात् विज्ञानात्मनोऽन्योऽन्तर्यामीति स्पष्टं निर्दिश्यते स एवेहाप्यन्तरादित्ये पुरुषो भवितुमर्हति श्रुतिसामान्यात्। तस्मात् परमेश्वर एवेहोपदिश्यत इति सिद्धं ॥

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

छान्दोग्ये इदमामनन्ति "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्प-

---

स्योद्देशेनोपास्तिविधेर्विधेयक्रियाकर्म्मणोर्व्रीह्यादिवदन्यतः सिद्धिर्वाच्येत्याशङ्क्याह ॥ भेदेति ॥ आदित्यजीवादीश्वरस्य भेदोक्तेः श्रुत्यन्तरे जीवादन्य ईश्वरः सिद्ध इति सूत्रार्थमाह ॥ अस्तीति ॥ आदित्ये स्थितरश्मि निरासार्थमादित्यादन्तर इति जीवं निरस्यति ॥ यमिति ॥ अशरीरस्य कथं नियन्तृत्वं तत्राह ॥ यस्येति ॥ अन्तर्यामिपदार्थमाह ॥ य इति। तस्यानात्मत्वनिरासायाह ॥ एष त इति ॥ ते तव स्वरूपमित्यर्थः। आदित्यान्तरत्वश्रुते समानत्वादित्यर्थः। तस्मात् पर एवादित्यादिस्थानक उद्गीथे उपास्य इति सिद्धं। भवतु रूपवत्त्वादिदुर्बललिङ्गानां पापास्पर्शित्वाद्यव्यभिचारिप्रबललिङ्गैरन्यथानयनं,इह त्वाकाशपदश्रुतिलिङ्गाद्बलीयसीति प्रत्युदाहरणेन प्राप्ते प्रत्याह। आकाशस्तल्लिङ्गादिति ॥ छान्दोग्यवाक्यमुदाहरति ॥ इदमिति ॥ शालावत्यो ब्राह्मणो जैवलिं राजानं पप्रच्छ, अस्य पृथ्वीलोकस्यान्यस्य च का आधार इति।

,द्यन्त इत्याकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं'' इति। तत्र संशयः। किमाकाशशब्देन परं ब्रह्माभिधीयते, उत भूताकाशमिति। कुतः संशय। उभयत्र प्रयोगदर्शनात्। भूतविशेषे तावत् सुप्रसिद्धो लोकवेदयोराकाशशब्दो ब्रह्मण्यपि क्वचित् प्रयुज्यमानो दृश्यते, यत्र वाक्यशेषवशादसाधारणगुणश्रवणाद्वा निर्द्धारितं ब्रह्म भवति यथा "यदेष आकाश आनन्दो न स्यात्''इति, "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति चैवमादौ, अतः संशयः। किं पुनरत्र युक्तं भूताकाशमिति, कुतः, तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति। न चायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुं, अनेकार्थत्वप्रसङ्गात्। तस्माद्ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति। विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति, न च मुख्यसम्भवे गौणार्थग्रहणमर्हति, सम्भवति चेह मुख्यस्यैवाकाशस्य ग्रहणं। ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते "सर्व्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यादिः। नैष दोषो भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः। विज्ञायते हि "तस्माद्वा एत-

---

राजा ब्रूते आकाश इतिहेति॥ यदेष आकाश इत्यानन्दत्वस्यासाधारणस्य श्रवणादाकाशो ब्रह्मेत्यवधारितं। आकाशो वै नामेत्यत्र तद्ब्रह्मेति वाक्यशेषादिति विभागः। निर्वहिता उत्पत्तिस्थितिहेतुः, ते नामरूपे, यदन्तरा यस्माद्भिन्ने यत्र कल्पितत्वेन मध्ये स्त इति वार्थः। अत्र पूर्व्वपक्षे भूताकाशात्मनोद्गीथोपास्तिः, सिद्धान्ते ब्रह्मात्मना इति फलं। उपास्ते

स्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः" इत्यादि। ज्यायस्त्वपरायणत्वेऽपि भूतान्तरापेक्षयोपपद्यते भूताकाशस्यापि, तस्मादाकाशशब्देन भूताकाशस्य ग्रहणमित्येवं प्राप्ते ब्रूमः, आकाशस्तल्लिङ्गात्। आकाशशब्देनेह ब्रह्मणो ग्रहणं युक्तं। कुतः। तल्लिङ्गात्। परस्य हि ब्रह्मण इदं लिङ्गं "सर्व्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इति। परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्य्यादा। ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितं। सत्यं दर्शितं। तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारणं सर्व्वाणीति च भूतविशेषणं नानुकूलं स्यात्। तथा "आकाशं प्रत्यस्तं यन्ति" इति ब्रह्मलिङ्गं "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं" इति च ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन्नाम्नातं "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति, तथा परायणत्वमपि परमकारणत्वात् परमात्मन्येवोपपन्नतरं। श्रुतिश्च भवति "विज्ञानमानन्दं ब्रह्म रातेर्द्दातुः परायणं" इति। अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वानन्तं

---

स्पष्टब्रह्मलिङ्गवाक्यसमन्वयोक्तेरपाद श्रुत्यादिसङ्गतयः। स्पष्टमन्त्र भाष्यं। तेजःप्रभृतिषु वाय्वादेरपि कारणत्वात् एवकारश्रुतिबाधः। सर्व्वश्रुतेश्चाकाशातिरिक्तविषयत्वेन सङ्कोचः स्यादित्याह। सत्यं दर्शितमिति। ब्रह्मणस्तु सर्व्वात्मकत्वात्तस्मादेव सर्व्वमिति श्रुतिर्युक्तेति भावः। तथा सर्व्वस्याधारत्वं निरतिशयमहत्त्वं स्थितावपि परमाश्रयत्वमित्येतानि स्पष्टानि ब्रह्मलिङ्गानीत्याह। तथा आकाशमित्यादिना। रातेर्द्धनस्य दातुः। रातिरिति पाठे बन्धुरित्यर्थः। लिङ्गान्तरमाह। अपि चेति।

किञ्चिद्ब्रह्मकामेन जैवलिनाऽऽकाशः परिगृहीतः, तस्याकाशमुद्गीथे सम्पाद्योपसंहरति "स एष परो वरीयानुद्गीथः स एषो ऽनन्तः" इति, तच्चानन्त्यं ब्रह्मलिङ्गं। यत् पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं प्रतीयत इति, अत्र ब्रूमः, प्रथमतरं प्रतीतमपि तद्वाक्यशेषगतान् ब्रह्मगुणान् दृष्ट्वा न परिगृह्यते। दर्शितश्च ब्रह्मण्याकाशशब्दः "आकाशो वै नामरूपयोर्निर्वहिता" इत्यादौ। तथाकाशपर्य्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते

---

दाल्भ्यशालावत्यौ ब्राह्मणौ राजा चेति त्रय उद्गीथविद्याकुशला विचारयामासुः किमुद्गीथस्य परायणमिति। तत्र स्वर्गादागताभिरद्भिर्जीवितेन प्राणेन क्रियमाणोद्गीथस्य स्वर्ग एव परायणमिति दाल्भ्यपक्षमप्रतिष्ठादोषेण शालावत्यो निन्दित्वा स्वर्गस्यापि कर्म्मद्वारा हेतुरयं लोकः प्रतिष्ठेत्युवाच। तं शालावत्यस्य पक्षमन्तवद्वै ते किल शालावत्यसामेति राजा निन्दित्वानन्तमेवाकाशं वक्ति भूताकाशोक्तावन्तवत्त्वदोषतादवस्थ्यादित्यर्थः। नन्वाकाशोऽनन्त इति न श्रुतं इत्याशङ्क्याह॥ तस्येति॥ उद्गीथ आकाश एवेति सम्पादनात् उद्गीथस्यानन्तत्वादिकं न स्वत इति भावः। स उद्गीथावयव ॐकार एष आकाशात्मकः। परः रसतमत्वादिगुणैरुत्कृष्टः। अतोऽक्षरान्तरेभ्यो वरीयान् श्रेष्ठ इत्यर्थः॥ पर इति अव्ययं सकारान्तं वा, परः सहस्रमिति प्रयोगात्। परस्मात् परेभ्योऽतिशयेन वरः परो वरीयान् इत्यर्थः। प्राथम्यात् श्रुतित्वाच्चाकाशशब्दो बलीयानित्युक्तं स्मारयति॥ यत् पुनरिति॥ एवकारसर्व्वशब्दानुगृहीतानन्त्यादिबहुलिङ्गानामनुग्रहाय "त्यजेदेकं कुलस्यार्थे" इति न्यायेनैकस्याः श्रुतेर्बाधो युक्त इत्याह॥ अत्र ब्रूम इति॥ आकाशपदाद्भूतस्यैव प्रथमप्रतीतिरिति नियमो नास्तीत्यपिशब्देन द्योतितं। तत्र युक्तिमाह॥ दर्शितश्चेति॥ आकाशपदाद्गौणार्थस्य ब्रह्मणोऽपि प्रथमप्रतीतिरस्ति तस्य तत्पर्य्यायाणाञ्च ब्रह्मणि प्रयोगप्राचुर्य्यादिति भावः। अक्षरे कूटस्थे व्योमन् व्योम्नि ऋचो वेदाः सन्ति प्रमाणत्वेन यस्मिन्नक्षरे विश्वे देवा अधिष्ठिता इत्यर्थः। ॐकारः कं सुखं ब्रह्म खं व्यापकमित्युपासीत

"ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः" "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" "ॐ कं ब्रह्म खं ब्रह्म खं पुराणं" इति चैवमादौ। वाक्योपक्रमेऽपि वर्त्तमानस्याकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा। "अग्निरधीतेऽनुवाकं" इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते। तस्मादाकाशशब्दं ब्रह्मेति प्रसिद्धं॥

## अतएव प्राणः॥ २३॥

"उद्गीथे प्रस्तोतर्य्या देवता प्रस्तावमन्वायत्ता" इत्युपक्रम्य श्रूयते "कतमा सा देवतेति प्राण इति होवाच सर्व्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इति। तत्र संशयनिर्णयौ पूर्व्ववदेव द्रष्टव्यौ, "प्राणबन्धनं हि सोम्य मनः प्राणस्य प्राणं" इति चैवमादौ

---

श्रुत्यन्तरप्रयोगमाह॥ खं पुराणमिति॥ व्याप्यनादि ब्रह्मेत्यर्थः। कं ब्रह्म खं ब्रह्मेति छान्दोग्यं, ॐ खं ब्रह्म खं पुराणमिति बृहदारण्यकमिति भेदः। किञ्च तत्रैव प्रथमानुसारेणोत्तरं नेयं यत्र तन्नेतुं शक्यं, यत्र त्वशक्यं तत्रोत्तरानुसारेण प्रथमं नेयमित्याह॥ वाक्येति॥ तस्मादुपास्ये ब्रह्मणि वाक्यं समन्वितमित्युपसंहरति॥ तस्मादिति॥ आकाशवाक्योक्तन्यायं तदुत्तरवाक्येऽतिदिशति॥ अत एव प्राणः॥ उद्गीथप्रकरणमिति ज्ञापनार्थमुद्गीथ इति भाष्यपदं उद्गीथप्रकरणे श्रूयते इत्यन्वयः। कश्चिदृषिश्चाक्रायणः प्रस्तोतारमुवाच, हे प्रस्तोतः या देवता प्रस्तावं सामभक्तिमनुगताध्यानार्थं तामविदित्वा मम विदुषो निकटे प्रस्तोष्यसि मूर्द्धा ते पतिष्यतीति। ततो भीतः सन् पप्रच्छ कतमा सा देवतेति उत्तरं॥ प्राण इति॥ प्राणमभिलक्ष्य सम्यक् विशन्ति लीयन्ते प्राणमभिलक्ष्योज्जिहते उत्पद्यन्त इत्यर्थः। अतिदेशत्वात् पूर्व्ववत् संशयादि द्रष्टव्यमित्युक्तं विवृणोति॥ प्राणेति॥ मनउपाधिको जीवः

ब्रह्मविषयः प्राणशब्दो दृश्यते, वायुविकारे तु प्रसिद्धतरो लोकवेदयोरत इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवति संशयः। किं पुनरत्र युक्तं वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तं। तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम। ननु पूर्ववदिहापि तल्लिङ्गात् ब्रह्मण एव ग्रहणं युक्तमिहापि हि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं कर्म्म प्रतीयते। न मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात्। एवं ह्याम्नायते "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्ज्जायन्ते" इति। प्रत्यक्षञ्च तत् स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते, प्रबोधकाले च पुनः प्रादुर्भवन्तीति। इन्द्रियसारत्वाच्च भूतानामविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः। अपि चादित्योऽन्नञ्चोद्गीथप्रतिहारयो-

---

प्राणेन ब्रह्मणा बध्यते सुषुप्तावेकीभवति प्राणस्य वायोः प्राणं प्रेरकं तस्य सत्तास्फूर्त्तिप्रदमात्मानं ये विदुस्ते ब्रह्मविद इत्यर्थः। पूर्व्वेण गतार्थत्वात् पृथक्सूत्रं व्यर्थमिति शङ्कते॥ ननु पूर्व्ववदिति॥ अधिकाशङ्कानिरासार्थमतिदेशसूत्रमिति मत्वा शङ्कामाह॥ न मुख्येऽपीति॥ तर्हि तदा चक्षुरप्येतीति एवम्प्रकारेण सर्व्वत्र सम्बन्धः। नन्वत्रेन्द्रियाणां प्राणे लयोदयौ श्रूयेते तावता महाभूतलयादिप्रतिवाक्यशेषोपपत्तिः कथमित्यत आह॥ इन्द्रियसारत्वादिति॥ त्वस्य ह्येष रसः इति श्रुतेः इन्द्रियाणि लिङ्गात्मरूपाणि अपञ्चीकृतभूतानां साराणि तेषां लयाद्युक्त्या भूतानामपि प्राणे लयादिसिद्धेः वाक्यशेषोपपत्तिरित्यर्थः। अब्रह्मसहपाठाच्च प्राणो न ब्रह्मेत्याह॥ अपि चेति॥ उद्गातृप्रतिहर्त्तृभ्यामुद्गीथे प्रतिहारे च का देवतेति पृष्टेनचाक्रायणेनादित्योऽन्नञ्च निर्द्दिश्यते आदित्य इति होवाच अन्नमिति होवाचेति श्रुतावित्यर्थः। सा-

र्देवते प्रस्तावदेवतायाः प्राणस्यानन्तरं निर्दिश्यते, न च तयो-र्ब्रह्मत्वमस्ति, तत्सामान्याच्च प्राणस्यापि न ब्रह्मत्वमित्येवं प्राप्ते सूत्रकार आह। अतएव प्राण इति। तल्लिङ्गादिति पूर्वसूत्रे निर्दिष्टमत एव तल्लिङ्गात् प्राणशब्दमपि परं ब्रह्म भवितुमर्हति, प्राणस्यापि हि ब्रह्मलिङ्गसम्बन्धः श्रूयते "सर्व्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति प्राणनि-मित्तौ सर्व्वेषां भूतानामुत्पत्तिप्रलयावुच्यमानौ प्राणस्य ब्रह्मतां गमयतः। ननूक्तं मुख्यप्राणपरिग्रहेऽपि संवेशोद्गमनमविरुद्धं स्वा-पप्रबोधयोर्दर्शनादिति। अत्रोच्यते। स्वापप्रबोधयोरिन्द्रियाणा-मेव केवलानां प्राणाश्रयं संवेशनोद्गमनं दृश्यते, न सर्व्वेषां भूतानां, इह तु सेन्द्रियाणां सशरीराणाञ्च जीवाविष्टानां भूतानां "सर्व्वाणि ह वा इमानि भूतानि" इति श्रुतेः। यद्यपि भूतश्रुतिः महाभूतविषया परिगृह्यते तदापि ब्रह्म-लिङ्गत्वमविरुद्धं। ननु सहापि विषयैरिन्द्रियाणां स्वापप्रबो-धयोः प्राणेऽप्ययं प्राणाच्च प्रभवं शृणुमः "यदा सुप्तः स्वप्नं न

---

मान्यं सन्निधानं। सन्निध्यनुगृहीतप्रथमश्रुतप्राणश्रुत्या मुख्यप्राणनिर्णये तत् दृष्ट्या प्रस्तावोपास्तिरिति पूर्व्वपक्षफलं, सिद्धान्ते ब्रह्मदृष्ट्युपो-पास्तिः। अस्याधिकरणस्यातिदेशत्वमेव पूर्व्वेण सङ्गतिरिति विभाग· भवन्तीति भूतानीति व्युत्पत्त्या यत्किञ्चिद्भवनधर्म्मकं कार्य्यमात्रं तस्य। लयोदयौ वायुविकारे प्राणेन युक्तावित्युक्ता भूतशब्दस्य सङ्कोच-हेऽपि लयादेर्ब्रह्मनिर्णायकत्वमित्याह॥ यद्यपीति॥ भौतिकप्राणस्य भूतंयोनित्वायोगादित्यर्थः। तस्य तद्योनित्व श्रुत्याशङ्कते॥ नन्विति॥ यथ यदा सुप्तौ जीवः प्राणे ब्रह्मण्येकीभवति तदा एनं प्राणं सविष-यवागादयोऽपि यन्तीत्यर्थ·। अत्र जीवाभिन्नत्वे सर्व्वलयाधारत्वलिङ्गाम

कश्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्व्वैर्नामभिः सहाप्येति" इत्यत्र तत्रापि तल्लिङ्गात् प्राणशब्दं ब्रह्मैव। यत् पुनरन्नादित्यसन्निधानात् प्राणशब्दस्याब्रह्मत्वमिति तदयुक्तं वाक्यशेषबलेन प्राणशब्दस्य ब्रह्मविषयतायां प्रतीयमानायां सन्निधानस्याकिञ्चित् करत्वात्। यत् पुनः प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वं तदाकाशशब्दस्येव* प्रतिविधेयं। तस्मात् सिद्धं प्रस्तावदेवतायाः प्राणस्य ब्रह्मत्वं। अत्र केचिदुदाहरन्ति "प्राणस्य प्राणं प्राणबन्धनं हि सोम्य मन" इति च तदप्ययुक्तं शब्दभेदात् प्रकरणाच्च संशयानुपपत्तेः। यथा पितुःपितेति प्रयोगे अन्यः पिता षष्ठीनिर्दिष्टोऽन्यः प्रथमानिर्दिष्टं पितुः पितेति गम्यते, तद्वत् प्राणस्य प्राणमिति शब्दभेदात् प्रसिद्धात् प्राणादन्यः प्राणस्य प्राणं इति निश्चीयते। न हि स एव तस्येति भेदनिर्देशार्हो भवति। यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि स एव तत्र प्रकरणनिर्द्दिष्ट इति गम्यते। यथा ज्योतिष्टोमाधिकारे "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवति तथापरस्य ब्रह्मणः प्रकरणे "प्राणब-

---

मुख्यः प्राण इत्याह ॥ तत्रापीति ॥ वाक्यान्तरसन्निध्यपेक्षया स्ववाक्यगतं लिङ्गं बलीय इत्याह ॥ तदयुक्तमिति ॥ एकवाक्यत्वं वाक्यशेषः तस्य बलं तद्गतं लिङ्गं तेनेत्यर्थः। प्राणमेवेत्यवधारणेन सर्व्वभूतप्रकृतित्वलिङ्गेन च प्राणपदेन तत्कारणं ब्रह्मलक्ष्यमित्याह ॥ तदाकाशशब्दस्येवेति ॥ वृत्तिकृतामुदाहरणं संशयाभावेनायुक्तमित्याह ॥ अत्रेत्यादिना ॥ शब्दभेदमुक्त्वा प्रकरणं प्रपञ्चयति ॥ यस्य चेति ॥ ज्यो-

---

* मु० पु० शब्देति नास्ति।

न्धनं हि सोम्य मन" इति श्रुतेः प्राणशब्दो वायुविकारमात्रं कथमवगमयेदत. संशयाविषयत्वान्नैतदुदाहरणं युक्तं। प्रस्ताव-देवतायान्तु प्राणे संशयपूर्व्वपक्षनिर्णया उपपादिताः॥

## ज्योतिश्चरणाभिधानात्॥ २४॥

इदमामनन्ति "अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्व्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति। तत्र संशयः। किमिह ज्योतिःशब्देनादित्यादिकं ज्योतिरभिधीयते किम्वा पर आत्मेति अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तं, इह तल्लिङ्गमेवास्ति नास्तीति विचार्य्यते। किं तावत् प्राप्तं। आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यते इति। कुतः। प्रसिद्धेः तमो ज्योतिरिति हीमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ। चक्षुर्वृत्तेर्निरोधकं शार्व्वरादिकं तम उच्यते तस्या एवानुग्राहक-

---

तिश्चरणाभिधानात्। छान्दोग्यमेवोदाहरति॥ इदमिति॥ गायत्र्युपाधिकब्रह्मोपास्त्यानन्तर्य्यार्थोऽथशब्द.। अतो दिवो द्युलोकात् परः परस्तादुपरि ज्योतिर्दीप्यते तदिदमिति जाठरात्मावध्यस्यते। कुत्र दीप्यते तत्राह॥ विश्वत इति॥ विश्वस्मात् प्राणिवर्गादुपरि सर्व्वस्मात् भूरादिलोकादुपरि ये लोकास्तेषूत्तमेषु न विद्यन्ते उत्तमा येभ्य इत्यनुत्तमेषु सर्व्वसंसारमण्डलातीतं परं ज्योतिरिदमेव यद्देहस्थमित्यर्थः। अस्य पूर्व्वेणागतार्थत्वं वदन् प्रत्युदाहरणसङ्गतिमाह॥ अर्थान्तरेति॥ अत्र स्ववाक्ये स्पष्टब्रह्मलिङ्गाभावेऽपि पादोऽस्येति पूर्व्ववाक्ये भूतपादत्वलिङ्गमस्तीति पादसङ्गतिः। पूर्व्वोत्तरपक्षयोर्जडब्रह्मज्योतिषोरुपास्तिः फलमिति भेद.। नन्वज्ञानतमोविरोधित्वात् ब्रह्मापि ज्योतिः पदशक्यतया प्रसिद्धमस्ति नेत्याह॥ चक्षुरिति॥ शर्व्वर्य्यां रात्रौ भवं शार्व्वरमोम-

मादित्यादिकं ज्योतिस्तया दीप्यते, तृतीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा। न हि रूपादिहीनं ब्रह्म दीप्यत इति मुख्यां श्रुतिमर्हति। किञ्च द्युमर्य्यादत्वश्रुतेश्च। न हि चराचरबीजस्य ब्रह्मणः सर्व्वात्मकस्य द्यौर्मर्य्यादा युक्ता, कार्य्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्य्यादा स्यात् परो दिवो ज्योतिरिति च ब्राह्मणं। ननु कार्य्यस्यापि ज्योतिषः सर्व्वत्र गम्यमानत्वात् द्युमर्य्यादावत्त्वमसमञ्जसं, अस्तु तर्ह्यत्रिवृत्कृतं तेजः प्रथमजं। न। अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति। इदमेव प्रयोजनं यदुपास्यत्वमिति चेत्, न, प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात्। "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति चाविशेषश्रुतेः। न चात्रिवृत्कृतस्यापि तेजसो द्युमर्य्यादत्वं प्रसिद्धं

---

मिति यावत्, अनेनावरकत्वाद्रूपवत्त्वाच्च कुड्यवद्भावरूपं तम इत्यर्थादुक्तं भवति। ज्योतिः श्रुतेरनुग्राहकलिङ्गान्याह॥ तथेत्यादिना॥ भास्वररूपात्मिका दीप्तिस्तेजस एव लिङ्गमित्याह॥ न हीति॥ मास्तु मर्य्यादेत्याशङ्क्य श्रुतत्वान्मैवमित्याह॥ परो दिव इति॥ मर्य्यादां ब्रूत इति शेषः। ब्रह्मवत् कार्य्यस्यापि मर्य्यादायोगान्निरर्थकं ब्राह्मणमिति कश्चिदाक्षिपति॥ नन्विति॥ एकदेशी ब्रूते॥ अस्त्विति॥ सर्गादौ जातं किञ्चिदतीन्द्रियं तेजो दिवः परस्तादस्ति श्रुतिप्रामाण्यादित्यर्थः। अध्ययनविध्युपात्तश्रुतेर्निष्फलं वस्तु-तोऽर्थ इत्याक्षिप्य ब्रूते॥ नेति॥ ध्यानं फलमित्याशङ्क्य निष्फलस्य क्वापि ध्यानं नास्तीत्याह॥ इदमेवेत्यादिना॥ प्रयोजनान्तरं तमोनाशादिकं। अत्रिवृत्कृतं तेजोऽङ्गीकृत्याफलत्वमुक्ता तदेव नास्तीत्याह॥ तासामिति॥ तेजोऽबन्नानां देवतानामेकैकं द्विधा विभज्य पुनस्त्वेकैकं भागं द्वेधा कृत्वा स्वभागादितरभागयोर्निक्षिप्य तन्त्रिगुणरज्जुवत्त्रिवृतं करवाणीत्यविशेषोक्तेर्नास्त्यत्रिवृत्कृतं किञ्चिदित्यर्थः। किञ्चात्र यदतः पर इति यच्छब्देनान्यतः प्रसिद्धं द्युमर्य्यादत्वं ध्यानायानूद्यते। न चात्रिवृत्कृतस्य तत् क्वचित् प्रसिद्धमित्याह॥ न चेति॥ एकदेशिमते निरस्ते साक्षात् पूर्व्व-

अस्तु तर्हि त्रिवृत्कृतमेव तत्तेजो ज्योतिःशब्दं। नन्वक्तमर्वागपि दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति, नैष दोषः सर्व्वत्रापि गम्यमानस्य ज्योतिषः परो दिव इति उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते, न तु निष्प्रदेशस्यापि ब्रह्मणः प्रदेशविशेषकल्पना भागिनी। "सर्व्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इति चाधारबहुत्वश्रुतिः कार्य्ये ज्योतिषि उपपद्यतेतरां "इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते। सारूप्यनिमित्ताश्चाध्यासा भवन्ति यथा "तस्य भूरिति शिर एकं शिर एकमेतदक्षर" इति। कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वं "तस्यैषा दृष्टिस्तस्यैषा श्रुतिः" इति चौष्ण्यघोषविशिष्टत्वश्रवणात् "तदेतत् दृष्टञ्च श्रुतञ्चेत्युपासीत" इति च श्रुतेश्चक्षुष्यः श्रुतो भवतीति य एवं वेदेति चाल्पफलश्रवणादब्रह्मत्वं महते हि फलाय ब्रह्मोपासनमिष्यते। न चान्यदपि किञ्चित् स्ववाक्ये प्राणाकाशवज्ज्योतिषोऽस्ति ब्रह्मलिङ्गं। न च पूर्व्वस्मिन्नपि वाक्ये ब्रह्मनिर्द्दिष्टमस्ति "गायत्री वा इदं सर्व्वं भूतं" इति छन्दोनिर्द्देशात्। अथापि कथञ्चित्

---

पत्ती भूत॥ अस्तु तर्हीति॥ प्रदेशविशेषः दिवः परस्ताद्देदीप्यमानः सूर्य्यादितेजोऽवयवविशेषः तस्य परिग्रह उपासनार्थो न विरुध्यत इत्यन्वयः। स एव कौक्षेयज्योतिषि उपास्यते तस्यापि तेजस्त्वादिति भावः। ब्रह्मणोऽपि ध्यानार्थं प्रदेशस्थत्वं कल्प्यतां नेत्याह॥ न त्विति॥ निष्प्रदेशस्य निरवयवस्य विशेषेऽस्ति दिवः परस्ताद्देदीप्यमानब्रह्मावयवकल्पनाभागिनी युक्ता न स्वित्यन्वयः। अप्रामाणिकगौरवापातादिति भावः। ततः किं तत्राह। सारूप्येति॥ यथा एकत्वसाम्याद्भूरिति व्याहृतौ प्रजापतेः

पूर्व्वस्मिन् वाक्ये ब्रह्म निर्द्दिष्टं स्यात्, एवमपि न तस्येह प्रत्यभिज्ञानमस्ति, तत्र हि त्रिपादस्यामृतं दिवि इति द्यौरधिकरणत्वेन श्रूयते, अत्र पुनः "परो दिवो ज्योतिः" इति द्यौर्मर्य्यादात्वेन। तस्मात् प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः ज्योतिरिह ब्रह्म ग्राह्यं। कुतः। चरणाभिधानात्, पादाभिधानादित्यर्थः। पूर्व्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्द्दिष्टं "तावानस्य महिमा ततो ज्यायांश्च पुरुषः पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि"

---

शिरोदृष्टिः श्रुता तथा जाठरागावब्रह्मत्वं घोषादिश्रुत्या प्रसिद्धमिति जडज्योतिष्टं साम्यं वाच्यमित्यर्थः। यद्देहस्पर्शेनैनौष्ण्यज्ञानं प्रसिद्धं सैषा तस्य जाठराग्नेर्दृष्टिः, यत् कर्णपिधानेन घोषश्रवणं, सैषा तस्य श्रुतिरित्यर्थः। ज्योतिषो जडत्वे लिङ्गान्तरमाह॥ तदेतदिति॥ ज्योतिरित्यर्थः। चक्षुष्यश्चक्षुर्हितः सुन्दरः, श्रुतो विख्यातः। न चान्यदपीति ब्रह्मलिङ्गमपि किञ्चिदन्यन्नास्तीत्यन्वयः। ननु त्रिपादस्यामृतं दिवीति पूर्व्ववाक्योक्तं ब्रह्मात्र ज्योतिःपदेन गृह्यतामित्याशङ्क्याह॥ न चेति॥ ननु सर्व्वात्मकत्वामृतत्वाभ्यां ब्रह्मोक्तमित्यत आह॥ अथापीति॥ कथञ्चिच्छन्दोद्वारेत्यर्थः। दिवि दिव इति विभक्तिभेदान्न प्रत्यभिज्ञेत्यर्थः। प्रकृते ज्योतं प्राकृतं कार्य्यमित्यर्थः। आचारं निरस्यति॥ पादेति॥ गायत्री वा इदं सर्व्वं भूतं वाग्वै गायत्री येयं पृथिवी यदिदं शरीरं यदस्मिन् पुरुषे हृदयमिमे प्राणा इति भूतवाक्पृथिवीशरीरहृदयप्राणात्मिका षड्विधा षड्भिरक्षरैश्चतुष्पदा गायत्रीति। यदुक्तं तावत् तत्परिमाणः सर्व्वः प्रपञ्चोऽस्य गायत्र्यनुगतस्य ब्रह्मणो महिमा विभूतिः, पुरुषस्तु पूर्णब्रह्मरूपः, अतः प्रपञ्चाज्ज्यायानधिकः। आधिक्यमेवाह॥ पाद इति॥ सर्व्वं जगदेकः पादोऽंशः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति स्मृतेः। अस्य पुरुषस्य दिवि स्वप्रकाशस्वरूपे त्रिपादमृतरूपमस्ति, दिवि सूर्य्यमण्डले वा ध्यानार्थमस्ति, कल्पिताज्जगतो ब्रह्मस्वरूपमनन्तमस्तीत्यर्थः। यथा लोके पादात् पादत्रयमधिकं तथेदमधिकमिति बोधनार्थं त्रिपादमृतमित्युक्तं लोके न त्रिपात्त्वं विवक्षितमिति मन्तव्यं। यदतः पर इति यच्छब्दस्य

इत्यनेन मन्त्रेण। तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धिरूपं निर्द्दिष्टं तदेवेह द्युसम्बन्धात् निर्द्दिष्टमिति प्रत्यभिज्ञायते। तत् परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयातां। न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः, परस्यामपि हि शाण्डिल्यविद्यायामनुवर्त्तिष्यते ब्रह्म। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यं। यत्तूक्तं "ज्योतिर्दीप्यत" इति च एतौ शब्दौ कार्य्ये*ज्योतिषि प्रसिद्धाविति, नायं दोषः, प्रकरणात् ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात् दीप्यमानकार्य्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसम्भवात्। "येन सूर्य्यस्तपति तेजसेद्धः" इति च मन्त्रवर्णात्। यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्त्तते। अन्यत्रापि प्रयोगदर्शनात् "वाचैवायं ज्योतिषास्ते मनोज्योतिर्जुषतां" इति च। तस्माद्यत् कस्यचिदव-

प्रसिद्धार्थवाचित्वात् पूर्व्ववाक्यप्रसिद्धं ब्रह्म ग्राह्यमित्याह ॥ तत्रेति॥ ननु यदाग्नेयोऽष्टाकपाल इत्यत्र यत्पदस्याप्रकृतार्थकत्वं दृष्टमित्यत आह। तत परित्यज्येति॥ तत्र यागस्यान्यतः प्रसिद्धेरभावेनापूर्व्वत्वादगत्या यदोऽप्रसिद्धार्थत्वमाश्रितं, इह तु पूर्व्ववाक्यप्रसिद्धस्य ब्रह्मणो द्युसम्बन्धेन प्रत्यभिज्ञातस्य यदर्थत्वनिश्चयात्तत्पदैकार्थकज्योतिःपदस्यापि स एवार्थ इत्यर्थः। सन्दंशन्यायादप्येवमित्याह॥ न केवलमिति॥ सर्व्वं खल्विदं ब्रह्मेत्युत्तरत्र ब्रह्मानुवृत्तेर्मध्यस्थं ज्योतिर्वाक्यं ब्रह्मपरमित्यर्थः॥ प्रकरणादिति। प्रकृतापेक्षयत्पदश्रुत्या द्युसम्बन्धभूतपादत्वादिलिङ्गैश्चेत्यर्थः। अतः प्रकरणाज्ज्योतिःश्रुतिबाधो न युक्त इति निरस्तं अविशेषत्वादिति ब्रह्मव्यावर्त्तकत्वाभावादित्यर्थः। येन तेजसा चैतन्येनेद्धः प्रकाशितः सूर्य्यस्तपति प्रकाशयति तं बृहन्तमवेदविन्न मनुत इत्यर्थः। ज्योतिः शब्दस्य

* कार्ये इति मु० पु० पाठः।

भासकं तत्तज्ज्योतिःशब्देनाभिधीयते। तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः। "तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति" "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं"इत्यादिश्रुतिभ्यश्च। यदप्युक्तं द्युमर्य्यादत्वं सर्व्वगतस्य ब्रह्मणो नोपपद्यत इति, अत्रो-च्यते, सर्व्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। नन्वुक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोप-पद्यत इति। नायं दोषः, निष्प्रदेशस्यापि ब्रह्मण उपाधिविशे-षसम्बन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा ह्यादित्ये चक्षुषि हृदये इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते,ए-तेन विश्वतः पृष्ठेष्वित्याधारबहुत्वमुपपादितं। यदप्येतदुक्तं श्रौष्ण्य-घोषाभ्यामनुमिते कौक्षेये कार्य्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिवः कार्य्यं ज्योतिरेवेति तदप्ययुक्तं, परस्यापि ब्रह्मणो नामादि-प्रतीकत्ववत् कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः। दृष्टञ्च श्रुतञ्च "इत उपासीत" इति तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वञ्च भविष्यति।

---

कार्य्यज्योतिष्येव श्रुतिरित्यङ्गीकृत्य कार्य्यब्रह्मलक्षकत्वमुक्त्वा ब्रह्मण्यपि श्रुतिमाह॥ यदेति॥ गाढान्धकारे वाचैव ज्योतिषा लोक आसनादि-व्यवहारं करोतीत्यर्थः। "आज्यं जुषतां पिबतां मनोज्योतिः प्रकाशकं भ-वति"इत्याज्यस्तुतिः। गच्छन्तमनुगच्छतः खस्यापि गतिरस्ति तथा सर्व्व-स्य स्वनिष्ठं भानं स्यादित्यत आह॥ तस्य भासेति॥ तत्कालावच्छिन्नं ब्रह्म-सूर्य्यादिज्योतिषां साक्षिभूतमायुरमृतमिति च देवा उपासत इत्यर्थः। ज्योतिषोऽमितत्ववत् द्युमर्य्यादत्वादिकं ध्यानार्थं कल्पितं ब्रह्मणो युक्तमि-त्याह॥ अत्रोच्यते इत्यादिना॥ दिवः परमित्यन्वयः, आरोप्यस्य ध्येय-स्यालम्बनस्य च सादृश्यनियमो नास्तीत्याह॥ परस्यापीति॥ भवि-

यदप्यल्पफलश्रवणान्न ब्रह्मेति तदप्यनुपपन्नं। न हि इयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति। यत्र हि निरस्तसर्व्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते, तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते। यत्र तु गुणविशेषसम्बन्धं प्रतीकविशेषसम्बन्धं वा ब्रह्मोपदिश्यते, तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विन्दते वसु य एवं वेद"इत्याद्यासु श्रुतिषु। यद्यपि न स्ववाक्ये किञ्चिज्ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्व्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति। तदुक्तं सूत्रकारेण ज्योतिश्चरणाभिधानादिति। कथं पुनः वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिःश्रुतिः स्वविषयात् प्रच्याव्य शक्या व्यावर्त्तयितुं। नैष दोषः। "यदतःपरो दिवो ज्योतिः" इति प्रथमतरपठितेन यच्छब्देन सर्व्वनाम्ना द्युसम्बन्धात् प्रत्यभिज्ञायमाने पूर्व्ववाक्यनिर्द्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सति अर्थाज्ज्योतिःशब्दस्यापि ब्रह्मविषयत्वोपपत्तेः। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यं॥

---

ध्यति ब्रह्म ज्योतिष इति शेषः। तं यथा यथोपासते तथा फलं भवतीति श्रुतेरित्याह॥ न हीयत इति॥ ज्ञानफलवदुपास्तिफलमेकरूपं किं न स्यादत आह॥ यत्र हीति॥ ज्ञेयैकत्वादित्यर्थः। ध्येयन्तु नानेत्याह॥ यत्र त्विति॥ ईश्वरो जीवरूपेणान्नमत्तीत्यन्नाद, अन्नस्यासमन्ताद्दाता वा। वसु हिरण्यं ददातीति वसुदान इति गुणविशेषसम्बन्धं यो वेद स धनं विन्दते दीप्ताग्निश्च भवति नाम्नो वागुत्तमा मनो वा प्रतीकं वाचो भूय इति प्रतीकविशेषध्यानश्रुतिसंग्रहार्थमाद्यपदं सन्निधे श्रुतिर्बलीयसीति शङ्कते॥ कथं पुनरिति॥ प्रथमश्रुत्यनुसारेण चरमश्रुतिर्नीयत इत्याह॥ नैष इति॥ सर्व्वनाम्ना स्वसामर्थ्येन स्वस्य

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनं॥ २५॥

अथ यदुक्तं पूर्व्वस्मिन्नपि वाक्ये न ब्रह्माभिहितमस्ति "गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च" इति गायत्र्याख्यस्य छन्दसोऽभिहितत्वादिति तत् परिहर्त्तव्यं। कथं पुनश्छन्दोऽभिधानान्न ब्रह्माभिहितमिति शक्यते वक्तुं, यावता "तावानस्य महिमा" इत्येतस्यामृचि चतुष्पाद्ब्रह्म दर्शितं। नैतदस्ति। "गायत्री वा इदं सर्व्वं" इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयवाक्प्राणप्रभेदैर्व्याख्याय "सैषा चतुष्पदा षड्विधा गायत्री" तदेतदृचाभ्यनूक्तं "तावानस्य महिमा" इति तस्यामेव व्याख्यातरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद्ब्रह्मचतुष्पादभिदध्यात्। योऽपि तत्र "यद्वै तत् ब्रह्म" इति ब्रह्मशब्दः, सोऽपि छन्दसः प्रकृतत्वात् छन्दोविषय एव। "य एतामेवं ब्रह्मोपनिषदं वेद" इत्यत्र हि वेदोपनिषदमिति व्याचक्षते। तस्माच्छन्दोऽभिधानान्न ब्रह्मणः प्रकृतत्वमिति चेत्। नैष दोषः। तथा चेतोऽर्पणनिगदात्, तथा गायत्र्याख्यछन्दोद्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निग-

---

सर्व्वनाम्नः सामर्थ्यं सन्निहितवाचित्वं तद्बलेन परामृष्टे सतीति योजना। यच्छब्दयत्पदसामानाधिकरण्यादित्यर्थः। छन्दोऽभिधानाद्ब्रह्म प्रकृतं नास्तीति शङ्कामेकदेशी दूषयति॥ कथमिति॥ शङ्कां साधयति॥ नैतदित्यादिना॥ चतुष्पदत्वादिकं पूर्व्वमेव व्याख्यातं॥ य एतामेवमिति॥ वेदरहस्यभूतां मधुविद्यामेवमुक्तरीत्या यः कश्चिद्वेद तस्योदयास्तमयरहितब्रह्मप्राप्तिर्भवतीत्यर्थः। तथाच वेदत्वात् गायत्र्या ब्रह्मशब्दो

द्यते "गायत्री वा इदं सर्व्वं" इति। न ह्यक्षरसन्निवेशमात्राया गायत्र्याः सर्व्वात्मकत्वं सम्भवति। तस्माद्यद्गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म निर्दिष्टं, "तदिदं सर्व्वं" इत्युच्यते। यथा "सर्व्वं खल्विदं ब्रह्म" इति। कार्य्यञ्च कारणादव्यतिरिक्तमिति वक्ष्यामः। तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र तथान्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते,एतमग्नावध्वर्य्यव एतं महाव्रते छन्दोगाः" इति। तस्मादस्ति छन्दोऽभिधानेऽपि पूर्व्वस्मिन् वाक्ये ब्रह्म निर्द्दिष्टं, तदेवं ज्योतिर्वाक्येऽपि परामृश्यते, उपासनान्तरविधानाय। अपर आह साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते संख्यासामान्यात् यथा गायत्रीचतुष्पदा षडक्षरैः पादै-

---

युक्त इति भावः॥ गायत्रीशब्देन तदुपादानत्वेनानुगतब्रह्मलक्षणायां वीजं। अनुपपत्तिमाह॥ न ह्यक्षरेति॥ ब्रह्मणोऽपि कथं सर्व्वात्मकत्वं तत्राह॥ कार्य्यञ्चेति॥ न च गायत्र्या ध्यानार्थं सर्व्वात्मत्वारोप इति वाच्यं, स्वतः सर्व्वात्मनो ध्यानसम्भवेनासदारोपायोगादिति भावः। तथा हि दर्शनमिति सूत्रशेषं व्याचष्टे॥ तथान्यत्रेति॥ दृश्यत इति दर्शनं दृष्टमित्यर्थः। एतं परमात्मानं बह्वृच ऋग्वेदिनो महत्युक्थे शस्त्रे तदनुगतमुपासते। एतमेवाग्निरहस्ये तमेतमग्निरित्यध्वर्य्यव उपासत इति श्रुते यजुर्वेदिनोऽग्नौ उपासते। एतमेव छान्दोगाः सामवेदिनो महाव्रते क्रतौ उपासते, इति तैत्तिरीयके दृष्टमित्यर्थः। गायत्रीशब्दो ब्रह्मलक्षक इति व्याख्याय गौण इत्याह॥ अपर इति॥ साक्षादेव वाच्यार्थरूपां विनैवेति यावत्। पूर्व्वं तूपास्यतया गायत्रीपदेनाजहल्लक्षणया गायत्री ब्रह्मणी द्वे अपि लक्षिते। न च गायत्री सर्व्वमित्यन्वयासम्भवः घटो रूपीति पदार्थैकदेशे घटे रूपान्वयवत् गायत्रीपदार्थैकदेशे गायत्र्यनुगते सद्रूपे प्रधाने सर्व्वात्मकत्वान्वयसम्भवादिति भाव। तथा

स्तथा ब्रह्म चतुष्पात्। तथाऽन्यत्रापि छन्दोऽभिधायी शब्दोऽर्थान्तरे संख्यासाम्यात् प्रयुज्यमानो दृश्यते। तद्यथा "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत्कृतं" इत्युपक्रम्याह "सैषा विराडन्नाद" इति। अस्मिन् पक्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानं सर्व्वथाऽप्यस्ति पूर्व्वस्मिन् वाक्ये प्रकृतं ब्रह्मेति॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवं॥ २६॥

इतश्चैवमभ्युपगन्तव्यमस्ति। पूर्व्वस्मिन् वाक्ये प्रकृतं ब्रह्मेति यतो भूतादीन् पादान् व्यपदिशति। भूतपृथिवीशरीरहृदयानि हि निर्द्दिश्याह "सैषा चतुष्पदा षड्विधा गायत्रीति। न हि ब्रह्माश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते। अपि च ब्रह्मानाश्रयणे नेयमृक् सम्बध्येत "तावानस्य महिमा" इति। अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते "पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवि" इति सर्व्वात्मत्वोपपत्तेः पुरुष-

---

च सूत्रे सिद्धान्तभागस्यायमर्थः। तथा गायत्रीवच्चतुष्पात्त्वगुणसामान्याच्चेतो ब्रह्मणि समर्प्यते येन सचेतोऽर्पणो गायत्रीशब्दस्तेन ब्रह्मण एव निगदात्, अभिधानात्, छन्दोऽभिधानमसिद्धमिति। अधुना तथा हि दर्शनमिति शेषं व्याचष्टे॥ तथेति॥ संवर्गविद्यायामधिदैवमग्निसूर्य्यचन्द्राम्भांसि वायौ लीयन्ते। अध्यात्मं वाक्चक्षुश्रोत्रमनांसि प्राणमपियन्तीत्युक्तं ते वा एते पञ्चान्ये आधिदैविकाः, पञ्चान्ये आध्यात्मिकास्ते मिलित्वा दशसंख्याकाः सन्तः कृतमित्युच्यन्ते। सन्ति हि कृतत्रेताद्वापरकलिसंज्ञकानि चत्वारि द्यूतानि क्रमेण चतुरङ्कत्र्यङ्कद्व्यङ्कैकाङ्कानि तत्र कृतं दशात्मकं भवति चतुर्व्वङ्केषु त्रयाणां त्रिषु द्वयोर्द्वयोरेकस्य चान्तर्भावात्, तथा च दशत्वगुणेन वाय्वादयः कृतशब्देनोच्यन्ते। एवं कृतत्वं वाय्वादीनामुपक्रम्याह॥ सैषेति॥ विधेयापेक्षया स्त्रीलिङ्गनि-

सूक्तेऽपीयमृक् ब्रह्मपरतयैव समाम्नायते। स्मृतिश्च ब्रह्मण एवंरूपतां दर्शयति "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति "यद्वैतवद्ब्रह्म" इति च निर्देशः। एवं सति सुखार्थ उपपद्यते। "ते वा एते पञ्चब्रह्मपुरुषाः" इति च "हृदयसुषिरेषु ब्रह्मपुरुषः" इति श्रुतिः ब्रह्मसम्बन्धितायां विवक्षितायां सम्भवति। तस्मादस्ति पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म। तदेव ब्रह्म ज्योतिर्वाक्ये द्युसम्बन्धात् प्रत्यभिज्ञायमानं परामृश्यत इति स्थितं ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

यदप्येतदुक्तं पूर्व्वत्र त्रिपादस्यामृतं दिवीति सप्तम्या द्यौराधारत्वेनोपदिष्टा, इह पुनरथ यदतः परो दिव इति पञ्चम्या मर्य्यादात्वेन तस्मादुपदेशभेदात् न तस्येह प्रत्यभिज्ञानमस्तीति तत्

---

देशः, विराट्पदं छन्दोवाचकं "दशाक्षरा विराट" इति श्रुते· दशत्वसाम्येन वाय्वादयो विराडित्युच्यन्ते। एवञ्च दशत्वद्वारा वाय्वादिषु कृतत्वं विराट्त्वञ्च ध्येयं, तत्र विराट्त्वध्यानात् सर्व्वमस्यान्नं भवति "अन्नं विराट" इति श्रुतेः कृतत्वध्यानादन्नादो भवति कृतद्यूतस्यान्नादत्वात्। कृतं हि स्वीयचतुरङ्केषु त्र्यङ्कादिकमन्तर्भावयदन्नमत्तीव लक्ष्यते। अत एव कृतजयादितरद्यूतजयः श्रुत्युक्त·। कृताय विजितायाधरेया· संयन्तीति, अयो द्यूतं कृतसंज्ञोऽयः कृतायः स विजितो येन तस्मै, अधरेयाः त्र्यङ्कादयः आयाः संयन्ति उपनमन्ते तेन जिता भवन्तीत्यर्थः। एवञ्च सा वाय्वादिदशात्मिका एषा कृतशब्दिता विराडन्नं कृतत्वादन्नादिनीत्यर्थ सर्व्वथापीति ॥ गायत्रीति पदस्य लक्षकत्वे गौणत्वेऽपि चेत्यर्थः। अत्रापर आहेत्यपरपदेन गौणत्वं स्वमतं नेति द्योतयति। अजहल्लक्षणायाम्‌ हि वाग्वै गायत्रीति वागात्मत्वं गायतिच त्रायते चेति निरुक्तनामकञ्च गायत्र्या उपाधिस्तेनोपास्यत्वादुपपन्नतरं गौणपक्षे गायत्र्याभावाद्‌-

परिहर्त्तव्यं। अत्रोच्यते, नायं दोष उभयस्मिन्नप्यविरोधात्, उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञानं विरुध्यते। यथा लोके वृक्षाग्रेण सम्बन्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात् परतः श्येन इति च, एवं दिव्येव सत् ब्रह्म दिवः परमित्युपदिश्यते। अपर आह यथा लोके वृक्षाग्रेणासम्बद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते वृक्षाग्रे

---

भयं सर्व्वात्मकत्वमात्रेणोपपादनीयं, एवं गायत्रीपदस्य स्वार्थत्यागोऽप्रसिद्धचतुष्पात्त्वगुणद्वारा विप्रकृष्टलक्षणा चेति बह्वसमञ्जस। ननु गायत्री वा इदं सर्व्वं, इति गायत्री श्रुतेः कथं लक्षणेत्याशङ्क्य वाक्यशेषगतसर्व्वात्मकत्वाद्यनेकबलवत् प्रमाणसम्बन्धेन ब्रह्मणि तात्पर्य्यावगमादित्याह॥ भूतादिपादेति॥ एवं पदार्थमाह॥ इतश्चेति॥ सूत्रस्यादिपदार्थं दर्शयति॥ भूतपृथिवीति॥ अत्र सूत्रभाष्यकारयोर्भूतादिभिश्चतुष्पादगायत्री विसम्मतं षडक्षरैश्चतुष्पात्त्वं वृत्तिकारोक्तमप्रसिद्धत्वकारसूचितं। युक्त्यन्तरमाह॥ अपि चेति॥ ब्रह्मपरस्तोत्पन्नत्वाच तस्यात्तत्परत्वमित्याह॥ पुरुषेति॥ ब्रह्मपदस्य छन्दोवाचित्वमुक्तं निरस्यति॥ यद्वै तत् ब्रह्मेति॥ पूर्वस्यामृचि ब्रह्मोक्तावित्यर्थं हृदयस्य चतुर्दिक्षूर्द्धञ्च पञ्चसुषय सन्ति। तेषु ब्रह्मस्थानहृन्नगरस्य प्राणादिद्वारेषु क्रमेण प्राणव्यानापानसमानोदानाः पञ्चद्वारपाला इति ध्यानार्थं श्रुत्या कल्पितं। तत्र हृदयच्छिद्रस्थप्राणेषु ब्रह्मपुरुषत्वश्रुतिर्हृदि गायत्र्याख्यब्रह्मण उपासनासम्बन्धितया ब्रह्मणो द्वारपालत्वाद्ब्रह्मपुरुषा इति सम्भवतीत्याह॥ पञ्चब्रह्मेति॥ दिवि दिव इति विभक्तिभेदात् प्रकृतप्रत्यभिज्ञा नास्तीत्युक्तं नोपेक्षणीयमित्याह॥ तत्परिहर्त्तव्यमिति॥ परिहारं प्रतिजानीते॥ अत्रेति॥ सूत्रेणार्थं वदन् परिहारमाह॥ नायमिति॥ एव सर्व्वत्र व्याख्येय प्रधानप्रातिपदिकार्थाद् द्युसम्बन्धेन प्रत्यभिज्ञाया विभक्त्यर्थभेदो न प्रतिबन्धकः, कथञ्चिदाधारस्यापि मर्य्यादात्वसम्भवात्। यथा वृक्षाग्रं स्वलग्नभागावच्छिन्नश्येनस्याधारः सन्नेव स्वालग्नभागावच्छिन्नस्य तस्यैव मर्य्यादा भवति, एवं दिवि सूर्य्ये हार्दाकाशे वा मुखे च्याधारे

श्येनो वृक्षाग्रात् परतः श्येन इति च, एवं च दिवः परमपि सत् ब्रह्म दिवीत्युपदिश्यते। तस्मादस्ति पूर्व्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानं। अतः परमेव ब्रह्म ज्योतिःशब्दमिति सिद्धं॥

## प्राणस्तथानुगमात्॥ २८॥

अस्ति कौषीतकिब्राह्मणोपनिषदीन्द्रप्रतर्द्दनाख्यायिका "प्रतर्द्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्याम्नाता। तस्यां श्रूयते "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इति, तथोत्तरत्रापि "अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति" इति, तथा "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति, अन्ते च "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इत्यादि। तत्र

---

सद् ब्रह्म दिवो मर्य्यादात्वं तदलभमाकाशावच्छिन्नं ब्रह्म प्रति कल्पयित्वा दिवः परमित्युच्यत इत्यर्थः। यदाकाशेन अनवच्छिन्नं ब्रह्म गृहीत्वा पञ्चम्या दिवो मर्य्यादात्वमेव मुख्यं तदा गङ्गायां घोष इतिवत् सप्तम्या सामीप्यलक्षणयाऽऽधारत्वं व्याख्येयमित्याह॥ अपर इति॥ सम्बद्धं प्रत्याधारत्वं मुख्यं पूर्व्वमुक्तं दिव्येव सा(इ)ति असम्बद्धं प्रतिमर्य्यादात्वं मुख्यमधुनोच्यते। दिवः परमपीति भेदः। तस्माज्ज्योतिर्वाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धं। प्राणस्तथानुगमात्। दिवोदासस्यापत्यं दैवोदासिः प्रतर्द्दनो नाम राजा युद्धेन पुरुषकारेण च कारणेन्द्रस्य प्रेमास्पदं गृहं जगाम। तं ह इन्द्र उवाच प्रतर्द्दन वरं ते ददामीति। स होवाच प्रतर्द्दनः, यं त्वं मर्त्योपहिततमं मन्यसे तं वरं त्वमेवालोच्य मह्यं देहीति। तत्र इन्द्र इदमाह प्राणोऽस्मीत्यादिमुख्यं प्राणं निरसितुं प्रज्ञात्मत्वमुक्तं निर्विशेषचिन्मात्रं निरस्यति॥ तं मामिति॥ इदं प्राणस्येन्द्रदेवतात्वे लिङ्गं। मुख्यप्राणत्वे लिङ्गमाह॥ अथेति॥ वागादीनां देहधारणशक्त्यभावनिश्चयानन्तरमित्यर्थः। प्राणस्य देहधारकत्वमुक्त्वा-

संशयः, किमिह प्राणशब्देन वायुमात्रमभिधीयते, उत देवतात्मा, उत जीवः, अथवाऽपरं ब्रह्मेति। नन्वत एव प्राण इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वमिहापि च ब्रह्मलिङ्गमस्ति "आनन्दोऽजरोऽमृतः" इत्यादि कथमिह पुनः संशयः सम्भवति। अनेकलिङ्गदर्शनादिति ब्रूमः। न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते सन्ति हि इतरलिङ्गान्यपि। "मामेव विजानीहि" इतीन्द्रस्य वचनं देवतात्मलिङ्गमिदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गं। न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादिजीवलिङ्गं, अत उपपन्नः संशयः। तत्र प्रसिद्धो वायुः प्राण इति प्राप्ते, उच्यते, प्राणशब्दवाच्यं ब्रह्म विज्ञेयं। कुतः। तथानुगमात्। तथा हि पौर्वापर्य्येण पर्य्यालोच्यमाने वाक्ये पदार्थानां समन्वयो * ब्रह्मप्रतिपादनपर उपलभ्यते, उपक्रमे तावत् वरं वृणीष्वेतीन्द्रेणोक्तः। प्रत-

---

यकत्वस्य प्रसिद्धमिति वक्तुं खल्वित्युक्तं। प्राणस्य जीवत्वे वक्तृत्वं लिङ्गमाह॥ न वाचमिति॥ आनन्दत्वादिकं ब्रह्मलिङ्गमाह॥ अन्ते चेति॥ अनेकेषु लिङ्गेषु दृश्यमानेषु बलाबलनिर्णयार्थमिदमधिकरणमित्यगतार्थमाह॥ अनेकलिङ्गेति॥ पूर्व्वत्रप्रकृतब्रह्मवाचकयच्छब्दबलाज्ज्योतिःश्रुतिः ब्रह्मपरेत्युक्तं, न तथेह प्राणश्रुतिभङ्गे किञ्चिद्बलमस्ति। मिथो विरुद्धानेकलिङ्गानामनिश्चायकत्वादिति प्रत्युदाहरणसङ्गत्या पूर्व्वपक्षयति॥ तत्रेति॥ पूर्व्वं प्रधानप्रातिपदिकार्थबलात् विभक्त्यर्थबाधवद्वाक्यार्थज्ञानं प्रति हेतुत्वेन प्रधानानेकपदार्थबलादेकवाक्यता भङ्ग इति दृष्टान्तसङ्गतिर्वाऽस्तु। पूर्व्वपक्षे प्राणाद्यनेकोपास्तिः, सिद्धान्ते प्रत्यग्ब्रह्मधीरिति विवेकः। तथा ब्रह्मपरत्वेन पदानामन्वयावगमादिति हेत्वर्थमाह॥ तथा हीति॥ हिततमत्वकर्म्मक्षयादिपदार्थानां

---

* समन्वयो इति मु॰ पु॰ पाठः।

र्द्दनः परमं पुरुषार्थं वरमुपचिक्षेप "त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। न ह्यन्यत्र परमात्मज्ञानात् हिततमप्राप्तिरस्ति "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतिभ्यः। तथा "स यो मां वेद न ह वै तस्य केनचन कर्म्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया" इत्यादि च ब्रह्मपरिग्रहे घटते, ब्रह्मविज्ञाने हि सर्व्वकर्मक्षयः प्रसिद्धः। "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इत्याद्यासु श्रुतिषु प्रज्ञात्मत्वञ्च ब्रह्मपक्ष एवोपपद्यते। न ह्यचेतनस्य वायोः प्रज्ञात्मत्वं सम्भवति। तथोपसंहारेऽपि "आनन्दोऽजरोऽमृत" इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् सम्भवन्ति "स न साधुना कर्म्मणा भूयान् भवति न एवासाधुना कर्म्मणा कनीयानेष ह्येव साधु कर्म्म कारयति" तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधुकर्म्मकारयति। तं यमेभ्यो लोकेभ्योऽधोनिनीषते" इति "एष लोकपाल एष लोकाधिपतिरेष लोकेश" इति च। सर्व्वमेतत् परस्मिन् ब्रह्मण्याश्रीयमाणे अनुगन्तुं शक्यते न मुख्ये प्राणे। तस्मात् प्राणो ब्रह्म।

---

सम्बन्धो ब्रह्मणि तात्पर्य्यनिश्चायक उपलभ्यत इत्युक्तं विवृणोति ॥ उपक्रम इत्यादिना॥ यं मन्यसे तं वरं त्वमेव प्रयच्छेत्यर्थः। स यः का.चत् मां ब्रह्मरूपं वेद साक्षादनुभवति तस्य विदुषो लोको मोक्षो महताऽपि पातकेन न ह मीयते नैव हिंस्यते न प्रतिबध्यते ज्ञानाग्निना कर्म्मतूलराशेर्दग्धत्वादित्याह ॥ स य इति॥ साध्वसाधुनी पुण्यपापे ताभ्यामस्पृष्टत्वं तत्कारयितृत्वं निरङ्कुशैश्वर्य्यञ्च सर्व्वमेतदित्यर्थः। षष्ठ्यारवा-

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्॥२९॥**

यदुक्तं प्राणो ब्रह्मेति तदाक्षिप्यते, न परं ब्रह्म प्राणशब्दं। कस्मात्, वक्तुरात्मोपदेशात्। वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान् देवताविशेषः स्वमात्मानं प्रतर्द्दनायाचचक्षे "मामेव विजानीहि" इत्युपक्रम्य "प्राणोऽस्मि प्रज्ञात्मा" इत्यहङ्कारवादेन स एष वक्तृत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात्। न हि ब्रह्मणो वक्तृत्वं सम्भवति "अवागमनाः" इत्यादिश्रुतिभ्यः। तथा विग्रहसम्बन्धिभिरेव ब्रह्मण्यसम्भवद्भिर्द्धर्मैरात्मानं तुष्टाव "त्रिशीर्षाणं त्वाष्ट्रमहनं, अरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छं" इत्येवमादिभिः। प्राणत्वञ्चेन्द्रस्य बलवत्त्वादुपपद्यते, "प्राणो वै बलं" इति हि विज्ञायते बलस्य चेन्द्रो देवता प्रसिद्धा। या च काचित् बलकृतिरिन्द्रकर्म्मैव तदिति हि वदन्ति। प्रज्ञात्मत्वमप्यप्रतिहतज्ञानत्वाद् देवतात्मनः सम्भवति, अप्रतिहतज्ञाना देवता इति वदन्ति। निश्चिते चैवं देवतात्मोपदेशे हिततमत्वादिवचनानि यथासम्भवं

---

देन स्वात्मवाचकशब्दैराचचक्षे, उक्तवान् इत्यर्थः। वाक्यस्य इन्द्रोपासनापरत्वे लिङ्गान्तरमाह ॥ तथा विग्रहेति ॥ त्रीणि शीर्षाणि यस्येति त्रिशीर्षा त्वष्टुः पुत्रो विश्वरूपो नाम ब्राह्मणः तं हतवानस्मि। रौति यथार्थं शब्दयतीति रुक् वेदान्तवाक्यं तन्मुखे येषां ते रुङ्मुखास्तेभ्योऽन्यान् वेदान्तबहिर्मुखान् यतीनरण्यश्वभ्यो दत्तवानस्मीत्यर्थः। इन्द्रे प्राणशब्दोपपत्तिमाह ॥ प्राणत्वञ्चेति ॥ लौकिका अपीत्यर्थः। बलवाचिना प्राणशब्देन बलदेवता लक्ष्यत इति भावः। इन्द्रो हितप्रदातृत्वाद्धिततमः कर्म्मानधिकारादपाप इत्येवमाख्येयामीत्याह ॥ निश्चिते चेति ॥ किमिन्द्रपदेन विग्रहोपलक्षित चिन्मात्रमुच्यते उत विग्रहः। आद्ये वाक्यस्य

तद्विषयाण्येव योजयितव्यानि। तस्मादङ्कुरिन्द्रस्यात्मोपदेशान्न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते। अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति। अध्यात्मसम्बन्धः प्रत्यगात्मसम्बन्धस्तस्य भूमा बाहुल्यमस्मिन्नध्याय उपलभ्यते। "यावत् ह्यस्मिन् शरीरे प्राणो वसति तावदायुः" इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्यायुषः सम्प्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति न देवताविशेषस्य पराचीनस्य। तथाऽस्तित्वे च प्राणानां निःश्रेयसमित्यध्यात्ममेवेन्द्रियाश्रयं प्राणं दर्शयति। तथा "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति, "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति चोपक्रम्य "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः" एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः

---

ब्रह्मपरत्वं सिद्धं, न द्वितीय इत्याह॥ अध्यात्मेति॥ आत्मनि देहेऽधिगत इत्यध्यात्मं प्रत्यगात्मा स सम्बध्यते यैः शरीरस्थत्वादिभिरिन्द्रत्वनावसम्भावितैर्धर्मैस्ते अध्यात्मसम्बन्धास्तेषां भूमेत्यर्थः। आयुरत्र देहे प्राणवायुसञ्चारः। अस्तित्वे प्राणस्थितौ प्राणानामिन्द्रियाणां स्थितिरित्यर्थतः श्रुतिमाह॥ अस्तित्व इति॥ अथातो निःश्रेयसादानमित्याद्या श्रुतिः। इन्द्रियस्थापकत्ववद्देहोत्थापकत्वमाह॥ तथेति॥ वक्तृत्वमुक्त्वा सर्वाधिष्ठानत्वं दर्शितमित्याह॥ इति चोपक्रम्येति॥ तत्तन्नानाप्रपञ्चस्यात्मनि कल्पनायां यथा दृष्टान्तः लोके प्रसिद्धस्य रथस्यारेषु नेमिनाभ्योर्मध्यस्थशलाकासु चक्रोपान्तरूपा नेमिरर्पिता नाभौ चक्रपिण्डिकायामराः अर्पिताः एवम्भूतानि पञ्च पृथिव्यादीनि मीयन्त इति मात्राः भोग्याः शब्दादयः पञ्चेति दशभूतमात्राः प्रज्ञामात्रासु दशस्वर्पिताः इन्द्रियजाः पञ्चशब्दादिविषयप्रज्ञाः। मीयन्ते याभिरिति मात्राः पञ्चधीन्द्रियाणि नेमिवत् ग्राह्यं। ग्राहकेषु अरेषु कल्पितमित्युक्त्वा नाभि-

प्राणेऽर्पिताः "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" इति विषयेन्द्रियव्यवहारारनाभिभूतं प्रत्यगात्मानमेवोपसंहरति "स म आत्मेति विद्यात्" इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुः न पराचीनविग्रहे। "अयमात्मा ब्रह्म सर्व्वानुभूः" इति च श्रुत्यन्तरं। तस्मादध्यात्मसम्बन्धबाहुल्यात् ब्रह्मोपदेश एवायं न देवतात्मोपदेशः। कथं तर्हि वक्तुरात्मोपदेशः॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ ३०॥

इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म मामेव विजानीहीति। यथा तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्य्यश्चेति तद्वत्, "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इति श्रुतेः। यत् पुनरुक्तं "मामेव विजानीहि" इत्युक्त्वा विग्रहधर्म्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति तत्परिहर्त्तव्यं। अत्रोच्यते। न त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासः, यस्मादेवं कर्म्माहं तस्मान्मां विजानीहीति, कथं तर्हि, विज्ञानस्तुत्यर्थत्वेन। यत् कारणं त्वाष्ट्रवधादीनि साहसानि

---

स्थानीये प्राणे सर्व्वं कल्पितमित्याह॥ प्राणेऽर्पिता इति॥ स प्राणो मम स्वरूपमित्याह॥ स म इति॥ तर्हि प्रत्यगात्मनि समन्वयो न तु ब्रह्मणि। तत्राह॥ अयमिति॥ अहङ्कारवादस्य गतिं पृच्छति॥ कथमिति॥ सूत्रमुत्तरं। तद्व्याख्याति॥ इन्द्र इति॥ जन्मान्तरकृतश्रवणादिना अस्मिन् जन्मनि स्वतः सिद्धं दर्शनमार्षं विज्ञेयेन्द्रस्तुत्यर्थं उपन्यासः। न चेत् कथं तर्हि स इति पृच्छति॥ कथमिति॥ ब्रह्मज्ञानस्तुत्यर्थं स इत्याह॥ विज्ञानेति॥ नियामकं ब्रूते॥ यदिति॥ परेण तस्य मे इत्या-

उपन्यस्य परेण विज्ञानस्तुतिमनुसन्दधाति "तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै तस्य केनच कर्म्मणा लोको मीयत" इत्यादिना। एतदुक्तं भवति यस्मादीदृशान्यपि क्रूराणि कर्म्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्म्मणा लोको हिंस्यत इति। विज्ञेयन्तु ब्रह्मैव प्राणोऽस्मि प्रज्ञात्मेति वक्ष्यमाणं। तस्मात् ब्रह्मवाक्यमेतत्॥

जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥ ३१॥

यद्यप्याध्यात्मसम्बन्धभूमदर्शनान्न पराचीनस्य देवतात्मन उपदेशस्तथाऽपि न ब्रह्मवाक्यं भवितुमर्हति। कुतः। जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च। जीवस्य तावदस्मिन् वाक्ये विस्पष्टं लिङ्गमुपलभ्यते "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि अत्र रागादिभि-

---

दिना वाक्येनेत्यन्वयः। स्तुतिमाह॥ एतदुक्तमिति॥ तस्मात् ज्ञानं श्रेष्ठमिति शेषः। स्तुतज्ञानविषय इन्द्र इत्यत आह॥ विज्ञेयन्त्विति॥ देहोत्थापनं जीवलिङ्गं किं न स्यात्तत्राह॥ शरीरधारणञ्चेति॥ सर्व्वे वागादयः प्राणा अहमहं श्रेष्ठ इति विवदमानाः प्रजापतिमुपजग्मुः। स च तानुवाच यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरं पतिष्यति स वः श्रेष्ठ इति। तथा क्रमेण वागादिषूत्क्रान्तेष्वपि मूकादिभावेन शरीरं स्थितमस्थात्। मुख्यप्राणस्य तु उच्चिक्रमिषायां सर्व्वेषां व्याकुलत्वादसौ तान् वागादीन् वरिष्ठः प्राण उवाच। यूयं मोहमापद्यथ यतोऽहमेवैतत् करोमि। किं तत् पञ्चधा प्राणापानादिभावेनात्मानं विभज्य एतद्बाणमिति गच्छतीति बाणं तदेव बाणमस्थिरं शरीरमवष्टभ्याश्रित्य धारयामीत्यर्थः। हितमपमसद्दवासोत्क्रान्तिश्रुतेश्च न प्रज्ञ याज्ञमि-

करणैर्व्याप्टतस्य कार्य्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते तथा मुख्यप्राणलिङ्गमपि। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति। शरीरधारणञ्च मुख्य एव प्राणस्य धर्म्मः। प्राणसंवादे वागादीन् प्राणान् प्रकृत्य "तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाऽहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् वाणमवष्टभ्य विधारयामि" इति श्रवणात्। ये त्विमं शरीरं परिगृह्येति पठन्ति तेषामिमं जीवमिन्द्रियग्रामं वा परिगृह्य शरीरमुत्थापयतीति व्याख्येयं। प्रज्ञात्मत्वमपि जीवे तावच्चेतनत्वादुपपन्नं मुख्येऽपि प्राणे प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपन्नमेव। जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सहवृत्तित्वेनाभेदनिर्द्देशः स्वरूपेण च भेदनिर्द्देश इत्युभयथानिर्द्देश उपपद्यते "यो वै प्राणः सा प्रज्ञाया वै प्रज्ञा स प्राणः" इति, "सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति। ब्रह्मपरिग्रहे तु किं कस्मात् भिद्येत,तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां न ब्रह्मेति चेत्, नैतदेवं, उपासात्रैविध्यात्। एवं सति त्रिविधमुपासनं प्रसज्येत जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनञ्चेति। न

---

त्याह॥ जीवमुख्येति॥ अभेदनिर्द्देशमाह॥ यो वा इति॥ भेदमाह॥ सहेति॥ यदि जीवमुख्यप्राणयोर्लिङ्गानुपास्यत्वं तर्हि ब्रह्मणोऽपि लिङ्गानामुक्तत्वादुपासनं स्यात्, न चेष्टापत्तिः। उपक्रमादिना निश्चितैकवाक्यताभङ्गप्रसङ्ग इत्याह॥ नैतदेवमित्यादिना॥ न च स्वतन्त्रपदार्थभेदाद्वाक्यभेदः किं न स्यादिति वाच्यं, जीवमुख्यप्राणयोरुक्तलिङ्गाना ब्रह्मणि नेतुं शक्यतया स्वातन्त्र्यासिद्धेः, अफलपदार्थस्य फलवद्वाक्यार्थशेषत्वेन प्रधानवाक्यार्थानुसारेण तल्लिङ्गनयनस्योचितत्वाच्च। न हि प्रधानवा-

चैतदेकस्मिन् वाक्येऽभ्युपगन्तुं युक्तं,उपक्रमोपसंहाराभ्यां हि वाक्यै-कवाक्यत्वमवगम्यते।"मामेव विजानीहि"इत्युपक्रम्य"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व"इत्युक्त्वाऽन्ते "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इत्येकरूपावुपक्रमोपसंहारौ दृश्येते। तत्रार्थैकत्वं युक्तमाश्रयितुं। न च ब्रह्मलिङ्गमन्यपरत्वे परि-णेतुं शक्यं दशानां भूतमात्राणां प्रज्ञामात्राणाञ्च ब्रह्मणोऽन्यत्रा-र्पणानुपपत्तेः। आश्रितत्वाच्चान्यत्रापि ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेः। इहापि च हिततमोपन्यासादिब्रह्मलिङ्गयोगाद् ब्रह्मोपदेश एवायमिति गम्यते। यत् तु मुख्यप्राणलिङ्गं दर्शितं "इदं शरीरं परिगृह्योत्थापयति"इति तदसत्, प्राणव्यापारस्या-पि परमात्मायत्तत्वात् परमात्मन्युपचरितुं शक्यत्वात्,"न प्राणेन नापानेन मर्त्यो जीवति कश्चन,इतरेण तु जीवन्ति यस्मिन्नेतावुपा-श्रितौ"इति श्रुतेः। यदपि"न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि जीवलिङ्गं दर्शितं, तदपि न ब्रह्मपक्षं निवारयति, न हि जीवो नामात्यन्तभिन्नो ब्रह्मणः"तत्त्वमसि""अहं ब्रह्मास्मि"इत्या-दि श्रुतिभ्यः।बुद्ध्याद्युपाधिकृतन्तु विशेषमाश्रित्य ब्रह्मैव सन् जीवः

---

क्यार्थं ब्रह्मलिङ्गमन्यथा नेतुं शक्यं। न वा तदुचितमित्याह ॥ न च ब्रह्मलिङ्गमिति ॥ सूत्रशेषं व्याचष्टे ॥ आश्रितत्वाच्चेति ॥ अन्यत्रातएव प्राण इत्यादौ वृत्तेराश्रितत्वादिहापि तस्य ब्रह्मलिङ्गस्य योगाद् ब्रह्मपर एव प्राणशब्द इत्यर्थः। प्राणादिलिङ्गानि सर्व्वात्मके ब्रह्म-ण्यनायासेन नेतुं शक्यानीत्याह ॥ यत्त्वित्यादिना ॥ यस्मिन्नेतौ श्रितत्वेन स्थितौ तेनेतरेण ब्रह्मणा सर्व्वे प्राणादिव्यापारं कुर्व्वन्तीत्यर्थः। विशेषं परिच्छेदाभिमानमित्यर्थः। वक्तारं विद्यादिति न वक्तुर्ज्ञेयत्वमुच्यते तस्य

कर्त्ता भोक्ता चेत्युच्यते तस्योपाधिकृतविशेषपरित्यागेन ब्रह्मस्वरूपं प्रदर्शयितुं "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते। "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति। यत् पुनरेतदुक्तं "सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादिनो नोपपद्यत इति। नैष दोषः। ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्द्देशोपपत्तेः। उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमविरुद्धं। अथवा नोपासात्रैविध्यादाश्रितत्वादिह तद्योगादित्यस्यायमन्योऽर्थः। न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते। कथं। उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च। तत्र "आयुरमृतमित्युपास्वायुः प्राणः" इति "इदं शरीरं परिगृह्योत्थापयति" "तस्मादेतदेवोक्थमुपासीत"

---

लोकसिद्धत्वात्, किन्तु तस्य ब्रह्मत्वं बोध्यते तद्बोधाभिमुख्याय लिङ्गादय इत्यत्र श्रुत्यन्तरमाह॥ यद्वाचेति॥ येन चैतन्येन वागभ्युद्यते स कार्य्याभिमुख्येन प्रेर्य्यते तदेव वागादेरगम्यं ब्रह्मेत्यर्थः। तत्त्वम्पदवाच्ययोः स्वरूपतो भेदस्ताभ्यामुपलक्ष्यात्मस्वरूपाभेदादेकत्वं निर्द्दिश्यत इत्याह॥ नैष दोष इति॥ स्वमतेन सूत्रं व्याख्याय वृत्तिकृन्मतेन व्याचष्टे॥ अथवेति॥ उपासनात्रित्वप्रसङ्गादिति पूर्व्वमुक्तं। अत्र त्रिप्रकारकस्यैकब्रह्मविशेष्यकस्यैकस्योपासनस्य विवक्षितत्वादित्यर्थः। अतो न वाक्यभेद इति भावः। देहे चेष्टात्मकजीवनहेतुत्वं प्राणस्यायुष्ट्वं देहापेक्षया. तस्याऽनुक्तेरवस्थाना-

इति च प्राणधर्म्मः। अथ "यथास्यै प्रज्ञायै सर्व्वाणि भूतानि एकीभवन्ति तत् व्याख्यास्यामः" इत्युपक्रम्य "वागेवास्या एकमङ्गमदूदुहत् तस्यै नाम च परस्तात् प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्व्वाणि नामान्याप्नोति" इत्यादि प्रज्ञाधर्म्मः। "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यदि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः* यदा प्रज्ञामात्रा न स्युः न भूतमात्राः स्युः न ह्यन्यतरतो रूपं किञ्चन सिध्येत्, नो वा एतन्ना-

दस्तत्वमुत्थापयतीत्युक्थत्वमिति प्राणधर्म्माः। जीवधर्म्मानाह ॥ अथेति ॥ बुद्धिप्राणयोः सहस्थित्युत्क्रान्त्युक्त्याऽनन्तरमित्यर्थः। अत्र प्रज्ञापदेन साभासा जीवाख्या बुद्धिरुच्यते। तस्याः सम्बन्धीनि दृश्यानि सर्व्वाणि भूतानि यथैकं भवन्त्यधिष्ठानचिदात्मना तथा व्याख्यास्याम इत्युपक्रम्योक्तं वागेवेत्यादि अत्तरेवास्या एकमङ्गमदूदुहदित्यादिपर्य्यायाणां संक्षिप्तार्थ उच्यते। उत्पन्नाया असत्कल्पायाः साभासबुद्धेर्न्नामप्रपञ्चविषयित्व मर्द्धशरीरं, अर्थात्मकरूपप्रपञ्चविषयित्वमर्द्धशरीरमिति मिलित्वा विषयित्वाख्यं पूर्णं शरीरमिन्द्रियसाध्यं। तत्र कर्म्मेन्द्रियेषु वागेवास्याः प्रज्ञाया एकमङ्गं देहार्द्धमदूदुहत् पूरयामास, वागिन्द्रियद्वारा नामप्रपञ्चविषयित्वं बुद्धिर्लभत इत्यर्थः। चतुर्थी षष्ठ्यर्था। तस्याः पुनर्नाम किल चक्षुरादिना प्रतिविहिता ज्ञापिता भूतमात्रा रूपाद्यर्थं रूपापरस्तादपरार्द्धे कारणं भवति ज्ञानकरणद्वाराऽर्थप्रपञ्चविषयित्वं बुद्धिः प्राप्नोतीत्यर्थः। एवं बुद्धेः सर्व्वार्थदृष्टत्वमुपपाद्य तन्निष्ठचित्प्रतिबिम्बद्वारा साक्षिणि द्रष्टृत्वाध्यासमाह ॥ प्रज्ञयेति ॥ बुद्धिद्वारा चिदात्मा वाचमिन्द्रियं समारुह्य तस्याः प्रेरको भूत्वा वाचा करणेन सर्व्वाणि नामानि वक्तव्यत्वेनाप्नोति, चक्षुषा सर्व्वाणि रूपाणि पश्यतीत्येवं द्रष्टा भवतीत्यर्थः। तथाच सर्व्वद्रष्टृत्वं चिदात्मनि द्रष्टृत्वाध्यासनिमित्तश्च बुद्धेर्धर्म्म इत्युक्तं भवति सर्व्वाधारत्वानन्दत्वादिब्रह्मधर्म्म इत्याह ॥ ता वा इति ॥ दशत्वं व्याख्यातं, प्रज्ञा इन्द्रियजा ता

* यदि इति गु०।

ना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा"इत्यादि ब्रह्मधर्माः। तस्मात् ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितं। अन्यत्रापि मनोमयः प्राणशरीर इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितं, इहापि तद्युज्यते वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात् प्राणप्रज्ञाब्रह्मलिङ्गावगमाच्च। तस्माद्ब्रह्मवाक्यमेत-

---

अधिकृत्य ग्राह्यभूतमात्रा वर्त्तन्ते प्रज्ञामात्रा इन्द्रियाणि ग्राह्यं भूतजातमधिकृत्य वर्त्तन्त इति ग्राह्यग्राहकयोर्मिथःसापेक्षत्वमुक्तं साधयति ॥ यदिति॥ तदेव स्फुटयति ॥ न हीति ॥ ग्राह्येण ग्राह्यस्वरूपं न सिद्ध्यति किन्तु ग्राहकेण। एवं ग्राहकमपि ग्राह्यमनपेक्ष्य न सिद्ध्यति, तस्मात् सापेक्षत्वादेतद् ग्राह्यग्राहकद्वयं वस्तुतो न भिन्नं किन्तु चिदात्मन्यारोपितमित्याह ॥ नो इति ॥ तद्यथेत्यादि कृतव्याख्यानं। सूत्रार्थमुपसंहरति ॥ तस्मादिति ॥ अन्यधर्मेणान्यस्योपासनं कथमित्याशङ्क्याऽऽश्रितत्वादित्याह ॥ अन्यत्रापीति॥ उपाधिर्जीवः। अन्यधर्मेणोपासननियमसङ्गता वाच्या, तथाहि न तावदारण्याद्यनेकगुणविशिष्टप्राणक्रयणवत्, उपास्यत्रयविशिष्टस्य ब्रह्मणो विधिः सम्भवति सिद्धस्य विध्यनर्हत्वात्, नापि ब्रह्मानुवादेनोपास्यत्रयविधिः वाक्यभेदात्, न च नानाधर्मविशिष्टमेकमुपासनं विधीयत इति वाच्यं, तादृशविधिवाक्यस्याश्रवणात्, न च त मायुरमृतमित्युपास्वेति, अत्र मामिति जीवेनायुरिति प्राणेनामृतमिति ब्रह्मणा स्वस्वधर्मवता विशिष्टोपासनाविधिरिति वाच्यं, सर्व्वेषां धर्म्माणामश्रवणाद् ब्रह्माश्रुतेश्च। प्राणो वा अमृतमिति प्राणस्यैवामृतत्वश्रुतेः। अत्र उपासनाविधिस्त्वे न वक्तारं विद्यात्, एतदेवोक्थमुपासीत स म आत्मेति विद्यादिति जीवप्राणब्रह्मोपासनविधयः, अन्ये गुणविधय इति स्वीकृत्यैकवाक्यत्वं त्याज्यं तथायुक्तमुपक्रमादिनैकवाक्यतानिर्णयात्। तस्माद् ज्ञेयं प्रत्यक्ब्रह्मपरमिदं वाक्यमित्युपसंहरति ॥ तस्मादिति ॥ इति श्रीमत्परम-

दिति सिद्धं ॥ इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पूज्यपादकृतौ प्रथमाध्यायस्य प्रथमः पादः ॥

नमः परमात्मने। प्रथमे पादे जन्माद्यस्य यत इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तं। तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं नित्यत्वं सर्व्वज्ञत्वं सर्व्वात्मकत्वमित्येवंजातीयको धर्म्म उक्त एव भवति। अर्थान्तरप्रसिद्धानां केषाञ्चिच्छब्दानां ब्रह्मविषयत्वे हेतुप्रतिपादनेन कानिचिद्वाक्यानि सन्दिह्यमानानि ब्रह्मपरतया निर्णीतानि। पुनरप्यन्यानि वाक्यानि अस्पष्टब्रह्मलिङ्गानि सन्दिह्यन्ते किं परं ब्रह्म प्रतिपादयन्ति, आहोस्विदर्थान्तरं किञ्चिदिति। तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते।

सर्व्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

इदमाम्नायते। "सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके

---

हंसपरिव्राजकाचार्य्यश्रीगोविन्दानन्दभगवत् पादकृतौ श्रीमच्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभाया प्रथमाध्यायस्य प्रथमः पादः ॥

नमः परमात्मने।

श्रीरामं सिद्धमत्सारं गुहाश्रयिनमन्तरं।
अन्तर्यामिनमच्छेयं वैश्वानरमहं भजे ॥

पूर्व्वपादेनोत्तरपादयोः सङ्गतिं वक्तुं वृत्तमनुवदति॥ प्रथम इति। जगत्कारणोक्त्या व्यापित्वादिकमर्थात् सिद्धं। तदुपजीव्योत्तरं पादद्वयं प्रवर्त्तत इति हेतुहेतुमद्भावः सङ्गतिः। कथं पादभेद इत्याशङ्क्य पादानां प्रमेयभेदमाह॥ अर्थान्तरेति॥ आकाशादिशब्दानां स्पष्टब्रह्मलिङ्गै-

पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरः" इत्यादि। तत्र संशयः। किमिह मनोमयत्वादिभिर्धर्म्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते, आहोस्वित् परं ब्रह्मेति। किं तावत् प्राप्तं शारीर इति। कुतः। तस्य हि कार्य्यकरणाधिपतेः प्रसिद्धो मन आदिभिः सम्बन्धो न तु परस्य ब्रह्मणः "अप्राणो ह्यमनाः शुभ्रः" इत्यादिश्रुतिभ्यः। ननु "सर्व्वं खल्विदं ब्रह्म" इति स्वशब्देनैव ब्रह्मोपात्तं कथमिह शारीर आत्मोपास्य इत्याशङ्क्यते। नैष दोषः। नेदं वाक्यं ब्रह्मोपासनाविधिपरं। किं तर्हि। शमविधिपरं। यत् कारणं सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्याह। एतदुक्तं भवति। यस्मात् सर्व्वमिदं विकारजातं ब्रह्मैव तज्जत्वात्तल्लत्वात्तदनत्वाच्च। न च सर्व्वस्यैकात्मत्वे रागादयः सम्भवन्ति, तस्माच्छान्त उपासीतेति। न च शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते, उपासनन्तु सक्रतुं कुर्व्वीतेत्यनेन विधीयते।

---

ह्मणि समन्वयो दर्शितः। अस्पष्टब्रह्मलिङ्गवाक्यसमन्वयः पादद्वये वच्यते। प्रायेणोपास्यज्ञेयब्रह्मभेदात् पादयोरवान्तरभेद इति भावः। छान्दोग्यमुदाहरति॥ इदमिति॥ तस्माज्जायत इति तज्जं, तस्मिन् लीयत इति तल्लं, तस्मिन्ननिति चेष्टत इति तदनं तज्जञ्च तल्लञ्च तदनञ्चेति, तज्जलान् कर्म्मधारयेऽस्मिन् शाकपार्थिवन्यायेन मध्यपदस्य तच्छब्दस्य लोपः, तज्जलानमिति वाच्ये छान्दसोऽवयवलोपः, इतिशब्दो हेतौ। सर्व्वमिदं जगद्ब्रह्मैव तद्विवर्त्तत्वादित्यर्थः। ब्रह्मणि मित्रामित्रभेदाभावाच्छान्तो रागादिरहितो भवेदिति गुणविधिः। स क्रतुमुपासनं कुर्व्वीतेति विहितोपासनस्योपासीतेत्यनुवादात् फलमाह॥ यथेति॥ क्रतुमयः सङ्कल्पविकार इत्यर्थः। पुरुषस्य ध्यानविकारत्वं स्फुटयति॥ यथे-

क्रतुः सङ्कल्पो ध्यानमित्यर्थः। तस्य च विषयत्वेन श्रूयते "मनोमयः प्राणशरीरः" इति जीवलिङ्गं। अतो ब्रूमो जीवविषयमेतदुपासनमिति। "सर्व्वकर्म्मा सर्व्वकामः" इत्याद्यपि श्रूयमाणं पर्य्यायेण जीवविषयमुपपद्यते। "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्व्वा यवाद्वा" इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते नापरिच्छिन्नस्य ब्रह्मणः। ननु "ज्यायान् पृथिव्याः" इत्याद्यपि न परिच्छिन्नेऽवकल्पते, इति, अत्र ब्रूमः, न तावदणीयस्त्वं ज्यायस्त्वञ्चोभयमेकस्मिन् समाश्रयितुं शक्यं विरोधात्, अन्यतराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुं। ज्यायस्त्वन्तु ब्रह्मभावापेक्षया भविष्यति। निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्त्तनमेतद् ब्रह्मेति तदपि प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव। तस्मान्मनोमयत्वादिभिर्धर्म्मैर्जीव उपास्य इत्येवं प्राप्ते ब्रूमः, परमेव ब्रह्मेह मनोमयत्वादिभिर्धर्म्मैरुपास्यं। कुतः। सर्व्वत्र प्रसिद्धोपदेशात्। यत् सर्व्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कार-

---

ति॥ इह यद्ध्यायति मत्वा ध्यानमहिम्ना तद्ध्येयरूपेण जायत इत्यर्थः। क्रतुमयः सङ्कल्पप्रधान इति वाऽर्थः। क्रतोर्विषयमाह॥ मन इति। ब्रह्मोपक्रमान्मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमन्तर्हृदये ध्येयमित्यर्थः। पूर्व्वत्र ब्रह्मलिङ्गैरब्रह्मलिङ्गबाध उक्तः, न तथेहोपक्रमे ब्रह्मणो लिङ्गमस्ति, किन्तु प्रकरणं। तच्च शान्तिगुणविधानार्थमन्यथासिद्धं। अतो जीवलिङ्गं बलीय इति प्रत्युदाहरणेन पूर्व्वपक्षयति॥ शारीर इत्यादिना॥ श्रुतिमात्रब्रह्मान्यथासिद्धा परिहरति॥ नैष दोष इति। शमविधिपरत्वे हेतुमाह॥ यत् कारणमिति॥ यत एवमाह तस्मात्छमविधिपरमित्यन्वयः। अत्रेदंशब्दः प्रकृतब्रह्मपरामर्शार्थः, न तु जगत्परामर्शार्थं, जगद्विशेषणे प्रयोजनाभावात्। अत्र प्रयोजनाभावेऽपि

णमिह च सर्व्वं खल्विदं ब्रह्मेति वाक्योपक्रमे श्रुतं तदेव मनोमयत्वादिधर्म्मैर्विशिष्टमुपदिश्यत इति युक्तं। एवञ्च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यतः। ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्द्दिष्टं न स्वविवक्षया, इत्युक्तं। अत्रोच्यते। यद्यपि शमविधिविवक्षया ब्रह्म निर्द्दिष्टं तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव सन्निहितं भवति। जीवस्तु न सन्निहितो न च स्वशब्देनोपात्त इति वैषम्यं॥

---

यत्र प्रयोजनं तत्र भवत्वेव जगद्विशेषणं यथात्मैवेदं सर्व्वं। अत्र बाधायां सामानाधिकरण्यदार्ढ्यार्थं विशेषणमावश्यकं तद्वाक्यस्य ज्ञेयब्रह्मविषयत्वात्। अत्र तूपासनायां बाधानावश्यकत्वाद् विषयाभेदेन ब्रह्मण उपास्यत्वात्॥ न चं शमेति॥ शमध्यानयोर्व्विधौ वाक्यभेदापत्तेरित्यर्थः। जन्मपरम्परया जीवस्यापि सर्व्वकर्म्मत्वादिसम्भवमाह॥ सर्व्वकर्म्मेति। सर्व्वाणि कर्म्माणि यस्य सर्व्वे कामा भोग्या यस्य सर्व्वगन्धः सर्व्वरस इत्यादि शब्दार्थः॥ आराग्रमात्रस्येति॥ नेत्रप्रोतशलाकाग्रपरिमाणस्येत्यर्थः॥ सर्व्वत्र प्रसिद्धब्रह्मण एवात्रोपास्यत्वोपदेशान्न जीव उपास्य इति सूत्रार्थमाह॥ सर्व्वत्रेति॥ यत्र फलं नोच्यते तत्र पूर्व्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यं। यद्यपि निराकाङ्क्षं ब्रह्म तथापि मनः-.प्रचुरमुपाधिरस्य प्राणः शरीरमस्येति श्रुतार्थावबोधक वाक्यान्तर्गत सर्व्वनाम्न इत्यर्थः। समासान्तर्गतसर्व्वनाम्नः सन्निहितविशेष्याकाङ्क्षत्वाद् ब्रह्म सम्बद्ध्यते।, "स्योनन्ते सदनं करोमि" इति संस्कारार्थसदनस्य निराकाङ्क्षस्यापि तस्मिन् सीदेतिसाकाङ्क्षतच्छब्देन परामर्शदर्शनादित्याह॥ अत्रोच्यत इति॥ स्योनं पात्रं ते पुरोडाशस्येति श्रुत्यर्थः। जीवोऽपिलिङ्गात् सन्निहित इत्यत आह॥ जीवस्त्विति॥ इदं लिङ्गद्वयं लोकसिद्धं जीवं न सन्निधापयति। दुःखिन उपास्ययोग्यत्वात् फलाभावाच्च, अतो विश्वजिन्न्यायेन सर्व्वाभिलषितमानन्दरूपं ब्रह्मैवोपासनाक्रियानुबन्धीति भावः, किञ्च ब्रह्मपदश्रुत्या लिङ्गबाध इत्याह॥ न चेति॥ अन्यतराकाङ्क्षानुगृहीतं फलवत् प्रकरणं विफललिङ्गाद्बलीय ·

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्तुमिष्टा विवक्षिताः। यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः संभवति तथाप्युपादानेन फलेनोपचर्यते। लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति, तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवतीतरदविवक्षितं। उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते। तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसङ्कल्पप्रभृतयः ते परस्मिन् ब्रह्मण्युपपद्यन्ते। सत्यसङ्कल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रतिबन्धशक्तित्वात् परमात्मनोऽवकल्पते। परमात्मगुणत्वेन च य "आत्माऽपहतपाप्मा" इत्यत्र "सत्यकामः सत्यसङ्कल्पः" इति श्रुतं "आकाशात्मा" इत्यादिनाऽऽकाशवदात्माऽस्येत्यर्थः। सर्व्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः। "ज्यायान् पृथिव्याः" इत्यादिना चैतदेव दर्शयति। यदप्याकाश आत्माऽस्य इति व्याख्यायते तदपि संभवति सर्व्वजगत्कारणस्य सर्व्वात्मनो ब्रह्मण आकाशात्मत्वमत एव सर्व्वकर्म्मेत्यादि। एवमिहोपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते। यत्तूक्तं "मनोमयः प्राणशरीरः"

---

इति समुदायार्थः। वस्तुनो विवक्षायाः फलमुपादानं स्वीकारः स च प्रकृतेषु गुणेष्वस्तीति विवक्षोपचार इत्याह। तथाप्युपादानेनेति। नन्विदं ग्राह्यमिदं त्याज्यमितिधीर्विवक्षाधीना वेदे कुतः स्यादित्यत आह। उपादानानुपादाने त्विति। तात्पर्य्यं नाम फलवदर्थप्रतीत्यनुकूलत्वं शब्दधर्मः। उपक्रमादिना तस्य ज्ञानात्तयोरवगम इत्यर्थः। तदिहेति। तत

इति जीवलिङ्गं न तद्ब्रह्मण्युपपद्यत इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः। सर्व्वात्मत्वाद्धि ब्रह्मणो जीवसम्बन्धीनि मनोमयत्वादीनि ब्रह्मसम्बन्धीनि भवन्ति। तथाच ब्रह्मविषये श्रुतिस्मृती भवतः "त्वं स्त्री त्वं पुमानसि त्वं कुमार उतवा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः" इति। "सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखं। सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति" इति च। "अप्राणो ह्यमनाः शुभ्रः" इति च श्रुतिः शुद्धब्रह्मविषया। इयन्तु मनोमयः प्राणशरीर इति सगुणब्रह्मविषयेति विशेषः। अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते।

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

पूर्व्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता, अनेन शारीरे तेषामनुपपत्तिरुच्यते। तुशब्दोऽवधारणार्थः। ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं, न तु शारीरो जीवो

---

तस्मात् तात्पर्य्यवत्त्वादित्यर्थः। सर्व्वात्मत्वे प्रमाणमाह॥ तथाचेति॥ जीर्णः स्थविरो यो दण्डेन वञ्चति गच्छति सोऽपि त्वमेव यो जातो बालः स त्वमेव सर्व्वतः सर्व्वासु दिक्षु श्रुतयः श्रोत्राण्यस्येति सर्व्वतः श्रुतिमत सर्व्वजन्तूनां प्रसिद्धाः पाण्यादयस्तस्येति सर्व्वात्मत्वोक्तिः। ननु जीवधर्म्मास्चेद्ब्रह्मणि योज्यन्ते तर्हि ब्रह्मधर्म्मा एव जीवे किमिति न योज्यन्ते। तत्राह॥ अनुपपत्तेरिति॥ सूत्रं व्याचष्टे॥ पूर्व्वेणेति॥ सर्व्वात्मत्वादित्युक्तन्यायः। कल्पितस्य धर्म्मा अधिष्ठाने सम्बध्यन्ते, न अधिष्ठानधर्म्माः कल्पित इति भावः, अधिष्ठानज्ञानकाले कल्पितधर्म्माभावात्। वागेव वाकः सोऽस्यास्तीति वाकी। नवाकी अवाकी अनिन्द्रिय इत्यर्थः। कुत्राप्यादरः कामोऽस्य नास्तीत्यनादरः नित्यतृप्त इत्यर्थः। न्यायस्याद्यनुपपत्तेः शारीरः

मनोमयत्वादिगुणः, यत्कारणं सत्यसङ्कल्प आकाशात्माऽवाक्यनादरो ज्यायान् पृथिव्या इति चैवञ्जातीयका गुणा न शारीरे आञ्जस्येनोपपद्यन्ते। शारीर इति शरीरे भव इत्यर्थः। नन्वीश्वरोऽपि शरीरे भवति। सत्यं शरीरे भवति न तु शरीर एव भवति। ज्यायान् पृथिव्या ज्यायानन्तरिक्षादाकाशवत् सर्व्वगतश्च नित्य इति च व्यापित्वश्रवणात्। जीवस्तु शरीर एव भवति। तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्।

## कर्म्मकर्तृव्यपदेशाच्च ॥ ४ ॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात् कर्म्मकर्तृव्यपदेशो भवति"एतमितः प्रेत्याभिसंभविताऽस्मि"इति। एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्म्मत्वेन प्राप्यत्वेन व्यपदिशति। अभिसंभवितास्मीति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन। अभिसंभवितास्मीति प्राप्तोऽस्मीत्यर्थः। न च सत्यां गतावेकस्य कर्म्मकर्तृव्यपदेशो युक्तः, तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव, तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः।

---

इति परिच्छेदो हेतुः सूत्रोक्तः। स तु जीवस्यैव नेश्वरस्येत्याह ॥ सत्यमित्यादिना ॥ प्रापकत्वेन व्यपदिशतीति सम्बन्धः। कर्म्मकर्तृव्यपदेशपदस्यार्थान्तरमाह ॥ तथोपास्येति ॥ एकार्थत्वं प्रकरणस्य समानत्वं। यन्तरात्मन्निति विभक्ति लोपश्छान्दसः शब्दयोर्विशेषो विभक्तिभेदः। तस्मात्तदर्थयोर्भेद इति सूत्रार्थः। स्मृतौ हृदिस्थस्य जीवाद्भेदोक्तेश्चापि हृदिस्थो मनोमय ईश्वर इत्याह ॥ स्मृतेश्चेति। भूतानि जीवान् यन्त्रं शरीरं। अत्र सूत्रकृता सत्यभेद उक्त इति भ्रान्तिनिरासापेक्षत्वधिक-

## शब्दविशेषात् ॥ ५ ॥

इतश्च शारीरादन्यो मनोमयत्वादिगुणः, यस्माच्छब्दविशेषो भवति, समानप्रकरणे श्रुत्यन्तरे "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मयः" इति शारीरस्यात्मनोऽन्यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति। तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः, तस्मात्तयोर्भेदोऽधिगम्यते ॥

## स्मृतेश्च ॥ ६ ॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया" इत्याद्या। अत्राह। कः पुनरयं शारीरो नाम परमात्मनोऽन्यो यः प्रतिषिध्यते, अनुपपत्तेस्तु न शारीर इत्यादिना। श्रुतिस्तु "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्येवञ्जातीयका परमात्मनोऽन्यमात्मानं वारयति। तथा स्मृतिरपि "चेत्रज्ञञ्चापि मां विद्धि सर्व्वचेत्रेषु भारत" इत्येवञ्जातीयकेति। अत्रोच्यते। सत्यमेवैतत् पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्य्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते तद्वत्। तदपेक्षया च कर्म्मत्वकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक्

---

इयो निरस्तमपि चोद्यमुद्भाव्य निरस्यति॥ अत्राहेत्यादिना॥ त्वदुक्तरीत्या वस्तुत एकत्वमेव भेदस्तु कल्पितः, सूत्रेष्वनूद्यत इत्याह॥ सत्यमिति॥ अर्भ-

'तत्त्वमसि' इत्यात्मैकत्वोपदेशग्रहणात्। गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्व्वव्यवहारपरिसमाप्तिरेव स्यात् ॥

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥**

अर्भकमल्पमोको नीडं एष मे आत्मान्तर्हृदयमिति परिच्छिन्नायतनत्वात्। स्वशब्देन चाणीयान् व्रीहेर्वा यवाद्वेत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते न सर्व्वगतः परमात्मेति यदुक्तं तत्परिहर्त्तव्यं, अत्रोच्यते। नायं दोषः। न तावत् परिच्छिन्नदेशस्य सर्व्वगतत्वव्यपदेशः कथमप्युपपद्यते, सर्व्वगतस्य तु सर्व्वदेशेषु विद्यमानत्वात् परिच्छिन्नदेशव्यपदेशोऽपि कयाचिदपेक्षया संभवति, यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधिपतिरिति व्यपदिश्यते। कया पुनरपेक्षया सर्व्वगतः सन्नीश्वरोऽर्भकौकाश्चाणीयांश्च व्यपदिश्यत इति। निचाय्यत्वादेवमिति ब्रूमः। स एवमणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुण्डरीके निचाय्यो द्रष्टव्य उपदिश्यते, यथा शालग्रामे हरिस्तत्रास्य बुद्धिविज्ञानं ग्राहकं।

---

कमोको यस्य सोऽर्भकौकाः तस्य भावस्तत्त्व तस्मादार्थिकमल्पत्व वाणीयानित्यल्पत्वं वाचकशब्देनापि श्रुतमित्याह॥स्वशब्देनेति॥नायं दोष इत्युक्तविवृणोति॥न तावदिति॥कथमपि ब्रह्मभावापेक्षयाऽपीत्यर्थः। परिच्छेदत्यागं विना ब्रह्मत्वासम्भवात् तत्त्यागे च ब्रह्मण एवोपास्यत्वमायातीति भावः। विभोः परिच्छेदोक्तौ दृष्टान्तमाह॥ यथा समस्तेति॥ सर्वेश्वरस्यायोध्याया स्थित्यपेक्षापरिच्छेदोक्तिवदल्पहृदि ध्येयत्वेन तदोक्तिरित्यर्थः। ननु किमिति हृदयमेव प्रायेणोच्यते तत्राह॥ तत्रेति॥ हृदये परमात्मनो बुद्धिवृत्तिसर्व्वाहिका भवति। अत ईश्वराभिव्यक्तिस्थानत्वा-

सर्व्वगतोऽपीश्वरस्तेनोपास्यमानः प्रसीदति। व्योमवच्चैतद् द्रष्टव्यं। यथा सर्व्वगतमपि सद् व्योम सूच्योपाशाद्यपेक्षयाऽर्भकौकोऽणीयश्च व्यपदिश्यते, एवं ब्रह्मापि। तदेवं निचाय्यत्वापेक्षं ब्रह्मणो ऽर्भकौकस्त्वमणीयस्त्वञ्च न पारमार्थिकं। तत्र यदाशङ्क्यते हृदयायतनत्वाद् ब्रह्मणो हृदयायतनानाञ्च प्रतिशरीरं भिन्नत्वाद् भिन्नायतनानाञ्च शुकादीनामनेकत्वसावयवत्वाऽनित्यत्वादिदोषदर्शनाद् ब्रह्मणोऽपि तद्वत् प्रसङ्ग इति तदपि परिहृतं भवति।

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८॥

व्योमवत् सर्व्वगतस्य ब्रह्मणः सर्व्वप्राणिहृदयसम्बन्धाच्चिद्रूपतया च शारीरेणाविशिष्टत्वात् सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत। एकत्वाच्च। न हि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते "नान्योऽतोऽस्ति विज्ञाता" इत्यादिश्रुतिभ्यः। तस्मात् परस्यैव संसारसम्भोगप्राप्तिरिति चेत्। न। वैशेष्यात्। न तावत् सर्व्वप्राणिहृदयसम्बन्धाच्छारीरवद् ब्रह्मणः सम्भोगप्रसङ्गो

---

त्तदुक्तिरित्यर्थः। व्योमदृष्टान्तात्सिना शङ्कालताऽपि काचित् छिन्नेत्याह॥ तत्र यदाशङ्क्यत इत्यादिना॥ भिन्नायतनत्वेऽपि व्योम्नः सत्यभेदाद्यभावादिति भावः। ब्रह्मणो हार्दत्वे ऽनिष्टसम्भोगापत्तेर्ज्जीव एव हार्द उपास्य इति शङ्का व्याचष्टे॥ व्योमवदिति॥ ब्रह्म भोक्तृ स्यात् हार्दत्वे सति चेतनत्वाज्जीवाभिन्नत्वाच्च जीववदित्युक्तं निरस्यति॥ न वैशेष्यादिति॥ धर्म्माधर्म्मवत्त्वमुपाधिरित्यर्थः। अयमेव विशेषो वैशेष्यं स्वार्थे यत् प्रत्ययः विशेषस्यातिशयार्थो वा धर्म्मादेः स्वाश्रये फलहेतुत्वमतिशयः, तस्मादिति सूत्रार्थः। किञ्च विभवो बहव आत्मान इतिवादिनामेकस्मिन् देहे सर्व्वात्मनां भोक्तृत्वप्रसङ्गः स्वकर्म्मार्जित एव देहे

वैशेष्यात्। विशेषो हि भवति शारीरपरमेश्वरयोरेकः कर्त्ता भोक्ता धर्म्माधर्म्मसाधनः सुखदुःखादिमांश्च, एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः। एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य। यदि च सन्निधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्य्यसम्बन्धोऽभ्युपगम्येत आकाशादीनामपि दाहादिप्रसङ्गः। सर्व्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ। यदप्येकत्वात् ब्रह्मण आत्मान्तराभावात् शारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति अत्र वदामः इदं तावद्देवानां प्रियः प्रष्टव्यः कथमयं त्वया आत्मान्तराभावोऽध्यवसित इति। तत्त्वमस्यहं ब्रह्मास्मि नान्योऽतोऽस्ति विज्ञातेत्यादि शास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो न तत्रार्द्धंजरतीयं लभ्यं। शास्त्रञ्च तत्त्वमसीत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिशत् शारीरस्यैव तावदुपभोक्तृत्वं वारयति। कुतः। तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः। अथागृहीतं शारीरस्य ब्रह्मणैकत्वं तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगो न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः। न हि बालैस्तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव पर-

---

भोग इति परिहारस्य तुल्य इति न वयं पर्य्यनुयोज्या इत्याह। सर्व्वगतेति। वस्तुतस्तेषामेव भोगसाङ्कर्य्यमित्यग्रे वक्ष्यते। ब्रह्मणो जीवाभिन्नत्वं श्रुत्या निश्चित्य तेन भोक्तृत्वानुमाने उपजीव्यश्रुतिबाधमाह। यथाशास्त्रमिति। यदर्द्धं मुखमात्रं जरत्या वृद्धायाः कामयते नाङ्गानीति सोऽयमर्द्धजरतीयन्यायः स चात्र न युक्तः। न ह्यभेदमङ्गीकृत्याभोक्तृत्वं त्यक्तुं युक्तं श्रुत्यैवाभेदसिद्ध्यर्थं भोक्तृत्ववारणादित्याह। शास्त्रञ्चेति। नन्वेकत्वं मया श्रुत्या न गृहीतं येनोपजीव्यबाध-

मार्थतो व्योम भवति। तदाह "न वैशेष्यात्" इति। नैकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गो वैशेष्यात्। विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः। मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वं। न च मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते तस्मान्नोपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुं।

अत्ता चराचरग्रहणात्॥९॥

कठवल्लीषु पठ्यते "यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति। अत्र कश्चिदोदनोपसेचनसूचितोऽत्ता प्रतीयते। तत्र किमग्निरत्ता स्यादुत जीवोऽथवा परमात्मेति संशयः, विशेषानवधारणात्, त्रयाणाञ्चाग्निजीवपरमात्मनामस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः।

---

स्यात्। किन्तु तदुक्तया गृहीतमित्याशङ्क्य विम्बप्रतिविम्बयोः कल्पितभेदेन भोक्तृत्वाभोक्तृत्वव्यवस्थोपपत्तेरप्रयोजको हेतुरित्याह॥ अथ गृहीतमित्यादिना॥ कल्पितासङ्गित्वमधिष्ठानस्य वैशेष्यमित्यस्मिन्नर्थेऽपि सूत्रं यातयति॥ तदाहेति॥ ब्रह्मणो हार्दत्वे बाधकाभावाच्छाण्डिल्यविद्यावाक्यं ब्रह्माद्युपास्ये समन्वितमिति सिद्धं। अत्ता चराचरग्रहणात्। यस्य ब्रह्मक्षत्रादिजगदोदनो मृत्युः सर्व्वप्राणिमारकोऽपि यस्योपसेचनमोदनसंस्कारकघृतप्रायः सोऽत्ता यत्र शुद्धे चिन्मात्रेऽभेदकल्पनया वर्त्तते तच्छुद्धं ब्रह्म इत्था इत्थं ईश्वरस्याप्यधिष्ठानभूतं को वेद, चित्तशुद्ध्याद्युपायं विना कोऽपि न जानातीत्यर्थः॥ संशयवीजमाह॥ त्रयाणामिति॥ स त्वमग्निं प्रब्रूहीत्यग्नेः, येयं प्रेते विचिकित्सेति जीवस्य, अन्यत्र धर्म्मादिति ब्रह्मणः प्रश्नः। लोकादिमग्निं तमुवाचेत्यग्नेः, हन्त त इदं प्रवक्ष्यामीतीतरयोः प्रतिवचनमुपलभ्यत इत्यर्थः। पूर्व्वत्र ब्रह्मणो

किन्तावत् प्राप्तं, अग्निरत्तेति। कुतः। "अग्निरन्नादः" इति श्रुतिप्रसिद्धिभ्यां। जीवो वाऽत्ता स्यात् "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति दर्शनात्। न परमात्मा "अनश्नन्नन्योऽभिचाकशीति" इति दर्शनादित्येवं प्राप्ते ब्रूमः, अत्तात्र परमात्मा भवितुमर्हति। कुतः। चराचरग्रहणात्। चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते। तादृशस्य चाद्यस्य न परमात्मनोऽन्यः कार्त्स्न्येनात्ता सम्भवति, परमात्मा तु विकारजातं संहरन् सर्वमत्तीत्युपपद्यते। नन्विह चराचरग्रहणं नोपलभ्यते, तत् कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते। नैष दोषः। मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वाद् ब्रह्मक्षत्रयोश्च प्राधान्यात् प्रदर्शनार्थत्वोपपत्तेः। यत्तु परमात्मनोऽपि नात्तृत्वं सम्भवति "अनश्नन्नन्योऽभिचाकशीति" इतिदर्शनादिति, अत्रोच्यते, कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनं तस्य सन्निहितत्वात् न विकारसंहारस्य प्रतिषेधकं, सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात्, तस्मात् परमात्मैवेहात्ता भवितुमर्हति।

---

भोक्तृत्वं नास्तीत्युक्तं तदुपजीव्य पूर्वपक्षयति॥ किं तावदिति। अग्नि-प्रकरणमतीतमित्यरुचेराह॥ जीवो वेति॥ पूर्वपक्षे जीवोपास्तिः सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति फलभेदः। ओदनशब्दो भोग्यवाचीति पूर्वपक्षः, सिद्धान्तस्तु ब्रह्मक्षत्रशब्दैरुपस्थापितकार्य्यमात्रे गौण ओदनशब्दः। गुणश्चात्र मृत्यूपसेचनपदेन सन्निधापितं प्रसिद्धौदनगतं विनाश्यत्वं गृह्यते गौणशब्दस्य सन्निहितगुणग्राहित्वात्। तथाच सर्वस्य विनाश्यत्वेन भानात्क्षिप्रादीश्वरोऽत्तेत्याह॥ नैष दोष इति। तस्य सन्नि-

## प्रकरणाच्च ॥१०॥

इतश्च परमात्मैवेहात्ता भवितुमर्हति यत्कारणं प्रकरणमिदं परमात्मनः "न जायते म्रियते वा विपश्चित्" इत्यादि। प्रकृतग्रहणञ्च न्याय्यं 'क इत्था वेद यत्र सः' इति च दुर्व्विज्ञानत्वं परमात्मलिङ्गं।

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥

कठवल्लीष्वेव पठ्यते

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः"॥

इति। तत्र संशयः। किमिह बुद्धिजीवौ निर्दिष्टौ, उत जीवपरमात्मानाविति। यदि बुद्धिजीवौ ततो बुद्धिप्रधानात् कार्य्यकरणसंघाताद् विलक्षणो जीवः प्रतिपादितो भवति, तदपीह प्रतिपादयितव्यं। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष

---

हितत्वादिति पिप्पलं स्वाद्वत्तीति भोगस्य पूर्व्वोक्तत्वादित्यर्थः। अत्तृवाक्यानन्तरवाक्यस्यापि ज्ञेयात्मनि समन्वयमाह ॥ गुहामिति ॥ ऋतमवश्यम्भावि कर्म्मफलं पिबन्तौ भुञ्जानौ सुकृतस्य कर्म्मणो लोके कार्य्ये देहे परस्य ब्रह्मणोऽर्द्धं स्थानमर्हतीति परार्द्धं हृदयं परमं श्रेष्ठं तस्मिन् या गुहा नभोरूपा बुद्धिरूपा वा तां प्रविश्य स्थितौ छायातपवत् मिथोविरुद्धौ तौ च ब्रह्मविदः कर्म्मिणश्च वदन्ति। त्रिणाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः तेऽपि वदन्तीत्यर्थः। नाचिकेतवाक्यानामत्राध्ययनं तदर्थज्ञानं तदनुष्ठानञ्चेति त्रित्वं बोध्यं बुद्ध्यवच्छिन्नजीवस्य परमात्मनश्च प्रकृतत्वात् संशयमाह ॥ तत्रेति ॥ पूर्व्वोत्तरपक्षयोः फलं स्वयमेवाह ॥ यदीत्यादिना ॥ तदपि जीवस्य बुद्धिवैलक्षण्यमपीत्यर्थः। मनुष्ये प्रेते मृते सति येयं विचिकित्सा संशयः परलोकभोक्ताऽस्तीत्येके नास्तीत्यन्ये, अत-

वरस्तृतीयः” इति पृष्टत्वात्। अथ जीवपरमात्मानौ, ततो जीवाद्विलक्षणः परमात्मा प्रतिपादितो भवति, तदपीह प्रतिपादयितव्यं। “अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतादन्यत्रभूताच्च भव्याच्च यत्तत् पश्यसि तद्वद” इति पृष्टत्वात्। अत्राह आक्षेप्ता उभावप्येतौ पक्षौ न संभवतः। कस्मात्। ऋतपानं कर्मफलोपभोगः सुकृतस्य लोक इति लिङ्गात्। तच्च चेतनस्य क्षेत्रज्ञस्य सम्भवति नाचेतनाया बुद्धेः। पिबन्ताविति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः। अतो बुद्धिक्षेत्रज्ञपक्षस्तावन् न सम्भवति। अत एव क्षेत्रज्ञपरमात्मपक्षोऽपि न सम्भवति चेतनेऽपि परमात्मनि ऋतपानासम्भवात् “अनश्नन्नन्योऽभिचाकशीति” इति मन्त्रवर्णादिति। अत्रोच्यते। नैष दोषः। छत्रिणो गच्छन्तीत्येकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनात्, एवमेकेनापि पिबता द्वौ पिबन्तावुच्येयातां। यद्वा जीवस्तावत् पिबति, ईश्वरस्तु पाययति पाययन्नपि पिबतीत्युच्यते। पाचयितर्य्यपि पक्तृत्वप्रसिद्धिदर्शनात्। बुद्धिक्षेत्रज्ञपरिग्रहोऽपि

---

त्वयोपदिष्टोऽहमेतदात्मतत्व जानीयामित्यर्थः। तदपीति परमात्मस्वरूपमपीत्यर्थः। उभयोर्भोक्तृत्वायोगेन संशयमाक्षिपति ॥ अत्राहेति ॥ छत्रिपदेन गन्तार इव पिबत्पदेनाजहल्लक्षणया प्रविष्टावुच्येते इत्याह ॥ अत्रोच्यत इति ॥ पानकर्तृवाचिपदेन पानानुकूलौ वा लक्ष्यावित्याह ॥ यद्वेति ॥ नियतपूर्व्वभाविकृतिमत्त्वरूपमनुकूलत्व कर्तृकारयित्रोः साधारणं यः कारयति स करोत्येवेति न्यायादिति भावः। अत्र प्रकृतिर्मुख्यार्थां प्रत्यये लक्षणामिच्छाऽस्तु इति प्रत्ययार्थो मुख्य। प्रकृत्या स्वजहल्लक्षणयापायनं लक्ष्यमित्याकूः। पूर्व्वपक्षे पिबन्ताविति कर्तृवाचिशतृप्रत्ययेन बुद्धिजीवसाधारणं कारकत्व लक्ष्य

सम्भवति करणे कर्त्तृत्वोपचारात्, एधांसि पचन्तीति प्रयोगद-र्शनात्। न चाध्यात्माधिकारेऽन्यौ कौचिद् ऋतं पिबन्तौ सम्भवतः, तस्माद्बुद्धिजीवौ स्यातां जीवपरमात्मानौ वेति संशयः। किं तावत्प्राप्तं बुद्धिक्षेत्रज्ञाविति। कुतः। गुहां प्रविष्टाविति विशेषणात्। यदि शरीरं गुहा यदि वा हृदयमुभयथापि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टावुपपद्येते। न च सति सम्भवे सर्व्वगतस्य ब्रह्मणो विशिष्टदेशत्वं युक्तं कल्पयितुं। 'सुकृतस्य लोके' इति च कर्म्मगोचरानतिक्रमं दर्शयति। परमात्मा तु न सुकृतस्य दुष्कृतस्य वा गोचरे वर्त्तते। "न कर्म्मणा वर्द्धते नो कनीयान्" इति श्रुतेः। छायातपाविति च चेतनाचेतनयोर्निर्द्देश उपपद्यते छायातपवत् परस्परस्य विलक्षणत्वात्। तस्माद्बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येवं प्राप्ते ब्रूमः। विज्ञानात्मपरमात्मानाविहोच्येयातां। कस्मात्। आत्मानौ हि तौ उभावपि चेतनौ समानस्वभावौ, सङ्ख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते, अस्य

---

मित्याह॥ बुद्धीति॥ एधांसि काष्ठानि पचन्तीत्याख्यातेन कारकत्वं लक्षं प्रकृतिस्तु मुख्यैवेति भावः। मुख्यपातारौ प्रसिद्धपक्षिणौ ग्राह्याविव्यत आह॥ न चेति॥ ब्रह्मसूत्रपदस्य सन्निहितमृत्युपदादनित्यवस्तुपरत्ववदिहापि पिबत्पदस्य सन्निहितगुहापदाद् बुद्धिजीवपरतेति दृष्टान्तेन पूर्व्वपक्षयति॥ किं तावदिति॥ गोचरं फलं। एकस्मिन् जातिमति दृष्टे सजातीयमेव द्वितीयं ग्राह्यं। व्यक्तिमात्रग्रहे लाघवात् न विजातीयं जातिव्यक्त्युभयकल्पनागौरवात्। न चास्तु कारकत्वेन सजातीया बुद्धिरेव जीवस्य द्वितीयेति वाच्यं, चेतनत्वस्य जीवस्वभावस्य कारकत्वादन्तरङ्गत्वात्। तथा च लोके द्वितीयस्यान्तरङ्गजातिमत्त्वदर्शनाज्जीवस्य द्वितीयश्चेतन एवेति सूत्रा-

गोर्द्वितीयोऽन्वेष्टव्य इति युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वः पुरुषो वा, तदिह ऋतपानेन लिङ्गेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रतीयते। ननूक्तं गुहाहितत्वदर्शनान् न परमात्मा प्रत्येतव्य इति। * अत्र वदामः। गुहाहितत्वन्तु श्रुतिस्मृतिष्वसकृत् परमात्मन एव दृश्यते। "गुहाहितं गह्वरेष्ठं पुराणं", "यो वेद निहितं गुहायां परमे व्योमन्", "आत्मानमन्विच्छ गुहां प्रविष्टं" इत्याद्यासु। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव। सुकृतलोकवर्त्तित्वन्तु छत्रित्ववदेकस्मिन्नपि वर्त्तमानमुभयोरविरुद्धं। छायातपावित्यप्यविरुद्धं। छायातपवत् परस्परविलक्षणत्वात् संसारित्वासंसारित्वयोः। अविद्याकृतत्वात् संसारित्वस्य पारमार्थिकत्वाच्चासंसारित्वस्य, तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते। कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते।

विशेषणाच्च ॥ १२ ॥

विशेषणञ्च विज्ञानात्मपरमात्मनोरेव सम्भवति "आत्मानं

---

र्थमाह ॥ सह्यास्यवयो चेति॥ गुहायां बुद्धौ स्थितं गह्वरे ह्यनेकानर्थसङ्कुले देहे स्थितं पुराणमनादिपुरुषं विदित्वा हर्षशोकौ जहाति परमश्रेष्ठे व्योमन्, हार्दाकाशे या गुहा बुद्धिः तस्यां निहितं ब्रह्म यो वेद सोऽश्नुते सर्व्वान् कामानित्यन्वयः, अन्विच्छ विचारयेत्यर्थः। विशेषणं गन्तृगन्तव्यत्वादिकं लिङ्गमाह ॥ विशेषणाच्चेति ॥ सः जीवोऽध्वनः

---

* गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः। इति लि० पु०

रथिनं विद्धि शरीरं रथमेव च" इत्यादिना परेण ग्रन्थेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति। "सोऽध्वनः पारमाप्नोति" "तद्विष्णोः परमं पदं" इति परमात्मानं गन्तव्यं कल्पयति। तथा "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति पूर्व्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेनैतावेव विशेषितौ। प्रकरणञ्चेदं परमात्मनः। ब्रह्मविदो वदन्तीति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते, तस्मादिह जीवपरमात्मानावुच्येयातां। एष एव न्यायो "द्वा सुपर्णा सयुजा सखाया" इत्येवमादिष्वपि। तत्रापि ह्यध्यात्माधिकारान् न प्राकृतौ सुपर्णावुच्येते "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति अदनलिङ्गाद्विज्ञानात्मा भवति। 'अनश्नन्नन्योऽभिचाकशीति' इत्यनशनचेतनत्वाभ्यां परमात्मा। अनन्तरे च मन्त्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः जुष्टं यदा

---

संसारमार्गस्य परमं पारं किं तत्, विष्णोर्व्यापनशीलस्य परमात्मनः पदं स्वरूपमाप्नोतीत्यर्थः। दुर्दर्शं दुर्ज्ञानं तत्र हेतुर्गूढमायावृत्तं मायानुप्रविष्टं पश्चाद् गुहानिहितं गुहाद्वारा गह्वरेष्ठं, एवं बहिरागतमात्मानमध्यात्मयोगः स्थूलसूक्ष्माकारणदेहलयक्रमेण प्रत्यगात्मनि चित्तसमाधानं तेनाधिगमो महावाक्यजा वृत्तिः तया विदित्वेत्यर्थः। ऋतपानमन्त्रे जीवानुवादेन वाक्यार्थज्ञानाय तत्पदार्थो ब्रह्म प्रतिपाद्यत इति उपसंहरति॥ तस्मादिहेति॥ उक्तन्यायमतिदिशति॥ एष इति॥ द्वा द्वौ छान्दसौ द्विवचनस्याकारः। सुपर्णाविव सहैव युज्येते नियम्य नियामकभावेनेति। सयुजौ सखायौ चेतनत्वेन तुल्यस्वभावौ। समान-

पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः” इति। अपर आह द्वा सुपर्णेति। नेयमृगस्याधिकरणस्य सिद्धान्तं भजते पैङ्गि-रहस्य ब्राह्मणेनान्यथाव्याख्यातत्वात्। तयोरन्यः पिप्पलं स्वाद-त्तीति सत्त्वं। अनश्नन्न्योऽभिचाकशीतीत्यनश्नन्न्योऽभिपश्यति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति, सत्त्वशब्दो जीवः क्षेत्रज्ञशब्दः प-रमात्मेति यदुच्येत, तन्न। सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारी-रपरतया प्रसिद्धत्वात् तत्रैव च व्याख्यातत्वात्। “तदेतत् सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ” इति। नाप्यस्याधिकरणस्य पूर्व्वपक्षं भजते। न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिसंसारधर्म्मोपेतो विवक्ष्यते। कथं तर्हि सर्व्वसंसारधर्म्मापेतो ब्रह्मस्वभावश्चैतन्य-

---

मेकं स्वच्छेदनयोग्यं शरीरमाश्रित्य स्थिताविव्यर्थः। गुहां प्रविष्टा-विति यावत्। एतावात्मानौ। तल्लिङ्गदर्शनादित्याह॥ तयोरन्य इति॥ विशेषणाच्चेत्याह॥ अनन्तरे चेति॥ अनीशया स्वस्येश्वरत्वाप्रतीत्या देह निमग्नः पुरुषो जीवः शोचति। निमग्नपदार्थमाह॥ मुह्यमान इति॥ नवोऽहमितिभ्रान्त इत्यर्थः। जुष्टं ध्यानादिना सेवितं यदा ध्यानपरिपा-कदशायामीशमन्यं विशिष्टरूपाद्भिन्नं शोधितचिन्मात्रं प्रत्येकत्वेन पश्य-ति तदाऽस्य महिमानं स्वरूपमेति प्राप्नोतीव ततो वीतशोको भवतीत्य-र्थः। द्वा सुपर्णेतिवाक्यं जीवेश्वरपरमिति कृत्वा चिन्तितं। अधुना कृतां चिन्तामुद्घाटयति॥ अपर इति॥ अन्यथा बुद्धिविलक्षणत्वं पदलक्षणत्व-नेत्यर्थः॥ सत्त्वं बुद्धिरिति सङ्गते॥ सत्त्वशब्द इति। बुद्धिजीवौ चेत् पूर्व्वप-क्षार्थः स्यादित्यत आह॥ नापीति॥ पूर्व्वपक्षार्थस्तदा स्याद् यद्यत्र बुद्धिभिन्नः संसारी प्रतिपाद्यते, न ह्यत्र संसारी विवक्ष्यते। किन्तु शोधितत्वमर्थो ब्रह्मेत्यर्थः। श्रुतिस्मृति[illegible]त्वमर्थो युक्त इति शेषः। तावता मन्त्रव्याख्यामात्रेण। एवमिद[illegible]वे। न हि

मात्रस्वरूपः “अनश्नन्नन्योऽभिपश्यति ज्ञः” इति वचनात्। “तत्त्वमसि”, “क्षेत्रज्ञञ्चापि मां विद्धि” इत्यादिश्रुतिस्मृतिभ्यश्च। तावता च विद्योपसंहारदर्शनमेवावकल्प्यते “तावेतौ सत्त्वक्षेत्रज्ञौ”, “न ह वा एवं विदि किञ्चन रज आध्वंसते” इत्यादि। कथं पुनरस्मिन् पक्षे “तयोरन्यः पिप्पलं स्वाद्वत्ति” इति सत्त्वं इत्यचेतने सत्त्वे भोक्तृत्ववचनमिति। उच्यते। नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता। किं तर्हि। चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां वक्ष्यामीति। तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति। इदं हि कर्तृत्वं भोक्तृत्वं सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं*कल्प्यते, परमार्थतस्तु नान्यतरस्यापि सम्भवति, अचेतनत्वात् सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य, अविद्याप्रत्युपस्थापित†स्वभावत्वाच्च सत्त्वस्य सुतरां न सम्भवति। तथा च श्रुतिः “यत्र वान्यदिव स्यात् तत्रान्योऽन्यत् पश्येत्” इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति। “यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत्” इत्यादिना च विवेकिनः कर्तृत्वादिव्यवहारं वारयति।

---

जीवो बुद्धिभिन्न इति विवेकमात्रेणोपसंहारो युक्तः। भेदज्ञानस्य भ्रान्तित्वादैफल्याच्चेति भावः। अविद्या विदुषि किमपि स्वकार्य्यं नाध्वंसते न सम्पादयति, ज्ञानाग्निना तस्या एव दग्धत्वादित्यर्थः। अविद्या नागच्छतीति वाऽर्थः। जीवस्य ब्रह्म त्वपरमिदं वाक्यमिति पक्षे शङ्कते॥ कथमिति॥ बुद्धेर्भोक्तृत्वोक्तावतात्पर्य्यात्। नात्र युक्तिचिन्तया मनः खेदनीयमित्याह॥ उच्यत इति॥ तदर्थं ब्रह्मत्वबोधनार्थं भोक्तृत्व-

* अविवेकेति मु०। † सद्भावत्वाच्च मु०।

## अन्तर उपपत्तेः ॥ १३ ॥

"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्म" इति, "तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इत्यादि श्रूयते। तत्र संशयः। किमयं प्रतिबिम्बात्माऽक्ष्यधिकरणो निर्दिश्यते, अथ विज्ञानात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाताऽथवेश्वर इति। किं तावत् प्राप्तं, छायात्मा पुरुषप्रतिरूप इति। कुतः। तस्य दृश्यमानत्वप्रसिद्धेः "य एषोऽक्षिणि पुरुषो दृश्यते" इति च प्रसिद्धवदुपदेशात्। विज्ञानात्मनो वा अयं निर्देश इति युक्तं। स हि चक्षुषा रूपं पश्यन् चक्षुषि

---

सुपाधिमस्तके निक्षिपतीत्यर्थः। वस्तुतो जीवस्याभोक्तृत्वे भोक्तृत्वधीः। कथमित्यत आह ॥ इदं हीति ॥ चित्तादात्म्येन कल्पिता बुद्धिः सुखादिरूपेण परिणमते बुद्ध्यविवेकाच्चिदात्मनः सुखादिरूपवृत्तिव्यक्तचैतन्यवत्त्वं भोक्तृत्वं भातीत्यर्थः। भोक्तृत्वमाविद्यकं न वस्तुत इत्यत्र मानमाह ॥ तथा चेति ॥ यत्राविद्याकाले चैतन्यं भिन्नमिव भवति तदा द्रष्टृत्वादिकं न वस्तुनि ज्ञात इत्यर्थ.। तस्मादृतं पिबन्ताविति वाक्यमेव गुहाधिकरणविषय इति स्थितं। अन्तर उपपत्तेः। उपकोशलविद्यावाक्यमुदाहरति ॥ य इति ॥ तदक्षिस्थानमसङ्गत्वेन ब्रह्मणोऽनुरूपं यतोऽस्मिन् क्षिप्तं वर्त्मनी पक्ष्मणी एव गच्छतीत्यर्थः। दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयमाह ॥ तत्रेति ॥ पूर्वं पिबन्ताविति प्रथमश्रुतचेतनत्वानुसारेण चरमश्रुता गुहाप्रवेशादयो नीताः, तद्वदिहापि दृश्यत इति चाक्षुषत्वानुसारेणामृतत्वादयो ध्यानार्थं कल्पितत्वेनानया इति दृष्टान्तेन पूर्वपक्षयति ॥ छायात्मेति ॥ पूर्वपक्षे प्रतिबिम्बोपास्ति. सिद्धान्ते ब्रह्मोपास्तिरिति फल ॥ प्रसिद्धवदिति॥ चाक्षुषत्वेनेत्यर्थः। सम्भावनामात्रेण पक्षान्तरमाह ॥ विज्ञानात्मन इत्यादिना॥ मनो ब्रह्मेतिवत्, एतद्ब्रह्मेति इति वाक्यस्येति पदशिरस्कत्वान् न स्वार्थपरत्वमिति पूर्वपक्षः। मनो ब्रह्मेत्युपासीतेत्यत्र इतिपदस्य प्रत्य-

सन्निहितो भवति, आत्मशब्दश्चास्मिन् पक्षेऽनुकूलो भवति। आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति श्रुतेः। अमृतत्वादीनाञ्च देवतात्मन्यपि कथञ्चित् सम्भवात्, नेश्वरः, स्थानविशेषनिर्देशादित्येवं प्राप्ते ब्रूमः। परमेश्वर एवाक्षण्यभ्यन्तरः पुरुष इहोपदिष्ट इति। कस्मात्। उपपत्तेः। उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानं। आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते "स आत्मा", "तत्त्वमसि" इति श्रुतेः। अमृतत्वाभयत्वे च तस्मिन्नसकृत् श्रूयेते। तथा परमेश्वरानुरूपमेतदक्षिस्थानं। यथा हि परमेश्वरः सर्व्वदोषैरलिप्तोऽपहतपाप्मादिश्रवणात् तथाक्षिस्थानं सर्व्वलेपरहितमुपदिष्टं "तद्यद्यप्यस्मिन् सर्पिर्व्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इति श्रुतेः। संयद्वामादिगुणोपदेशश्च तस्मिन्नवकल्पत एतं संयद्वाम इत्याचक्षते। "एतं हि सर्व्वाणि वामान्यभिसंयन्ति। एष उ एव वामनीरेष हि सर्वाणि वामानि नयति। एष उ एव भामनीरेष हि सर्व्वेषु लोकेषु भाति" इति च। अत उपपत्तेरन्तरः परमेश्वरः॥

---

यपरत्वात्। इह च ब्रह्मत्ववाचेत्यन्वयेन इतिपदस्योक्तिसम्बन्धिनोऽर्थपरत्वादैषम्यमिति सिद्धान्तयति॥ परमेश्वर एवेति॥ बहुप्रमाणसंवादस्तात्पर्य्यानुग्राहक इति न्यायानुगृहीताभ्यामात्मब्रह्मश्रुतिभ्यां दृश्यत्वलिङ्गं बाध्यमित्याह॥ संयद्वामेति॥ वामानि कर्म्मफलान्येनमेतमक्षिपुरुषमभिलक्ष्य सयन्ति उत्पद्यन्ते सर्व्वफलोदयहेतुरित्यर्थः। लोकानां फलदाताप्ययमेवेत्याह॥ वामनीरिति॥ नयति फलानि लोकान् प्रापयतीत्यर्थः। भामानि भामानि नयत्ययमित्याह॥ भामनीरिति॥ सर्व्वार्थप्रकाशक इत्यर्थः। स्थाननामरूपाणां ध्यानार्थं श्रुत्यन्तरेऽप्युपदेशादक्षि-

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

कथं पुनराकाशवत् सर्व्वगतस्य ब्रह्मणोऽल्पस्थानमुपपद्यते इति। अत्रोच्यते। भवेदेषाऽनवक्लृप्तिः यद्येतदेवैकं स्थानमस्य निर्दिष्टं भवेत्। सन्ति हि अन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि "यः पृथिव्यां तिष्ठन्"इत्यादिना। तेषु हि चक्षुरपि निर्दिष्टं यश्चक्षुषि तिष्ठन्निति। स्थानादिव्यपदेशादित्यादिग्रहणेनैतद्दर्शयति। न केवलं स्थानमेवैकमनुचितं ब्रह्मणो निर्दिश्यते, किं तर्हि नामरूपमित्येवं जातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते, तस्योदिति नाम हिरण्यश्मश्रुरित्यादि निर्गुणमपि सत् ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्र तत्रोपदिश्यते इत्येतदप्युक्तमेव। सर्व्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते शालग्राम इव विष्णोरित्येतदप्युक्तमेव।

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

अपि च, नैवात्र विवदितव्यं, किं ब्रह्मास्मिन् वाक्येऽभिधीयते न वेति। सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धं। सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तं "प्राणो ब्रह्म" "कं ब्रह्म खं ब्रह्म" इति तदेवेहाभिहितं, प्रकृतपरिग्रहस्य न्याय्यत्वात्,

---

स्थानत्वोक्तिश्च न दोष इति सूत्रयोजना। अनवक्लृप्तिः अक्लृप्तकल्पना तदा भवेद्यद्येव निर्दिष्टं भवेदित्यन्वय। नन्वनुचितनामरूपोक्तिः-समाधानमित्याशङ्क्य युक्तिमाह॥ निर्गुणमपीति॥ प्रकरणादपि ब्रह्मग्राह्यमित्याह॥ सुखविशिष्टेति॥ ध्यानार्थं भेदकल्पनया सुखगुणविशि

"आचार्य्यस्तु ते गतिं वक्ता" इति च गतिमात्राभिधानप्रतिज्ञानात्। कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति। उच्यते। "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्येतदग्नीनां वचनं श्रुत्वोपकोशल उवाच। "विजानाम्यहं यत् प्राणो ब्रह्म कञ्च खञ्च तु न विजानामि" इति। तत्रेदं प्रतिवचनं। "यद्वाव कं तदेव खं यदेव खं तदेव कं" इति। तत्र खंशब्दो भूताकाशे निरूढो लोके। यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत, तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात्। तथा कंशब्दस्य विषयेन्द्रियसम्पर्कजनिते सामये सुखे प्रसिद्धत्वात्। यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत लौकिकं सुखं ब्रह्मेति प्रतीतिः स्यात्। इतरेतरविशेषितौ तु कंखंशब्दौ सुखात्मकं ब्रह्म गमयतः। तत्र द्वि-

---

एतस्य ब्रह्मण प्रकृतस्य य एष इति सर्व्वनाम्नाभिधानादन्तरः परमात्मा स्यादिति सूत्रार्थः। ननु प्रकरणात् प्रबलेन दृश्यत्वलिङ्गेनोपस्थापितः छायात्मा सर्व्वनामार्थ इत्यत आह॥ आचार्य्यस्त्विति॥ उपकोसलो नाम कश्चित् ब्रह्मचारी जाबालस्याचार्य्यस्याधीन् द्वादश वत्सरान् परिचचार। तमनुपदिश्य देशान्तरगते जाबाले गार्हपत्याद्यग्निभिर्दयया *प्राणो ब्रह्मेत्यात्मविद्यामुपदिश्योक्तं*॥ आचार्य्यस्त्विति॥ तवात्मविद्याफलावाप्तये मार्गमर्च्चिरादिकं वदिष्यतीत्यर्थः। पश्चादाचार्य्येणागत्य य एषोऽक्षिणीत्युक्तार्च्चिरादिकागतिरुक्ता। तथा चाग्निभिरुक्तात्मविद्यावाक्यस्य गतिवाक्येनैकवाक्यता वाच्या, सा च सर्व्वनाम्ना प्रकृतात्मग्रहे निर्व्वहतीत्येकवाक्यतानिर्व्वाहकं प्रकरणं वाक्यभेदकाल्लिङ्गाद्बलवदिति भावः। श्रुतिं व्याचष्टे॥ उच्यत इति॥ प्राणस्य सूत्रात्मा बृहत्त्वाद्ब्रह्मेति यत् तज्जानामि कं विषयसुखं खञ्च भूताकाशं ब्रह्मत्वेन ज्ञातुं न शक्नोमीत्यर्थः। खं कथम्भूतं यत् कं तदेव खमिति सुखेन विशेषितस्य खस्य भूत-

तीये ब्रह्मशब्देऽनुपादीयमाने कं खं ब्रह्मेत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्तत्वात् सुखस्य गुणस्याध्येयत्वं स्यात्, तन्मा भूदित्युभयोः कंखंशब्दयोः ब्रह्मशब्दशिरस्त्वं कं ब्रह्म खं ब्रह्मेति। इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वं। तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्मोपदिष्टं। प्रत्येकञ्च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्य "एषा सोम्य ते अस्मद्विद्याऽऽत्मविद्या च" इत्युपसंहरन्तः पूर्व्वत्र ब्रह्मनिर्दिष्टमिति ज्ञापयन्ति। "आचार्य्यस्तु ते गतिं वक्ता" इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति। "यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवं विदि पापं कर्म न श्लिष्यते" इति चाक्षिस्थानं पुरुषं

---

त्वनिरासः। तथा कं कथम्भूतं यत् खं तदेव कमिति विभुत्वेन विशेषितस्य कस्य जन्यत्वनिरास इति व्यतिरेकमुखेनाह ॥ तच्च खमित्यादिना ॥ आत्मविद्येतिश्रुतिविरोधात् प्रतीकध्यानमात्रानिष्टमिति भावः। सामय इति। आमयो दोषः। साधनपारतन्त्र्यानित्यत्वादिः तत्सहित इत्यर्थः। प्रत्येकग्रहणे दोषमुक्त्वा द्वयोर्ग्रहणे फलितमाह ॥ इतरेतरेति ॥ विशेषितार्थकावित्यर्थः। नन्वेकं ब्रह्मैवात्र ध्येयं चेद् ब्रह्मपदान्तरं किमर्थमित्यत आह ॥ तत्रेति ॥ विशेषणत्वेन खस्य भूतत्वव्यावर्त्तकत्वेनेत्यर्थः। ब्रह्मशब्दः शिरो ययोस्तत्त्वमिति विग्रहः। अध्येयत्वे को दोषस्तत्राह ॥ इष्टं हीति ॥ मार्गोक्त्या सगुणविद्यात्वावगमादिति भावः। आत्मविद्यापदेनोपसंहारादपि प्रकृतं ब्रह्मेत्याह। प्रत्येकञ्चेति। पृथिव्यग्निरन्नमादित्य इति मम चतस्रस्तनवो विभूतिरिति गार्हपत्य उपदिदेश। आपो दिशो नक्षत्राणि चन्द्रमा इति अन्वाहार्य्यो वचनं उवाच। प्राण आकाशो द्यौर्विद्युदिति स्वमहिमानमाहवनीयो जगादेति भावः। इयमस्माकमग्नीनां विद्या प्रत्येकमुक्ता आत्मविद्या तु पूर्व्वमस्माभिर्मिलित्वा प्राणो ब्रह्मेत्युक्तेत्यर्थः। उच्यतामग्निभिर्ब्रह्मच्छायात्मा गुरुणोच्यतां वक्तृभेदादिति तत्राह ॥ आचार्य्यस्त्विति ॥ एकवाक्यता

विजानतः पापेनानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति। तस्मात् प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामादिगुणतां च उक्त्वा अर्चिरादिकां तद्विदो गतिं वक्ष्यामीति उपक्रमे "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच" इति॥

## श्रुतोपनिषत्कगत्यभिधानाच्च॥ १६॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरो यस्मात् श्रुतोपनिषत्कस्य श्रुतरहस्यस्य विज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ "अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायन्ते, एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्ते" इति श्रुतौ। स्मृतावपि।

---

निश्चयाद्वक्तृभेदेऽपि नार्थभेद इत्यर्थः। श्रुता अनुष्ठिता उपनिषद्रहस्यं सगुणब्रह्मोपासनं येन तस्य या गतिः श्रुतौ स्मृतौ च प्रसिद्धा तस्या अत्राभिधानात् लिङ्गादिति सूत्रार्थमाह॥ इतश्चेति॥ यस्माद् दृश्यते तत्तस्मादित्यन्वयः। श्रुतिमाह॥ अथेति॥ देहपातानन्तरमित्यर्थः। स्वधर्म्मस्तपः तपो ब्रह्मचर्य्यश्रद्धाविद्याभिः आत्मानं ध्यात्वा तया ध्यानविद्ययोत्तरं देवयानमार्गं प्राप्यते नोत्तरेण पथा। आदित्यद्वारा सगुणब्रह्मस्थानं गच्छन्ति एतद्वै ब्रह्म प्राणानां व्यष्टिसमष्टिरूपाणामायतनं लिङ्गात्मकं हिरण्यगर्भरूपं वस्तुतस्त्वेतदमृतादिरूपं निर्गुणं सर्व्वाधिष्ठानं। अत कार्य्यब्रह्म प्राप्य तत् स्वरूपं निर्गुणं ज्ञात्वा मुच्यन्त इत्यर्थः। अग्निरेव ज्योतिर्देवता एवमहराद्या देवता एव स्मृतौ उक्ताः॥ अस्मिन्नुपासके मृते सति यदि पुत्रादयः शव शवसंस्कारादिकं कुर्व्वन्ति यदि च न कुर्व्वन्ति उभयथाप्युपास्तिमहिम्ना अर्चिरादिदेवान् क्रमेण गच्छन्ति। अर्चिषमग्निं ततोऽहरहः शुक्लपक्षं तत उत्तरायणं तस्मात् सवत्सरं ततो देवलोकं ततो वायुं वायोरादित्यं ततश्चन्द्रं

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" ॥

इति। सैवेहाचिपुरुषविदोऽभिधीयमाना दृश्यते। "अथ यदु चैवास्मिन् शव्यं कुर्व्वन्ति यदु च नार्च्चिषमेवाभिसम्भवन्ति" इत्युपक्रम्य "आदित्याचन्द्रमसं चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" इति। तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्याऽचिस्थानस्य ब्रह्मत्वं निश्चीयते॥

अनवस्थितेरसम्भवाच्च नेतरः॥ १७॥

यत् पुनरुक्तं "छायात्मा विज्ञानात्मा देवतात्मा वा स्यादचिस्थानः" इति। अत्रोच्यते, न छायात्मादिरितर इह ग्रहणमर्हति। कस्मात्। अनवस्थितेः। न तावत् छायात्मनश्चक्षुषि नित्यमवस्थानं सम्भवति। यदैव हि कश्चित् पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यतेऽपगते तस्मिन्न दृश्यते, "य एषोऽक्षिणि पुरुषः" इति च श्रुतिः सन्निधानात् स्वे चक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति। न चोपासनकाले स छायाकरं कश्चित् पुरुषं चक्षुःसमीपे सन्निधाप्योपास्त इति युक्तं कल्पयितुं। "अस्यैव शरीरस्य नाशमन्वेष नश्यति" इति श्रुतिश्छायात्मनोऽ

चन्द्राद्विद्युतं गत्वा तत्र विद्युल्लोके स्थितानुपासकान् मानवः पुरुषो ब्रह्मलोकादागत्य कार्य्यब्रह्मलोकं प्रापयति। एषोऽर्चिरादिभिर्द्देवैर्विशिष्टो देवपथो गन्तव्येन ब्रह्मणा योगाद्ब्रह्मपथश्च। एतेन कार्य्यं ब्रह्म प्रतिपद्यमाना उपासका इमं मानवं मनोः सर्गं व्यावर्त्तं जन्ममरणा-

नैवस्थितत्वं दर्शयति। असम्भवाच्च। तस्मिन्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः। तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसम्बन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं न शक्यं। ब्रह्मणस्तु सर्वव्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसम्बन्धः। समानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानामसम्भवः। यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव तथाप्यविद्याकामकर्म्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयञ्चेत्यमृतत्वाभयत्वेनोपपद्येते। संयद्वामत्वादयश्चैतस्मिन्ननैश्वर्य्यादनुपपन्ना एव। देवतात्मनस्तु "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति श्रुतेः यद्यपि चक्षुष्यवस्थानं स्यात् तथाप्यात्मत्वं तावन्न सम्भवति पराग्रूपत्वात्। अमृतत्वादयोऽपि न सम्भवन्ति उत्पत्तिप्रलयश्रवणात्। अमरत्वमपि देवानां चिरकालावस्थानापेक्षं। ऐश्वर्य्यमपि परमेश्वरायत्तं न स्वाभाविकं, "भीषास्माद्वातःपवते भीषोदेति सूर्य्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति मन्त्र-

---

वृत्तियुक्तं नावर्त्तन्ते नागच्छन्तीत्यर्थः। चक्षुरासीदतीति उपगच्छतीत्यर्थः। अनवस्थितस्योपास्यत्वं सदा न सिद्ध्यतीति भावः। किञ्चाव्यवधानात् स्वाच्छिस्य उपास्य। न च तस्य स्वचक्षुषा दर्शनं सम्भवतीत्याह॥ य एष इति॥ अस्तु तर्हि परेण दृश्यमानस्योपास्तिरित्यत आह॥ न चेति॥ कल्पनागौरवादित्यर्थः। युक्तिसिद्धानवस्थितत्वे श्रुतिमाह॥ अस्येति॥ छायाकरस्य विम्बस्य नाशमदर्शनमनुसृत्यैव छायात्मा नश्यतीत्यर्थः। जीवं निरस्यति॥ तथेति॥ आत्मन्धस्याप्यहमित्यविशेषेण जीवस्याभिव्यक्तेश्चक्षुरेव स्थानमित्ययुक्तमित्यर्थः॥ दृष्ट इति॥ श्रुताविति शेषः। ननु "चक्षोः सूर्य्योऽजायत सूर्य्योऽस्तमेति" इति वाक्यं अमरा देवा इति प्रसिद्धिबाधितमित्याशङ्क्याह॥ अमरत्वमपीति॥

वर्णात्। तस्मात् परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः। अस्मिंश्च पक्षे दृश्यत इति प्रसिद्धवदुपादानं शास्त्रापेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयं॥

## अन्तर्य्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात्॥ १८॥

"य इमञ्च लोकं परञ्च लोकं सर्व्वाणि च भूतान्यन्तरोऽयमयति" इत्युपक्रम्य श्रूयते "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरोऽयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः"इत्यादि। अत्र "अधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मञ्च कश्चिदन्तरवस्थितो यमयितान्तर्य्यामि"इति श्रूयते। स किमधिदैवाद्यभिमानी देवतात्मा कश्चित्, किंवा प्राप्ताणिमाद्यैश्वर्य्यः कश्चिद्योगी,किंवा परमात्मा,किंवाऽर्थान्तरं किञ्चिदित्यपूर्व्वसञ्ज्ञादर्शनात् संशयः।किं

---

भीषा भयेनास्मादीश्वराद्वायुस्सलति। अग्निश्चेन्द्रश्च स्वस्वकार्य्यं कुरुतः। उताभ्यां पञ्चमो मृत्युः समाप्तायुषां निकटे धावतीत्यर्थः। ईश्वरपक्षे दृश्यत इत्ययुक्तं तत्राह॥ अस्मिन्निति॥ दर्शनमनुभवः। तस्य शास्त्रे श्रुतस्य शास्त्रमेव करणं कल्प्यं सन्निधानात्। तथा च शास्त्रकरणको विद्वदनुभव उपासना स्तुत्यर्थं उच्यत इत्यर्थः। तस्मादुपकोसलविद्यावाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धं, अन्तर्य्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात्। वृहदारण्यकवाक्यमुदाहरति॥ य इति॥ अन्तर्य्यामिब्राह्मणे प्रतीयमानार्थमाह॥ अत्रेति॥ यः पृथिव्यामित्यादिना देवताः पृथिव्याद्या अधिकृत्य यमयिता श्रूयते। तथा यः सर्व्वेषु लोकेष्विति अधिलोकं। यः सर्व्वेषु वेदेष्वित्यधिवेदं। यः सर्व्वेषु यज्ञेष्विति अधियज्ञं। यः सर्व्वेषु भूतेष्वित्यधिभूतं। यः प्राणे तिष्ठन्नित्यादि य आत्मनीत्यन्तमध्यात्मञ्चेति विभागः। अशरीरस्य नियन्तृत्वसम्भवासम्भवाभ्यां संशयः। पूर्व्वत्रेश्वरस्याक्षिस्थानत्वसिद्धये पृथिव्यादिस्थाननि-

तावन्नः प्रतिभाति सञ्ज्ञाया अप्रसिद्धत्वात्, तस्मिन्नाप्यप्रसिद्धे-नार्थान्तरेण केनचित् भवितव्यमिति, अथ वा नानिरूपितरूप-मर्थान्तरं शक्यमस्तीत्यभ्युपगन्तुं। अन्तर्यामिशब्दश्चान्तर्यमणयो-गेन प्रवृत्तो नात्यन्तमप्रसिद्धः। तस्मात् पृथिव्याद्यभिमानी क-श्चिद्देवोऽन्तर्यामी स्यात्। तथा च श्रूयते "पृथिव्येव यस्यायतन-मग्निर्लोको मनो ज्योतिः" इत्यादि। स च कार्य्यकरणवत्त्वात् पृथिव्यादीनन्तस्तिष्ठन् यमयतीति युक्तं देवात्मनो यमयितृत्वं। योगिनो वा कस्यचित् सिद्धस्य सर्व्वानुप्रवेशेन यमयितृत्वं स्यात्। न तु *परमात्मा प्रतीयेत अकार्य्यकरणवत्त्वादित्येवं प्राप्त इदमु-च्यते। योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान् नान्य इति। कुतः। तद्धर्म्मव्यपदेशात्। तस्य हि परमात्मनो धर्म्मा इह निर्द्दिश्यमाना दृश्यन्ते। पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन् यमयतीति परमात्मनो यमयि-तृत्वं धर्म्म उपपद्यते, सर्व्वविकारकारणत्वे सति सर्व्वशक्त्युपपत्तेः।

देवेशो दृष्टान्त उक्तस्तस्य दृष्टान्तवाक्यस्येश्वरपरत्वमत्राक्षिप्य समाधीयत इत्याक्षेपसङ्गतिः, अत पूर्व्वफलेनास्य फलवत्त्वं। अवान्तरफलन्तु पूर्व्वपक्षे अनीश्वरोपास्तिः सिद्धान्ते प्रत्यग्ब्रह्मज्ञानमिति मन्तव्यं। स्वयमेवा-रुचिं वदन् पक्षान्तरमाह ॥ अथ वेति ॥ अनिश्चितार्थे फलाभावेना फलस्य वेदार्थत्वायोगादिति भावः। तथा च श्रूयते यस्य देवस्यायतनं शरीरं लोक्यतेऽनेनेति लोकश्चक्षुर्ज्योतिः सर्व्वार्थप्रकाशकं मन इत्यर्थः। उपक्रमादिनाऽन्तर्याम्यैक्यनिश्चयादनेकदेवपक्षो न युक्त इत्यरुचेराह ॥ योगिनो वेति ॥ आगन्तुकसिद्धस्यान्तर्यामित्वे सिद्धसाधनकल्पनागौ-रवान् नित्यसिद्ध एवान्तर्यामीति सिद्धान्तयति ॥ एवं प्राप्त इति ॥

* नात्र इति मु॰।

"एष त आत्मान्तर्याम्यमृतः" इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते। "यं पृथिवी न वेद" इति च पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति, पृथिवीदेवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात्। तथा "अदृष्टोऽश्रुतः" इत्यादिव्यपदेशो रूपादिविहीनत्वात् परमात्मन उपपद्यत इति। यत्तु कार्य्यकरणहीनस्य परमात्मनो यमयितृत्वं नोपपद्यत इति, नैष दोषः, यान्नियच्छति तत् कार्य्यकरणैरेव तस्य कार्य्यकरणवत्त्वोपपत्तेः। तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न सम्भवति भेदाभावात्। भेदे हि सत्यनवस्थादोषोपपत्तिः। तस्मात् परमात्मैवान्तर्यामी॥

## न च स्मार्त्तमतद्धर्म्माभिलापात्॥ १९॥

स्यादेतददृष्टत्वादयो धर्म्माः साङ्ख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते रूपादिहीनतया तस्य तैरभ्युपगमात्। "अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः" इति हि स्मरन्ति। तस्यापि निय-

---

देवतानिरासे हेत्वन्तरमाह॥ य पृथिवीति॥ ईश्वरो न नियन्ता ह्यशरीरत्वात् घटवदित्युक्तं निरस्यति॥ नैष दोष इति॥ नियम्यातिरिक्तशरीरशून्यत्वं वा हेतुः शरीरासम्बन्धित्वं वा। आद्ये स्वदेहनियन्तरि जीवे व्यभिचारः द्वितीयस्त्वसिद्धः। ईश्वरस्य स्वाविद्योपार्जितसर्व्वसम्बन्धित्वादित्याह॥ यान्नियच्छतीति॥ सशरीरो नियन्तेति लोकदृष्टिमनुसृत्यैतदुक्तं। वस्तुतस्तु चेतनसान्निध्यात् तस्य व्यापारो नियमनं तच्छक्तिमत्त्वं नियन्तृत्वं। तथाचिन्त्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नं। कार्य्यकरणसङ्घातात्मको देहो ग्राह्यः तेन लिङ्गदेहस्य व्यावृत्तिः। ननु देहनियन्तुर्जीवस्यान्यो नियन्ता चेत् तस्याप्यन्य, अत आह॥ इत्यनवस्थेति॥ निरङ्कुशं सर्व्वनियन्तृत्वं ईश्वरस्य श्रुतं। तस्या-

न्तृत्वं सर्व्वविकारकारणत्वादुपपद्यते। तस्मात् प्रधानमन्तर्यामिशब्दं स्यात्,ईक्षतेर्नाशब्दमित्यत्र निराकृतमपि सत् प्रधानमिहादृष्टत्वादिव्यपदेशसम्भवेन पुनराशङ्क्यते। तत उत्तरमुच्यते। न च स्मार्त्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति। कस्मात्। अतद्धर्माभिलापात्। यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य सम्भवति तथापि न द्रष्टृत्वादिव्यपदेशः सम्भवति प्रधानस्याचेतनत्वेन तैरभ्युपगमात्। "अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता" इति हि वाक्यशेष इह भवति। आत्मत्वमपि न प्रधानस्योपपद्यते। यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसम्भवान्नान्तर्याम्यभ्युपगम्यते शारीरस्तर्ह्यन्तर्यामी भवतु। शारीरो हि चेतनत्वाद् द्रष्टा श्रोता मन्ता विज्ञाता च भवत्यात्मा च प्रत्यक्त्वात्, अमृतश्च धर्म्माधर्म्मफलोपभोगोपपत्तेः। अदृष्टत्वादयश्च धर्म्माः शारीरे सुप्रसिद्धाः दर्शनादिक्रियायाः कर्त्तरि प्रवृत्तिविरोधात्। "न दृष्टेर्द्रष्टारं पश्येत्" इत्यादिश्रुतिभ्यश्च। तस्य च कार्य्यकारणसङ्घातमन्तर्य्यमयितुं शीलं भोक्तृत्वात्। तस्माच्छारीरोऽन्तर्यामीति अत उत्तरं पठति।

---

नियन्त्रन्तरानुमाने श्रुतिबाध इति नानवस्थेत्यर्थः। यद्वा ईश्वराद्भेदकल्पनया जीवस्य नियन्तृत्वोक्तिः। सत्यभेदाभावान्न नानवस्थेत्यर्थः। प्रधानं महदादिक्रमेण कथं प्रवर्त्तत इति तर्कस्याविषय इत्याह॥ अप्रतर्क्यमिति। रूपादिहीनत्वादविज्ञेयं सर्व्वतो दिक्षु प्रसुप्तमिव तिष्ठति जडत्वादित्यर्थः। अतत, अप्रधानं चेतनं तस्य धर्म्माणामभिधानादिति हेत्वर्थः। उत्तरसूत्रं निरस्याशङ्कामाह॥ यदि प्रधानमित्यादिना॥ अमृतश्चेति॥ विनाशिनो देहान्तरभोगानुपपत्तेरित्यर्थः। यथा देवदत्तकर्त्तृकगमनक्रियाया ग्रामः कर्म्म न देवदत्तस्तथात्मकर्त्तृक-

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

नेति पूर्व्वसूत्रादनुवर्त्तते शारीरश्च नान्तर्य्यामी स्यात्। यद्यपि द्रष्टृत्वादयो धर्मास्तस्य सम्भवन्ति तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान् न स कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुञ्च शक्नोति। अपि च। उभयेऽपि हि शाखिनः काण्वा माध्यन्दिनाश्चान्तर्य्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते। "यो विज्ञाने तिष्ठन्" इति काण्वाः। "य आत्मनि तिष्ठन्" इति माध्यन्दिनाः। य आत्मनि तिष्ठन्नित्यस्मिंस्तावत् पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। यो विज्ञाने तिष्ठन्नित्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते, विज्ञानमयो हि शारीर इति। तस्माच्छारीरादन्य ईश्वरोऽन्तर्य्यामीति सिद्धं। कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते। यश्चायमीश्वरोऽन्तर्य्यामी यश्चायमितरः शारीरः। का पुनरि-

---

दर्शनादिक्रियाया अनात्मा विषयः न त्वात्मा क्रियायाः कर्तृविषयत्वायोगादित्याह ॥ कर्त्तरीति ॥ क्रियाया गुणः कर्त्ता प्रधानं कर्म्म तन्नैकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान् न कर्त्तुः कर्म्मत्वमित्यर्थः। द्रष्टेदृष्टारमात्मानं तया दृश्यया दृष्ट्या न विषयीकुर्य्या इत्यादिश्रुतेश्चाद्रष्टृत्वादिधर्म्माः शारीरस्येत्याह ॥ नेति ॥ अपिशब्दसूचितहेतुमुक्ता कण्ठोक्तं हेतुमाह ॥ अपि चोभयेऽपीति ॥ भेदेनेति सूत्रात् तात्त्विकभेदे भ्रान्तिं निरसितुं शङ्कते। कथमिति ॥ नन्वनेको भोक्ता जीवः ईश्वरस्त्वभोक्तेति न विरोध इति शङ्कते ॥ का पुनरिति ॥ तयोर्भेदः श्रुतिविरुद्ध इति पूर्व्ववाद्याह ॥ नान्य इति ॥ स एव श्रुत्यर्थमाह ॥ अत्रेति श्रुतेरर्थान्तरमाशङ्क्य निषेधति ॥ नियन्त्रन्तरेत्यादिना ॥ न केवलमप्रसक्तप्रतिषेध, किन्त्वविशेषेण द्रष्ट्रन्तरनिषेधश्रुतेरन्तर्य्याम्यन्तर-

ह्यानुपपत्तिः। "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिवचनं विरुद्धेत। अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चात्मानं प्रतिषेधति। नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमिति चेत्, न, नियन्त्रन्तराप्रसङ्गात्, अविशेषश्रवणाच्च। अत्रोच्यते। अविद्याप्रत्युपस्थापितकार्य्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्य्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। एको हि प्रत्यगात्मा भवति न द्वौ प्रत्यगात्मानौ सम्भवतः। एकस्यैव तु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाश इति। ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रञ्चेति सर्व्वमेतदुपपद्यते। तथा च श्रुतिः "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यविद्याविषये सर्व्वव्यवहारं दर्शयति। "यत्र त्वस्य सर्व्वमात्मैवाभूत्तत् केन कं पश्येत्" इति विद्याविषये सर्व्वव्यवहारं वारयति।

---

निषेधार्थत्वे बाधस्तेत्याह॥ अविशेषेति॥ तस्मात् सूत्रे य आत्मनि तिष्ठन्निति श्रुतौ च द्रष्टृभेदोक्तिरयुक्ता। नान्य इति वाक्यशेषे भेदनिरासादिति प्राप्तभेद उपाधिकल्पितः श्रुतिसूत्राभ्यामनूद्यत इति समाधत्ते॥ अत्रोच्यत इति॥ भेदः सत्यः किं न स्यादत आह॥ एको हीति॥ गौरवेण द्वयोरहंधीगोचरत्वासम्भवादेक एव तद्गोचरः तदगोचरस्य घटवदनात्मत्वाज्ञात्मभेदः सत्य इत्यर्थः॥ ततश्चेति॥ कल्पितभेदाङ्गीकाराद्भेदापेक्षं सर्व्वं युज्यत इत्यर्थः। तस्मादन्तर्य्यामिब्राह्मणं ज्ञेये ब्रह्मणि समन्वितमिति सिद्धं। अदृश्यत्वादिगुणको धर्म्मोक्तेः। मुण्डकवाक्यमुदाहरति॥ अथेति॥ कर्म्मविद्याख्यापरविद्योक्त्यानन्तरं यया निर्गुणं ज्ञायते परा सोच्यते तामेव विषयोक्त्या निर्द्दिशति॥ यत्तदिति॥ अद्रेश्यं अदृश्यं ज्ञानेन्द्रियैः अग्राह्यं कर्म्मेन्द्रियैश्च। गोत्रं वंशः। वर्णो ब्राह्मणत्वादि जातिः। चक्षुःश्रोत्रशून्यं अचक्षुःश्रोत्रं।

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

"अथ परा यया तदक्षरमधिगम्यते" "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इति श्रूयते। तत्र संशयः। किमयमद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्यात्, उत शारीरः, आहोस्वित् परमेश्वर इति। तत्र प्रधानमचेतनं भूतयोनिरिति युक्तं, अचेतनानामेव तत्र दृष्टान्तत्वेनोपादानात् "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वं" इति। ननूर्णनाभिः पुरुषश्चेतनाविह दृष्टान्तत्वेनोपात्तौ, नेति ब्रूमः, न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वञ्चास्ति। चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः पुरुषशरीरञ्च केशलोम्नामिति प्रसिद्धं। अपि च। पूर्व्वत्राद्रष्टृत्वाद्यभिलापसम्भवेऽपि द्रष्टृत्वाद्यभिलापासम्भवान् न प्रधानमभ्युपगतं।

---

पाणिपादशून्यमपाणिपादं ज्ञानकर्म्मेन्द्रियविकलमित्यर्थः। विभुं प्रभुं सूक्ष्मं दुर्ज्ञेयत्वात् नित्याव्ययपदाभ्यां नाशापक्षययोर्निरासः। भूतानां योनिं प्रकृतिं यत् पश्यन्ति धीराः पण्डितास्तदक्षरं तद्विद्यापरेत्यन्वयः॥ अदृश्यत्वादिगुणानां ब्रह्मप्रधानसाधारणत्वात् संशयः। पूर्व्ववद् द्रष्टृत्वादीनां चेतनधर्म्माणामनाश्रुतेः। अस्तु प्रधानमिति प्रत्युदाहरणेन पूर्व्वपक्षयति॥ तत्रेति॥ पूर्व्वपक्षे प्रधानाद्युपास्तिः सिद्धान्ते निर्गुणधीरिति फलं। ऊर्णनाभिर्लूताकीटः तन्तून् स्वदेहात् सृजति उपसंहरति चेत्यर्थः। सतो जीवतः। ननु पूर्व्वं निरस्तं प्रधानं कथमुत्थाप्यते

इह त्वदृश्यत्वादयो धर्म्माः प्रधाने सम्भवन्ति, न चात्र विरुद्ध्यमानो धर्म्मः कश्चिदभिलप्यते। ननु "यः सर्व्वज्ञः सर्व्ववित्" इत्ययं वाक्यशेषोऽचेतने प्रधाने न सम्भवति। कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति। अत्रोच्यते। "यया तदक्षरमधिगम्यते यत्तदद्रेश्यं" इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनः श्रावयिष्यति "अक्षरात् परतः परः" इति। तत्र यः परोऽक्षरात् श्रुतः स सर्व्वज्ञः सर्व्ववित्त्व सम्भविष्यति प्रधानमेव त्वक्षरशब्दनिर्द्दिष्टं भूतयोनिः। यदा तु योनिशब्दो निमित्तवाची तदा शारीरोऽपि भूतयोनिः स्यात्, धर्म्माधर्म्माभ्यां भूतजातस्योपसर्जनादिति। एवं प्राप्तेऽभिधीयते, योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यान्नान्य इति। कथमेतदवगम्यते। धर्म्मोक्तेः। परमेश्वरस्य हि धर्म्म इहोच्यमानो दृश्यते "यः सर्व्वज्ञः सर्व्ववित्" इति। न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्व्वज्ञत्वं सर्व्ववित्त्वं वा सम्भवति। नन्वक्षरशब्दनिर्द्दिष्टाद् भूतयोनेः परस्यैवैतत् सर्व्वज्ञत्वं

---

तत्राह॥ अपि चेति॥ अत्र प्रधाने विरुद्ध्यमानोऽसम्भावितो वाक्यशेषः श्रुत इति सङ्गते॥ ननु य इति॥ पञ्चम्यन्ताक्षरश्रुत्या भूतप्रकृतेः प्रत्यभिज्ञानात् प्रथमान्तपरशब्दोक्तस्य जगन्निमित्तेश्वरस्य सर्व्वज्ञत्वादिकमित्याह॥ अत्रोच्यत इति॥ सन्दिग्धे तु वाक्यशेषादिति न्यायेन सिद्धान्तयति॥ एवं प्राप्त इति॥ चेतनाचेतनत्वेन सन्दिग्धे भूतयोनौ यः सर्व्वज्ञ इति वाक्यशेषादीश्वरत्वनिर्णय इत्ययुक्तं वाक्यशेषे भूतयोनेः प्रत्यभिज्ञापकाभावादिति शङ्कते॥ नन्विति॥ जनिकर्त्तुः प्रकृतिरिति सूत्रेण प्रकृतेरुपादानसञ्ज्ञाया पञ्चमी स्मरणादक्षरात् सम्भवतीति

सर्व्ववित्त्वञ्च न भूतयोनिविषयमित्युक्तं। अत्रोच्यते। नैवं सम्भवति "यत्कारणमक्षरात् सम्भवतीह विश्वं" इति प्रकृतं भूतयोनिमिह जायमानप्रकृतित्वेन निर्द्दिश्यानन्तरमपि जायमानप्रकृतित्वेनैव सर्व्वज्ञं निर्द्दिशति।

"यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः।
तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते"॥ इति॥

तस्मान्निर्द्देशसाम्येन प्रत्यभिज्ञायमानत्वात् प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्व्वज्ञत्वं सर्व्ववित्त्वञ्च धर्म्म उच्यत इति गम्यते। "अक्षरात् परतः परः" इत्यत्रापि न प्रकृतात् भूतयोनेरक्षरात् परः कश्चिदभिधीयते। कथमेतदवगम्यते। "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां" इति प्रकृतस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात्। कथं तर्ह्यक्षरात् परतः पर इति व्यपदिश्यत इत्युत्तरसूत्रे वक्ष्यामः। अपि

---

प्रकृतित्वेनोक्ताक्षरस्य भूतयोनेर्वाक्यशेषे तस्मादिति प्रकृतित्वलिङ्गेन प्रत्यभिज्ञानमस्तीति समाधत्ते॥ अत्रोच्यत इति॥ एतत् कार्य्यं ब्रह्मसूक्ष्मात्मकं नामरूप स्थूलं ततोऽन्नं व्रीह्यादीत्यर्थः। यदुक्तं पञ्चम्यन्ताक्षरश्रुत्या भूतयोनेः प्रत्यभिज्ञानादचेतनत्वमिति तत्राह॥ अक्षरात् पर इति॥ नायमक्षरशब्दो भूतयोनिं परामृशति परविद्याधिगम्यत्वेनोक्तस्याक्षरस्य भूतयोनेरक्षरं पुरुषं वेदेत्यक्षरश्रुत्या वेद्यत्वलिङ्गवत्या पूर्व्वमेव ब्रह्मत्वेन परामर्शादित्याह॥ येनेति॥ येन ज्ञानेनाक्षरं भूतयोनिं सर्व्वज्ञं पुरुषं वेद तां ब्रह्मविद्यां योग्यशिष्याय प्रब्रूयादित्युपक्रम्याप्राणो ह्यमनाः शुभ्रः अक्षरात् परतः पर इति उच्यमानः परो भूतयोनिरिति गम्यत इत्यर्थः। तर्हि पञ्चम्यन्ताक्षरशब्दार्थः क इत्याशङ्क्याज्ञानमिति वक्ष्यत इत्याह॥ कथमिति॥ परविद्येति समाख्ययाऽपि तद्विषयस्य

चात्र द्वे विद्ये वेदितव्ये उक्ते परा चैवापरा च इति। तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति "अथ परा यया तदक्षरमधिगम्यते" इत्यादि। तत्र परस्याविद्याया विषयत्वेनाक्षरं श्रुतं। यदि पुनः परमेश्वरादन्यदद्रेश्यत्वादिगुणकमक्षरं परिकल्प्येत नेयं परा विद्या स्यात्। परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते। न च प्रधानविद्या निःश्रेयसफला केनचिदभ्युपगम्यते। तिस्रश्च विद्याः प्रतिज्ञायेरन् तत्पक्षेऽक्षराद् भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात्। द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे "कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवति" इति चैकविज्ञानेन सर्व्वविज्ञानापेक्षणं सर्व्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्प्यते, नाचेतनमात्रैकायने प्रधाने भोग्यव्यतिरिक्ते वा भोक्तरि। अपि च "स ब्रह्मविद्यां

---

ब्रह्मत्वमित्याह ॥ अपि चेति ॥ ननु प्रधानविद्याऽपि कारणविषयत्वात् परेत्यत आह ॥ परापरविभागो हीति ॥ अनित्यफलत्वेनापरविद्यां निन्दित्वा मुमुक्षवे ब्रह्मविद्या प्रोवाचेति वाक्यशेषोक्तेरित्यर्थः। अस्तु प्रधानविद्याऽपि मुक्तिफलत्वेन परेत्यत आह ॥ न चेति ॥ ननु यः सर्व्वज्ञ इत्यग्रे परविद्याविषय उच्यते, अक्षरवाक्येन तु प्रधानविद्योच्यत इत्यत आह ॥ तिस्रश्चेति ॥ इतश्च भूतयोनेर्ब्रह्मत्वमित्याह ॥ कस्मिन्निति ॥ अचेतनमात्रस्यैकायनमुपादानं तज्ज्ञानात् कार्य्यज्ञानेऽपि तदकार्य्याणामात्मनां ज्ञानं न भवति। एवं जीवे ज्ञाते तदकार्य्यस्य भोग्यस्य ज्ञानं न भवतीत्यर्थः। ब्रह्मविद्याशब्दाच्च भूतयोनिर्ब्रह्मेत्याह ॥ अपि चेति ॥ स ब्रह्मविद्यां सर्व्वविद्यानां प्रतिष्ठां समाप्तिभूमिं ब्रह्मविद्यामुवाच। ब्रह्मणि सर्व्ववेदानां विद्याफलानां चान्तर्भावाद् ब्रह्मविद्या सर्व्वविद्याप्रतिष्ठा। नन्वपरविद्यापरप्रकरणे किमर्थमुक्तेत्यत आह ॥

सर्व्वविद्याप्रतिष्ठामथर्व्वाय ज्येष्ठाय पुत्राय प्राह” इति। ब्रह्म-विद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षरा-धिगमनीं दर्शयंस्तस्या ब्रह्मविद्यात्वं दर्शयति। सा च ब्रह्मवि-द्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यात्। अपरा ऋग्वेदादिलक्षणा कर्म्मविद्या ब्रह्मविद्योपक्रम उपन्यस्यते ब्रह्म-विद्याप्रशंसार्थं, “प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तम-वरं येषु कर्म्म एतत् श्रेयो येऽभिनन्दन्ति मूढा जरां मृत्युं ते पुनरेवापि यन्ति” इत्येवमादिनिन्दावचनात्। निन्दित्वा चा-परां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति “परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणोऽपि निर्व्वेदमायान्नास्त्यकृतः कृ-तेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं” इति। यत्तूक्तमचेतनानां पृथिव्यादीनां दृष्टान्त-त्वेनोपादानात् दार्ष्टान्तिकेनाप्यचेतनेनैव भूतयोनिना भवित-व्यमिति, तदयुक्तं। न हि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसा-

---

अपरेति॥ प्लवन्ते गच्छन्तीति प्लवा विनाशिनः। अदृढा नित्यफलस-म्पादनाशक्ताः षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश। यज्ञेन नाम-निमित्तेन निरूप्यन्त इति यज्ञरूपाः। तथा हि ऋतुषु याजयन्ति यज्ञं कारयन्तीत्यृत्विजः, यजत इति यजमानः, पत्युर्नो यज्ञसंयोग इति सूत्रेण पतिशब्दस्य नकारान्तादेशो यज्ञसम्बन्धे विहित इति पत्नी, एवमृत्विजादिनामप्रवृत्तिनिमित्तं यज्ञ इति यज्ञरूपा येष्ववरमनि-त्यफलकं कर्म्मश्रुत्युक्तं, एतदेव कर्म्म श्रेयो नान्यदात्मज्ञानमिति ये मूढा-स्तुष्यन्ति ते पुनः पुनर्जन्ममरणमाप्नुवन्तीत्यर्थः। तद्विज्ञानार्थं ब्रह्मज्ञा-नार्थं गुरुमभिगच्छेदेवेति नियमः। ब्रह्मनिष्ठस्याप्यनधीतवेदस्य गुरुत्वं

स्येन भवितव्यमिति नियमोऽस्ति। अपि च स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते, तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव।

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतश्च परमेश्वर एव भूतयोनिः, नेतरौ शारीरः प्रधानं वा। कस्मात्। विशेषणभेदव्यपदेशाभ्यां। विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन "दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजोऽप्राणो ह्यमनाः शुभ्रः" इति। न ह्येतद्दिव्यत्वादिविशेषणमविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनः तद्धर्मांश्च स्वात्मनि कल्पयतः शारीरस्योपपद्यते। तस्मात् साक्षादौपनिषदः पुरुष इहोच्यते। तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति "अक्षरात् परतः परः" इति। अक्षरमव्याकृतं नाम-

---

वारयति॥ श्रोत्रियमिति॥ कार्य्यमुपादानाभिन्नमित्यंशे दृष्टान्तः। सर्व्वांशे तत्वाप्यनिष्टापत्तेरित्याह॥ अपि च स्थूला इति॥ विशेषणात् जीवो भेदोक्तेर्न प्रधानमिति हेतुद्वयं विभज्य व्याचष्टे॥ विशिनष्टि दिव्य इत्यादिना॥ दिव्यो द्योतनात्मकः स्वयं ज्योतिरमूर्त्तः पूर्णः पुरुषः पुरिशयः प्रत्यगात्मा बाह्यं स्थूलमाभ्यन्तरं सकारणं सूक्ष्मं ताभ्यां सहाधिष्ठानत्वेन तिष्ठति स बाह्याभ्यन्तरः, हि तथा श्रुतिषु प्रसिद्ध इत्यर्थः। अविद्याकृतं नामरूपात्मकं शरीरं तेन परिच्छेदोऽल्पत्वं। तस्य शारीरस्य धर्म्मान् जाड्यमूर्त्तत्वादीनित्यर्थः। नन्वक्षरशब्देन प्रधानोक्तावक्षरत्व प्रधानस्य प्रतिज्ञातं बाध्येत। तत्राह॥ अक्षरमव्याकृतमिति॥

रूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं सर्व्वस्माद्विकारात् परो योऽविकारः तस्मात् परतः पर इति भेदेन व्यपदेशात् परमात्मानमिह विवक्षितं दर्शयति। नात्र प्रधानं नाम किञ्चित् स्वतन्त्रं तत्त्वमभ्युपगम्य तस्माद्भेदव्यपदेश उच्यते। किं तर्हि। यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेनाव्याकृता-

---

अश्नोति व्याप्नोति स्वविकारजातमित्यक्षरं। अव्याकृतमकृतं अनादीति यावत्। नामरूपयोर्बीजं ईश्वरः तस्य शक्तिरूपं परतन्त्रत्वादुपादानमपि शक्तिरित्युक्तं। भूतानां सूक्ष्माः संस्कारा यत्र तद्भूतसूक्ष्मं। ईश्वरश्चिन्मात्र आश्रयो यस्य तत्तथा। तस्यैव चिन्मात्रस्य जीवेश्वरभेदोपाधिभूतं यत्तु ईश्वर आश्रयो विषयो यस्येति नानाजीववादिनां व्याख्यानं तद्भाष्ये बहिर्भूतं। एतस्मिन् खल्वक्षरे आकाश ओतश्च प्रोतश्चेत्योतप्रोतभावेनाव्याकृतस्य चिदाश्रयत्वश्रुतेः, आश्रयपदलक्षणाया निर्मूलत्वात्। न हि मूलप्रकृतेर्भेदे किञ्चिन्मानमस्ति। न च "इन्द्रो मायाभिः" इति श्रुतिर्मानं। "अजामेकां" इत्याद्यनेकश्रुतिबलेन लाघवतर्कसहायेन तस्याः श्रुतेर्बुद्धिभेदेन मायाभेदानुवादित्वात्। तदुक्तं सुरेश्वराचार्य्यैः "स्वतस्त्वविद्याभेदोऽत्र मनागपि न विद्यत" इति। साङ्ख्ययोगाचार्य्याः पुराणेतिहासकर्त्तारश्च मूलप्रकृत्यैक्यं वदन्ति। नन्वविद्यैक्ये बन्धमुक्तिव्यवस्था कथं। न च व्यवस्था नास्तीति वाच्यं श्रवणे प्रवृत्त्यादिबाधापातादिति चेत्। उच्यते। ये ह्यविद्यानानात्वमिच्छन्ति तैरपि परिणामित्वेन सांशत्वमविद्याया अङ्गीकार्य्यं, तथा चानर्थात्मकः स्वीयसङ्घातात्मना परिणता विद्यांशोपहितजीवभेदाद्व्यवस्था सिध्यति। यस्य ज्ञानमन्तःकरणे जायते तस्यान्तःकरणपरिणाम्यज्ञानांशनाशो मुक्तिरिति। एवञ्च श्रोतुः स्वरूपानन्दप्राप्तिं श्रवणादौ प्रवृत्तिर्विद्वदनुभवो जीवन्मुक्तिशास्त्रञ्चेति सर्व्वमबाधितं भवति। न चैवं नानाजीववादाद्विशेषः मूलप्रकृतिनानात्वाभावादित्यलं परत्वे हेतुः॥ अविकार इति॥ ननु एवमक्षरात् श्रुतौ प्राधान्याद्भेदव्यपदेश उक्तस्तत्र कथमप्राधान्याद्भेदोक्तिर्व्याख्यायते तत्राह॥ नात्रेति॥ कार्य्यात्मना प्रधीयत

दिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत कल्प्यतां तस्माद्भेदव्यपदेशात् परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते। कुतश्च परमेश्वरो भूतयोनिः॥

## रूपोपन्यासाच्च॥ २३॥

अपि च "अक्षरात् परतः परः" इत्यस्यानन्तरं "एतस्माज्जायते प्राणः" इति प्राणप्रभृतीनां पृथिवीपर्य्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्व्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः। "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्व्वभूतान्तरात्मा" इति। तच्च परमेश्वरस्यैवोचितं सर्व्वविकारकारणत्वान्न शारीरस्य तनुमहिम्नो नापि प्रधानस्यायं रूपोपन्यासः सम्भवति सर्व्वभूतान्तरात्मत्वासम्भवात्, तस्मात् परमेश्वर एव भूतयोनिर्नेतराविति गम्यते। कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते। प्रकरणात्। "एष" इति च प्रकृतानुकर्षणाद् भूतयोनिं हि प्रकृत्य "एतस्माज्जायते प्राण एष सर्व्वभूतान्तरात्मा" इत्यादि वचनं भूतयोनिविषयमेव भवति। यथोपाध्यायं प्रकृत्य "एतस्मादधीष्व एष वेदवेदाङ्गपारगः" इति वचनं उपाध्याय-

---

इति प्रधानमज्ञानमेव। ततोऽन्यस्याप्रामाणिकत्वादित्यर्थः। अतोऽज्ञानमेव भूतयोनिरिति पूर्व्वपक्षं कृत्वा निरस्यते। तन्निरासेनार्थात् साङ्ख्यकल्पितप्रधाननिरास इति मन्तव्यं। वृत्तिकृन्मतेनादौ सूत्रं व्याचष्टे॥ अपि चेत्यादिना॥ "प्राणो मनः सर्व्वेन्द्रियाणि च खं वायुर्ज्योति-

विषयं भवति तद्वत्। कथं पुनरद्रेश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं सम्भवति। सर्व्वात्मत्वविवक्षयेदमुच्यते न तु विग्रहवत्त्वविवक्षयेत्यदोषः। "अहमन्नमहमन्नमहमन्नादः" इत्यादिवत्। अन्ये पुनर्मन्यन्ते नायं भूतयोनेरूपोपन्यासः जायमानत्वेनोपन्यासात् "एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति हि पूर्व्वत्र प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत्। उत्तरत्रापि च "तस्मादग्निः समिधो यस्य सूर्य्यः" इत्येवमादि, अतश्च "सर्व्वा ओषधयो रसाश्चेत्येवमन्तं जायमानत्वेनैव निर्देक्ष्यति। इहैव कथमकस्मादन्तराले भूतयोनेरूपमुपन्यस्येत। सर्व्वात्मत्वमपि सृष्टिं परिसमाप्योपदेक्ष्यति "पुरुष एवेदं विश्वं कर्म्म" इत्यादिना। श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्मनिर्द्दिश्यमानमुपलभामहे "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्, स दधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेमः" इति समवर्त्ततेत्यजायत इत्यर्थः। तथा "स वै शरीरी प्रथमः स वै पुरुष उच्यते,

---

रापः पृथिवी" इति श्रुतिः। "असिर्द्युलोकः, असौ वाव लोको गौतमाग्नि:" इति श्रुतेः। विवृताः वेदा: वागित्यन्वयः। पद्भ्यां पादावित्यर्थः। यस्येदं रूप स एष सर्व्वप्राणिनामन्तरात्मेत्यर्थः। तनुमहिम्न इति अल्पशक्तेरित्यर्थः। यथा कश्चित् ब्रह्मवित् स्वस्य सर्व्वात्मत्वप्रकटनार्थमहमन्नमिति साम गायति न त्वन्नत्वादिकमात्मनो विवक्षति। अफलत्वात्, तथेहापीत्याह। अहमन्नमिति। वृत्तिकृद्व्याख्यां दूषयति। अन्ये पुनरिति। एष सर्व्वभूतान्तरात्मा सूत्रात्मा एतस्माद्भूतयोनेर्जायत इति श्रुत्यन्वयेन हिरण्यगर्भस्यात्र जायमानत्वेनोपन्यासादित्यर्थः।

आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत" ॥ इति।

विकारपुरुषस्यापि सर्व्वभूतान्तरात्मत्वं सम्भवति, प्राणात्मना सर्व्वभूतानामध्यात्ममवस्थानात्। अस्मिन् पक्षे "पुरुष एवेदं विश्वं कर्म्म" इत्यादिसर्व्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयं।

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

"को न आत्मा किं ब्रह्मेति आत्मानमेवेमं वैश्वानरं सम्प्रत्य-

---

निरदिक्षदवोचदित्यर्थं। अग्निर्द्युलोको यस्य समिद्रूपः सूर्य्यं सोऽपि द्युलोकाग्निस्तस्मादजायतेत्यर्थं। "तस्यादित्य एव समित्"इति श्रुत्यन्तरात्। अतो मध्येऽपि सृष्टिरेव वाच्या न रूपमिति भावः। यदुक्तमग्निर्मूर्द्धेत्यत्र भूतयोने सर्व्वात्मत्वं विवक्षितमिति तन्नेत्याह॥ सर्व्वात्मत्वमपीति॥ ननु हिरण्यगर्भस्य जन्मान्यत्रानुक्तं कथमत्र वक्तव्यं तत्राह॥ श्रुतीति॥ अग्रे समवर्त्तत जातः सन भूतग्रामस्यैकः पतिरीश्वरप्रसादादभवत् स सूत्रात्मा द्यामिमां पृथिवीञ्च स्थूलं सर्व्वमधारयत कशब्दस्य प्रजापतिसञ्ज्ञात्वे सर्व्वनामत्वाभावेन स्मा इत्ययोगादेकारलोपेनैकस्मै देवाय प्राणात्मने हविषा विधेम परिचरेमेति व्याख्येय। "कतम स एको देव इति प्राण" इति श्रुतेः। यद्वा यस्मादय जातस्तस्मा एकस्मै देवायेत्यर्थ। "एको देव सर्व्वभूतेषु गूढ"इति श्रुत्यन्तरात्। ननु तस्य भूतान्तरात्मत्वं कथ। तत्राह॥ विकारेति॥ पूर्व्वकल्पे प्रकृष्टोपासनाकर्म्मसमुच्चयानुष्ठानादस्मिन् कल्पे ,सर्व्वप्राणिव्यष्टिलिङ्गाना व्यापकं सर्व्वप्राण्यन्तर्गतं ज्ञानकर्म्मेन्द्रियप्राणात्मकसमष्टिलिङ्गशरीरं जायते तद्रूपस्य सूत्रात्मन सर्व्वभूतान्तरात्मत्व युक्तमित्यर्थ। स्वपक्षे सूत्रार्थमाह॥ अस्मिन् पक्ष इति॥ कर्म्म सफल सर्व्वश्रौतस्मार्त्तादिक तपश्च पुरुष एवेति सर्व्वान्तरत्वरूपोपन्यासाच्च भूतयोनौ ज्ञेये वाक्य समन्वितमित्यर्थ॥ वैश्वानर॥ छान्दोग्यमुदाहरति॥ को न इति॥ प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनकबुडिला मिलिता मीमांसाञ्चक्रु को न आत्मा

ध्येषितमेव नो ब्रूहीति" इति चोपक्रम्य द्युसूर्य्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च वैश्वानरं प्रत्येषां मूर्द्धादिभावमुपदिश्याम्नायते "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो

---

किं ब्रह्मेति। आत्मैव ब्रह्मेति ज्ञापनार्थं पदद्वयं। ते पश्चादपि निश्चयार्थमुद्दालकमाजग्मुः। सोऽपि सम्यक् न वेदेति तेनोद्दालकेन सह षडश्वपतिं कैकेयं राजानमागत्योचुः आत्मानमिति अध्येषि स्मरसि तमेव नो ब्रूहीति। राजा तु तेषां भ्रान्तिनिरासार्थं तान् प्रत्येकमपृच्छत। कं त्वमात्मानमुपास्स इति। ते च प्राचीनशालादयः क्रमेण तं प्रत्येकमूचुः। दिवमेवाहं वैश्वानरं वेद्मि। आदित्यमेवाहं वेद्मि। वायुमेव। आकाशमेव। अप एव। पृथिवीमेवाहं वेद्मीति। ततो राजा द्युसूर्य्यादीनां षण्णां यथाक्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वगुणान् विधाय भवन्तो यदि मामपृष्ट्वा द्युसूर्य्यादिषु भगवतो वैश्वानरस्याङ्गेष्वेव प्रत्येकं वैश्वानरत्वदृष्टयो भवेयुस्तदा क्रमेण मूर्द्धपातान्धत्वप्राणोत्क्रमणदेहविशीर्णत्ववस्तिभेदपादशोषा भवता स्युरिति प्रत्येकोपासनं निन्दित्वा सुतेजस्त्वगुणको द्युलोकोऽस्यात्मनो वैश्वानरस्य मूर्द्धा विश्वरूपत्वगुणकः सूर्य्यो यस्य चक्षुरित्येवं द्युसूर्य्यादीनां मूर्द्धादिभावमुपदिश्य समस्तवैश्वानरध्यानविधिराम्नायते॥ यस्त्वेतमिति॥ आभिमुख्येनापरोक्षतया विश्वं विमिमीते जानातीत्यभिविमानः। तं सर्व्वज्ञं स तदुपासकः सर्व्वत्र भोग्यं भुङ्क्त इत्यर्थः। लोका भूरादयो भूतानि शरीराण्यात्मानो जीवा इति भेदः। सुष्ठु तेजः कान्तिर्यस्य द्युलोकस्य स सुतेजाः विश्वानि रूपाणि अस्य सूर्य्यस्य। "एष शुक्ल एष नील." इति श्रुतेः। पृथक् नानाविधं वर्त्मगमनं आत्मा स्वभावो यस्य वायोः स नानागतित्वगुणकोऽस्य प्राणः बहुलत्वं व्यापित्वं तद्गुण आकाशोऽस्य सन्देहो देहमध्यं रयित्वं धनत्वं तद्गुणा.

वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः" इत्यादि। अत्र संशयः। किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यत उत भूताग्निरथ तदभिमानिनी देवता अथ वा शारीर आहोस्वित् परमेश्वर इति। किं पुनरत्र संशयकारणं। वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयोः। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः। किन्तावत् प्राप्तं जाठरोऽग्निरिति। कुतः। तत्र हि विशेषेण क्वचित् प्रयोगो दृश्यते "अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इत्यादौ। अग्निमात्रं वा स्यात् सामान्येनापि प्रयोगदर्शनात् "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इत्यादौ। अग्निशरीरा वा देवता स्यात् तस्यामपि प्रयोगदर्शनात् "वैश्वानरस्य सुमतौ

---

स्यामो यस्य वस्तिर्मूत्रस्थानं प्रतिष्ठात्वगुणा पृथिवी तस्य पादौ तस्य होमाधारत्वं सम्पादयति॥ उर एवेत्यादिना॥ पूर्व्वमुपक्रमस्थादृश्यत्वादिसाधारणधर्म्मस्य वाक्यशेषस्थसर्व्वज्ञत्वादिलिङ्गेन ब्रह्मनिष्ठत्वमुक्तं, तद्वदत्राप्युपक्रमस्थसाधारणवैश्वानरशब्दस्य वाक्यशेषस्थहोमाधारत्वलिङ्गेन जाठरनिष्ठत्वमिति दृष्टान्तेन पूर्व्वपक्षयति॥ किं तावदित्यादिना॥ पूर्व्वोत्तरपक्षयोर्जाठरब्रह्मणोर्ध्यानं फलं। यदद्यते तदन्नं येन पच्यते सोऽयं पुरुषे शारीरेऽन्तरस्तीत्यर्थः। पक्षान्तरमाह॥ अग्निमात्रं वेति॥ विश्वस्मै भुवनाय वैश्वानरमग्निमह्नां केतुं चिह्नं सूर्य्यं देवा अकृण्वन् कृतवन्तः। सूर्य्योदये दिनव्यवहारादित्यर्थः। स्याद्वैश्वानर इत्यनुषङ्गः। हि यस्मात् कं सुखप्रदो भुवनानां राजा वैश्वानरोऽभिमुखा श्रीरस्येत्यभिश्रीरीश्वरः। तस्मात् तस्य वैश्वानरस्य सुमतौ वयं

स्याम राजा हि कं भुवनानामभिश्रीः" इत्येवमाद्यायाः श्रुतेर्देवतायामैश्वर्याद्युपेतायां सम्भवात्। अथात्मशब्दसामानाधिकरण्यात् उपक्रमे च "को न आत्मा किं तद् ब्रह्म" इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन वैश्वानरशब्दः परिणेय इत्युच्यते। तथापि शारीर आत्मा स्यात् तस्य भोक्तृत्वेन वैश्वानरसन्निकर्षात्, प्रादेशमात्रमिति च विशेषणस्य तस्मिन् उपाधिपरिच्छिन्ने सम्भवात्। तस्मान्नेश्वरो वैश्वानर इत्येवं प्राप्तं। तत इदमुच्यते वैश्वानरः परमात्मा भवितुमर्हति। कुतः। साधारणशब्दविशेषात्। साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः। यद्यप्येतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ, वैश्वानरशब्दस्तु त्रयाणां साधारणः, आत्मशब्दश्च द्वयोः, तथापि विशेषो दृश्यते येन परमेश्वरपरत्वं तयोरभ्युपगम्यते "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाः" इत्यादि। अत्र हि परमेश्वर

---

स्याम तस्मास्मद्विषया शुभमतिर्भवत्वित्यर्थः। पक्षत्रयेऽप्यरुचिं वदन् कल्पान्तरमाह॥ अथेत्यादिना॥ आत्मा वैश्वानर इति श्रुतेरित्यर्थः। केवलत्वं वैश्वानरशब्दशून्यत्वं। अत्र जाठरो विश्वानर इति मुख्यः पूर्वपक्षः प्राणाग्निहोत्रहोमाधारत्वलिङ्गात्। तस्य देहव्यापित्वादात्मत्वं। श्रुत्या द्युमूर्द्धत्वादिकल्पनया इहत्त्वाद्ब्रह्मत्वमिति ध्येयं। सिद्धान्तयति॥ तत इदमिति॥ साधारणश्रुत्योरुपक्रमस्थयोर्विशेषात् प्रथमश्रुतमुख्यत्रैलोक्यशरीरलिङ्गात्। सर्व्वात्मकेश्वरपरत्वं युक्तं न चरमश्रुतकाल्पनिकहोमाधारत्वलिङ्गेन जाठरपरत्वमित्यर्थः। ननु निर्विशेषस्य कुतो विशेष इत्यत आह॥ अत्र हीति॥ अवस्थान्तरगतः त्रैलोक्यात्मना स्थित इत्यर्थः। जाठरस्यापि ध्यानार्थं विशेषकल्पनेति चेत्। न। असत्कल्पनापत्तेः। ईश्वरस्य तु उपादानत्वाद्विशेषः सन्नेव ध्यानार्थं

एव द्युमूर्द्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते कारणत्वात्। कारणस्य हि सर्व्वाभिः कार्य्यगताभिरवस्थाभिरवस्थावत्त्वाद् द्युलोकाद्यवयवत्वमुपपद्यते। "स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मस्वन्नमत्ति" इति च सर्व्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे सम्भवति। "एवं हास्य सर्व्वे पाप्मानः प्रदूयन्ते" इति च तद्विदः सर्व्वपाप्मप्रदाहश्रवणं। "को न आत्मा किं ब्रह्म" इति चात्मब्रह्मशब्दाभ्यामुपक्रम इत्येवमेतानि ब्रह्मलिङ्गानि परमेश्वरमेव गमयन्ति। तस्मात् परमेश्वर एव वैश्वानरः॥

## स्मर्य्यमाणमनुमानं स्यादिति॥ २५॥

इतश्च परमेश्वर एव वैश्वानरः, यस्मात् परमेश्वरस्यैवाग्निरास्यं द्यौर्मूर्द्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्य्यते "यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः सूर्य्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः" इति तत् स्मर्य्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेनानुमानं लिङ्गं गमकं स्यादित्यर्थः। इतिशब्दो हेत्वर्थो यस्मादिदं गमकं तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः। यद्यपि स्तुतिरियं तस्मै

---

उच्यतामित्याह॥ कारणत्वादिति॥ लिङ्गान्तराण्याह॥ स सर्व्वेष्वित्यादिना॥ यथाग्नौ निक्षिप्तमिषीकातूलं दह्यते एव हास्य विदुष इत्यर्थः। नन्वसदादेरपेक्षापि स्तुतिसम्भवान्न मूलश्रुत्यपेक्षेत्यतःशङ्काह॥ यद्यपि स्तुतिरिति॥ तथापीतिपदमर्थतः पठति॥ स्तुतित्वमपीति॥ द्युमूर्द्धत्वा-

लोकात्मने मन इति स्तुतित्वमपि नासति मूलभूते वेदवाक्ये सम्यगीदृशेन रूपेण सम्भवति।

"द्यां मूर्द्धानं यस्य विप्रा वदन्ति
खं वै नाभिं चन्द्रसूर्य्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ चितिञ्च
सोऽचिन्त्यात्मा सर्व्वभूतप्रणेता" ॥

इत्येवं जातीयका च स्मृतिरिहोदाहर्त्तव्या॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते॥ २६॥**

अत्राह न परमेश्वरो वैश्वानरो भवितुमर्हति। कुतः। शब्दादिभ्योऽन्तःप्रतिष्ठानात्। चशब्दस्तावद्वैश्वानरशब्दो न परमेश्वरे सम्भवति, अर्थान्तरे रूढत्वात्। तथाऽग्निशब्दः "स एषोऽग्निर्वैश्वानरः" इति। आदिशब्दात् हृदयगार्हपत्याद्यग्नित्रेताप्रकल्पनं। तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयमित्यादिना च प्राणाहुत्यधिकरणतासङ्कीर्त्तनं। एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः। तथान्तःप्रतिष्ठानमपि श्रूयते "पुरुषेऽन्तःप्रतिष्ठितं वेद" इति तच्च जाठरे

---

दिरूपेण स्तुतिर्नरमात्रेण कर्त्तुमशक्या विना श्रुतिमित्यर्थः। सता रूपेण स्तुतिसम्भवान्नासदारोप इति भावः। शब्दादीनां गतिं वक्तुमुक्तसिद्धान्तमाक्षिप्य समाधत्ते॥ शब्दादिभ्य इति॥ स एषोऽग्निर्वैश्वानर इत्यग्निरहस्ये वैश्वानरविद्यायां श्रुतोऽग्निशब्द ईश्वरे न सम्भवतीत्यन्वयः। सूत्रस्यादिशब्दार्थमाह॥ आदिशब्दादिति॥ भक्तमन्नं होमीयं होमसाधनं तेन प्राणाग्निहोत्रं कार्य्यमित्यर्थः। वाजसनेयिनामग्निरहस्ये सप्रपञ्चा वैश्वानरविद्यामुक्ता "स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषे

सम्भवति यदप्युक्तं "मूर्द्धैव सुतेजाः" इत्यादेर्विशेषात् कारणात् परमात्मा वैश्वानर इत्यत्र ब्रूमः। कुतोऽन्वेषनिर्णयो यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति। अथ वा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यैव निर्देशो भविष्यति। तथापि हि द्युलोकादिसम्बन्धो मन्त्रवर्णादवगम्यते "यो भानुना पृथिवीं द्यामुतेमामाततान्ततान रोदसीमन्तरिक्षं"इत्यादौ। अथ वा तच्छरीराया देवताया ऐश्वर्ययोगाद् द्युलोकाद्यवयवत्वं सम्भवति। तस्मान्न परमेश्वरो वैश्वानर इति। अत्रोच्यते। न तथा दृष्ट्युपदेशादिति। न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तं। कुतः। तथा जाठरापरित्यागेन दृष्ट्युपदेशात्। परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यते "मनो ब्रह्मेत्युपासीत" इत्यादिवत्। अथ वा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते "मनोमयः प्राणशरीरो भारूपः"इत्यादि-

---

ऽन्तःप्रतिष्ठितं वेद स सर्वत्रान्नमत्ति"इत्युक्तं देहान्तरस्थत्वं जाठरे सम्भवति प्रसिद्धेरित्याह॥तथेति॥अत्र सूत्रे आदिपदेनैवान्तःप्रतिष्ठानस्य ग्रहे सम्भवति पृथगुक्तिः। साधारणलिङ्गत्वद्योतनार्थात् शब्दादिबलादिदमपि जाठरं गमयतीत्यभ्युच्चयः॥ यद्यपि द्युमूर्द्धत्वादिविशेष ईश्वरपक्षपाती देहाधारत्वादिर्जाठरपक्षपातीति प्रतिभानं समं तथापि पारमेश्वरो विशेषो जाठरे न सम्भवतीति बलवानित्यत आह॥ अथ वेति॥ एष द्युमूर्द्धत्वादिनिर्देश इत्यर्थः। इमां पृथिवीं द्यामपि ते एव द्यावापृथिव्यौ रोदसी तयोर्मध्यमन्तरिक्षञ्च यो भूताग्निर्भानुरूपेणाततान व्याप्तवान् स ध्यातव्य इत्यर्थः। जडमात्रस्य न ध्येयत्वमित्यत आह॥ अथ वेति॥ परमेश्वरदृष्ट्योपास्य जाठराग्निप्रतीक-

वत्। यदि चेह परमेश्वरो न विवक्ष्येत, केवल एव जाठरोऽग्निर्विवक्ष्येत, ततो मूर्द्धैव सुतेजा इत्यादेर्विशेषस्यासम्भव एव स्यात्। यथा तु देवताभूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते, तथोत्तरसूत्रे वक्ष्यामः। यदि च केवल एव जाठरो विवक्ष्येत पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यात् न तु पुरुषत्वं, पुरुषमपि चैनमधीयते वाजसनेयिनः "स एषोऽग्निर्वैश्वानरो यत् पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। परमेश्वरस्य तु सर्व्वात्मत्वात् पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वञ्चोभयमुपपद्यते। ये तु पुरुषविधमपि चैनमधीयते इति सूत्रावयवं पठन्ति तेषामेषोऽर्थः। केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं स्यात्, न तु पुरुषविधत्वं। पुरुषविधमपि चैनमधीयते वाजसनेयिनः "पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। पुरुषविधत्वञ्च प्रकरणात्। यदधिदैवतं द्युमूर्द्धत्वादिपृथिवीप्रतिष्ठितत्वान्तं, यच्चाध्यात्मं प्रसिद्धं मूर्द्धत्वादिचुबुकप्रतिष्ठितत्वान्तं, तत् परिगृह्यते॥

## अत एव न देवता भूतञ्च॥ २७॥

यत् पुनरुक्तं भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसम्बन्धदर्शनात्

---

वाचकाभ्यामग्निवैश्वानरशब्दाभ्यां द्युमूर्द्धत्वादिमानीश्वरो लक्ष्य इत्युक्त्वा कल्पान्तरमाह॥ अथ वा जाठर इति॥ अस्मिन् पक्षे प्राधान्येनेश्वरोपास्यता पूर्व्वत्र गुणतेति भेदः। उपाधिवाचिभ्यां पदाभ्यामुपहितो लक्ष्य इत्यर्थः। लक्षणावीजमसम्भवं व्याचष्टे॥ यदि चेति॥ पुरुषमपीत्यादिसूत्रशेषं व्याचष्टे॥ यदि च केवल इति॥ ईश्वरप्रती-

मूर्द्धैव सुतेजा इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति तच्छरीराया देवताया वा ऐश्वर्य्ययोगादिति तत् परिहर्त्तव्यमनोच्यते। अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः, तथा भूताग्निरपि न वैश्वानरः। न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्द्धत्वादिकल्पनोपपद्यते विकारस्य विकारान्तरात्मत्वासम्भवात्। तथा देवतायाः सत्यप्यैश्वर्य्ययोगे न द्युमूर्द्धत्वादिकल्पना सम्भवति, अकारणत्वात् परमेश्वराधीनैश्वर्य्यत्वाच्च। आत्मशब्दासम्भवश्च सर्व्वेष्वेषु पक्षेषु स्थित एव॥

## साक्षादप्यविरोधं जैमिनिः॥ २८॥

पूर्व्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन, इदानीन्तु विनैव

---

कत्वोपाधित्वशून्य इत्यर्थो विवक्ष्यते तदेति शेषः। यद्यः पुरुषः पूर्णः, स एषोऽग्निर्वैश्वानरशब्दितजाठरोपाधिक इति श्रुत्यर्थः। यो वेद स सर्व्वत्र भुङ्क्त इत्यर्थः। पुरुषत्वं पूर्णत्वमचेतनस्य जाठरस्य नेत्युक्ता पाठान्तरे पुरुषविधत्वं देहाकारत्वं तस्य नेत्याह॥ येत्विति॥ ननु जाठरस्यापि देहव्यापित्वात् तद्विधत्वं स्यादित्यत आह॥ पुरुषविधत्वञ्च प्रकरणादिति॥ न देहव्यापित्वं पुरुषविधत्वं किन्तु विराड्देहाकारत्वमधिदैवं पुरुषविधत्वमध्यात्मञ्चोपासकमूर्द्धादिचुबुकान्तेष्वङ्गेषु सम्पन्नत्वमीश्वरस्य पुरुषविधत्वमित्यर्थः। ईश्वरस्याङ्गेषु सम्पत्तिर्वक्ष्यते। एवं जाठरं निरस्य पक्षद्वयं निरस्यति॥ अत एवेति॥ सूत्रं व्याचष्टे॥ यत् पुनरित्यादिना॥ द्युमूर्द्धत्वादि, सर्वलोक-,फलभाक्त्वं,सर्वपापप्रदाहः, इति व्यात्मब्रह्मशब्दोपक्रमोक्ता हेतवः। तानेव स्मारयति॥ न हि भूताग्नेरित्यादिना॥ यो भानुनेति मन्त्रेणेश्वरदृष्ट्या महिमोक्त इति भावः। पूर्व्वमग्निवैश्वानरशब्दावीश्वरलक्षकावित्युक्तं,अधुना प्रतीकोपाधिपरित्यागेन विराट्पुरुषाकारस्य भगवतो वैश्वानरस्याध्यात्ममूर्द्धा-

प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते। ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुद्धेरन्निति। अत्रोच्यते। अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते। न हीह पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति जाठराग्न्यभिप्रायेणेदमुच्यते तस्याप्रकृतत्वादसंशब्दितत्वाच्च। कथं तर्हि यत् प्रकृतं मूर्द्धादिषु चुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति, यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वत्। अथ वा यः प्रकृतः परमात्माऽध्यात्ममधिदैवतञ्च पुरुषविधत्वोपाधिः, तस्य यत् केवलं साक्षिरूपं तदभिप्रायेणेदमुच्यते पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति। निश्चिते च पूर्व्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन

---

दिचुबुकाङ्गेषु सम्पाद्योपास्यत्वाङ्गीकारेऽपि न शब्दादिविरोधः शब्दयोरीश्वरे योगवृत्त्या मुख्यत्वादन्तःस्थत्वादीनाञ्च तत्र सम्भवादित्याह॥ साक्षादपीति॥ साक्षात्पदस्यार्थमाह॥ विनैवेति॥ जाठराग्निसम्बन्धं विनेश्वरस्योपास्यत्वेऽपि शब्दाद्यविरोध जैमिनिर्मन्यत इत्यर्थः। इदमन्तःस्थत्वमुदरस्थत्वरूपं नोच्यते किन्तु नखादिशिखान्तावयवसमुदायात्मकपुरुषशरीरे मूर्द्धादिचुबुकान्ताङ्गानि वृक्षे शाखावत् प्रतिष्ठितानि तानि, तेषु सम्पन्नो वैश्वानरः पुरुषेऽन्तःप्रतिष्ठित इत्युच्यते। अधो यथा शाखास्थस्य पक्षिणो वृक्षान्तःस्थत्वं तथा वैश्वानरस्य पुरुषान्तःस्थत्वमित्याह॥ न हीह पुरुषविधमित्यादिना॥ अग्न्यादिशब्दस्येश्वरवाचित्वाज्जाठराग्नेरसंशब्दितत्वं। अत्रेश्वरस्य पुरुषावयवेषु सम्पादनात् पुरुषविधत्वमन्तःस्थत्वञ्चेत्यर्थः॥ पक्षान्तरमाह॥ अथ वेति॥

वर्णयिष्यते, विश्वस्यायं नरश्चेति, विश्वेषां वाऽयं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा सर्व्वात्मत्वात्, विश्वानर एव वैश्वानरस्तद्धितोऽनन्यार्थो राक्षसवायसादिवत्। अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति। गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वञ्च परमात्मनोऽपि सर्व्वात्मत्वादुपपद्यते। कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यते, इति तां व्याख्यातुमारभ्यते॥

अभिव्यक्तेरित्याश्मरथ्यः॥ २९॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात्। अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते। प्रदेशविशेषेषु हृदयादिषु उपलब्धिस्थानेषु विशेषेणाभिव्यज्यते। अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्य्यो मन्यते॥

---

पुरुषविधत्वं पूर्व्ववत्। अन्तःस्थत्वं माध्यस्थ्यं साक्षित्वमित्यर्थः। एवमन्तःस्थत्वमीश्वरे व्याख्याय शब्दादीनि व्याचष्टे॥ निश्चिते चेति॥ विश्वस्यायं नरो जीवश्च सर्व्वात्मत्वात्। विश्वेषां विकाराणां वा नरः कर्त्ता। विश्वे सर्व्वे नरा जीवा अस्यात्मत्वेन नियम्यत्वेन वा सन्तीति विश्वानरः, रक्ष एव राक्षस इतिवत् स्वार्थे तद्धितप्रत्ययः। नरे सञ्ज्ञायामिति पूर्व्वपदस्य दीर्घता। अगिधातोर्गत्यर्थस्य निप्रत्ययान्तस्य रूपमग्निरिति। अङ्गयति गमयत्यग्र्यं कर्म्मणः फलं प्रापयतीति अग्निरग्रणीरुक्तः। अभितोऽगतीति वा अग्निः, वैश्वानरोपासकस्यातिथिभोजनात् पूर्व्वं प्राणाग्निहोत्रं विद्याङ्गत्वेन विहितं, तदर्थमग्नित्रेतादिकल्पनं प्रधानाविरोधेन नेतव्यमित्याह॥ गार्हपत्येति॥ मात्रां परि-

## अनुस्मृतेर्व्वादरिः ॥ ३० ॥

प्रादेशमात्रहृदयप्रतिष्ठितेन वाऽयं मनसाऽनुस्मर्य्यते ततः प्रादेशमात्र इत्युच्यते। यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत्। यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसम्बन्धाद्व्यज्यते न चेह परमेश्वरगतं किञ्चित् परिमाणमस्ति यद् हृदयसम्बन्धाद्व्यज्येत तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः, सम्भवति यथा कथञ्चिदनुस्मरणमालम्बनमित्युच्यते। प्रादेशमात्रत्वेन वाऽयमप्रादेशमात्रोऽनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै। एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति वादरिराचार्य्यो मन्यते ॥

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

सम्पत्तिनिमित्ता वा स्यात् प्रादेशमात्रश्रुतिः। कुतः। तथा हि समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन् पृथिवीपर्य्य-

---

माणमतिक्रान्तोऽतिमात्रः तस्य विभोरित्यर्थः। उपासकानां कृतेऽनुग्रहाय प्रादेशमात्रोऽभिव्यज्यते प्रादेशेषु वा मीयतेऽभिव्यज्यत इति प्रादेशमात्रः। मतान्तरमाह॥ अनुस्मृतेरिति॥ प्रादेशेन मनसा मितः प्रादेशमात्र इत्यर्थः॥ यथा कथञ्चिदिति॥ मनस्थं प्रादेशमात्रत्वं स्मृतिद्वारा स्मर्य्यमाणे कल्पितं श्रुतेरालम्बनमित्यर्थः॥ सूत्रस्यार्थान्तरमाह॥ प्रादेशेति॥ सम्पत्ति श्रुत्युक्ता प्रादेशमात्रश्रुतेर्गतिमाह॥ सम्पत्तेरिति॥ ब्राह्मणं पठति॥ प्रादेशमात्रमिवेति॥ अपरिच्छिन्नमपीश्वरं प्रादेशमात्रत्वेन सम्पत्त्या कल्पितं सम्यग्विदितवन्तो देवास्तमेवेश्वरमभिप्रत्यक्तेन सम्पन्नाः प्राप्तवन्तो ह वै पूर्व्वकाले ततो वो युष्मभ्यं तथा द्युप्रभृतीनवयवान् वक्ष्यामि। यथा प्रादेशमात्रं प्रादेशपरिमाण-

न्नान् त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्मं मूर्द्धप्रभृतिषु चिबुकपर्य्यन्तेषु देहावयवेषु सम्पादयन् प्रादेशमात्रसम्पत्तिं परमेश्वरस्य दर्शयति। "प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति स होवाच मूर्द्धानमुपदिशन्नुवाच, एष वा अतिष्ठा वैश्वानरः, इति। चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा वैश्वानरः, इति। नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मात्मा वैश्वानरः, इति। मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानरः, इति। मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानरः, इति। चुबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा वैश्वानरः" इति। चुबुकमित्यधरमुखफलकमुच्यते। यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्ना-

---

मनतिक्रम्य मूर्द्धाद्यध्यात्माङ्गेषु वैश्वानरं सम्पादयिष्यामीति प्राचीनशालादीन् प्रति राजा प्रतिज्ञाय स्वकीयमूर्द्धानमुपदिशन् करेण दर्शयन्नुवाच। एष वै मे मूर्द्धा भूरादीन्लोकानतीत्य उपरि तिष्ठतीत्यतिष्ठाऽसौ द्युलोको वैश्वानरः॥ तस्य-मूर्द्धेति यावत्॥ अध्यात्ममूर्द्धाभेदेनाधिदैवमूर्द्धा सम्पाद्य ध्येय इत्यर्थः। एवञ्चक्षुरादिषूहनीयं॥ स्वकीयचक्षुषी दर्शयन् एष वै सुतेजाः सूर्य्यो वैश्वानरस्य चक्षुरित्युवाच। नासिकापदेन तन्निष्ठः प्राणो लक्ष्यते तस्मिन्नाध्यात्मिकप्राणेऽधिदैवप्राणस्य वायोर्दृष्टिमाह॥ नासिके इति॥ अत्र सर्व्वत्र वैश्वानरशब्दस्तदङ्गपरः। मुखस्थं मुख्य तस्मिन्नधिदैवं बहुलाकाशदृष्टिः मुखस्थलालारूपास्वप्सु रयिशब्दिततदीयवस्तिस्थोदकदृष्टिः चुबुके प्रतिष्ठा पादरूपा पृथिवी द्रष्टव्या। ननु गुणवैषम्ये न विद्ययोर्भेदादग्निरहस्यश्रुत्यनुसारेण छान्दोग्यस्थप्रादेशमात्रश्रुतिः कथं व्याख्येयेत्याशङ्क्याह॥

यते, आदित्यस्य सुतेजस्त्वगुणः, छान्दोग्ये पुनर्द्यौः सुतेजस्त्व-गुणा समाम्नायते, आदित्यश्च विश्वरूपत्वगुणः, तथापि नैतावता विशेषेण किञ्चिद्धीयते प्रादेशमात्रश्रुतेरविशेषात् सर्व्वशाखा-प्रत्ययत्वाच्च। सम्पत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्य्यो मन्यते॥

## आमनन्ति चैनमस्मिन्॥ ३२॥

आमनन्ति चैनं परमेश्वरमस्मिन् मूर्द्धचुबुकान्तराले जाबालाः।"य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायां नाश्यां च मध्ये प्रतिष्ठित इति कतमा वरणा कतमा नाशीति। तत्र चेमामेव वरणां नासिकाञ्चेति निरुच्य सर्व्वाणीन्द्रियकृतानि पापानि वारयति सा वरणा सर्व्वाणीन्द्रियकृतानि पापानि नाशयति चेति सा नाशीति वरणा नाशीति" निरुच्य पुनरप्यामनन्ति।

---

यद्यपीत्यादिना॥ एतावताल्पवैषम्येन वञ्चतरप्रत्यभिज्ञासिद्धं विद्यैक्यं न हीयते शाखाभेदेऽपि सर्व्वशाखासु प्रतीयमानं वैश्वानराद्युपासनमेकमिति न्यायस्य वक्ष्यमाणत्वाच्च। अतिष्ठात्वगुणश्छान्दोग्य उपसंहर्त्तव्यः। विश्वरूपत्वगुणश्च वाजिभिर्ग्राह्यः। तथा च द्युसूर्य्ययोः सुतेजस्त्वं सममतिष्ठात्वविश्वरूपत्वयोर्व्यवस्था। यद्वा शाखाभेदेन गुणव्यवस्थाऽस्तु न विद्याभेद इति भावः। प्रादेशत्वस्य सम्पत्तिप्रयुक्तत्वे श्रुत्यन्तरं सम्पादयति॥ आमनन्तीति॥ य एषोऽनन्तोऽपरिच्छिन्नः अतोऽव्यक्तो दुर्विज्ञेयस्तं कथं जानीयामित्यत्रे प्रश्ने याज्ञवल्क्यस्योत्तरं। स ईश्वरो अविमुक्ते कामादिभिर्बद्धो जीवो भेदकल्पनया प्रतिष्ठित उपास्य पुनरत्रिप्रश्नः स इत्युत्तरं वरणायामिति। एवं प्रश्नोत्तरे अग्रेऽपि ज्ञेये।

"कतमश्चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यः सन्धिः। स एष द्युलोकस्य परस्य च सन्धिर्भवति" इति। तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः। अभिविमानश्रुतिः प्रत्यगात्मताभिप्राया। प्रत्यगात्मतया सर्व्वैः प्राणिभिरभिविमीयत इत्यभिविमानः। अभिगतो वाऽयं प्रत्यगात्मत्वात्। विमानश्च मानवियोगादित्यभिविमानोऽभिविमिमीते वा सर्व्वं जगत्कारणत्वादित्यभिविमानः, तस्मात् परमेश्वरो वैश्वानर इति सिद्धं॥ इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पूज्यपादकृतौ प्रथमाध्यायस्य द्वितीयपादः॥

---

तत्र च श्रुतौ इममेव भ्रूसहितां नासिका निरुच्येति भाष्ययोजना। सर्व्वानिन्द्रियकृतान् दोषान् वारयतीति वरणा भ्रू। सर्व्वान् दोषान् नाशयतीति नाशा नासिकेति निर्व्वचनं श्रुतं। नासाभ्रुवोर्जीवद्वारेश्वरस्थानत्वध्यानात् पापवारकत्वमिति मन्तव्यं। तयोर्मध्येऽपि विशिष्य जीवस्य स्थानं पृच्छति कतमदिति भ्रुवोरित्युत्तरं। घ्राणस्येति पाठेऽपि घ्राणस्येत्यर्थः। स एष सन्धिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य सन्धित्वेन ध्येय इत्याह॥ स एष इति॥ आभिमुख्येनाहं ब्रह्मेति विमिमीयते ज्ञायते इत्यभिविमानः प्रत्यगात्मा। अभिगतश्चासौ विमानः सर्व्वस्वरूपत्वे सत्यानन्त्यात् मानमत्र परिमाणं। अभिविमिमीतेति निर्म्मिमीते। तस्माद्वैश्वानरवाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धं॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीगोविन्दानन्दभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य द्वितीयः पादः॥

---

नमः परमात्मने ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥१॥

इदं श्रूयते "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ, आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" इति । अत्र यदेतद् द्युप्रभृतीनामोतत्ववचनादायतनं किञ्चिदवगम्यते तत् किं परं ब्रह्म स्यादाहोस्विदर्थान्तरमिति सन्दिह्यते । तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तं । कस्मात् । अमृतस्यैष सेतुरिति श्रवणात् । पारवान् हि लोके सेतुः प्रख्यातः । न च परस्य ब्रह्मणः पारवत्त्वं शक्य-

---

नमः परमात्मने ।

द्युद्योतभूमपदमक्षरमीक्षणीयं
श्रीराममल्पहृदि भान्तमधीशितारं ।
इन्द्रादिवेद्यमखिलस्य च शासितारं
ज्योतिर्नभः पदमनिन्द्यमजं भजेऽहं ॥

एवं रूढियुक्तपदबहुलानां प्रायेण सविशेषवाक्यानां समन्वयो द्वितीयपादे दर्शितः । अधुना यौगिकपदबहुलानां निर्विशेषप्रधानानां वाक्यानां समन्वयं वक्तुं तृतीयपाद आरभ्यते ॥ अतोऽत्राधिकरणानां श्रुत्यध्यायपादसङ्गतयस्तत्र पूर्व्वमुपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थद्युमूर्द्धत्वादिना ब्रह्मपरत्वमुक्तं । तद्वदत्राप्युपक्रमस्थसाधारणायतनत्वस्य वाक्यशेषस्थसेतुश्रुत्या वस्तुतः परिच्छिन्ने प्रधानादौ व्यवस्थेति दृष्टान्तलक्षणाधिकरणसङ्गतिः । पूर्व्वपक्षे प्रधानाद्युपास्तिः । सिद्धान्ते निर्विशेषब्रह्मधीरिति फलं ॥ मुण्डकवाक्यमुदाहरति ॥ इदमिति ॥ यस्मिन् लोकत्रयात्मा विराट् प्राणैः सर्वैः सह मनः सूत्रात्मकं चकारादव्याकृतं कारणं चोतं कल्पितं तदपवादेन तमेवाधिष्ठानात्मानं प्रत्यगभिन्नं

# शुद्धिपत्रं।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ९९ | ५ | प्रपञ्चयिष्यतेर्न | प्रपञ्चयिष्यते न |
| | ११ | स्नात्त्वा | स्नात्वा |
| १०१ | १० | वन्न | बन्न |
| १०२ | २२ | ज्योतिष्ठोमे | ज्योतिष्टोमे |
| १०३ | १८ | विप्रलिप्सुईष्ट | विप्रलिप्सुरिष्ट |
| ११५ | १३ | बऊक्तत्वो | बऊकत्वो |
| ११९ | २२ | आनव्दमयो | आनन्दमयो |
| १२५ | ६ | वाङ्ममनस | वाङ्मनस |
| १४० | ५ | मर्यादत्वं | मर्यादात्वं |
| | १४ | प्रत उमासीत | इत्युपासीत |
| १४८ | ८ | गृहीतव्यं | ग्रहीतव्यं |
| १५९ | १६ | कारस्मं | कार्य्यं |
| १६० | १३ | रागादिभि | रागादिभिः |
| १६५ | २७ | प्रत्यकब्रह्म | प्रत्यग्ब्रह्म |
| १७३ | ११ | पुगरयं | पुनरयं |
| १७६ | ९ | तत्वमस्यहं | तत्त्वमस्यहं |
| १८० | १८ | पिबत् | पिबत् |
| १८३ | १० | द्रष्ठय | द्रष्टव्य |
| १९७ | ७ | द्रष्टा | द्रष्टा |
| २०५ | ७ | दिवो | दिव्यो |
| २१९ | २२ | नेतव्यमितित्याह | नेतव्यमित्याह |

मभ्युपगन्तुमनन्तमपारमिति श्रवणात्। अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं परिग्रहीतव्यं, तस्य हि कारणत्वादायतनत्वोपपत्तेः। श्रुतिप्रसिद्धो वा वायुः स्यात् "वायु-

# शुद्धिपत्रम्।



| पृष्ठाङ्कः। | पंक्त्यङ्कः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २२७ | ५ | नानेकरसता | नानेकरसता |
| ” | २० | मैत्रेयिः | मैत्रेयि |
| ” | २३ | तद्गृहे | तदग्रहे |
| २२८ | १२ | ब्रातः | ब्रातः |
| २३१ | ४ | कुतश्च न | कुतश्चन |

[illegible]। अपार इत्यतः, जलविधारकमुख्य-सेतोर्ग्रहासम्भवात् गौणसेतुग्रहे कर्त्तव्ये मुख्यसेत्वविनाभूतपारव-त्त्वगुणवानेव कश्चिद् ग्राह्यः। न तु मुख्यस्यानियतविधारणगुणवानी-श्वर इति भावः। यथा लोके मणयः सूत्रेण ग्रथिता एवं हे गौतम समष्टिलिङ्गात्मकवायुना स्थूलानि सर्वाणि सन्दृब्धानि ग्रथितानि

शब्दस्य परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे। क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते "सन्मूलाः सोम्येमाः सर्व्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति। स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म सङ्कीर्त्तते "पुरुष एवेदं विश्वं कर्म्म तपो ब्रह्म परामृतं" इति, "ब्रह्मैवेदममृतं पुरस्तात् पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण" इति च। तत्र त्वायतनायतनवद्भावश्रवणात् "सर्व्वं ब्रह्म" इति च सामानाधिकरण्यात्। यथाऽनेकात्मको वृक्षः शाखास्कन्धो मूलश्चेत्येवं नानारसो विचित्र आत्मेत्याशङ्का सम्भवति। तां निवर्त्तयितुं सावधारणमाह "तमेवैकं जानथ आत्मानं" इति। एतदुक्तं भवति न कार्य्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः। किं तर्हि। अविद्याकृतं कार्य्यप्रपञ्चं "विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानीथैकरसं" इति।

---

भवन्तीति श्रुत्यर्थः। आत्मशब्दात् पक्षद्वयमप्ययुक्तमित्यत आह॥ शारीरो वेति। सद्वितीयत्वेन सेतुशब्दोपपत्तेश्चेत्यर्थः। नन्वात्मशब्दो जीवे सम्भवतीत्यत आह॥ आत्मशब्दस्येति॥ उपाधिपरिच्छिन्नस्य जीवस्य सर्व्ववस्तुप्रत्यक्त्वं मुख्यं नास्तीत्यर्थः। उपक्रमस्थसाधारणायतनत्वस्य गौणसेतुत्वलिङ्गात् प्रथमश्रुतात्मश्रुत्या ब्रह्मत्वनिश्चय इति भावः। स्वशब्दादित्यस्यार्थान्तरमाह॥ क्वचिच्चेति॥ प्रजानामुत्पत्तौ सदेव मूलं स्थितावायतनं लयप्रतिष्ठेति ब्रह्मवाचिसत्पदेन छान्दोग्ये ब्रह्मण आयतनत्वश्रुतेरत्रापि तथेत्यर्थः। अर्थान्तरमाह॥ स्वशब्देनैवेति॥ यस्मिन् द्यौरिति वाक्यात् पूर्व्वोत्तरवाक्ययोः पुरुषब्रह्मादिशब्देन ब्रह्मसङ्कीर्त्तनान्मध्येऽपि ब्रह्म ग्राह्यमित्यर्थः॥ पुरुष इति पूर्व्ववाक्यं, ब्रह्मैवेत्युत्तरवाक्यं, सर्व्वासु दिक्षु स्थितं सर्व्वं ब्रह्मैवेत्यर्थः। उत्तरेणोत्तरस्यां दिशि उदाहृतवाक्यस्य सविशेषब्रह्मपरत्वमाशङ्क्य वाक्यं व्याचष्टे॥ तत्रेत्यादिना॥ सामानाधिकरण्याद्विचित्र आत्मेति सम्बन्धः। यस्मिन् सर्व्व-

यथा यस्मिन्नास्ते देवदत्तः तदानयेत्युक्त आसनमेवानयति न देवदत्तं तद्वदायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते विकारानृताभिसन्धस्य चापवादः श्रूयते "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति। सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपञ्चविलापनार्थं नानेकरसताप्रतिपादनार्थं "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इत्येकरसताश्रवणात्। तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म। यत्तूक्तं सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति, अत्रोच्यते। विधरणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते न पारवत्त्वादि। न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते। सेतुशब्दार्थोऽपि विध-

---

मोऽतत्त्वमेवैकमित्येवकारैकशब्दाभ्यां निर्विशेषं ज्ञेयमित्युक्त्वा हेत्वन्तरमाह॥ विकारानृतेति। विकारे अनृते कल्पिते अभिसन्धोऽभिमानो यस्य तस्यानर्थभाक्त्वेन निन्दाश्रुतेश्च कूटस्थसत्त्वं ज्ञेयमित्यर्थः। कथं तर्हि सामानाधिकरण्यं तत्राह॥ सर्वं ब्रह्मेति॥ यश्चोरः स स्थाणुरितिवद् यत् सर्वं तद्ब्रह्मेति सर्वोद्देशेन ब्रह्मत्वविधानाद् बाधनार्थं, न तु यद्ब्रह्म तत्सर्वमिति नानारसत्वार्थमित्यर्थः। तत्र नियामकमाह॥ स यथेति॥ लवणपिण्डोऽन्तर्बहिश्च रसान्तरशून्यः सर्वो लवणैकरसो यथा, एवमरे मैत्रेयि चिदेकरस आत्मेत्यर्थः। यद्यपि पारवत्त्वसावयवत्वादिकं मुख्यसेत्वव्यभिचारि तथापि सेतोर्जलादिबन्धनरूपं यद्विधारणं तदेव व्यभिचारित्वेऽपि सेतुपदार्थैकदेशत्वाद्गुणत्वेन ग्राह्यं न तु पदार्थबहिर्भूतं पारवत्त्वादिकमित्याह॥ अत्रोच्यत इति॥ दृष्टत्वात्तद्ग्रहेऽतिप्रसङ्गमाह॥ न हीति॥ अत्र श्रुतौ परेणेति शेषः। विधारणस्य शब्दा-

रणत्वमात्रमेव न पारवत्त्वादि षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः। अपर आह तमेवैकं जानथ आत्मानमिति। यदेतत् सङ्कीर्त्तितमात्मज्ञानं यच्चैतदन्या वाचो विमुञ्चथेति वाग्विमोचनं तदत्रामृतत्वसाधनत्वादमृतस्यैष सेतुरिति सेतुश्रुत्या सङ्कीर्त्त्यते न तु द्युभ्वाद्यायतनं। तत्र यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमित्येतदयुक्तं॥

## मुक्तोपसृप्यव्यपदेशात्॥ २॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनं यस्मान्मुक्तोपसृप्यताऽस्य व्यपदिश्यमाना दृश्यते। मुक्तैरुपसृप्यं मुक्तोपसृप्यं। देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागस्तत्परिभवादौ च द्वेषः, तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातः सन्ततः सर्व्वेषां नः प्रत्यक्षः, तद्विपर्य्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यं गम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति। कथं।

---

र्थत्वं स्फुरयति॥ षिञ इति॥ सिनोति बध्नातीति सेतुपदार्थैकदेशो विधारणमित्यर्थः। तथा चामृतपदस्य भावप्रधानत्वादमृतत्वस्य सेतुर्विधारकं ब्रह्मास्यैवामृतत्वं नान्यस्येत्यर्थः। यद्वा द्युभ्वाद्याधारो ब्रह्म न सेतुशब्दार्थः किन्त्वव्यवहितं ज्ञानमित्याह॥ अपर इति॥ फलितमाह॥ तत्र यदुक्तमिति॥ ज्ञाने सेतौ गृहीते सतीत्यर्थः। मुक्तैरुपसृप्यं प्रत्यक्त्वेन प्राप्यं यद् ब्रह्म तस्यात्रोक्तेरिति सूत्रार्थः। मुक्तिप्रतियोगिनं बन्धं दर्शयति॥ देहादिष्विति॥ तद्विपर्य्ययेणेति उक्तपञ्चक्लेशात्मकबन्धनिवृत्त्याऽऽत्मना स्थितैरित्यर्थः। यथा नद्यो गङ्गाद्या नामरूपे विहाय समुद्रात्मना तिष्ठन्ति तथा ब्रह्मात्मविदपि संसारं विहाय परात्

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे"॥

इत्युक्त्वा ब्रवीति "तथा विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यं" इति ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे।

"यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"॥

इत्येवमादौ। प्रधानादीनान्तु न क्वचिन्मुक्तोपसृप्यत्वं प्रसिद्धमस्ति। अपि च "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ" इति वाग्विमोकपूर्व्वकं विज्ञेयत्वमिह द्युभाद्यायतनस्योच्यते। तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टं।

"तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः।
नानुध्यायाद्बहूंश्छब्दान् वाचो विग्लपनं हि तत्"॥ इति।

---

कारणादव्यक्तात् परं पूर्णं स्वयं ज्योतिरानन्दं प्रत्यक्त्वेन प्राप्य तिष्ठतीत्याह॥ तथा विद्वानिति॥ इदं प्रधानादेः किं न स्यादत आह॥ ब्रह्मणश्चेति॥ अस्य मुमुक्षोः हृदीति पदेनात्मधर्म्मत्वं कामानां निरस्तं यदा कामनिवृत्तिरथ तदाऽमृतो भवति मरणहेत्वभावान्न केवलमनर्थनिवृत्तिः किन्त्वत्र देहे तिष्ठन्नेव ब्रह्मानन्दमश्नुत इत्यर्थः। लिङ्गान्तरमाह॥ अपि चेति॥ धीरो विवेकी तमेवात्मानं विज्ञाय विशुद्धं लक्ष्यपदार्थं ज्ञात्वा वाक्यार्थज्ञानं कुर्य्यात्। ज्ञानार्थिनो ज्ञानप्रतिबन्धककर्म्मकाण्डादिवैमुख्यमाह॥ नेति॥ बहूनित्युक्त्वा अल्पान् वेदान्तशब्दानङ्गीकरोति।

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च"॥ इति।

तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म॥

नानुमानमतच्छब्दात् ॥ ३ ॥

यथा ब्रह्मणः प्रतिपादको* वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह। नानुमानं साङ्ख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यं। कस्मात्। अतच्छब्दात्। तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दो न तच्छब्दोऽतच्छब्दः। न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वाऽवगम्यते। तद्विपरीतस्य चेतनस्य प्रतिपादकशब्दोऽत्रास्ति "यः सर्व्वज्ञः सर्व्ववित्" इत्यादिः। अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते॥

प्राणभृच्च ॥ ४ ॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वञ्च सम्भ-

---

एतानि वागिन्द्रियस्थानत्वाद् वाक्यशब्देनोच्यन्ते तेषां प्रोधयामाद्यमनात्मशब्दोच्चारणफलं तद्ध्यानान्मनसो ग्लानिमात्रमित्यर्थः॥ वैशेषिक इति॥ असाधारण आत्मशब्दादिरित्यर्थः। अतच्छब्दादित्यस्यार्थान्तरमाह॥ तद्विपरीतस्येति॥ अत एवातच्छब्दादेव प्राणभृच्चेति सूत्रे चकारः पूर्व्वसूत्रस्थनञोऽनुषङ्गार्थः। सर्व्वज्ञपदसमानाधिकरण आत्मशब्दो न जीववाचीत्यतच्छब्दस्तस्मादित्यर्थः। ननु नानुमानप्राणभृतावतच्छब्दादित्येकमेव सूत्रं किमर्थं न कृतं, उभयनिरासहेतोरेकत्वादित्यत आह॥ पृथगिति॥ योगः सूत्रं, उत्तरसूत्रस्थहेतूनां जीवमात्रनिरासेनान्वयेऽपि सुबोधार्थं प्राणभृच्चेति पृथक् सूत्रकरणमित्यर्थः। तानेव हेतूनाकाङ्क्षाद्वारा व्याचष्टे॥ कुतश्च नेत्यादिना॥

* असाधारणेति मु० पा०।

वति तथाऽप्युपाधिपरिच्छिन्नज्ञानस्य सर्व्वज्ञत्वाद्यसम्भवे सत्य-स्मादेवातच्छब्दात् प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः। न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्व-मपि सम्यक् सम्भवति। पृथग्योगकरणमुत्तरार्थं। कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः॥

भेदव्यपदेशात्॥ ५॥

भेदव्यपदेशश्चेह भवति "तमेवैकं जानथ आत्मानं" इति ज्ञेयज्ञातृभावेन। तत्र प्राणभृत् तावत् मुमुक्षुत्वाज्ज्ञाता परि-शेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते। कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः॥

प्रकरणात्॥ ६॥

प्रकरणञ्चेदं परमात्मनः "कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्व्वविज्ञानापेक्षणात्। परमा-त्मनि हि सर्व्वात्मके विज्ञाते सर्व्वमिदं विज्ञातं स्यात्, न केवले प्राणभृति। कुतश्च न प्राणभृद् द्युभ्वाद्यायतत्वेनाश्रयितव्यः॥

स्थित्यदनाभ्याञ्च॥ ७॥

द्युभ्वाद्यायतनञ्च प्रकृत्य "द्वा सुपर्णा सयुजा सखाया" इत्यत्र

---

यद्यपि विशुद्धः प्रत्यगात्मैवात्र ज्ञेयः तथापि जीवत्वाकारेण ज्ञातुर्ज्ञेया-द्भेदान्न ज्ञेयरूपत्वमित्यर्थः। एवञ्च जीवत्वलिङ्गविशिष्टत्वेन जीवस्य द्युभ्वादिवाक्यार्थत्वं निरस्य तेन शुद्धरूपेणेति मन्तव्यं। ननु स्थित्येश्वर-स्यादनाज्जीवस्य द्वासुपर्णेत्यत्रोक्तावपि ईश्वर आयतनवाक्येन किमथ

स्थित्यदने निर्दिश्येते, "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति कर्मफलाशनं, "अनश्नन्नन्योऽभिचाकशीति" इत्यौदासीन्येनावस्थानं, ताभ्याञ्च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते। यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात् पृथग्वचनमवकल्पते, अन्यथा ह्यप्रकृतवचनमाकस्मिकमसम्बद्धं स्यात्। ननु तवापि क्षेत्रज्ञस्येश्वरात् पृथग्वचनमाकस्मिकमेव प्रसज्येत न तस्याविवक्षितत्वात्। क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्युपाधिकसम्बन्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते। ईश्वरस्तु लोकतोऽप्रसिद्धत्वात् श्रुत्या तात्पर्येण विवक्षित इति न तस्याकस्मिकवचनं युक्तं। "गुहां प्रविष्टावात्मानौ हि" इत्यत्राप्येतद्दर्शितं। द्वा सुपर्णेत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते इति। यदाऽपि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदाऽपि न विरोधः कश्चित्। कथं प्राणभृदिह घटादिच्छिद्रवत् सत्त्वाद्युपाध्यभिमानित्वेन प्रति-

---

ग्राह्य इत्यत आह॥ यदि चेश्वर इति॥ अत्र चेश्वरः शुद्धचिन्मात्रो ग्राह्यः। न सर्वज्ञत्वादिविशिष्टः तस्यात्राप्रतिपाद्यत्वात्। तथा चाप्रतिपाद्यार्थस्याकस्मान्मध्ये वचनासम्भवात्। आद्यवाक्येन ग्रहणं कार्य्यमित्यभिसन्धिः।, तमज्ञात्वाऽऽशङ्कते॥ ननु तवापीति॥ ब्रह्मस्वरूपप्रतिपादनार्थमकस्मादप्रकृतस्यापि लोकप्रसिद्धस्य जीवस्यानुवादसम्भव इति परिहरति॥ नेति॥ ननु द्वासुपर्णेत्यत्र बुद्धिजीवयोरुक्तेः कथमिदं सूत्रमित्यत आह॥ गुहामिति॥ स्थित्यदनाभ्यामीश्वरक्षेत्रयोरनुवादेनैक्यं दर्शितं इत्यर्थः। नन्वत्र जीवेशौ नानुवाद्यौ पैङ्गिव्याख्याविरोधादतः सूत्रासङ्गतिरित्यत आह। यदापीति॥ तदापीति

शरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति प्रतिषिध्यते। यस्तु सर्व्वशरीरेषूपाधिभिर्विनोपलक्ष्यते पर एव स भवति। यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति तद्वत् प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते, तस्मात् सत्त्वाद्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः, तस्मात् परमेव ब्रह्म द्युभ्वाद्यायतनं। तदेतत् "अदृश्यत्वादिगुणको धर्म्मोक्तेः" इत्यनेनैव सिद्धं, तत्रैव हि भूतयोनिवाक्यस्य मध्ये इदं पठितं "यस्मिन् द्यौः पृथिवी चान्तरिक्षं" इति। प्रपञ्चार्थन्तु पुनरुपन्यस्तं।

## भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

इदं समामनन्ति "भूमा त्वेव विजिज्ञासितव्यः" इति, "भूमानं भगवो विजिज्ञासे" इति, "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजाना-

---

सूत्रस्यासङ्गतिर्नास्तीत्यर्थः। अदनवाक्येन बुद्धिमनूद्य स्थितिवाक्येन बुद्ध्यादिविलक्षणशुद्धप्रत्यग्ब्रह्मणो ज्ञेयस्योक्तेर्द्युभ्वादिवाक्ये तदेव ग्राह्यं न बुद्ध्युपहितो जीव इति सूत्रसङ्गतिमाह॥ कथमित्यादिना॥ नन्वज्ञानुपहितो जीव उक्तो न परं ब्रह्मेत्यत आह॥ यस्त्विति॥ पौनरुक्त्यं शङ्कते॥ तदेतदिति॥ द्युभ्वादिवाक्यस्य ब्रह्मपरत्वमित्यर्थः। समाधत्ते॥ प्रपञ्चार्थमिति॥ सेतुशब्दव्याख्यानेन भूतयोनेः प्रत्यगात्मत्वस्फुटीकरणमित्यर्थः। तस्मान्मुण्डकोपनिषद् ब्रह्मणि समन्वितेति सिद्धं॥ भूमा॥ छान्दोग्यमुदाहरति॥ इदमिति॥ नाल्पे सुखमस्ति भूमैव सुखं तस्मान्निरतिशयसुखार्थिना भूमैव विचार्य्य इति नारदं प्रति सनत्कुमारेणोक्ते सति नारदो ब्रूते॥ भूमानमिति॥ भूम्नो लक्षणमदितीयत्व-

ति तदुक्तं" इत्यादि। तत्र संशयः किं प्राणो भूमा स्यादाहोस्वित् परमात्मेति। कुतः संशयः। भूमेति तावद् बहुत्वमभिधीयते। "बहोर्लोपो भू च बहोः" (पा० ६।४।१५८) इति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात्। किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकाङ्क्षायां "प्राणो वा आशाया भूयान्" इति सन्निधानात् प्राणो भूमेति प्रतिभाति। तथा श्रुतं "ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इति, "सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु" इति प्रकरणोत्थानात् परमात्मा भूमा इत्यपि प्रतिभाति। तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः। किन्तावत् प्राप्तं प्राणो भूमेति। कस्मात्। भूयः प्रश्नप्रतिवच-

---

माह॥ यत्रेति॥ भूमलक्षणं परिच्छिन्नलक्षणोक्त्या स्फुटयति॥ अथेति॥ ...मत्र संशयबीजं प्रश्नपूर्व्वकमाह॥ कुत इत्यादिना॥ बहोर्भाव इति ...वचने पृथ्वादिभ्य इमनिजिति इमनिच्प्रत्यये कृते बहोर्लोपो भू च ...होरिति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः स्यात् ...होः स्थाने भूरित्यादेशश्च स्यादित्युक्ते भूमन्निति शब्दो निष्पन्नः, ...स्य भावार्थकेमनिच्प्रत्ययान्तत्वाद्बहुत्वं वाच्यं। तत् किं धर्म्मिकमित्या- ...काङ्क्षायां सन्निहितप्रकरणस्थः प्राणो धर्म्मी भाति। वाक्योपक्रमस्य आ- ...त्माऽपि स्वप्रतिपादनापेक्षो धर्म्मित्वेन भातीति सन्निहितव्यवहितप्रकरणाभ्यां संशय इत्यर्थः। पूर्व्वमात्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तं, तरति शोकमात्मविदित्यत्र ब्रह्मण्यप्यात्मशब्दप्रयोगादित्याक्षेपसङ्गत्या पूर्व्वपक्षयति॥ प्राणो भूमेति॥ धर्म्मधर्म्मिणोरभेदात् सामानाधिकरण्यं द्रष्टव्यं। पूर्व्वोत्तरपक्षयोः प्राणोपास्तिः, ब्रह्मज्ञानञ्च फलं क्रमेण मन्तव्यं। अत्राध्याये भूयः प्रश्नोत्तरभेदादर्थभेदो दृश्यते। भूमा तु प्राणात् परं भूयः प्रश्न विनैवोक्तलिङ्गेन प्राणादभिन्न इत्याह॥ कस्मादित्यादिना॥ प्राणाद् भूय इति न दृश्यत इति पूर्व्वेण सम्बन्धः।

नपरम्परादर्शनात्। यथा हि "अस्ति भगवो नाम्नो भूयः" इति, "वाग्वाव नाम्नो भूयसी" इति, तथा "अस्ति भगवो वाचो भूयः" इति, "मनो वाव वाचो भूयः" इति च नामादिभ्य आप्राणात् भूयः प्रश्नप्रतिवचनप्रवाहः प्रवृत्तः, नैवं प्राणात् परं भूयः प्रश्नप्रतिवचनं दृश्यते। "अस्ति भगवः प्राणाद्भूयः" इति, "अदो वाव प्राणाद्भूयः" इति, "प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसं प्राणो वाव आशाया भूयान्" इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वं "अतिवाद्यसि" इति, "अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत" इत्यभ्यनुज्ञाय, "एष तु वा अतिवदति यः सत्येनातिवदति" इति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानं समवतारयन्, "प्राणमेव भूमानं मन्यते" इति गम्यते। कथं पुनः प्राणे भूमेति व्याख्यायमाने यत्र नान्यत् पश्यतीत्येतद् भूम्नो लक्षणपरं वचनं व्याख्येयमिति। उच्यते। सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्ति-

---

नन्वेष तु वा अतिवदतीति तुशब्देन प्राणप्रकरणविच्छेदात् न प्राणो भूमेत्यत आह॥ प्राणमेवेति॥ नामाद्याशान्तानुपास्यानतीत्य प्राणं श्रेष्ठं वदतीत्यतिवादी प्राणवित् तं प्रति अतिवाद्यसीति केनचित् प्रश्ने कृते अस्मीति ब्रूयात्, नाहमतिवादीत्यपह्नवं न कुर्यादित्युक्तं प्राणविदं, एष इति परामृश्य सत्यवचनध्यानमननश्रद्धादिधर्म्मपरम्परां विधाय भूमोपदेशान्न प्रकरणविच्छेदः। तुशब्दो नामाद्युपासकस्यातिवादित्वनिरासार्थ इत्यर्थः। भूम्नो लक्षणवचनं सुखत्वमन्तत्वञ्च प्राणे प्रश्नपूर्व्वकं योजयति॥ कथं पुनरित्यादिना॥ प्राणग्रस्तेषु प्राणे लीनेषु न पश्यतीति सुषुप्तपुरुष इति शेषः। "गार्हपत्यो ह वा एषोऽपानो व्या-

दर्शनात् सम्भवति प्राणस्यापि यत्र नान्यत् पश्यतीत्येतल्लक्षणं। तथा च श्रुतिः "न शृणोति न पश्यति" इत्यादिना सर्व्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" इति तस्यामेवावस्थायां पञ्चवृत्तेः प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति। यच्चैतद्भूम्नः सुखत्वं श्रुतं "यो वै भूमा तत् सुखं" इति तदप्यविरुद्धं, "अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिंच्छरीरे सुखं भवति" इति सुषुप्त्यवस्थायामेव सुखश्रवणात्। यच्च "यो वै भूमा तदमृतं" इति, तदपि प्राणस्याविरुद्धं, "प्राणो वा अमृतं" इति श्रुतेः। कथं पुनः प्राणं भूमानं मन्यमानस्य "तरति शोकमात्मवित्" इत्यात्मविविदिषया प्रकरणस्योत्थानं उपपद्यते, प्राण एवेहात्मा विवक्षित इति ब्रूमः। तथा हि "प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य्यः प्राणो ब्राह्मणः" इति प्राणमेव सर्व्वात्मानं करोति। "यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्व्वं समर्पितं" इति च सर्व्वात्मत्वारनाभिनिदर्शनाभ्याञ्च सम्भवति वैपुल्यात्मिका भूमरूपता प्राणस्य। तस्मात् प्राणो भूमेत्येवं प्राप्तं। तत इदमुच्यते। परमात्मैवेह भूमा भवितुमर्हति, न प्राणः।

---

णोऽन्वाहार्य्यपचनः आहवनीयः प्राणः" इति श्रुतेः, प्राणा अग्नय इह पुरे शरीरे जाग्रति सव्यापारा एव तिष्ठन्तीत्यर्थः। देवो जीवः, अथ तदा स्वप्नदर्शनकाले सुखश्रवणात् प्राणस्य सुखत्वमविरुद्धमित्यन्वयः। आत्मपदेनोपक्रमविरोधं परिहरति॥ प्राण एवेति॥ प्राणस्यात्मत्वं कथमित्याशङ्क्य श्रुतत्वादित्याह॥ तथा हीति॥ सर्व्वं समर्पितमिति च सर्व्वाधिष्ठानं प्राणं स्वीकरोति श्रुतिरित्यन्वयः। अत आत्मत्वं प्रा-

कस्मात्। सम्प्रसादादध्युपदेशात्। सम्प्रसाद इति सुषुप्तं स्थानमुच्यते सम्यक्प्रसीदत्यस्मिन्निति निर्व्वचनात्। बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात्, तस्याञ्च सम्प्रसादावस्थायां प्राणो जागर्त्तीति प्राणोऽत्र सम्प्रसादोऽभिप्रेयते प्राणादूर्द्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः। प्राण एव चेद्भूमा स्यात् स एव तस्मादूर्द्ध्वमुपदिश्येतेत्यश्लिष्टमेतत् स्यात्। न हि नाम्नैव नाम्नो भूय इति नाम्न ऊर्द्ध्वमुपदिष्टं। किं तर्हि। नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यं वाग्वाव नाम्नो भूयसीति, तथा वागादिभ्योऽप्या-प्राणादर्थान्तरमेव तत्र तत्रोर्द्ध्वमुपदिष्टं, तद्वत् प्राणादूर्द्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति। नन्विह नास्ति प्रश्नः, अस्ति भगवः प्राणाद् भूय इति। नापि प्रतिवचनमस्ति प्राणाददो वाव भूयोऽस्तीति। कथं प्राणादधिभूमोपदिश्यते इत्युच्यते प्राणविषयमेव चातिवादित्वमुक्तमनुकृष्यमाणं पश्यामः। "एष तु वा अतिवदति यः सत्येनातिवदति" इति, तस्मा-

---

णोऽपि मुख्यमिति भावः। भूमरूपत्वं योजयति ॥ सर्व्वात्मत्वेति ॥ सम्प्रसादशब्देन प्राणं लक्षयितुं मुख्यार्थं दर्शयति ॥ सम्प्रसाद इति ॥ स वा एष एतस्मिन् सम्प्रसादे स्थित्वा पुनरुद्रवतीति प्रयोगाच्च। तत् पदं सुषुप्तिवाचकमित्याह ॥ बृहदिति ॥ वाच्यार्थसम्बन्धात् प्राणो लक्ष्य इत्याह ॥ तस्याञ्चेति ॥ अथ सूत्र इत्यर्थः। भूमा प्राणाद्भिन्नः, अत्राध्याये। तस्मादूर्द्ध्वमुपदिष्टत्वान्नामादेरूर्द्ध्वमुपदिष्टवागादिवदित्यर्थः। विपक्ष-हेतूच्छेदं बाधकमाह ॥ प्राण एव चेदिति ॥ स्वस्यैव स्वस्मादूर्द्ध्वमु-पदिष्टत्वमयुक्तं नामादिषु अदृष्टत्वेत्यर्थः। हेत्वसिद्धिं शङ्कते ॥ नन्वि-हेति ॥ प्रश्नप्रायणवित् परामर्शक एष शब्दो न भवति तस्य

न्नास्ति प्राणादध्युपदेश इति। अत्रोच्यते। न तावत् प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं विशेषवादाद्यः सत्येनातिवदतीति। ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति। कथं। यथैषोऽग्निहोत्रीयः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहोत्रित्वं, केन तर्हि, अग्निहोत्रेणैव, सत्यवदनन्त्वग्निहोत्रिणो विशेष उच्यते, तथैष तु वा अतिवदति यः सत्येनातिवदतीत्युक्ते न सत्यवदनेनातिवादित्वं, केन तर्हि, प्रकृतेन प्राणविज्ञानेनैव, सत्यवदनन्तु प्राणविदो विशेषो विवक्ष्यत इति, नेति ब्रूमः, श्रुत्यर्थपरित्यागप्रसङ्गात्, श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते यः सत्येनातिवदति सोऽतिवदतीति। नात्र प्राणविज्ञानस्य सङ्कीर्त्तनमस्ति। प्रकरणात् तु प्राणविज्ञानं सम्बद्ध्येत। तत्र प्रकरणानुरोधेन श्रुतिः परित्यक्ता स्यात्। प्रकृतव्यावृत्त्यर्थस्य तुशब्दो न सङ्गच्छेत। एष तु वा अतिवदतीति। सत्यन्त्वेव विजिज्ञासितव्यमिति च प्रयत्नान्तरकरणमर्थान्तर-

---

यच्छब्दपरतन्त्रत्वेन सत्यादिवादिवाचित्वात्। अतः प्राणप्रकरणं विच्छिन्नमिति हेतुसिद्धिरित्याह ॥ अत्रोच्यत इति ॥ सत्येनातिवादित्वं विशेषः तद्दतो य एष इत्युक्तेर्न पूर्व्वानुकर्ष इत्यर्थः। य एष प्राणविदतिवदति इत्यनूद्य स सत्यं वदेदिति विधानान् न प्राणप्रकरणविच्छेदः इति दृष्टान्तेन शङ्कते ॥ नन्विति ॥ सत्यशब्दो ह्यबाधिते रूढो ब्रह्मवाचकः। तदन्यस्य मिथ्यात्वात्। सत्यवचने त्वबाधितार्थसम्बन्धात् लाक्षणिक इति नात्र लक्षणावचनविधिरित्याह ॥ नेति ब्रूमः इति ॥ किन्तु सत्येन ब्रह्मणातिवदतीति तृतीया श्रुत्या ब्रह्म करणकमतिवादित्वं श्रुतं, तस्य प्रकरणाद् बाधो न युक्त इत्याह ॥ श्रुत्या हीत्यादिना ॥ नात्रेति सत्यवाक्ये इत्यर्थः। एवं सत्येनेति श्रुत्या प्रकरणं बाध्यमित्युक्ता

विवक्षां सूचयति। तस्मादप्येकवेदिप्रशंसायां प्रकृतायामेव तु महा ब्राह्मणो यश्चतुरो वेदानधीत इत्येकवेदिभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद् द्रष्टव्यं। न च प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति, प्रकृतसम्बन्धासम्भवकारितत्वादर्थान्तरविवक्षायाः। तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णीं भूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति। यत् प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तदेष तु वा अतिवदति यः सत्येनातिवदतीति। तत्र सत्यमिति परं ब्रह्मोच्यते परमार्थरूपत्वात् "सत्यं ज्ञानमनन्तं ब्रह्म" इति च श्रुत्यन्तरात्। तथा व्युत्पादिताय नारदाय "सोऽहं भगवः सत्येनातिवदामि" इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति। तत्र यत् प्राणादधि-

---

तुशब्देनापि बाधमाह ॥ प्रकृतेति ॥ विजिज्ञास्यत्वलिङ्गाच्च पूर्व्वोक्ताद्भिन्नमित्याह ॥ सत्यन्त्वेवेति ॥ प्रकरणविच्छेदे दृष्टान्तमाह ॥ तस्मादिति ॥ श्रुतिलिङ्गबलादेतत् सत्यं प्रकृतात् प्राणात् प्राधान्येन भिन्नं द्रष्टव्यमित्यर्थः। एवमतिवादित्वस्य ब्रह्मसम्बन्धोक्त्या प्राणलिङ्गत्वं निरस्तं। यत्तु प्रश्नं विनोक्तत्वलिङ्गाद् भूमा प्राण इति तन्न, तस्याप्रयोजकत्वादित्याह ॥ न चेति ॥ प्रश्नभेदादर्थभेद इति न नियमः, एकस्यात्मनो मैत्रेय्या बहुशः दृष्टत्वात् प्रश्नं विनोक्तचातुर्व्वेदस्य प्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः। तत्र यथा चतुर्वेदत्वस्य प्रकृतासम्बन्धादर्थभेदः, एवमिहापीति स्फुटयति ॥ तत्रेत्यादिना ॥ सत्यपदेन प्राणोक्तेरित्यत्त च्याह ॥ तत्र सत्यमिति ॥ विज्ञानं निदिध्यासनं, आदिपदान्मननश्रद्धासाध्यश्रवणमनःशुद्धिनिष्ठातद्धेतुकर्म्माणि गृह्यन्ते। इमान्यपि श्रवणादीनि ज्ञेयस्य सत्यस्य ब्रह्मत्वे लिङ्गानि। एवं श्रुतिलिङ्गैः प्राणस्यावान्तरप्रकरणं बाधित्वा प्रस्तुतं सत्यं ब्रह्म भूमपदोक्तबहुत्वधर्म्मी-

सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते। तस्मादस्ति प्राणादधिभूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति। एवञ्चेहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति। प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते। न हि प्राणस्य मुख्यया वृत्त्याऽऽत्मत्वमस्ति। न चान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति, "नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्यन्तरात्। "तं मा भगवान् शोकस्य पारं तारयतु" इति चोपक्रम्योपसंहरति "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति। तम इति शोकादिकारणमविद्योच्यते। प्राणान्ते चानुशासनेन प्राणस्यान्यायत्ततोच्येत। आत्मतः प्राण इति च ब्राह्मणं। प्रकरणान्ते च परमात्मविवक्षा भविष्यति, भूमाऽत्र प्राण एवेति चेन्न। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इत्यादिना भूम्न एवाप्रकरणसमाप्तेरनुकर्षात्। वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात् परमात्मनः सुतरामुपपद्यते॥

---

त्याह। तत्र यदिति। किञ्च सन्निहितादपि व्यवहितं साकाङ्क्षं बलीय इति न्यायेन सन्निहितं निराकाङ्क्षं प्राणं हित्वा वाक्योपक्रमस्थात्मा स्वप्रतिपादनाय भूमवाक्यापेक्ष इह भूमा ग्राह्य इत्याह। एवञ्चेति। किञ्च शोकस्य पारमित्युपक्रम्य तमसः पारमित्युपसंहारात् शोकस्य मूलोच्छेदं विना तरणायोगाच्च। शोकपदेन मूलतमो गृह्यते तन्निवर्त्तकज्ञानगम्यत्वलिङ्गात्, आत्मा ब्रह्मेत्याह। न चान्येति। ब्राह्मणमात्मा यत्तत्त्वं प्राणस्य वदतीति सम्बन्धः। नन्विद चरमं ब्राह्मणं मध्यपरमस्तु ततः प्रागुक्तो भूमा प्राण इति शङ्कते। प्रकरणान्त इति। सच्छब्देन भूमानकर्षात् नैवमित्याह। नेति। भूम्नो

## धर्म्मोपपत्तेश्च ॥ ९ ॥

अपि च ये भूम्नि श्रूयन्ते धर्म्मास्ते परमात्मन्युपपद्यन्ते। यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति दर्शनादिव्यवहाराभावं भूमन्यवगमयति परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः, यत्र त्वस्य सर्व्वमात्मैवाभूत्तत् केन कं पश्येदिति श्रुत्यन्तरात्। योऽप्यसौ सुषुप्त्यवस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षया उक्तो न प्राणस्वभावविवक्षया, परमात्मप्रकरणात्। यदपि तस्यामवस्थायां सुखमुक्तं तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तं। यत आह एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति। इहापि यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखमिति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति यो वै भूमा तदमृतमिति। अमृतत्वमपीह श्रूयमाणं परमकारणं गमयति, विकाराणाममृतत्वस्य सापेक्षिकत्वात्, अतोऽन्यदार्त्तमिति च श्रुत्यन्तरात्। तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्व्वगतत्वं सर्व्वात्मत्वमिति चैते

---

प्रमृतत्वे लिङ्गान्तरमाह। धर्म्मेति। सूत्रे यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वञ्च प्राणेषु योज्यमिति तदनूद्य विघटयति। योऽप्यसावित्यादिना। सति बुद्ध्याद्युपाधावात्मनो द्रष्टृत्वादिस्तदभावे सुषुप्तौ तदभाव इत्यसङ्गत्वज्ञानार्थं प्रश्नोपनिषदि न शृणोति न पश्यतीति परमात्मत्वं प्रकृत्योक्तं। तथा तत्रैवात्मनः सुखत्वमुक्तं न प्राणस्य। यत श्रुत्यन्तरं ह्यात्मन एव सुखत्वमाह तस्मादित्यर्थः। ध्यामयो नाशादिदोष तत्सहितं सामयं। आर्त्तं नश्वरं। स एवाधस्तात स उपरिष्टादिति सर्व्व-

धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यन्ते नान्यत्र तस्मात् भूमा परमात्मेति सिद्धं ॥

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वित्यादि श्रूयते। तत्र संशयः किमक्षरशब्देन वर्ण उच्यते किं वा पर एवेश्वर इति। तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात्, ओँकार एवेदं सर्व्वमित्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्व्वात्मकत्वावधारणात् वर्ण एवाक्षरशब्द इति, एवं प्राप्ते उच्यते। पर एवात्माक्षरशब्दवाच्य, कस्मादम्बरान्तधृतेः पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात्। तत्र हि पृथिव्यादेः समस्तस्य विकारजातस्य कालत्रयविभक्तस्याकाश एव तदोतञ्च प्रोतञ्चेत्याकाशे प्रतिष्ठितत्वमुक्त्वा कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यनेन प्रश्नेनेदम-

---

गतत्वं, स एवेदं सर्व्वमिति सर्व्वात्मत्वञ्च श्रुतं, तस्माद्भूमाध्यायो निर्गुणे समन्वित इति सिद्धं॥

अक्षरं। बृहदारण्यके पठति। कस्मिन्निति। यदूर्ध्वं भवच्च भविष्यच्च तत्सर्व्वं कस्मिन्नोतमिति गार्ग्या पृष्टेन मुनिना याज्ञवल्क्येनाव्याकृताकाशं कार्य्यमात्राश्रय उक्तं। व्याकाशं कस्मिन्नोतं इति द्वितीयप्रश्ने स मुनिरुवाच। तत् अव्याकृतस्याधिकरणमेतदक्षरं अस्थूलादिरूपमित्यर्थः। उभयत्राक्षरशब्दप्रयोगात् संशयः। यथा सत्यशब्दो ब्रह्मणि रूढ इति ब्रह्म भूमेत्युक्तं तथाक्षरशब्दो वर्णे रूढ इति दृष्टान्तेन पूर्व्वपक्षः, तत्रोङ्कारोपास्तिः फलं। सिद्धान्ते निर्गुणब्रह्मधीरिति विवेकः। ननु न क्षरतीत्यचलत्वानाशित्वयोगात ब्रह्मण

क्षरमवतारितं, तथा चोपसंहृतमेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र सम्भवति। यदप्योङ्कार एवेदं सर्व्वमिति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात् स्तुत्यर्थं द्रष्टव्यं। तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म। स्यादेतत् कार्य्यस्य चेत् कारणाधीनत्वं अम्बरान्तधृतिरभ्युपगम्यते प्रधानकारणवादिनोऽपीयमुपपद्यते कथं अम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिरिति, अत उत्तरं पठति॥

## सा च प्रशासनात्॥ ११॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म्म, कस्मात् प्रशासनात्। प्रशासनं ह्यह श्रूयते एतस्य वाक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादि। प्रशासनञ्च पारमेश्वरं कर्म्म नाचेतनस्य प्रशासनं सम्भवति। न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति॥

---

प्यक्षरशब्दो मुख्य इत्यत आह। प्रसिद्धिव्यतिक्रमस्येति। रूढिर्योगमपहरतीति न्यायादित्यर्थः। वर्णस्योङ्कारस्य सर्व्वाश्रयत्वं कथमित्याशङ्क्य ध्यानार्थमिदं यथा श्रुत्यन्तरे सर्व्वात्मत्वमित्याह। ॐकार इति। प्रश्नप्रतिवचनाभ्या आकाशान्तजगदाधारत्वे तात्पर्य्यनिश्चयाञ्च ध्यानार्थता, अतस्तल्लिङ्गबलाद्रूढिं बाधित्वा योगवृत्तिर्ग्राह्येति सिद्धान्तयति एवमित्यादिना। आकाशभूतं कृत्वा शङ्कते। स्यादेतदिति। चेतनकर्तृकश्रित्याया अत्र श्रुतेर्मैवमित्याह॥

सा चेति॥ सूत्रं व्याचष्टे। सा चेति॥ चकार आकाशस्य भूतत्वनिरासार्थः। भूताकाशस्य कार्य्यान्तःपातिनः श्रुतसर्व्वकार्य्याश्रयत्वायोगात अव्याकृतमज्ञानमेवाकाशः प्रधानशब्दित इति तदाश्रयत्वाच्चाक्षरं न प्रधानमित्यर्थः। विधृतौ विधेयत्वेन धृतौ॥

### अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावव्यावृत्तेश्च कारणात् ब्रह्मैवाक्षरशब्दवाच्यं, तस्यैवाम्बरान्तधृतिः कर्म्म नान्यस्य कस्यचित्। किमिदमन्यभावव्यावृत्तेरिति। अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभावव्यावृत्तिरिति। एतदुक्तं भवति यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधरणमक्षरं व्यावर्त्तयति श्रुतिः, तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञात्रिति। तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि सम्भवति, द्रष्टृत्वादिव्यपदेशस्तु न तस्य सम्भवत्यचेतनत्वात्, तथा नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रित्यात्मभेदप्रतिषेधात् न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वं, अचक्षुष्कमश्रोत्रमवागमन इत्युपाधिमत्ताप्रतिषेधात्। न हि निरुपाधिकः शारीरो नाम भवति। तस्मात् परमेव ब्रह्माक्षरमिति निश्चयः ॥

### ईक्षतिकर्म्मव्यपदेशात् सः ॥ १३ ॥

एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वा-

---

प्रश्नपूर्व्वकं सूत्रं व्याकरोति। किमिदमिति। घटत्वात् व्यावृत्तिरिति भ्रान्तिं निरस्यति। एतदिति। अम्बरान्तस्याधारमक्षरं श्रुतिरचेतनत्वाद्व्यावर्त्तयतीत्यर्थः। जीवनिरासपरत्वेनापि सूत्रं योजयति। तथेति। अन्यभावो भेदः तन्निषेधादिति सूत्रार्थः। तर्हि शोधितो जीव एवाक्षरं न पर इत्यत आह। न हीति। शोधिते जीवत्वं नास्तीत्यर्थः। तस्मादार्गि ब्राह्मणं निर्गुणाक्षरे समन्वितमिति सिद्धं ॥

ईक्षतिकर्म्मव्यपदेशात् सः ॥ प्रश्नोपनिषदमुदाहरति। एतदिति।

नेतेनैवायतनेनैकतरमन्वेतीति प्रकृत्य श्रूयते। यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति। किमस्मिन् वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यते आहोस्विदपरमित्येतेनैवायतनेन परमपरञ्चैकतरमन्वेतीति प्रकृतत्वात् संशयः। तत्रापरमिदं ब्रह्मेति प्राप्तं, कस्मात् स तेजसि सूर्य्ये तावत् सम्पन्नः, स सामभिरुन्नीयते ब्रह्मलोकमिति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात्। न हि परब्रह्मविद्देशपरिच्छिन्नं फलमश्नुवीतेति युक्तं, सर्व्वगतत्वात् परस्य ब्रह्मणः। नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते, नैष दोषः, पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः, इत्येवं प्राप्तेऽभिधीयते। परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते, कस्मात् ईक्षतिकर्म्मव्यप-

---

पिप्पलादो गुरुः सत्यकामेन पृष्टो ब्रूते, हे सत्यकाम परं निर्गुणमपरं सगुणं ब्रह्मैतदेव योऽयमोङ्कारः, स हि प्रतिमेव विष्णोस्तस्य प्रतीकस्तस्मात् प्रणवं ब्रह्मात्मना विद्वानेतेनैवोङ्कारध्यानेनायतनेन प्राप्तिसाधनेन यथाध्यानं परमपरं चान्वेति प्राप्नोतीति प्रकृत्य मध्ये एकमात्रद्विमात्रोङ्कारयोर्ध्यानमुक्त्वा ब्रवीति। यः पुनरिति। इत्थम्भावे तृतीया ब्रह्मोङ्कारयोरभेदोपक्रमात्। यो ह्यकारादिमात्रात्रये एकस्या मात्राया अकारस्य ऋग्व्यादिकं जाग्रदादिविभूतिञ्च जानाति तेन सम्यक् ज्ञाता एकमात्रा यस्योङ्कारस्य स एकमात्रः। एवं मात्राद्वयस्य सम्यग्विभूतिज्ञाने द्विमात्रस्तथा त्रिमात्रः। तमोङ्कारं पुरुषं योऽभिध्यायीत स ॐकारविभूतित्वेन ध्यातैः सामभिः सूर्य्यद्वारा ब्रह्मलोकं गत्वा परमात्मानं पुरुषं ईक्षेत इत्यर्थः। संशयं तद्बीजञ्चाह। किमित्यादिना। अस्मिन् त्रिमात्रवाक्य इत्यर्थः। पूर्व्वत्र पूर्व्वपक्षेणोक्ते ॐकारे बुद्धिस्थं ध्यातव्यं निश्चीयत इति प्रसङ्गसङ्गतिः। यद्वा पर्व्वत्र वर्णे रूढ्याक्षरशब्दस्य लिङ्गात् ब्रह्मणि वृत्तिरुक्ता तद्वदत्रापि ब्रह्म-

[दे]शात्। ईक्षतिर्दर्शनं दर्शनव्याप्यमीक्षतिकर्म्म, ईक्षतिकर्म्मत्वे-
[ने]नास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति, स
एतस्माज्जीवघनात् परात् परं पुरुषं पुरिशयं ईक्षत इति।
तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म्म भवति मनोरथक-
ल्पितस्यापि अभिध्यायतिकर्म्मत्वात्। ईक्षतेस्तु तथाभूतमेव
वस्तु लोके कर्म्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषय-
भूत ईक्षतिकर्म्मत्वेन व्यपदिष्ट इति गम्यते। स एव चेह पर-
पुरुषशब्दाभ्यामभिध्यातव्य. प्रत्यभिज्ञायते। नन्वभिध्याने पर-
पुरुष उक्त ईक्षणे तु परात्पर. कथमितर इतरत्र प्रत्यभिज्ञा-
यते इति, अत्रोच्यते। परपुरुषशब्दौ तावदुभयत्र साधारणौ।
न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परपुरुषः परामृ-
श्यते येन तस्मात् परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात्।
कस्तर्हि जीवघन इत्युच्यते घना मूर्त्तिर्जीवलक्षणो घनो जीव-

---

लोकप्राप्तिलिङ्गात् परशब्दस्य हिरण्यगर्भे वृत्तिरिति दृष्टान्तेन पूर्व्व-
पक्षयति। तत्रापरमिति। कार्य्यपरब्रह्मणोरुपास्तिरुभयत्र फल। स
उपासक'। सूर्य्ये सम्पन्न प्रविष्ट। ननु वसुदान ईश्वर इति ध्यानात्
विन्दते वस्वित्यल्पमपि फल ब्रह्मोपासकस्य श्रुतमित्यत आह। नहीति॥
अन्यत्र तथात्वेऽपि अत्र परवित् परमपरविदपरमन्वेतीत्यपरविदो-
ऽपरप्राप्तिरयुक्ता उपक्रमविरोधात्। न चात्र परप्राप्तिरेवोक्तेति वाच्यं,
परस्य सर्व्वगतत्वात्। अत्रैव प्राप्तिसम्भवेन सूर्य्यद्वारा गतिवैयर्थ्यात्
उपक्रमानुगृहीतादपरप्राप्तिरूपाल्लिङ्गात् पर पुरुषमिति॰परश्रुति-
र्बाध्येत्यर्थं॥ परश्रुतेर्गतिं पृच्छति। नन्विति। पिण्ड स्थूलो विराट्
तदपेक्षया सूत्रस्य परत्वमिति समाधात्यर्थं सूत्रे सशब्द ईश्वरपर इति
प्रतिज्ञातत्वेन तं व्याचष्टे। परमेवेति। स उपासक एतस्माद्धिरण्यग

घनः सैन्धवखिल्यवत् यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति। अपर आह स सामभिरुन्नीयते ब्रह्मलोकमिति, अतीतानन्तरवाक्यनिर्द्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते। जीवानां हि सर्व्वेषां करणपरिवृतानां सर्व्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि सङ्घातोपपत्तेर्भवति ब्रह्मलोको जीवघनः, तस्मात् परो यः परमात्मेक्षणकर्म्मभूतः स एवाभिध्यानेऽपि कर्म्मभूत इति गम्यते। परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्प्यते। परो हि पुरुषः परमात्मैव भवति यस्मात् परं किञ्चिदन्यन्नास्ति, पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिरिति च

---

भात् परं पुरुषं ब्रह्माहमितीक्षत इत्यर्थः॥ नन्वीक्षणविषयोऽप्यपरोऽस्तु तत्राह। तत्राभिध्यायतेरिति। नन्वीक्षणं प्रमाणविषयसत्यतामपेक्षत इति भवतु सत्यः पर ईक्षणीयः ध्यातव्यस्त्वसत्योऽपरः किं न स्यादित्यत आह। स एवेति। श्रुतिभ्यां प्रत्यभिज्ञानात् स एवायमिति सौत्रः सशब्दो व्याख्यातः। अत्रैव सूत्रयोजना, ओँकारे यो ध्येयः स पर एवात्मा वाक्यशेषे ईक्षणीयत्वोक्तेः, अत्र च श्रुतिप्रत्यभिज्ञानात् स एवायमिति। ननु शब्दभेदात् न प्रत्यभिज्ञेति शङ्कते। नन्विति। परात् पर इति शब्दभेदं अङ्गीकृत्य श्रुतिभ्यामुक्तप्रत्यभिज्ञाया अविरोधमाह। अत्रेति। न चैतस्माज्जीवघनात् परादित्येतत्पदेनोपक्रान्तध्यातव्यपरामर्शादीक्षणीयः परात्मा ध्येयादन्य इत्यत आह। न चानेति। ध्यानस्य तत्फलेक्षणस्य च लोके समानविषयत्वाद्ध्येय एवेक्षणीयः। एवमुपक्रमोपसंहारयोरेकवाक्यता भवतीति भावः। न चाभिध्यीयते ब्रह्मलोकं स एतस्माज्जीवघनादित्येतत्पदेन [illegible]

श्रुत्यन्तरात्। परञ्चापरञ्च ब्रह्म यदोङ्कार इति च विभज्यानन्तरमोङ्कारेण परं पुरुषमभिध्यातव्यं ब्रुवन् परमेव ब्रह्म परं पूरुषं गमयति। यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुच्यत इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति। अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नं फलं युज्यत इति, अत्रोच्यते। त्रिमात्रेणोङ्कारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥

---

लोकस्वामी परामृश्यत इति प्रश्नपूर्व्वकं व्याचष्टे। कस्तर्हीत्यादिना। मूर्त्ता घन इति सूत्रादिति भावः। सैन्धवखिल्यो लवणपिण्डः खिल्यवद्रूपो भावः परिच्छेदो यस्य स खिल्यभावः। एतत्पदेन ब्रह्मलोको वा परामृश्यते इत्याह। अपर इति। जीवघनशब्दस्य ब्रह्मलोके लक्षणां दर्शयति। जीवाना हीति। व्यष्टिकरणाभिमानिनो जीवाना घन. सङ्घातो यस्मिन् सर्व्वकरणाभिमानिनि स जीवघनः तत्स्वामिकत्वात् परम्परासम्बन्धेन लोको लक्ष्य इत्यर्थः। तस्मात् परः सर्व्वलोकातीतः शुद्ध इत्यर्थः। परपुरुषशब्दस्य परमात्मनि मुख्यत्वाच्च स एव ध्येय इत्याह। परमिति। यस्मात् परान्नापरमस्ति किञ्चित् स एव मुख्य' परः न तु पिण्डात् परः सूत्रात्मेत्यर्थः। किञ्च परशब्देनोपक्रमे निश्चितं परं ब्रह्मैवाच वाक्यशेषे ध्यातव्यमित्याह। परञ्चापरञ्चेति। पापनिवृत्तिलिङ्गाच्चेत्याह ॥ यथेति। पादोदर' सर्प'। ॐकारे परब्रह्मोपासनया सूर्य्यद्वारा ब्रह्मलोकं गत्वा परब्रह्मोच्छित्वा तदेव प्रान्तमभयं प्राप्नोतीत्यविरोधमाह। अत्रोच्यत इति ॥ एवमेकवाक्यतासमर्थप्रकरणानुगृहीतपरपुरुषश्रुतिभ्या परब्रह्मप्रत्यभिज्ञया ब्रह्मलोकप्राप्तिलिङ्गं बाधित्वा वाक्यं प्रणवध्येये ब्रह्मणि समन्वितमिति सिद्ध ॥

## दहर उत्तरेभ्यः ॥ १४ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यं इत्यादि वाक्यं समाम्नायते। तत्र योऽयं दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः स किम्भूताकाशोऽथ विज्ञानात्माथवा परमात्मेति संशय्यते। कुतः संशयः, आकाशब्रह्मपुरशब्दाभ्यां। आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च ब्रह्मणि प्रयुज्यमानो दृश्यते। तत्र किम्भूताकाश एव दहरः स्यात् किं वा पर इति संशयः। तथा ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरमथ वा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति। तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः। तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भूताकाश एव दहर इति प्राप्तं, तस्य च दहरायत-

---

दहर उत्तरेभ्यः। छान्दोग्यमुदाहरति। अथेति। भूमविद्यानन्तरं दहरविद्याप्रारम्भार्थोऽथशब्दः। ब्रह्मणोऽभिव्यक्तिस्थानत्वात् ब्रह्मपुरं शरीरं अस्मिन् यत् प्रसिद्धं दहरमल्प हृत्पद्मं तस्मिन् हृदये यदन्तराकाशशब्दितं ब्रह्म तदन्वेष्टव्यं विचार्य्यं ज्ञेयमित्यर्थः। अत्राकाशो जिज्ञास्यस्तदन्तःस्थं वेति प्रथम संशयः कल्प्यः। तत्र यद्याकाशस्तदा संशयद्वयं। तत्राकाशशब्दादेकं संशयमुक्त्वा ब्रह्मपुरशब्दात् संशयान्तरमाह। तथा ब्रह्मपुरमितीति। अत्र शब्दे जीवस्य ब्रह्मणो वा पुरमिति संशयः। तत्र तस्मिन् संशये सतीति योजना। परपुरुषशब्दस्य ब्रह्मणि मुख्यत्वात् ब्रह्म ध्येयमित्युक्तं। तद्वदिहाप्याकाशपदस्य भूताकाशे रूढत्वाद्भूताकाशो ध्येय इति दृष्टान्तेन पूर्व्वपक्षयति। तत्राकाशेत्यादिना। दहरवाक्यस्यानन्तरप्रजापतिवाक्यस्य च सगुणे

नापेक्षया दहरत्वं, यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति च बाह्याभ्यन्तरभावकृतभेदस्योपमानोपमेयभावो द्यावापृथिव्यादि च तस्मिन्नन्तःसमाहितमवकाशात्मनाकाशस्यैकत्वात्। अथ वा जीवो दहर इति प्राप्तं ब्रह्मपुरशब्दात्, जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते। तस्य स्वकर्मणोपार्ज्जितत्वात्। भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वं। न हि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः सम्बन्धोऽस्ति। तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः, मनउपाधिकश्च जीवो मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयान्तरवस्थानं स्यात्। दहरत्वमपि तस्यैवाराग्रोपमितत्वादवकल्पते। आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति। न चात्र दहरस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वञ्च श्रूयते, तस्मिन् यदन्तरिति परविशेषणत्वेनोपादानादिति, अत

---

निर्गुणे च समन्वयोक्तेः श्रुत्यादिसङ्गतयः। पूर्व्वपक्षे भूताकाशाद्युपास्तिः सिद्धान्ते सगुणब्रह्मोपास्त्या निर्गुणधीरिति फलभेदः। न चाकाशस्तल्लिङ्गादित्यनेनास्य पुनरुक्तता शङ्कनीया। अत्र तस्मिन् यदन्तस्तदन्वेष्टव्यमित्याकाशान्तःस्थस्यान्वेष्टव्यत्वादिलिङ्गान्वयेन दहराकाशस्य ब्रह्मत्वे स्पष्टलिङ्गाभावात्। ननु भूताकाशस्याल्पत्वं कथमेकस्योपमानत्वं उपमेयत्वञ्च कथं उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्चेत्यादिना श्रुतसर्व्वाश्रयत्वञ्च कथमित्याशङ्क्य क्रमेण परिहरति। तस्येत्यादिना। हृदयापेक्षया अल्पत्वं ध्यानार्थं कल्पितभेदात् सादृश्यं, स्वत एकत्वात् सर्व्वाश्रयत्वमित्यर्थः। नन्वेष आत्मेत्यात्मशब्दो भूते न युक्त इत्यरुचेराह। अथ वेति। भक्त्येति। चैतन्यगुणयोगेनेत्यर्थः। मुख्यं ब्रह्म गृह्यतामित्यत आह। न हीति। अस्तु पुरस्वामी जीवो

उत्तरं ब्रूमः। परमेश्वर एव दहराकाशो भवितुमर्हति न भूताकाशो जीवो वा। कस्मादुत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः। तथा हि द्रष्टव्यतया विहितस्य दहराकाशस्य तञ्चेद्ब्रुयुरित्युपक्रम्य किं तदत्र विद्यते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्यं इत्येवमाक्षेपपूर्व्वकं प्रतिसमाधानवचनं भवति स ब्रूयाद्यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यादि। तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वन्निवर्त्तयन् भूताकाशत्वं दहरस्याकाशस्य निवर्त्तयतीति गम्यते। यद्यप्याकाशशब्दो भूताकाशे रूढस्तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्त्तिता भवति। नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोप-

हृदयस्याकाशन्तु ब्रह्मेत्यत आह। तत्रेति। पुरस्वामिन एव तदन्तस्थत्वसम्भवात् नान्यापत्तेरित्यर्थः। व्यापिनोऽन्तःस्थत्वं कथमित्यत आह। सत इति। आकाशपदेन दहरमनूद्योक्तोपमादिकं ब्रह्माभेदविवक्षया भविष्यतीत्याह। आकाशेति। ननु जीवस्याकाशपदार्थत्वमयुक्तमित्याशङ्क्य तर्हि भूताकाश एव दहरोऽस्तु तस्मिन्नन्तःस्थं किञ्चिद्ध्येयमिति पक्षान्तरमाह। न चात्रेति। परमन्तःस्थं वस्तु, तद्विशेषणत्वेनाधारत्वेन दहराकाशस्य तच्छब्देनोपादानादित्यर्थः। यद्वा अन्वेष्यत्वादिलिङ्गात् दहरस्य निश्चयादाकाशस्तल्लिङ्गादित्यनेन गतार्थत्वमिति शङ्का च निरसनीया अन्वेष्यत्वादेः परविशेषणत्वेन ग्रहणात् दहरस्य ब्रह्मत्वे लिङ्गं नास्तीत्यर्थः। अपहतपाप्मत्वादिलिङ्गोपेतात्मश्रुत्या केवलाकाशश्रुतिर्बाध्येति सिद्धान्तयति। परमेश्वर इत्यादिना। आकाशस्याक्षेपपूर्व्वकमिति सम्बन्धः। समाधार्यं प्रति यदि ब्रूयुः हृदय-

मेयभावः सम्भवतीत्युक्तं। नैवं सम्भवति। अगतिका ह्रीयं गतिर्यत् कान्पनिकभेदाश्रयणं। अपि च कल्पयित्वा भेदमुपमानोपमेय-भावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाश-परिमाणत्वमुपपद्यते। ननु परमेश्वरस्यापि ज्यायानाकाशादि-ति,श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्यते, नैष दोषः, पुण्ड-रीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न तावत्त्वप्रतिपा-दनपरत्वं। उभयप्रतिपादनेऽपि वाक्यं भिद्येत। न च कल्पि-तभेदे पुण्डरीकवेष्टिते आकाशैकदेशे द्यावापृथिव्यादीनामन्तः-समाधानमुपपद्यते। एष आत्मापहतपाप्मा विजरो विमृत्यु-र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे सम्भवन्ति। य-द्यप्यात्मशब्दो जीवे सम्भवति,तथापीतरेभ्यः कारणेभ्यो जीवा-

---

मेव तावदल्पं तत्राकाशोऽल्पतर किं तदत्राल्पे विद्यते यद्विचार्य्यं ज्ञेयमिति, तदा स आचार्य्यो ब्रूयादाकाशस्याल्पतानिवृत्तिमित्यर्थः। वाक्यस्य तात्पर्य्यमाह। तत्रेति। निवर्त्तयति आचार्य्य इति शेषः। नन्वाकाशशब्देन रूढ्या भूताकाशस्य भानात् कथं तन्निवृत्तिरित्याश-ङ्क्याह। यद्यपीति। ननु रामरावणयोर्युद्धं रामरावणयोरिवेत्यभेदे-ऽप्युपमा दृष्टेति चेत् न, अभेदे सादृश्यस्यानन्वयेन युद्धस्य निरुपमत्वे तात्पर्य्यात् अनन्वयालङ्कार इति काव्यविदः। पूर्व्वोक्तमनूद्य निरस्यति। नन्वित्यादिना। सीताश्लिष्ट इवाभाति कोदण्डप्रभया युत इत्यादौ प्रभायोगसीताश्लेषरूपविशेषणभेदाभेदाश्रयणमेकस्यैव श्रीरामस्योप-मानोपमेयभावसिद्ध्यर्थमगत्या कृतमित्यनुदाहरणं द्रष्टव्यं नैवमत्राश्र-यणं युक्तं वाक्यस्याल्पत्वनिवृत्तिपरत्वेन गतिसद्भावात्। किञ्च दहरा-काशस्यान्तरत्वात्यागे अल्पत्वेन व्यापकबाह्याकाशसादृश्यं न युक्तमि-त्याह। अपि चेति। आन्तरत्वत्यागे तु अत्यन्ताभेदान्न सादृश्यमिति

शङ्कापि निवर्त्तिता भवति। न ह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्त्तयितुं ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्यत इति चेत् यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्यते तस्यैव ब्रह्मणः साक्षात् सर्वगतत्वादि विवक्ष्यतामिति युक्तं। यदप्युक्तं ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वाद्राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्त्तित्वमस्त्वीत्यत्र ब्रूमः। परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते ब्रह्मशब्दस्य तस्मिन् मुख्यत्वात्। तस्याप्यस्ति पुरेणानेन सम्बन्ध उपलब्ध्यधिष्ठानत्वात्। स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते, स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय इत्यादिश्रुतिभ्यः। अथ वा जीवपुरे एवास्मिन् ब्रह्म *सन्निहितमुपलभ्यते। यथा सालग्रामे

---

भावः। ननु हार्दाकाशस्याल्पत्वनिवृत्तौ तावत्त्वे च तात्पर्यं किं न स्यादित्यत आह। उभयेति। अतोऽल्पत्वनिवृत्तावेव तात्पर्य्यमिति भावः। एवमाकाशोपमितत्वाद्दहराकाशो न भूतमित्युक्तं सर्व्वाश्रयत्वादिलिङ्गेभ्यश्च तथेत्याह। न चेत्यादिना। विगता जिघत्सा जग्धुमिच्छा यस्य सोऽयं विजिघत्सः बुभुक्षाशून्य इत्यर्थः। प्रथमश्रुतब्रह्मशब्देन तत्सापेक्षचरमश्रुतषष्ठीविभक्त्यर्थः सम्बन्धो नेयः न तु ब्रह्मणः पुरमिति षष्ठ्यर्थः स्वस्वामिभावो ग्राह्यः। निरपेक्षेण तत्सापेक्षं बाध्यमिति न्यायादित्याह। अत्र ब्रूम इति। शरीरस्य ब्रह्मणा तदुपलब्धिस्थानत्वरूपे सम्बन्धे मानमाह। स इति। पूर्षु शरीरेषु, पुरि हृदये शय इति पुरुष इत्यन्वयः। ननु ब्रह्मशब्दस्य जीवेऽप्यन्नादिना शरीरवृद्धिहेतौ मुख्यत्वान्न षष्ठ्यर्थं कथञ्चिन्नेय इत्यत आह। अथ वेति। बृंहयति देहमिति ब्रह्म जीवः तत्स्वामिके पुरे, हृदयं ब्रह्मवेश्म भवतु

---

* सन्निहितमुपदेक्ष्यते इति को॰ B

भवतः। इमाः सर्व्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति, तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानां अभिधीयमानां दहरस्य ब्रह्मतां गमयति। तथा ह्यहरहर्जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे सता सोम्य तदा सम्पन्नो भवतीत्येवमादौ। लोकेऽपि किल गाढं सुषुप्तमाचक्षते ब्रह्मीभूतो ब्रह्मतां गत इति। तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशाशङ्कां निवर्त्तयन् ब्रह्मतामस्य गमयति। ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत्, गमयेद्यदीद ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्यते। सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति। एतदेव चाहरहर्ब्रह्मलोक-

---

मित्याशङ्क्य तथा हि दृष्टमिति व्याचष्टे। तथा हीति। लोकेऽपि दृष्टमित्यर्थान्तरमाह। लोकेऽपीति। गतिलिङ्गं व्याख्याय शब्दं व्याचष्टे। तथेति। जीवभूताकाशयोर्ब्रह्मलोकशब्दस्याप्रसिद्धेरिति भावः। ब्रह्मण्यपि तस्याप्रसिद्धिं शङ्कते। नन्विति। निषादस्थपतिन्यायेन समाधत्ते गमयेदिति। षष्ठे चिन्तितं स्थपतिर्निषादः शब्दसामर्थ्यात्। रौद्रीमिष्टिं विधाय एतया निषादस्थपतिं याजयेदित्याम्नायते। तत्र निषादानां स्थपतिः स्वामीति षष्ठीसमासेन त्रैवर्णिको ग्राह्यः अग्निविद्यादिसामर्थ्यात् न तु निषादश्चासौ स्थपतिश्चेति कर्मधारयेण निषादो ग्राह्योऽसामर्थ्यादिति प्राप्ते सिद्धान्तः। निषाद एव स्थपतिः स्यात् निषादशब्दस्य निषादे शक्तत्वात्, तस्याश्रुतषष्ठ्यर्थसम्बन्धलक्षकत्वकल्पनायोगात् श्रुतद्वितीयाविभक्तेः पूर्वपदसम्बन्धकल्पनाया लाघवात् अतो निषादस्येष्टिसामर्थ्यमात्रं कल्प्यमिति तद्वद्ब्रह्मलोकशब्दे

गमनं *दृष्टं ब्रह्मलोकशब्दस्य† सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गं। न ह्यहरहरिमाः प्रजाः कार्य्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुं॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः कथं दहरोऽस्मिन्नन्तराकाश इति हि प्रकृत्याकाशौपम्यपूर्वकं तस्मिन् ‡सर्वसमाधानमुक्ता तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगञ्चोपदिश्य तमेवानतिवृत्तप्रकरणं निर्दिशत्यथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदायेति। तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारयितोच्यते, §क्तिचः कर्त्तरि स्मरणात्। यथोदकसन्तानस्य विधारयिता लोके सेतुः क्षेत्रसम्पदामसम्भेदायैवमयमात्मा एषामध्यात्मादिभेदभिन्नानां लो-

कर्म्मधारय इत्यर्थः। कर्मधारये लिङ्गमस्तीति व्याचष्टे। एतदेवेति। सूत्रे चकार उक्तन्यायसमुच्चयार्थः॥

सर्व्वजगद्धारणलिङ्गाच्च दहरः पर इत्याह। धृतेरिति। नन्वथशब्दाद्दहरप्रकरणं विच्छिद्य श्रुता धृतिर्न दहरलिङ्गमिति शङ्कते। कथमिति। य आत्मेति प्रकृतापकर्षात् अथशब्दो दहरस्य धृतिगुणविधिप्रारम्भार्थमाह दहरोऽस्मिन्नित्यादिना। श्रुतौ विधृतिशब्दं कर्तृवाचित्वात् क्तिजन्तं मयन्त। सूत्रे तु महिमशब्दसामानाधिकरण्यात् धृतिशब्दं क्तिनन्तो विधारणं ब्रूते, स्त्रियां क्तिन्निति भावे क्तिनो विधानादिति विभागः। सेतुरसङ्करहेतुः, विधृतिस्तु स्थिति-

* दृष्टमिति का० सो० पु० नास्ति।
† सामानाधिकरण्यपरिग्रहे इति मु० पु०।
‡ सर्वसमाधानमिति सो० का० पु०।
§ क्तिन इति मु० पु०।

कानां वर्णाश्रमादीनाञ्च विधारयिता सेतुरसम्भेदायासङ्करायेति। एवमिह प्रकृते दहरे विधरणलक्षणं महिमानं दर्शयति, अयञ्च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादेः। तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसम्भेदायेति। एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः।

## प्रसिद्धेश्च ॥ १७ ॥

इतश्च परमेश्वर एव दहरोऽस्मिन्नन्तराकाश इत्युच्यते। यत्कारणमाकाशशब्दः परमेश्वरे प्रसिद्धः। आकाशो वै नाम नामरूपयोर्निर्वहिता, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादिप्रयोगदर्शनात्। जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते। भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानोपमेयभावाद्यसम्भवान्न ग्रहीतव्य इत्युक्तं ॥

---

हेतुरित्यपौनरुक्त्यमाह। यथोदकेति। सूत्रं योजयति। एवमिहेति। धृतेश्चेद्दहरः परः अस्य धृतिरूपस्य नियमस्य च महिम्नोऽस्मिन् परमात्मन्येव श्रुत्यन्तर उपलब्धेरिति सूत्रार्थः। धृतेश्चेति चकारात् सेतुपदोक्तनियामकत्वलिङ्गं ग्राह्यं तत्र नियमने श्रुत्यन्तरोपलब्धिमाह। एतस्येति। धृतौ तामाह। तथेति। आसमन्तात् काशते दीप्यते इति स्वयंज्योतिषि ब्रह्मण्याकाशशब्दस्य विभुत्वगुणतो वा प्रसिद्धिः प्रयोगप्राचुर्यं ॥

## इतरपरामर्शात् स इति चेन्नासम्भवात्॥ १८॥

यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येतास्ती-तरस्यापि जीवस्य वाक्यशेषे परामर्शः। अथ य एष सम्प्रसादो ऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते एष आत्मेति *होवाचेति। अत्र हि सम्प्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वादवस्थावन्तं जीवं शक्नोत्युपस्थाप-यितुं नार्थान्तरं। तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात् समुत्थानं सम्भवति। यथाकाशव्यपाश्रयाणां वाय्वादीनामाका-शात् समुत्थानं तद्वत्। यथा चादृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारादाकाशो वै नाम नामरूपयोर्निर्वहितेत्येवमादौ परमेश्वरविषयोऽभ्युपगतः, एवं जीवविषयोऽपि भविष्यति। तस्मादितरपरामर्शात् दहरो-ऽस्मिन्नन्तराकाश इत्यत्र स एव जीव उच्यते इति चेत्, नैत-

यदि एष आत्मापहतपाप्मेत्यादिवाक्यशेषबलेन दहरः परस्तर्हि जीवोऽपीत्याशङ्क्य निषेधति। इतरेति। जीवस्य वाक्यशेषमाह। अथेति। दहरोक्त्यनन्तरं मुक्तोपसृप्यं शुद्धं ब्रह्मोच्यते, य एष सम्प्रसादो जीवोऽस्मात् कार्य्यकारणसङ्घात् सम्यगुत्थाय आत्मानं तस्मा-द्विविच्य विविक्तं आत्मानं स्वेन ब्रह्मरूपेणाभिनिष्पद्य साक्षात्कृत्य तदेव प्रत्यक् परं ज्योतिरुपसम्पद्यते प्राप्नोतीति व्याख्येयं। यथा मुखं व्यादाय स्वपितीति वाक्यं सुप्तो मुखं व्यादत्ते इति व्याख्यायते तद्वत्। ज्योतिषोऽनात्मत्वं निरस्यति। एष इति। सम्प्रसादादेव त्वार्थरित्येति श्रुत्यन्तरं। अवस्थावदुत्थानमपि जीवस्य लिङ्गमित्याह। तथेति। तदा-श्रितस्य तस्मात् समुत्थाने दृष्टान्तः। यथेति। ननु क्वाप्याकाशशब्दो जीवेन दृष्ट इत्यशङ्क्यावस्थोत्थानलिङ्गबलात् कल्प्य इत्याह। यथा

* होवाचेति सो० पु० नास्ति।

देवं स्यात्, कस्मादसम्भवात्। नहि जीवो बुद्ध्याद्युपाधि*परिच्छिन्नाभिमानी सन्नाकाशे नोपमीयते। न चोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्माः सम्भवन्ति। प्रपञ्चितञ्चैतत् प्रथमे सूत्रे, अतिरेकाशङ्का†परिहाराय तु पुनरुपन्यस्तं। पठिष्यति चोपरिष्टादन्यार्थश्च परामर्श इति [सू०१।३।२०] ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

‡इतरपरामर्शाद्या जीवाशङ्का जाता सा असम्भवात् निराकृता। §अथेदानीं ‖मृतस्येवामृतसेकात् पुनः ¶समुत्थानं जीवाशङ्कायाः क्रियते उत्तरस्मात् प्राजापत्याद्वाक्यात्। तत्र हि य आत्मापहतपाप्मेत्यपहतपाप्मत्वादिगुणकं आत्मानमन्वेष्टव्यं

चेति। नियामकाभावाज्जीवो दहर किं न स्यादिति प्राप्ते नियामकमाह। नैतदित्यादिना। दहरे श्रुतधर्माणामसम्भवात् न जीवो दहर इत्यर्थं तर्हि पुनरुक्तिस्तत्राह। अतिरेकेति। उत्तराच्चेत्यधिकाशङ्कानिरासार्थमित्यर्थं। का तर्हि जीवपरामर्शस्य गतिस्तत्राह। पठिष्यतीति। जीवस्य स्वापस्थानभूतब्रह्मज्ञानार्थोऽयं परामर्श इति वक्ष्यते ॥

असम्भवादिति हेतोरसिद्धिमाशङ्क्य परिहरति। उत्तराच्चेत्यादि सूत्र। निराकृताया जीवाशङ्कायाः प्रजाताया प्रजापतिवाक्यबलात् पुन समुत्थानं क्रियते जीवस्यैवापहतपाप्मत्वादिग्रहणेनासम्भवासिद्धेरित्यर्थं, कथ तत्र जीवोक्तिस्तत्राह। तत्रेत्यादिना। यद्यप्युपक्रमे जीवशब्दो नास्ति तथाप्यपहतपाप्मत्वादिगुणकमात्मानमुपक्रम्य तस्य

* परिच्छेदाभिमानीति सो० का० पु०।
† परिहारायाचेति मु० पु०।
‡ इतरेति मु० पु० नास्ति।
§ अथेति मु० पु० नास्ति।
‖ अमृतस्येवेति मु० पु०।
¶ समुत्थापन जीवाशङ्का इति सो० का० पु०।

विजिज्ञासितव्यश्च प्रतिज्ञाय य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति एतन्त्वेव ते भूयोऽनुव्याख्यास्यामीति च तमेव पुनः पुनः परामृश्य, य एष स्वप्ने महीयमानश्चरत्येष आत्मेति। तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति *च जीवमेवावस्थान्तरगतं व्याचष्टे। तस्यैव चापहतपाप्मत्वादि दर्शयत्येतदमृतमभयमेतत् ब्रह्मेति। नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति †नो एवेमानि भूतानीति च सुषुप्तावस्थायां दोषमुपलभ्य एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि इति नो एवा-

---

जाग्रदाद्यवस्थात्रयोपन्यासादवस्थालिङ्गेन जीवनिश्चयात्तस्यैव ते गुणाः सम्भवन्तीति समुदायार्थः। इन्द्रं प्रजापतिर्ब्रूते। य एष इति। प्राधान्यादक्षिग्रहणं सर्वैरिन्द्रियैर्विषयदर्शनरूपजाग्रदवस्थापन्नमित्याह। द्रष्टारमिति। महीयमानः वासनामयैर्विषयैः पूज्यमान इति स्वप्नपर्याये, तद्यत्रेति, सुषुप्तिपर्याये च जीवमेव प्रजापतिर्व्याचष्टे इत्यन्वयः। यत्र काले तदेतत् स्वप्नं यथा स्यात् तथा सुप्तः सम्यक् अस्तो निरस्तः करणग्रामो यस्य स समस्तः, अत एवोपसंहृतकरणत्वात्कृतकालुष्यहीनः सम्प्रसन्नः, स्वप्नं प्रपञ्चमज्ञानमात्रत्वेन विलापयति अतोऽज्ञानसत्त्वात् मुक्तविलक्षणः प्राज्ञ एष स्वचैतन्येन कारणशरीरसाक्षी तस्य साक्ष्यस्य सत्तास्फूर्तिप्रदत्वादित्यर्थः। चतुर्थपर्याये मध्ये तस्यैवापहतपाप्मत्वादिगुणा इत्याशङ्क्य तस्यापि पर्यायेऽस्य जीवत्वमाह। नाहेति। अहेति निपातः खेदार्थे। खिद्यमानो हीन्द्र उवाच खलु सुप्तः पुमानयं सम्प्रति सुषुप्त्यवस्थायामयं देवदत्तोऽहमित्येवमात्मानं न जानाति। नो एव नैवेमानि भूतानि जानाति किन्तु विनाशं एव प्राप्तो भवति। नाहमत्र भोग्यं पश्यामि इति दोषमुपलभ्य पुनः प्रजापतिमुपससार। तं दोषं श्रुत्वा प्रजापतिराह।

---

* चेति मु० पु० नास्ति।

† नो एवेत्यादि भूतानि चत्यन्तं मु० सो० पु० नास्ति।

न्यैतदस्मादिति चोपक्रम्य शरीरसम्बन्धनिन्दापूर्वकमेष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति जीवमेव शरीरात् समुत्थितं उत्तमं पुरुषं दर्शयति। तस्मादस्ति सम्भवो जीवे पारमेश्वराणां धर्माणां, अतो दहरोऽस्मिन्नन्तराकाश इति जीव एवोक्त इति चेत् कश्चिद्ब्रूयात् तं प्रतिब्रूयादाविर्भूतस्वरूपस्त्विति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थो 'नोत्तरस्मादपि वाक्यादिह जीवस्याशङ्का सम्भवतीत्यर्थः। कस्माद्यतस्तत्रापि आविर्भूतस्वरूपो जीवो विवक्ष्यते। आविर्भूतं स्वरूपमस्याविर्भूतस्वरूपः, भूतपूर्वगत्या जीववचनं। एतदुक्तं भवति। य एषोऽक्षिणीत्यक्षिलक्षितं द्रष्टारं निर्दिश्योदशराव-ब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्येतं त्वेव त इति पुनः पुनस्तमेव व्याख्येयत्वेनाकृष्य *स्वप्नसुषुप्तोपन्यासक्रमेण परं ज्योति-

---

एतमिति। एतस्मात् प्रकृतादात्मनोऽन्यत्रान्यं न व्याख्यास्यामीत्युपक्रम्य मघवन्मर्त्यं वा इदं शरीरं इति निन्दापूर्वकं जीवमेव दर्शयतीत्यर्थः। तस्मात् प्रजापतिवाक्यात्। अतः सम्भवासिद्धेः। सिद्धान्तयति। तं प्रतीति।' अवस्थात्रयाच्छोधनेनाविर्भूतं' शोधितत्वमर्थस्य वाक्योत्थवृत्त्यभिव्यक्तमित्यर्थः। तर्हि सूत्रे पुंलिङ्गेन जीवोक्तिः कथं ज्ञानेन जीवत्वस्य निवृत्तत्वादित्यत आह। भूतपूर्वेति। ज्ञानात् पूर्वमविद्या तत्कार्य्यप्रतिबिम्बितत्वरूपं जीवत्वमभूदिति कृत्वा ज्ञानानन्तरं ब्रह्मरूपोऽपि जीवनाम्नोच्यत इत्यर्थः। विश्वतैजसप्राज्ञतुरीयपर्य्यायचतुष्टयात्मकप्रजापतिवाक्यस्य तात्पर्य्यमाह। एतदिति। जन्मनाशवत्त्वात् प्रतिबिम्बवद्बिम्बदेहो नात्मेति ज्ञापनार्थं प्रजापतिरिन्द्रविरोचनौ प्रत्युवाचोदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे ब्रूत-

---

* स्वप्न० उपक्रमेणेति मु० पु०।

रुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति। यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्टे न जैवेन रूपेण यत्तत् परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत् परं ब्रह्म तच्चापहतपाप्मत्वादिधर्मकं तदेव च जीवस्य पारमार्थिकं स्वरूपं तत्त्वमसीत्यादिशास्त्रेभ्यो नेतरदुपाधिकल्पितं। यावदेव हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां *न निवर्त्तयन् कूटस्थनित्यदृक्स्वरूपमात्मानमहं ब्रह्मास्मीति न प्रतिपद्यते तावज्जीवस्य जीवत्वं। यदा तु †देहेन्द्रियमनोबुद्धिसङ्घातादुत्थाप्य श्रुत्या प्रतिबोध्यते। नासि त्वं देहेन्द्रियमनोबुद्धिसङ्घातो नासि त्वं संसारी किं तर्हि यत्तत् सत्यं स आत्मा चैतन्यमात्रस्वरूपस्तत्त्वमसीति। तदा कूटस्थनित्यदृक्स्वरूपमात्मानं प्रतिबुध्यास्माच्छरीराद्य-

---

मित्यादि ब्रह्मणो नेत्याह। उदशरावेति। उदकपूर्णे शरावे प्रतिबिम्बात्मानं देहं दृष्ट्वा स्वसाक्षात्त्वं यत्तन्मह्यं वाच्यमित्युक्तश्रुत्यर्थः। व्युत्थाप्य विचार्याभिनिष्पद्यते इत्यत्रैतदुक्तं भवतीति सम्बन्धः। किमुक्तमित्यत आह। यदस्येति। जीवत्वरूपेण जीवं न व्याचष्टे लोकसिद्धत्वात् किन्तु तमनूद्य परस्परव्यभिचारिणीभ्योऽवस्थाभ्यो विविच्य ब्रह्मस्वरूपं बोधयति अतो यद्ब्रह्म तदेवापहतपाप्मत्वादिधर्मकं न जीव इत्युक्तं भवति, शोधितस्य ब्रह्माभेदेन तद्धर्मोक्तेरित्यर्थः। एवमवस्थोपन्यासस्य विवेकार्थत्वान्न जीवलिङ्गत्वं एतदम्बतमेव तद्ब्रह्मेति लिङ्गोपेतश्रुतिविरोधादिति मन्तव्यं। ननु जीवत्वब्रह्मत्वविरुद्धधर्मवतोः कथमभेदस्तत्राह। तदेवेति। अन्वयव्यतिरेकाभ्यां जीवत्वस्याविद्याकल्पितत्वाद्विरोधः इति मत्वा दृष्टान्तेनान्वयमाह। यावदिति। व्यतिरेकमाह। यदेति। अविद्यायां सत्यां जीवत्वं वाक्योत्थप्रबोधात्तन्निवृत्तौ तन्निवृत्तिरित्यावियकं तदित्यर्थः। संसारित्वस्य कल्पितत्वे सिद्धिं

---

* नेति सो० का० वर्ध० पु० नास्ति।

† देहे० बुद्धिदेहसङ्घातादिति मु० पु०।

भिमानात् समुत्तिष्ठन् स एव कूटस्थनित्यदृक्स्वरूप आत्मा भवति, स यो ह वै तत् परं ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिभ्यः। तदेव चास्य पारमार्थिकं स्वरूपं, येन शरीरात् समुत्थाय स्वेन रूपेणाभिनिष्पद्यते। कथं पुनः स्वस्य रूपं *स्वेनैव च निष्पद्यत इति सम्भवति कूटस्थनित्यस्य। सुवर्णादीनान्तु द्रव्यान्तरसम्पर्कादभिभूतस्वरूपाणाम् †भिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात् तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात्, न तु ‡तथा चैतन्यज्योतिषो नित्यस्य केनचिदभिभवः सम्भवत्यसंसर्गित्वात् व्योम्न इव दृष्टविरोधाच्च। दृष्टिश्रुतिमतिविज्ञातयो हि जीवस्य स्वरूपं, तच्च शरीरादसमुत्थितस्यापि जीवस्य सदा

निगमयति। तदेव चास्येति। समुत्थाय स्वेन रूपेणाभिनिष्पद्यत इति श्रुतिं व्याख्यातुं आक्षिपति। कथं पुनरित्यादिना। कूटस्थनित्यस्य स्वरूपमित्यन्वय। मलसङ्गिनो हि क्रियया मलनाशादभिव्यक्तिर्न तु कूटस्थस्यासङ्गिन इत्याह। सुवर्णेति। द्रव्यान्तरं पार्थिवो मल। अभिभूतत्वस्य व्याख्यानमभिव्यक्तेति। असाधारणभास्वरत्वादिः अभिभावकः सौरालोक। जीवस्वरूपस्याभिभवबाधकमाह। दृष्टेति। विज्ञानघन एवेति श्रुत्या चिन्मात्रस्तावदात्मा तच्चैतन्यं चक्षुरादिजन्यवृत्तिव्यक्तं दृष्ट्यादिपदवाच्य सत् व्यवहाराङ्गं जीवरूप भवतीति तस्याभिभूतत्वे दृष्टो व्यवहारो विरुध्येत हेत्वभावाद्व्यवहारो न स्यादित्यर्थं। अङ्गस्यापि स्वरूपं वृत्तिषु व्यक्तमित्यङ्गीकार्य्यं व्यवहारदर्शनादित्याह। तच्चेति। अन्यथेत्युक्तं स्फुटयति। तच्चेदिति। स्वरूपश्चेत् ज्ञानेन

* तेनैव चेति मु० का० पु०।

† अनभिव्यक्तेति सो० पु०।

‡ तथात्मज्योतिष इति मु० का०।

निष्पन्नमेव दृश्यते। सर्वो हि जीवः पश्यन् शृण्वन्मन्वानो विजानन् व्यवहरत्यन्यथा व्यवहारानुपपत्तेः। तच्चेच्छरीरात् समुत्थितस्य निष्पद्येत प्राक् समुत्थानात् दृष्टो व्यवहारो विरुध्येत। अतः किमात्मकमिदं शरीरात् समुत्थानं किमात्मिका च स्वरूपेणाभिनिष्पत्तिरिति, अत्रोच्यते, प्राक् विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिव जीवस्य दृष्ट्यादि ज्योतिःस्वरूपं भवति। यथा शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यञ्च स्वरूपं प्राक् विवेकग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति प्रमाणजनितविवेकग्रहणात्तु *उत्तरकालवर्त्ती पराचीनस्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव †स्यात् तथा देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकज्ञानं शरीरात् समुत्थानं विवेकवि-

एव व्यज्येत ज्ञानात्पूर्वं व्यवहारोच्छित्तिरित्यर्थः। अतः। सदैव व्यक्तस्वरूपत्वादित्यर्थः। सदावृत्तिषु व्यक्तस्य वस्तुतोऽसङ्गस्यात्मनः आविद्यकदेहाद्यविवेकरूपस्य मलसङ्गस्य सत्त्वात्तद्विवेकापेक्षया समुत्थानादिश्रुतिरित्युत्तरमाह। अत्रेति। वेदना हर्षशोकादिः। अविविक्तमिवेति तादात्म्यस्य सङ्गस्य कल्पितत्वमुक्तं। अत्र कल्पितसङ्गे दृष्टान्तो यथेति। श्रुतिकृतमिति। त्वंपदार्थश्रुत्या योऽयं विज्ञानमयः प्राणेष्वित्याद्यया सिद्धमित्यर्थः। प्राणादिभिन्नशुद्धत्वंपदार्थज्ञानस्य वाक्यार्थसाक्षात्कारः फलमित्याह। केवलेति। सशरीरत्वस्य सत्यत्वात् समुत्थानमुत्क्रान्तिरिति व्याख्येयं न विवेक इत्याशङ्क्याह। तथा विवेकेति। उक्तश्रुत्यनुसारेणेत्यर्थः। शरीरेष्वशरीरमवस्थितमिति श्रुतेः अविवेकमात्रकल्पितं सशरीरत्वं अतो विवेक एव समुत्थानमित्यर्थः। ननु स्वकर्म्मार्जिते शरीरे भोगस्यापरिहार्य्यत्वात् कथं जीवत एव स्वरूपा-

* उत्तरकालवर्त्तीति का० वर्ध० सो० पु० नास्ति।

† सन् इति का० वर्ध० सो० पु० पाठः। सत् इति च क्वचित्पाठः।

ज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः। तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्वं सशरीरत्वञ्च मन्त्रवर्णात्, अशरीरं शरीरेष्विति, शरीरस्थोऽपि 'कौन्तेय न करोति न लिप्यत इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात्। तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन् विवेकज्ञानादाविर्भूतस्वरूप इत्युच्यते, न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य सम्भवतः स्वरूपत्वादेव। एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदो न वस्तुकृतः व्योमवदसङ्गत्वाविशेषात्। कुतश्चैतदेवं प्रतिपत्तव्यं। यतो य एषोऽक्षिणि पुरुषो दृश्यत इत्युपदिश्यैतदमृतमभयमेतत् ब्रह्मेत्युपदिशति। योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते सोऽमृताभयलक्षणाद्ब्रह्मणोऽन्यश्चेत् स्यात् ततोऽमृताभयब्रह्मसामानाधिकरण्यं न स्यात्। नापि प्रतिच्छायात्माऽयमक्षिलक्षितो निर्दिश्यते, प्रजापतेर्मृषावादित्वप्रसङ्गात्। तथा द्वितीयेऽपि पर्याये य एष स्वप्ने महीयमानश्चरतीति न प्रथमपर्यायनिर्दिष्टादक्षिपुरुषात्

---

विर्भाव इत्यत आह। शरीरस्थोऽपीति। अशरीरवत् शरीरस्यापि बन्धाभावस्मृतेर्जीवतो मुक्तिर्युक्तेत्यर्थः। अविरुद्धे श्रुत्यर्थे सूत्रग्रन्थो युक्त इत्याह। तस्मादिति। अन्यादृशौ सत्याविर्त्यर्थः। ज्ञानाज्ञानकृताविर्भावतिरोभावाविति स्थिते भेदोऽप्यंशांशित्वकृतो निरस्त इत्याह। एवमिति। अंशादिशून्यत्वमसङ्गत्वं। आत्मा द्रव्यत्वव्याप्यजातिशून्यविभुत्वात् व्योमवदित्यात्मैक्यसिद्धेर्भेदो मिथ्येत्यर्थः। प्रजापतिवाक्याच्च भेदो मिथ्येत्याकाङ्क्षापूर्वकमाह। कुतश्चेत्यादिना। एतद्भेदस्य सत्यत्वमेव नास्तीति कुत इत्यन्वयः। छायाया ब्रह्मदृष्टिपरमिदं वाक्यं न भेदपरमित्यत आह। नापीति। यस्य ज्ञानात् कृतकृत्यता सर्वकाम-

द्रष्टुरन्यो *निर्दिष्टः, एतन्त्वेव ते भूयोऽनुव्याख्यास्यामीत्युपक्र-
मात्। किञ्चाहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं पश्या-
मीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे, द्रष्टारन्तु तमेव प्रत्य-
भिजानाति य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्या-
मीति। तथा तृतीयेऽपि पर्याये नाह खल्वयमेवं सम्प्रत्यात्मानं
जानात्ययमहमस्मीति, नो एवेमानि भूतानीति सुषुप्ताव-
स्थायां विशेषविज्ञानाभावमेव दर्शयति न विज्ञातारं प्रति-
षेधति। यत्तु तत्र विनाशमेवापीतो भवतीति तदपि विशेष-
विज्ञानविनाशाभिप्रायमेव न विज्ञातृविनाशाभिप्रायं। नहि,
विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादिति श्रुत्य-
न्तरात्। तथा चतुर्थेऽपि पर्याये एतन्त्वेव ते भूयोऽनुव्याख्या-
स्यामि नो एवान्यत्रैतस्मादित्युपक्रम्य मघवन्मर्त्यं वा इदं श-
रीरमित्यादिना प्रपञ्चेन शरीराद्युपाधिसम्बन्धप्रत्याख्यानेन
सम्प्रसादशब्दोदितं जीवं स्वेन रूपेणाभिनिष्पद्यत इति ब्रह्म-

---

वाग्नितमात्मानमन्विच्छाव इति प्रवृत्तयोरिन्द्रविरोचनयोर्यद्यनात्म-
च्छाया प्रजापतिर्ब्रूयात् तदा मृषावादी स्यादित्यर्थः। प्रथमवत् द्वि-
तीयादिपर्याये व्यावृत्तास्ववस्थासु अनुस्यूतात्मा ब्रह्मत्वेनोक्त इत्याह।
तथेति। अवस्थाभेदेऽप्यनुस्यूत। युक्तिमाह। किञ्चेति। सुषुप्तौ ज्ञातु-
र्व्यावृत्तिमाशङ्क्याह। तथा तृतीय इति। सुषुप्तौ निर्विकल्पज्ञानरूप
आत्मास्तीत्यत्र बृहदारण्यकश्रुतिमाह। न हीति। बुद्धेः साक्षिणो
नाशो नास्ति नाशकाभावादित्यर्थः। एवमवस्थाभिरसङ्गत्वेनोक्त आ-
त्मैव तुरीयेऽपि ब्रह्मत्वेनोक्त इत्याह। तथेति। श्रुतेरेकदेशिव्याख्यां
दूषयति। केचित्त्विति। जीवपरयोर्भेदादिति भावः। श्रुतिबाधान्नैव-

---

* निर्दिष्ट इतीति सो० पु० पाठः।

स्वरूपापन्नं दर्शयन् न परस्मात् ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयति। केचित्तु परमात्मविवक्षायां एतन्त्वेव ते इति जीवाकर्षणमन्याय्यं मन्यमाना एतमेव वाक्योपक्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं ते भूयोऽनुव्याख्यास्यामीति कल्पयन्ति, तेषामेतमिति सन्निहितावलम्बिनी सर्वनामश्रुतिर्विप्रकृष्येत, भूयः श्रुतिश्चोपरुध्येत, पर्यायान्तराभिहितस्य पर्यायान्तरेणानभिधीयमानत्वात्, एतन्त्वेव ते इति च प्रतिज्ञाय प्राक् चतुर्थात् पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत, तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते। सर्पादिविलयनेनेव रज्ज्वादीन्। अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते। अस्मदीयाश्च केचित् तेषां सर्वेषामात्मैकत्वसम्यग्दर्शनप्रतिप-

---

मित्याह। तेषामिति। सन्निहितो जीव एव सर्वनामार्थ इत्यर्थः। उक्तस्य पुनरुक्तौ भूय इति युज्यते। भवतूपक्रान्तपरमात्मनश्चतुर्थ एवोक्तेस्तद्बाध इत्याह। भूय इति। लोकसिद्धजीवानुवादेन ब्रह्मत्वं बोध्यत इति स्वमतमुपसंहरति। तस्मादिति। व्याख्यानान्तरासम्भवादित्यर्थः। विलयनं शोधनं विद्यया महावाक्येनेति यावत्। ये तु संसारं सत्यमिच्छन्ति तेषामिदं शारीरकमेवोत्तरमित्याह। अपरे त्वित्यादिना। शारीरकस्यार्थं सङ्क्षेपेणोपदिशति। एक एवेति। अविद्यामाययोर्भेदं निरसितुं सामानाधिकरण्यं आवरणविक्षेपशक्तिरूपशब्दप्रवृत्तिनिमित्तभेदात् सहप्रयोगः ब्रह्मैवाविद्यया संसरति न ततोऽन्यो जीव इति शारीरकार्थं इत्यर्थः। तर्हि सूत्रकारः किमिति

अभूतानां प्रतिषेधायेदं शारीरकमारब्धमेक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया मायाविवदनेकधा विभाव्यते नान्यो विज्ञानधातुरस्तीति। यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः नासम्भवादित्यादिना (१।३।१८) तत्रायमभिप्रायः नित्यशुद्धबुद्धमुक्त*सत्यस्वभावे कूटस्थनित्ये †एकस्मिन्नसङ्गेऽरूपे परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादिपरिकल्पितं तदात्मैकत्वप्रतिपादनपरवाक्यैर्न्यायोपेतैर्द्वैतवादप्रतिषेधैश्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति, जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति किन्त्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदं। एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति ‡मन्यते, प्रतिपाद्यन्तु शास्त्रार्थमात्मैकत्वमेव दर्शयति शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यादिना, वर्णितस्त्वस्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः॥

---

भेदं ब्रूते तत्राह। यत्त्विति। परमात्मनोऽसंसारित्वसिद्ध्यर्थं जीवाद्भेदं द्रढयति। तस्यासंसारित्वनिश्चयाभावे तदभेदोक्तावपि जीवस्य संसारित्वानपायादित्यर्थः। अधिष्ठानस्य कल्पिताद्भेदेऽपि कल्पितस्याधिष्ठानान्न पृथक्त्वमित्याह। जीवस्य त्विति। कल्पितभेदानुमानस्य फलमाह। एवं हीति। सूत्रेष्वभेदो नास्ति इति भ्रान्तिं निरस्यति। प्रतिपाद्यमिति। आत्मेति। तूपगच्छन्तीत्यादिसूत्राणि आदिपदार्थः। नन्वद्वैतस्य शास्त्रार्थत्वे द्वैतापेक्षविधिविरोधस्तत्राह। वर्णितश्चेति। अद्वैतमजानतः कल्पितद्वैताश्रया विधयो न विदुष इति सर्वमुपपन्नमित्यर्थः॥

---

* सत्येति का॰ वर्ध॰ मो॰ पु॰ नास्ति।

† एकस्मिन्निरंशे इति का॰ असङ्गिनि निर्विशेषे इति वर्ध॰।

‡ मन्यते इति स्थाने प्रतिपादयिष्यतीति का॰।

## अन्यार्थश्च परामर्शः ॥ २० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः अथ य एष सम्प्रसाद इत्यादिः स दहरे परमेश्वरे व्याख्यायमाने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीत्यत आह, अन्यार्थ इति। अयं जीवपरामर्शः न जीवस्वरूपपर्यवसायी किन्तु हि परमेश्वरस्वरूपपर्यवसायी, कथं सम्प्रसादशब्दोदितो जीवो जागरिते व्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय *श्रान्तःशरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात् समुत्थाय सुषुप्तावस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसम्पद्य विशेषविज्ञानवत्त्वं परित्यज्य स्वेन रूपेणाभिनिष्पद्यते यदस्योपसम्पत्तव्यं परं ज्योतिः, येन स्वेन रूपेणायमभिनिष्पद्यते स एष आत्मापहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१॥

यदप्युक्तं दहरोऽस्मिन्नन्तराकाश इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते, जीवस्य †आराग्रोपमितस्याल्पत्व-

---

एव प्रजापतिवाक्ये जीवानुवादेन ब्रह्मण एवापहतपाप्मत्वाद्युक्तेः जीवे तदसम्भवान्न जीवो दहर इत्युक्तं तर्हि जीवपरामर्शस्य का गतिरित्यत आह। अन्यार्थश्चेति। सूत्रं व्याचष्टे। अथेत्यादिना। प्रकृते दहरे विशेषो गुणस्तदुपदेशोऽपि नेत्यर्थः। तत्र दहरवाक्यशेषरूपं सम्प्रसादवाक्यमाशङ्कापूर्वकं दहरब्रह्मपरत्वेन व्याचष्टे। कथमित्यादिना॥

---

* श्रान्त इति का० वर्ध० सो० पु० पाठः।

† आराग्रमात्रोपमितस्येति का० वर्ध० सो० पु० पाठः।

मवकल्पत इति तस्य परिहारो वक्तव्यः। उक्तो ह्यस्य परिहारः *परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इत्यर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चेत्यत्र स †एव परिहारोऽनुसन्धातव्य इति सूचयति। श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति॥

## अनुकृतेस्तस्य च॥ २२॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति समामनन्ति। तत्र यं भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति स किं तेजोधातुः कश्चिदुत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत् प्राप्तं, कुतः तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात्।

---

उपास्यत्वादल्पत्वमुक्तमिति व्याख्याय श्रुत्या निरस्तमित्यर्थान्तरमाह। श्रुत्यैव चेदमिति। एवं दहरवाक्यं प्रजापतिवाक्यञ्च सगुणे निर्गुणे च समन्वितमिति सिद्धं॥

अनुकृतेस्तस्य च। मुण्डकवाक्यमुदाहरति। न तत्रेति। तस्मिन् ब्रह्मणि विषये न भाति तं न भासयतो यावत्। यदा चण्डभास्करादिर्न भासयति तदा अल्पदीप्तेरग्नेः का कथेत्याह। कुत इति। किञ्च सर्वस्य सूर्यादेस्तद्भास्यत्वान्न तद्भासकत्वमित्याह। तमेवेति। अनुगमनवदनुभानं स्वगतमिति शङ्कां निरस्यति। तस्येति। तत्रेति सत्यत्वाः सति विषये च साधारण्यात् संशयमाह। तत्रेति। पूर्वत्रात्मश्रुत्यादि-

---

* परमेश्वरोऽप्यापेक्षिकमिति का० वर्ध० मे० पु० पाठः।

† एवेदेति का० वर्ध० मे० पु० पाठः।

तेजःस्वभावकं हि चन्द्रतारकादि तेजःस्वभावके एव सूर्य्ये भासमानेऽहनि न भासत इति प्रसिद्धं, तथा सह सूर्य्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते सोऽपि तेजःस्वभावक एव कश्चिदित्यवगम्यते। अनुभानमपि तेजःस्वभावक एवोपपद्यते *समानस्वभावकेष्वनुकारदर्शनात्, गच्छन्तमनुगच्छतीति† वत्, तस्मात् तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः। प्राज्ञ एवायमात्मा भवितुमर्हति। कस्मात् अनुकृतेः, अनुकरणमनुकृतिः, यदेतत्तमेव भान्तमनुभाति सर्वमित्यनुभानं तत् प्राज्ञपरिग्रहेऽवकल्पते। भारूपः सत्यसङ्कल्प इति हि प्राज्ञमात्मानमामनन्ति, न तु तेजोधातुं कञ्चित् सूर्य्यादयोऽनुभान्तीति प्रसिद्धं। समत्वाच्च तेजोधातूनां सूर्य्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षास्ति यं भान्तमनुभायुः। न हि प्रदीपः

बलादाकाशशब्दस्य रूढित्यागादीश्वरे वृत्तिराश्रिता तथेहापि सति सप्तमीबलात् वर्त्तमानार्थत्यागेन यस्मिन् सति सूर्य्यादयो न भान्ति न तेजोविशेष उपास्य इति भविष्यदर्थे वृत्तिराश्रयणीया अधुना भासमाने सूर्य्यादौ न भातीति विरोधात् इति दृष्टान्तेन पूर्वपक्षयति। तेजोधातुरिति। तेजोधाम निर्गुणस्वयंज्योतिरात्मज्ञानमित्युभयत्र फल। तेजोधातुत्वे लिङ्गमाह। तेजोधातूनामिति। यत्तेजसोऽभिभावकं तत्तेज इति व्याप्तिमाह। तेज स्वभावकमिति। यस्मिन् सति यन्न भाति तदनु तद्भातीति विरुद्धमित्यत आह। अनुभानमिति। ततो निकृष्टभानं विवक्षितमिति भावः। मुख्यसम्भवे विवक्षानुपपत्ते मुख्यानुभानलिङ्गात् सर्वभासक परमात्मा स्वभावकोऽत्र ग्राह्य इति सिद्धान्तमाह। प्राज्ञ इति। प्राज्ञत्वं स्वप्रकाशत्वं भासकत्वार्थमुक्त, तत्र श्रुतिमाह। भारूप इति। मानाभावाच्च

* समानस्वभावकेष्वेवेति का० वर्ध० सो० पु० पाठ।

† वत् इति उक्त पु० नास्ति।

प्रदीपान्तरमनुभाति। यदप्युक्तं समानस्वभावकेष्वनुकारो दृश्यत इति नायमेकान्तो नियमोऽस्ति भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते, *यथा सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति, भौमं वा रजो वायुं वहन्तमनुवहतीति। अनुकृतेरित्यनुभानमसूसुचत्। तस्य चेति चतुर्थपादमस्य श्लोकस्य सूचयति। तस्य भासा सर्वमिदं विभातीति च तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति। तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति †हि प्राज्ञमात्मानमामनन्ति। तेजोऽन्तरेण तु सूर्यादितेजो विभातीत्यप्रसिद्धं विरुद्धञ्च, तेजोऽन्तरेण तेजोऽन्तरस्य प्रतिघातात्। अथ वा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते, किं तर्हि सर्वमिदमित्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याभिव्यक्तिः सा ब्रह्मज्योतिःसत्तानिमित्ता। यथा सूर्यज्योतिःसत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिस्तद्वत्। न

---

तेजोधातुर्न ग्राह्य इत्याह। न त्विति। किञ्च सूर्यादयस्तेजोऽन्तरभानमनु न भान्ति तेजस्त्वात् प्रदीपवदित्याह। समत्वाच्चेति। योऽयमनुकरोति स तज्जातीय इति नियमो नास्तीत्याह। नायमेकान्त इति। पौनरुक्त्यमाशङ्क्योक्तानुवादपूर्वकं सूत्रोक्तं हेत्वन्तरं व्याचष्टे। अनुकृतेरिति। तमेव भान्तमित्येवकारोक्तं तद्भानं विना सर्वस्य पृथग्भानाभावरूपं अनुभानमनुकृतेरित्यनेनोक्तं। तस्य चेति। सर्वभासकत्वमुक्तं इत्यपौनरुक्त्यमित्यर्थः। आत्मनः सूर्यादिभासकत्वं श्रुत्यन्तरप्रसिद्धमविरुद्धञ्चेत्याह। तद्देवा इति। सर्वशब्दः प्रकृतसूर्यादिवाचक-

---

* यथेति का० वर्ध० पु० नास्ति।

† हि इति का० वर्ध० पु० नास्ति।

तत्र सूर्यो भातीति च तत्र शब्दमाहरन् प्रकृतग्रहणं दर्शयति प्रकृतञ्च ब्रह्म यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतमित्यादिना। अनन्तरञ्च, हिरण्मये परे कोषे विरजं ब्रह्म निष्कलं। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुरिति। कथं तज्ज्योतिषां ज्योतिरित्यत इदमुक्तं न तत्र सूर्यो भातीति। यदप्युक्तं सूर्य्यादीनां तेजसां भानप्रतिषेधस्तेजोधाताविवान्यस्मिन्नवकल्पते सूर्य्य इवेतरेषां *ज्योतिषां इति, †तत्रानुभान स एव तेजोधातुरन्यो न सम्भवतीत्युपपादितं। ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्प्यते, यतो यदुपलभ्यते तत् सर्व्वं ब्रह्मणैव ज्योतिषोपलभ्यते, ब्रह्म तु नान्येन ज्योतिषोपलभ्यते, स्वयंज्योतिःस्वरूपत्वात्, येन सूर्य्यादयस्तस्मिन् भायुः। ब्रह्म ह्यन्यद्

---

त्वेन व्याख्यातः। सम्प्रति तुष्यासङ्गवद्वृत्तिता मत्वाऽर्थान्तरमाह। अथ चेति। तत्रेति सर्वनामश्रुत्या प्रकृत ब्रह्म ग्राह्यमित्याह। न तत्र सूर्य्य इति। किञ्च स्पष्टब्रह्मपरपूर्वमन्त्राकाङ्क्षापूरकत्वादयं मन्त्रो ब्रह्मपर इत्याह। अनन्तरञ्चेति। हिरण्मये ज्योतिर्मये अन्नमयाद्यपेक्षया परे कोषे आनन्दमयाख्ये पुच्छशब्दितं ब्रह्म विरज आगन्तुकमलशून्यं निष्कलं निरवयवं शुभ्रं नैसर्गिकमलशून्य सूर्य्यादिसाक्षिभूतं ब्रह्मवित्प्रसिद्धमित्यर्थः। सति सप्तमीपक्षमनुवदति। यदपीति। सूर्य्याद्यभिभावकतेजोधातौ प्रामाणिके तस्येह ग्रहणशङ्का स्यात् न तत्र प्रमाणमस्तीत्याह। तत्रेति। सिद्धान्ते तत्रेति वाक्यार्थः कथमित्याशङ्क्याह। ब्रह्मण्यपीति। सति सप्तमीपक्षे न भातीति श्रुतं वर्त्तमानत्वं त्यक्त्वा तस्मिन सति न भास्यन्तीत्यश्रुतभविष्यत्त्वं कल्पनीय प्रत्यक्षविरोधनिरासाय, विषयसप्तमीपक्षे तु न भासयतीत्यश्रुतणिजध्याहारमात्रमवकल्प्य न श्रुतत्याग इति लाघवं, अतो ब्रह्मणि विषये सूर्य्यादे-

---

* ज्योतिषामिति सो०का० वर्ध० पु० नास्ति।

† तच्च तु स एवेति का० वर्ध० पु० पाठ।

व्यनक्ति न तु ब्रह्मान्येन व्यज्यते, आत्मनैवायं ज्योतिषास्ते अगृह्यो नहि गृह्यते इत्यादिश्रुतिभ्यः॥

## अपि च स्मर्य्यते ॥ २३ ॥

अपि चेदं रूपं प्राज्ञस्यैवात्मनः स्मर्य्यते भगवद्गीतासु।

"न तद्भासयते सूर्य्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम"॥ इति।
"यदादित्यगतं तेजो जगद्भासयतेऽखिलं।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं"॥ इति च॥

## शब्दादेव प्रमितः॥ २४ ॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति इति श्रूयते, तथा अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो भूतभ-

---

भासकत्वनिषेधेन ब्रह्मभास्यत्वमुच्यत इत्यर्थः। येनान्यभास्यत्वेन हेतुना सूर्यादयस्तस्मिन् ब्रह्मणि विषये भासकाः स्युः, तथा तु ब्रह्मान्येन नोपलभ्यते स्वप्रकाशत्वादिति योजना। उक्तमेव श्रुत्यन्तरेण द्रढयति। आत्मेति। स्वप्रकाशत्वेऽन्याभास्यत्वे च श्रुतिद्वयं। ग्रहणायोग्यत्वादगृह्य इत्यर्थः॥

श्रुत्यध्याहारपक्षे स्मृतिबलमप्यस्तीत्याह। चापि चेति। सूत्रं व्याचष्टे। अपि चेति। अभास्यत्वे सर्वभासकत्वे च श्लोकद्वयं द्रष्टव्यं तस्मादनुभानमन्त्रो ब्रह्मणि समन्वित इति सिद्धं॥

शब्दादेव प्रमितः। काठकवाक्यं पठति। अङ्गुष्ठेति। पुरुषः पूर्णोऽप्यात्मनि देहमध्ये अङ्गुष्ठमात्रे हृदये तिष्ठतीत्यङ्गुष्ठमात्र इत्युच्यते तस्यैव परमात्मत्ववादिवाक्यान्तरमाह। तथेति। अधूमकमिति पठनीयं। योऽङ्गुष्ठमात्रो जीवः स वस्तुतो निर्धूमज्योतिर्वन्निर्म्मलप्रकाशरूप इति तमर्थं संशोध्य तस्य ब्रह्मत्वमाह। ईशान इति। तस्याद्वितीयत्वमाह। स एवेति। कालत्रयेऽपि स एवास्ति नान्यत नकि-

व्यस्य स एवाद्य स उ श्व एतद्वैतत् इति च। तत्र योऽयमङ्गुष्ठमात्रः पुरुषः श्रूयते, स किं विज्ञानात्मा किं वा परमात्मेति संशयः। तत्र परिमाणोपदेशाद्विज्ञानात्मेति तावत् प्राप्तं। न ह्यनन्तायामविस्तारस्य परमात्मनोऽङ्गुष्ठमात्रपरिमाणमुपदिश्येत। विज्ञानात्मनस्तूपाधिमत्त्वात् सम्भवति कयाचित् कल्पनयाङ्गुष्ठमात्रत्वं, स्मृतेश्च,

अथ सत्यवतः कायात् पाशबद्धं वशङ्गतं।

अङ्गुष्ठमात्र पुरुषं निश्चकर्ष यमो बलात्॥ इति।

नहि परमेश्वरो बलाद्यमेन निष्क्रष्टुं शक्यः, तेन *तत्र संसार्यङ्गुष्ठमात्रो निश्चितः स एवेहापीत्येवं प्राप्ते ब्रूमः। परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति। कस्मात् शब्दात् ईशानो भूतभव्यस्येति। न ह्यन्यः परमेश्वराद् भूतभव्यस्य निरङ्कुशमीशिता। एतद्वै तदिति च। प्रकृत पृष्टमिहा-

---

केतसा दृष्टं ब्रह्म तदेतदेवेत्यर्थः। परिमाणेशानशब्दाभ्यां संशयमाह। तत्रेति। यथानुमानादिलिङ्गात् शिजध्याहारेण सूर्य्याद्यगोचरो ब्रह्मेत्युक्त तथा प्रथममश्रुतपरिमाणलिङ्गात् जीवप्रतीताधीशानोऽस्मीति ध्यायेदिति विध्यध्याहारेण ध्यानपरं वाक्यमिति पूर्वपक्षयति। तत्र परिमाणेति। पूर्वपक्षे ब्रह्मदृष्ट्या जीवोपास्तिः, सिद्धान्ते तु प्रत्यग्ब्रह्मैक्यज्ञानं फलमिति मन्तव्य। आयामो दैर्घ्यं विस्तारो महत्त्वमिति भेदः। कयाचिदिति। अङ्गुष्ठमात्रहृदयस्य विज्ञानशब्दितबुद्ध्यभेदाध्यासकल्पनयेत्यर्थः। स्मृतिसंवादादप्यङ्गुष्ठमात्रो जीव इत्याह। स्मृतेश्चेति। अथ मरणानन्तरं यमपाशैर्बद्धं कर्म्मवशं प्राप्तमित्यर्थः। तत्रापीश्वरः किं न स्यादित्यत आह। न हीति। प्रभवति सयमनै

---

* तत्रेति का० वर्ध० पु० नास्ति।

नुसन्धाति, एतद्वैतत् यत् पृष्टं ब्रह्मेत्यर्थः। पृष्टञ्चेह ब्रह्म। "अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तदद" इति। शब्दादेवेति अभिधानश्रुतेरेवेशान इति परमेश्वरोऽवगम्यत इत्यर्थः। कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इत्यत्र ब्रूमः॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते, आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वं। न ह्यञ्जसातिमात्रस्यैव परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यते। न चान्यः परमात्मन इह ग्रहणमर्हति ईशानशब्दादिभ्य इत्युक्तं। ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यङ्गुष्ठमात्रत्वं

---

ममापि विष्णुरिति यमस्येश्वरनियम्यत्वस्मरणादिति भावः। भूतभव्यस्येत्युपपदाद्बाधकाभावाच्च ईशान इतीशत्वशब्दाभिरङ्गुष्ठमीशिता भातीति श्रुत्या लिङ्गं बाध्यमिति सिद्धान्तयति। परमात्मैवेति। प्रकरणाच्च ब्रह्मपरमिदं वाक्यमित्याह। एतदिति। शब्दो वाक्यं लिङ्गात् दुर्बलमित्याशङ्क्याह। शब्दादिति॥

करः सकनिष्ठः अरत्निः। मुख्याङ्गुष्ठमात्रो जीवो गृह्यतां किं गौणग्रहणेनेत्यत आह। न चान्य इति। सति सम्भवे मुख्यग्रहोऽन्याय्यः यत्र तु श्रुतिविरोधादसम्भव इति गौणग्रह इत्यर्थः। मनुष्यानेवेति त्रैवर्णिकानेवेत्यर्थः। शक्तत्वादित्यनेन पश्वादीनां देवानामृषीणाञ्चाधिकारो बाधितः। तत्र पश्वादीनां शास्त्रार्थज्ञानादिसामर्थ्याभावात् कर्म्मण्यशक्तिः, इन्द्रादेः स्वदेवताके कर्म्मणि स्वोद्देशेन द्रव्यत्यागायोगादशक्तिः, ऋषीणामार्षेयवरणे ऋष्यन्तराभावादशक्तिः।

नोपपद्यत इत्यत उत्तरमुच्यते, मनुष्याधिकारत्वादिति। शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति शक्तत्वादर्थित्वाद-पर्युदस्तत्वादुपनयनादिशास्त्राच्चेति। वर्णितमेतदधिकारलक्षणे, मनुष्याणाञ्च नियतपरिमाणः कायः, औचित्येन नियतपरिमाणमेव चैषामङ्गुष्ठमात्रं हृदयं। अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः। यदप्युक्तं परिमाणोपदेशात् स्मृतेश्च संसार्य्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति तत् प्रत्युच्यते स आत्मा, तत्त्वमसी-

---

र्थित्वादित्यनेन निष्कामाना मुमुक्षूणां स्थावराणाञ्चाधिकारो वारितस्तत्र मुमुक्षूणां शुद्ध्यर्थित्वे नित्यादिष्वधिकारो न काम्येषु शुद्धचित्ताना मोक्षार्थित्वे श्रवणादिषु ब्रह्मकेष्वधिकारो न कर्म्मस्विति मन्तव्यं। शूद्रस्याधिकारं निरस्यति। अपर्य्युदस्तत्वादिति। शूद्रो यज्ञेनावक्लृप्त इति पर्य्युदासात्, उपनयीत तमध्यापयीतेति शास्त्राच्च न शूद्रस्य वैदिके कर्म्मण्यधिकारः। तस्यैकजातित्वस्मृतेरुपनयनप्रयुक्तद्विजत्वाभावेन वेदाध्ययनाभावात्। अत्रापेक्षितो न्यायः षष्ठाध्याये वर्णित इत्याह। वर्णितमिति। स्वर्गकामो यजेतेत्यादिशास्त्रस्याविशेषेण सर्व्वान् फलार्थिनः प्रति प्रवृत्तत्वात् प्राणिमात्रस्य सुखार्थित्वाच्च फलार्थे कर्म्मणि पश्वादीनामधिकार इत्याशङ्क्योक्तरीत्या तेषां शक्तत्वाभावात् स्वर्गकामपदं मनुष्यपरतया सङ्कोच्य मनुष्याधिकारत्वस्यापि चातुर्वर्ण्याधिकारमाशङ्क्य वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति त्रयाणामेवाग्निसम्बन्धश्रवणात् तेषामेवाधिकार इति वर्णितमित्यर्थः। प्रस्तुते किमायातं तत्राह। मनुष्याणाञ्चेति। प्रायेण सप्तवितस्तिपरिमितो मनुष्यदेह इत्यर्थः। एवमङ्गुष्ठशब्दः हृत्परिमाणवाचकः तत्रस्थं ब्रह्म लक्षयतीत्युक्तं सम्प्रति तच्छब्देनाङ्गुष्ठमात्रजीवमनूद्यायमीशान इति ब्रह्माभेदो बोध्य इति पक्षं उक्तमनुवदति। यदपीति। प्रतिपाद्याभेदविरोधात् अनुवाद्या-

त्यादिवत् संसारिण एव सतोऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति। द्विरूपा हि वेदान्तवाक्यानां प्रवृत्तिः, क्वचित् परमात्मस्वरूपनिरूपणपरा क्वचिद्विज्ञानात्मनः परमात्मैकत्वोपदेशपरा। तदत्र विज्ञानात्मनः परमात्मनैकत्वमुपदिश्यते नाङ्गुष्ठमात्रत्वं कस्यचित्। एतमेवार्थं परेण स्पष्टीकरिष्यति। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात् प्रवृहेन् मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतमिति ॥

---

ङ्गुष्ठमात्रत्वं बाध्यं तात्पर्य्यार्थस्य बलवत्त्वादित्याह। तदिति। क्वचिदस्थूलमित्यादौ, क्वचित्तत्त्वमसीत्यादौ। ननु परमात्मनोऽङ्गुष्ठपरिमाणत्वं न सम्भवतीति सूत्रकारेण हृदयापेक्षमङ्गुष्ठमात्रत्वमुक्तं द्विविधेत्यादिभाष्यात्तु जीवमुद्दिश्य ब्रह्मत्वबोधनमिति प्रतीयते इति सूत्रार्थास्पर्शित्वाद्भाष्यमनुपपन्नमिति चेत् न भाष्यतात्पर्य्यानभिज्ञानात्। कठवल्लीवाक्यस्यावान्तरतात्पर्य्यमेकं महातात्पर्य्यञ्चैकं तत्रावान्तरतात्पर्य्यमुपास्ये ब्रह्मणि महातात्पर्य्यञ्च ज्ञेये ब्रह्मणि अत एव भाष्यकारैर्वाक्यद्वयोपन्यासः कृतः। अत एवोपासनाफलं कठवल्ल्यामेव श्रुते चैका च हृदयस्य नाड्य इत्यादिना बोधितं। अत एव चतुर्थाध्याये द्वितीयचरणे तदेके इति सूत्रेऽर्द्धविद्या प्रकृत्य समामनन्ति इति भाष्यकारैः प्रथमवाक्यस्य उपास्ये ब्रह्मणि तात्पर्य्यमिति प्रकटीकृतं। इत्थं चात्रत्यभाष्यं महातात्पर्य्याभिप्रायकमिति द्रष्टव्यं। रामानुजभाष्यकृता तु पूर्व्वपक्षोऽस्मद्भाष्यतात्पर्य्याज्ञानेनैव कृत इत्यवधेयं। एकत्वार्थे वाक्यशेषमनुकूलयति। एतमिति। श्रुतिर्यमो वा कर्त्ता द्रष्टव्यः जीवं प्रवृहेत् पृथक् कुर्य्यात् धैर्य्येण बलवदिन्द्रियनिग्रहादिना तं विविक्तमात्मानं शुक्लं स्वप्रकाशममृतं कूटस्थं ब्रह्म जानीयादित्यर्थः। तस्मात् कठवाक्यं प्रत्यग्ब्रह्मणि ज्ञेये समन्वितमिति सिद्धं ॥

## तदुपर्य्यपि बादरायणः सम्भवात् ॥ २६ ॥

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षा मनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तं, तत्प्रसङ्गादिदमुच्यते। वाढं, मनुष्यानधिकरोति शास्त्रं न तु मनुष्यानेवेतीह ब्रह्मज्ञाने नियमोऽस्ति, तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते, कस्मात् सम्भवात्। सम्भवति हि तेषामर्थित्वाद्यधिकारकारणं। तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि सम्भवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तं। तथा सामर्थ्यमपि तेषां सम्भवति मन्त्रार्थवादेतिहासपुराणलोकेभ्यो

---

शास्त्रस्य मनुष्याधिकारत्वे देवादीनां ब्रह्मविद्यायामप्यनधिकारः स्यादित्याशङ्क्याह। तदुपर्य्यपि सम्भवात्। ननु समन्वयाध्यायेऽधिकारचिन्ता न सङ्गतेत्यत आह। अङ्गुष्ठेति। स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः अत्र मनुष्याधिकारत्वोक्त्या स्मृतानां देवादीनां वेदान्तश्रवणादावधिकारोऽस्ति न वेति सन्देहे भोगासक्तानां वैराग्याद्यसम्भवान्नेति प्राप्ते सिद्धान्तमाह। वाढमिति। एवमधिकारविचारात्मकाधिकरणद्वयस्य प्रासङ्गिकी सङ्गतिः। अत्र पूर्व्वपक्षे देवादीनां ज्ञानानधिकारात् देवत्वप्राप्तिद्वारा क्रममुक्तिफलासु दहराद्युपासनासु क्रममुक्त्यर्थिनां मनुष्याणां अप्रवृत्तिः फलं सिद्धान्ते तु प्रवृत्तिः। उपासनाभिर्देवत्वं प्राप्तानां श्रवणादिना ज्ञानान्मुक्तिसम्भवादिति सफलोऽयं विचारः। ननु भोगासक्तानां तेषां मोक्षार्थित्वाभावान्नाधिकार इत्यत आह। अर्थित्वं तावदिति। विकारत्वेनानृतविषयसुखस्य क्षयोदयादिदोषदृष्ट्या निरतिशयसुखमोक्षार्थित्वं स्वप्रकृतीनां देवानां सम्भवतीत्यर्थः। नन्विन्द्राय स्वाहेत्यादौ चतुर्थ्यन्तशब्दातिरिक्ता विग्रहवती देवता नास्ति शब्दस्य चासामर्थ्यान्नाधिकार इत्यत आह। तथेति। अर्थित्ववदित्यर्थः। अपर्य्युदस्तत्वमाह।

विग्रहवत्त्वाद्यवगमात्। न च तेषां कश्चित् प्रतिषेधोऽस्ति। *न चोपनयनादिशास्त्रेणैषामधिकारो †निवर्त्तितः। उपनयनस्य वेदाध्ययनार्थत्वात्, तेषाञ्च स्वयंप्रतिभातवेदत्वात्। अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्य्यादि दर्शयति एकशतं ह वै वर्षाणि मघवा प्रजापतौ ब्रह्मचर्य्यमुवास, भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेत्यादि। यदपि कर्म्मस्वनधिकारकारणमुक्तं न देवानां देवतान्तराभावात् न ऋषीणामार्षेयान्तराभावादिति, न तद्विद्यास्वस्ति। न हीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किञ्चित् कृत्यमस्ति, न च भृग्वादीनां भृग्वादिसगोत्रतया, तस्माद्देवादीनामपि विद्यास्व-

---

न च तेषामिति। शूद्रो यज्ञे न क्लृप्त इतिवत् देवादीनां विद्याधिकारनिषेधो नास्तीत्यर्थः। ननु विग्रहवत्त्वेन दृष्टसामर्थ्ये सत्यप्युपनयनाभावात् शास्त्रीयसामर्थ्यं नास्तीत्यत आह। न चेति। जन्मान्तराध्ययनबलात् स्वयमेव प्रतिभाताः स्मृता वेदा येषां ते तथा तद्भावादित्यर्थः। बालादिषु प्रविष्टपिशाचादीनां वेदोद्घोषदर्शनात्। देवयोनीनां जन्मान्तरस्मरणमस्तीति स्मृतवेदान्तानामर्थविचारो युक्त इत्यर्थः। देवानाञ्च ऋषीणाञ्च विद्याधिकारे कारणमर्थित्वादिकमुक्त्वा श्रौतं गुरुकुलवासादिलिङ्गमाह। अपि चेति। ननु ब्रह्मविद्या देवादीनाधिकारेति वेदार्थत्वात् अग्निहोत्रवदित्यत आह। यदपीति। देवानां कर्म्मसु नाधिकारः देवतान्तराणामुद्देश्यानामभावादिति प्रथमसूत्रार्थः, ऋषीणामनधिकारः ऋष्यन्तराभावात् ऋषियुक्ते कर्म्मण्यशक्तेरिति द्वितीयसूत्रार्थः। असामर्थ्यमुपाधिरिति परिहरति। न तदिति। असामर्थ्यरूपं कारणं इत्यर्थः, न ह्यस्ति येनासामर्थ्यं स्या-

---

* उपनयनशास्त्रेति सो० का० वर्ध० पु० पाठः।
† निवर्त्तितेति सो० का० वर्ध० पु० पाठः।

धिकारः केन वार्य्यते। देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते॥

## विरोधः कर्म्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥२७॥

स्यादेतत् यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत विग्रहवत्त्वात् ऋत्विगादिवत् इन्द्रादीनामपि स्वरूपसन्निधानेन कर्म्माङ्गभावोऽभ्युपगम्येत, तदा च विरोधः कर्म्मणि स्यात्, न हीन्द्रादीनां स्वरूपसन्निधानेन यागेऽङ्गभावो दृश्यते, न च सम्भवति। बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसन्निधानानुपपत्तेरिति चेत्, नायमस्ति विरोधः, कस्मादनेकप्र-

---

दिति शेषः, तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणामिति वाक्यबाधोऽप्यनुमानस्य द्रष्टव्यः। ननु देवादीन् प्रत्यङ्गुष्ठमात्रश्रुतिः कथं तेषां महादेहत्वेन हृदयस्यास्मदङ्गुष्ठमात्रत्वाभावात्। अतः श्रुतिषु तेषां नाधिकार इत्यत, आह। देवाद्यधिकारेऽपीति॥

ननु मन्त्रादीनां प्रतीयमानविग्रहवत्त्वे तात्पर्य्यं कल्पयित्वा देवादीनामधिकार उक्तः स चायुक्तः अन्यपराणां तेषां प्रत्यक्षादिविरोधेन स्वार्थे तात्पर्य्यकल्पनानुपपत्तेरित्याक्षिप्य सूत्रचतुष्टयेन परिहरति। विरोधः कर्म्मणीत्यादिना। वर्ण्येत, तर्हीति शेषः। स्वरूप विग्रहः, अभ्युपगमे प्रत्यक्षा देवता दृश्येत न च दृश्यते अतो योग्यानुपलब्ध्या देवताया विग्रहवत्त्वाऽभावात् सम्प्रदानकारकाभावेन कर्म्मनिष्पत्तिर्न स्यादित्याह। तदा चेति। विग्रहस्याङ्गत्वं अनुपलब्धिबाधितं युक्त्या च न सम्भवतीत्याह। न चेति। तस्मादर्थापहितशब्द एव देवता तस्या अचेतनत्वान्न विद्याधिकार इति शङ्कार्थं परिहरति। नायमिति। एतस्यापि देवस्य योगबलादनेकदेहप्राप्तिः श्रुतिस्मृतिदर्शनात् सम्भवति। अतो न कर्म्मणि विरोध इति

तिपत्तेः। एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः सम्भवति। कथमेतदवगम्यते, दर्शनात्। तथा हि कति देवा इत्युपक्रम्य त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति निरुच्य कतमे ते इत्यस्यां पृच्छायां महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति। तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण कतम एको देव इति प्राण इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति। तथा स्मृतिरपि

"आत्मनो वै शरीराणि बहूनि भरतर्षभ।
कुर्य्याद् योगी बलं प्राप्य तैश्च सर्व्वैर्महीञ्चरेत्॥
प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रन्तपश्चरेत्।
संक्षिपेच्च पुनस्तानि सूर्य्यो रश्मिगणानिव"॥

---

व्याचष्टे। कस्मादित्यादिना। वैश्वदेवशास्त्रे शस्यमानदेवाः कतीति शाकल्येन पृष्टो याज्ञवल्क्यो निविदा त्रयश्चेत्यादिरूपया उत्तरं ददौ। निविन्नाम शस्यमानदेवसंख्यावाचकः शब्दः। षडधिकानि त्रीणि शतानि त्रीणि सहस्राणीति संख्योक्तौ संख्येयस्वरूपप्रश्ने महिमानो विभूतयः सर्वे देवाः, एषां त्रयस्त्रिंशद्देवानां अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रः प्रजापतिश्चेति त्रयस्त्रिंशद्देवास्तेऽपि षण्णां अग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां महिमानस्तेऽपि षट्सु देवेषु अन्तर्भवन्ति। षट् देवास्त्रिषु लोकेषु त्रयश्च द्वयोरन्नप्राणयोर्द्वौ च एकस्मिन् प्राणे हिरण्यगर्भे अन्तर्भवत इति दर्शितमित्यर्थः। त्रयस्त्रिंशतोऽपि देवानामिति सम्बन्धः। दर्शनं श्रौतं व्याख्याय स्मार्तं व्याचष्टे। तथा स्मृतिरिति। बलं योगसिद्धिं।

इत्येवंजातीयिका प्राप्ताणिमाद्यैश्वर्य्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति किमु वक्तव्यमाजानसिद्धानां देवानां। अनेकरूपप्रतिपत्तिसम्भवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छति परैश्च न दृश्यतेऽन्तर्धानादिशक्तियोगादित्युपपद्यते। अनेकप्रतिपत्तेर्दर्शनात् इत्यस्यापरा व्याख्या विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते। क्वचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं न गच्छति यथा बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते। क्वचिच्चैकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं गच्छति। यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकान्देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत् परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवानां न किञ्चित् कर्म्मणि विरुध्यते॥

---

अणिमा महिमा चैव लघिमा प्राप्तिरीशिता।
प्राकाम्यञ्च वशित्वञ्च यत्र कामावसायिता॥

इत्यष्टैश्वर्य्याणि। अणिम्ना अणुर्महान् लघुर्गुरुश्च भवति योगी। अङ्गुल्या चन्द्रस्पर्शः प्राप्तिः। ईशिता सृष्टिशक्तिः। प्राकाम्यम् इच्छानभिघातः। वशित्वं नियमनशक्तिः। सङ्कल्पमात्रादिष्टलाभो यत्रकामावसायितेति भेदः। आजानसिद्धानां जन्मना सिद्धानामित्यर्थः। फलितमाह। अनेकेति। अनेकेषु कर्म्मस्वेकस्य प्रतिपत्तिरङ्गभावः। तस्य लोके दर्शनादिति वक्तुं व्यतिरेकमाह। क्वचिदेक इति। प्रकृतोपयुक्तमन्वयदृष्टान्तमाह। क्वचिच्चेति॥

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यां ॥ २८ ॥

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः प्रसञ्जि शब्दे तु विरोधः प्रसज्येत, कथं औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्यानपेक्षत्वादिति वेदस्य प्रामाण्यं स्थापितं। इदानीन्तु विग्रहवती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसम्बन्धीनि हवींषि भुञ्जीत तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्यानित्येनार्थेन नित्यसम्बन्धे प्रलीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेन्नायमप्यस्ति विरोधः, कस्मात् अतः प्रभवात्। अतएव हि वैदिकाच्छब्दाद्देवादिकञ्जगत् प्रभवति। ननु जन्माद्यस्य यत इति ब्रह्मप्रभवत्वं जगतोऽवधारितं कथमिह शब्दप्रभवत्वमुच्यते। अपि च यदि

---

कर्म्मण्यविरोधमङ्गीकृत्य शब्दप्रामाण्यविरोधमाशङ्क्य परिहरति। शब्द इति चेदिति। मा प्रसञ्जि प्रसक्तो माभून्नामेत्यर्थः। औत्पत्तिकसूत्रे शब्दार्थयोरनाद्योः सम्बन्धस्यानादित्वाद्वेदस्य मानान्तरानपेक्षत्वेन प्रामाण्यमुक्तं, इदानीं अनित्यविग्रहव्यक्त्यभ्युपगमे तत्सम्बन्धस्याप्यनित्यत्वात् मानान्तरेण व्यक्तिं ज्ञात्वा शब्दस्य सङ्केतः पुंसा कर्त्तव्यः इति मानान्तरापेक्षत्वात् प्रामाण्यस्य विरोधः स्यादित्याह। कथमित्यादिना। किं शब्दानामनित्यतया सम्बन्धस्य कार्य्यत्वमापद्यते उतार्थानामनित्यतया, नाद्य इत्याह। नायमपीति। कर्म्मण्यविरोधवदित्यर्थः। देवादिव्यक्तिहेतुत्वेन प्रागेव शब्दानां सत्त्वात् नानित्यत्वमिति भावः। अत्र पूर्व्वापरविरोधं शङ्कते। नन्विति। शब्दस्य निमित्तत्वेन ब्रह्मसहकारित्वादविरोध इत्याशङ्क्य द्वितीयं कल्पमुत्थापयति। अपि

नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः कथमेतावता विरोधः शब्दे परिहृतः यावता वसवो रुद्रा आदित्या विश्वे देवा मरुत इत्येतेऽर्था अनित्या एवोत्पत्तिमत्त्वात् तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते। प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियते इति। तस्माद्विरोध एव शब्द इति चेन्न गवादिशब्दार्थसम्बन्धनित्यत्वदर्शनात्। नहि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्, द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः। आकृतिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिः। व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो

---

चेति। अनित्यत्वं, सादित्वं व्यक्तिरूपार्थानामनित्यतया शब्दानां सम्बन्धस्यानित्यत्वं दुर्वारं, तस्मात् पौरुषेयसम्बन्धसापेक्षत्वात् प्रामाण्यविरोध इत्यर्थः। न च व्यक्तीनामनित्यत्वे घटत्वादिजातिसमवायवत् शब्दसम्बन्धोऽपि नित्यः स्यादिति वाच्यं, उभयाश्रितसम्बन्धस्यान्यतराभावे स्थित्ययोगेन दृष्टान्तासिद्धेरिति भावः। यथा गोत्वादयो गवादिशब्दवाच्याः तथा वसुत्वाद्याकृतयो वस्वादिशब्दार्था न व्यक्तय इति परिहरति। नेत्यादिना। शब्दानां तदर्थानां जातीनाञ्च नित्यत्वात्तत्सम्बन्धोऽपि नित्य इति प्रतिपादयति। न हीत्यादिना। व्यक्तीनामानन्त्यादिति। न च गोत्वावच्छेदेन व्यक्तिषु शक्तिः सुग्रहेति वाच्यं, सामान्यस्याप्रत्यासत्तित्वेन सर्वव्यक्त्युपस्थित्यभावात् गोत्वं शक्यतावच्छेदकमिति यच्छापेक्षया गोत्वं शक्यमिति लाघवात् निरूढजहल्लक्षणया व्यक्तेर्लाभेनान्यलभ्यत्वाभावाच्चेति भावः। यद्वा केवलव्यक्तिषु शक्तिरत्र निरस्यतेऽनुपपत्तिज्ञानं विनैव व्यक्तेः शब्दशक्त्यापन्नजातिज्ञानवि-

दृश्यते। तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽपि आकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यं। आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः। स्थानविशेषसम्बन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत्। ततश्च यो यस्तत् स्थानमधितिष्ठति स स इन्द्रादिशब्दैरभिधीयते इति न दोषो भवति। न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणत्वाभिप्रायेणोच्यते कथं तर्हि स्थितिवाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिरतः प्रभव इत्युच्यते। कथं पुनरवगम्यते शब्दात् प्रभवति जगदिति प्रत्यक्षानुमानाभ्यां। प्रत्यक्षं हि श्रुतिः प्रामाण्यं प्रत्यनपेक्षत्वात्। अनुमानं स्मृतिः प्रामाण्यं प्रति सापेक्षत्वात्। ते हि शब्दपूर्व्वां सृष्टिं दर्शयतः। एत

---

घटत्वेन उभयशक्तेरावश्यकत्वात्। तथा च नित्यजातितादात्म्येन व्यक्तेरनादित्वाच्चत्सम्बन्धोऽप्यनादिः सत्कार्य्यवादात् अतएव वाक्यवृत्तौ तत्त्वमस्यादिवाक्ये भागलक्षणोक्ता युज्यते केवलसामान्यस्यावाच्यत्वे खण्डार्थस्य वाच्यैकदेशत्वाभावात्। अतः प्रभवादिति सूत्रकारस्याच केवलव्यक्तिनिरास इति गम्यते। केवलव्यक्तिवचनाः खलु डित्थादिशब्दाः अर्थान्तरभाविनः साङ्केतिकाः गवादिशब्दास्तु व्यक्तिप्रभवहेतुत्वेन प्रागेव सन्तीति न व्यक्तिमात्रवचनाः साङ्केतिकाः किन्तु स्थूलसूक्ष्मभावेनानुस्यूतव्यक्त्यविनाभूतसामान्यवचना इति मन्तव्यं। न चेन्द्रादिव्यक्तेरेकत्वेन जात्यभावादाकाशशब्दवत् इन्द्रचन्द्रादिशब्दाः केवलव्यक्तिवचना इति साम्प्रतं अतीतानागतव्यक्तिभेदेन जात्युपपत्तेरित्यत्तं प्रपञ्चेन, दृष्टान्तमुपसंहृत्य दार्ष्टान्तिकमाह। व्यक्तिष्वित्यादिना। आकृतिर्जातिः। ननु का सा व्यक्तिः यदनुगतेन्द्रत्वादिजातिः शब्दार्थः

इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄं-स्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजा इति श्रुतिः। तथान्यत्रापि स मनसा वाचं मिथुनं समभवदित्यादिना तत्र तत्र शब्दपूर्व्विका सृष्टिः श्राव्यते। स्मृतिरपि।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥ इति।

उत्सर्गोऽप्ययं वाचः सम्प्रदायप्रवर्त्तनात्मको द्रष्टव्यः अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासम्भवात्। तथा।

नामरूपे च भूतानां कर्म्मणाञ्च प्रवर्त्तनं।
वेदशब्देभ्य एवादौ निर्म्ममे स महेश्वरः॥ इति॥

---

स्यादित्यत आह। आकृतिविशेषस्त्विति। वज्रहस्तः पुरन्दर इत्यादिभ्य इत्यर्थः। इन्द्रादिशब्दानां जातिः इन्द्रादिषु प्रवृत्तिनिमित्तमित्युक्त्वा उपाधिर्निमित्तत्वमाह। स्थानेति। व्यक्तिप्रलयेऽपि स्थानस्य स्थायित्वात् शब्दार्थसम्बन्धनित्यता इत्यर्थं आह। ततश्चेति। उक्तपूर्वापरविरोधं परिहरति। न चेति। शब्दो निमित्तमित्यविरोधं मत्वा सूत्रशेषमवतारयति। कथं पुनरिति। स्मृत्या स्वप्रामाण्यार्थं मूलश्रुतिरनुमीयत इत्यनुमानं स्मृतिः। एते असृग्रमिन्दवस्तिरःपवित्रमाशवः विश्वान्यभिसौभगेत्येतन्मन्त्रस्थै पदैः स्मृत्वा ब्रह्मा देवादीनसृजत। तत्रैत इति पदं सर्वनामत्वात् देवानां स्मारकं, असृग्रुधिरं तत्प्रधाने देहे रमन्त इति असृग्रा मनुष्याः। चन्द्रस्थानां पितॄणां इन्दुशब्दः स्मारकः। पवित्रं सोमस्थानं तिरस्कुर्वतां ग्रहाणां तिरःपवित्रशब्दः। ऋचो सुवतां स्तोत्राणां गीतिरूपाणामाशुशब्दः। ऋच्यध्यूढं सामेति श्रुतेः। स्तोत्रानन्तरं प्रयोगं विशतां शस्त्राणां विश्वशब्दः। सर्वत्र

सर्वेषाञ्च स नामानि कर्माणि च पृथक् पृथक्।

वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ इति च ॥

अपि च चिकीर्षितमर्थमनुतिष्ठन् तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत्। तथा प्रजापतेरपि स्रष्टुः *सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः पश्चात्तदनुगतानर्थान् ससर्जेति गम्यते। तथा च श्रुतिः स भूरिति व्याहरन् स भूमिमसृजतेत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादीन् लोकान् †प्रादुर्भूतान् सृष्टान् दर्शयति। किमात्मकं पुनः शब्दमभिप्रेत्येदं शब्दप्रभवत्वमुच्यते। स्फोटमित्याह। वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वादनित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्यात्। उत्पन्नप्रध्वंसिनश्च वर्णाः प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमानत्वात्।

---

सौभाग्ययुक्तानामभिसौभगशब्दः स्मारक इति छन्दोगब्राह्मणव्याख्यार्थः। स प्रजापतिः मनसा वाचं त्रयीमिथुनं समभवत्। मनोवाग्रूपं मिथुनं सम्भावितवान् मनसा त्रयीप्रकाशिता सृष्टिमालोचितवानित्यर्थः। इमिसरित्येवादित्यमसृजतेत्यादि· श्रुतिरादिशब्दार्थः। सम्प्रदायो गुरुशिष्यपरम्पराध्ययनं। संस्था व्यवस्था। प्रजापतिसृष्टिः शब्दपूर्विका सृष्टित्वात् प्रत्यक्षघटादिवदिति प्रत्यक्षानुमानाभ्यामित्यस्यार्थान्तरमाह। अपि चेति। अतः प्रभवत्वप्रसङ्गात् शब्दस्वरूपं तत्त्वमुक्तमाक्षिपति। किमात्मकमिति। वर्णरूपं तदतिरिक्तस्फोटरूपञ्चेति किंशब्दार्थः। तत्र वर्णानामनित्यत्वात् स्फोटस्य चासत्त्वात् न जगद्धेतुत्वं इत्याक्षेपे द्वितीयपक्षं वैयाकरणो गृह्णाति। स्फोटमिति। स्फुट्यते वर्णैर्व्यज्यत इति स्फोटो वर्णव्यङ्ग्योऽर्थस्य व्यञ्जको गवादिशब्दो

---

* सृष्टेरिति का० वर्ध० भो० पु० नास्ति।

† प्रादुर्भूतानिति उक्तपु० नास्ति।

तथा ह्यदृश्यमानोऽपि पुरुषविशेषोऽध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्य्यते देवदत्तोऽयमधीते यज्ञदत्तोऽयमधीते इति। नचायं वर्णविषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानं बाधकप्रत्ययाभावात्। न च वर्णेभ्योऽर्थावगतिर्युक्ता, न ह्येकैको वर्णोऽर्थं प्रत्याययेत् व्यभिचारात्। न च वर्णसमुदायप्रत्ययोऽस्ति क्रमवत्त्वाद्वर्णानां। पूर्व्वपूर्व्ववर्णानुभवजनितसंस्कारसहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति यद्युच्येत, तन्न, सम्बन्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेत् धूमादिवत्, न च पूर्व्वपूर्व्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्त्यप्रत्यक्षत्वात् संस्काराणां। कार्य्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यवर्णोऽर्थं प्रत्याययिष्यतीति चेन्न, संस्कारकार्य्यस्यापि स्मरणस्य क्रमवर्त्तित्वात्, तस्मात् स्फोट एव शब्दः, स चैकैकवर्णप्रत्यया-

---

नित्यत्वमभिप्रेत्येति पूर्वेणान्वय, स एवाद्यपक्षं दूषयति। वर्णेति। सोऽयं गकार इति प्रत्यभिज्ञया वर्णनित्यत्वसिद्धेर्नानुपपत्तिरित्यत आह। उत्पन्नेति। तारत्वमन्द्रत्वादिविरुद्धधर्म्मवत्त्वेन तारो गकारो मन्द्रो गकार इति प्रतीयमानगकारस्य भेदानुमानात् प्रत्यभिज्ञा गत्वजातिविषयेत्यर्थं। ननु विरुद्धधर्म्मज्ञानं ध्वन्युपाधिकं भ्रम इत्यत आह। न चेति। तथा च वर्णानामनित्यत्वात् न जगद्धेतुत्वमिति भाव। किञ्च तेषामर्थबोधकत्वायोगात् स्फोटोऽङ्गीकार्य्य इत्याह। न च वर्णेभ्य इत्यादिना। व्यभिचारात् एकस्माद्वर्णादर्थप्रतीत्यदर्शनात् वर्णान्तरवैयर्थ्यप्रसङ्गाच्चेत्यर्थं। तर्हि वर्णानां समुदायो बोधक इत्याशङ्क्य क्षणिकानां स नास्तीत्याह। न चेति। वर्णानां स्वत साहित्याभावेऽपि संस्कारलक्षणापूर्व्वद्वारा साहित्यमाग्नेयादियागानामिवेति शङ्कते। पूर्व्वेति। किमयं संस्कारो वर्णैर्जनितोऽपूर्व्वाख्य

हितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते। न चायमेकप्रत्ययो वर्णविषया स्मृतिः, वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः। तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वं, भेदप्रत्ययस्य वर्णविषयत्वात्। तस्मान्नित्याच्छब्दात् स्फोटरूपात् अभिधायकात् क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति। वर्णा एव तु शब्द इति भगवानुपवर्षः। ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तं, तन्न, त एवेति प्रत्यभिज्ञानात्। सादृश्यात् प्रत्यभिज्ञानं केशादिष्विवेति चेन्न प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः। प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत् न, व्यक्तिप्रत्यभिज्ञानात्। यदि हि प्रत्युच्चारणं गवादि

---

कश्चित् उत वर्णानुभवजनितो भावनाख्यः। नाद्यो मानाभावात्। किमयमज्ञातो ज्ञातो वाऽर्थधीहेतुः नाद्य इत्याह। तन्नेति। संस्कारसहितः शब्दो ज्ञात एवार्थधीहेतुः सम्बन्धग्रहणमपेक्ष्य बोधकत्वात् धूमादिवदित्यर्थः। द्वितीये किं प्रत्यक्षेण ज्ञात उत कार्यलिङ्गेन नाद्य इत्याह। न चेति। द्वितीयं शङ्कते। कार्येति। कार्यमर्थधीस्तस्या जाताया संस्कारप्रत्ययः तस्मिन् ज्ञाते सति परस्पराश्रयेण दूषयति। नेति। पदार्थस्मरणस्यापि पदज्ञानानन्तरभावित्वात् तेन संस्कारसहितान्त्यवर्णात्मकपदस्य ज्ञानं न युक्तमित्यक्षरार्थः। अपिशब्दः परस्पराश्रयद्योतनार्थः। एतेन भावनासंस्कारपक्षोऽपि निरस्तः। तस्य वर्णस्मृतिमात्रहेतुत्वेनार्थधीहेतुत्वायोगात्। न चान्त्यवर्णसाहित्यादर्थधीहेतुत्वं केवलसंस्कारस्य तु वर्णस्मृतिहेतुत्वमिति वाच्यं अर्थधीपूर्वकाले भावनाया ज्ञानाभावेनार्थधीहेतुत्वायोगात्। न च वर्णस्मरणेनानुमिता सा अन्त्यवर्णसहिता अर्थधीहेतुरिति वाच्यं, तत्कार्यस्य स्मृते-

व्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरंस्तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात्। नत्वेतदस्ति। वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते। द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिः न तु द्वौ गोशब्दाविति। ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तं। अत्राभिधीयते। सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागव्यङ्ग्यत्वाद्वर्णानामभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्णविषयो विचित्रः प्रत्ययो न स्वरूपनिमित्तः। अपि च वर्णव्यक्तिभेदवादिनापि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः। तासु च परोपाधिको भेदप्रत्यय इत्यभ्युपगन्तव्यं

---

कस्य वर्णस्मरणस्याप्यन्त्यवर्णानुभवानन्तरभावित्वेन तेनानुमितभावनानामन्त्यवर्णसाहित्याभावादितिभावः। वर्णानामर्थबोधकत्वासम्भवे फलमाह। तस्मादिति। स्फोटेऽपि किं मानमित्याशङ्क्यैकं पदमिति प्रत्यक्षप्रमाणमित्याह। स चेति। यथा रत्नतत्त्वं बहुभिश्चाक्षुषप्रत्ययैः स्फुटं भासते तथा गवाङ्के पदस्फोटो गकाराद्येकैकवर्णकृतप्रत्ययैः स्फोटविषयैः आहिता. संस्कारा वीजं यस्मिन् चित्ते तस्मिन्नन्त्यवर्णकृतप्रत्ययेन जनितः परिपाकोऽन्त्यः संस्कारो यस्मिन् तस्मिन् प्रत्ययिनि चित्ते एकं गौरिति पदमिति प्रत्ययः प्रत्यक्षस्तद्विषयतया स्पष्टं अवभासत इत्यर्थः। अनेन वर्णान्वयव्यतिरेकयोः स्फोटज्ञानेऽन्यथासिद्धिः। नचैकस्माद्वर्णात् सम्यक् स्फोटाभिव्यक्तिः येन वर्णान्तरवैयर्थ्यं किन्तु रत्नवद्बहुप्रत्ययसंस्कृते चित्ते सम्यक् स्फोटाभिव्यक्तिरित्युक्तं भवति। नन्वेकपदमेकं वाक्यमिति प्रत्ययः पदवाक्यस्फोटयोर्न प्रमाणं तस्य वर्णसमूहालम्बनस्मृतित्वादित्याशङ्क्य निषेधति। न चेति। स्फोटस्य जगद्धेतुत्वार्थं नित्यत्वमाह। तस्य चेति। ननु

तद्वदं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः, स्वरूपनिमित्तश्च प्रत्यभिज्ञानमिति कल्पना लाघवं। एष एव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत् प्रत्यभिज्ञानं। कथं ह्येकस्मिन् काले बहूनामुच्चारयतामेक एव सन् गकारो युगपदनेकरूपः स्यात् उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्च इति। अथवा ध्वनिकृतोऽयं प्रत्ययभेदो न वर्णकृत इत्यदोषः। कः पुनरिदं ध्वनिर्नाम यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति प्रत्यासीदतश्च मन्दत्वपटुत्वादिभेदं वर्णेष्वासञ्जयति तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः।

---

तदेवेदं पदमिति प्रत्यभिज्ञा भ्रमः उदात्तादिभेदप्रत्ययादित्यत आह। वर्णा एवेति। भेदेति। आचार्य्यसम्प्रदायोक्तिपूर्व्वकं सिद्धान्तयति। वर्णातिरिक्तस्फोटात्मकशब्दस्याननुभवानारोप्यादित्यर्थः। सादृश्यदोषादियं भ्रान्तिरिति शङ्कते। सादृश्यादिति। वमनानन्तरं त एवेमे केशा इति धीर्भ्रान्तिरिति युक्तं भेदधीविरोधात्, स एवायं वर्ण इति धीस्तु प्रमैव बाधकाभावादित्याह। नेति। गोत्वादिप्रत्यभिज्ञावत् वर्णेषु प्रत्यभिज्ञा गत्वादिविषयेति शङ्कते। प्रत्यभिज्ञानमिति। व्यक्तिभेदे सिद्धे प्रत्यभिज्ञाया जातिविषयत्वं स्यात् यत् त्वया पीतं जलं तदेव मया पीतमित्यादौ न तथेह व्यक्तिभेदः सिद्ध इति परिहरति। न व्यक्तीति। न त्वेतदिति। व्यक्त्यन्यत्वज्ञानमित्यर्थः। उदात्तत्वादिविरुद्धधर्मत्वात् व्यक्तिभेदोऽनुमानसिद्ध इत्यनुवदति। नन्विति। भेदप्रत्ययस्य कुम्भकूपाकाशभेदप्रत्ययवदौपाधिकभेदविषयत्वादन्यथासिद्धेः। अनन्यथासिद्धव्यक्त्यैक्यप्रत्यभिज्ञया निरपेक्षस्वरूपालम्बनया बाध इत्युत्तरमाह। अत्रेति। ताल्वादिदेशैः कोष्ठस्थवायुसंयोगविभागाभ्यां विचित्राभ्यां व्यङ्ग्यत्वात्

वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात्। एवञ्च सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति, इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात् संयोगविभागकृता उदात्तादिभेदाः कल्प्येरन्। संयोगविभागानाञ्चाप्रत्यक्षत्वात् न तदाश्रया विशेषाः वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैते उदात्तादिप्रत्ययाः स्युः। अपिच नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति। न ह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति। नहि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते। वर्णेभ्यश्चार्थप्रतीतेः सम्भवात् स्फोटकल्पनानर्थिका। न कल्पयाम्यहं स्फोटं प्रत्यक्षमेव त्वेनमवगच्छामि। एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यव-

---

वर्णेषु वैचित्र्यधीरित्यर्थः। कल्पनागौरवाच्च वर्णेषु स्वतो भेदो नास्तीत्याह। अपि चेति। अनन्ताः गकारादिव्यक्तयस्तासु प्रत्यभिज्ञानार्थं गत्वादिजातयस्तासु चोदात्तत्वादिभेदस्यौपाधिकत्वमिति कल्पनान्तरं वर्णव्यक्तिभेदमात्रस्यौपाधिकत्वकल्पनमिति व्यक्त्यानन्त्यस्य जातीनाञ्च कल्पनमयुक्तमित्यर्थः। ननु भेदस्य बाधकाभावात् नौपाधिकत्वमित्यत आह। एष इति। अस्तु तर्हि प्रत्ययद्वयप्रामाण्याय भेदाभेदयोः सत्यत्वं तत्राह। कथं तर्हीति। उभयोरेकत्वविरोधात् भेद औपाधिक एवेत्यर्थः। ननु वायुसंयोगादेरतीन्द्रियत्वात् न तद्गतवैचित्र्यस्योदात्तत्वादेर्वर्णेषु प्रत्यक्षारोपः सम्भवतीत्यरुचिं वदिष्यन् स्वमतमाह। अथ वेति। ध्वनिधर्म्मा उदात्तत्वादयो ध्वन्यभेदाध्यासाद्वर्णेषु भान्तीत्यर्थः। प्रश्नपूर्व्वकं ध्वनिस्वरूपमाह। क इति। अवतरति, स ध्वनिरिति शेषः। वर्णातिरिक्तः शब्दो ध्वनिरित्यर्थः। समीपं गतस्य पुंसस्तारत्वमन्दत्वादिधर्म्मान् स्वगतान् वर्णेषु स एवारोपयतीत्याह। प्रत्या-

भासनादिति चेत्, न, अस्या अपि बुद्धेर्वर्णविषयत्वात्, एकैक वर्णग्रहणोत्तरकालीना हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया नार्थान्तरविषया। कथमेतदवगम्यते, यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्त्तन्ते न तु दकारादयः। यदि ह्यस्या बुद्धेर्गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात् ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्त्तेरन्, *नतु तथास्ति, तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः। नन्वनेकत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तं तां प्रति ब्रूमः। सम्भवत्यनेकस्याप्येकबुद्धिविषयत्वं। पङ्क्तिर्वनं सेना दशशतं सहस्रमित्यादिदर्शनात्। या तु गौरित्येकोऽयं शब्द इति बुद्धिः सा बहुष्वेव वर्णेषु एकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव। अत्राह, यदि

---

सोढव्येति। आदिपदं विवृणोति। तदिति। नन्वव्यक्तवर्ण एव ध्वनिर्नातिरिक्त इत्यत आह। वर्णानामिति। प्रत्युच्चारणं वर्णा अनुवर्त्तन्ते ध्वनिर्व्यावर्त्तत इति भेद इत्यर्थः। अन्यथा वाचिकेषु जप्यवर्णेषु अव्यक्तेषु ध्वनिबुद्धिः स्यात् दुन्दुभ्यादिध्वनौ शब्दत्वमात्रेण गृह्यमाने अयमव्यक्तो वर्ण इति धीः स्यादिति मन्तव्यं। एवं ध्वन्युपाधिकत्वे स्वमते गुणं वदन् वायूपाधिकत्वे पूर्व्वोक्तामरुचिं दर्शयति। एवं चेत्यादिना। अस्तु को दोषस्तत्राह। संयोगेति। वायुसंयोगादेरश्रावणत्वादित्यर्थः। तस्मात् श्रावणध्वनिरेवोदात्तत्वाद्यारोपोपाधिरितिभावः। एवं विरुद्धधर्म्मकध्वनीनां भेदेऽपि न तेष्वनुगता वर्णा भिद्यन्त इति उक्तं, तदेव दृष्टान्तेन द्रढयति। अपि चेति। यथा खण्डमुण्डादिविरुद्धानेकव्यक्तिष्वभिन्नं गोत्वं तथा ध्वनिषु वर्णा अभिन्ना एवेत्यर्थः। उदात्तादिर्ध्वनिभेदेन हेतुना वर्णानामपीति योजना

---

* न तु तथास्तीति का० वर्ध० सो० पु० नास्ति।

वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युः ततो जारा राजा कपिः पिक इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात्, त एव हि वर्णा इतरत्र चेतर एव प्रत्यवभामन्त इति। अत्र वदामः। सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्त्येवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति, तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रपिपत्तिर्न विरुध्यते। वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसम्बन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्य-

---

प्रत्यभिज्ञाविरोधादित्यक्षरार्थः। यद्वा उदात्तत्वादिभेदविशिष्टतया प्रत्यभिज्ञायमानत्वात् वर्णानां भेद इत्याशङ्क्य दृष्टान्तेन निरस्यति। अपि चेति। वर्णानां स्थायित्वं प्रसाध्य तेषामेव वाचकत्वं वक्तुं स्फोटं विघटयति। वर्णेभ्यश्चेति। कल्पनामसहमान आशङ्कते। नेति। चक्षुषा दर्शनयुक्तायां बुद्धौ सुखवत् श्रोत्रेण श्रवणयुक्तायां बुद्धौ विनैव हेत्वन्तरं स्फोटः प्रत्यक्ष इत्याह। झटितीति। यस्यां संविदि योऽर्थोऽवभासते सा तत्र प्रमाणं एकपदमिति बुद्धौ वर्णा एव स्फुरन्ति नातिरिक्तस्फोटः प्रमाणमित्याह। नास्या अपीत्यादिना। न तु गोपदबुद्धेः स्फोटो विषयो गकारादीनां तु व्यञ्जकत्वादनुवृत्तिरित्यत आह। यदि-हाति। व्यङ्ग्यवह्निबुद्धौ व्यञ्जकधूमानुवृत्तेरदर्शनादित्यर्थः। वर्णसमूहालम्बनत्वोपपत्तेर्न स्फोटः कल्पनीयः पदार्थान्तरकल्पनागौरवादित्याह। तस्मादिति। अनेकस्याप्यौपाधिकमेकत्वं युक्तमित्याह। सम्भवतीति। ननु तत्रैकदेशादिरुपाधिरस्ति प्रकृते क उपाधिरित्यत आह। या त्विति। एकार्थं प्रयुक्तमेकं पदं प्रधानार्थे एकस्मिन् तात्पर्यवदेकं वाक्यमित्येकार्थसम्बन्धादेकत्वोपचार इत्यर्थः। न चैकपदत्वे ज्ञाते एकार्थज्ञानं, अस्मिन् ज्ञाते तदित्यन्योन्याश्रय इति वाच्य। उत्तमवृद्धा-

यभासमानास्तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना। स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्। अथापि नाम प्रत्युच्चारणमन्येऽन्ये च वर्णाः स्युस्तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्यत्वात् या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु सञ्चारयितव्या, ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धं॥

## अत एव च नित्यत्वं॥ २९॥

*स्वतन्त्रस्य †कर्त्तुः स्मरणादेव हि स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य, अतः प्रभवादिति

---

क्तानां क्रमेणान्त्यवर्णश्रवणानन्तरं बालस्यैकस्मृत्यारूढानां मध्यमवृद्धस्मृतिप्रवृत्त्यादिलिङ्गानुमितैकार्थधीहेतुत्वनिश्चये सत्यैकपदवाक्यत्वनिश्चयात्। वर्णसाम्येऽपि पदभेददृष्टेर्वर्णातिरिक्तं पदं स्फोटाख्यमङ्गीकार्यमिति शङ्कते। यच्चाहेति। क्रमभेदादर्थेष्वेव पदभेददृष्टिरिति परिहरति। यच्चेति। ननु नित्यविभूनां वर्णानां कथं क्रमः कथं वा पदत्वज्ञानेनार्थधीहेतुत्वं तत्राह। वृद्धेति। व्युत्पत्तिदशायामुच्चारणक्रमेण उपलब्धिक्रममनुपलभ्यमानवर्णेष्वारोप्यैते वर्णा एतत्क्रमैतत्संख्यावन्त एतदर्थसक्ता इति गृहीताः सन्तः श्रोतुः प्रवृत्तिकाले तथैव स्मृत्यारूढाः स्वस्वार्थं बोधयन्तीत्यर्थः। स्थायित्वादर्थमुपसंहरति। वर्णेति। एवं वर्णानामर्थबोधकत्वं, व्यर्थः स्फोटः। सम्प्रति वर्णानामस्थिरत्वमङ्गीकृत्य प्रौढिवादेन स्फोटं घटयति। अथापीति। स्थिराणि गत्वादि-

---

* स्वतन्त्रस्येति का० वर्ध० पु० नास्ति।

† कर्तुरस्मरणादिभिरिति का० वर्ध० पु० पाठः।

परिहृत्येदानीं तदेव वेदस्य नित्यत्वं स्थितं द्रढयति, अत एव च नित्यत्वमिति। अत एव च नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दनित्यत्वमपि प्रत्येतव्यं। तथा च मन्त्रवर्णः, यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन्नृषिषु प्रविष्टामिति स्थितामेव वाचमनुविन्नां दर्शयति। वेदव्यासश्चैवमेव स्मरति,

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥ इति।

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च॥३०॥

अथापि स्यात् यदि पश्वादिव्यक्तिवत् देवादिव्यक्तयोऽपि सन्तत्यैवोत्पद्येरन् निरुध्येरंश्च ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात् सम्बन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति तदा

---

सामान्यानि क्रमविशेषवन्ति गृहीतसङ्गतिकान्यर्थबोधकानीति सूत्रेषु सामान्येषु प्रक्रिया सञ्चारयितव्या न त्वक्लृप्तः स्फोटः कल्पनीय इत्यर्थः। वर्णानां स्थायित्ववाचकत्वयोः सिद्धौ फलितमाह। तत इति॥

पूर्वतन्त्रवृत्तानुवादपूर्वकं सूत्रं व्याचष्टे। कर्त्तुरित्यादिना। पूर्वतन्त्रसिद्धमेव वेदस्य नित्यत्वं देवादिव्यक्तिसृष्टौ तद्वाचकशब्दस्यापि सृष्टेरसिद्धमित्याशङ्क्य नित्याकृतिवाचकाच्छब्दात् व्यक्तिजन्मोक्त्या साङ्केतिकत्वं निरस्य वेदोऽवान्तरप्रलयावस्थायां जगद्धेतुत्वादीश्वरवदित्यनुमानेन द्रढयतीत्यर्थः। यज्ञेन पूर्वसुकृतेन, वाचो वेदस्य, लाभयोग्यतां प्राप्ताः सन्तो याज्ञिकास्तामृषिषु स्थितां लब्धवन्त इति मन्त्रार्थः। अनुविन्नामुपलब्धां। पूर्वमवान्तरकल्पादौ॥

कथमविरोध इति। तत्रेदमभिधीयते समाननामरूपत्वादि- ति। तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यं। प्रतिपादयि- ष्यति चाचार्य्यः संसारस्यानादित्वमुपपद्यते चाप्युपलभ्यते चेति। अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणे ऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः। एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यं। स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते। "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथा- स्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वैः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुध्यते यथाग्नेर्ज्व- लतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" (कौ० ब्रा० उ० अ०३। ख०३) इति। स्यादेतत् स्वापे पुरुषान्तरव्यवहाराविच्छेदात् स्वयञ्च सुषुप्तप्रबुद्धस्य पूर्व- प्रबोधव्यवहारानुसन्धानसम्भवादविरुद्धं। महाप्रलये तु सर्व-

---

ननु महाप्रलये जातेरप्यसत्त्वात् शब्दार्थसम्बन्धानित्यत्वं इत्याश- ङ्ख्याह। समानेति। सूत्रं निरस्याशङ्कामाह। अथापीति। व्यक्ति- सन्तत्या जातीनां अवान्तरप्रलये सत्त्वात् सम्बन्धस्तिष्ठति व्यवहारा- विच्छेदात्, ज्ञायेत चेति वेदस्यानपेक्षत्वेन प्रामाण्येन कश्चिद्विरोधः स्यात्। निर्लेपलये तु सम्बन्धनाशात् पुनः सृष्टौ केनचित् पुंसा सङ्केतः कर्त्तव्य इति पुरुषबुद्धिसापेक्षत्वेन वेदस्याप्रामाण्यं अध्यापकस्याश्रयस्य नाशादाश्रितस्यानित्यत्वञ्च प्राप्तमित्यर्थः। महाप्रलयेऽपि निर्लेपलयो- ऽसिद्धः सत्कार्य्यवादात्। तथा च सस्क.रात्मना शब्दार्थतत्सम्बन्धानां

व्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसन्धातुमशक्यत्वात् *वैषम्यं इति। नैष दोषः, सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसन्धानोपपत्तेः। यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसन्दधाना दृश्यन्ते इति, न तत् प्राकृतवदीश्वराणां भवितव्यं। यथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्य्यन्तेषु ज्ञानैश्वर्य्यादिप्रतिबन्धः परेण परेण भूयान् भवन् दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्य्यन्तेषु ज्ञानैश्वर्य्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतत् †श्रुतिस्मृतिवादेष्वसकृदेवानुकल्पादौ प्रादुर्भवतां पारमैश्वर्य्यं श्रूयमाणं न शक्यं नास्तीति वदितुं। ततश्चा-

सतामेव पुनः सृष्टावभिव्यक्तेर्नानित्यत्वं। अभिव्यक्तानां पूर्वकल्पीयनामरूपसमानत्वात् न सङ्केतः केनचित् कार्य्यः, विषमसृष्टौ हि सङ्केतापेक्षा न तुल्यसृष्टाविति परिहरति। तत्रेदमित्यादिना। नन्वाद्यसृष्टौ सङ्केतः कार्य्य इत्यत आह। तदापीति। महासर्गप्रलयप्रवृत्तावपीत्यर्थः। नन्वस्त्वनादिसंसारे सम्बन्धस्यानादित्वं तथापि महाप्रलयव्यवधानादस्मरणे कथं वेदार्थव्यवहारस्तत्राह। अनादौ चेति। न कश्चिद्विरोधः, शब्दार्थसम्बन्धस्मरणादेरिति शेषः। स्वापप्रबोधयोर्लयसर्गासिद्धिमाशङ्क्य श्रुतिमाह। स्वापेति। अथ तदा सुषुप्तौ प्राणे परमात्मनि जीव एकीभवति एनं प्राणं सजीवं तदेतीति शेषः। एतस्मात् प्राणात्मनः आयतनं गोलकं। आनन्तर्य्ये पञ्चमी प्राणेभ्य इत्यादौ द्रष्टव्या। स्वप्नवत् कल्पितस्याज्ञातसत्त्वाभावात् दर्शनं सृष्टिः अदर्शनं लयः इति दृष्टिसृष्टिपक्षः श्रुत्यभिप्रेत इति भावः। दृष्टान्त-

* विषम इति का० वर्ध० सो० पु० पाठः।

† श्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणमिति उक्त पु० पाठः।

तीतकल्पानुष्ठितप्रकृष्टज्ञानकर्म्मणामीश्वराणां हिरण्यगर्भादीनां वर्त्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत् कल्पान्तरव्यवहारानुसन्धानोपपत्तिः। तथा च श्रुतिः। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति। स्मरन्ति च शौनकादयो मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टा इति। प्रतिवेदञ्चैवमेव काण्डर्ष्यादयः स्मर्य्यन्ते। श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा

---

वैषम्यमाशङ्क्य परिहरति। स्यादित्यादिना। अविरुद्धमनुसन्धानादिकमिति शेषः। हिरण्यगर्भादयः पूर्वकल्पानुसन्धानशून्याः संसारित्वादस्मदादिवदित्याशङ्क्याह। यद्यपीति। *इति यद्यपि तथापि न प्राकृतवदिति योजना। ज्ञानादेर्निकर्षवदुत्कर्षोऽप्यङ्गीकार्य्यः बाधाभावादिति न्यायानुगृहीतश्रुत्यादिभिः सामान्यतो दृष्टानुमानं बाध्यमित्याह। यथा हीत्यादिना। ननु तथापि पूर्वकल्पे परेषां मुक्तत्वादस्मिन् कल्पे कोऽनुसन्धातेत्यत आह। ततश्चेति। ज्ञानाद्युत्कर्षादित्यर्थः। मुक्तेभ्योऽन्येऽनुसन्धातारः परमेश्वरानुगृहीतानां ज्ञानातिशये पूर्वोक्तश्रुतिस्मृतिन्यायागमादाह। तथा चेति। पूर्वं कल्पादौ सृजति तस्मै च ब्रह्मणे प्रहिणोति गमयति तस्य बुद्धौ वेदानाविर्भावयति यस्तं देवं स्वात्माकारं महावाक्योत्थबुद्धौ प्रकाशमानं शरणं परममभयस्थानं निःश्रेयसरूपमहं प्रपद्य इत्यर्थः। न केवलमेकस्यैव ज्ञानातिशयः किन्तु बहूनां शास्त्रादृष्टॄणामिति विश्वासार्थमाह। स्मरन्तीति। ऋग्वेदो दशमण्डलावयवान् तत्र भवा ऋचो दाशतय्यः। वेदान्तरेऽपि काण्डसूक्तमन्त्राणां द्रष्टारो बोधायनादिभिः स्मृता इत्याह। प्रतीति। किञ्च मन्त्राणां ऋष्यादिज्ञानावश्यकत्वज्ञापिका श्रुतिर्मन्त्रद्रष्टॄणां ज्ञानातिशयं दर्शयतीत्याह। श्रुतिरपीति।

स्थाणुं वर्च्छति गर्त्तं वा प्रपद्यत इत्युपक्रम्य तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति। प्राणिनाञ्च सुखप्राप्तये धर्म्मो विधीयते दुःखपरिहाराय चाधर्म्मः प्रतिषिध्यते। दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतो न विलक्षणविषयावित्यतो धर्म्माधर्म्मफलभूतोत्तरोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते। स्मृतिश्च भवति,

> "तेषां ये यानि कर्म्माणि प्राक्सृष्ट्यां प्रतिपेदिरे।
> तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः॥
> हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते।
> तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते"॥ इति॥

---

आर्षेयं ऋषियोगः, छन्दो गायत्र्यादि, दैवतमग्न्यादि, ब्राह्मणं विनियोगः, एतान्यविदितानि यस्मिन्मन्त्रे तेनेत्यर्थः। स्थाणुं स्थावरं, गर्त्तं नरकं, तथा च ज्ञानाधिक्ये कल्पान्तरितं वेदं स्मृत्वा व्यवहारस्य प्रवर्त्तितत्वात् वेदस्यानादित्वमनपेक्षत्वञ्चाविरुद्धमिति भावः। अधुना समाननामरूपत्वं प्रपञ्चयति। प्राणिनाञ्चेति। ततः किं तत्राह। दृष्टेति। ऐहिकामुष्मिकविषयसुखरागकृतधर्म्मस्य फलं पश्वादिकं दृष्टपश्वादिसदृशमिति युक्तं विसदृशे कामाभावेन हेत्वभावात्। तथा दुःखद्वेषकृताधर्म्मफलं दृष्टसदृशं दुःखमेव न सुखं कृतहान्यादिदोषापत्तेरित्यर्थः। तर्कितेऽर्थे मानमाह। स्मृतिश्चेति। उत्तरसृष्टिः पूर्वसृष्टिसजातीयका कर्म्मफलत्वात् पूर्वसृष्टिवदनुमानञ्च श्रुत्वार्थः। तेषां प्राणिनां मध्ये तान्येव तज्जातीयान्येव। तानि दर्शयन् तत्प्राप्तौ हेतुमाह। हिंस्रेति। कर्म्माणि विहितनिषिद्धत्वाकारेणापूर्वं क्रियात्वेन संस्कारञ्च जनयन्ति। तत्रापूर्वात् फलं भुङ्क्ते संस्कारभावितत्वात् पुनस्तज्जातीयानि करोतीत्यर्थः। संस्कारे लिङ्गमाह। तस्मादिति। संस्कारवशादेव पुण्यं पापं वा रोचते। अतोऽभिरुचिलिङ्गात् पुण्यापुण्यसंस्कारो-

प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते शक्तिमूलमेव च प्रभवतीतरथा आकस्मिकत्वप्रसङ्गात्। न चानेकाकाराः शक्तयः शक्याः कल्पयितुं। ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां देवतिर्य्यङ्मनुष्यलक्षणानाञ्च प्राणिनिकायप्रवाहाणां वर्णाश्रमधर्म्मफलव्यवस्थानाञ्चानादौ संसारे नियतत्वमिन्द्रियविषयसम्बन्धनियतत्ववत् प्रत्येतव्यं। न हीन्द्रियविषयसम्बन्धादेर्व्यवहारस्य प्रति सर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुं। अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात् कल्पान्तरव्यवहारानुसन्धानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति समाननामरूपत्वाच्चावृत्ता-

---

ऽनुमेय स एव स्वभावः प्रकृतिर्वासनेति च गीयते। एवं कर्म्मणां सूर्य्यसादृश्यमुक्त्वा स्वोपादाने लीनकार्य्यसंस्काररूपशक्तिवशादपि सादृश्यमाह। प्रलीयमानमिति। इतरथा संस्कारप्रलये जगद्वैचित्र्यस्याकस्मिकत्वं स्यादित्यर्थः। ननु जगद्वैचित्र्यकारिण्योऽन्याः शक्तयः कल्प्यन्तां तत्राह। न चेति। अविद्याया लीनकार्य्यात्मकसंस्कारादन्याः शक्तयो न कल्प्याः मानाभावाद्गौरवाच्च, स्वोपादाने लीनकार्य्यरूपा शक्तिस्तु महान् न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति श्रुतिसिद्धा, अतोऽविद्यातत्कार्य्यादन्याः शक्तयो न सन्ति आत्माविद्यैव तच्छक्तिरिति सिद्धान्त इत्यर्थः। निमित्तेष्वप्युपादानस्य कार्य्यमेवाविद्याघटनया शक्तिरन्या वेत्यनाग्रहः। उपादाने कार्य्यसंस्कारसिद्धे फलमाह। ततश्चेति। यथा सुप्तोत्थितस्य पूर्वचक्षुर्जातीयमेव चक्षुर्जायते तच्च रूपजातीयमेव गृह्णाति न रसादिकं, भूर्लोका भोगाश्रयाः प्राणिनिकाया भोगहेतुकर्म्माणि संस्कारवशात् पूर्वलोकादितुल्यान्येवेति नियम इत्यर्थः। निकाया समूहा। दृष्टान्तासिद्धिमाशङ्क्याह। न हीति।

वपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः। समाननामरूपताञ्च श्रुतिस्मृती दर्शयतः।

"सूर्य्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः"॥ इति।

यथा पूर्वस्मिन् कल्पे सूर्य्याचन्द्रमःप्रभृति जगत् क्लृप्तं तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः। तथा अग्निर्वा अकामयत अन्नादो देवानां स्यामिति, स एवमग्नये कृत्तिकाभ्यः पूरोडाशमष्टाकपालं निरवपदिति, नक्षत्रेष्टिविधौ योऽग्निर्निरवपत् यस्मै वाग्नये निरवपत् तयोः समाननामरूपतां दर्शयतीत्येवं जातीयिका श्रुतिरिहोदाहर्त्तव्या। स्मृतिरपि,

"ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः।
शर्वर्य्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः॥

---

यथा षष्ठेन्द्रियस्य मनसोऽसाधारणविषयो नास्ति सुखादेः साक्षिवेद्यत्वात्, तथा व्यवहारान्यथात्वमसदित्यर्थः। षष्ठमिन्द्रियं तद्विषयश्चासन्निति वार्थः। उक्तार्थं सङ्क्षिपति। अतश्चेति। व्यवहारसाम्यात् सम्भवाच्च व्यवक्रियमाना व्यक्तयः समाना एवेत्यर्थः। सूत्रं योजयति। समानेत्यादिना। भाविष्टस्या यजमानोऽग्नि, अन्नादोऽग्निरहं स्यामिति कामयित्वा कृत्तिकानक्षत्राभिमानिदेवायाग्नये अष्टसु कपालेषु पचनीयं हविर्निरूप्तवानित्यर्थः। नक्षत्रव्यक्तिबहुत्वाद्बहुवचनं। ननु यजमानोऽग्निर्भावी उद्देश्याग्निना समाननामरूपः कल्पान्तरे भवतीत्येवं रुद्रो वा अकामयत विष्णुर्वा अकामयतेत्यत्रापि तथा वक्तव्यं, तदयुक्तं। न ह्यमरिव विष्णुरुद्रयोरधिकारिपुरुषत्वं तयोर्जगत्कारणत्वश्रवणात् एक

यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥
यथाभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च"॥

इत्येवं जातीयका द्रष्टव्या॥

मध्वादिष्वसम्भवादनधिकारं जैमिनिः॥ ३१॥

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्य्यावर्त्यते। देवादीनामनधिकारं जैमिनिराचार्य्यो मन्यते। कस्मात् मध्वादिष्वसम्भवात्। ब्रह्मविद्याधिकाराभ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत। न चैवं सम्भवति, कथमसौ वा आदित्यो देव मध्वित्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन्, देवादिषु ह्युपासकेष्वभ्युपगम्यमानेषु आदित्यः *कथमन्यमादित्यमुपासीत। पुन-

एव रुद्रो नेति एको विष्णुरित्यादि श्रुतिस्मृतिविरोधादिति। ऋतौ, वेदेष्विति विषयसप्तमी, पर्य्ययन्ते प्रलयान्ते। ऋतूनां वसन्तादीनां, लिङ्गानि नवपल्लवादीनि। पर्य्यये घटीयन्त्रवदावृत्तौ, भावाः पदार्थाः, तुल्या इति शेषः॥

तस्माज्जन्मनाशवद्विग्रहाङ्गीकारेऽपि कर्म्मणि शब्दे च विरोधाभावात् देवानामस्ति विद्याधिकार इति स्थितमाक्षिपति। मध्वादिष्विति। ब्रह्मविद्या देवादीन् नाधिकारोति विद्यात्वात् मध्वादिविद्यावदित्यर्थः। दृष्टान्तं विवृणोति। कथमित्यादिना। द्युलोकाख्यवंशदण्डे चान्तरिक्षरूपे मध्वपूपे स्थित आदित्यो देवानां मोदनान्मध्वित्यारोप्य ध्यानं

* कस्मन्यमिति का० वर्ध० पु० पाठः।

आदित्यव्यपाश्रयाणि पञ्च रोहितादीन्यमृतान्यनुपक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजीवन्तीत्युपदिश्य स च एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यतीत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति। वस्वादयस्तु कानन्यान् वस्वादीन् अमृतोपजीविनो विजानीयुः, कं चान्यं वस्वादिमहिमानं प्रेप्सेयुः। तथाग्निः पादो वायुः पाद आदित्यः पादो दिशः पादो वायुर्वाव संवर्गः आदित्यो ब्रह्मेत्यादेश इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः सम्भवति। तथेमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इत्यादिष्वृषिसम्बन्धेषु

---

कार्य्यं। तत्रादित्यस्याधिकारो न युक्तः ध्यातृध्येयभेदाभावात् इत्याह। देवादिष्विति। अस्तु वस्वादीनां तत्राधिकार इति चाशङ्क्य तेषामपि च ध्येयत्वात् प्राप्यत्वाच्च न ध्यातृत्वमित्याह। पुनश्चेति। चतुर्वेदोक्तकर्म्माणि प्रणवश्चेति पञ्च कुसुमानि तेभ्यः सोमाज्यादिद्रव्याणि हुतानि लोहितशुक्लकृष्णपरकृष्णगोप्याख्यानि पञ्चामृतानि तत्तन्मन्त्रभागैः प्रागाद्यूर्ध्वान्तपञ्चदिगवस्थिताभिरादित्यरश्मिनाडीभिर्मधुपूपच्छिद्ररूपाभिरादित्यमण्डलमानीतानि यशस्तेजइन्द्रियवीर्य्यान्नात्मना परिणतानि पञ्चदिक्षु स्थितैर्वस्वादिभिरुपजीव्यानीति ध्यायता वस्वादिप्राप्तिरुक्तेत्यर्थः। सूत्रस्थादिपदार्थमाह। तथाग्निरिति। चाकाशब्रह्मणश्चत्वारः पादाः द्वौ कर्णौ द्वे नेत्रे द्वे नासिके एका वागिति सप्तस्विन्द्रियेषु शिरस्थमस्तोयस्थेषु सप्तर्षिध्यानं कार्य्यमित्याह। तथेमावेवेति। अयं दक्षिणः कर्णः गौतमो वामो भारद्वाज एवं दक्षिणनेत्रनासिके विश्वामित्रवशिष्ठौ वाग् जमदग्निकश्यपौ वागत्रिरित्यर्थः॥

उपासनेषु न तेषामेवर्षीणामधिकारः सम्भवति। कुतश्च न देवादीनामनधिकारः॥

ज्योतिषि भावाच्च॥ ३२॥

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बंभ्रमज्जगदवभासयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च। न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयाऽर्थित्वादिना वा योगोऽवगन्तुं शक्यते, मृदादिवदचेतनत्वावगमात्। एतेनाग्न्यादयो व्याख्याताः। स्यादेतत्, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोषः इति चेत् नेत्युच्यते, न तावल्लोको नाम किञ्चित् स्वतन्त्रं प्रमाणमस्ति, प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः *प्रसिद्ध एवार्थो लोकात् प्रसिद्ध इत्युच्यते, न

---

अत्र ऋषीणां ध्येयत्वान्नाधिकारः। किञ्च विग्रहाभावात् देवादीनां न क्वाप्यधिकार इत्याह। ज्योतिषि भावाच्चेति। आदित्यः सूर्यश्चन्द्रः शुक्रोऽङ्गारक इत्यादिशब्दानां ज्योतिःपिण्डेषु प्रयोगस्य भावात् सत्त्वान्न विग्रहवान् देवः कश्चिदस्तीत्यर्थः। आदित्यः पुरस्तादुदेता पश्चादस्तमेतेति मधुविद्यावाक्यशेषे ज्योतिष्यादित्यशब्दः प्रसिद्धः। तर्हि ज्योतिःपिण्डानामेवाधिकारोऽस्तु तत्राह। न चेति। अग्न्यादीनामधिकारमाशङ्क्याह। एतेनेति। अग्निर्वायुर्भूमिः इत्यादिशब्दानामचेतनवाचित्वेनेत्यर्थः। सिद्धान्ती शङ्कते। स्यादेतदित्यादिना। वज्रहस्तः पुरन्दरः इत्यादयो मन्त्राः। सोऽरोदीदित्यादयोऽर्थवादाः।

"इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः"॥

---

* प्रसिध्यन्नर्थो लोकात् प्रसिध्यतीति का॰ वर्ध॰ पु॰ पाठः।

चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति। इतिहासपुराणमपि पौरुषेयत्वात् प्रमाणान्तरमूलतामाकाङ्क्षति। अर्थवादा अपि विधिनैकवाक्यत्वात् स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते। मन्त्रा अपि श्रुत्यादि-विनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते। तस्मादभावो देवादीनामधिकारस्य॥

## भावन्तु बादरायणोऽस्ति हि॥३३॥

तुशब्दः पूर्वपक्षं व्यावर्त्तयति। बादरायणस्त्वाचार्यो भाव-मधिकारस्य देवादीनामपि मन्यते। यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसम्भवोऽधिकारस्य तथाप्यस्ति हि शुद्धा-

---

इत्यादीतिहासपुराणानि। लोकेऽपि यमं दण्डहस्तं लिखन्ति, इन्द्रं वज्रहस्तमिति विग्रहादिपञ्चकस्याभावात् अनधिकारदोषो नास्ती-त्यर्थः।

"विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता।
फलप्रदानमित्येतत् पञ्चकं विग्रहादिकं"॥

मानाभावादेतन्नास्तीति दूषयति। नेत्यादिना। न चात्रेति, विग्रहादावित्यर्थः। अर्थवादा मन्त्रा वा मूलमित्याशङ्क्याह। अर्थवादा इत्यादिना। व्रीह्यादिवत् प्रयोगविधिगृहीता मन्त्राः प्रयोगसम्बन्धा-र्थाभिधानार्था नाज्ञातविग्रहादिपरा इति मीमांसका आचक्षत इत्यर्थः। तस्माद्विग्रहाभावादित्यर्थः॥

सूत्राभ्यां प्राप्तं पूर्वपक्षं निरस्यति। तुशब्द इत्यादिना। ब्रह्मविद्यां देवादीन्नाधिकरोति विद्यात्वात् मध्वादिविद्यावत् इति। उक्तहेतुं प्रयोजकं इत्याह। यद्यपीति। दर्शादिकं न ब्राह्मणमधिकरोति कर्मत्वात् राजसूयादिवदिति आभाससाम्यं विद्यात्वहेतोराह।

यां ब्रह्मविद्यायां सम्भवोऽर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य। न च क्वचिदसम्भव इत्येतावता यत्र सम्भवस्तत्राप्यधिकारोऽपोह्येत, मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः सम्भवति, तत्र योऽन्यायः सोऽत्रापि भविष्यति। ब्रह्मविद्याञ्च प्रकृत्य भवति लिङ्गदर्शनं श्रौतं देवाद्यधिकारस्य सूचकं, तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां *तथा मनुष्याणामिति, ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति, इन्द्रो ह वै देवानामभि प्रवव्राज विरोचनोऽसुराणामित्यादि च। स्मार्त्तमपि च गन्धर्वयाज्ञवल्क्यसंवादादि। यदप्युक्तं ज्योतिषि भावाच्चेति, अत्र ब्रूमः, ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्त्मैश्वर्य्याद्युपेतं तं तं देवात्मानं समर्पयन्ति, मन्त्रार्थवादेषु तथा व्यवहारात्। अस्ति

---

न चेति। यत्र यस्याधिकारः सम्भवति स तत्राधिकारीति न्यायस्तुल्य इत्यर्थः। यतः सर्वेषां सर्वत्राधिकारो न सम्भवति ततो न चापोह्येतेत्यन्वयः। तत् ब्रह्म यो यो देवादीनां मध्ये प्रत्यक्त्वेनाबुध्यत स तत् ब्रह्माभवदित्यर्थः। ते ह देवा ऊचुरन्योन्यं, तत इन्द्रविरोचनौ सुरासुरराजौ प्रजापतिं ब्रह्मविद्याप्रदं जग्मतुरिति च लिङ्गमस्तीत्यर्थः। किमच ब्रह्मामृतमिति गन्धर्वप्रश्ने याज्ञवल्क्य उवाच तमिति मोक्षधर्म्मेषु श्रुतं देवादीनामधिकारलिङ्गमित्याह। स्मार्त्तमिति। यथा बालानां गोलकेषु चक्षुरादिपदप्रयोगेऽपि शास्त्रज्ञैर्गोलकातिरिक्तेन्द्रियाणि स्वीक्रियन्ते, तथा ज्योतिरादौ सूर्य्यादिशब्दप्रयोगेऽपि विग्रह-

---

* तथा मनुष्याणामिति का० वर्ध० पु० नास्ति।

ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टञ्च तं तं विग्रहं ग्रहीतुं सामर्थ्यं। तथा हि श्रूयते। सुब्रह्मण्यार्थवादे मेधातिथेर्मेषेति, मेधातिथिं ह काण्वायनं इन्द्रो मेषो भूत्वा जहारेति। स्मर्यते च, आदित्यः पुरुषो भूत्वा कुन्तीमुपजगामेति। मृदादिष्वपि चेतनाधिष्ठातारोऽभ्युपगम्यन्ते मृदब्रवीदापोऽब्रुवन्नित्यादिदर्शनात्। ज्योतिरादेस्तु भूतधातोरादित्यादिष्वप्यचेतनत्वमभ्युपगम्यते, चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिषु व्यवहारादित्युक्तं। यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति, अत्र ब्रूमः। प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं नान्यार्थत्वमनन्यार्थत्वं वा। तथा ह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णादि

---

वद्देवताः स्वीकार्य्या इत्याह। ज्योतिरादीति। तथा चेतनत्वेन व्यवहारादित्यर्थः। एकस्य जडचेतनोभयरूपत्वं कथं तत्राह। अस्ति हीति। तथा हि विग्रहवत्तया देवव्यवहारः श्रूयते। सुब्रह्मण्य उद्गातृगणस्थः ऋत्विक् तत्सम्बन्धी योऽर्थवाद इन्द्रागच्छेत्यादिः तत्र मेधातिथेर्मेषेतीन्द्रसम्बोधनं श्रुतं तद्व्याचष्टे। मेषेति। मुनिं मेषो भूत्वा जहारेति ज्ञापनार्थं मेषेतीन्द्रसम्बोधनमित्यर्थः। यदुक्तमादित्यादयो मृदादिवदचेतना एवेति तन्न सर्वत्र जडाजडांशद्वयसत्त्वादित्याह। मृदिति। आदित्यादौ को जडभागः कश्चेतनांश इति तत्राह। ज्योतिरादेस्त्विति। मन्त्रादिकं यदंशत्वया भासमानविग्रहादौ स्वार्थे न प्रमाणमन्यपरत्वात्, विषं भुङ्क्ष्वेति वाक्यवत् इत्याह। यदपीति। अन्यपरादपि वाक्यात् बाधाभावे स्वार्थो ग्राह्य इत्याह। अत्र ब्रूम इति। तात्पर्य्यशून्येऽप्यर्थे प्रत्ययमात्रेणास्तित्वमुदाहरति। तथा हीति। तृणादौ

अस्तीत्येवं प्रतिपद्यते। अत्राह विषम उपन्यासः तत्र हि तृण-पर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते। अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादेन पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याध्यवसाययितुं। न हि महावाक्ये प्रत्यायकेऽवान्तरवाक्यस्य पृथक् प्रत्यायकत्वमस्ति, यथा न सुरां पिबेदिति नञ्वति वाक्ये पदत्रयसम्बन्धात् सुरापानप्रतिषेध एवैकोऽर्थो गम्यते न पुनः सुरां पिबेदिति पदद्वयसम्बन्धात् सुरापानविधिरपीति। अत्रोच्यते। विषम उपन्यासः, युक्तं यत् सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणं, विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थक्यवशेन विधिस्तावकत्वं प्रतिपद्यन्ते। यथा हि 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र विध्युद्देशवर्त्तिनां वायव्यादिपदानां विधिना सम्बन्धः, नैवं

---

प्रत्ययोऽस्ति विग्रहादौ स नास्तीति वैषम्यं प्रश्नाते। अत्राहेति। विध्युद्देशो वाक्यं तदेकवाक्यतया प्रशस्तो विधिरित्येवार्थवादेषु प्रत्ययः। वृत्तान्तौ भूतार्थौ, विग्रहादिः तद्विषयः प्रत्ययो नास्तीत्यर्थः। नन्ववान्तरवाक्येन विग्रहादिप्रत्ययोऽस्त्वित्यत आह। न हीति। सुरापानप्रत्ययोऽपि स्यादिति भावः। पदैकवाक्यत्ववाक्यैकवाक्यत्ववैषम्यान्मैवमित्याह। अत्रोच्यत इति। नञ्पदमेकं यदा सुरां पिबेदिति पदाभ्यामन्वेति तदा पदैकवाक्यं एकमेवार्थानुभवं करोति न तु पदद्वयं पृथक् सुरापानं बोधयति तस्य विधौ निषेधानुपपत्तेः वाक्यार्थानुभवं प्रत्यद्वारत्वात्, अर्थवादस्तु भूतार्थसंसर्गस्तुतिद्वार बोधयन् विधिना वाक्यैकवाक्यतां भजत इत्यस्ति विग्रहाद्यनुभव इत्यर्थः। नन्वर्थवादस्य-

वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति इत्येषामर्थवादगतानां पदानां न हि भवति वायुर्वा आलभेत क्षेपिष्ठा देवता वा आलभेतेत्यादि वायुस्वभावसङ्कीर्त्तनेन त्ववान्तरमन्वयं प्रतिपद्य एवं विशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति। तद्यत्र योऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्त्तते। यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन। यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यादाहोस्वित् प्रमाणान्तराविरोधाद्विद्यमानार्थवाद इति प्रतीतिशरणैर्विद्यमानार्थवाद आश्रयणीयो न गुणानुवादः। एतेन मन्त्रो व्याख्यातः। अपि च, विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपं, न हि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं

---

पदानामवान्तरसंसर्गबोधकत्वं विना साक्षादेव विध्यन्वयोऽस्तु तत्राह। यथा हीति। साक्षादन्वयायोगं दर्शयति। न हीति। अर्थवादान् सर्वत्र ग्रहणमाशङ्क्यार्थवादान् विभजते। तद्यत्रेति। तत्रार्थवादेषु यत्राग्निर्हिमस्य भेषजमित्यादावित्यर्थः। आदित्यो यूप इत्यभेदो बाधित इति तेजस्वित्वगुणवादः, यत्र वज्रहस्तः पुरन्दर इत्यादौ मानान्तरसम्वादविसम्वादौ न स्तः तत्र भूतार्थवाद इत्यर्थः, इति विभज्येत्यध्याहारः। विग्रहार्थवादः स्वार्थेऽपि तात्पर्य्यवान् अन्यपरत्वे सत्यज्ञाताबाधितार्थकशब्दत्वात् प्रयाजादिवाक्यवत् इति न्यायं मन्त्रेष्वतिदिशति। एतेनेति। वेदान्तानुवादगुणवादानां निरासाय हेतौ पदानि न चोभयपरत्वे वाक्यभेदोऽवान्तरार्थस्य महावाक्यार्थद्वारत्वादिति भाव। विध्यनुपपत्त्यापि स्वर्गवद्देवताविग्रहोऽङ्गीकार्य्य इत्याह। अपि चेति।

शक्यन्ते। न च चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते। श्रावयति च, यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्निति। न च शब्दमात्रमर्थस्वरूपं सम्भवति शब्दार्थयोर्भेदात्, तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तं। इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि प्रपञ्चयितुं। *प्रत्यक्षमूलमपि सम्भवति। भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षं। तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते। यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति देवादिभिः व्यवहर्तुं सामर्थ्यमिति स जग-

---

ननु लोकात्मके कर्म्मणि विधिः फलं विना ऽनुपपन्न इति भवतु यन्न दुःखेन सम्भिन्नमित्यर्थवादसिद्धः स्वर्गो विधिप्रमापकः विग्रहं विना विधेः कानुपपत्तिस्तामाह। न हीति। उद्दिश्य त्यागानुपपत्त्या चेतस्यारोहोऽङ्गीकार्य्यं इत्यत्र श्रुतिमप्याह। यस्या इति। अतश्चेतस्यारोहार्थं विग्रहो वक्तव्यः। किञ्च कर्म्मप्रकरणपाठात् विग्रहप्रमितिः प्रयाजवत् कर्म्माङ्गत्वेनाङ्गीकार्य्यंता, विना कर्म्मापूर्वासिद्धेः। किञ्च सुप्रसन्नविग्रहवद्देवतां त्यक्त्वा शब्दमात्रं देवतेति भक्तिरयुक्तेत्याह। न च शब्देति। न चाकृतिमात्रं शब्दशक्यमस्तु किं विग्रहेणेति वाच्यं, निर्व्यक्त्याकृत्ययोगात्, अतः शब्दस्यार्थाकाङ्क्षाया मन्त्रादिप्रमितविग्रहोऽङ्गीकार्य्य इत्याह। तत्रेति। एवं मन्त्रार्थवादमूलकमितिहासादिकमपि विग्रहे मानमित्याह। इतिहासेति। प्रमाणत्वेन सम्भवदित्यर्थः। व्यासादीनां योगिनां देवतादिप्रत्यक्षमपीतिहासादेर्मूलमित्याह। प्रत्यक्षेति। व्यासादयो देवादिप्रत्यक्षशून्याः प्राणित्वादस्मदादिवदित्यनुमानमतिप्रसङ्गेन दूषयति।

---

* प्रत्यक्षादीति सो० का० वर्ध० पु० पाठः।

द्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्, ततश्च राजसूयादिचोदना उपरुन्ध्यात्। इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान् वर्णाश्रमधर्मान् प्रतिजानीत ततश्च व्यवस्थाविधायिशास्त्रमनर्थकं कुर्यात्। तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति स्वाध्यायादिष्टदेवतासम्प्रयोग इत्यादि। योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलकः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुं। श्रुतिश्च योगमाहात्म्यं प्रत्याख्यापयति

"पृथ्व्यप्तेजोऽनिलखे समुत्थिते<br>
पञ्चात्मके योगगुणे प्रवृत्ते।<br>
न तस्य रोगो न जरा न मृत्युः<br>
प्राप्तस्य योगाग्निमयं शरीरं" इति॥

ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन

---

यस्त्वित्यादिना। सर्वं घटाभिन्नं वस्तुत्वात् घटवदिति जगद्वैचित्र्यं नास्तीत्यपि स ब्रूयात। तथा क्षत्रियाभावं वर्णाश्रमाभावं वर्णाश्रमाद्यव्यवस्थाञ्च ब्रूयात् निरङ्कुशबुद्धित्वात्। तथा च राजसूयादिशास्त्रस्य कृतादियुगधर्मव्यवस्थाशास्त्रस्य बाध इत्यर्थः। योगसूत्रार्थादपि देवादिप्रत्यक्षसिद्धिरित्याह। अपि चेति। मन्त्रजपात देवसान्निध्यं तत्सम्भाषणं चेति सूत्रार्थ। योगमाहात्म्यस्य श्रुतिस्मृतिसिद्धत्वात् योगिनामस्ति देवादिप्रत्यक्षमित्याह। योग इति। पादतलादाजानोर्जानोरानाभेर्नाभेराग्रीव ग्रीवायाश्चाकेशप्ररोहं ततश्चाब्रह्मरन्ध्रं पृथिव्यादिपञ्चके समुत्थिते धारणजाते योगगुणे चाणिमादिके प्रवृत्ते योगाभिव्यक्तं तेजोमयं शरीरं प्राप्तस्य योगिनो न रोगादिस्पर्श इत्यर्थः। चित्रकारादिप्रसिद्धिरपि विग्रहे मानमित्याह। लोकेति। अधिकरणार्थमुपसंहरति। तस्मादिति। चिन्तायाः फलमाह। श्रु-

सामर्थ्येनोपमातुं युक्तं, तस्मात् समूलमितिहासपुराणं। लोकप्रसिद्धिरपि न सति सम्भवे निरालम्बनाध्यवसातुं युक्ता, तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः। ततश्चार्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्याया-मधिकारः। क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते॥

**शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि॥ ३४॥**

यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्या-स्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्र-स्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्त्तयितुं इदमधिकर-णमारभ्यते। तत्र शूद्रस्याप्यधिकारः स्यादिति तावत् प्राप्तं, अर्थित्वसामर्थ्ययोः सम्भवात्, तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति-

---

मेति। एवमेव देवादीनां ब्रह्मविद्याधिकारे सत्येव देवत्वप्राप्तिद्वारा मुक्तिफलान्युपासनानि युज्यन्ते देवानामनधिकारे ज्ञानाभावात् क्रममुक्त्यर्थिनामुपासनेषु प्रवृत्तिर्न स्यात्, अतोऽधिकारनिर्णयात् प्रवृ-त्तिसिद्धिरिति भाव॥

शुगस्य सूच्यते हि। पूर्वशास्य दृष्टान्तसङ्गतिमाह। यथेति। पूर्वत्र देवादीनां अधिकारसिद्ध्यर्थं मन्त्रादीनां भूतार्थे विग्रहादौ समन्वयोक्त्या वेदान्तानामपि भूतार्थे ब्रह्मणि समन्वयो दृढीकृतः, अत्रापि शूद्रशब्दस्य श्रौतस्य क्षत्रिये समन्वयोक्त्या स दृढीकृत इत्यधि-करणद्वयस्य प्रासङ्गिकस्यास्मिन् समन्वयाध्यायेऽन्तर्भाव इति मन्तव्यं। पूर्वपक्षे शूद्रस्याऽपि द्विजवद्वेदान्तश्रवणे प्रवृत्तिः, सिद्धान्ते तदभाव इति फलं, अत्र वेदान्तविचारो विषय, स किं शूद्रमधिकरोति न वेति सम्भवासम्भवाभ्यां सन्देहे पूर्वपक्षमाह। तत्रं शूद्रस्यापीत्या-दिना। तस्मादनग्नित्वादनवक्लृप्तोऽसमर्थः। विद्यार्थिनि शूद्रशब्दप्रयो-

वत् शूद्रो विद्यायामनवक्लृप्त *इति निषेधाश्रवणात्। यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यास्वधिकारस्यापवादकं। न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते। भवति च लिङ्गं शूद्राधिकारस्योपोद्वलकं, संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति। विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसम्पन्नाः स्मर्य्यन्ते, तस्माद्धिक्रियते शूद्रो विद्यास्वित्येवं प्राप्ते ब्रूमः। न शूद्रस्याधिकारो वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदा-

---

शाल्लिङ्गादपि शूद्रस्याधिकार इत्याह। भवति चेति। जानश्रुतिः किल षट् शतानि गवां रथञ्च रैक्काय गुरवे निवेद्य मां शिक्षयेत्युवाच, ततो रैक्को विधुरः कल्यार्थी सन् इदमुवाच। अहेति निपातः खेदार्थः। हारेण निष्केन युक्त इत्वा गन्ता रथो हारेत्वा स च गोभिः सह हे शूद्र तवैवास्तु किमल्पेनानेन मम गार्हस्थ्यानुपयोगिनेति भावः। अर्थित्वादिसम्भवे श्रेयःसाधने प्रवृत्तिरुचिता स्वाभाविकत्वादिति न्यायोपेताल्लिङ्गादित्याह। तस्मादिति। सूत्राद्बहिरेव सिद्धान्तयति। न शूद्रस्याधिकार इत्यादिना। आपाततो विदितो वेदार्थो येन तस्येत्यर्थः। अध्ययनविधिना संस्कृतो वेदस्तदुत्थमापातज्ञानञ्च वेदार्थविचारेषु शास्त्रीय सामर्थ्यं तदभावात् शूद्रस्यार्थित्वादिसम्भवन्यायासिद्धेर्नास्ति वेदान्तविचाराधिकार इत्यर्थः। यद्वाध्ययनसंस्कृतेन वेदेन विदितो निश्चितो वेदार्थो येन तस्य वेदार्थेषु विधिष्वधिकारो नान्यस्य अनधीतवेदस्याऽपि, वेदार्थानुष्ठानाधिकारेऽध्ययनविधिवैयर्थ्यापातात्। अतः फलपर्य्यन्तब्रह्मविद्यासाधनेषु श्रवणादिविधिषु शूद्रस्यानधिकार इत्यर्थः। अधीतवेदार्थज्ञानवत्त्वरूपस्याध्ययनविधि-

---

* इति चेति से॰ का॰ वर्ध॰ पु॰ पाठः।

र्थेष्वधिक्रियते, न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात्। यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति। शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्। शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात्। यच्चेदं शूद्रो यज्ञेऽनवक्लृप्त इति तत् न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात्। यत् पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे न तल्लिङ्गं, न्यायाभावात्। न्यायोक्तेर्हि लिङ्गदर्शनं द्योतकं भवति, न चात्र न्यायोऽस्ति। का-

---

त्मनस्य सामर्थ्यस्याभावादिति न्यायस्य तुल्यत्वात् यज्ञपदं वेदार्थोपलक्षणार्थमित्याह। न्यायस्य साधारणत्वादिति। तस्माच्छूद्र इत्येतच्छब्दपरामृष्टन्यायस्य यज्ञब्रह्मविद्ययोस्तुल्यत्वादित्यर्थः। पूर्वोक्तं लिङ्गं दूषयति। यदिति। असामर्थ्यन्यायेनार्थित्वादिसम्भवन्यायस्य निरस्तत्वादित्यर्थः। ननु निषादः स्थपतिं याजयेदित्यत्राध्ययनाभावेऽपि निषादशब्दात् निषादस्येष्टाविव शूद्रशब्दात् शूद्रस्य विद्यायामधिकारोऽस्त्वित्याशङ्क्य संवर्गविद्यायामधिकारमङ्गीकरोति। कामम्िति। तद्विषयत्वात् तत्र श्रुतत्वादित्यर्थः। वस्तुतस्तु विधिवाक्यस्थत्वान्निषादशब्दोऽप्यधिकारिसमर्पकः, शूद्रशब्दस्तु विद्याविधिपरार्थवादस्थो नाधिकारिणं बोधयति, असामर्थ्यन्यायविरोधेनान्यपरशब्दस्य स्वार्थबोधित्वासम्भवात् इति मत्वाङ्गीकारं त्यजति। अर्थवादेति। तर्हि शूद्रशब्दस्यात्र श्रुतस्य कोऽर्थ इत्याशङ्क्य सूत्रेणार्थमाह। शुच्यते चेत्यादिना। जानश्रुतिर्नाम राजा निदाघसमये रात्रौ प्रासादतले सुप्वाप, तदा तदीयान्नदानादिगुणगणतोषिता ऋषयोऽस्य हितार्थं हंसा भूत्वा मनोहरमेव तस्योपरि आजग्मुः, तेषु पाश्चात्यो हंसोऽग्रेसरं हंसं उवाच, भो भो भद्राक्ष किं न पश्यसि

मस्यायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात् तद्विषयत्वात् न सर्वासु विद्यासु, अर्थवादस्थत्वात् न तु कचिदप्ययं शूद्रमधिकर्त्तुमुत्सहते। शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुं। कथमित्युच्यते। कं वर एनमेतत् सन्तं सयुग्वानमिव *रैक्कमात्थेत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे तामृषी रैक्कः शूद्रशब्देनानेन सूचयाम्बभूवात्मनः परोक्षज्ञानस्य ख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यते इति, उच्यते, तदा द्रवणाच्छुचमभिदुद्राव शुचा वाभिदुद्रुवे शुचा वा रैक्कमभिदुद्रावेति शूद्रावयवार्थसम्भवात् रूढार्थस्य चासम्भवात्। †दृश्यते चायमर्थोऽस्यामाख्यायिकायां ॥

---

जानश्रुतेरस्य तेजः स्वर्गं व्याप्य स्थितं तत् त्वां धक्ष्यति न गच्छेति, तमग्रेसर उवाच, कमप्येनं वराकं विद्याहीनं सन्तं अरे सयुग्वानं युग्वा गन्त्री शकटी तया सह स्थितं रैक्कमिवैतद्वचनमात्थ। रैक्कस्य हि ब्रह्मिष्ठस्य तेजो दुरतिक्रमं नास्यानात्मज्ञस्येत्यर्थः। अस्मद्वचनात् खलो राजा शकटलिङ्गेन रैक्कं ज्ञात्वा विद्यावान् भविष्यतीति हंसानामभिप्रायः। कं उ अरे इति पदच्छेदः। उशब्दोऽप्यर्थः। तेषां हंसानामनादरवाक्यश्रवणात् अस्य राज्ञः शुगुत्पन्ना, सा शूद्रशब्देन रैक्केन सूच्यते, हीति सूत्रान्वयः। श्रुतयौगिकार्थलाभे सति अनन्वितरूढ्यर्थस्याज्य इति न्यायद्योतनार्थो हिशब्दः। तदाद्रवणात् तया शुचा आद्रवणात्। शूद्रः शोकं प्राप्तवान्। शुचा वा कर्त्र्या राजा अभिदुद्रुवे प्राप्त। शुचा वा करणेन रैक्कं गतवानित्यर्थः ॥

---

* रैकमिति वर्ध० सो० पु० पाठः।

† स्पष्टते इति सो० का० वर्ध० पु० पाठः।

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

इतश्च न जातिशूद्रो जानश्रुतिः, यत्कारणं प्रकरण-*निरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहारात् लिङ्गात् गम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः सङ्कीर्त्यते । अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारी बिभिक्षे इति। चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यं, कापेययोगो हि चैत्ररथस्यावगतः। एतेन वै चैत्ररथं कापेया अयाजयन्निति। †समानान्वययाजिनाञ्च प्रायेण समानान्वया याजका भवन्ति। तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत इति च ‡क्षत्रजातित्वावगमात् क्षत्रियत्वमस्यावगन्तव्यं। तेन क्षत्रियेणाभिप्रतारिणा सह समा-

---

शूद्रशब्दस्य यौगिकत्वे लिङ्गमाह। क्षत्रियत्वेति। संवर्गविद्याविध्यनन्तरमर्थवाद आरभ्यते। शुनकस्यापत्यं कपिगोत्रं पुरोहितमभिप्रतारिनामकं राजानं च कक्षसेनस्यापत्यं सूदेन परिविष्यमाणौ तौ भोक्तुमुपविष्टौ वटुर्भिक्षितवानित्यर्थः। नन्वस्य चैत्ररथित्वं न श्रुतमित्यत आह। चैत्ररथित्वञ्चेति। एतेन द्विरात्रेणेति छान्दोग्यश्रुत्यैव पूर्वं चित्ररथस्य कापेययोग उक्तः। अभिप्रतारिणोऽपि तद्योगात् चित्ररथवंश्यत्वं निश्चीयते। राजवंश्यानां हि प्रायेण पुरोहितवंश्या याजका भवन्तीत्यर्थः। नन्वस्त्वभिप्रतारिणः चैत्ररथित्वं तावता कथं

---

* निरूपणे इति वर्ध० का० सो० पु० पाठः।

† समानान्वययाजिनाञ्चेति उक्त पु० पाठः।

‡ क्षत्रपतित्वेति का० वर्ध० सो० पु० पाठः।

नायां विद्यायां सङ्कीर्त्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति। क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः। अतो न *शूद्रस्याधिकारः॥

## संस्कारपरामर्शात् तदभावाभिलापाच्च॥३६॥

इतश्च न शूद्रस्याधिकारो यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते, तं होपनिन्ये अधीहि भगव इति होपससाद ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुप-

---

क्षत्रियत्वं तत्राह। तस्मादिति। चित्ररथादित्यर्थः। क्षत्ता सूतः तस्य रैक्वान्वेषणाय प्रेषणं, बहुगोदानादिकञ्च जानश्रुतेः क्षत्रियत्वे लिङ्गं। अत्र शूद्रशब्दो यौगिक एवेति न शूद्रस्याधिकार इति स्थितं॥

तत्र लिङ्गान्तरमाह। संस्कारेति। उपनयनं वेदग्रहणाङ्गं शूद्रस्य नास्तीति पूर्वमुक्तं इह विद्याग्रहणाङ्गस्योपनयनसंस्कारस्य सर्वत्र परामर्शात् शूद्रस्य तदभावान्न विद्याधिकार इत्युच्यते। भाष्ये आदिपदेनाध्ययनगुरुशुश्रूषादयो गृह्यन्ते। तं शिष्यमाचार्य उपनीतवानित्यर्थः। नारदोऽपि विद्यार्थी मन्त्रमुच्चारयन् सनत्कुमारमुपगत इत्याह। अधीति। उपदिशेति यावत्। ब्रह्मपरा वेदपारगाः, सगुणब्रह्मनिष्ठाः, परं निर्गुणं ब्रह्मान्वेषमाणाः, एष पिप्पलादः तज्जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य ते भरद्वाजादयः षट् ऋषयः तमुपगता इत्यर्थः। ननु वैश्वानरविद्यायां ऋषीन् राजा अनुपनीयैव विद्यामुवाचेति श्रुतेरनुपनीतस्याप्यस्ति विद्याधिकार इत्यत आह। तानाहेति। ते ह समित्पाणय पूर्वाह्णे प्रतिचक्रमिर इति पूर्ववाक्ये ब्राह्मणा उपनय-

---

* जातिशूद्रस्येति का॰ वर्ध॰ सो॰ प॰ पाठः।

मन्ता इति च तान् ह्यानुपनीयैवेत्यपि प्रदर्शितैवोपनयनप्राप्ति-र्भवति। शूद्रस्य च संस्काराभावोऽभिलप्यते, शूद्रश्चतुर्थो वर्ण एकजातिरित्येकजातित्वस्मरणेन, न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हतीत्यादिभिश्च ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च न शूद्रस्याधिकारो यत् सत्यवचनेन शूद्रत्वाभावे निर्द्धारिते जाबालं गौतम उपनेतुमनुशासितुञ्च प्रवर्त्तते, नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति श्रुतिलिङ्गात् ॥

---

नार्थमागता इति उपनयनप्राप्तिं दर्शयित्वा निषिध्यते। हीनवर्णो-नोत्तमवर्णा अनुपनीयैवोपदेष्टव्या इत्याचारज्ञापनार्थमित्यर्थः। एक-जातिः अनुपनीतः। पातकं अभक्ष्यभक्षणादिकृतं। सत्यकामः किल मृतपितृको जाबालां मातरमपृच्छत् किंगोत्रोऽहमिति, तं मातोवाच भर्तृसेवाव्यग्रतयाहमपि तव पितुर्गोत्रं न जानामि जाबाला तु नामा-हमस्मि सत्यकामो नाम त्वमसीति एतावज्जानामीति, ततः स जाबालो गौतममागत्य तेन किंगोत्रोऽसीति पृष्ट उवाच नाहं गोत्रं वेद्मि न माता वेत्ति परन्तु मे मात्रा कथितं उपनयनार्थमाचार्यं गत्वा सत्य-कामो जाबालोऽस्मीति ब्रूहीति। अनेन सत्यवचनेन तस्य शूद्रत्वाभा-वो निर्धारितः। अस्माद्धस्य एतत् सत्यं विविच्य वक्तुं नार्हतीति नि-र्धार्य, हे सौम्य सत्यात् त्वमागाः सत्यं न त्यक्तवानसि, अतस्त्वामुपनेष्ये तदर्थं समिधमाहरेति ॥

गौतमस्य प्रवृत्तेश्च लिङ्गात् न शूद्रस्याधिकार इत्याह। तद-भावेति ॥

## श्रवणाध्ययनार्थप्रतिषेधात् *स्मृतेश्च ॥ ३८ ॥

इतश्च न शूद्रस्याधिकारो यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधः तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावदथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति, पद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्मात् शूद्रसमीपे नाध्येतव्यमिति च । अत एवाध्ययनप्रतिषेधो यस्य हि समीपेऽपि नाध्येतव्यं भवति स †कथं श्रुतिमधीयीत । भवति ‡चोच्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति । अत एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति । न शूद्राय मतिं दद्यादिति द्विजातीनामध्ययनमिज्या दानमिति च । येषां पुनः पूर्वकृतसंस्कारवशात् विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिबद्धुं, ज्ञानस्यैकान्तिकफलत्वात् । श्रावयेच्चतुरो वर्णानिति चेतिहासपुराणाधिगमे

---

स्मृत्या श्रवणादिनिषेधाच्च नाधिकार इत्याह । श्रवणेति । अस्य शूद्रस्य द्विजैः पठ्यमानं वेदं प्रमादाच्छृण्वतः सीसलाक्षाभ्यां तप्ताभ्यां श्रोत्रद्वयपूरणं प्रायश्चित्तं कार्यमित्यर्थः । पद्यु पादयुक्तं सञ्चरिष्णु रूपमिति यावत् । भवति च स्मृतिरिति शेषः । मतिं वेदार्थज्ञानं । दानं नित्यं निषिध्यते शूद्रस्य नैमित्तिकन्तु दानमस्त्येव । यदुक्तं विदुरादीनां ज्ञानित्वं दृष्टमिति तत्राह । येषामिति । सिद्धानां सिद्धं

---

* स्मृतेश्चेति सो॰ पु॰ पाठः ।

† कथमश्रुतमिति सो॰ वर्ध॰ का॰ पु॰ पाठः ।

‡ वेदोच्चारणे इति उक्त पु॰ पाठः ।

चातुर्वर्ण्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितं॥

## कम्पनात्॥ ३९॥

अवसितः प्रासङ्गिकोऽधिकारविचारः, प्रकृतामेव इदानीं वाक्यार्थविचारणां वर्तयिष्यामः। यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीति। एतद्वाक्यं एजृ कम्पन इति धात्वर्थानुगमात् लक्षितं। अस्मिन् वाक्ये सर्वमिदं जगत् प्राणाश्रयं स्पन्दते। महच्च किञ्चिद्भयकारणं वज्रशब्दितं उद्यतं, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते। तत्र कोऽसौ प्राणः किञ्च तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत् प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति, प्रसिद्धेरेव चाशनिर्वज्रं स्याद्वायोश्चेदं माहात्म्यं संकीर्त्यते। कथं सर्वमिदं जगत् पञ्चवृत्तौ

---

दुरपहरत्वेऽपि साधकैः शूद्रैः कथं ज्ञानं लब्धव्यमित्यत आह। श्रावयेदिति॥

कम्पनात्। अस्यापि प्रासङ्गिकत्वमाशङ्क्याह। अवसित इति। समाप्त इत्यर्थः। काठकं पठति। यदिदमिति। सर्वं जगत् प्राणात् निःसृतं उत्पन्नं प्राणे चिदात्मनि प्रेरके सति एजति चेष्टते, तच्च प्राणाख्यं कारणं महद्ब्रह्म बिभेत्यस्मादिति भयं। तस्मिन् भयहेतुत्वे दृष्टान्तमाह। वज्रमिति। यथोद्यतं वज्रं भयं तथेत्यर्थः। यत्र तत्प्राणाख्यं ब्रह्म निर्विशेषं विदुस्ते मुक्ता भवन्तीत्याह। य इति। नन्वस्मिन् सूत्रे कथमिदं वाक्यमुदाहृतमित्यत आह। एतदिति। एजत्यर्थस्य सूचितत्वात् एजतिपदयुक्तं वाक्यं उदाहृतमित्यर्थः। प्रासङ्गिकाधिकारचिन्तयास्य सङ्गतिर्नापेक्षितेति शब्दादेरप्रमित इत्यनेनोच्यते। तत्राङ्गुष्ठवाक्ये

वायौ प्राणशब्दिते प्रतिष्ठायैजति वायुनिमित्तमेव च महद्भयानकं *वज्रमुत्पद्यते। वायौ हि पर्जन्यभावेन विवर्त्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्त्तन्त इत्याचक्षते। वायुविज्ञानादेव चेदममृतत्वं। तथा हि श्रुत्यन्तरं वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युञ्जयति य एवं वेदेति, तस्माद्वायुरयमिह प्रतिपत्तव्य इत्येवं प्राप्ते ब्रूमः। ब्रह्मैवेदमिह प्रतिपत्तव्यं, कुतः पूर्वोत्तरालोचनात्। पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे, इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि। पूर्वत्र तावत्

"तदेव शुक्रन्तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन"॥ इति।

ब्रह्मनिर्द्दिष्टं तदेवेहापि सन्निधानात् जगत् सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्द्दिष्टमिति गम्यते। प्राणशब्दो

---

जीवानुवादो ब्रह्मैक्यज्ञानार्थ इत्युक्तं, न तथेह प्राणानुवाद ऐक्यज्ञानार्थः सम्भवति, प्राणस्वरूपेण कल्पितस्यैक्यायोगात्, अतः प्राणोपास्तिपरं वाक्यमिति प्रत्युदाहरणेन पूर्वपक्षयति। प्रसिद्धेः पञ्चवृत्तिरिति। नन्वत एव प्राण इत्यादौ ब्रह्मणि लिङ्गात् प्राणश्रुतिर्नीता, अत्रापि सर्वचेष्टाभयहेतुत्वं ब्रह्मलिङ्गमस्तीति नास्ति पूर्वपक्षावसरो गतार्थत्वादित्यत आह। वायोश्चेति। प्रतिष्ठाय स्थितिं लब्ध्वा प्राणे वायौ निमित्ते जगच्चलतीति प्रसिद्धं, अतः स्पष्टं ब्रह्मलिङ्गं नास्तीति भावः। वज्रलिङ्गाच्च वायुरित्याह। वाय्विति। व्यष्टिर्विशेषः समष्टिः सामान्यं। सूत्राद्बहिरेव सिद्धान्तं प्रतिजानीते। ब्रह्मैवेति। पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं सर्वाश्रयत्वं लिङ्गं वाक्यभेदकप्राण-

---

* वज्रमुद्यम्यते इति का० सो० वर्ध० पु० पाठः।

ऽप्ययं परमात्मन्येव प्रयुक्तः, प्राणस्य प्राणमिति दर्शनात्, एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य, तथाचोक्तं,

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरे न तु जीवन्ति यस्मिन्नेतावुपाश्रितौ"॥ इति।

उत्तरत्रापि,

"भयादस्याग्निस्तपति भयात्तपति सूर्य्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः"॥ इति।

ब्रह्मैव निर्द्दिश्यते न वायुः, सवायुकस्य जगतो भयहेतुत्वाभिधानात् तदैवेहापि सन्निधानात् महद्भयं वज्रमुद्यतमिति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते। वज्रशब्दोऽप्ययम्भयहेतुत्वसामान्यात् प्रयुक्तः, यथा हि वज्रमुद्यतं ममैव शिरसि निपतेत् यद्यहमस्य शासनं न कुर्य्यामित्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्त्तते। एवमिदमग्निवायुसूर्य्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्त्तते इति भयानकं वज्रोपमितं ब्रह्म। तथा च ब्रह्मविषयं श्रुत्यन्तरं,

"भीषास्माद्वातः पवते भीषोदेति सूर्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः"॥

---

श्रुतेर्बाधकमित्याह। पूर्वत्रेत्यादिना। सुक्तं स्वप्रकाशं। तद्‌ नात्येति ब्रह्मानाश्रितः कोऽपि लोको नास्त्येवेत्युकारार्थः। लौकिकलिङ्गं व्याचष्टे। एजयितृत्वमिति। सवायुकस्य सर्वस्य कम्पनश्रवणादपि प्राणः परात्मैवेत्यर्थः। ब्रह्मणि वज्रशब्दः कथमित्याशङ्क्य गौणमित्याह। वज्रशब्द इति। बृहदारण्यके वायुरेव व्यष्टिरित्यत्रापपुनर्मृत्युमिति अपमृत्युजयरूपमापेक्षिकममृतत्वमुच्यते न मुख्यामृतत्वं। तत्रैव वाय-

इत्यमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते । ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति मन्त्रवर्णात् । यत्तु वायुविज्ञानात् क्वचिदमृतत्वमभिहितं तदापेक्षिकं तत्रैव प्रकरणान्तरकरणेन परमात्मानमभिधाय अतोऽन्यदार्तमिति वाय्वादेरार्त्तत्वाभिधानात् । प्रकरणादप्यत्र परमात्मनिश्चयः ।

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।
अन्यत्र भूताद् भव्याच्च यत् तत्पश्यसि तद्वद" ॥

इति परमात्मनः पृष्टत्वात् ॥

ज्योतिर्दर्शनात् ॥ ४० ॥

एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते, तत्र संशय्यते किं ज्योतिःशब्दं चक्षुर्विषयं तमोऽपहं तेजः किं वा परं ब्रह्मेति,

---

पास्तिप्रकरणं समाप्याथ हैनमुषस्तः पप्रच्छेति ज्ञेयात्मानमुक्त्वा वाय्वादेर्नाशित्वोक्तेरित्याह । यत्तु वाय्वित्यादिना । तस्मात् काठकवाक्यं ज्ञेये समन्वितमिति सिद्धं ॥

ज्योतिर्दर्शनात् । छान्दोग्ये प्रजापतिविद्यावाक्यमाह । एष इति । परंज्योति-श्रुतिभ्यां संशयमाह । तत्रेति । घटादिविषयावरकतमोनाशकं सौरमित्यर्थः । पूर्वत्र ब्रह्मप्रकरणस्यानुग्राहकः सर्वशब्दसङ्कोचायोगोऽस्तीति । प्राणश्रुतिर्ब्रह्मणि नीता, न तथात्र य आत्मापहतपाप्मेति प्रकरणस्यानुग्राहकं पश्याम इति प्रत्युदाहरणेन पूर्वपक्षतामाह । प्रसिद्धमेवेत्यादिना । पूर्वपक्षे सूर्योपास्तिः सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलं । ननु ज्योतिरधिकरणे ज्योतिःशब्दस्य ब्रह्मणि इष्टत्वात् कथं पूर्वपक्ष इत्यत आह । ज्योतिरिति । तत्र गायत्रीवाक्ये

किं तावत् प्राप्तं, प्रसिद्धमेव तेजो ज्योतिःशब्दमिति, कुतः तत्र ज्योतिःशब्दस्य रूढत्वात्। ज्योतिश्चरणाभिधानादित्यत्र हि *प्रकरणात् ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते। न चेह तद्वत् किञ्चित् स्वार्थपरित्यागे कारणं दृश्यते। तथा च नाडीखण्डे, अथ यत्रैतदस्मात् शरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमत इति मुमुक्षोरादित्यप्राप्तिरभिहिता, तस्मात् प्रसिद्धमेव तेजो ज्योतिःशब्दवाच्यमिति, एवं प्राप्ते ब्रूमः। परमेव ब्रह्म ज्योतिःशब्दं, कस्माद्दर्शनात्। तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते। य आत्मापहतपाप्मेत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रति-

---

प्रकृतब्रह्मपरामर्शकयच्छब्दसामानाधिकरण्यात् स्वार्थत्यागः कृतस्तथात्र स्वार्थत्यागे हेत्वदर्शनात् पूर्वपक्ष इत्यर्थः। ज्योतिःश्रुतेरनुग्राहकत्वेनार्चिरादिमार्गस्थत्वं लिङ्गमाह। तथा चेति। ता वा एता हृदयस्य नाड्यः कपिलकमालादीनां रश्मीनाञ्च मिथःसंश्लेषमुक्ता अथ संसारोपानन्तरं यत्र काले एतन्मरणं यथा स्यात्तथोत्क्रामति अथ तदा एतैर्नाडीसंश्लिष्टरश्मिभिरूर्द्ध्वं सन्नुपरि गच्छति, गत्वादित्यं ब्रह्मलोकद्वारभूतं गच्छति इत्यभिहितं, तथैवात्रापि शरीरात् समुत्थाय गत्वा परं ज्योतिरादित्याख्यमुपसम्पद्य तद्द्वारा ब्रह्मलोकं गत्वा स्वस्वरूपेणाभिनिष्पद्यत इति वक्तव्यं। समुत्थायोपसम्पद्येति क्त्वाश्रुतिभ्यां ज्योतिषोऽर्चिरादिमार्गस्थत्वभानादित्यर्थः। अतो मार्गस्थसूर्योपास्त्या क्रममुक्तिपरं वाक्यमिति प्राप्ते सिद्धान्तयति। एवमिति। व्याख्येयत्वेनोपक्रान्त आत्मैवात्र ज्योतिःशब्देन व्याख्येय इति ज्योतिर्वाक्येनैकवाक्यता प्रयोजकप्रकरणानुगृहीता, उत्तमपुरुषश्रुत्या वाक्यभेदैक-

---

* कारणादिति सो॰ वर्ध॰ का॰ पु॰ पाठः।

ज्ञानादेतन्त्वेव ते भूयोऽनुव्याख्यास्यामीति चानुसन्धानात्, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति च अशरीरतायै ज्योतिःसम्पत्तेरस्याभिधानात् ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः, परं ज्योतिः स उत्तमः पुरुष इति च विशेषणात्। यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति, न चासावात्यन्तिको मोक्षो गत्युत्क्रान्तिसम्बन्धात्। न हि आत्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ ४१॥

आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तत् ब्रह्म तदमृतं स आत्मेति श्रूयते। तत् किमाकाशशब्दं परं ब्रह्म किं वा प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो

---

ज्योति श्रुतिर्बाध्येति भावः। अशरीरत्वफललिङ्गात् ब्रह्मैव ज्योतिर्न सूर्य इत्याह। अशरीरमिति। न च सूर्यप्राप्त्या क्रमेणाशरीरत्वं स्यादिति वाच्य, परत्वेन विशेषितस्य ज्योतिष एव स उत्तम इति परामर्शेनाशरीरत्वनिश्चयादित्याह। परमिति। पूर्वोक्तलिङ्गं दूषयति। यत्त्विति। नाडीखण्डे दहरोपासकस्य या सूर्यप्राप्तिरुक्ता स नामाक्षर इति युक्ता सूर्योक्तिः, अत्र तु प्रजापतिवाक्ये निर्गुणविद्यायामर्चिरादिगतिस्थसूर्यस्यानन्वयादनर्थकत्वात् श्रुतिव्यत्यासेन स्वरूपं साक्षात्कृत्य परं ज्योतिस्तदेवोपसम्पद्यत इति व्याख्येयमिति भावः।

आकाशो व्यपदेशात्। छान्दोग्यमुदाहरति। आकाश इति। यथोपक्रमबलात् ज्योति श्रुतिबाधस्तथाकाशोपक्रमात् ब्रह्मादिशब्दबाध इति दृष्टान्तेन पूर्वपक्षयति। भूतेति। भूतैर्गुणैराकाशोपात्तिनिर्गुण-

युक्तः, आकाशशब्दस्य तस्मिन् रूढत्वात्, नामरूपनिर्वहणस्य चावकाशदानद्वारेण तस्मिन् योजयितुं शक्यत्वात्। स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणात् इत्येवं प्राप्त इदमभिधीयते। परमेव ब्रह्मेहाकाशशब्दं भवितुमर्हति, कस्मात्, अर्थान्तरत्वादिव्यपदेशात्, ते यदन्तरा तद्ब्रह्मेति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति। न च ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं सम्भवति, सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात्। नामरूपयोरपि निर्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत्र सम्भवति। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ब्रह्मकर्तृत्वश्रवणात्। ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति। वाढमस्ति अभेदस्त्वत्र विवक्षितः। नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति। तत्

---

ब्रह्मज्ञानं चेदुभयत्र फलं। आकाशस्तल्लिङ्गादित्यनेन पौनरुक्त्यमाशङ्क्य तदत्र स्पष्टलिङ्गाश्रवणादिति परिहरति। स्रष्टृत्वादेश्चेति। वै नामेति प्रसिद्धिलिङ्गाभ्यामाकाशश्रुतेश्च वाक्यशेषगताभ्यां ब्रह्मात्मश्रुतिभ्यामनेकलिङ्गोपेताभ्यां बाधो युक्तः। यत्र बहुप्रमाणसंवादस्तत्र वाक्यस्य तात्पर्यमिति निर्णयादिति सिद्धान्तयति। परमेवेत्यादिना। नामरूपे शब्दार्थौ, तदन्तःपातिनस्तद्भिन्नत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः। नामादिकर्तृत्वं न ब्रह्मलिङ्गं जीवस्यत्वादिति शङ्कते। नन्विति। अनेन जीवेनेत्यत्र जीवस्य ब्रह्माभेदेन कर्तृत्वमुच्यते साक्षादयोगादिति परिहरति। वाढमिति। यच्चोक्तं स्पष्टं लिङ्गं नास्तीति तत्राह। नामेति। तर्हि पुनरुक्तिस्तत्राह। आकाशेति। तस्यैव साधकोऽयं

ब्रह्म तदमृतं स आत्मेति च ब्रह्मवादस्य लिङ्गानि। आकाश-स्तल्लिङ्गादित्यस्यायं प्रपञ्चः॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन॥ ४२॥

व्यपदेशादित्यनुवर्तते, बृहदारण्यके षष्ठे प्रपाठके कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः। तत् किं संसारिस्वरूपमात्रान्वाख्यानपरं वाक्यमुतासंसारिस्वरूपप्रतिपादनपरमिति *विषयः, किं तावत् प्राप्तं संसारिस्वरूपमात्रविषयमेवेति। कुतः, उपक्रमोपसंहाराभ्यां। उपक्रमे योऽयं विज्ञानमयः प्राणेष्विति शारीरलिङ्गात्, उपसंहारे च स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेष्विति तदपरित्यागान्मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादित्येवं प्राप्ते ब्रूमः। परमेश्वरोपदेशपरमेवेदं वाक्यं न शारीरमात्रान्वाख्यानपरं, क-

---

विकारः। अत्राकाशशब्दस्य ब्रह्मणि वृत्तिं सिद्धवत्कृत्य तत्र संशयादिप्रवृत्तेरुक्तत्वादिति न पौनरुक्त्यमिति भावः॥

सुषुप्त्युत्क्रान्त्योर्भेदेन। षष्ठाध्यायेषु कतम आत्मेति जनकप्रश्ने याज्ञवल्क्य आह। योऽयमिति। विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः, सप्तमी व्यतिरेकार्था प्राणबुद्धिभ्यां भिन्न इत्यर्थः। वृत्तेरज्ञानाच्च भेदमाह। अन्तर्ज्योतिरिति। पुरुषः पूर्ण इत्यर्थः। उभयलिङ्गानां दर्शनात् संशयमाह। तत् किमिति। पूर्वत्र नामरूपाभ्यां भेदोक्तेराकाशो ब्रह्मेत्युक्तं तदयुक्तं, प्राज्ञेनात्मना सम्परिष्वक्त इति अभिन्नेऽपि जीवात्मनि भेदोक्तिवदौपचारिकभेदोक्तिसम्भवादित्याक्षेपसङ्गतिः। पूर्व-

---

* विषयस्थाने संशय इति वर्ध० पु० पाठः।

श्यात्, सुषुप्त्युत्क्रान्त्योश्च शारीरात् भेदेन परमेश्वरस्य व्यपदेशात्। सुषुप्तौ तावदयं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति शारीराद्भेदेन परमेश्वरं व्यपदिशति। तत्र पुरुषः शारीरः स्यात्तस्य वेदितृत्वात् बाह्याभ्यान्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसम्भवात्। प्राज्ञः परमेश्वरः, सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् तथोत्क्रान्तावयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्ज्जन् यातीति जीवाद्भेदेन *व्यपदेशात् परमेश्वरं व्यपदिशति, तत्रापि शारीरो जीवः स्यात् शरीरस्वामित्वात्। प्राज्ञस्तु स एव परमेश्वरः, तस्मात् सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् परमेश्वर एवात्र विवक्षित इति गम्यते। यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात् तत्परत्वमस्य वाक्यस्येति, अत्र ब्रूमः। उपक्रमे तावत् योऽयं विज्ञानमयः प्राणेष्विति न संसारिस्वरूपं विवक्षितं,

---

पक्षे कर्म्मकर्तृजीवस्तुतिः सिद्धान्ते जीवानुवादेन ततः कल्पितभेदभिन्नस्य प्राज्ञस्य परमात्मनः स्वरूपैक्यप्रमितिरिति फलं, बुद्धान्तो जाग्रदवस्था। आदिमध्यावसानेषु जीवोक्तेर्जीवस्तावकमिदं वाक्यमिति प्राप्ते सिद्धान्तयति। परमेश्वरेत्यादिना। वाक्यस्य जीवस्तावकत्वे जीवाद्भेदेन प्राज्ञस्याज्ञातस्योक्तिरसङ्गता स्यात्, अतो ज्ञाताज्ञातसन्निपाते ज्ञातानुवादेनाज्ञातं प्रतिपादनीयं अपूर्वे वाक्यतात्पर्यमिति न्यायादिति सिद्धान्ततात्पर्यं। पुरुषः शरीरं प्राज्ञो जीव इति भ्रान्तिं वारयति। तत्र पुरुष इत्यादिना। देहस्य वेदनाप्रसक्तेर्निषेधायोगात् पुरुषो जीव एव, प्राज्ञस्तु रूढ्या पर एवेत्यर्थः। अन्वारूढोऽधिष्ठितः, उत्सर्ज्जन्

---

* व्यपदेशादिति वर्ध० का० पु० नास्ति।

शोकान् हृदयस्य भवतीति च, तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यं ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यं। यदस्मिन् वाक्ये पत्यादिशब्दा असंसारिस्वरूपप्रतिपादनाः संसारिस्वरूपप्रतिषेधनाश्च भवन्ति। स सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरित्येवंजातीयका असंसारिस्वभावप्रतिपादनपराः। स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानित्येवंजातीयकाः संसारिस्वभावप्रतिषेधनपरास्तस्मादसंसारी परमेश्वर इहोक्त इति गम्यते ॥ * ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ प्रथमाध्यायस्य तृतीयः पादः ॥ * ॥

---

स्तावप्यात्मतत्त्वं पुण्यपापाभ्यामस्पृष्टं भवति। हि यस्मात् आत्मा सुप्तौ सर्वशोकातीतः तस्मात् हृदयस्यैव सर्वशोका इति श्रुत्यर्थः ॥

वाक्यस्य ब्रह्मात्मैक्यपरत्वे हेत्वन्तरमाह। पत्यादीति। सूत्रं व्याचष्टे। इतश्चेति। वशी स्वतन्त्रोऽपराधीन इति यावत्। ईशानो नियमनशक्तिमान्। शक्तेः कार्यमाधिपत्यमिति भेदः। तस्माच्छोधितत्वमर्थैक्ये षष्ठाध्यायसमन्वय इति सिद्धं ॥ * ॥

इति श्रीमच्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमा-

[illegible]

ॐ नमः परमात्मने।

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तं जन्माद्यस्य यत इति, तल्लक्षणं प्रधानस्यापि समानमित्याशङ्क्य तदशब्दत्वेन निराकृतमीक्षतेर्नाशब्दमिति, गतिसामान्यञ्च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन। इदन्त्विदानीमवशिष्टमाशङ्क्यते। यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धं, कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात्। अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिल-

ॐ ब्रह्मणे नमः।

अव्यक्तोत्थमजं यज्जगदाधारं च कारणं ॥
वेदितव्य प्रिय वन्दे प्रकृतिं पुरुष परं ॥ १ ॥

*अस्मिन् पादेऽधिकरणत्रयस्येक्षत्यधिकरणेन सङ्गतिं वक्तुं वृत्तमनुवदति। ब्रह्मेति। तदशब्दत्वेन प्रधानस्य वैदिकशब्दशून्यत्वेनेत्यर्थः। ईक्षत्यधिकरण गतिसामान्यमशब्दत्वञ्च प्रतिज्ञात, तत्र ब्रह्मणि वेदान्ताना गतिसामान्यं प्रपठित, अधुना प्रधानस्याशब्दत्वमसिद्धमित्याशङ्क्य निरूप्यत इत्याक्षेपसङ्गति। तेनाशब्दत्वनिरूपणेन ब्रह्मणि वेदान्ताना समन्वयो दृढीकृतो भवतीत्यध्यायसङ्गतिरप्यधिकरणत्रयस्य ज्ञेया। अत्राव्यक्तपदं विषय'। तत् किं प्रधानपरं पूर्वाश्रयस्य यथा शरीरपरं वेति स्मृतिप्रकरणाभ्यां संशये पूर्वमप्रसिद्धब्रह्मपरत्व यथा

* आनुमानिकमिति मो० पु० वर्त्तते।

प्रभृतिभिः परिगृहीतमिति प्रगम्यते। तद्यावत्तेषां शब्दानामन्यपरत्वं न प्रतिपाद्यते, तावत् सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुलीभवेत्, अतस्तेषामन्यपरत्वं दर्शयितुं परः सन्दर्भः प्रवर्तते। आनुमानिकमपि अनुमाननिरूपितमपि प्रधानमेकेषां शाखिनां शब्दवदुपलभ्यते। काठके हि पठ्यते, महतः परमव्यक्तमव्यक्तात् पुरुष पर इति। तत्र य एव यन्नामानो यत्क्रमकाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धास्त एवेह प्रत्यभिज्ञायन्ते, तत्राव्यक्तमिति स्मृतिप्रसिद्धेः शब्दादिहीनत्वाच्च न व्यक्तमव्यक्तमिति व्युत्पत्तिसम्भवात् स्मृतिप्रसिद्ध प्रधानमभिधीयतेऽतस्तस्य शब्दवत्त्वादशब्दत्वमनुपपन्न, तदेव च जगतः कारणं, श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेत्, नैतदेवं। न ह्येतत्काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरं। न ह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं

---

षष्ठाध्यायस्य दर्शितं तदव्यक्तपदमप्रसिद्धप्रधानपरमिति पूर्वपक्षयति। आनुमानिकमिति। अपिशब्दात् ब्रह्माङ्गीकारेणायमशब्दत्वाक्षेप इति सूचयति। तथा च ब्रह्मप्रधानयोर्विकल्पेन कारणत्वात् ब्रह्मण्येव वेदान्ताना समन्वय इति नियमासिद्धि फलं सिद्धान्ते नियमसिद्धिरिति विवेक। पदविचारत्वादधिकरणानामेतस्मादसङ्गतिर्बोध्या, स्मार्त्तक्रमरूढिभ्या अव्यक्तशब्द प्रधानपर। शब्दस्पर्शादिशून्यत्वेन योगसम्भवाच्चेत्याह। शब्दादीति। प्रधानस्य वैदिकशब्दवाच्यत्वे का क्षतिरित्यत आह। तदेवेति। अजामेकामित्याद्या श्रुति, हेतु प्रकृतिरुच्यते इत्याद्या स्मृति, यदल्प तज्जडप्रकृतिकमितिन्याय, ततो प्रधानैव कारणमिति मतत्रितिरिति भाव। सूत्रे नञर्थं

प्रधानं तादृशं प्रत्यभिज्ञायते, शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते, स च शब्दो न व्यक्तमव्यक्तमिति यौगिकत्वादन्यस्मिन्नपि सूक्ष्मे दुर्लक्ष्ये च प्रयुज्यते, न चायं कस्मिंश्चिद्रूढः। या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते। न च क्रममात्रसामान्यात् समानार्थप्रतिपत्तिर्भवत्यसति तद्रूपप्रत्यभिज्ञाने। न ह्यश्वस्थाने गां पश्यन्नश्वोऽयमित्यमूढोऽध्यवस्यति। प्रकरणनिरूपणायां चात्र न परपरिकल्पितं प्रधानं प्रतीयते, शरीररूपकविन्यस्तगृहीतेः। शरीरं ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्देन

---

वदन् सिद्धान्तयति। नैवदिति। प्रधानं वैदिकं नेत्यत्र तात्पर्याभावहेतुमाह। न हीति। ननु प्रधानस्यात्र प्रत्यभिज्ञानाद्वैदिकत्वमित्यत आह। न ह्यत्रेति। ननु शब्दप्रत्यभिज्ञायामर्थोऽपि प्रत्यभिज्ञायत इत्याशङ्क्य यौगिकाच्छब्दादसति नियामके नार्थविशेषधीरित्याह। स चेति। रूढ्या तद्धीरित्याशङ्क्य रूढिः किं लौकिकी स्मार्ता वा, नाद्य इत्याह। न चेति। द्वितीयं प्रत्याह। या त्विति। पुरुषसङ्केतो नानादिवेदार्थनिर्णयहेतुः, पुंमतेर्विचित्रत्वादित्यर्थः। यत्तु स्मार्तक्रमप्रत्यभिज्ञया क्रमिकार्थः स्मार्त एवेति तत्राह। न च क्रमेति। स्थानात् तद्रूपप्रत्यभिज्ञानशङ्कायामसतीत्यनन्वयान्नञो व्यत्यासेनातद्रूपस्य तद्रूपविरुद्धस्य प्रत्यभिज्ञाने सतीत्यर्थः। पूर्वज्ञातरूपार्थस्य स्थाने तद्विरुद्धार्थज्ञाने सति तस्य धीर्नास्तीत्यत्र दृष्टान्तमाह। न हीति। प्रकृते नास्ति विरुद्धज्ञानमित्याशङ्क्य प्रकरणाच्छरीरज्ञानमस्तीत्याह। प्रकरणेति। शरीरमेव रूपकेण रथसादृश्येन विन्यस्तं शरीररूपकविन्यस्तं, तस्य पूर्ववाक्यात्मबुद्धोर्मध्यस्थानपतितस्यात्रापि मध्यस्थेनाव्यक्तशब्देन ग्रहणात् प्रधानस्य वैदिकत्वमिति सूत्रार्थः। स्मार्तक्रमं किमिति त्यक्त्वा इत्या

।रिगृह्यते। कुतः प्रकरणात् परिशेषाच्च। तथा ह्यनन्तरातीते
ान्थ आत्मशरीरादीनां रथिरथादिरूपकक्लृप्तिं दर्शयति।

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" ॥ इति।

तैश्चेन्द्रियादिभिरसंयतैः संसारमधिगच्छति। संयतैस्त्वध्वनः
पारं तद्विष्णोः परमं पदमाप्नोतीति दर्शयित्वा, किं तदध्वनः
पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायां तेभ्य एव प्रकृ-
तेभ्य इन्द्रियादिभ्यःपरत्वेन परमात्मानमध्वनः पारं तत् विष्णोः
परमं पदं दर्शयति॥

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः"॥इति॥

---

गृह्य श्रौतक्रमस्य प्रकरणाद्यनुग्रहेण बलवत्त्वादित्याह। कुत इत्या-
दिना। तदुभयं विवृणोति। तथा हीति। रूपकक्लृप्तिः सादृश्यकल्पना।
प्रग्रहोऽश्वरसना। यदा बुद्धिसारथिर्विवेकी तदा मनसेन्द्रियहयान्
विषमविषयमार्गादाकर्षति। यद्यविवेकी तदा मनोरसनाबद्धांस्तान् प्र-
वर्तयतीति मनसः प्रग्रहत्वं युक्तं। तेषु हयेषु, गोचरान् मार्गान्। ननु
स्वतश्चिदात्मनो भोगसम्भवात् किं रथादिनेत्यत आह। आत्मेति। आत्मा
देहः, देहादिसङ्कल्पनया भोक्तृत्वं न स्वतोऽसङ्गत्वादित्यर्थः। अधुना

तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन प्रकृतास्त एवेह परिगृह्यन्ते। प्रकृतहानाप्रकृतप्रक्रियापरिहाराय। तत्रेन्द्रियमनोबुद्धयस्तावत् पूर्वत्रेह च समानशब्दा एव, अर्थास्तु ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टास्तेषां चेन्द्रियेभ्यः परत्वं इन्द्रियाणां च ग्रहत्वं विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेः विषयेभ्यस्य मनसः परत्व, मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य, मनसस्तु परा बुद्धिः, बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति, बुद्धेरात्मा महान् परो यः स आत्मानं रथिनं विद्धीति रथित्वेनोपक्षिप्तः, कुतः, आत्मशब्दात् भोक्तुश्च भोगोपकरणात् परत्वोपपत्तेः। महत्त्वं चास्य स्वामित्वादुपपन्नं। अथ वा,

"मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः।
प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते" ॥ इति स्मृतेः।

---

रथादिभिर्गन्तव्यं वदन् आकाङ्क्षापूर्वकमुत्तरवाक्यमादत्ते। तैश्चेत्यादिना। शरीरस्य प्रकृतत्वेऽपि अव्यक्तपदेन प्रधानं गृह्यतामित्यत आह। तत्र य एवेति। एवं प्रकरणं शोधयित्वा शरीरस्य परिशेषतामानयति। तत्रेन्द्रियेत्यादिना। अर्थानां पूर्वमनुक्तिशङ्कां वारयन् परत्वमुपपादयति। अर्था इति। गृह्णन्ति पुरुषपशुं बध्नन्तीति ग्रहा इन्द्रियाणि। तेषां ग्रहत्वं विषयाधीनं। असति विषये तेषामकिञ्चित्करत्वात्, ततो ग्रहेभ्यः श्रेष्ठा अतिग्रहा विषया इति बृहदारण्यके श्रवणात्। परत्वं श्रैष्ठ्याभिप्रायं, न त्वान्तरत्वेनेति भावः। सविकल्पकं ज्ञानं मनः, निर्विकल्पकं निश्चयात्मिका बुद्धिः, आत्मशब्दात् स एव बुद्धेः परः, प्रत्यभिज्ञायत इति शेषः। हिरण्यगर्भाभेदेन ब्रह्मादिपदवेद्यां समष्टिं महानित्याह। अथवेति। मननशक्तिर्व्यापिनी भाविनिश्चयः

"यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै"। इति च श्रुतेः।

या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परमा प्रतिष्ठा सेह महानात्मेत्युच्यते। सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुक् इहोपदिश्यते, तस्या अपि अस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः। एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यं, परमार्थतस्तु परमात्मविज्ञानात्मनोर्भेदाभावात्। तदेवं शरीरमेवैकं परिशिष्यते, तेषु इतराणीन्द्रियादीनि प्रकृतान्येव परमपदं दिदर्शयिषया समनुक्रामन् परिशिष्यमाणेनेहानेनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते। शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः शरीरादीनां रथादिरूपककल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिरिह विवक्षिता। तथा च,

"एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"॥ इति।

---

ब्रह्मा व्यात्मा भोग्यवर्गाश्रयः तात्कालिकनिश्चयः कीर्तिशक्तिः नियमनशक्तिः त्रैकालनिश्चयः संविदभिव्यञ्जिका चिदध्यस्तातीतसर्वार्थग्राहिणी समष्टिबुद्धिरित्यर्थः। हिरण्यगर्भस्येयं बुद्धिरस्तीत्यत्र श्रुतिमाह। य इति। नन्वप्रकृता सा कथमुच्यते तदुक्तौ च प्रधानेन किमपराद्धमित्यत आह। सा चेति। हिरुक् पृथक्। पूर्वं व्यष्टिबुद्ध्यभेदेनोक्तात्र ततो भेदेन परत्वमुच्यत इत्यर्थः। तर्हि रथरथिनौ द्वौ

सत्यापद्येत। अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमादिति। अत्रोच्यते, यदि वयं स्वतन्त्रां कां चित् प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम प्रसञ्जयेम तदा प्रधानकारणवादं परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतन्त्रा। सा चावश्यमभ्युपगन्तव्या अर्थवती हि सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः। मुक्तानाञ्च पुनरनुत्पत्तिः, विद्यया तस्या बीजशक्तेर्दाहात्। अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः। तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टं, एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति श्रुतेः। क्वचिदक्षरशब्दोदितं, अक्षरात् परतः पर इति श्रुतेः। क्वचिन्मायेति सूचितं, मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति मन्त्र-

---

ता तन्नियम्यत्वाङ्गीकारान्नापसिद्धान्तमित्याह। अत्रोच्यत इत्यादिना। कूटस्थब्रह्मणः स्रष्टृत्वसिद्ध्यर्थं अविद्या स्वीकार्येत्युक्तं बन्धमुक्तिव्यवस्थार्थमपि सा स्वीकार्येत्याह। मुक्तानामिति। यन्नाशान्मुक्तिः सा स्वीकार्या तां विनैव सृष्टौ मुक्तानां पुनर्बन्धापत्तिरित्यर्थः। तस्याः परकल्पितसत्यस्वतन्त्रप्रधानाद्वैलक्षण्यमाह। अविद्यादिना। मयामयी प्रसिद्धमायोपमिता लोके मायाविनो मायावत् परतन्त्रेत्यर्थः। जीवभेदोपाधित्वेनापि सा स्वीकार्येत्याह। महासुषुप्तिरिति। बुद्ध्याद्युपाधिभेदाज्जीवा इति बहूक्ति.। अविद्याया श्रुतिमप्याह। तदेतदिति। आकाशहेतुत्वादाकाशः। ज्ञानं विना अन्ताभावादक्षर। विचित्रकारित्वान्मायेति भेदः

वर्णात्। अव्यक्ता हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्। तदिदं महतः परमव्यक्तमित्युक्तं अव्यक्तप्रभवत्वान्महतः, यदा हैरण्यगर्भी बुद्धिर्महान्, यदा तु जीवो महांस्तदाप्यव्यक्ताधीनत्वाज्जीवभावस्य महतः परमव्यक्तमित्युक्तं। अविद्या ह्यव्यक्तं, अविद्यावत्त्वे च जीवस्य सर्वः संव्यवहारः सन्ततो वर्तते। तच्चाव्यक्तगतं महतः परत्वमभेदोपचारात् तद्विकारे शरीरे परिकल्प्यते। सत्यपि शरीरवदिन्द्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैवाभेदोपचाराद्व्यक्तशब्देन ग्रहणं इन्द्रियादीनां स्वशब्दैरेव गृहीतत्वात्, परिशिष्टत्वाच्च शरीरस्य। अन्ये तु वर्णयन्ति, द्विविधं हि शरीरं स्थूलं सूक्ष्मञ्च। स्थूलं यदिदमुपलभ्यते। सूक्ष्मं यदुत्तरत्र वक्ष्यते, तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यामिति। तच्चोभयमपि शरीरमविशेषात् पूर्वं रथत्वेन सङ्कीर्तितं, इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते

---

इदानीमविद्याया ब्रह्माभेदान्यत्वाभ्यामनिर्वाच्यत्वेनाव्यक्तशब्दार्हत्वमाह। अव्यक्तेति। तस्य महत्परत्वं कथमित्यत आह। तदिदमिति। यदा बुद्धिर्महांस्तदा तद्धेतुत्वात् परत्वमित्यन्वयः। प्रतिबिम्बस्योपाधिपरतन्त्रत्वादुपाधेः प्रतिबिम्बात् परत्वमाह। यदा त्विति। हेतुं स्फुटयति। अविद्येति। अव्यक्तस्य परत्वेऽपि शरीरस्य किं जातं तदाह। तच्चेति। नन्विन्द्रियादीनामप्यव्यक्ताभेदादव्यक्तत्वं परत्वञ्च किमिति नोच्यते तत्राह। सत्यपीति। सूत्रद्वयस्य वृत्तिकृद्व्याख्यानमुत्थापयति। अन्ये त्विति। पञ्चीकृतभूतानां सूक्ष्मा अवयवाः स्थूलदेहारम्भकाः। सूक्ष्मशरीरं प्रति जीवं लिङ्गस्याश्रयत्वेन नियतमस्तीति वक्ष्यते। देहान्तरप्राप्तौ तेन युक्तो गच्छति परलोकमित्यर्थः। कथं तस्य महतो जीवात् परत्वं इत्या-

सूक्ष्मस्याव्यक्तशब्दार्हत्वात् तदधीनत्वाच्च बन्धमोक्षव्यवहारस्य जीवात्तस्य परत्वं, यथा अर्थाधीनत्वादिन्द्रियव्यापारस्येन्द्रियेभ्यः परत्वमर्थानामिति। तैस्त्वेतदवक्तव्यमविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन सङ्कीर्तितत्वात्, समानयोः प्रकृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव शरीरमिह गृह्यते न पुनः स्थूलमपीति। आम्नातस्यार्थं प्रतिपत्तुं प्रभवामो नाम्नातं पर्यनुयोक्तुं, आम्नातञ्चाव्यक्तपदं सूक्ष्ममेव प्रतिपादयितुं शक्नोति नेतरद्व्यक्तत्वात् तस्येति चेत् न एकवाक्यताधीनत्वादर्थप्रतिपत्तेः। न ह्रीमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कञ्चिदर्थं प्रतिपादयतः, प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। न चाकाङ्क्षामन्तरेणैकवाक्यताप्रतिपत्तिरस्ति, तत्राविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायां यथाकाङ्क्षं सम्बन्धेऽनभ्युपगम्यमाने एकवाक्यतैव बाधिता

---

शङ्का द्वितीयसूत्रं व्याचष्टे। तदधीनत्वाच्चेति। अर्थवदिति सूत्रस्थदृष्टान्तमाह। यथेति। तद्व्याख्यानं दूषयति। तैरिति। अव्यक्तपदबलात् प्रकृतमपि स्थूलं त्यज्यत इति शङ्कते। आम्नातस्येति। एकार्थबोधकानां शब्दानां मिथ आकाङ्क्षाया एकस्यां बुद्धावारूढत्वमेकवाक्यता, तव मते तस्या अभावात् कुतोऽर्थबोध इति समाधत्ते। नेति। तां विनापि अर्थधीः किं न स्यादित्यत आह। न हीति। शरीरशब्देन रूढ्या स्थूलं प्रकृतं तस्य हानिरप्रकृतस्य भूतसूक्ष्मस्याव्यक्तपदेन ग्रहणमन्याय्यं स्यादित्यर्थः। अस्त्वेकवाक्यतेत्यत आह। न चेति। ततः किं तत्राह। तत्रेति। आकाङ्क्षया वाक्यैकवाक्यत्वे सति प्रकृतं शरीरद्वयमव्यक्तपदेन ग्राह्यं आकाङ्क्षायास्तुल्यत्वादितिभावः। अनात्मान

भवति कुत आम्नातस्यार्थस्य प्रतिपत्तिः। न चैवं मन्तव्यं दुःशोधत्वात् सूक्ष्मस्यैव शरीरस्येह ग्रहणं, स्थूलस्य तु दृष्टबीभत्सतया सुशोधत्वादग्रहणमिति। यतो नैवेह शोधनं कस्यचिद्विवक्ष्यते, न ह्यत्र शोधनविधायि किञ्चिदाख्यातमस्ति अनन्तरनिर्दिष्टत्वात्तु किं तद्विष्णोः परमं पदमिति इदमिह विवक्ष्यते। तथा हि इदमस्मात् परमिदमस्मात् परमित्युक्त्वा पुरुषान्न परं किञ्चिदित्याह। सर्वथापि त्वानुमानिकनिराकरणोपपत्तेस्तथा-नामास्तु न नः किञ्चिच्छिद्यते॥

## ज्ञेयत्वावचनाच्च॥ ४॥

ज्ञेयत्वेन च साङ्ख्यैः प्रधानं स्मर्यते गुणपुरुषान्तरज्ञानात् कैवल्यमिति वदद्भिः, न हि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुष-

---

स्य शुद्धिः तदर्थं सूक्ष्ममेवाकाङ्क्षितं ग्राह्यं। तस्य सूक्ष्मत्वेनात्माभेदेन गृहीतस्य दुःशोधत्वात्। स्थूलस्य दृष्टदौर्गन्ध्यादिना लशुनादिवत् *अनात्मत्वधीवैराग्ययो सुलभत्वादिति शङ्कते। न चेति। दृष्टा बीभत्सा घृणा यस्मिन तस्य भावस्तयेत्यर्थः। दूषयति। यत इति। वैराग्याय शुद्धिरत्र न विवक्षिता विध्यभावात् किन्तु वैष्णवं परमं पदं विवक्षितमिति तद्दर्शनार्थं प्रकृतं स्थूलमेवाव्यक्तपदेन ग्राह्यमिति भावः। किञ्च सूक्ष्मस्य लिङ्गान्तःपातिन इन्द्रियादिग्रहणेनैव ग्रहणान्न पृथक् अव्यक्तशरीरपदाभ्यां ग्रहः। अभ्युपेत्याह। सर्वथेति। स्थूलस्य सूक्ष्मस्य वा ग्रहेऽपीत्यर्थः। तथा नामेति। सूक्ष्ममेवाव्यक्तमस्त्वित्यर्थः॥

अत्राव्यक्तं प्रधानं नेत्यत्र हेत्वन्तरार्थं सूत्रं। ज्ञेयत्वेति। सत्त्वादिगुणरूपात् प्रधानात् पुरुषस्यान्तरं †भेदस्तज्ज्ञानादित्यर्थः। न हि शक्यमिति च वदद्भिः प्रधानं ज्ञेयत्वेन स्मर्यते इति सम्बन्धः। न केवलं

---

* अनात्मधीति सो० २ टी०। † भेदमज्ञानादिति सो० २ टी०।

स्यान्तरं शक्यं ज्ञातुमिति । क्वचिच्च विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति स्मरन्ति । न चेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते, पदमात्रं ह्यव्यक्तशब्दो नेहाव्यक्तं ज्ञातव्यमुपासितव्यं चेति वाक्यमस्ति । न चानुपदिष्टं पदार्थज्ञानं पुरुषार्थमिति शक्यं प्रतिपत्तुं, तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते । अस्माकन्तु रथरूपककॢप्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इत्यनवद्यं ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अत्राह साङ्ख्यो ज्ञेयत्वावचनादित्यसिद्धं कथं श्रूयते ह्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनं ।

"अशब्दमस्पर्शमरूपमव्ययं
तथारसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते" ॥ इति

---

भेदप्रतियोगित्वेन प्रधानस्य ज्ञेयत्वं तैरिष्टं किन्तु तस्योपासनयाऽणिमादिप्राप्तयेऽपीत्याह । क्वचिच्चेति । ज्ञानविध्यभावेऽप्यव्यक्तपदजन्यज्ञानगम्यत्वमार्थिकं ज्ञेयत्वमस्तीत्यत आह । न चानुपदिष्टमिति । उपदिष्टं हि ज्ञानं फलवदिति ज्ञातुं शक्यं निष्फलस्योपदेशायोगादव्यक्तस्य च ज्ञानानुपदेशात् सफलज्ञानगम्यत्वासिद्धिरित्यर्थः । फलितमाह । तस्मादिति । साङ्ख्येष्टसफलज्ञानगम्यत्वावचनाच्चेत्यर्थः । ननु शरीरस्यापि ज्ञेयत्वानुक्तेः कथमिह ग्रहणं तत्राह । अस्माकन्त्विति । अस्मन्मते विष्ण्वाख्यपदस्यैकस्यैव ज्ञेयत्वात् तद्दर्शनार्थमव्यक्तपदेन शरीरोपन्यासो युक्त इत्यर्थः ॥

साधारणशब्दमात्रान्न प्रधानस्य प्रत्यभिज्ञा स्मार्तलिङ्गस्यानुक्तया नि-

अत्र हि यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितं तादृशमेव निचाय्यत्वेन निर्दिष्टं, तस्मात् प्रधानमेवेदं तदेवाव्यक्तशब्दनिर्दिष्टमिति, अत्र ब्रूमः। नेह प्रधानं निचाय्यत्वेन निर्दिष्टं, प्राज्ञो हीह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते। कुतः प्रकरणात्। प्राज्ञस्य हि प्रकरणं विततं वर्तते,

"पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः"।

इत्यादि निर्देशात्।

"एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते"।

इति च दुर्ज्ञानत्ववचनेन तस्यैव ज्ञेयत्वाकाङ्क्षणात्। "यच्छेद्वाङ्मनसी प्राज्ञः" इति च तज्ज्ञानायैव रागादिसंयमस्य विहितत्वात् मृत्युमुखप्रमोचणफलत्वाच्च। न हि प्रधानमात्रं निचाय्य मृत्युमुखात् प्रमुच्यत इति साङ्ख्यैरिष्यते। चेतनात्मविज्ञानाद्धि मृत्युमुखात् प्रमुच्यत इति तेषामभ्युपगमः। सर्वेषु च वेदान्तेषु प्राज्ञस्यैवात्मनोऽशब्दादिधर्मत्वमभिलप्यते, तस्मान्न प्रधानस्यात्र ज्ञेयत्वमव्यक्तशब्दनिर्दिष्टत्वं वा॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च॥ ६॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा यस्मात् त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन् ग्रन्थे कठव-

---

यामकाभावादिति तात्पर्यलिङ्गोक्तिमाशङ्क्य निषेधति। वदतीति। अत्र हि तादृशमेव निर्दिष्टमित्यन्वयः, स्पष्टमन्यत्॥

किञ्चात्र कठवल्ल्यां प्रधानस्य प्रश्नोत्तरयोरसत्त्वान्न ग्रहणमित्याह। त्रयाणामिति। मृत्युना नचिकेतसम्प्रति त्रीन् वरान् वृणीष्वेत्युक्ते

स्तोषु वरप्रदानसामर्थ्यादवगम्यते, तद्विषय एव च प्रश्नः, नातोऽन्यस्य प्रश्नः उपन्यासो वास्ति। तत्र तावत्

"स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यं"

इत्यग्निविषयः प्रश्नः।

"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।

एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" ॥

इति जीवविषयः।

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्।

अन्यत्र भूताच्च भव्याच्च यत् तत्पश्यसि तद्वद" ॥

इति परमात्मविषयः। प्रतिवचनमपि

"लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा"

इत्यग्निविषयं।

"हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनं।

यथा च मरणं प्राप्यात्मा भवति गौतम" ॥

---

त्रयाणामेव प्रश्नो नचिकेतसा कृतः उपन्यासश्च मृत्युना कृतो नान्यस्येत्यर्थः। प्रश्नत्रयं क्रमेण पठति। तत्र तावदिति। हे मृत्यो स मह्यं दत्तवरस्त्वं स्वर्गहेतुमग्निं स्मरसि प्रेते मृते देहादन्योऽस्ति न वेति संशयोऽस्ति अत एतदात्मतत्त्वं सन्दिग्ध जानीयामित्यर्थः। क्रमेणोत्तरत्रयमाह। प्रतिवचनमपीति। लोकहेतुविराडात्मनोपास्यत्वाल्लोकादिस्थितोऽग्निस्तं मृत्युरुवाच। नचिकेतसे याः स्वरूपतो यावतीः सङ्ख्यातो यथावा क्रमेणाग्निश्चीयते तत्सर्वमुवाचेत्यर्थः। हन्तेदानीं ब्रह्म वक्ष्यामीति ब्रह्मवाक्येन जीवप्रश्नाद्यवहितमपि यथा च मरणं प्राप्येत्यादि वाक्यं जीवविषयमुत्तरयोग्यत्वादित्यर्थः। वाक्यार्थस्तु आत्मा मरणं प्राप्य यथा भवति तथा वक्ष्यामीति प्रतिज्ञातमाह। योनिमिति। चराचरदेहप्राप्तौ निमित्तमाह। यथेति। श्रुतमुपासनं। सूत्रे

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतं"॥ इति
व्यवहितं जीवविषयं। "न जायते म्रियते वा विपश्चिदित्यादि बहुप्रपञ्चं परमात्मविषयं। नैवं प्रधानविषयः प्रश्नोऽस्ति अपृष्टत्वादनुपन्यसनीयत्वं तस्येति। अत्राह, योऽयमात्मविषयः प्रश्नो येयं प्रेते विचिकित्सा मनुष्य इति किं स एवायमन्यत्र धर्मादन्यत्राधर्मादिति पुनरनुकृष्यते, किं वा ततोऽन्योऽयमपूर्वः प्रश्नः उत्थाप्यते इति। किञ्चातः स एवायं प्रश्नः पुनरनुकृष्यते इति यद्युच्येत तदा द्वयोरात्मविषययोः प्रश्नयोरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्रश्नावित्यतो न वक्तव्यं त्रयाणां प्रश्नोपन्यासाविति। अथान्योऽयमपूर्वः प्रश्नः उत्थाप्यत इति यद्युच्येत ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोषः, एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति, अत्रोच्यते। नैवं वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कञ्चित् कल्पयामः, वाक्योपक्रमसामर्थ्यात्। वरप्रदा-

---

आद्यस्यकारो यत इत्यर्थे। एवञ्च त्रयाणामेवोपन्यासः प्रश्नस्य यतः अतो न प्रधानं अव्यक्तमिति योजना। उक्तार्थे सूत्रमाक्षिपति। अत्राहेति। एकः प्रश्नः द्वौ प्रश्नौ वेति पक्षद्वये फलितं पृच्छति। किञ्चात इति। सप्तम्यर्थे तसिः। अत्र च पक्षद्वयेऽपि किमित्यर्थः। प्रश्नैक्ये सूत्रासङ्गतिः, भेदे प्रधानस्य श्रौतत्वसिद्धिरिति पूर्ववाद्याह। स एवेत्यादिना। प्रश्नैक्यपक्षमादाय सिद्धान्त्याह। अत्रोच्यत इति। येन प्रधानसिद्धिः स्यादिति शेषः। चतुर्थप्रश्नकल्पने वरनिलोपक्रमविरोधः स्यादिति विवृणोति। वरेत्यादिना। वरप्रदानमुपक्रमो यस्याः सा प्रश्नि-

नोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिरासमाप्तेः कठवल्लीनां लक्ष्यते। मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन् वरान् प्रददौ, नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्यां, तृतीयेनात्मविद्यां, येयं प्रेत इति वराणामेष वरस्तृतीय इति लिङ्गात्। तत्र यद्यन्यत्र धर्मादित्यन्योऽयमपूर्वः प्रश्न उत्थाप्येत ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत। ननु प्रष्टव्यभेदादपूर्वोऽयं प्रश्नो भवितुमर्हति, पूर्वो हि प्रश्नो जीवविषयः, येयं प्रेते विचिकित्सा मनुष्येऽस्ति नास्तीति विचिकित्साभिधानात्, जीवस्य धर्मादिगोचरत्वान्नान्यत्र धर्मादिति प्रश्नमर्हति, प्राज्ञस्तु धर्माद्यतीतत्वादन्यत्र धर्मादिति प्रश्नमर्हतीति, प्रश्नच्छाया च न समाना लक्ष्यते पूर्वस्यास्तित्वनास्तित्वविषयत्वादुत्तरस्य धर्माद्यतीतवस्तुविषयत्वाच्च, तस्मात् प्रत्यभिज्ञानाभावात् प्रश्नभेदः, न पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेत् न, जीवप्राज्ञयोरेकत्वाभ्यु-

---

ताय यमलोकं प्रति प्रेषिताय इतः पुनः मर्त्यलोकं प्राप्तस्य स मे पिता यथा पूर्वं सुमनाः स्यादिति प्रथमं वव्रे। ननु द्वितीयवरो जीवविद्या तृतीयो ब्रह्मविद्येति प्रश्नभेदः किं न स्यादित्यत आह। येयमिति। प्रेते इत्युपक्रम्य तृतीयत्वोक्तिलिङ्गाज्जीवात्मविद्यैव तृतीयो वर इत्यर्थः। एवं वाक्योपक्रमे सति प्रश्नान्तरं न युक्तमित्याह। तत्रेति। मरणधर्मा-द्यस्पर्शलिङ्गाभ्यां प्रष्टव्ययोर्जीवेश्वरयोर्भेदात् प्रश्नभेदसिद्धेर्वाक्यबाधो युक्त इति शङ्कते। नन्वित्यादिना। गोचरत्वादाश्रयत्वात्। न केवलं प्रष्टव्यभेदात् प्रश्नभेदः किन्तु प्रश्नवाक्ययोः सादृश्याभावादपीत्याह। प्रश्नच्छायेति। प्रष्टव्यभेदोऽसिद्ध इति परिहरति। नेत्यादिना। किञ्च मध्यमे जन्मादिनिषेधेन जीवस्वरूपं वदन् यमस्तयोरैक्यं सूच-

पगमात्। भवेत् प्रष्टव्यभेदात् प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात् स्यात्, न त्वन्यत्वमस्ति तत्त्वमसीत्यादिश्रुत्यन्तरेभ्यः। इह चान्यत्र धर्मादित्यस्य प्रश्नस्य प्रतिवचनं न जायते म्रियते वा विपश्चिदिति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति। सति हि प्रसङ्गे प्रतिषेधो भागी भवति। प्रसङ्गश्च जन्ममरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति न परमेश्वरस्य। तथा

"स्वप्नान्तं जागरितान्तञ्च उभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ॥

इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन् न प्राज्ञादन्यो जीव इति दर्शयति। प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः। तथा,

"यदेवेह तदमुत्र यदमुत्र तदन्विह।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"॥ इति

---

यतीत्याह। इह चान्यत्रेति। तन्निषेधवाक्ये जीवोक्तिरसिद्धेत्यत आह। सतीति। भागी युक्तः, तस्मादविद्यया जीवस्य प्राप्तजन्मादिनिषेधेन स्वरूपमुक्तमित्यर्थः। किञ्च जीवो ब्रह्माभिन्नः मोक्षहेतुज्ञानविषयत्वात् ब्रह्मवदित्याह। तथा स्वप्नेति। यन्तोऽवस्था येन साक्षिणा प्रमाता पश्यति तमात्मानमिति सम्बन्धः। हेत्वारप्रयोजकत्वमाशङ्क्य तमेव विदित्वेत्यादि श्रुतिविरोधमाह। प्राज्ञेति। किञ्चाभेदमुक्त्वा भेदस्य निन्दितत्वादभेद एव सत्य इत्याह। तथेति। इह देहे यच्चैतन्यं तदेवामुत्र सूर्यादौ, एवमिन्द्रावखण्डैकरसे ब्रह्मणि यो नानेव मिथ्या भेदं पश्यति स भेददर्शी मरणान्मरणं प्राप्नोति भयान्न मुच्यत इत्यर्थः। किञ्च जीवप्रश्नानन्तरं तं दुर्दर्शमिति यदुत्तरमुवाच तेनाप्युत्तरेणाभेदो गम्यत इति सम्बन्धः।

जीवप्राज्ञभेददृष्टिमपवदति। तथा जीवविषयस्यास्तिलना-
स्तित्वप्रश्नस्यानन्तरं अन्य वरं नचिकेतो वृणीष्वेत्यारभ्य मृत्युना
तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल तदैनं
मृत्युरभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रद-
र्शनेन च विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽ-
लोलुपन्तेति *प्रश्नस्य प्रश्नमपि तदीयं प्रशंसन् यदुवाच
"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"॥
इति। तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते।
यत्प्रश्ननिमित्ताञ्च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेता यदि
तं विहाय प्रशंसानन्तरमन्यमेव प्रश्नमुपक्षिपेत् अस्थान एव सा
सर्वा प्रशंसा प्रसारिता स्यात्, तस्माद्येय प्रेते इत्यस्यैव प्रश्नस्यैतद-

---

पृष्टप्रश्नयोः प्रशंसयापि लिङ्गेन पृष्टस्य दौर्लभ्यत्वद्योतनात् ब्रह्मत्व-
सिद्धिरित्याह। अन्य वरमित्यादिना। पुत्रादिकं वृणीष्वेत्युक्तोऽपि वि-
षयास्तुच्छाः सत्यात्मज्ञानात् न चचाल नान्यत्तस्मान्नचिकेता वृणीत इति
श्रवणात्। तदा सन्तुष्टो यमोऽन्यच्छ्रेयोऽन्यदुतैव प्रेय इति भोगापवर्गमा-
र्गयोर्वलक्षण्यप्रतिज्ञाय परमे ते विपरीते विषूची अविद्या या च विद्येति
दर्शितवानित्यर्थः। प्रेयः प्रियतमं स्वर्गादिकं विषूची विरुद्धफले, अवि-
द्या कर्म्म, विद्या तत्त्वधीः, विद्याभीप्सिनं विद्यार्थिनं त्वामहं मन्ये यतः
त्वा त्वा बहवोऽपि कामाः पुत्रादयो मया दीयमाना दुर्लभा अपि ना-
लोलुपन्त लोभवन्तं न कृतवन्त इति प्रष्टारं स्तुत्वा प्रश्नमपि त्वादृङ्नो
भूयान्नचिकेतः प्रष्टेति स्तुवन्नित्यक्षरार्थः। इयं प्रशंसा प्रश्नभेदपक्षे न
घटत इत्याह। यत्प्रश्नेति। यत्प्रश्नेन स्तुतिं लब्धवान् तं प्रश्न वि-

---

* प्रश्नस्य प्रश्नमपि प्रशंसन्नुवाचेति गर्भ० का० पु० पाठ।

नुकर्षणमन्यत्र धर्मादिति। यत्तु प्रश्नच्छायावैलक्षण्यमुक्तं तद्दूषणं, तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात्। पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनोऽस्तित्वं पृष्टं उत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति। यावद्ध्यविद्या न निवर्तते तावद्धर्मादिगोचरत्वं जीवस्य जीवत्वं च न निवर्तते। तन्निवर्त्तनेन तु प्राज्ञ एव तत्त्वमसीति श्रुत्या प्रत्याय्यते। न चाविद्यावत्त्वे तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति। यथा कश्चित् सन्तमसे पतितां काञ्चिद्रज्जुमहिं मन्यमानो भीतो वेपमानः पलायते, तञ्चापरो ब्रूयात् माभैषीः नायमहीरज्जुरेवेति, स च तदुपश्रुत्याहिकृतं भयमुत्सृजेद्वेपथुं पलायनञ्च, न चाहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्यात्, तथैवैतदपि द्रष्टव्यं। ततश्च न जायते म्रियते वेत्येवमाद्यपि भवति *अस्तित्वनास्तित्वप्रश्नस्य प्रतिवचनं। सूत्रन्त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यं। एकत्वेऽपि ह्यात्मविषयस्य प्रश्नस्य प्रायणावस्थायां व्यतिरिक्तास्तित्वमात्रविचिकित्सनात् कर्तृत्वादिसंसारस्वभावा-

---

हाय यद्यन्यमेवोत्थापयेत् तर्ह्यनवसरे स्तुतिः कृता स्यादित्यर्थः। तस्मादिति प्रष्टव्यभेदाभावादित्यर्थः। प्रश्नवाक्ययक्योः सादृश्याभावात् प्रश्नभेद इत्युक्तं निरस्यति। यत्त्वित्यादिना। धर्माद्याश्रयस्य जीवस्य ब्रह्मत्वं कथमित्यत आह। यावदिति। अविद्यानाशानन्तरं ब्रह्मत्वं चेदागन्तुकमनित्यञ्च स्यादित्यत आह। न चाविद्यावत्त्व इति। जीवस्य ब्रह्मत्वे स्वाभाविके सति ब्रह्मप्रश्नस्य यदुत्तरं तज्जीवप्रश्नस्यापि भवतीति लाभं दर्शयति, ततश्च न जायत इति जीवब्रह्मैक्ये न्यायात्-

---

* अस्तित्वप्रश्नस्येति वर्ध० का० पु० पाठः।

नयोद्दनाच पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रेक्ष्यते, उत्तरस्य तु धर्माद्यत्ययसङ्कीर्तनात् प्राज्ञविषयत्वमिति, ततश्च युक्ताग्निजीवपरमात्मकल्पना। प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति वैषम्यं स्यात्॥

महद्वच्च॥ ७॥

यथा महच्छब्दः साङ्ख्यैः सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽभिधत्ते, "बुद्धेरात्मा महान् परः" "महान्तं विभुमात्मानं" "वेदाहमेतं पुरुषं महान्तं" इत्येवमादौ आत्मशब्दप्रयोगादिभ्यो हेतुभ्यः; तथाव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति। अतश्च नास्यानुमानिकस्य *स्मार्त्तस्य शब्दवत्त्वं॥

मिति सूत्रं कथमित्यत आह। सूत्रन्त्विति। कल्पितभेदात् प्रश्नभेदकल्पनेत्याह। ततश्चेति। परमात्मनः सकाशात् प्रधानस्य वैषम्यमनात्मत्वेन तृतीयवरान्तर्भावायोगादिति भावः॥

श्रौतोऽव्यक्तशब्दो न साङ्ख्यासाधारणतत्त्वगोचरः वैदिकशब्दत्वान्महच्छब्दवदित्याह। महद्वच्चेति। सूत्रं व्याचष्टे। यथेत्यादिना। न चाकाशादिशब्दे व्यभिचारः। आकाशादेर्मतान्तरसाधारणत्वेन साङ्ख्यासाधारणतत्त्वासिद्धेः साध्यस्यापि सत्त्वादिति मन्तव्यं। सत्तामात्रेण सत्त्वप्रधानप्रकृतेराद्यपरिणामे निर्विकल्पकबुद्धावित्यर्थः। आत्मा महानित्यात्मशब्दप्रयोगात्, तं मत्वा न शोचति तमसः परस्तादित्यादिना शोकात्ययतमःपरत्वादिभ्यश्च महच्छब्दः साङ्ख्यतत्त्वं नाभिधत्ते इति सम्बन्धः। अधिकरणार्थमुपसंहरति। अतश्चेति॥

* स्मार्त्तस्येति वर्ध० का० पु० नास्ति।

## चमसवदविशेषात्॥ ८॥

पुनरपि प्रधानवादी अशब्दत्वं प्रधानस्यासिद्धमित्याह, कस्मात् मन्त्रवर्णात्;

"अजामेकां *रोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां स्वरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः" ॥ इति।

अत्र हि मन्त्रे रोहितशुक्लकृष्णशब्दैरजःसत्त्वतमांस्यभिधीयन्ते। रोहितं रजः रञ्जनात्मकत्वात्, शुक्लं सत्त्वं प्रकाशात्मकत्वात्, कृष्णं तमः आवरणात्मकत्वात्। तेषां साम्यावस्थावयवधर्मैर्व्यपदिश्यते रोहितशुक्लकृष्णेति। न जायत इति चाजा स्यात्, मूलप्रकृतिरविकृतिरित्यभ्युपगमात्। नन्वजाशब्दः छागायां रूढः। वाढं, सा तु रूढिरिह नाश्रयितुं शक्या विद्याप्रकरणात्, सा च बह्वीः †प्रजास्त्रैगुण्यान्विता जनयति, तां प्रकृतिं अजो ह्येकः पुरुषः जुषमाणः प्रीयमाणः सेवमानो

चमसवदविशेषात्। अनाजापदं विषयः, तत् किं प्रधानपरं मायापरं वेति रूढार्थासम्भवात् संशये पूर्वत्राव्यक्तशब्दमात्रेण प्रधानस्याप्रत्यभिज्ञायामप्यत्र त्रिगुणत्वादिलिङ्गोपेतादजापदात् प्रत्यभिज्ञास्तीति प्रत्युदाहरणेन पूर्वपक्षयति। पुनरपीति। फलं पूर्वपक्षे ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति पूर्ववद्द्रष्टव्यं। रागहेतुत्वादिगुणयोगात् लोहितादिशब्दैरजआदिगुणलाभेऽपि कथं प्रधानलाभस्तत्राह। तेषां साम्येति। अवयवाः प्रधानस्य रजआ-

* लोहितेति वर्ध० का० सो० पु० पाठ।
† प्रजास्त्रैगुण्यात्मिका इति उक्त पु० पाठः।

वाऽनुशेते, तामेवाविद्ययात्मत्वेनोपगम्य सुखी दुःखी मूढोऽह-
मित्यविवेकितया संसरति, अन्यः पुनः अजः पुरुषः उत्पन्न-
विवेकज्ञानो विरक्तो जहाति एनां प्रकृतिं भुक्तभोगां कृतभो-
गापवर्गां परित्यजति मुच्यत इत्यर्थः, तस्मात् श्रुतिमूलैव
प्रधानादिकल्पना कापिलानामित्येवं प्राप्ते ब्रूमः। नानेन म-
न्त्रेण श्रुतिमूलत्वं साङ्ख्यवादस्य शक्यमाश्रयितुं। न ह्ययं मन्त्रः
स्वातन्त्र्येण कञ्चिदपि वादं समर्थयितुमुत्सहते। सर्वत्रापि
यया कयाचित् कल्पनयाऽजात्वादिसम्पादनोपपत्तेः साङ्ख्य-
वाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात् चम-
सवत्। यथा हि, अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न इत्यस्मिन्मन्त्रे
स्वातन्त्र्येणायंनामासौ चमसोऽभिप्रेत इति न शक्यते *नियन्तु,
सर्वत्रापि यथाकथञ्चिदर्वाग्बिलत्वादिकल्पनोपपत्तेः। एवमि-
हाप्यविशेषोऽजामेकामित्यस्य मन्त्रस्य नास्मिन्मन्त्रे प्रधानमे-

---

दयस्तेषां धर्मा रक्तकत्वादयः तैर्निमित्तैर्लोहितादिशब्दैः प्रधानमुच्यत इत्यर्थः। गुणाभेदात् प्रधानलाभ इति भावः। तत्राजाशब्दं योजयति। नेति। रूढिर्योगमपहरतीति न्यायेन शङ्कते। नन्विति। रूढ्यसम्भवाद्योग आश्रयणीय इत्याह। बाढमिति। अजाशब्दितप्रकृतित्व-पुरुषभेदलिङ्गाभ्यामपि प्रधानप्रत्यभिज्ञेत्याह। सा चेत्यादिना। प्रजायन्त इति प्रजाः महदादयः। त्रैगुण्यं सुखदुःखमोहाः। अनुशयनं विवृणोति। तामेवाविद्ययेति। अविवेकेनेत्यर्थः। विषयधीर्भोगः गुणभिन्नात्मख्यातिरपवर्गः। सिद्धान्तयति। एव प्राप्त इति। मायादावपि साधारण्यान्मन्त्रादविशेषार्थग्रहो न युक्त विशेषग्रहहेतोः प्रकरणादेरभावादिति हेतुं व्याख्याय दृष्टान्तं व्याचष्टे। चमसवदिति।

---

* निरूपयितुमिति वर्ध० का० पु० पाठ।

वाजाभिप्रेतेति शक्यते नियन्तुं। तत्र त्विदं तच्छिर एष ह्यर्वा-
ग्बिलश्चमस ऊर्ध्वबुध्न इति वाक्यशेषाच्चमसविशेषप्रतिपत्तिर्भव-
ति, इह पुनः केयमजा प्रतिपत्तव्येति अत्र ब्रूमः॥

*ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ ९॥

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोऽबन्नलक्षणा चतुर्वि-
धस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या। तुशब्दोऽवधा-
रणार्थः। भूतत्रयलक्षणैवेयमजा विज्ञेया न गुणत्रयलक्षणा।
कस्मात्। तथा ह्येके शाखिनस्तेजोऽबन्नानां परमेश्वरादुत्पत्ति-
माम्नाय तेषामेव रोहितादिरूपतामामनन्ति 'यदग्ने रोहितं
रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति। तान्ये-
वेह तेजोऽबन्नानि प्रत्यभिज्ञायन्ते, रोहितादिशब्दसामान्यात्,

सर्वत्रगिरिगुहादावपि। उत्तरसूत्रं व्यावर्त्यशङ्कामाह। तत्र त्विद-
मिति॥

चतुर्विधस्य जरायुजाण्डजस्वेदजोद्भिज्जरूपस्येत्यर्थः। स्मृत्युक्ता कुतो
न ग्राह्येति शङ्कते। कस्मादिति। श्रुतेः श्रुत्यन्तरादर्थग्रहो युक्तः।
साजात्यान्मूलानपेक्षत्वाच्चेत्याह। तथा ह्येति। शाखिनश्छान्दोगाः।
किञ्च रोहितादिशब्दैरपि द्रव्यलक्षणा न्याय्या ह्यव्यवधानात् न तु
रञ्जनीयत्वादिगुणद्वारवर्त्तिना सत्त्वादिगुणलक्षणेत्याह। रोहितादी-
नाञ्चेति। ननु शाखान्तरेण शाखान्तरस्थमन्त्रस्य निर्णयः कथमि-
त्यत आह। असन्दिग्धेनेति। सर्वशाखाप्रत्ययन्यायादिति भावः।
यथा शाखान्तरवाक्यान्न प्रधानग्रहस्तथेहापि श्वेताश्वतरोपनिषदि
मायाप्रकरणान्न तद्ग्रह इत्याह। तथेति। इत्यादौ किं सहायं
ब्रह्मेति विमृश्यते, ब्रह्मवादिनो ध्यानाख्ययोगेन परमात्मानमनु-
प्रविष्टाः सन्तः तत्रैव देवस्यात्मभूतामैक्येनाध्यस्तां परतन्त्रां माया

* ज्योतिरुपक्रमात्विति वर्ध० का० सो० पु० पाठः।

रोहितादीनाञ्च शब्दानां रूपविशेषेषु मुख्यत्वात्, भाक्तत्वाच्च गुणविषयत्वस्य, असन्दिग्धेन च सन्दिग्धस्य निगमनं न्याय्यं मन्यन्ते, तथेहापि ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्मेत्युपक्रम्य ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति, पारमेश्वर्य्यास्तु शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात्, वाक्यशेषेऽपि

'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं'। इति।

यो योनिं योनिमधितिष्ठत्येक इति च तस्या एवावगमात्, न स्वतन्त्रा काचित् प्रकृतिः प्रधानं नामाजामन्त्रेणाम्नायत इति शक्यते वक्तुं। प्रकरणात् तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायत इत्युच्यते। तस्याश्च *स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तं। कथं पुनस्तेजोऽबन्नानां त्रैरूप्येण त्रिरूपाऽजा प्रतिपत्तुं शक्यते।

---

सत्त्वादिगुणवर्त्तीं ब्रह्मणः सहायमपश्यन्नित्यन्वयः। मायाया एकत्वेऽपि तदंशानां जीवोपाधीनां तत्तत्सङ्घातयोनीनां अविद्याख्यानां भेदाद्बोध्या, अव्याकृते अनभिव्यक्ते नामरूपे यस्याः सा। अनेन तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुत्यन्तरप्रसिद्धिरुक्ता। तस्याः शक्तौ व्यक्ताव्यक्तकार्यलिङ्गकानुमानं सूचयति। नामेति। मायाया रोहितादिरूपवत्त्वं कथमित्यत आह। तस्या इति। विषयः आश्रय, एवं प्रकरणबलान्मायैव अजेति भाष्यकृन्मतं। छान्दोग्यश्रुत्या तेजोऽबन्नलक्षणाऽवान्तरप्रकृतिरजेति सूत्रकृन्मतेनोत्तरसूत्रव्यावर्त्त्यं शङ्कते। कथमिति। किं तेजोऽबन्नेष्वजाशब्दो रूढ न जायत इति यौगिको वा नाद्यस्तेष्वजात्वजातेरसत्त्वादित्याह। यावतेति। यत इत्यर्थः। अतो न रूढ

---

* विकारविषयेणेति वर्ध० का० पु० पाठ।

यावता न तावत्तेजोऽबन्नेष्वजाकृतिरस्ति, न च तेजोऽबन्नानां जातिश्रवणादजातिनिमित्तोऽप्यजाशब्दः सम्भवतीति अत उत्तरं पठति ॥

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

नायमजाकृतिनिमित्तोऽजाशब्दो नापि यौगिकः किं तर्हि कल्पनोपदेशोऽयं अजारूपकक्लृप्तिस्तेजोऽबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते। यथा हि लोके यदृच्छया काचिदजा लोहितशुक्लकृष्णवर्णा स्यात् बहुवर्करा सरूपवर्करा च ताञ्च कश्चिदजो जुषमाणोऽनुशयीत कश्चिदेनां भुक्तभोगां जह्यादेवमियमपि तेजोऽबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते, विदुषा च परित्यज्यते इति। नन्वेदमाशङ्कितव्यमेकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीति, अतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति। न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा

---

इति शेषः। न द्वितीय इत्याह। न चेति। जातिर्जन्म अजातिरजन्म ॥

लौकिकयाऽजाशब्दसादृश्यकल्पनया तेजोऽबन्नानामजात्वोपदेशाद्गौणोऽयं शब्द इति परिहरति। कल्पनेति। अनियमो यदृच्छा। वर्करो बालपशुः। यदुक्तं जीवभेदेन प्रधानवादप्रत्यभिज्ञेति तन्नेत्याह। न चेदमिति। व्यवस्थार्थो भेदोऽप्यर्थात् प्रतिभाद्यत इत्याह। प्रसिद्धन्त्विति। सत्य एव प्रसिद्ध इत्यत आह। भेदस्त्विति। कल्पनोपदेशे दृष्टान्तं व्याचष्टे। मध्विति। न च योगस्य मुख्यवृत्तित्वात् तेन प्रधानग्रहो न्याय्य इति वाच्यं रूढार्थानपेक्षायोगात् तदाश्रितगुणलक्षणाया बलीय-

किन्तु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषयैव। प्रसिद्धन्तु भेदं अनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते, भेदस्तु उपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः,

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादिश्रुतिभ्यः। मध्वादिवत् यथादित्यस्यामधुनो मधुत्वं वाचश्चाधेनोर्धेनुत्वं द्युलोकादीनां चानग्नीनामग्नित्वं इत्येवं-जातीयकं कल्प्यते, एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः, तस्मादविरोधस्तेजोऽबन्नेष्वजाशब्दप्रयोगस्य ॥

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

एवं परिहृतेऽप्यजामन्त्रे पुनरप्यन्यस्मान्मन्त्रात् साङ्ख्यः प्रत्यवतिष्ठते, यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः तमेव-मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमिति, अस्मिन्मन्त्रे पञ्च-पञ्चजना इति पञ्चसङ्ख्याविषयाऽपरा पञ्चसङ्ख्या श्रूयते पञ्चशब्द-

---

त्वाद्रूपवृत्तौ हि रूढिराश्रिता भवति। तथा च रोहितादिशब्द-समभिव्याहारानुगृहीतया रूढ्याश्रितया गुणवृत्त्या प्रधाने योगं बा-धित्वाऽवान्तरप्रकृतिरजाशब्देन ग्राह्या यथा मध्वादिशब्दैः प्रसिद्धम-ध्वाद्याश्रितगुणलक्षणया आदित्यादयो गृह्यन्ते तद्वत्, तस्मादशब्दं प्र-धानमिति सिद्धं ॥

न संख्योपसंग्रहात्। पञ्चजनशब्दः साङ्ख्यतत्त्वपरोऽन्यपरो वेति यो-गरूढ्योरनिश्चयात् संशये यथा तत्त्वविद्याधिकारे छागाया तात्पर्या-भावादजापदे रूढित्यागस्तथा पञ्चमनुष्येषु तात्पर्याभावाज्जनशब्देन रूढिं त्यक्त्वा तत्त्वानि ग्राह्याणीति दृष्टान्तसङ्गतिं सूचयन् मन्त्रम्

दयदर्शनात् त एते पञ्च पञ्चकाः पञ्चविंशतिः सम्पद्यन्ते। तया च पञ्चविंशतिसङ्ख्यया यावन्तः सङ्ख्येया आकाङ्क्ष्यन्ते तावन्त्येव च तत्त्वानि साङ्ख्यैः सङ्ख्यायन्ते।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः"॥ इति।

तया श्रुतिप्रसिद्धया पञ्चविंशतिसङ्ख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात् प्राप्तं *तावत् श्रुतिमत्त्वमेव प्रधानादीनां, ततो ब्रूमः। न सङ्ख्योपसंग्रहादपि प्रधा-

दाहृत्य पूर्वपक्षयति। एवमित्यादिना। फलं पूर्ववत्, प्राणचक्षुःश्रोत्रान्नमनांसि वाक्यशेषस्थाः पञ्चजनाः पञ्च, तत्र चत्वारः सूत्रं यज्ञं विराट् तयोः कारणमव्याकृतमाकाशश्च यस्मिन्नध्यस्तस्तमेवात्मानममृतं ब्रह्म मन्ये तस्मान्मननात् विद्वानहममृतोऽस्मीति मन्त्रदृशो वचनं। नन्वस्तु पञ्चत्वविशिष्टेषु पञ्चजनेषु पुनः पञ्चत्वान्वयात् पञ्चविंशतिसंख्याप्रतीतिस्तावता कथं सांख्यतत्त्वग्रह इत्याशङ्क्य संख्याया धर्म्याकाङ्क्षायां तत्त्वानि ग्राह्याणीत्याह। तयेति। जगतो मूलभूता प्रकृतिस्त्रिगुणात्मकं प्रधानमनादित्वादविकृतिः कस्यचित् कार्यं न भवतीत्यर्थः। महदहङ्कारपञ्चतन्मात्राणि इति सप्त प्रकृतयो विकृतयश्च, तत्र महान् प्रधानस्य विकृतिरहङ्कारस्य प्रकृतिः अहङ्कारः तामसः पञ्चतन्मात्राणां शब्दादीनां प्रकृतिः सात्त्विक एकादशेन्द्रियाणां, पञ्च तन्मात्राश्च पञ्चानां स्थूलभूतानामाकाशादीनां प्रकृतयः, पञ्च स्थूलभूतान्येतान्येकादशेन्द्रियाणि चेति षोडशसंख्याको गणो विकार एव न प्रकृतिः, तत्त्वान्तरोपादानत्वाभावात्, पुरुषस्तूदासीन इति साङ्ख्यकारिकार्थः। सङ्ख्यया तत्त्वानामुपसंग्रहात् शब्दवत्त्वमिति प्राप्ते सिद्धान्तयति। नेति। नानात्वमिष्टमित्यत आह। नैषामिति। पञ्चसु पञ्चसु साधारणस्येतरपञ्चकाद्व्यावृत्तस्य धर्मस्याभावो नानात्वं विवक्षितमित्यर्थः। यद्यपि ज्ञानकर्मेन्द्रियेषु दशसु ज्ञानकारणत्वं कर्मकरण-

* तावदित्यस्य स्थाने हि पुनरिति का० सो० वर्ध० पु०।

नादीनां श्रुतिमत्त्वं प्रत्याशा कर्त्तव्या, कस्मात्, नानाभावात्। नाना ह्येतानि पञ्चविंशतितत्त्वानि, नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तरालेऽपराः पञ्च पञ्च सङ्ख्या निविशेरन्, न ह्येकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः सङ्ख्या निविशन्ते। अथोच्येत पञ्चविंशतिसङ्ख्यैवेयमवयवद्वारेणोपलक्ष्यते*। यथा,

"पञ्च सप्त च वर्षाणि नववर्षशतक्रतुः"। इति।

द्वादशवार्षिकीमनावृष्टिं कथयन्ति तद्वदिति, तदपि नोपपद्यते। अयमेवास्मिन् पक्षे दोषो यल्लक्षणाश्रयणीया स्यात्। परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति, भाषिकेण स्वरेणैकपदत्वनिश्चयात्। प्रयोगान्तरे च पञ्चानां त्वाप-

त्वञ्च पञ्चकद्वयेऽस्ति पञ्चतन्मात्रासु पञ्चसु स्थूलप्रकृतित्वञ्च तथापि यस्मिन् नित्यात्मन आकाशस्य च पृथगुक्तेः सत्त्वरजस्तमोमहदहङ्काराः पञ्च कर्त्तव्याः मनश्चत्वारि भूतानि च पञ्चास्मिन् पञ्चकद्वये मिथोऽनुवृत्तेतरपञ्चकव्यावृत्तधर्मो नास्तीत्यभिप्रायः। नास्त्वित्यत आह। येनेति, धर्मेणेत्यर्थः। तदेव स्फुटयति। न हीति। महासङ्ख्यायामवान्तरसङ्ख्याः प्रविशन्ति, यथा द्वावश्विनौ सप्त सप्तर्षयोऽष्टौ वसवश्चेति प्रजापतिः सप्तदशेत्यत्राश्वित्वादिकमादाय द्वित्वादयः प्रविशन्ति नान्यथेत्यर्थः। पञ्चशब्दद्वयेनास्य वाच्यस्य न्यूनसंख्याद्वारेण तद्व्याप्या महासंख्यैव लक्ष्यत इति सदृष्टान्तं शङ्कते। अथेति। मुख्यार्थस्य वक्ष्यमाणत्वाल्लक्षणा न युक्तेति परिहरति। तदपि नेति। पञ्चजनशब्दयोरसमासमङ्गीकृत्य पञ्चविंशतिसंख्याप्रतीतिर्निरस्ता सम्प्रति समासनिश्चयान्न तत्प्रतीतिरित्याह। परश्चेति। समासहेतुमाह। भाषिकेणेति। अयमर्थः। अस्मिन्मन्त्रे प्रथमः पञ्चशब्दः आद्युदात्तः। द्वितीयः सर्वानुदात्तः।

* लक्ष्यत इति का॰ वर्ध॰ पु॰ पाठः।

अजनानामित्येकपद्यैकस्वर्यैकविभक्तिकत्वावगमात्, समस्तत्वाच्च न वीप्सा पञ्च पञ्चेति। *तेन न पञ्चकद्वयग्रहणं पञ्चपञ्चेति, न च पञ्चसङ्ख्याया एकस्याः पञ्चसङ्ख्ययाऽपरया विशेषणं पञ्चपञ्चका इति, उपसर्जनस्य विशेषणेनासंयोगात्। नन्वापन्नपञ्चसङ्ख्याका जना एव पुनः पञ्चसङ्ख्यया विशेष्यमाणाः पञ्चविंशतिः प्रत्येष्यन्ते। यथा पञ्चपञ्च पूल्य इति पञ्चविंशतिः पूलाः प्रतीयन्ते

---

जनशब्दस्यान्तोदात्तः। तथा च न द्वितीयपञ्चजनशब्दयोः समासं विनान्यस्याकारस्योदात्तत्वं पूर्वेषामनुदात्तत्वञ्च घटते। "समासस्य" [पा०६।१।२२३] इति सूत्रेण समासस्यान्तोदात्तविधानात् "अनुदात्तं पदमेकवर्जं" [पा०६।१।१५८] इति च सूत्रेण यस्मिन् पदे उदात्तः स्वरितो वा यस्य वर्णस्य विधीयते तमेकं वर्जयित्वावशिष्टं तत्पदं अनुदात्तं भवतीति विधानादेव मान्त्रिकान्तोदात्तस्वरेणैकपदत्वनिश्चयः। भाषिकाख्ये तु शतपथब्राह्मणस्वरविधायकग्रन्थे "स्वरितोऽनुदात्तो वा" इति सूत्रेण यो मन्त्रदशायां अनुदात्तः स्वरितो वा स ब्राह्मणदशायामुदात्तो भवतीति अपवाद आश्रितः, तथा चान्त्यादाकारात् पूर्वेषामनुदात्तानामुदात्तत्वं ब्राह्मणावस्थाया प्राप्तं, "उदात्तमनुदात्तमनन्त्यं" इति सूत्रेण मन्त्रदशायां उदात्तस्यान्त्यस्य परत्वमतयोच्चार्यमाणस्यानुदात्तत्वं विहितं, तथा चात्र नकारादुपरितन आकार आकाशस्येत्यनेन श्लिष्टतया पठ्यमानोऽनुदात्तो भवति, अयं मन्त्रानुदात्तस्वरः भाषिकत्वेन ब्राह्मणस्वरेणैकपदत्वं निश्चीयत इति। प्रकटार्थकारैस्तु पाठकप्रसिद्धान्तोदात्तस्वरो भाषिक इति व्याख्यातं, तद्व्याख्यानं कल्पतरुकारैर्दूषितं। अन्तानुदात्तं हि समाम्नातारः पञ्चजनशब्दमधीयत इति पाठकप्रसिद्धिरसिद्धेति। तथा च पञ्चपञ्चजना इति मान्त्रिकान्तोदात्तः स्वरः यस्मिन् पञ्चपञ्चजना इत्यन्तानुदात्तो ब्राह्मणस्वर इति विभागः, उभयथापि ऐकपद्यात् समाससिद्धिरिति। तैत्तिरीयकप्रयोगादप्येकपदत्वमि-

---

* तेनेति वर्ध० का० पु० पाठः।

तद्वत्, नेति ब्रूमः, युक्तं यत्पञ्चपूलीशब्दस्य समाहाराभिप्रायत्वात् कतीति सत्यां भेदाकाङ्क्षायां पञ्चपञ्च पूल्य इति विशेषणं, इह तु पञ्चजना इत्यादित एव भेदोपादानात् कतीति असत्यां भेदाकाङ्क्षायां न पञ्चपञ्चजना इति विशेषणं भवेत्, भवदपीदं विशेषणं पञ्चसङ्ख्याया एव भवेत्, तत्र चोक्तो दोषः, तस्मात् पञ्चपञ्चजना इति न पञ्चविंशतितत्त्वाभिप्रायं, अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायं, अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसङ्ख्यायाः। आत्मा तावदिह प्रतिष्ठां

---

त्याह। प्रयोगान्तरे चेति। आज्य त्वा त्वां पञ्चानां पञ्चजनानां देवविशेषाणां यन्त्राय धर्त्राय गृह्णामि इत्याज्यग्रहणमन्त्रशेषः। देवतानां कर्मणि यन्त्रवदवस्थितं शरीरं तदेव धर्त्रं इहामुत्रभोगाधारस्तस्मै, तस्यावैकल्यार्थमिति यजमानोक्तिः, अस्तु समासस्ततः किमत आह। समस्तत्वाच्चेति। आवृत्तिर्वीप्सा तदभावे पञ्चकद्वयाग्रहणात् पञ्चविंशतिसंख्याप्रतीतिरसिद्धेति भावः। जनपञ्चकमेकं पञ्चकानां पञ्चकं द्वितीयमिति पञ्चकद्वयं तस्य पञ्चपञ्चेति ग्रहणं नेत्यक्षरार्थः। किञ्चासमस्तपक्षेऽपि किं पञ्चशब्दद्वयोक्तयोः पञ्चत्वयोः परस्परान्वयः किं वातयोः शुद्धजनैरन्वयः अथवा पञ्चत्वविशिष्टैर्जनैरपरपञ्चत्वस्यान्वयः। नाद्य इत्याह। न च पञ्चसंख्याया इति। विशेषणमन्वयः। अनन्वये हेतुमाह। उपसर्जनस्येति। अप्रधानानां सर्वेषां प्रधानेन विशेष्येणैवान्वयो वाच्यः, गुणानां परस्परान्वये वाक्यभेदापातादित्यर्थः। द्वितीये दशसंख्याप्रतीतिः स्यात् न पञ्चविंशतिसंख्याप्रतीतिः। तृतीयमुत्थापयति। नन्विति। पञ्चत्वविशिष्टेषु पञ्चत्वान्तरान्वये विशेषणीभूतपञ्चत्वेऽपि पञ्चत्वान्वयात् पञ्चविंशतित्वप्रतीतिरित्यर्थः। दृष्टान्तवैषम्येण परिहरति। नेति ब्रूम इति। पञ्चानां पूलानां समाहार इत्यत्र संख्यापूर्वो द्विगुरिति समासो विहितः। ततो "द्विगोः" [पा०४।१।२१] इति सूत्रेण

प्रत्याधारत्वेन निर्दिष्टः, यस्मिन्निति सप्तमीसूचितस्य "तमेवमन्य आत्मानं" इत्यात्मत्वेनानुकर्षणात्। आत्मा च चेतनः पुरुषः स च पञ्चविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं च युज्येत, अर्थान्तरपरिग्रहे वा तत्त्वसङ्ख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत। तथा "आकाशश्च प्रतिष्ठितः" इत्याकाशस्यापि पञ्चविंशतावन्तर्गतस्य न पृथगुपादानं न्याय्यं, अर्थान्तरपरिग्रहे चोक्तं दूषणं। कथञ्च सङ्ख्यामात्रश्रवणे सत्यश्रुतानां पञ्चविंशतितत्त्वानामुपसंग्रहः प्रतीयेत, जनशब्दस्य तत्त्वेष्वरूढत्वात्, अर्थान्तरोपसंग्रहेऽपि सङ्ख्योपपत्तेः। कथं तर्हि पञ्चपञ्च-

---

ङीपो विधानात् समाहारप्रतीतौ समाहाराः कतीत्याकाङ्क्षायां सत्यां पञ्चेतिपदान्तरान्वयो युक्तः, पञ्चजना इत्यत्र तु ङीबन्तत्वाभावेन समाहारस्याप्रतीतेः जनानाञ्चादित एव पञ्चत्वोपादानात् संख्याकाङ्क्षया असत्त्वात्पञ्चेति पदान्तरं नान्वेति आकाङ्क्षाधीनत्वादन्वयस्येत्यर्थः। भेदो विशेषणं। ननु जनानां निराकाङ्क्षत्वेऽपि तद्विशेषणीभूतपञ्चत्वानि कतीत्याकाङ्क्षायां पञ्चत्वान्तरं विशेषणं भवत्वित्याशङ्कते। भवदपीति। नोपसर्ज्जनस्योपसर्ज्जनान्तरेणान्वयः किन्तु प्रधानेनैवेति नोपसर्ज्जनन्यायविरोध उक्त इति परिहरति। तत्र चेति। एवं नानाभावादिति व्याख्यायातिरेकाच्चेति व्याचष्टे। अतिरेकाच्चेत्यादिना। अतिरेकः आधिक्यं जनशब्दितपञ्चविंशतितत्त्वेषु आत्माकाशयोरन्तर्भावो न वा नाद्य इत्युक्त्वा द्वितीये दोषमाह। अर्थान्तरेति। तथाकाशं विकल्प्य दूषयति। तथेति। उक्तो दोषः सङ्ख्याधिक्यं। पञ्चविंशतिजना आत्माकाशौ चेति सप्तविंशतिसङ्ख्या स्यादित्यर्थः। न च सत्त्वरजस्तमसां पृथग्गणनया सेयेति वाच्यं, आकाशस्य पृथगुक्तिवैयर्थ्यात् यस्मिन्निति आत्मनि तत्त्वानां प्रतिष्ठोक्तिविरोधात्तव मते स्वतन्त्रप्रधानस्यैवानाधारत्वान्नेह

जना इति, उच्यते, दिक्सङ्ख्ये संज्ञायामिति विशेषस्मरणात् सञ्ज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः, ततश्च रूढत्वाभिप्रायेणैव केचित् पञ्चजना नाम विवक्ष्यन्ते, न साङ्ख्यतत्त्वाभिप्रायेण, ते कतीत्यस्यामाकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते, पञ्चजना नाम केचित्, ते च पञ्चेत्यर्थः. सप्तर्षयः सप्तेति यथा। के पुनस्ते पञ्चजना नामेति तदुच्यते॥

## प्राणादयो वाक्यशेषात्॥ १२॥

यस्मिन् पञ्च पञ्चजना इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पञ्च निर्दिष्टाः "प्राणस्य प्राणमुत चक्षुषश्च-

---

नानास्तीति वाक्यशेषविरोधाच्च तव सत्यद्वैतवादित्वात्। किञ्च पञ्चविंशतिसङ्ख्याप्रतीतावपि न साङ्ख्यतत्त्वानां ग्रहणमित्याह। कथञ्चेति। किं जनशब्दात्तत्त्वग्रह उतासत्त्वेयेति कथशब्दार्थः। नाद्य इत्याह। जनेति। न द्वितीय इत्याह। अर्थान्तरेति। किन्तदर्थान्तरं यदर्थकमिदं वाक्यमिति पृच्छति। कथमिति। पञ्च च ते जनाश्चेति कर्मधारयादिसमासान्तरात् सञ्ज्ञासमासस्य प्रेक्षया बलवत्त्वं तावदाह। उच्यत इति। दिग्वाचिनः सङ्ख्यावाचिनश्च शब्दाः सञ्ज्ञायां गम्यमानायां सुबन्तेनोत्तरपदेन समस्यन्ते यथा दक्षिणाग्निः सप्तर्षय इत्यादि। अथश्च समासस्तत्पुरुषभेदः पञ्चजनशब्दस्य सञ्ज्ञात्वमुक्त्वा सञ्ज्ञिकथनार्थं सूत्रं गृह्णाति। के पुनस्त इति॥

श्रुतौ उतशब्दोऽप्यर्थः। ये प्राणादिप्रेरकं तत्साक्षिणमात्मानं विदुस्ते ब्रह्मविद इत्यर्थः। पञ्चजनशब्दस्य प्राणादिषु कया वृत्त्या प्रयोग इति शङ्कते। कथं पुनरिति। यथा तव तत्त्वेषु जनशब्दस्य लक्षणया प्रयोगस्तथा मम प्राणादिषु पञ्चजनशब्दस्य लक्षणयेत्याह। तत्त्वेष्विति। तर्हि व्युत्क्रमसाम्यात्तत्त्वान्येव ग्राह्याणीत्यत आह। समाने त्विति। सन्निहितसजातीयानपेक्षश्रुतिस्था एव ग्राह्या न

चुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति, तेऽत्र वाक्यशेषगताः सन्निधानात् पञ्चजना विवक्ष्यन्ते। कथं पुनः प्राणादिषु जनशब्दप्रयोगः, तत्त्वेषु वा कथं जनशब्दप्रयोगः, समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात् प्राणादय एव ग्रहीतव्या भवन्ति, जनसम्बन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति। जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः, "ते वा एते पञ्च ब्रह्म-पुरुषाः" इति,अत्र "प्राणो ह पिता प्राणो ह माता" इत्यादि च ब्राह्मणं। समासबलाच्च समुदायस्य रूढत्वमविरुद्धं। कथं पुनरसति प्रथमप्रयोगे रूढिः शक्याश्रयितुं। शक्योद्भिदादिवदित्याह। प्रसिद्धार्थसन्निधानेन ह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभि-

---

तु व्यवहितविजातीयसापेक्षस्मृतिस्था इत्यर्थः। लक्षणाबीजं सम्बन्धमाह। जनेति। जनः पञ्चजन इति पर्यायः, पुरुषमित्रादिशब्दवच्च पञ्चजनशब्दस्य प्राणादिलक्षकत्वं युक्तमित्याह। जनवचनस्येति। ननु जायन्त इति जनाः महदादयः जनकत्वाज्जनः प्रधानमिति। योगसम्भवे किमिति रूढिमाश्रित्य लक्षणाप्रयास इत्यत आह। समासेति। यथा अश्वकर्णशब्दस्य वर्णसमुदायस्य वृक्षे रूढिरेव पञ्चजनशब्दस्य रूढिरेव नावयवशक्त्यात्मको योग इत्यर्थः। पूर्वकालिकप्रयोगाभावान्न रूढिरित्याक्षिपति। कथमिति। स्युः पुमांसः पञ्चजना इत्यमरकोषादौ प्रयोगोऽस्त्येव, तद्भावमङ्गीकृत्याप्याह। शक्येति। जनसम्बन्धाच्चेति पूर्वभाष्ये नरेषु पञ्चजनशब्दस्य रूढिमाश्रित्य प्राणादिषु लक्षणोक्ता इह तु प्रौढिवादेन प्राणादिषु रूढिरुच्यत इति मन्तव्यं। संगृहीतं विवृणोति। प्रसिद्धेत्यादिना। उद्भिदा यजेत पशुकाम इत्यत्रोद्भित्पदं विधेयगुणार्थकं कर्मनामधेयं वेति संशये खनित्रादावुद्भित्पदस्य प्रसिद्धेर्यागनामत्वे प्रसिद्धिविरोधात् ज्योतिष्टोमे

व्याहारात् तद्विषयो नियम्यते यथोद्भिदा यजेत, यूपं छिनत्ति, वेदिं करोतीति, तथाऽयमपि पञ्चजनशब्दः समासान्वाख्यानादवगतसंज्ञाभावः संज्ञाकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्त्स्यते। कैश्चित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि च पञ्च जना व्याख्याताः। अन्यैश्चत्वारो वर्णा निषादपञ्चमाः परिगृहीताः। क्वचिच्च यत् पाञ्चजन्यया विशेति प्रजापरः प्रयोगः पञ्चजनशब्दस्य दृश्यते तत्परिग्रहेऽपीह न कश्चिद्विरोधः। आचार्यस्तु न पञ्चविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवंपरतया प्राणादयो वाक्यशेषादिति जगाद। भवेयुस्तावत् प्राणादयः

---

गुणविधिरिति प्राप्ते राद्धान्तः। यजेत यागेनेष्टं भावयेदित्यर्थः। तत्रोद्भिदेत्यप्रसिद्धस्य तृतीयान्तस्य यागेनेत्यनेन प्रसिद्धार्थकेन सामानाधिकरण्येन तन्नामत्वं निश्चीयते, उद्भिनत्ति पशून् साधयतीति प्रसिद्धेरविरोधादप्रकृतज्योतिष्टोमे गुणविध्ययोगात् तद्विधौ चोद्भिदाख्यगुणवता यागेनेति मत्वर्थसम्बन्धलक्षणाप्रसङ्गाच्चेति कर्मनामैवोद्भित्पदं। तथा छिनत्तीति प्रसिद्धार्थच्छेदनयोग्यार्थकशब्दसमभिव्याहाराद्दारुविशेषो यूपशब्दार्थः। करोतीति समभिव्याहाराद्वेदिशब्दार्थः संस्कारयोग्यस्थण्डिलविशेष इति गम्यते, तथा प्रसिद्धार्थकप्राणादिशब्दसमभिव्याहारात् पञ्चजनशब्दः प्राणाद्यर्थक इति निश्चीयत इत्यर्थः। एकदेशिनां संमतिद्वयमाह। कैश्चिदित्यादिना। शूद्रायां ब्राह्मणाज्जातो निषादः। श्रुत्या पञ्चजनशब्दस्यार्थान्तरमाह। क्वचिच्चेति। पाञ्चजन्यया प्रजया विशतीति विट् तया विशा पुरुषरूपयेन्द्रस्याह्वानार्थं घोषः कृत इति यत्तदुक्तं घोषातिरेकेणेन्द्राह्वानायोगादिति श्रुत्यनुसारेण प्रजामात्रग्रहेऽपि न विरोध इत्यर्थः। सूत्रविरोधमाशङ्क्याह। आचार्यस्त्विति। अतः सांख्यतत्त्वातिरिक्तयत्-

पञ्चजना माध्यन्दिनानां येऽन्नं प्राणादिष्वामनन्ति काण्वानान्तु कथं प्राणादयः पञ्चजना भवेयुः येऽन्नं प्राणादिषु नामनन्तीति अत उत्तरं पठति॥

*ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसङ्ख्या पूर्यते। तेऽपि हि यस्मिन् पञ्च पञ्चजना इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते "तद्देवा ज्योतिषां ज्योतिः" इति। कथं पुनरुभयेषामपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्चसङ्ख्यया केषाञ्चिद्गृह्यते केषाञ्चिन्नेति, अपेक्षाभेदादित्याह। माध्यन्दिनानां हि समानमन्त्रपठितप्राणादिपञ्चजनलाभात् नास्मिन्मन्त्रान्तरपठिते ज्योतिषि अपेक्षा भवति तदलाभात्तु काण्वानां भवत्यपेक्षा, अपेक्षाभेदाच्च समानेऽपि

---

किञ्चित्परतया पञ्चजनशब्दव्याख्यायामविरोध इति भावः। शङ्कोत्तरत्वेन सूत्रं गृह्णाति। भवेयुरिति॥

ज्योतिषां सूर्यादीनां ज्योतिस्तद्ब्रह्म देवा उपासत इत्यर्थः। नन्विदं षष्ठ्यन्तज्योतिःपदोक्तं सूर्यादिकं ज्योतिः शाखाद्वयेऽप्यस्ति तत्काण्वानां पञ्चत्वपूरणाय गृह्यते नान्येषामिति विकल्पो न युक्त इति शङ्कते। कथं पुनरिति। आकाङ्क्षाविशेषाद्विकल्पो युक्त इत्याह सिद्धान्ती। अपेक्षेति। यथा त्रिरात्रे षोडशिनं गृह्णाति न गृह्णातीति वाक्यभेदाद्विकल्पस्तद्वच्छाखाभेदेनाह, न पाठापाठाभ्यां ज्योतिषो विकल्प इत्यर्थः। ननु क्रियाया विकल्पो युक्तः न वस्तुनोति चेत्, सत्यं, अत्रापि शाखाभेदेन साम्ना ज्योतिःसहिता वा पञ्च प्राणादयो यत्र प्रतिष्ठि-

---

* ज्योतिषैवैकेषामिति वर्ध० पु० पाठः।

मन्त्रे ज्योतिषो ग्रहणाग्रहणे, यथा समानेऽप्यतिरात्रे वचनभेदात् षोडशिनो ग्रहणाग्रहणे तद्वत्। तदेवं न तावत् श्रुतिप्रसिद्धिः काचित् प्रधानविषयास्ति, स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

प्रतिपादितं ब्रह्मणो लक्षणं, प्रतिपादितं ब्रह्मविषयं गतिसामान्यं वेदान्तवाक्यानां, प्रतिपादितञ्च प्रधानस्याशब्दत्वं। तत्रेदमपरमाशङ्क्यते। न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं वेदान्तवाक्यानां प्रतिपादयितुं शक्यं, कस्मात्, विगानदर्शनात्, प्रतिवेदान्तं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात्, तथा हि क्वचिदात्मन आकाशः सम्भूत इत्याकाशादिका सृष्टिराम्नायते, क्वचित्तेजआदिका तत्तेजोऽसृजतेति, क्वचित्प्राणादिका स प्राणमसृजत प्राणाच्छ्रद्धा-

---

तास्तन्मनसाऽनुद्रष्टव्यमिति ध्यानक्रियाया विकल्पोपपत्तिरित्यनवद्यं। उक्तं प्रधानस्याशब्दत्वमुपसंहरति। तदेवमिति। तथापि स्मृतियुक्तिभ्यां प्रधानमेव जगत्कारणमित्यत आह। स्मृतीति ॥

कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः। पूर्वग्रन्थेनास्य सङ्गतिं वक्तुं वृत्तमनुवदति। प्रतिपादितमिति। अधिकरणत्रयेण प्रधानस्याश्रौतत्वोक्त्या जगत्कारणत्वलक्षणेन ब्रह्मण एव बुद्धिस्थता, तस्मिन्नेव बुद्धिस्थे निर्विशेषे ब्रह्मणि वेदान्तानां समन्वय इति साधितं पूर्वसूत्रसन्दर्भेण। तत्र लक्षणसमन्वययोरसिद्धिरेव श्रुतीनां विरोधदर्शनादित्याक्षेपरूपत्वेनास्य सङ्गतिमाह। तत्रेति। न चाविरो-

मिति, क्वचित् अक्रमैव लोकानामुत्पत्तिराम्नायते स इमाँ-
ल्लोकानसृजताम्भो मरीचिर्मरमाप इति, तथा क्वचिदसत्पू-
र्विका सृष्टिः पठ्यते, असद्वा इदमग्र आसीत् ततो वै सदजाय-
तेति, असदेवेदमग्र आसीत् तत्सदासीत् तत्सत्यमभवदिति
च, क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते
तद्धैक आहुरसदेवेदमग्र आसीदित्युपक्रम्य, कुतस्तु खलु सोम्यैवं
स्यादिति होवाच कथमसतः सज्जायेतेति, सदेव सोम्येदमग्र
आसीदिति, क्वचित् स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते,

---

धचिन्तायाः द्वितीयाध्याये सङ्गतिर्नास्मिन्नध्याये इति वाच्यं, सिद्धे सम-
न्वये स्मृत्यादिमानान्तरविरोधनिरासस्य द्वितीयाध्यायार्थत्वात् तत्प-
दवाच्यजगत्कारणवादिश्रुतीनां मिथो विरोधाद्वाच्यार्थानिश्चयेन लक्ष्ये
समन्वयासिद्धौ प्राप्तायां तत्साधकाविरोधचिन्ताया अत्रैव सङ्गत-
त्वात्। न चैवं सृष्टिश्रुतीनामप्यविरोधोऽत्रैव चिन्तनीय इति वाच्यं,
स्वप्नवत् कल्पितसृष्टौ विरोधस्यैवाभावात्। किमर्थं तर्हि द्वितीये
तच्चिन्तनं, स्थूलबुद्धिसमाधानार्थं इति ब्रूमः। इह तु सूक्ष्मदृष्ट्या
वाक्यार्थे समन्वयज्ञानाय तत्पदार्थश्रुतिविरोधः परिह्रियते। यद्य-
पि त्वंपदार्थश्रुतिविरोधोऽत्र परिहर्तव्यः तथापि प्रथमसूत्रेण बन्ध-
मिथ्यात्वसूचनादविरोधः प्रसिद्धः, प्रपञ्चस्तु स्थूलबुद्धिसमाधानप्रसङ्गेन
भविष्यतीति मन्यते सूत्रकारः। अत्र जगत्कारणश्रुतयो विषयस्ताः किं
ब्रह्मणि मानं न वेति संशयेऽन्योन्यविरोधात् संख्याद्युत्पत्तिक्रियाया विकल्पे-
ऽपि कारणे वस्तुन्यसद्वा सद्वा कारणमित्यादिविकल्पसम्भवादप्रामाण्य-
मिति प्रत्युदाहरणेन पूर्वपक्षयन्नुक्ताक्षेपं विवृणोति। प्रतिवेदान्तमित्या-
दिना। वेदान्तानां समन्वयसाधनाच्छ्रुत्यध्यायसङ्गतिः। असदादिपदानां
सत्कारणे समन्वयोक्तेः पादसङ्गतिः, पूर्वपक्षे समन्वयासिद्धिः फलं,

तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत इति। एवमनेकधा विप्रतिपत्तेः वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या, स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति। एवं प्राप्ते ब्रूमः। सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किञ्चिद्विगानमस्ति, कुतः, यथाव्यपदिष्टोक्तेः। यथाभूतो ह्येकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मकोऽद्वितीयः कारणत्वेन व्यपदिष्टः, तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते, तद्यथा, सत्यं ज्ञानमनन्तं ब्रह्मेति, अत्र तावज्ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं

---

सिद्धान्ते तत्सिद्धिरिति विवेकः। क्रमाक्रमाभ्यां सृष्टिविरोधं तावद्दर्शयति। तथा हि क्वचिदित्यादिना। स परमात्मा लोकानसृजत अम्मयशरीरप्रचुरस्वर्गलोकोऽम्भ शब्दार्थः। सूर्यरश्मिव्याप्तोऽन्तरीक्षलोको मरीचयः। मरो मर्त्यलोकः। अब्बहुलाः पाताललोका आप इति श्रुत्यर्थः। सृष्टिविरोधमुक्त्वा कारणविरोधमाह। तथेति। असदनभिव्यक्तनामरूपात्मकं कारणं, ततः कारणात् सदभिव्यक्तं। एतत्तुल्यार्थं छान्दोग्यवाक्यमाह। असदेवेति। किं शून्यमेव नेत्याह। तत्सदिति। अबाधितं ब्रह्मैवासीदित्यर्थः। तद्ब्रह्मात्मना स्थितं जगत् सृष्टिकाले सम्यगभिव्यक्तमभवत्। प्रक्रिया सृष्टिः। तत्तत्र कारणे एके वाह्यास्तेषां मतं श्रुतिरेव दूषयति। कुत इति। कुतस्त्वेवंपदयोरर्थमाह। कथमिति। स्वमतमाह। सदिति। तदिदं जगद्ध किल तर्हि प्राक्कालेऽव्याकृतं कारणात्मकमासीत्। श्रुतीनां विरोधमुपसंहरति। एवमिति। किमत्र न्याय्यमित्याशङ्क्य मानान्तरसिद्धप्रधानलक्षकत्वं वेदान्तानां न्याय्यमित्याह। स्मृतीति। तत्र

ब्रह्म त्यत्सत्पदपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत्। तद्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरम्परया चान्तरनुप्रवेशनेन सर्वेषां नः प्रत्यगात्मानं निरधारयत्, बहु स्यां प्रजायेयेति चात्मविषयेण बहुभवनाशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत, तथेदं सर्वमसृजत यदिदं किञ्चेति समस्तजगत्सृष्टिनिर्देशेन प्राक् सृष्टेरद्वितीयं स्रष्टारमाचष्टे, तदत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञातं तल्लक्षणमेवान्यत्रापि विज्ञायते। सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजतेति, तथा आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् स ऐक्षत लोकान्नु सृजा इति च, एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात्। कार्यविषयन्तु विगानं दृश्यते क्वचिदाका-

---

शादिका सृष्टिः, क्वचित्तेजआदिका, इत्येवंजातीयकम्। न च कार्यविषयेण विगानेन कारणमपि सर्वेषु वेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यं वक्तुम्, अतिप्रसङ्गात्। समाधास्यति चाचार्यः कार्यविषयमपि विगानं न

स्यादौ, विरोधमङ्गीकृत्य प्रसङ्गाद् विरोधं परिहरति। सत्यपीति। आकाशादिषु ब्रह्मणः कारणत्वे विरोधो नैवास्तीति प्रतिज्ञाया हेतुमाह। कुत इति। यथाभूतत्वमेवाह। सर्वज्ञ इति। कारणस्य सर्वज्ञत्वादिकं प्रतिवेदान्तं दृश्यत इत्याह। तथेत्यादिना। तद्विषयेण ब्रह्मविषयेण, चेतनं सर्वज्ञं, तदात्मानं स्वयमकुरुतेति श्रुतेरपरप्रयोज्यत्वं। तस्माद्वा एतस्मादात्मन इति प्रत्यगात्मत्वं तस्य बहुरूपत्वकामनया स्थितिकालेऽप्यद्वितीयत्वं। यथा तैत्तिरियके सर्वज्ञत्वादिकं कारणस्य तथा छान्दोग्यादावपि दृश्यते इत्याह। तदत्र यल्लक्षणमिति, मिषत्स्व्यापारं अविगीतार्थत्वादविरुद्धार्थकत्वात् कारणे नास्ति विप्रतिपत्तिरिति शेषः, तथापि कार्ये विरोधात् कारणेऽपि विरोधः स्यादित्याशङ्क्य निषेधति। कार्यविषयन्त्वित्यादिना। सप्तम्यन्तीना प्रत्यक्-

शादिका सृष्टिः क्वचित्तेजआदिकेत्येवंजातीयकं। न च कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुं, अतिप्रसङ्गात्। समाधास्यति चाचार्यः कार्यविषयं विगानं न वियदश्रुतेरित्यारभ्य। भवेदपि कार्यस्य विगीतत्वं *अप्रतिपाद्यमानत्वात्, न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः। न हि तत्प्रतिबद्धः कश्चित् पुरुषार्थो दृश्यते श्रूयते वा, न च कल्पयितुं शक्यते। उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात्। दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थतां, अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छेति। मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं

---

मन्यथात्वेन सोऽहमिति प्रत्यभिज्ञायमाने द्रष्टर्यपि नानात्वं प्रसज्येतेत्याह। अतिप्रसङ्गादिति। सृष्टिविरोधमङ्गीकृत्य स्रष्टरि न विरोध इत्युक्त्वा अधुनाङ्गीकारं त्यजति। समाधास्यति चेति। किमर्थं तर्हि श्रुतयः सृष्टिमन्यथान्यथा वदन्तीत्याशङ्क्य सृष्टावतात्पर्यज्ञापनायेत्याह। भवेदित्यादिना। अतात्पर्यार्थविरोधो न दोषायेत्यतात्पर्यं साधयति। न हीति। फलवद्ब्रह्मवाक्यशेषत्वेन सृष्टिवाक्यानामर्थवत्त्वसम्भवान्न स्वार्थे पृथक् फल कल्प्य वाक्यभेदापत्तेरित्याह। न च कल्पयितुमिति। न्यायादेकवाक्यत्वं सिद्धं श्रुतिरपि दर्शयन्तीत्याह। दर्शयति चेति। शुङ्गेन कार्येण लिङ्गेन कारणब्रह्मज्ञानार्थत्वं सृष्टिश्रुतीनामुक्त्वा कारणस्याद्वयत्वज्ञानं फलान्तरमाह। मृदादीति। एवं निष्फलायामन्यार्थायां सृष्टौ तात्पर्याभावाद्विरोधो न दोष इत्यत्र

---

*अप्रतिपाद्यत्वादिति का॰ वर्ध॰ पु॰ पाठ।

सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते। तथा च सम्प्रदायविदो वदन्ति,

"मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा।
उपायः सोऽवताराय नास्ति भेदः कथञ्चन"॥ इति।

ब्रह्मप्रतिपत्तिसम्बद्धं* तु फलं श्रूयते "ब्रह्मविदाप्नोति परं" "तरति शोकमात्मवित्" "तमेव विदित्वा अतिमृत्युमेति" इति च। प्रत्यक्षावगमं चेदं फलं "तत्त्वमसि" इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः। यत् पुनः कारणविषयं विज्ञानं दर्शितं "असद्वा इदमग्र आसीत्" इत्यादि तत् परिहर्तव्यं। अत्रोच्यते।

†समाकर्षात्॥ १५॥

असद्वा इदमग्र आसीदिति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते। यतोऽसन्नेव स भवत्यसत् ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेदेद सन्तमेनं ततो विदुरित्यसद्वादापवादेनास्तित्व-

---

वृद्धसम्मतिमाह। तथा चेति। अन्यथान्यथेति वीप्सा द्रष्टव्या। अवताराय ब्रह्मधीजन्मने, अतस्तदन्यथात्वेऽपि ब्रह्मणि न भेदः ज्ञेयेन विज्ञानमित्यर्थः। ब्रह्मज्ञानस्य सृष्टिशेषित्वमुक्तान्तन्निर्वाहाय तस्य फलमाह। ब्रह्मेति। मृत्युमत्येतीत्यन्वयः। एवं सृष्टिद्वारकं विरोधमुत्सूत्रं समाधाय कारणस्य सदसत्त्वादिना साक्षाच्छ्रुतिविरोधनिरासार्थं सूत्रमादत्ते। यत् पुनरिति। यतोऽस्तित्वलक्षणं ब्रह्म निर्धार्य तस्मिन्नेव श्लोकमुदाहरति अतोऽत्र श्लोके निरात्मकमसन्न श्राव्यत इति योजना। तत् तत्र सदात्मनि श्लोको मन्त्रो भवति।

सदात्मसमाकर्षादतीन्द्रियार्थकासत्पदेन ब्रह्म लक्ष्यत इत्याह।

---

* सम्बद्धमित्यस्य स्थाने प्रतिबद्धमिति का० वर्ध० पु० पाठः।

† समाकर्पणादिति वर्ध०।

लक्षणं अन्नान्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य सोऽकामयतेति तमेव प्रकृत समाकृष्य सप्रपञ्चां सृष्टिं तस्मात् श्रावयित्वा तत् सत्यमित्याचक्षत इति चोपसंहृत्य तदप्येष श्लोको भवति इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरत्यसद्वा इदमग्र आसीदिति। यदि त्वसन्निरात्मकमस्मिन् श्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसम्बद्धं वाक्यमापद्येत। तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते। एषैवासदेवेदमग्र आसीदित्यत्रापि योजना, तत् सदासीदिति समाकर्षणात्। अत्यन्ताभावाभ्युपगमे हि तत् सदासीदिति किं समाकृष्येत। तद्धैक आहुरसदेवेदमग्र आसीदित्यत्रापि न श्रुत्यन्तराभिप्रायेणायमेकीयमतोपन्यासः क्रियायामिव वस्तुनि विकल्पस्यासम्भवात्। तस्माच्छ्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यस्य निरास इति द्रष्टव्य। तद्धेदं तर्ह्यव्याकृतमासीदित्य-

---

तस्मादिति। न च प्रधानमेव लक्ष्यतामिति वाच्य। चेतनार्थकब्रह्मादिशब्दानामनेकेषां लक्षणागौरवादिति भाव। तैत्तिरिश्रुतौ सूत्र योजयित्वा छान्दोग्यादौ योजयति। एषैवेति। सदेकार्थकतत्पदेन पूर्वोक्तासत समाकर्षान्न शून्यत्वमित्यर्थं। नन्वसत्पदलक्षणा न युक्ता श्रुतिभेदे च समतभेदेनोदितानुदितहोमवद्विकल्पस्य दर्शितत्वादित्यत आह। तद्धैक इति। एके शाखिन इत्यर्थो न भवति, किन्तु अनादिससारचक्रस्था वेदबाह्या इत्यर्थं। शून्यनिरासेन श्रुतिभि सदादम्यवेद्यत्वात्तासा विरोधस्फुर्त्तिनिरासाय लक्षणा युक्तेति भाव। यदुक्त क्वचिदकर्तृका सृष्टि कथितेति तन्नेत्याह। तद्धेदमिति।

नापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते। स एष इह प्रविष्ट आनखाग्रेभ्य इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् निरध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना स इत्यनेन सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत। चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते, अनुप्रविष्टस्य चेतनत्वश्रवणात्, "पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः" इति। अपि च यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत् साध्यक्षं व्याक्रियते एवमादिसर्गेऽपीति गम्यते, दृष्टविपरीतकल्पनानुपपत्तेः। श्रुत्यन्तरमप्यनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति साध्यक्षामेव जगतो व्याक्रियां दर्शयति। व्याक्रियत इत्यपि कर्मकर्तरि लकारः सत्येव परमेश्वरे कर्त्तरि सौकर्यमपेक्ष्य द्रष्टव्यः। यथा लूयते केदारः, स्वयमेवेति सत्येव पूर्णके लवितरि। यद्वा कर्मण्येवैष लकारः अर्थाक्षिप्तं कर्त्रन्तरमपेक्ष्य द्रष्टव्यः, यथा गम्यते ग्राम इति॥

---

अध्यक्षः कर्त्ता। ननु कर्मभाव एव परामृश्यते इत्यत आह। चेतनस्य चायमिति। चक्षुर्द्रष्टा श्रोत्रं श्रोता मनो मन्तेत्युच्यते इत्यर्थः। आद्यकार्यं सकर्तृकं कार्यत्वात् घटवदित्याह। अपि चेति। अद्यत्वे इदानीं। ननु कर्मकारकादन्यस्य कर्त्तुः सत्त्वे कर्म्मण एव कर्तृवाचिलकारो विरुद्ध इत्यत आह। व्याक्रियते इति। अनायासेन सिद्धिमपेक्ष्य कर्म्मणः कर्तृत्वमुपचर्यत इत्यर्थः। व्याक्रियते जगत् स्वयमेव निष्पन्नमिति व्याख्याय केनचिद्व्याकृतमिति व्याचष्टे। यद्वेति। अतः श्रुतीनामविरोधात् कारणद्वारा समन्वय इति सिद्धं॥

## जगद्वाचित्वात् ॥ १६ ॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते, "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत् कर्म स वै वेदितव्य." इति [कौ०ब्रा०अ०४।क०१९।]। तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते उत मुख्यः प्राण उत परमात्मेति विषय, किं तावत् प्राप्तं प्राण इति कुत. यस्य वै तत् कर्मेति श्रवणात्, परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात्, वाक्यशेषे चाथास्मिन् प्राण एवैकधा भवतीति प्राणशब्दश्रवणात् प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात्, ये चैते पुरस्ताद्बालाकिनाऽऽदित्ये पुरुषश्चन्द्रमसि पुरुष इत्येवमादयः पुरुषा निर्दिष्टाः तेषामपि भवति प्राणः कर्ता प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनां कतम एको देव इति

---

जगद्वाचित्वात् विषयमाह। कौषीतकीति। बलाकाया अपत्यं बालाकिर्ब्राह्मणस्तं प्रति राजोवाच। यो वा इति। न केवलमादित्यादीनां कर्ता किन्तु सर्वस्य जगत इत्याह। यस्येति। एतज्जगद्यस्य कर्म क्रियते इति व्युत्पत्त्या कार्यमित्यर्थः। कर्मेतिशब्दस्य योगरूढिभ्यां संशयमाह। तत्रेति। पूर्वत्रैकवाक्यस्थसदादिशब्दबलादसच्छब्दो नीत., इह तु वाक्यभेदात् ब्रह्म ते ब्रवाणीति बालाकिवाक्यस्थब्रह्मशब्देन प्राणादिशब्दो ब्रह्मपरत्वेन नेतुमशक्य इति प्रत्युदाहरणेन पूर्वपक्षमाह। किं तावदिति। पूर्वपक्षे वाक्यस्य प्राणाद्युपास्तिपरत्वाद्ब्रह्मणि समन्वयासिद्धि सिद्धान्ते ज्ञेये समन्वयसिद्धिरिति फलं। अस्य सुषुप्तौ इत्येति शेष। श्रुतं पुरुषकर्तृत्वं प्राणस्य कथमित्यत आह। ये चैत इति। सूत्रात्मकप्राणस्य विकारा सूर्यादय इत्यत्र मानमाह। कतम इति। यस्य महिमानं सर्वे देवा इति पूर्ववाक्ये दर्शित

प्राण इति स ब्रह्मेत्याचक्षते इति श्रुत्यन्तरप्रसिद्धेः, जीवो वा-यमिह वेदितव्यतयोपदिश्यते तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुं, यस्य वै तत् कर्मेति सोऽपि भोक्तृत्वाद्भोगो-पकरणभूतानामेतेषां पुरुषाणां कर्तोपपद्यते, वाक्यशेषे च जीव-लिङ्गमवगम्यते। यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्त्तु-र्वेदनायोपेतं बालाकिं प्रतिबुबोधयिषुरजातशत्रुः सुप्तं पुरुष-मामन्त्र्यामन्त्रणशब्दाश्रवणात् प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थापनात् प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबो-धयति, तथा परस्तादपि जीवलिङ्गमवगम्यते। तद्यथा "श्रेष्ठी स्वैर्भुङ्क्ते यथावा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभि-र्भुङ्क्ते एवमेवैते आत्मान एतमात्मानं भुञ्जन्ति" इति [कौ०ब्रा०

---

अत सर्वदेवात्मकत्वात् स प्राणो ब्रह्म यत्परोक्षं शास्त्रैकवेद्यत्वादि-त्यर्थः। पूर्वपक्षान्तरमाह। जीवो वेति। यत्कारणं यस्माज्जीवं बोध-यति तस्मादस्ति सुप्तोत्थापनं जीवलिङ्गमिति योजना। तौ ह पुरुषं सु-प्तमाजग्मतु तं राजाह बृहत्पाण्डरवासः सोम राजन्नित्यामन्त्र्य सम्बोध्य सम्बोधनानभिज्ञत्वात् प्राणादेरनात्मत्वमुक्त्वा यष्ट्याघातेनोत्थाप्य जीवं बोधितवान् इत्यर्थः। श्रेष्ठी प्रधानः स्वैर्भृत्यैर्ज्ञातिभिरुपहृतं भुङ्क्ते स्वाः ज्ञातयस्च तमुपजीवन्ति। एव जीवोऽपि आदित्यादिभिः प्रका-शादिना भोगोपकरणैर्भुङ्क्ते ते च हविर्ग्रहणादिना जीवमुपजीवन्तो-त्युक्त भोक्तृत्व जीवलिङ्गं। ननु प्राण एवैकधा भवतीति श्रुतः प्राण-शब्दो जीवे कथमित्यत आह। प्राणभृत्त्वाच्चेति। सूत्रादहिरेव सिद्धा-न्तयति। एवमिति। स च बालाकिर्ब्रह्मत्वभ्रान्त्या यष्टिलिङ्गरूपान् पुरुषानुक्त्वा राज्ञा निरस्तस्तूष्णीं स्थितः, त्वदुक्तं ब्रह्म मृषेत्युक्त्वा राज्ञोच्यमानं ब्रह्मैवेति वक्तव्यमन्यथा राज्ञोऽपि मृषावादित्वप्रसङ्गादि-

अ॰४।क॰२॰।] प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वं । तस्माज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयो न परमेश्वरः, तल्लिङ्गानवगमादिति, एवं प्राप्ते ब्रूमः । परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात्, कस्मात्, उपक्रमसामर्थ्यात्, इह हि बालाकिरजातशत्रुणा सह ब्रह्म ते ब्रवाणि इति संवदितुमुपचक्रमे, स च कतिचिदादित्याद्यधिकरणान् पुरुषान् मुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव, तमजातशत्रुर्मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणीत्यमुख्यब्रह्मवादितयापोह्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप । यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो बाध्येत, तस्मात् परमेश्वर एवायं भवितुमर्हति । कर्तृत्वञ्चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते । यस्य वै तत् कर्मेत्यपिनायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा

---

त्याह । यदि सोऽपीति । वेदितव्योऽपीत्यर्थः । मुख्यं पुरुषकर्तृत्वं ब्रह्मण एव लिङ्गं प्राणजीवयोस्तन्नियम्यत्वेनास्वातन्त्र्यादित्याह । कर्तृत्वञ्चेति । यदुक्तं चलनादृष्टयोर्वाचकः कर्मशब्दः प्राणजीवयोरुपस्थापक इति तन्नेत्याह । यस्येति । अनेकार्थकाच्छब्दादन्यतरार्थस्य प्रकरणादुपपदाद्वा ग्रहणं न्याय्यं । अत्र *प्रकरणोपपदयोरसत्त्वात् कस्य ग्रहणमिति संशये पुरुषकर्तृपदसान्निध्यात् क्रियत इति योगाज्जगद्ग्रहणमित्यर्थः । एतत्कर्मेति प्रकृतपरामर्शात् पुरुषाः पूर्वोक्ताः कर्मशब्देन निर्दिश्यन्तामित्यत आह । नापीति । पौनरुक्त्यापातात् पुरुषाणां नपुंसकैकवचनेन परामर्शायोगाच्चेत्यर्थः । ननु पुरुषोत्पादकस्य कर्तुर्व्यापारः करोत्यर्थ उत्पादनं तस्य फलं पुरुषजन्म तदन्यतरवाची कर्मशब्दोऽस्त्वित्यत आह । नापीति । कर्तृशब्देनेति क्रियाफलाभ्यां

---

* प्रकरणापशब्दयोरिति भो॰ पु॰ टी॰ ।

कर्मणो निर्देशः तयोरन्यतरस्याप्यप्रकृतत्वात् असंशब्दितत्वाच्च। नापि पुरुषाणां अयं निर्देशः, एतेषां पुरुषाणां कर्त्तेत्येवं तेषां निर्दिष्टत्वात्, लिङ्गवचनविगानाच्च। नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः, कर्तृशब्देनैव तयोरुपात्तत्वात्, परिशेषात् प्रत्यक्षसन्निहितं जगत् सर्वनाम्नैतच्छब्देन निर्दिश्यते, क्रियत इति च तदेव जगत्कर्म। ननु जगदप्यप्रकृतमसंशब्दितञ्च, सत्यमेतत्, तथाप्यसति विशेषोपादाने साधारणेनार्थेन सन्निधानेन सन्निहितवस्तुमात्रस्यायं निर्देश इति गम्यते न विशिष्टस्य कस्यचित्, विशेषसन्निधानाभावात्। पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानादविशेषितं जगदेवेहोपादीयत इति गम्यते। एतदुक्तं भवति, य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्त्ता किमनेन विशेषेण यस्य सत्यमेव जगदविशेषितं कर्मेति। वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः। ये बालाकिना ब्रह्मत्वाभिमताः

---

विना कर्तृत्वायोगात् कर्तृशब्देनैव तयोर्ग्रहणमित्यर्थः। जगतोऽपि प्रकरणोपपदे *स्त इत्युक्तमङ्गीकरोति। सत्यमिति। प्रकरणादिकं हि सर्वनाम्नः सङ्कोचकं तस्मिन्नसति सामान्येन बुद्धिस्थं सर्वमेव गृह्यते, अत्र च सङ्कोचकासत्त्वात् सर्वार्थकेन सर्वनाम्ना बुद्धिस्थस्य कार्यमात्रस्य कर्मशब्दो वाचक इत्याह। तथापीति। किञ्च जगदेकदेशोक्त्या जगत् प्रकृतमित्याह। पूर्वत्रेति। जगद्द्वे पुरुषाणामपि ग्रहणात् प्रथगुक्ति र्व्यर्थेत्यत आह। एतदुक्तमिति। स वेदितव्य इति सम्बन्धः। पुरुषमात्रनिरूपितं कर्तृत्वमिति भ्रान्तिनिरासार्थो वाशब्दः। ब्रह्मत्वा

---

* न स्त इति पा० २ टी०।

पुरुषाः कीर्तितास्तेषामब्रह्मत्वख्यापनाय विशेषोपादानं, एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतयोपदिश्यते, परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातं॥१७॥

अथ यदुक्तं वाक्यशेषगतात् जीवलिङ्गात् मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति तत्परिहर्तव्यं। अत्रोच्यते, परिहृतं तच्चोपासात्रैविध्यादाश्रितत्वादिह तद्योगादित्यत्र। त्रिविधं ह्यत्रोपासनमेव सति प्रसज्येत, जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चैतत् न्याय्यं, उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते। तत्रोपक्रमस्य तावत् ब्रह्मविषयत्वं दर्शितं। उपसंहारस्यापि निरतिशयफलश्रवणात् ब्रह्मविषयत्वं दृश्यते "सर्वान् पाप्मनोऽपहत्य सर्वेषाञ्च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं

---

भोजयितव्याः परिव्राजकाश्चेत्यत्र यथा ब्राह्मणशब्दः परिव्राजकान्यविषयः तथात्र कर्मशब्दः पुरुषान्यजगद्वाचीत्याह। एवमिति। यस्तु जगत्कर्ता वेदितव्यः परमेश्वरस्य किमायातमित्यत आह। परमेश्वरेति॥

सिद्धान्तमुक्त्वा पूर्वपक्षबीजमनूद्य दूषयति। जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातमिति। उक्तमेव स्मारयति। त्रिविधमिति। श्रैष्ठ्यं गुणाधिक्यं, आधिपत्यं नियन्तृत्वं, स्वाराज्यमनियम्यत्वमिति भेदः सम्भवति। एकवाक्यत्वे वाक्यभेदो हि नेष्यत इत्युक्तं चेत्

पर्येति य एवं वेद" इति। नन्वेवं सति प्रतर्दनवाक्यनिर्णयेऽप्येदमपि वाक्यं निर्णीयेत, न निर्णीयते यस्य वैतत् कर्मेत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात्, तस्मादत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्त्यते। प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः "प्राणबन्धनं हि सोम्य मनः" इत्यत्र, जीवलिङ्गमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यं॥

## अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके॥ १८॥

अपि च नैवात्र विवदितव्यं, जीवप्रधानं वा इदं वाक्यं स्यात् ब्रह्मप्रधानं वेति, यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थं अस्मिन् वाक्ये जैमिनिराचार्यो मन्यते, कस्मात्, प्रश्नव्याख्यानाभ्यां, प्रश्नस्तावत् सुषुप्तपुरुषबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते, "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागादिति। [कौ० ब्रा०अ०४।क०१९] प्रतिवचनमपि यदा सुप्तः स्वप्नं न कञ्चन

---

पुनरुक्तिः स्यादिति शङ्कते। नन्वेवमिति। कर्मशब्दस्य रूढ्या पूर्वपक्षप्राप्तौ तन्निरासार्थमस्यारम्भो युक्त इत्याह। नेत्यादिना। प्राणशब्द जीवलिङ्गयोर्गतिमाह। प्राणशब्दोऽपीति।

मनो जीवः जीवलिङ्गेन ब्रह्मैव लक्ष्यते इत्युक्तं, इदानीं तल्लिङ्गेन जीवोक्तिद्वारा ब्रह्म ग्राह्यमित्याह। अन्यार्थमिति। जीवपरामर्शस्य जीवाधिकरणब्रह्मज्ञानार्थत्वे प्रश्नमाह। क्वैष इति। हे बालाके एतच्छयनं विशेषज्ञानाभावरूपं यथा स्यात्तथैष पुरुषः क्वाशयिष्ट कस्मिन्नधिकरणे शयनं कृतवानित्यर्थः। एकीभावाश्रयज्ञानार्थं पृच्छति। क्व वा इति। एतद्भवनमेकीभावरूपं यथा

पश्यत्यथास्मिन् प्राण एवैकधा भवतीत्यादि, एतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति च [कौ॰ब्रा॰अ॰४क॰१९।२०] सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति, परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा। तस्माद्यत्रास्य जीवस्य निःसम्बोध-स्वच्छतारूपः स्वापः उपाधिजनितविशेषविज्ञानरहितं स्वरूपं यतस्तद्भ्रंशरूपमागमनं सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते। अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति, य एष विज्ञानमयः पुरुषः, क्व वै तदभूत् कुत एत-

---

स्मात्तथा एष पुरुषः क्वाभूत्सुप्त, केनैक्यं प्राप्नोतीति यावत्। उत्थानापादानं पृच्छति। कुत इति। एतदागमनमैक्यभ्रंशरूपं यथा स्यात्तथा पुरुषः कुत आगत इत्यर्थः। प्रश्नमुक्त्वा व्याख्यानमाह। प्रतिवचनमिति। शयनभवनयोराधारः उत्थानापादानञ्च प्राणशब्दितं ब्रह्मैवेत्यर्थः। उत्तरे प्राणोक्तेः प्रश्नोऽपि प्राणविषय *इत्यत आह। सुषुप्तिकाले चेति। जगद्धेतुत्वजीवैक्याभ्यां प्राणोऽत्र ब्रह्मेत्यर्थः। जीवोक्तेरन्यार्थत्वमुपसंहरति। तस्मादिति। निःसम्बोधता विशेषधीशून्यता, स्वच्छता विक्षेपमलशून्यता। भेदभ्रान्तिशून्यतास्वरूपमैक्यमाह। उपाधीति। प्रश्नव्याख्यानयोर्ब्रह्मविषयत्वे शाखान्तरसंवादमाह। अपि चैवमेके शाखिन इति। ननु तत्राकाशः सुषुप्तिस्थानमुक्तं न ब्रह्मेत्यत आह। आकाशेति। उपाधिद्वारा प्रमात्रात्मजन्महेतुत्वाच्चाकाशो ब्रह्मेत्याह। सर्वे इति। एवं जीवनिरासार्थकत्वेन सूत्रं व्याख्याय प्राणनिरासपरत्वेनापि व्याचष्टे। प्राणेति। अस्मिन् वाक्ये प्राणप-

---

* इत्येवार्देति मे॰ २ पु॰ टी॰।

दागादिति प्रश्ने प्रतिवचनेऽपि य एषोऽन्तर्हृदय आकाश-स्तस्मिन् शेत इति, आकाशशब्दश्च परमात्मनि प्रयुक्तो दह-रोऽस्मिन्नन्तराकाश इति, अत्र सर्व एत आत्मानो व्युच्चरन्तीति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मान-मेव कारणत्वेनामनन्तीति गम्यते। प्राणनिराकरणस्यापि सुषु-प्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः॥

## वाक्यान्वयात्॥ १९॥

बृहदारण्यके मैत्रेयीब्राह्मणेऽभिधीयते "न वा अरे पत्युः का-माय" इत्युपक्रम्य "न वा अरे सर्वस्य कामाय सर्वं प्रियम्भवत्यात्म-नस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रव-णेन मत्या विज्ञानेनेदं सर्वं विदितं" इति। तत्रैतद्विचिकित्स्यते किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यते आ-होस्वित् परमात्मेति। कुतः पुनरेषा विचिकित्सा, प्रियसंसूचि-

---

देशं ब्रह्मज्ञानार्थं मन्यते जैमिनिः, उक्तप्रश्नव्याख्यानाभ्यां वाक्यस्य ब्रह्म-परत्वात्। अपि चैके शाखिनः एवमेव प्राणातिरिक्तं जीवात्मानमाम-नन्तः प्राणस्य वाक्यार्थत्वं वारयन्तीति सूत्रयोजना। व्यतिरिक्तजी-वोपदेशः प्राणनिराकरणस्याप्यभ्युच्चयो हेत्वन्तरमिति भाष्यार्थः, तस्मादिदं वाक्यं ब्रह्मणि समन्वितमिति सिद्धं॥

वाक्यान्वयात्। विषयवाक्यमाह। बृहदिति। पत्यादेरात्मशेषत्वेन प्रियत्वादात्मैव सर्वशेषी प्रियतमः, अतोऽन्यत्परित्यज्यात्मैव द्रष्टव्यः, दर्शनार्थं श्रवणादिकं कार्यमित्यर्थः। प्रियसंसूचितेनेति प्रतिज्ञाया-

तेनात्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति, तथात्मविज्ञानेन सर्वविज्ञानोपदेशात् परमात्मोपदेश इति, किं तावत् प्राप्तं विज्ञानात्मोपदेश इति । कस्मात्, उपक्रमसामर्थ्यात् । पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगदात्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानमुपक्रम्यानन्तरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्मान्यस्यात्मनः स्यात् । मध्येऽपीदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन् विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति । तथा "विज्ञातारमरे केन विजानीयात्" इति कर्तृवचनेन शब्देनोपसंहरणविज्ञानात्मानमेवेहोपदिष्टं दर्शयति, तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वात् भोग्यजातस्यौपचारिकं द्रष्टव्यमिति, एवं प्राप्ते ब्रूमः । परमात्मोपदेश एवायं, कस्मात् वाक्यान्वयात् । वाक्यं हीदं पौर्वापर्येणावेक्ष्य-

---

दिभिः प्रियैर्भोग्यैर्जीवतयानुमितेनेत्यर्थः । यथा ब्रह्म ते ब्रवाणीत्युपक्रमबलाद्वाक्यस्य ब्रह्मपरत्वं तथात्र जीवोपक्रमादस्य वाक्यस्य जीवपरत्वमिति दृष्टान्तेन पूर्वपक्षयति । किं तावदिति । पूर्वपक्षे वाक्यस्य जीवोपास्तिपरत्वं सिद्धान्ते ज्ञेये प्रत्यग्ब्रह्मणि समन्वय इति फलं । इदं प्रत्यक् महदपरिच्छिन्नं भूतं सत्यमनन्तं नित्यमपारं सर्वगतश्चिदेकरसं एतेभ्यः कार्यकारणात्मना जायमानेभ्यो भूतेभ्यः सामान्येनोत्थाय भूतोपाधिकं जन्मानुभूय तान्येव भूतानि नीयमानान्यनुसृत्य विनश्यति ।

माणं परमात्मानं प्रत्यन्विताऽवयवं लक्ष्यते कथमिति तदुपपाद्यते, "अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इति याज्ञवल्क्यादुपश्रुत्य "येनाहं नामृता स्यां किमहन्तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहि" इति अमृतत्वमाशासानायै मैत्रेय्यै याज्ञवल्क्य आत्मविज्ञानमुपदिशति, न चान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति। तथा चात्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते, न चैतदौपचारिकमाश्रयितुं शक्यं,यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानन्तरेण ग्रन्थेन तदेवोपपादयति "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" इत्यादिना, यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत् पराकरोतीति इति भेददृष्टिमपोद्येदं सर्वं यदयमात्मेति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमवतारयति। दुन्दुभ्यादिदृष्टान्तैश्च तमेवाव्यतिरेकं द्रढयति। "अस्य महतो भूतस्य निःश्वसितमेत-

---

श्चोपाधिकमरणानन्तरं विशेषधीर्नास्तीति श्रुत्यर्थः। विज्ञातारं विज्ञानकर्तारं, भोक्तरि ज्ञाते भोग्यं ज्ञातमित्युपचारः। मोक्षसाधनज्ञानगम्यत्वादिलिङ्गैर्वाक्यस्यान्वयाद्ब्रह्मण्येव तात्पर्यावगमात् ब्रह्मप्रमापकत्वमिति सिद्धान्तयति। एवमिति। वित्तेन तत्साध्येन कर्मणेत्यर्थः। भेदनिन्दापूर्वकमभेदसाधनेनैकविज्ञानात् सर्वविज्ञानस्य समर्थनादौपचारिकत्वं न युक्तमित्याह। न चैतदौपचारिकमित्यादिना। पराकरोति श्रेयोमार्गाद् भ्रंशयति। यथा दुन्दुभिशङ्खवीणाशब्दसामान्यग्रहणेनैव तद्गताः शब्दावान्तरविशेषाः गृह्य-

ऋग्वेद." इत्यादिना च प्रकृतस्यात्मनो नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाणः परमात्मानमेवैनं गमयति। तथैवैकायनप्रक्रियायामपि सविषयस्य सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्यैकायनमनन्तरमबाह्यं कृत्स्नं प्रज्ञानघनं व्याचक्षाणः परमात्मानमेवैनं गमयति, तस्मात् परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते। यत्पुनरुक्तं *प्रियसंसूचनोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इत्यत्र ब्रूमः॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः॥ २०॥

अस्त्यत्र प्रतिज्ञा "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीदं सर्वं यदयमात्मा" इति च तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसङ्कीर्तनं। यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्, ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत, तस्मात् प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते॥

---

यद्ग्रहणग्राह्यरजतवत् सामान्ये कल्पितास्ततो न भिद्यन्ते, एवमात्मभानभास्यं सर्वमात्ममात्रमिति निश्चितमित्याह। दुन्दुभ्यादीति। एवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मुख्यत्वाद्ब्रह्मनिश्चयः। सर्वस्रष्टृत्वलिङ्गादपीत्याह। अस्य महत इति। ऋग्वेदादिकं नाम, इष्टं हुतमिति कर्म्म, अयञ्च लोकः परश्च लोक इति रूपं। किञ्च स यथा सर्वासामपां समुद्र एकायनमिति कण्डिकया सर्वप्रपञ्चस्य मुख्यलयाधारत्वमात्मनो ब्रह्मत्वे लिङ्गमित्याह। तथैवैकायनेति॥

जीवब्रह्मणोर्भेदाभेदसत्त्वादभेदांशेनेदं जीवोपक्रमणं प्रतिज्ञासाधकमित्याश्मरथ्यमतं॥

---

* प्रियसंसूचितोपक्रमादिति वर्ध० का० पु० पाठ।

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसङ्घातोपाधिसम्पर्कात् कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात् सम्प्रसन्नस्य देहादिसङ्घातादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते। श्रुतिश्चैवं भवति "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति। क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन *ज्ञायते,

"यथा नद्यः स्यन्दमानाः समुद्रे-
ऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यं" ॥ इति ॥

यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्ति एवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैति इति हि तत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ॥

---

सत्यसंसारदशायां भेद एव मुक्तावेवाभेद इत्यौडुलोमिमतं। तत्र मानमाह। श्रुतिश्चेति। समुत्थानमुत्क्रान्तिः। ननु संसारस्यौपाधिकत्वात् सर्वदैवाभेद इत्याशङ्क्य दृष्टान्तबलेन संसारस्य स्वाभाविकत्वमित्याह। क्वचिच्चेति। यथा नद्यः स्यन्दमाना समुद्रेऽस्तं गच्छन्ति नामरूपे विहायेति नदीनिदर्शनं व्याचष्टे। यथा लोक इति॥

---

* ज्ञापयतीति वर्ध० का० पु० पाठः।

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते। तथा च ब्राह्मणं अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीत्येवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति। मन्त्रवर्णश्च "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" इत्येवंजातीयकः। न च तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक् सृष्टिः श्रुता येन परस्मादात्मनोऽन्यस्तद्विकारो जीवः स्यात्। काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो जीवो नान्य इति मतं। आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात् कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते। औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते प्रतिपिपादयिषितार्थानुसारात् तत्त्वमसीत्यादिश्रुतिभ्यः, एवञ्च सति तज्ज्ञानादमृतत्वमवकल्पते, विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विका-

---

सिद्धान्तमाह। अवस्थितेरिति। अत्यन्ताभेदज्ञापनार्थं जीवमुपक्रम्य अदृश्यत्वादयो ब्रह्मधर्मा उक्ता इत्यर्थः। एतेन जीवलिङ्गानां ब्रह्मपरत्वकथनार्थमिदमधिकरणं न भवति, प्रतर्दनाधिकरणे कथितत्वान्नापि जीवानुवादेन ब्रह्मप्रतिपादनार्थं सुषुप्त्युत्क्रान्त्योरित्यत्र गतत्वात्, अतो व्यर्थमिदमधिकरणमिति निरस्तं जीवोद्देशेन ब्रह्मत्वप्रतिपादने भेदोऽप्यावश्यक इति भेदाभेदशङ्काप्राप्तौ कल्पितभेदेनोद्देश्यत्वादिकं अतोऽत्यन्ताभेद इति ज्ञापनार्थं व्यासारम्भात्, ज्ञायते चात्र लिङ्गं आत्मशब्देनोपक्रान्तस्य जीवस्य धर्मिणो ब्रह्मणो धर्म्यन्तरस्य ग्रहण वि-

रस्य प्रकृतिसम्बन्धे प्रलयप्रसङ्गान्न तज्ज्ञानादमृतत्वमवकल्पेत, अ-तश्च स्वाश्रयस्य नामरूपस्यासम्भवात् उपाध्याश्रयनामरूपं जीवं उपचर्यते, अत एवोत्पत्तिरपि जीवस्य क्वचिदग्निविस्फुलिङ्गोदाहरणेन *आयमाणोपाध्याश्रयैव वेदितव्या। यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन् विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयतीति, तत्रापीयमेव त्रिसूत्री योजयितव्या। 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः'। इदमत्र प्रतिज्ञातं "आत्मनि विदिते सर्वमिदं विदितं भवतीदं सर्वं यदयमात्मा" इति च, उपपादितञ्च सर्वस्य नामरूपकर्मप्रपञ्चस्यैकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात् तस्या एव प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यन्महतो भूतस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते। अभेदे हि सत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमवकल्पत इति। 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः'। उत्क्रमिष्यतो विज्ञानात्मनो

---

नैव ब्रह्मधर्मकथनं भेदाभेदे धर्मिद्वयग्रहः स्यादिति मन्तव्यं। धीरः सर्वज्ञः। सर्वाणि रूपाणि कार्याणि विचित्य सृष्ट्वा तेषां नामानि च कृत्वा तेषु बुद्ध्यादिषु प्रविश्याभिवदनादिकं कुर्वन् यो वर्तते तं विद्वानिहैवामृतो भवतीति मन्त्रोऽपि जीवपरयोरैक्यं दर्शयतीत्याह। मन्त्रेति। जीवस्य ब्रह्मविकारत्वान्नैक्यमित्यत आह। न च तेज इति। मतत्रयं विभज्य दर्शयति। काशेत्यादिना। कियानपीति। अभेदवद्भेदोऽपीत्यर्थः। तत्रान्त्यस्य मतस्योपादेयत्वमाह। तत्र काशेति। सोऽयं

---

* श्रूयमाणेति वर्ध० का० पु० पाठः।

ज्ञानध्यानादिसामर्थ्यात् सम्प्रसन्नस्य परेणात्मनैक्यसम्भवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते। 'अवस्थितेरिति काशकृत्स्नः'। अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते। नन्वुच्छेदाभिधानमेतत् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति कथमेतदभेदाभिधानं। नैष दोषः, विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानं नात्मोच्छेदाभिप्रायं, अत्रैव मा भगवान् मूमुहन्न प्रेत्य संज्ञास्तीति पर्यनुयुज्य स्वयमेव श्रुत्याऽर्थान्तरस्य दर्शितत्वात् "न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" इति। एतदुक्तं भवति कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्योच्छेदप्रसङ्गोऽस्ति, मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृताभिरसंसर्गो विद्यया भवति, संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावान्न प्रेत्य संज्ञास्तीत्युक्तमिति। यदप्युक्तं "विज्ञातारमरे केन वि-

---

देवदत्त इतिवत्तत्त्वमस्यादिवाक्येभ्यः परापरयोरत्यन्ताभेदः प्रतिपादयितुमिष्टोऽर्थः, तदनुसारित्वादित्यर्थः। ज्ञानान्मुक्तिश्रुत्यन्यथानुपपत्त्याप्ययमेव पक्ष आदेय इत्याह। एवञ्चेति। अत्यन्ताभेदे सतीत्यर्थः। कल्पितस्य भेदस्य ज्ञानान्निवृत्तिः सम्भवति न सत्यस्येत्यपि द्रष्टव्यं। यदुक्तं नदीदृष्टान्तात् संसारः स्वाभाविक इति तन्नेत्याह। अतश्चेति। अनामरूपवस्तुत्वाज्जीवस्येत्यर्थः। उत्पत्तिश्रुत्या जीवस्य ब्रह्मणा भेदाभेदावित्यत आह। अत एवेति। उत्पत्तेः स्वाभाविकत्वे मुक्त्ययोगादेवेत्यर्थः। अत्र पूर्वपक्षे बीजत्रयमुक्तं जीवेनोपक्रम. परस्यैव समुत्थानश्रुत्या जीवाभेदाभिधानं विज्ञातृशब्दश्चेति।

जानीयात्" इति कर्तृवचनेन शब्देनोपसंहारादिज्ञानात्मन एवेदं द्रष्टव्यत्वमिति, तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयं। अपि च "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यारभ्याविद्याविषये *तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्च्य "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्यादिनाविद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावमभिदधाति। पुनश्च विषयाभावेऽप्यात्मानं विजानीयादित्याशङ्क्य "विज्ञातारमरे केन विजानीयात्" इत्याह। ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन् भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते। दर्शितन्तु पुरस्तात् काशकृत्स्नीयस्य† मतस्य श्रुतिमत्त्वं, अतश्च विज्ञाना-

---

तत्राद्यं वीजं त्रिसूत्र्या निरस्तं, सम्प्रति द्वितीयमनूद्य तथैव निराचष्टे। यदप्युक्तमित्यादिना। आत्मज्ञानात् सर्वज्ञानं यत्प्रतिज्ञातं तत्र हेतुरिदं सर्वं यदयमात्मेत्यव्यतिरेक उक्तस्तस्य प्रतिपादनात्तदेव प्रतिज्ञातमुपपादितमिति योजना। एकस्मात् प्रसवो यस्य एकस्मिन् प्रलयो यस्य तद्भावादित्यर्थः। समुत्थानमभेदाभिधानमिति यावत्। जन्मनाशावुक्तौ नाभेद इत्याक्षिप्य परिहरति। ननु इत्यादिना। स्तस्य संज्ञा नास्तीति वाक्येऽनैव मा मोहितवानसि ज्ञानरूपस्यात्मनो ज्ञानाभावे नाशप्रसङ्गादिति मैत्रेय्योक्तो मुनिराह। न वा अरे इति। मोहं मोहकरं वाक्यं, अविनाशी नाशहेतुशून्यः, अत उच्छित्तिधर्मा नाशवान्न भवतीति अनुच्छित्तिधर्मेत्यर्थः। तृतीयं वीजं तृतीयेन मतेनैव निरसनीयमित्याह। यदपीत्यादिना। आद्यमतद्वये सत्यभेदाङ्गीकारात् केनेत्याक्षेपो न युक्तः काशकृत्स्नस्य मते त्वत्यन्ताभेदादिज्ञानस्य कारकाभावात् स युक्त इति श्रुत्यनुसारित्वात्तन्मते

---

* तस्यैवेति वर्धं॰ का॰ पु॰ नास्ति। † पचस्येति वर्धं॰ का॰ पु॰ पाठः।

त्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः, सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं, आत्मैवेदं सर्वं, ब्रह्मैवेदं सर्वं, इदं सर्वं यदयमात्मा, नान्योऽतोऽस्ति द्रष्टा नान्यऽतोऽस्ति द्रष्टृ इत्येवंरूपाभ्यः श्रुतिभ्यः, स्मृतिभ्यश्च "वासुदेवः सर्वमिदं" "क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत। समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्"। इत्येवंरूपाभ्यः। भेददर्शनापवादाच्च "अन्योऽसावन्योऽहमस्मीति *न स वेद मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्येवंजातीयकात्। "स वा एष महानज आत्माऽजरोऽमरो-

---

मनःकल्पितं विज्ञातृत्वं मुक्ते ब्रह्मात्मनि भूतपूर्वगत्योक्तमिति परिहरणीयमित्यर्थः। किञ्च पूर्वापरपर्यालोचनया वाक्यस्य मुक्तात्मपरत्वावगमात् विज्ञातृत्वं कल्पितमेवानूद्यते इति †न तल्लिङ्गेन जीवपरत्वमित्याह। अपि चेति। त्रयेषु पक्षेषु काशकृत्स्नपक्षस्यैवादेयत्वे किं बीजं तदाह। दर्शितमिति। अतश्च, श्रुतिमत्त्वाच्च। पुनरपि श्रुतिस्मृतिमत्त्वमाह। सदेवेत्यादिना। हेतुना भेदो न पारमार्थिक इति प्रतिज्ञया सम्बन्धः। भेदाभेदपक्षे जीवस्य जन्मादिविकारवत्त्वात्तन्निषेधो न स्यादित्याह। स वा एष इति। भेदस्य सत्यत्वे तत्प्रमया बाधादहं ब्रह्मेति निर्बाधं ज्ञानं न स्यादित्याह। अन्यथा चेति। अभेदस्यापि सत्त्वात् प्रमेत्याशङ्क्य भेदाभेदयोर्विरोधात् संशयः स्यादित्याह। सुनिश्चितेति। मास्तु निर्बाधज्ञानमित्यत आह। निरपवादमिति। अहं ब्रह्मेत्यबाधितनिश्चयस्यैव शोकादिनिवर्तकत्वमित्यत्र स्मृतिमप्याह। स्थिते आत्यन्तिकैकत्वे हि प्रज्ञा प्रतिष्ठिता भवति न

---

*न स वेद यथा पशुरिति बृह० का० पु० पाठः। †नेति सो० १ पु० नास्ति।

ऽमृतोऽभयो ब्रह्मेति चात्मनि सर्वविक्रियाप्रतिषेधात्, अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः, सुनिश्चितार्थानुपपत्तेश्च। निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकमात्मविषयं इष्यते, "वेदान्तविज्ञानसुनिश्चितार्था" इति च *श्रुतेः, "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति च स्थितप्रज्ञलक्षणस्मृतेश्च। स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने क्षेत्रज्ञः परमात्मेति नाममात्रभेदात् क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्मायं क्षेत्रज्ञाद्भिन्न इत्येवंजातीयक आत्मभेदविषयो† ऽयं निर्बन्धो निरर्थकः। एको ह्ययमात्मा नाममात्रभेदेन बहुधाभिधीयत इति, न हि सत्यं ज्ञानमनन्तं ब्रह्म यो वेद-

भेदाभेदयोरिति भावः। ननु जीवपरमात्मानौ स्वतो भिन्नौ अपर्यायनामवत्त्वात् स्तम्भकुम्भवदित्यत आह। स्थिते चेति। कथं तर्ह्यपर्यायनामभेद इत्याशङ्क्य जीवत्वेश्वरत्वादिनिमित्तभेदादित्याह। एको हीति। किञ्च विद्यातत्त्वबुद्धिरूपायां गुहायां स्थितो जीवो भवति तस्यामेव ब्रह्म निहितमितिश्रुतेः। स्थानैक्याज्जीव एव ब्रह्मेत्याह। न हीति। काञ्चिदेवैकामिति जीवस्थानादन्यामित्यर्थः। नन्वेकस्यां गुहायां द्वौ किं न स्यातामित्यत आह। न चेति। स्रष्टुरेव प्रवेशेन जीवत्वान्न भेदः। नन्वत्यन्ताभेदे जीवस्य स्पष्टभानात् ब्रह्मापि स्पष्टं स्यादतः तयोर्भेद इति चेन्न दर्पणे प्रतिबिम्बस्य स्फुटत्वेऽपि बिम्बस्यास्फुटत्ववत् कल्पितभेदेन विरुद्धधर्मव्यवस्थोपपत्तेः। सत्यभेदे येषामाग्रहस्तेषां दोषमाह। ये त्विति। सोऽयमिति तत्त्वमसीत्यकार्यकारणद्रव्यसामानाधिकरण्यादत्यन्ताभेदो वेदान्तार्थस्तद्बोध एव निःश्रेयससाधनं तस्य बाधो न युक्त इत्यर्थः। किञ्च भेदाभेदवादिनो ज्ञानकर्मभ्यां कृतकं मोक्षं कल्पयन्ति, तत्रानित्यत्वं दोषः। यत्तु कृत-

* श्रुतिरिति वर्ध॰ का॰ पु॰ पाठ.। † अयमिति का॰ वर्ध॰ पु॰ नास्ति।

निहितं गुहायामिति काञ्चिदेवैकां गुहामधिकृत्यैतदुक्तं, न च ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति "तत्सृष्ट्वा तदेवानुप्राविशत्" इति स्रष्टुरेव प्रवेशश्रवणात्, ये तु निर्बन्धं कुर्वन्ति ते वेदान्तार्थं बाधमाना श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते कृतकमनित्यञ्च मोक्षं कल्पयन्ति न्यायेन च न सङ्गच्छन्त इति॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्॥ २३॥

यथाभ्युदयहेतुत्वात् धर्मो जिज्ञास्य एव निःश्रेयसहेतुत्वाद्ब्रह्मापि जिज्ञास्यमित्युक्तं, ब्रह्म च जन्माद्यस्य यत इति लक्षितं। तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत् प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानं इत्यतो

---

कमपि नित्यमिति तच्च यत् क्रियासाध्यं तदनित्यमिति न्यायबाधितं। अस्माकन्त्वनर्थध्वंसस्य ज्ञानसाध्यत्वान्नित्यमुक्तात्ममात्रत्वाच्च नानित्यत्वदोष इति भावः, तस्मान्मैत्रेयीब्राह्मणं प्रत्यग्ब्रह्मणि समन्वितमिति सिद्धं॥

प्रकृतिश्च प्रतिज्ञा। लक्षणसूत्रेणास्य सङ्गतिं वक्तुं वृत्तं स्मारयति। यथेति। तत्र हि ब्रह्मणो बुद्धिस्थत्वार्थं सामान्यतो जगत्कारणत्वं लक्षणमुक्तं तेन बुद्धिस्थे ब्रह्मणि कृत्स्नवेदान्तसमन्वयं प्रतिपाद्य तत्कारणत्वं किं कर्तृत्वमात्रमुत प्रकृतित्वकर्तृत्वोभयरूपमिति विशेषजिज्ञासायामिदमारभ्यते, तथा च सामान्यज्ञानस्य विशेषचिन्ताहेतुत्वात्तेनास्य सङ्गतिः। यद्यपि तदानन्तर्यमस्य युक्तं तथापि निश्चिततात्पर्यैर्वेदान्तैः कर्तृमात्रेश्वरमतनिरासः सुकर इति समन्वयान्ते इदं लिखितं। लक्षणसूत्रस्याध्यायादिसङ्गतत्वादस्याप्यध्यायादिसङ्गतिः। पूर्वत्र सर्वविज्ञानप्रतिज्ञाया मुख्यत्वादात्मनो जीवपरत्वं निरस्तं तदयुक्तं

भवति विमर्शः किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति। तत्र निमित्तकारणमेव तावत् केवलं स्यादिति प्रतिभाति, कस्मात्, ईक्षापूर्वककर्तृत्वश्रवणात्। ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते "स ईक्षाञ्चक्रे," "स प्राणमसृजत" इत्यादिश्रुतिभ्यः। ईक्षापूर्वकस्य कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टं, अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा। स च न्याय आदिकर्तर्यपि युक्तः संक्रामयितुं। ईश्वरत्वप्रसिद्धेश्च ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते तद्वत् परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुं। कार्यञ्चेदं जगत्सावयवमचेतनमशुद्धञ्च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यं। कार्यकारणयोः सारूप्यदर्शनात् ब्रह्म चानेवंलक्षणमवगम्यते। "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" इत्यादिश्रुतिभ्यः। पारिशेष्याद्ब्रह्म-

---

कर्त्तुपादानयोर्भेदेन प्रतिज्ञाया गौणत्वादित्याक्षिपति। तत्र निमित्तेत्यादिना। पूर्वोत्तरपक्षयोर्द्वैताद्वैतसिद्धिः फलं। ईक्षापूर्वकेति ईक्षयाश्रुत्या कर्तृत्वं निश्चितं, तथा च ब्रह्म न प्रकृतिः कर्तृत्वात्, यो यत्कर्ता स तत्प्रकृतिर्न यथा घटकर्ता कुलाल इत्यर्थः। जगत् भिन्नकर्त्तुपादानकं कार्यत्वात् घटवदित्याह। अनेकेति। ब्रह्म नोपादानमीश्वरत्वात् राजादिवदित्याह। ईश्वरत्वेति। जगन्न ब्रह्मप्रकृतिकं तद्विलक्षणत्वात्, यदित्थं तत्तथा कुलालविलक्षणघटवदित्याह। कार्यञ्चेति। निष्कलं निरवयवं, निष्क्रियमचलं, शान्तमपरिणामि, निरवद्यं निरस्तसमस्तदोषं, तत्र हेतुः निरञ्जनमिति।

णोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यं ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यवसानादिति, एवं प्राप्ते ब्रूमः। प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं निमित्तकारणञ्च न केवलं निमित्तकारणमेव, कस्मात्, प्रतिज्ञादृष्टान्तानुपरोधात्, एवं हि प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते। प्रतिज्ञा तावत् "उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं" इति, तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते, तच्चोपादानकारणविज्ञाने सर्वविज्ञानं सम्भवति उपादानकारणाव्यतिरेकात् कार्यस्य, निमित्तकारणाद्व्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात्। दृष्टान्तोऽपि "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इत्युपादानकारणगोचर एवाम्नायते, तथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्या-

---

ध्ञ्जनतुल्यतम शून्यमित्यर्थः, तर्हि जगतः सदृशोपादानं किमित्यत आह। पारिशेष्यादिति। ब्रह्मनिषेधे प्रधानं परिशिष्यत इत्यभिमन्यमानः सिद्धान्तयति। प्रकृतिश्चेति। चकारान्निमित्तत्वग्रहः। एवमुभयरूपे कारणत्वे तयोरबाधो भवतीत्याह। एवमिति। कर्तृज्ञानादपि सर्वकार्यज्ञानं किं न स्यादित्यत आह। निमित्तकारणाद्व्यतिरेकस्त्विति। मृदादीनामुपादानानां दृष्टान्तत्वाद्दार्ष्टान्तिकस्य ब्रह्मण उपादानत्वं वाच्यमित्याह। दृष्टान्तोऽपीति। वागारभ्यं नाममात्रं विकारो न वस्तुतोऽस्तीति सत्यकारणज्ञानाद्विकारज्ञानं युक्तमि-

देकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यादिति च। तथान्यत्रापि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति प्रतिज्ञा, यथा पृथिव्यामोषधयः सम्भवन्तीति दृष्टान्तः, तथा "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं" इति प्रतिज्ञा, स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इति दृष्टान्तः। एवं यथासम्भवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ। यत इतीयमपि पञ्चमी "यतो वा इमानि भूतानि जायन्ते" इत्यत्र जनिकर्तुः प्रकृतिरिति विशेषस्मरणात् प्रकृतिलक्षण एवापादाने द्रष्टव्या, 'निमित्तत्वन्त्वधिष्ठात्रन्तराभावादधिगन्तव्यं। यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलाल-

---

त्यर्थः। गतिसामान्यार्थं मुण्डकेऽपि प्रतिज्ञादृष्टान्तावाह। तथान्यत्रापीति। बृहदारण्यकेऽपि तावाह। तथात्मनीति। घटः स्फुरतीत्यनुगतस्फुरणं प्रकृतिस्तद्व्यतिरेकेण विकारा न सन्तीति सोऽयमर्थो यथा स्फुटः स्यात् तथा दृष्टान्तः स उच्यते। हन्यमानदुन्दुभिजन्याच्छब्दसामान्याद्बाह्यान् विशेषशब्दान् सामान्यग्रहणातिरेकेण पृथक् ग्रहीतुं श्रोता न शक्नुयात्, सामान्यस्य तु ग्रहणेन दुन्दुभ्याघातः शब्दविशेषो गृहीतो भवति, तस्य वा ग्रहणेन तदवान्तरविशेषशब्दो गृहीतो भवति, अतः शब्दसामान्यग्रहणग्राह्या विशेषाः सामान्ये कल्पिताः तद्वदात्मभानभास्यघटादय आत्मनि कल्पिता इत्यर्थः। प्रतिज्ञादृष्टान्तानुरोधाल्लिङ्गाद्ब्रह्मणः प्रकृतित्वमुक्त्वा पञ्चमीश्रुत्याप्याह। यत इति। यतो वा इत्यत्र श्रुतौ यत इति पञ्चमी प्रकृतौ द्रष्टव्येत्य-

सुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्तते, नैवं ब्रह्मण उपादानकारणस्य स्वतोऽन्योऽधिष्ठातापेक्ष्योऽस्ति, प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणात्, अधिष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेवोदितो वेदितव्यः । अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासम्भवात् प्रतिज्ञादृष्टान्तोपरोध एव स्यात्, तस्मादधिष्ठात्रन्तराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वं । कुतश्चात्मनः कर्तृत्वप्रकृतित्वे ॥

## अभिध्योपदेशाच्च ॥ २४ ॥

अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति "सोऽकामयत बहु स्यां प्रजायेय" इति "तदैक्षत बहु स्यां प्रजायेय" इति च । तत्राभिध्यानपूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते । बहुस्यामिति प्रत्यगात्मविषयत्वात् बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥

---

न्वय । जनिकर्तुर्जायमानस्य कार्यस्य प्रकृतिरपादानसंज्ञिका भवतीति सूत्रार्थः । संज्ञायाः फलं "अपादाने पञ्चमी" [पा०२।३।२८] इति सूत्रात् प्रकृतौ पञ्चमीलाभः । एवं ब्रह्मणः प्रकृतित्वं प्रसाध्य कर्तृत्वं साधयति । निमित्तत्वमिति । ब्रह्म स्वातिरिक्तकर्त्रधिष्ठेयं प्रकृतित्वान्मृदादिवदित्याद्यनुमानानामागमबाधमाह । प्रागुत्पत्तेरिति । जगत्कर्तृ ब्रह्मैवेत्यत्रापि सूत्रं योजयति । अधिष्ठात्रन्तरेति ॥

एकस्योभयरूपप्रकारत्वमविरुद्धमिति सूत्रचतुष्टयेन साधयति । कुतश्चेत्यादिना । अभिध्या दृष्टिसङ्कल्पः ॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

प्रकृतित्वस्यायमभ्युच्चयः इतश्च प्रकृतिर्ब्रह्म यत्कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रलयप्रभवावाम्नायेते "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति" इति । यद्धि यस्मात् प्रभवति यस्मिंश्च प्रलीयते तत् तस्योपादानं प्रसिद्धं, यथा व्रीहियवादीनां पृथिवी । साक्षादिति चोपादानान्तरानुपादानं सूचयत्याकाशादेवेति । प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः ॥

## आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मप्रक्रियायां "तदात्मानं स्वयमकुरुत" इति आत्मनः कर्मत्वं कर्तृत्वं च दर्शयति, आत्मानमिति कर्मत्वं स्वयमकुरुतेति कर्तृत्वं । कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं सम्पादयितुं,

---

अभ्युच्चयो हेत्वन्तरं । आकाशादेवेत्येवकारसूचितमुपादानान्तरानुपादानपक्षं साक्षादितिपदेन सूत्रकारो दर्शयतीति योजना ॥

आत्मसम्बन्धिनी कृतिः आत्मकृतिः, सम्बन्धश्चात्मनः कृतिं प्रति विषयत्वमाश्रयत्वञ्च । ननु कृतेराश्रयः सिद्धो भवति विषयस्तु साध्यः । एकस्योभयं विरुद्धमित्याशङ्कते । कथ पुनरिति । यथा मृदः साध्यपरिणामाभेदेन कृतिविषयत्वं तद्वदात्मन इत्याह । परिणामादिति । आत्मा नमित्यविरोध इति शेषः । सिद्धस्यापि साध्यत्वे दृष्टान्तमाह । विकारात्मनेति । ननु ब्रह्मण आत्मानमिति द्वितीयया कार्यात्मना साध्यत्वश्रुत्याऽस्तु प्रकृतित्वं कर्ता त्वन्योऽस्त्वित्यत आह । स्वय-

परिणामादिति ब्रूमः, पूर्वसिद्धोऽपि हि सदात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति। विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः, स्वयमिति च विशेषणात् निमित्तान्तरानपेक्षत्वमपि प्रतीयते। परिणामादिति वा पृथक्सूत्रं, तस्यैषोऽर्थः। इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मण एव विकारात्मनायं परिणामः सामानाधिकरण्येनाम्नायते "सच्च त्यच्चाभवन्निरुक्तञ्चानिरुक्तं च" इत्यादिनेति॥

## योनिश्च हि गीयते॥ २७॥

इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मयोनिरित्यपि पठ्यते, वेदान्तेषु "कर्तारमीशं पुरुषं ब्रह्म योनिं" इति "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च। योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके पृथिवी योनिरोषधिवनस्पतीनामिति। स्त्रीयोनेर-

---

मिति चेति। ब्रह्मणः कृतिकर्मत्वोपपादनार्थं परिणामादिति पदं व्याख्यायान्यथापि व्याचष्टे। पृथक् सूत्रमिति। मृद्घट इति वद्ब्रह्म सच्च त्यच्चेति परिणामसामानाधिकरण्यश्रुतेः ब्रह्मणः प्रकृतित्वमित्यर्थः। सत्प्रत्यक्षं भूतत्रयं, त्यत्परोक्षं भूतद्वयं, निरुक्तं वक्तुं शक्यं घटादि, अनिरुक्तं वक्तुमशक्यं कपोतरूपादिकं च ब्रह्मैवाभवदित्यर्थः॥

अत्र सूत्रे परिणामशब्दः कार्यमात्रपरः न तु सत्यकार्यात्मपरिणामपरः तदनन्यत्वमिति विवर्तवादस्य वक्ष्यमाणत्वात् योनिशब्दाच्च प्रकृतित्वमित्याह। योनिश्चेति। कर्तारं क्रियाशक्तिमन्तं, ईशं नियन्तारं, पुरुषं प्रत्यक्षं, ब्रह्म पूर्णं, योनिं प्रकृतिं, धीरा ध्यानेन पश्यन्तीत्यर्थः। नन्वनुपादानेऽपि स्त्रीयोनौ योनिशब्दो दृष्ट इत्यत आह। स्त्रीयोनेरिति। अधिकमवयवशब्दार्थः। योनिशब्दस्य स्थानमप्यर्थो भवति

यस्त्वेतावयवद्वारेण गर्भं प्रत्युपादानकारणत्वं। क्वचित् स्थानवचनोऽपि योनिशब्दो दृष्टः, योनिष्ट इन्द्र निषदे अकारीति वाक्यशेषात्, तत्र प्रकृतिवचनता परिगृह्यते "यथोर्णनाभिः सृजते गृह्णते च" इत्येवंजातीयकात्। तदेवं प्रकृतित्वं ब्रह्मणः प्रसिद्धं। यत्पुनरिदमुक्तं ईक्षापूर्व्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेष्वित्यादि तत्प्रत्युच्यते, न लोकवदिह भवितव्यं, न ह्ययमनुमानगम्योऽर्थः *शब्दगम्यत्वात्त्वस्यार्थस्य यथाशब्दमिह भवितव्यं, शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम, पुनश्चैतत्सर्व्वं विस्तरेण †प्रतिवक्ष्यामः॥

## एतेन सर्व्वे व्याख्याता व्याख्याताः॥ २८॥

ईक्षतेर्नाशब्दमित्यारभ्य प्रधानकारणवादः सूत्रैरेव पुनः

---

ऊर्णनाभ्यादिप्रकृतदृष्टान्तवाक्यशेष
सोऽत्र भूतयोन्यादिशब्दैर्न ग्राह्यः,
विरोधादित्याह। क्वचिदिति। हे इन्द्र ते तव निषदे उपवेशनाय
योनिः स्थानं मया अकारि कृतमित्यर्थः। पूर्वपक्षोक्तानुमानान् अनू-
द्यागमबाधमाह। यत्पुनरित्यादिना। नन्वनुमानस्य श्रुत्यनपेक्षत्वान्न
तया बाध इत्यत आह। न हीति। जगत्कर्ता पक्ष श्रुत्यैव सिद्ध्यति,
या कृतिः सा शरीरजन्येति व्याप्तिविरोधेन नित्यकृतिमतोऽनुमाना-
सम्भवादतः श्रौतमीश्वरं पक्षीकृत्यानुपादानत्वसाधने भवत्येवोपजीव्यया
प्रकृतित्वबोधकश्रुत्या बाध इत्यर्थः। यदुक्तं विलक्षणत्वाद्ब्रह्मणो न
जगदुपादानत्वमिति तत्राह। पुनश्चेति। न विलक्षणत्वादित्यारभ्ये-
त्यर्थः। अत उभयरूपं कारणत्वं ब्रह्मणो लक्षणमिति सिद्धं॥
एतेन सर्वे व्याख्याताः। अस्याधिकरणस्य तात्पर्यं वक्तुं वृत्तमनु-

---

* शब्दगम्यत्वात्तस्येति वर्धं० का० पु० पाठः। † प्रतिपादयिष्याम इति वर्धं०।

पुनराशङ्क्य निराकृतः, तस्य हि पक्षस्योपोद्बलकानि कानिचि-
ल्लिङ्गाभासानि वेदान्तेष्वापातेन मन्दमतीन् प्रतिभान्तीति।
स च कार्यकारणानन्यत्वाभ्युपगमात् प्रत्यासन्नो वेदान्तवादस्य
देवलप्रभृतिभिश्च कैश्चिद्धर्मसूत्रकारैः स्वग्रन्थेष्वाश्रितः तेन तत्प्र-
तिषेधे एव यत्नोऽतीव कृतो नाण्वादिकारणवादप्रतिषेधे। तेऽपि
तु ब्रह्मकारणवादपक्षस्य प्रतिपक्षत्वात् प्रतिषेद्धव्याः, तेषामप्युपो-
द्बलकं वैदिकं किञ्चिल्लिङ्गमापातेन मन्दमतीन् प्रतिभायादि-
ति,अतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति, एतेन प्रधानका-
रणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्र-
तिषिद्धतया व्याख्याता वेदितव्याः। तेषामपि प्रधानवदशब्द-

---

वदति। ईक्षतेरिति। प्रधानवादस्य प्राधान्येन निराकरणे हेतूनाह।
तस्य हीत्यादिना। तर्ह्यण्वादिवादा उपेक्षणीया दुर्बलत्वादित्यत आह।
तेऽपि त्विति। निर्मूलास्ते कथं प्रतिपक्षा इत्यत आह। तेषामिति।
तथा हि छान्दोग्ये जगत्कारणत्वज्ञापनार्थं पिता पुत्रमुवाच। आसां
वटधानानां मध्ये एकां भिन्धीति भिन्ना भगव इत्युवाच पुत्रः, पुनः
पित्रा किमत्र पश्यसीत्युक्ते न किञ्चन भगव इत्याह। तत्र पित्राऽणि-
मानं न पश्यसीत्युक्तं, तथा च न किञ्चनशब्दाच्छून्यस्वभाववादो प्रती-
यते, अणुशब्दात् परमाणुवाद इति, एवमसदेवेदमग्र आसीदणो-
रणीयानित्यादि लिङ्गं द्रष्टव्यं। अत्राण्वादिवादाः श्रौता न वेति सं-
शये सत्पद एवादिशब्दबलाच्छ्रौता इति प्राप्तेऽतिदिशति। एतेनेति।
अस्यातिदेशत्वात्र पृथक् सङ्गत्याद्यपेक्षा न किञ्चनासच्छब्दयोः प्रत्य-
क्षाद्येगोचरवस्तुपरत्वादणुशब्दस्य सूक्ष्माभिप्रायत्वादशब्दत्वं, तेषां ना-

त्वाच्छब्दविरोधित्वाच्चेति। व्याख्याता व्याख्याता इति पदा-भ्यासोऽध्यायपरिसमाप्तिं द्योतयति।

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमद्गोविन्दपूज्यपाद-शिष्यश्रीमच्छङ्करभगवत्पादकृतौ प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ * ॥

॥ * ॥ इति प्रथमोऽध्यायः समाप्तः ॥ * ॥

---

दाना प्रधानवादवदश्रौतत्वं, ब्रह्मकारणश्रुतिबाधितत्वञ्च, तस्माद्ब्रह्मैव परमकारणं, तस्मिन्नेव सर्वेषां वेदान्तानां समन्वय इति सिद्धं।

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीगोविन्दानन्द-भगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य चतुर्थः पादः ॥ * ॥

॥ * ॥ अध्यायश्च समाप्तः ॥ * ॥

ॐ परमात्मने नमः ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

प्रथमेऽध्याये सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणं मृत्सुवर्णादय इव घटरुचकादीनां, उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणं मायावीव मायायाः प्रसारितस्य जगतः पुनः स्वात्मन्येवोपसंहारकारणमवनिरिव चतुर्विधस्य भूतग्रामस्य, स एव च सर्वेषां न आत्मेत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितं, प्रधानादिवादाश्चाशब्दत्वेन निराकृताः। इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः प्रधानादिवादानाञ्च न्यायाभासोपबृंहितत्वं प्रतिवेदान्तञ्च सृष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थजातस्य प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते। तत्र प्रथमं तावत् स्मृतिविरोधमुपन्यस्य परिहरति यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति तदयुक्तं।

---

ॐ ब्रह्मणे नमः।

साङ्ख्यादिस्मृतियुक्तिभिर्न चलितो वेदान्तसिद्धान्तगो
निर्मूलैर्विविधागमैरविदिते व्योमादिजन्माप्ययः ।
उत्पत्त्यन्तविवर्जितस्थितिवपुर्योगी च कर्ताऽशको
लिङ्गेन प्रथितोऽपि नामतनुकृत्तं जानकीशं भजे ॥

नामरूपे व्याकरवाणीति श्रुतेर्नामतनुकृदपि संज्ञामूर्तिव्याकर्ताऽपि लिङ्गशरीरोपाधिना कर्तेति व्यंश इति च प्रथितः प्रसिद्धो यस्तं प्रत्य-

कुतः, स्मृत्यनवकाशदोषप्रसङ्गात्। स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता, अन्याश्च तदनुसारिण्यः स्मृतयः, एवं सत्यनवकाशाः प्रसज्येरन्, तासु ह्यचेतनं प्रधानं स्वतन्त्रं जगतः कारणमुपनिबध्यते, मन्वादिस्मृतयस्तावच्चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्पयन्त्यः सावकाशा भवन्ति, अस्य वर्णस्यास्मिन् कालेऽनेन विधानेनोपनयनमीदृशश्चाचार इत्थं वेदाध्ययनमित्थं समावर्तनमित्थं सहधर्मचारिणीसंयोग इति, तथा पुरुषार्थांश्चतुर्वर्णाश्रमधर्मान् नानाविधान् विदधति, नैवं कापिलादिस्मृतीनामनुष्ठेये विषयेऽवकाशोऽस्ति, मोक्षसाधनमेव हि सम्यग्दर्शनमधिकृत्य ताः प्रणीताः, यदि तत्राप्यनवकाशाः स्युः आनर्थक्यमेवासां प्रस-

---

गभिन्नं परमात्मानं मूलप्रकृतिनियन्तारं भजे इत्यर्थः। स्मृतिप्रसङ्गात पूर्वोत्तराध्याययोर्विषयविषयिभावसङ्गतिं वक्तुं वृत्तं कीर्तयति। प्रथमेऽध्याय इति। जन्मादिसूत्रमारभ्य जगदुत्पत्त्यादिकारणं ब्रह्मेति प्रतिपादितं शास्त्रदृष्ट्या त्वित्यादिसूत्रेषु, स एवाद्वितीयः सर्वात्मेत्युक्तं आनुमानिकमित्यादिना कारणान्तरस्याश्रौतत्वं दर्शितमित्यर्थः। एवं प्रथमाध्यायस्यार्थमनूद्य तस्मिन् विषये विरोधपरिहारविषयिणं द्वितीयाध्यायस्यार्थं पादशः सङ्क्षिप्य कथयति। इदानीमिति। अत्र प्रथमपादे समन्वयस्य साङ्ख्यादिस्मृतियुक्तिभिर्विरोधपरिहारः क्रियते, द्वितीयपादे साङ्ख्याद्यागमानां भ्रान्तिमूलत्वमविरोधाय कथ्यते, तृतीये पादे प्रतिवेदान्तं सृष्टिश्रुतीनां जीवात्मश्रुतीनाञ्च व्योमादिमहाभूतानां जन्मलयक्रमादिकथनेनाविरोधः प्रतिपाद्यते, चतुर्थपादे लिङ्गशरीरश्रुतीनां अविरोध इत्यर्थः। अयमेवार्थः सुखबोधार्थं श्लोकेन सङ्गृहीतः।

ज्येत, तस्मात् तदविरोधेन वेदान्ता व्याख्यातव्याः। कथं पुनः ईक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणमित्यवधारितः श्रुत्यर्थः स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते। भवेदयमनाक्षेपः स्वतन्त्रप्रज्ञानां परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन्, तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन्। अस्मत्कृते च व्याख्याने न विश्वस्युर्बहुमानात् स्मृतीनां प्रणेतृषु। कपिलप्रभृतीनाञ्चार्षं ज्ञानमप्रतिहतं स्मर्यते, श्रुतिश्च भवति "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्" इति।

---

"द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता" ॥ इति ॥

तत्राद्याते विषये विरोधशङ्कासमाध्ययोगात् समन्वयाध्यायानन्तर्यमविरोधाध्यायस्य युक्तम्, तत्र प्रथमाधिकरणतात्पर्यमाह। प्रथममिति। श्रौते समन्वये विरोधनिरासार्थत्वादस्य पादस्य श्रुतिशास्त्राध्यायसङ्गतयः स्वमतस्थापनात्मकत्वात् सर्वेषामधिकरणानामेतत्पादसङ्गतिः। अत्र पूर्वपक्षे स्मृतिविरोधादुक्तसमन्वयासिद्धिः फलं सिद्धान्ते तत्सिद्धिरिति विवेकः। तत्र ब्रह्मण्युक्तवेदान्तसमन्वयो विषयः, स किं साङ्ख्यस्मृत्या विरुध्यते न वेति स्मृतिप्रामाण्याप्रामाण्याभ्यां सन्देहे पूर्वपक्षमाह। यदुक्तमिति। तन्त्र्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति तन्त्रं शास्त्रं कपिलोक्तमन्याश्च पञ्चशिखादिभिः प्रोक्ताः, एवं सति वेदान्तानामद्वयब्रह्मसमन्वये निरर्थकाः स्युरित्यर्थः। तासामपि सावकाशत्वमस्तीत्यविरोध इत्यत आह। तासु हीति। ननु साङ्ख्यस्मृतिप्रामाण्याय प्रधानवादपक्षे मन्वादिस्मृतीनामप्रामाण्यं स्यादित्याशङ्क्य तासां धर्मे सावकाशत्वात् प्रामाण्यं स्यादित्याह। मन्वादीति।

तस्मान्नैषां मतमयथार्थं शक्यं सम्भावयितुं, तर्कावष्टम्भेन *च तेऽर्थं प्रतिष्ठापयन्ति, तस्मादपि स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः, तस्य समाधिर्नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति। यदि स्मृत्यनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आश्रियेतैवमप्यन्या ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन् ता उदाहरिष्यामः। "यत् तत् सूक्ष्ममविज्ञेयं" इति परं ब्रह्म प्रकृत्य स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यत इति चोक्त्वा "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इत्याह। तथान्यत्रापि "अव्यक्तं पुरुषे ब्रह्मन् †निर्गुणे सम्प्रलीयते" इत्याह।

---

तर्हि साङ्ख्यादिस्मृतीनामपि धर्मे तात्पर्येण प्रामाण्यमस्तु तत्त्वं तु ब्रह्मैवेत्यविरोध इत्यत आह। नैवमिति। तत्त्वे विकल्पनानुपपत्तेर्निरवकाशस्मृत्यनुसारेण श्रुतिव्याख्यानमुचितं सावकाशान्निरवकाशं बलीय इति न्यायादित्याह। तस्मादिति। श्रुतिविरोधे स्मृत्यप्रामाण्यस्येष्टत्वात् पूर्वपक्षो न युक्त इति शङ्कते। कथमिति। ये स्वातन्त्र्येण श्रुत्यर्थं ज्ञातुं शक्नुवन्ति तेषामयं पूर्वपक्षो न भवेत्, साङ्ख्यवृद्धेषु श्रद्धालूनान्तु भवेदित्याह। भवेदिति। तेषामतीन्द्रियार्थज्ञानवत्त्वाच्च तत्र श्रद्धा स्यादित्याह। कपिलप्रभृतीनाञ्चेति।

"आदौ यो जायमानश्च कपिलं जनयेदृषिं।
प्रसूतं बिभृयात् ज्ञानैस्तं पश्येत् परमेश्वरम्"॥ इति—

श्रुतियोजना। यथा साङ्ख्यस्मृतिविरोधाद्ब्रह्मवादस्त्याज्य इति त्वयोच्यते तथा स्मृत्यन्तरविरोधात् प्रधानवादस्त्याज्य इति मयोच्यत इति सिद्धान्तयति। तस्य समाधिरिति। तस्माद्ब्रह्मणः सकाशादव्यक्तं मायया लीनं सूक्ष्मात्मक जगदिति यावत्। इतिहासवाक्यानुक्त्वा पुराणसम्मतिमाह। अतश्चेति। प्रभवत्यस्मादिति प्रभवो जन्महेतुः, प्रलीयते तस्मिन्निति प्रलयो लयाधिष्ठानं, तस्मात् कर्तरीश्वरात्

---

* चैते इति का० पु० पाठः।  † निष्क्रिये इति वर्ध०।

"अतश्च सङ्क्षेपमिमं शृणुध्वं
नारायणः सर्वमिदं पुराणः।
स सर्गकाले च करोति सर्गं
संहारकाले च तदत्ति भूयः" ॥ इति

पुराणे, भगवद्गीतासु च "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इति, परमात्मानमेव च प्रकृत्यापस्तम्बः पठति "तस्मात् कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति। एवमनेकशः स्मृतीष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते। स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं प्रवक्ष्यामि इत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः। दर्शितन्तु श्रुतीनामीश्वरकारणवादं प्रति तात्पर्यं, विप्रतिपत्तौ च स्मृतीनामवश्य-

---

कायाः ब्रह्मादयः प्रभवन्ति। स एव मूलमुपादानं किंपरिणामि न शाश्वतिकः कूटस्थः अतः स नित्य इत्यर्थः। ननु श्रुतिविरोधः किमिति नोक्त इत्यत आह। स्मृतिबलेनेति। स्मृतीनां मिथो विरोधे कथं तत्त्वनिर्णयस्तत्राह। दर्शितन्त्विति। श्रुतिभिरेव तत्त्वनिर्णय इत्यर्थः। स्मृतीना का गतिरित्यत आह। विप्रतिपत्तौ चेति। वस्तुत्वे स्मृतीनां मिथो विरोधे वस्तुनि विकल्पायोगात् क्लृप्तश्रुतिमूलाः स्मृतयः प्रमाणं, इतरास्तु कल्प्यश्रुतिमूला न प्रमाणमित्यर्थः। क्लृप्तश्रुतिविरोधे स्मृतिर्न प्रमाणमित्यत्र जैमिनीयन्यायमाह। तदुक्तमिति। औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरुद्धा सा सर्वा वेष्टयितव्येति स्मृतिर्मानं न वेति सन्देहे मूलश्रुत्यनुमानान्मानमिति प्राप्ते सिद्धान्तः क्लृप्तश्रुतिविरोधे स्मृतिप्रामाण्यमनपेक्षमपेक्षाशून्यं हेयमिति यावत्। हि यतो सति विरोधे श्रुत्यनुमानं भवति, अत्र तु विरोधे सत्यनुमानायोगान्मूलाभावात् सर्ववेष्टनस्मृतिरप्रमा-

कर्तव्येऽन्यतरपरिग्रहे*ऽन्यतरस्यापरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणमनपेक्ष्या इतराः, तदुक्तं प्रमाणलक्षणे "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं" इति। न चातीन्द्रियानर्थान् श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं सम्भावयितुं, निमित्ताभावात्, शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत्, न सिद्धेरपि सापेक्षत्वात्। धर्मानुष्ठानापेक्षा हि सिद्धिः, स च धर्मश्चोदनालक्षणः, ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते, सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्, सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यत् निर्णयकारणमस्ति। परतन्त्रप्रज्ञस्यापि नाकस्मात् स्मृतिविशेषविषयः पक्षपातो युक्तः, कस्यचित् क्वचित्तु पक्षपाते सति

---

ग्राह्यमित्यर्थः। अस्तु साङ्ख्यस्मृतिः प्रत्यक्षमूलेत्यत आह। न चेति। योगिनां सिद्धिमहिम्नाऽतीन्द्रियज्ञानं सम्भावयितुं शक्यमिति शङ्कते। शक्यमिति। कपिलादिभिः किलादौ वेदप्रामाण्यं निश्चित्य तदर्थस्यानुष्ठानेन सिद्धिः सम्पादिता, तया सिद्धाः प्रणीतस्मृत्यनुसारेणानादिश्रुतिपीडा न युक्तोपजीव्यविरोधादिति परिहरति। न सिद्धेरपीति। अतिशङ्कितुमिति, श्रुतीनां मुख्यार्थमतिक्रम्योपचरितार्थत्वं शङ्कितुं न शक्यत इत्यर्थः। स्वतः सिद्धैर्वेदो नोपजीव्य इति चेन्नानीश्वरस्य स्वतः सिद्धौ मानाभावात्। अङ्गीकृत्याप्याह। सिद्धेति। सिद्धानां वचनमाश्रित्य वेदार्थकल्पनायामपि सिद्धोक्तीनां मिथो विरोधे श्रुत्याश्रितमन्वाद्युक्तिभिरेव वेदार्थनिर्णयो युक्त इत्यर्थः। श्रुतिरूपाश्रयं विना सिद्धोक्तिमात्रं न तत्त्वनिर्णयकारणमित्यक्षरार्थः। ननु मन्दमतेः साङ्ख्यस्मृतौ श्रद्धा भवति तस्य मतिः वेदान्तमार्गे कथमा-

---

*ऽन्यतरपरित्यागे इति वर्ध० पु० पाठ.।

पुरुषमतिवैरूप्येण तत्त्वाव्यवस्थानप्रसङ्गात्, तस्मात्तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन श्रुत्यनुसारानुसार*विवेचनेन च सन्मार्गे प्रज्ञा संग्रहणीया। या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं, कपिलमिति श्रुतिसामान्यमात्रत्वात्। अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात्, अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात्। भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः "यद्वै किञ्च मनुरवदत् तद्भेषजं" इति। मनुना च

"सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
सम्पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति" ॥ इति-

सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते। कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात्।

---

नेत्यत आह। पुरुषेत्यादिना। ननु श्रुत्या कपिलस्य सर्वज्ञत्वोक्तेस्तन्मते श्रद्धा दुर्वारा इत्यत आह। या त्विति। कपिलशब्दमात्रेण साक्षात्कर्ता श्रौत इति भ्रान्तिरयुक्ता, तस्य द्वैतवादिनः सर्वज्ञत्वायोगादस्य च सर्वज्ञानसम्भूतत्वेन श्रुतः कपिलो वासुदेवांश एव, स हि सर्वात्मत्वज्ञानं वैदिकं साक्षादुपदिशतीति सर्वज्ञ इति भावः। प्रतप्तुः प्रदाहकस्य। किञ्च यः कपिलं ज्ञानैर्बिभर्ति तमीश्वरं पश्येदिति विधीयते, तथा चान्यार्थस्य ईश्वरप्रतिपत्तिशेषस्य कपिलसर्वज्ञत्वस्य दर्शनमनुवादस्तस्य मानान्तरेण प्राप्तिशून्यस्य स्वार्थसाधकत्वायोगादनुवादमात्रात् सर्वज्ञत्वसिद्धिरित्याह। अन्यार्थेति। द्वैतवादिनं कपिलस्य श्रौतत्वं निरस्य ब्रह्मवादिनो मनोः श्रौतत्वमाह। भवति चेति। इतिहासेऽपि कापिलमतनिन्दापूर्वकमद्वैतं दर्शितमित्याह।

---

* विषयविवेचनेनेति ख्या० पु० पाठः।

महाभारतेऽपि च "बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु" इति विचार्य "बहवः पुरुषा राजन् साङ्ख्ययोगविचारिणां" इति परपक्षमुपन्यस्य तद्व्युदासेन-

"बहूनां पुरुषाणां हि यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्"॥

इत्युपक्रम्य-

"ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्॥
विश्वमूर्द्धा विश्वभुजो विश्वपादाक्षिनासिकः।
एकश्चरति भूतेषु स्वैरचारी यथासुखम्"॥ इति

सर्वात्मतैव निर्द्धारिता। श्रुतिश्च सर्वात्मतायां भवति

---

महाभारतेऽपीति। पुरुषाः आत्मानः किं वस्तुतो भिन्नाः उत सर्वदेहस्थानां प्रत्यगात्मा एक इति विमर्शार्थः। बहूनां पुरुषाकाराणां देहानां यथैका योनिरुपादानं पृथ्वी तथा तं पुरुषमात्मानं विश्वं सर्वोपादानत्वेन सर्वात्मकं सर्वज्ञत्वादिगुणैः सम्पन्नं कथयिष्यामि विश्वे सर्वलोकप्रसिद्धादेव तिर्यङ्मनुष्यादीनां मूर्द्धानोऽस्यैवेति विश्वमूर्द्धा, एकस्यैव सर्वदेहेषु प्रतिबिम्बभावेन प्रविष्टत्वात्, एवं विश्वभुजत्वादियोजना। सर्वभूतेष्वेकश्चरति अवगच्छति सर्वज्ञ इत्यर्थः। स्वैरचारी स्वतन्त्रः, नास्य नियन्ता कश्चिदस्ति सर्वेश्वर इत्यर्थः। यथा सुखमिति विशोकानन्दस्वरूप इति यावत्। कापिलतन्त्रस्य वेदमूलस्मृतिविरोधमुक्त्वा साक्षाद्वेदविरोधमाह। श्रुतिश्चेति। यस्मिन् ज्ञानकाले केवलं स्वतन्त्रप्रकृतिकल्पनयैव वेदविरुद्धं न किन्त्वात्मभेदकल्पनयापीति सिद्धमिति सम्बन्धः। स्मृतिविरोधे वेदस्यैवाप्रामाण्यं किं न स्यादित्यत आह। वेदस्य हीति। वेदस्य प्रामाण्यं स्वतः सिद्धम-

"यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः" ॥ इति-

एवंविधा। अतश्चात्मभेदकल्पनयापि कापिलस्य तन्त्रस्य वेदविरुद्धत्वं वेदानुसारिमनुवचनविरुद्धत्वञ्च। न केवलं स्वतन्त्रप्रकृतिपरिकल्पनयैवेति*सिद्धं, वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये पुरुषवचसान्तु मूलान्तरापेक्षं। †स्वार्थे प्रामाण्यं वक्तृस्मृतिव्यवहितञ्चेति विप्रकर्षः, तस्माद्वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोषः। कुतश्च स्मृत्यनवकाशप्रसङ्गो न दोषः॥

## इतरेषाञ्चानुपलब्धेः॥ २॥

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ ‡कल्पितानि महदादीनि न तानि वेदे लोके चोपलभ्यन्ते, भूतेन्द्रियाणि तावत् लोकवेदप्रसिद्धत्वात् शक्यन्ते स्मर्तुं। अलोक-

---

पौरुषेयत्वात् पौरुषेयवाक्यानां स्वार्थस्मृतितन्मूलानुभवयोः कल्पनया प्रामाण्यं ज्ञेयमिति व्यवहितं, परतः प्रामाण्यमिति विप्रकर्षः, श्रुतिस्मृत्योर्विशेष इत्यक्षरार्थः। समयोर्विरोधे हि निरवकाशेन सावकाशं बाध्यमिह स्वतः परतः प्रामाण्ययोर्वैषम्यात् झटिति निश्चितप्रामाण्येन चानुपसंजातविरोधिना वेदवाक्येन विरुद्धस्मृतेरेव बाध इति भावः। तस्मादिति विशेषादित्यर्थः, भ्रान्तिमूलत्वसम्भवादिति भावः॥

महदहङ्कारौ तावदप्रसिद्धौ अहङ्कारप्रकृतिकत्वेन तन्मात्राण्यप्रसिद्धानि स्मर्तुं न शक्यन्त इत्याह। इतरेषाञ्चेति। ननु महतः

---

* सिद्धमिति वर्ध० पु० नास्ति। † स्वार्थे प्रामाण्यमिति वर्ध० पु० नास्ति।
‡ निरूपितानीति वर्ध० पु० पाठ.।

वेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्यैवेन्द्रियार्थस्य न स्मृतिरवकल्पते। यदपि क्वचित् तत्परमिव श्रवणमवभासते तदप्यतत्परं व्याख्यातं 'आनुमानिकमप्येकेषां' इत्यत्र। कार्यस्मृतेरप्रामाण्यात् कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायः, तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः। तर्कावष्टम्भन्तु न विलक्षणत्वादित्यारभ्योन्मथिष्यति॥

## एतेन योगः प्रत्युक्तः॥ ३॥

एतेन साङ्ख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्याख्याता द्रष्टव्येत्यतिदिशति, तत्रापि श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं महदादीनि च कार्य्याणि अलोकवेदप्रसिद्धानि कल्प्यन्ते। नन्वेवं सति समानन्यायत्वात् पूर्व्वेणैवैतद्गतं किमर्थं पुनरतिदिश्यते, अस्ति ह्यत्राभ्यधिका शङ्का सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति "त्रिरुन्नतं स्थाप्य समं शरीरं" इत्यादिना चासनादिकल्पना-

---

परमव्यक्तमिति श्रुतिप्रसिद्धानि महदादीनीत्यत आह। यदपीति। सूत्रतात्पर्यमाह। कार्येति। साङ्ख्यस्मृतेर्महदादिष्विव प्रधानेऽपि प्रामाण्यं नेति निश्चीयत इत्यर्थः। साङ्ख्यस्मृतिबाधेऽपि तदुक्तयुक्तीनां कथं बाध इत्यत आह। तर्केति॥

ब्रह्मण्युक्तसमन्वयः प्रधानवादियोगस्मृत्या विरुध्यते न वेति सन्देहे पूर्व्वन्यायमतिदिशति। एतेन योगः प्रत्युक्तः। अतिदेशत्वात् पूर्व्ववत् सङ्गत्यादिकं द्रष्टव्यं। पूर्व्वत्रानुक्तनिरासं पूर्व्वपक्षमाह। अस्ति ह्यत्रेति। निदिध्यासनं योगः। त्रीणि उरोग्रीवाशिरांस्युन्नतानि यस्मिञ्छरीरे तत् त्र्युन्नतं त्रिरुन्नतमिति पाठश्छान्दसः, युञ्जीतेति शेषः।

पुरःसरं बहुप्रपञ्चं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते, लिङ्गानि च वैदिकानि योगविषयाणि सहस्रश उपलभ्यन्ते, "तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्" इति, "विद्यामेतां योगविधिञ्च कृत्स्नम्" इति चैवमादीनि। योगशास्त्रेऽपि "अथ तत्त्वदर्शनाभ्युपायो योगः" इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते, अतः सम्प्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भविष्यतीति। इयमप्यधिका शङ्कातिदेशेन निवर्त्यते। अर्थैकदेशसम्प्रतिपत्तावप्यर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात्। सतीष्वप्यध्यात्मविषयासु बह्वीषु स्मृतिषु साङ्ख्ययोगस्मृत्योरेव निराकरणाय यत्नः कृतः, साङ्ख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ शिष्टैश्च परिगृहीतौ लिङ्गेन च श्रौतेनोपबृंहितौ, तत्कारणं साङ्ख्ययोगाभिपन्नं ज्ञात्वा देवं

---

न केवलं योगे विधिः किन्तु योगस्य ज्ञापकान्यर्थवादवाक्यान्यपि सन्तीत्याह। लिङ्गानि चेति। तां पूर्वोक्तां धारणां योगविदो योगं परमं तप इति मन्यन्ते। उक्तामेतां ब्रह्मविद्यां योगविधिं ध्यानप्रकारञ्च मृत्युप्रसादान्नचिकेता लब्ध्वा ब्रह्म प्राप्त इति सम्बन्धः। योगस्मृतिः प्रधानादितत्त्वांशेऽपि प्रमाणत्वेन स्वीकार्या। सम्प्रतिपन्नः प्रामाणिकोऽर्थैकदेशो योगरूपो यस्यास्तत्त्वादित्यर्थः। अष्टका कर्तव्याः गुरुरनुगन्तव्य इत्यादिस्मृतीनां वेदाविरुद्धार्थकत्वान्मूलश्रुत्यनुमानेन प्रामाण्यमुक्तं प्रमाणलक्षणे। एवं योगस्मृतेर्योगे प्रामाण्यात्तत्त्वांशेऽपि प्रामाण्यमिति पूर्वपक्षमनूद्य सिद्धान्तयति। इयमिति। ननु बौद्धादिस्मृतयोऽत्र किमिति न निराकृता इत्यत आह। सतीष्वपीति। तासां प्रतारकत्वेन प्रसिद्धत्वादशिष्टैः पशुप्रायैर्गृहीतत्वादेवावाच्यत्वाधानोपे-

मुच्यते सर्वपापैरिति। निराकरणन्तु न *साङ्ख्यस्मृतिज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत इति। श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति। द्वैतिनो हि ते साङ्ख्या योगाश्च नात्मैकत्वदर्शिनः। यत्तु दर्शनमुक्तं तत्कारणं साङ्ख्ययोगाभिपन्नमिति वैदिकमेव तत्र ज्ञानं ध्यानञ्च साङ्ख्ययोगशब्दाभ्यामभिलप्येते प्रत्यासत्तेरित्यवगन्तव्यं, येन त्वंशेन न विरुध्यते तेनेष्टमेव साङ्ख्ययोगस्मृत्योः सावकाशत्वं। तद्यथाऽसङ्गो ह्ययं पुरुष इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन साङ्ख्यैरभ्युपगम्यते। तथा च योगैरपि "अथ परिव्राट् विवर्णवासा मुण्डोऽपरिग्रहः" इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते। एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि, तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेत्, उप-

---

चेति भावः। तत्कारणमिति। तेषां प्रकृतानां कामानां कारणं साङ्ख्ययोगाभ्यां विवेकध्यानाभ्यामभिपन्नं प्रत्यक्तया प्राप्तं देवं ज्ञात्वा सर्वपाशैरविद्यादिभिर्मुच्यत इत्यर्थः। समूलत्वे स्मृतिद्वयस्य निरासः किमिति कृत इत्यत आह। निराकरणन्त्विति। इति हेतोः, कृतमिति शेषः। प्रत्यासत्तेरिति श्रुतिस्थसाङ्ख्ययोगशब्दयोः सजातीयश्रुत्यर्थग्राहित्वादिति यावत्। किं सर्वांशेषु स्मृत्यप्रामाण्यं नेत्याह। येन त्वंशेनेति। ब्रह्मवादस्य कणभक्षादिभिर्विरोधमाशङ्क्यातिदिशति। एतेनेति। श्रुतिविरोधेनेत्यर्थः। उपकारकबाधो न युक्त इत्या-

---

* साङ्ख्यज्ञानेन का०। साङ्ख्यदर्शनेन वर्ध०।

कुर्वन्तु नाम, तत्त्वज्ञानन्तु वेदान्तवाक्येभ्य एव भवति "नावेदविन्मनुते तं बृहन्तं, तं त्वौपनिषदं पुरुषं पृच्छामि" इत्येवमादिश्रुतिभ्यः ॥

## न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४ ॥

ब्रह्मास्य *जगतो निमित्तं कारण प्रकृतिश्चेत्यस्य पक्षस्याक्षेपः स्मृतिनिमित्तः परिहृतः, तर्कनिमित्त इदानीमाक्षेपः परिह्रियते। कुतः पुनरस्मिन्नवधारिते आगमार्थे तर्कनिमित्तस्याक्षेपस्यावकाशः। ननु धर्म इव ब्रह्मण्यप्यनपेक्ष आगमो भवितुमर्हति, भवेदयमवष्टम्भो यदि प्रमाणान्तरानवगाह्य आगममात्रप्रमेयोऽयमर्थः स्यादनुष्ठेयरूप इव धर्मः, परिनिष्पन्नरूपन्तु ब्रह्मावगम्यते। परिनिष्पन्ने च वस्तुनि प्रमाणान्तराणामस्त्यवकाशो यथा पृथिव्यादिषु। यथा च श्रुतीनां परस्परविरोधे सत्येकवशेनेतरा नीयन्ते, एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव श्रुतिर्नीयते। †दृष्टसाधर्म्येण चादृष्टमर्थं समर्प-

---

शक्त्या योऽंश उपकारक स न बाध्य किन्तु तत्त्वांश इत्याह। तान्यपीति। तर्कोऽनुमानं, तदनुग्राहिका युक्तिरुपपत्तिः॥

स्मृतीनामप्रामाण्यात्ताभिः समन्वयस्य न विरोध इति सिद्धान्तविलक्षणत्वात् वृत्तानुवादेनास्याधिकरणस्य तात्पर्यमाह। ब्रह्मास्येति। पूर्वपक्षमाक्षिपति। कुत पुनरिति। अनवकाशे हेतुमाह। ननु धर्म इवेति। मानान्तरानपेक्षे वेदैकसमधिगम्ये ब्रह्मण्यनुमानात्मकतर्कस्याप्रवेशात्तेनाक्षेपस्यानवकाशः, भिन्नविषयत्वात् तर्कवेदयोरित्यर्थः।

---

* जगत कारणमिति का०। † दृष्टसाधर्म्येनेति वर्ध० का०।

यन्ती युक्तिरनुभवस्य सन्निकृष्यते, विप्रकृष्यते तु श्रुतिरैति-
ह्यमात्रेण स्वार्थाभिधानात्। अनुभवावसानञ्च ब्रह्मविज्ञान-
मविद्याया निवर्तकं मोक्षसाधनञ्च दृष्टफलतयेष्यते। श्रुतिरपि
"श्रोतव्यो मन्तव्यः" इति श्रवणव्यतिरेकेण मननं विदधती
तर्कमप्यत्रादर्तव्यं दर्शयति, अतस्तर्कनिमित्तः पुनराक्षेपः क्रि-
यते, न विलक्षणत्वादस्येति। यदुक्तं चेतनं ब्रह्म जगतः प्रकृति-
रिति तन्नोपपद्यते। कस्माद्विलक्षणत्वादस्य विकारस्य प्रकृत्याः।
इदं हि ब्रह्म कार्यत्वेनाभिप्रेयमाणं जगद्ब्रह्मविलक्षणं अचेत-
नमशुद्धञ्च दृश्यते, ब्रह्म च जगद्विलक्षणं चेतनं शुद्धञ्च
श्रूयते। न च विलक्षणत्वे प्रकृतिविकारभावो दृष्टः, न हि रुच-
कादयो विकारा मृत्प्रकृतिका भवन्ति, शरावादयो वा सुवर्ण-
प्रकृतिकाः, मृदैव तु मृदन्विताः विकाराः प्रक्रियन्ते, सुव-

---

सिद्धस्य मानान्तरगम्यत्वादेकविषयत्वाद्विरोध इति पूर्वपक्षं समर्थयते।
भवेदयमिति। अवष्टम्भो दृष्टान्तः। नन्वेकविषयत्वेन विरोधेऽपि श्रुति-
विरोधान्मानान्तरमेव बाध्यतामित्यत आह। यथा चेति। प्रबलश्रुत्या
दुर्बलश्रुतिबाधवन्निरवकाशमानान्तरेण सावकाशया सावकाशश्रुति-
नयनं युक्तमित्यर्थः। किञ्च ब्रह्मसाक्षात्कारस्य मोक्षहेतुत्वेन प्रधा-
नस्यान्तरङ्गं तर्कस्तस्यापरोक्षदृष्टान्तगोचरत्वेन प्रधानवदपरोक्षार्थ-
विषयत्वात्, शब्दस्तु परोक्षार्थकत्वाद्बहिरङ्गमतस्तर्केण बाध्य इत्याह।
दृष्टेति। ऐतिह्यमात्रेण परोक्षतयेति यावत्। अनुभवस्य प्राधान्यं
दर्शयति। अनुभवावसानञ्चेति। नैषा तर्केण मतिरित्यर्थवादेन तर्कस्य
निषेधमाशङ्क्य विधिविरोधान्मैवमित्याह। श्रुतिरपीति। एवं पूर्व-
पक्षं सम्भाव्य चेतनब्रह्मकारणवादिवेदान्तसमन्वयः, क्षित्यादिकं न
चेतनप्रकृतिकं कार्यद्रव्यत्वात् घटवदिति सांख्ययोगन्यायेन विरुध्यते
न वेति सन्देहे [illegible]भावात् दुर्बलत्वेऽप्यनुमानस्य ...

कुर्वन्तु नाम, तत्त्वज्ञानन्तु वेदान्तवाक्येभ्य एव भवति "नावेदविन्मनुते तं बृहन्तं, तं त्वौपनिषदं पुरुषं पृच्छामि" इत्येवमादिश्रुतिभ्यः ॥

## न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४ ॥

ब्रह्मास्य *जगतो निमित्तं कारणं प्रकृतिश्चेत्यस्य पक्षस्याक्षेपः स्मृतिनिमित्तः परिहृतः, तर्कनिमित्त इदानीमाक्षेपः परिह्रियते। कुतः पुनरस्मिन्नवधारिते आगमार्थे तर्कनिमित्तस्याक्षेपस्यावकाशः। ननु धर्म इव ब्रह्मण्यप्यनपेक्ष आगमो भवितुमर्हति, भवेदयमवष्टम्भो यदि प्रमाणान्तरानवगाह्य आगममात्रप्रमेयोऽयमर्थः स्यादनुष्ठेयरूप इव धर्मः, परिनिष्पन्नरूपन्तु ब्रह्मावगम्यते। परिनिष्पन्ने च वस्तुनि प्रमाणान्तराणामस्त्यवकाशो यथा पृथिव्यादिषु। यथा च श्रुतीनां परस्परविरोधे सत्येकवशेनेतरा नीयन्ते, एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव श्रुतिर्नीयते। †दृष्टसाधर्म्येण चादृष्टमर्थं समर्प-

---

ग्रह्य योऽंश उपकारक स न बाध्य किन्तु तत्त्वांश इत्याह। तान्यपीति। तर्कोऽनुमान, तदनुग्राहिका युक्तिरुपपत्ति ॥

स्मृतीनामप्रामाण्यात्ताभि समन्वयस्य न विरोध इति सिद्धान्तविलक्षणत्वात् वृत्तानुवादेनास्याधिकरणस्य तात्पर्यमाह। ब्रह्मास्येति। पूर्वपक्षमाक्षिपति। कुत पुनरिति। अनवकाशे हेतुमाह। ननु धर्म इवेति। मानान्तरानपेक्षे वेदैकसमधिगम्ये ब्रह्मण्यनुमानात्मकतर्कस्याप्रवेशात्तेनाक्षेपस्यानवकाश, भिन्नविषयत्वात् तर्कवेदयोरित्यर्थ।

---

* जगत कारणमिति का०। † दृष्टसाम्यनेति यथे० का०।

यन्ती युक्तिरनुभवस्य सन्निकृष्यते, विप्रकृष्यते तु श्रुतिरैति-
ह्यमात्रेण स्वार्थाभिधानात्। अनुभवावसानञ्च ब्रह्मविज्ञान-
मविद्याया निवर्तकं मोक्षसाधनञ्च दृष्टफलतयेष्यते। श्रुतिरपि
"श्रोतव्यो मन्तव्यः" इति श्रवणव्यतिरेकेण मननं विदधती
तर्कमप्यत्रादर्तव्यं दर्शयति, अतस्तर्कनिमित्तः पुनराक्षेपः क्रि-
यते, न विलक्षणत्वादस्येति। यदुक्तं चेतनं ब्रह्म जगतः प्रकृति-
रिति तन्नोपपद्यते। कस्माद्विलक्षणत्वादस्य विकारस्य प्रकृत्याः।
इदं हि ब्रह्म कार्यत्वेनाभिप्रेयमाणं जगद्ब्रह्मविलक्षणं अचेत-
नमशुद्धञ्च दृश्यते, ब्रह्म च जगद्विलक्षणं चेतनं शुद्धञ्च
श्रूयते। न च विलक्षणत्वे प्रकृतिविकारभावो दृष्टः, न हि रुच-
कादयो विकारा मृत्प्रकृतिका भवन्ति, शरावादयो वा सुवर्ण-
प्रकृतिकाः, मृदैव तु मृदन्विताः विकाराः प्रक्रियन्ते, सुव-

---

सिद्धस्य मानान्तरगम्यत्वादेकविषयत्वाद्विरोध इति पूर्वपक्षं समर्थयते।
भवेदयमिति। अवष्टम्भो दृष्टान्तः। नन्वेकविषयत्वेन विरोधेऽपि श्रुति-
विरोधान्मानान्तरमेव बाध्यतामित्यत आह। यथा चेति। प्रबलश्रुत्या
दुर्बलश्रुतिबाधवन्निरवकाशमानान्तरेण लक्षणादन्या सावकाशश्रुति-
नयनं युक्तमित्यर्थः। किञ्च ब्रह्मसाक्षात्कारस्य मोक्षहेतुत्वेन प्रधा-
नस्यान्तरङ्गं तर्कस्तस्यापरोक्षदृष्टान्तगोचरत्वेन प्रधानवदपरोक्षार्थ-
विषयत्वात्, शब्दस्तु परोक्षार्थकत्वाद्बहिरङ्गमतस्तर्केण बाध्य इत्याह।
दृष्टेति। ऐतिह्यमात्रेण परोक्षतयेति यावत्। अनुभवस्य प्राधान्यं
दर्शयति। अनुभवावसानञ्चेति। नैषा तर्केण मतिरित्यर्थवादेन तर्कस्य
निषेधमाशङ्क्य विधिविरोधान्नैवमित्याह। श्रुतिरपीति। एवं पूर्व-
पक्षं सम्भाव्य चेतनब्रह्मकारणवादिवेदान्तसमन्वयः, क्षित्यादिकं न
चेतनप्रकृतिकं कार्यद्रव्यत्वात् घटवदिति सांख्ययोगन्यायेन विरुध्यते
न वेति सन्देहे स्मृतेर्मूलाभावात् दुर्बलत्वेऽप्यनुमानस्य व्याप्तिमूलत्वेन

र्णेन सुवर्णान्विताः, तथेदमपि जगदचेतनं सुखदुःखमोहान्वितं सदचेतनस्यैव सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हति न विलक्षणस्य ब्रह्मणः, ब्रह्मविलक्षणत्वञ्चास्य जगतोऽशुद्ध्यचेतनत्वदर्शनादवगन्तव्यं। अशुद्धं हीदं जगत् सुखदुःखमोहात्मकतया प्रीतिपरितापविषादादिहेतुत्वात् स्वर्गनरकाद्युच्चावचप्रपञ्चत्वाच्च। अचेतनं चेदं जगत् चेतनं प्रति कार्यकरणभावेनोपकरणभावोपगमात्, न हि साम्ये सत्युपकार्योपकारकभावो भवति, न हि प्रदीपौ परस्परस्योपकुरुतः। ननु चेतनमपि कार्यकरणं स्वामिभृत्यन्यायेन भोक्तुरुपकरिष्यति, न, स्वामिभृत्ययोरप्यचेतनांशस्यैव चेतनं प्रत्युपकारकत्वात्। यो ह्येकस्य चेतनस्य परिग्रहे बुद्ध्यादिरचेतनभागः स एवान्यस्य चेतनस्योपकरोति न तु स्वयमेव चेतनश्चेतनान्तरस्य उपकरोत्यपकरोति वा, निरतिशया ह्यकर्तारश्चेतना इति साङ्ख्या मन्यन्ते, तस्मादचेतनं कार्यकरणं।

---

प्राबल्यात्तेन विरुध्यत इति प्रत्युदाहरणेन पूर्वपक्षयति। न विलक्षणत्वादिति। पूर्वोत्तरपक्षयोः समन्वयासिद्धि. तत्सिद्धिश्चेति पूर्ववत् फलं, जगन्न ब्रह्मप्रकृतिकं तद्विलक्षणत्वात्, यद्यद्विलक्षणं तन्न तत्प्रकृतिकं यथा मृद्विलक्षणा रुचकादय इत्यर्थः। सुखदुःखमोहाः सत्त्वरजस्तमांसि, तथा च जगत् सुखदुःखमोहात्मकसामान्यप्रकृतिकं तदन्वितत्वात् यदित्थं तत्तथा यथा मृदन्विता घटादय इत्याह। मृदेवेति। विलक्षणत्वं साधयति। ब्रह्मविलक्षणत्वञ्चेति। यथा हि एक एव स्त्रीपिण्डः पतिसपत्न्युपपतीनां प्रीतिपरितापविषादादीन् करोति एवमन्येऽपि भावा द्रष्टव्याः। तत्र प्रीतिः सुखं, परितापः

न च काष्ठलोष्टादीनां चेतनत्वे किञ्चित्प्रमाणमस्ति, प्रसिद्ध-श्चायं चेतनाचेतनविभागो लोके, तस्माद्ब्रह्मविलक्षणत्वान्नेदं जगत् तत्प्रकृतिकं। योऽपि कश्चिदाचक्षीत श्रुत्या जगतश्चेतन-प्रकृतिकतां तद्बलेनैव समस्तं जगच्चेतनमवगमिष्यामि प्रकृति-रूपस्य विकारेऽन्वयदर्शनात्, अविभावनन्तु चैतन्यस्य परि-णामविशेषाद्भविष्यति, यथा स्पष्टचैतन्यानामप्यात्मनां स्वा-पमूर्च्छाद्यवस्थासु चैतन्यं न विभाव्यते, एवं काष्ठलोष्टादीना-मपि चैतन्यं न विभावयिष्यते। एतस्मादेव च विभावितत्वा-विभावितत्वकृतात् विशेषाद्रूपादिभावाभावाभ्याञ्च कार्यकर-णानामात्मनाञ्च चेतनत्वाविशेषेऽपि गुणप्रधानभावो न वि-रोत्स्यते। यथा च पार्थिवत्वाविशेषेऽपि मांससूपौदनादीनां प्रत्यात्मवर्तिनो विशेषात् परस्परोपकारित्वं भवत्येवमिहापि भविष्यति, प्रविभागप्रसिद्धिरप्यत एव न विरोत्स्यत इति। तेनापि कथञ्चिच्चेतनत्वाचेतनत्वलक्षणं विलक्षणत्वं परिह्रियेत।

---

शोकः, विषादो भ्रमः, आदिपदात् रागादिग्रहः। उभयोश्चेतनत्वेन साम्यादुपकार्योपकारकभावो न स्यादित्ययुक्तं। स्वामिभृत्ययोर्व्यभि-चारादिति शङ्कते। ननु चेतनमपीति। भृत्यदेहस्यैव स्वामिचेतनो-पकारकत्वान्न व्यभिचार इत्याह। नेत्यादिना। उत्कर्षापकर्षशून्यत्वा-च्चेतनाना मिथो नोपकारकत्वमित्याह। निरतिशया इति। तस्मा-दुपकारकत्वात्। श्रुतचेतनप्रकृतिकत्वबलेन जगच्चेतनमेवेत्येकदेशि-मतमुत्थापयति। योऽपीति। घटादेश्चेतनत्वमनुपलब्धिबाधितं इत्यत आह। अविभावनन्त्विति। अतः कारणान्यपरिणामत्वात् सतोऽपि चैतन्यस्यानुपलब्धिरित्यर्थः। अन्तःकरणादन्यस्य वृत्त्युपरागदशाया-

शुद्ध्यशुद्धित्वलक्षणन्तु विलक्षणत्वं नैव परिह्रियते, *न चेतरदपि विलक्षणत्वं परिहर्तुं शक्यत इत्याह । तथात्वञ्च शब्दादिति। अनवगम्यमानमेव हीदं लोके समस्तस्य वस्तुनः चेतनत्वं चेतनप्रकृतिकत्वश्रवणाच्छब्दशरणतया केवलयोत्प्रेच्यते, तच्च शब्देनैव विरुध्यते, यतः शब्दादपि तथात्वमवगम्यते। तथात्वमिति प्रकृतिविलक्षणत्वं कथयति। शब्द एव विज्ञानञ्चाविज्ञानं चेति कस्यचिद्विभागस्याचेतनतां श्रावयन् चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगच्छ्रावयति। ननु चेतनत्वमपि क्वचिदचेतनत्वाभिमतानां भूतेन्द्रियाणां श्रूयते यथा, "मृदब्रवीदापोऽब्रुवन्" इति, "तत्तेज ऐक्षत ता आप ऐक्षन्त" इति चैवमाद्या भूतविषया चेतनत्वश्रुतिः, इन्द्रियविषयापि "ते हेमे प्राणा अहंश्रेयसे विविदमाना ब्रह्म जग्मुः" इति "ते ह वाचमूचुस्त्वन्न उद्गाय" इति चैवमाद्येन्द्रियविषयेति। अत उत्तरं पठति ॥

---

मेव चैतन्याभिव्यक्तिर्नान्यदेति भावः। तदभावे चैतन्यानभिव्यक्तौ दृष्टान्तः। यथेति। आत्मानात्मनोश्चेतनत्वे स्वस्वामिभावः कुत इत्यत आह। एतस्मादेवेति। साम्येति प्रातिस्विकस्वरूपविशेषाच्छेषशेषित्वे दृष्टान्तः। यथा चेति। चेतनाचेतनभेदः कथमित्यत आह। प्रविभागेति। चैतन्याभिव्यक्त्यनभिव्यक्तिभ्यामित्यर्थः। सर्वस्य चेतनत्वमेकदेश्युक्तमङ्गीकृत्य सांख्यः परिहरति। तेनापि कथञ्चिदिति। अङ्गीकारं त्यक्त्वा सूत्रशेषेण परिहरति। न चेत्यादिना। इतरचेतनाचेतनरूपं वैलक्षण्यं तथात्वशब्दार्थः। श्रुतार्थापत्तिः शब्देन बाध्येति भावः। श्रुतिसाहाय्यान्न बाध्येत्युत्तरसूत्रव्यावर्त्यं शङ्कते। नन्विति ॥

---

* न चेति का०।

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्द आशङ्कामपनुदति। न खलु मृदब्रवीदित्येवंजातीयकया श्रुत्या भूतेन्द्रियाणां चेतनत्वमाशङ्कनीयं यतोऽभिमानिव्यपदेश एषः। मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतनादेवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते न भूतेन्द्रियमात्रं। कस्माद्विशेषानुगतिभ्यां। विशेषो हि भोक्तॄणां भूतेन्द्रियाणाञ्च चेतनाचेतनप्रविभागलक्षणः प्रागभिहितः, सर्वचेतनतायां चासौ नोपपद्येत। अपि च कौषीतकिनः प्राणसंवादे करणमात्राशङ्काविनिवृत्तये अधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति "(कौ०२।१४) एता ह वै देवता अहंश्रेयसे विवदमानाः" इति "(कौ०२।१४) ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा" इति च। अनुगताश्च सर्वत्राभिमानिन्यश्चेतनादेवता मन्त्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति, प्राणसंवादवाक्यशेषे च

---

मृदादीनां वक्तृत्वादिश्रुतेस्तदभिमानिविषयत्वात् तया विज्ञानं चाविज्ञानञ्चेति चेतनाचेतनविभागशब्दस्योपचरितार्थत्वं न युक्तमिति सांख्यः समाधत्ते। अभिमानीति। संवदनं विवादः, न भूतमात्रमिन्द्रियमात्रं वा चेतनत्वेन व्यपदिश्यते। लोकवेदप्रसिद्धविभागबाधायोगादित्यर्थः। विशेषपदस्यार्थान्तरमाह। अपि चेति। अहंश्रेयसे स्वश्रेष्ठत्वाय प्राणा विवदमाना इत्युक्तप्राणानां चेतनवाचिदेवतापदेन विशेषितत्वात्, प्राणादिपदैरभिमानिव्यपदेश इत्यर्थः। प्राणे निःश्रेयसं श्रैष्ठ्यं विदित्वा

"ते ह प्राणाः प्रजापतिं पितरमेत्योचुः" इति श्रेष्ठत्वनिर्द्धारणाय प्रजापतिगमनं तद्वचनाच्चैकैकोत्क्रमणेनान्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः, "तस्मै बलिहरणं" इति चैवंजातीयकोऽस्मदादिष्विव व्यवहारोऽनुगम्यमानोऽभिमानिव्यपदेशं द्रढयति। "तत्तेज ऐक्षत" इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यं, तस्माद्विलक्षणमेवेदं ब्रह्मणो जगद्विलक्षणत्वाच्च न ब्रह्मप्रकृतिकमित्याक्षिप्ते प्रतिविधत्ते॥

## दृश्यते तु॥ ६॥

तुशब्दः *पूर्वपक्षं व्यावर्तयति, यदुक्तं विलक्षणत्वान्नेदं जगत् ब्रह्मप्रकृतिकमिति नायमेकान्तो दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो, विलक्षणानां केशनखादीनामुत्पत्तिरचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनां। नन्वचेतनान्येव पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानि

---

प्राणाधीना जाता इत्यर्थः। अनुगतिं बहुधा व्याचष्टे। अनुगताश्चेति। तस्मै प्राणाय, बलिहरणं वागादिभिः स्वीयवशिष्ठत्वादिगुणसमर्पणं कृतं। तेजआदीनामीक्षणं त्वयैवेक्षत्यधिकरणे चेतननिष्ठतया व्याख्यातं द्रष्टव्यमित्यर्थः। यस्मान्नास्ति जगतश्चेतनत्वं तस्मादिति पूर्वपक्षोपसंहारः॥

किं यत्किञ्चिद्वैलक्षण्यं हेतुः बहुवैलक्षण्यं वा। आद्ये व्यभिचारमाह। नायमेकान्तो दृश्यते हीति। हेतोरसत्त्वान्न व्यभिचार इति शङ्कते। नन्विति। यत्किञ्चिद्वैलक्षण्यमस्तीति व्यभिचार स्याह। उच्यत इति। शरीरस्य केशादीनाञ्च प्राणित्वाप्राणित्व-

---

* पूर्वेति का० वर्ध० नास्ति।

अचेतनान्येव वृश्चिकादिशरीराण्यचेतनानां गोमयादीनां कार्याणीत्युच्यते, एवमपि किञ्चिदचेतनं चेतनस्यायतनभावमुपगच्छति किञ्चिन्नेत्यस्त्येव वैलक्षण्यं। महांश्चायं पारिणामिकः स्वभावविप्रकर्षः पुरुषादीनां केशनखादीनाञ्च रूपादिभेदात्, तथा गोमयादीनां वृश्चिकादीनाञ्च, अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत। अथोच्येत अस्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्तमानो गोमयादीनां च वृश्चिकादिष्विति, ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभाव आकाशादिष्वनुवर्तमानो दृश्यते। विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो दूषयता किमशेषस्य ब्रह्मस्वभावस्याननुवर्तनं विलक्षणत्वमभिप्रेयते उत यस्य कस्यचित्, अथ चैतन्यस्येति वक्तव्यं। प्रथमे विकल्पे समस्तप्रकृतिविकारोच्छेदप्रसङ्गः। न ह्यसत्यतिशये प्रकृतिविकारभाव इति भवति। द्वितीये

---

रूपं वैलक्षण्यमस्तीत्यर्थः। द्वितीयेऽपि तत्रैव व्यभिचारमाह। महानिति। पारिणामिकः केशादीनां स्वगतपरिणामात्मक इत्यर्थः। किञ्च ययोः प्रकृतिविकारभावस्तयोः सादृश्यं वदता वक्तव्यं किमात्यन्तिकं यत्किञ्चिद्वेति, आद्ये दोषमाह। अत्यन्तेति। द्वितीयमाशङ्क्य ब्रह्मजगतोरपि तत्सत्त्वात् प्रकृतिविकृतित्वसिद्धिरित्याह। अथेत्यादिना। विलक्षणत्वं विकल्प्य दूषणान्तरमाह। विलक्षणत्वेनेत्यादिना। जगति समस्तस्य ब्रह्मस्वभावस्य चेतनत्वादेरननुवर्तमानान्न ब्रह्मकार्यत्वमिति पक्षे सर्वसाम्ये प्रकृतिविकारत्वमित्युक्तं स्यात् तदसङ्गतमित्याह। प्रथमे इति। तृतीये तु दृष्टान्ताभाव इति। न च जगन्न ब्रह्मप्रकृतिकमचेतनत्वादविद्यावदिति दृष्टान्तोऽस्तीति वाच्यं, अना-

चाप्रसिद्धत्वं, दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनुवर्तमान इत्युक्तं। तृतीये च दृष्टान्ताभावः, किं हि यच्चैतन्येनानन्वितं तदब्रह्मप्रकृतिकं दृष्टमिति*ब्रह्मकारणवादिनं प्रत्युदाह्रियेत, समस्तस्यास्य वस्तुजातस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात्। आगमविरोधस्तु प्रसिद्ध एव चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यागमतात्पर्यस्य प्रसाधितत्वात्। यत्तूक्तं परिनिष्पन्नत्वात् ब्रह्मणि प्रमाणान्तराणि सम्भवेयुरिति तदपि मनोरथमात्रं, रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः, लिङ्गाद्यभावाच्च नानुमानादीनामागममात्रसमधिगम्य एव त्वयमर्थो धर्मवत्। तथा च श्रुतिः,

"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" इति।

"कोऽद्धा वेद क इह प्रवोचत् इयं विसृष्टिः यत आबभूव"

---

दित्वस्योपाधित्वात्। न च ध्वंसे साध्यव्यापकता, तस्यापि कार्यसंस्कारात्मकस्य भावत्वे सब्रह्मप्रकृतिकत्वादभावत्वाग्रहे चानादिभावत्वस्योपाधित्वादिति, सम्प्रति कल्पत्रयसाधारणं दोषमाह। आगमेति, पूर्वोक्तमनूद्य ब्रह्मणः शुष्कतर्कविषयत्वासम्भवान्न तर्केणाक्षेप इत्याह। यत्तूक्तमित्यादिना। लिङ्गसादृश्यपदप्रवृत्तिनिमित्तानामभावादनुमानोपमानशब्दानामगोचरः, ब्रह्म लक्षणया वेदैकवेद्यमित्यर्थः। एषा ब्रह्मणि मतिस्तर्केण स्वतन्त्रेण नापनेया न सम्पादनीया। यद्वा कुतर्केण न †बाधनीया ‡कुतार्किकादन्येनैव वेदविदार्येण प्रोक्ता मतिः सुज्ञानायानुभवाय फलाय भवति। हे प्रेष्ठ प्रियतमेति नचिकेतसम्प्रति मृत्योर्वचनं। इयं विविधा सृष्टिर्यतः आ समन्ताद्बभूव तं को वा अद्धा साक्षाद्वेद, तिष्ठतु वेदनं क इह लोके तं प्रवोचत्, प्रवोचच्छान्दसो दीर्घलोपः, यथावद्वक्तापि नास्तीत्यर्थः। प्रभवं जन्म न विदुः मम सर्वा-

---

* ब्रह्मणादिमभिति का०। † बाधनीयेति सो० १ टी०।
‡ मार्किकादिमि सो० १ टी०।

इति चैतौ मन्त्रौ सिद्धानामपीश्वराणां दुर्बोधतां जगत्कारणस्य दर्शयतः। स्मृतिरपि भवति-

"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणं" ॥ इति
"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते"।

इति च

"न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः"॥ इति

चैवंजातीयका। यदपि श्रवणव्यतिरेकेण मननं विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तं नानेन मिषेण शुष्कतर्कस्यात्रात्मलाभः सम्भवति, श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवाङ्गत्वेनाश्रीयते, स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारादात्मनोऽनन्वागतत्वं सम्प्रसादे च प्रपञ्चपरित्यागेन सदात्मना सम्पत्तेर्निष्प्रपञ्चसदात्मत्वं, प्रपञ्चस्य च ब्रह्मप्रभवत्वात् कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेक इत्येवंजातीयकः।

---

दित्वेन जन्माभावात्। मिषेण मननविधिव्याजेन, शुष्कः श्रुत्यनपेक्षः। श्रुत्या तत्त्वे निश्चिते सत्यनु पश्चात् पुरुषदोषस्यासम्भावनादेर्निरासाय गृहीत श्रुत्यनुगृहीतस्तमाह। स्वप्नान्तेति। जीवस्यावस्थावतो देहादिप्रपञ्चयुक्तस्य निष्प्रपञ्चब्रह्मैक्यमसम्भवि द्वैतग्राहिप्रमाणविरोधाद्ब्रह्मणश्चाद्वितीयत्वमयुक्तमित्येव श्रौतार्थासम्भावनायां तन्निरासाय सर्वास्ववस्थास्वात्मनोऽनुगतस्य व्यभिचारिणीभिरवस्थाभिरनन्वागतत्वमसंस्पृष्टत्वं ह्यवस्थाना स्वाभाविकत्वे स्त्रौष्ण्यवदात्मव्यभिचारायोगात सुषुप्तौ प्रपञ्चभानाभावे सता सोम्येत्युक्ताभेददर्शनान्निष्प्रपञ्चब्रह्मैक्यसम्भवः, यथा घटादयो मृदभिन्नास्तथा जगद्ब्रह्माभिन्नं तज्जत्वादि-

तर्काप्रतिष्ठानादिति च केवलस्य तर्कस्य विप्रलम्भकत्वं दर्शयिष्यति। योऽपि चेतनकारणश्रवणबलेनैव समस्तस्य जगतश्चेतनतामुत्प्रेक्षेत तस्यापि विज्ञानञ्चाविज्ञानञ्चेति चेतनाचेतनविभागश्रवणं विभावनाविभावनाभ्यां चैतन्यस्य शक्यत एव योजयितुं। परस्यैव त्विदमपि विभागश्रवणं न युज्यते, कथं परमकारणस्य ह्यत्र समस्तजगदात्मना समवस्थानं श्राव्यते विज्ञानञ्चाविज्ञानञ्चाभवदिति। तत्र यथा चेतनस्याचेतनभावो नोपपद्यते विलक्षणत्वात्, एवमचेतनस्यापि चेतनभावो नोपपद्यते, प्रत्युक्तत्वात्तु विलक्षणत्वस्य यथा श्रुत्यैव चेतनं कारणं ग्रहीतव्यं भवति॥

## असदिति चेन्न प्रतिषेधमात्रत्वात्॥ ७॥

यदि चेतनं शुद्धं शब्दादिहीनञ्च ब्रह्म तद्विपरीतस्याचेत-

---

स्तर्क आश्रीयत इत्यर्थः। इतोऽन्यादृशतर्कस्यात्र ब्रह्मण्यप्रवेशादस्य चानुकूलत्वान्न तर्केणाक्षेपावकाश इति भावः। ब्रह्मणि शुष्कतर्कस्याप्रवेशः सूत्रसम्मत इत्याह। तर्काप्रतिष्ठानादिति। विप्रलम्भकत्वमप्रमाणकत्वं। यदुक्तं एकदेशिना सर्वस्य जगतश्चेतनत्वोक्तौ विभागश्रुत्यनुपपत्तिरिति दूषणं साङ्ख्येन तन्न तत्र तेनैकदेशिना विभागश्रुतेश्चैतन्याभिव्यक्त्यनभिव्यक्तिभ्यां योजयितुं शक्यत्वात्, साङ्ख्यस्य त्विदं दूषणं वज्रलेपायते, प्रधानकार्यत्वे सर्वस्याचेतनत्वेन चेतनाचेतनकार्यविभागासम्भवादित्याह। योऽपीत्यादिना। सिद्धान्ते चेतनाचेतनवैलक्षण्याधिकारे कथं ब्रह्मणः प्रकृतित्वमित्यत आह। प्रत्युक्तत्वादिति। अप्रयोजकत्वव्यभिचाराभ्यां निरस्तत्वादित्यर्थः॥

कार्यमुत्पत्तेः प्रागसदेव स्यात् स्वाविरुद्धकारणात्मना सत्त्वायोगा-

नस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत, असत्
तर्हि कार्यं प्रागुत्पत्तेरिति प्रसज्येत, अनिष्टञ्चैतत् सत्कार्यवा-
दिनस्तवेति चेत्, नैष दोषः, प्रतिषेधमात्रत्वात्, प्रतिषेधमात्रं
हीदं नास्य प्रतिषेध्यमस्ति, न ह्ययं प्रतिषेधः प्रागुत्पत्तेः सत्त्वं
कार्यस्य प्रतिषेद्धुं शक्नोति, कथं, यथैव हीदानीमपीदं कार्यं
कारणात्मना सत् एवं प्रागुत्पत्तेरपीति गम्यते। न हीदानी-
मपीदं कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति, "सर्वं तं
परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्यादिश्रवणात्। कारणा-
त्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टं। ननु शब्दादिहीनं
ब्रह्म जगतः कारणं, बाढं, न तु शब्दादिमत्कार्यं कारणात्म-
ना हीनं प्रागुत्पत्तेरिदानीञ्चास्तीति, तेन न शक्यते वक्तुं प्रागु-
त्पत्तेरसत्कार्यमिति। विस्तरेण चैतत्कार्यकारणानन्यत्ववादे
वक्ष्यामः॥

## अपीतौ तद्वत् प्रसङ्गादसमञ्जसं॥ ८॥

अत्राह, यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशु-

---

दित्यपसिद्धान्तापत्तिमाशङ्क्य मिथ्यात्वात् कार्यस्य कालत्रयेऽपि कारणा-
त्मना सत्त्वमविरुद्धमिति समाधत्ते। असदिति। चेदित्यादिना असत्
स्यादिति सत्त्वप्रतिषेधो निरर्थक इत्यर्थः। कार्यसत्यत्वाभावे श्रुति-
माह। सर्वन्तमिति। मिथ्यात्वमजानतः शङ्कामनूद्य परिहरति। न-
न्वित्यादिना। विस्तरेण चैतदिति मिथ्यात्वमित्यर्थः।
सत्कार्यवादसिद्ध्यर्थं कार्यभेदे कारणस्यापि कार्यवदशुद्ध्यादिप्रसङ्ग

श्चेदमुच्यते, कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति स्थितावपि हि समानोऽयं प्रसङ्गः कार्यकारणयोरनन्यत्वाभ्युपगमात् इदं सर्वं यदयमात्मा, आत्मैवेदं सर्वं ब्रह्मैवेदममृतं पुरस्तात् सर्वं खल्विदं ब्रह्मेत्येवमाद्याभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणादनन्यत्वं श्राव्यते। तत्र यः परिहारः कार्यस्य तद्धर्माणाञ्चाविद्याध्यारोपितत्वान्न तैः कारणं संसृज्यत इति अपीतावपि स समानः। अस्ति चायमपरो दृष्टान्तः, यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि-कालेषु न संस्पृश्यते अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यत इति। यथा च *स्वप्नदर्शकः स्वप्नदर्शनमायया न संस्पृश्यते† प्रबोधसम्प्रसादयोरनन्वागतत्वात्, एवमवस्थात्रयसाक्ष्येकोऽव्यभिचार्यवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते। मायामात्रं ह्येतत् परमात्मनोऽवस्थात्रयात्मनावभासनं रज्ज्वा इव सर्पादिभावेनेति। अत्रोक्तं वेदान्तार्थसम्प्रदायविद्भिराचार्यैः।

---

विशेषणं व्यर्थमिति प्रतिबन्द्य समाधत्ते। श्चेत्यत्रस्पश्चेति। परिणामदृष्टान्तं व्याख्याय विवर्तदृष्टान्तं व्याचष्टे। अस्ति चेति। मायाव्यनुपादानमित्यरुच्या दृष्टान्तान्तरमाह। यथेति। अस्यैव स्वप्नकाले दृष्टसंसर्ग इत्यत आह। प्रबोधेति। जाग्रत्सुषुप्त्योः स्वप्ने चात्मनोऽस्पर्शात् तत्कालेऽप्यस्पर्श इत्यर्थः। यदाऽज्ञस्य जीवस्यावस्थाभिरसंसर्गस्तदा सर्वज्ञस्य किं वाच्यमिति दार्ष्टान्तिकमाह। एवमिति। यदा जगज्जन्मस्थितिलया ईश्वरस्यावस्थात्रयं तदसङ्गित्वे वृद्धसम्मतिमाह। अत्रोक्तमिति। यदा तत्त्वमस्यादुपदेशकाले प्रबुध्यते मायानिद्रां त्यजति तदा

---

* स्वप्नदृगेक एव इति सो० का० वर्ध०। † संसृज्यत इतीति सो० का० वर्ध०।

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा" ॥ इति

तत्र यदुक्तमपीतौ कारणस्यापि कार्यस्येव स्थौल्यादिदोषप्रसङ्ग इत्येतदयुक्तं। यत्पुनरेतदुक्तं समस्तस्य विभागस्याविभागप्राप्तेः पुनर्विभागेनोत्पत्तौ नियमकारणं नोपपद्यत इत्ययमप्यदोषः दृष्टान्तभावादेव, यथा हि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ मिथ्याज्ञानस्यानपोदितत्वात् पूर्ववत् पुनः प्रबोधे विभागो भवत्येवमिहापि भविष्यति। श्रुतिश्चात्र भवति "इमाः सर्वाः प्रजाः सति संपद्य न विदुः सति सम्पद्यामहे" इति। "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्तीति। यथा हि असंविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्यवहारः स्वप्नवदव्याहतः स्थितो दृश्यते, एवमपीतावपि मिथ्याज्ञानप्रतिबद्धैव विभागशक्ति-

---

जन्मलयस्थित्यवस्थाशून्यमद्वैतमीश्वरमात्मत्वेनानुभवतीत्यर्थः। फलितमाह। तत्रेति। द्वितीयमसामञ्जस्यमनूद्य तेनैव सूत्रेण परिहरति। यत्पुनरिति। सुषुप्तावज्ञानसत्त्वे पुनर्विभागोत्पत्तौ च मानमाह। श्रुतिश्चेति। सति ब्रह्मण्येकीभूय न विदुरित्यज्ञानोक्तिः, इह सुषुप्तेः प्राक् प्रबोधे येन येन जात्यादिना विभक्ता भवन्ति तदा पुनरुत्थानकाले तथैव भवन्तीति विभागोक्तिः। ननु सुषुप्तौ पुनर्विभागप्रयोजकाज्ञानसत्त्वे सर्वप्रलये तत्सत्त्वं कुत इत्यत आह। यथा हीति। यथा सुषुप्तौ परमात्मनि सर्वकार्याणामविभागेऽपि पुनर्विभागहेत्वज्ञानशक्तिरस्ति एवमपीतौ महाप्रलयेऽपि मिथ्याभूताज्ञानसम्बद्धा पुनः

रनुमास्यते। एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः, सम्यग्ज्ञानेन मिथ्याज्ञानस्यापोदितत्वात्। यः पुनरयमन्तेऽपरो विकल्प उत्प्रेक्षितोऽथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणावतिष्ठेतेति सोऽप्यनभ्युपगमादेव प्रतिषिद्धः, तस्मात् समञ्जसमिदमौपनिषदं दर्शनं॥

## स्वपक्षदोषाच्च॥ १०॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषा प्रादुःष्युः, कथमित्युच्यते यत्तावदभिहितं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति, प्रधानप्रकृतिकतायामपि समानमेतच्छब्दादिहीनात् प्रधानाच्छब्दादिमतो जगत उत्पत्त्यभ्युपगमात्, अत एव च विलक्षणकार्योत्पत्त्यभ्युपगमात् समानः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गः, तथाऽपीतौ कार्यस्य कारणाविभागाभ्युपगमात्, तद्वत् प्रसङ्गोऽपि समानः, तथा मृदितसर्वविशेषेषु विकारे-

---

ष्टिविभागशक्तिरनुमास्यते। यतः स्थिताविदानीं मिथ्याज्ञानकार्यो विभागव्यवहारस्तत्त्वबोधाभावात् स्वप्नान्तवदबाधितो दृश्यते, अतः कार्यदर्शनात् कारणसत्त्वसिद्धिरित्यर्थः। अज्ञानां जीवानां महाप्रलयेऽप्यज्ञानशक्तिनियमात् पुनर्जन्मनियम इति भावः। एतेनेति जन्मकारणाज्ञानशक्त्यभावेनेत्यर्थः।

वैलक्षण्यादीनां सांख्यपक्षेऽपि दोषत्वान्नास्माभिस्तन्निरासप्रयासः कार्य इत्याह। स्वपक्षेति। सूत्रं व्याचष्टे। स्वेति। प्रादुःष्युः प्रादुर्भवेयुः, असत एवेति सत्यकार्यस्य विरुद्धकारणात्मना सत्त्वायोगात्, सांख्यस्यैवायं दोषो न कार्यमिथ्यात्ववादिन इति मन्तव्यं। अपीताविति सूत्रे-

अपीतावविभागात्मतां गतेष्विदमस्य पुरुषस्योपादानमिदमस्येति प्राक् प्रलयात् प्रति पुरुषं ये नियता भेदा न ते तथैव पुनरुत्पत्तौ नियन्तुं शक्यन्ते कारणाभावात्, विनैव च कारणेन नियमेऽभ्युपगम्यमाने कारणाभावसामान्यात् मुक्तानामपि पुनर्बन्धप्रसङ्गः। अथ केचिद्भेदा अपीतावविभागमापद्यन्ते केचिन्नेति चेत्, ये नापद्यन्ते तेषां प्रधानकार्यत्वं न प्राप्नोतीत्येवमेते दोषाः साधारणत्वान्नान्यतरस्मिन् पक्षे चोदयितव्या भवन्तीत्यदोषतामेवैषां द्रढयति अवश्याश्रयितव्यत्वात्॥

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

इतश्च नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यं, यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिताः सम्भवन्त्युत्प्रेक्षाया निरङ्कुशत्वात्। तथा हि कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते, तैरप्युत्प्रेक्षितास्तदन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां

---

णदोषचतुष्टयमाह। तथापीताविति। कार्यवत्प्रधानस्य रूपादिमत्त्वप्रसङ्ग। इदं कर्मादिकमस्योपादानं भोग्यमस्य नेत्यनियमः। बद्धमुक्तव्यवस्था च यदि व्यवस्थार्थं मुक्तानां भेदाः सत्त्वविशेषाः प्रधाने लीयन्ते बद्धानां भेदास्तु न लीयन्त इत्युच्येत तर्हि यलीनानां पुरुषवत् कार्यत्वव्याघात इत्यर्थः।

किञ्च तर्कस्य सम्भावितदोषत्वात्तेन निर्दोषपदार्थसमन्वयो न बाध्य इत्याह। तर्काप्रतिष्ठानादपीति। पुरुषमतीनां विचित्रत्वेऽपि

शक्यं समाश्रयितुं *पुरुषमतिवैरूप्यात्। अथ कस्यचित् प्रसिद्ध-
माहात्म्यस्य कपिलस्यान्यस्य वा सम्मतस्तर्कः प्रतिष्ठित इत्या-
श्रीयेत, एवमपि अप्रतिष्ठितत्वमेव, प्रसिद्धमाहात्म्याभिम-
तानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्पर-
विप्रतिपत्तिदर्शनात्। अथोच्येतान्यथा वयमनुमास्यामहे यथा
नाप्रतिष्ठादोषो भविष्यति, न हि प्रतिष्ठितस्तर्क एव ना-
स्तीति शक्यते वक्तुं, एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्के-
णैव प्रतिष्ठाप्यते। केषाञ्चित् तर्काणामप्रतिष्ठितत्वदर्शनेनान्ये-
षामपि तज्जातीयकानां तर्काणामप्रतिष्ठितत्वकल्पनात्। सर्व-
तर्काप्रतिष्ठायाञ्च सर्वलोकव्यवहारोच्छेदप्रसङ्गः। अतीतव-
र्तमानाध्वसाम्येन ह्यनागतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय
प्रवर्तमानो लोको दृश्यते। श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिरा-

---

कपिलस्य सर्वज्ञत्वात् तदीयतर्केऽविश्वास इति शङ्कते। अथेति।
कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा इति न्यायेन परिहरति।
एवमपीति। सूत्रमध्यस्थशङ्काभागं व्याचष्टे। अथोच्येतेति। विल-
क्षणत्वादितर्काणामप्रतिष्ठितत्वेऽपि व्याप्तिपक्षधर्मतासंपन्नः कश्चित् तर्कः
प्रतिष्ठितो भविष्यति तेन प्रधानमनुमेयमित्यर्थः। ननु सोऽप्य-
प्रतिष्ठितः तर्कजातीयत्वात् विलक्षणत्वादिवदित्यत आह। न हीति।
तर्कजातीयत्वादिति तर्कः प्रतिष्ठितो न वा, आद्येऽनेनैवाप्रतिष्ठितत्वसा-
ध्याभावाद्व्यभिचारः, द्वितीयेऽपि न सर्वतर्काणामप्रतिष्ठितत्वं हेत्व-
भावादित्यभिसन्धिमानाह। एतदपीति। किञ्चानागतपाक इष्टसाधनं
पाकत्वादतीतपाकवदित्यादीष्टानिष्टसाधनानुमानात्मकतर्कस्य प्रवृत्ति-
निवृत्तिव्यवहारहेतुत्वान्नाप्रतिष्ठेत्याह। सर्वतर्केति। अध्वा विषयः

---

* पुरुषमतिवैरूप्यादिति का० वर्ध० सो०।

करणेन सम्यगर्थनिर्द्धारणं तर्केणैव वाक्यवृत्तिनिरूपणरूपेण क्रियते। मनुरपि चैवमेव मन्यते-

"प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमं।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता" ॥ इति
"आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ॥ इति च-

ब्रुवन्। अयमेव च तर्कस्यालङ्कारो यदप्रतिष्ठितत्वं नाम, एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति। न हि पूर्वजो मूढ आसीदित्यात्मनापि मूढेन भवितव्यं इति किञ्चिदस्ति प्रमाणं, तस्मान्न तर्काप्रतिष्ठानं दोष इति चेदेवमप्यविमोक्षप्रसङ्गः। यद्यपि क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते तथापि प्रकृते तावद्विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य, न हीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनमागममन्तरेणोत्प्रेक्षितुमपि शक्यं, रूपाद्यभावाद्धि नायमर्थः प्रत्य-

---

पाकभोजनादिर्विषभक्षणादिष्व तत्सामान्येन पाकत्वादिना नागतविषये पाकादौ सुखदुःखहेतुत्वानुमित्या प्रवृत्यादिरित्यर्थः। किञ्च पूर्वोत्तरमीमांसयोस्तर्केणैव वाक्यतात्पर्यनिर्णयस्य क्रियमाणत्वात् तर्कः प्रतिष्ठित इत्याह। श्रुत्यर्थेति। मनुरपि केषाञ्चित् तर्काणां प्रतिष्ठां मन्यत इत्याह। मनुरिति। धर्मस्य शुद्धिरधर्माद्भेदनिर्णयः। कस्यचित् तर्कस्याप्रतिष्ठितत्वमङ्गीकरोति। अयमेवेति। सर्वतर्काणां प्रतिष्ठायां पूर्वपक्ष एव न स्यादिति भावः। पूर्वपक्षतर्कवत् सिद्धान्ततर्कोऽप्यप्रतिष्ठितः तर्कत्वाविशेषादिति वदन्तं उपहसति। न हीति। क्वचित् तर्कस्य प्रतिष्ठायामपि जगत्कारणविशेषे तर्कस्य स्वातन्त्र्यं ना-

चस्य गोचरो लिङ्गाद्यभावाच्च नानुमानादीनामित्यवोचाम*। अपि च अम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः, तच्च सम्यक् ज्ञानमेकरूपं वस्तुतन्त्रत्वात्, एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः लोके तद्विषयं ज्ञानं सम्यक् ज्ञानमित्युच्यते यथाऽग्निरुष्ण इति, तत्रैवं सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना, तर्कज्ञानानान्तु अन्योन्यविरोधात् प्रसिद्धा विप्रतिपत्तिः, यद्धि केनचित्तार्किकेणेदमेव सम्यक् ज्ञानमिति प्रतिष्ठापितं तदपरेण व्युत्थाप्यते, तेनापि प्रतिष्ठापितं ततोऽपरेण व्युत्थाप्यत इति च प्रसिद्धं लोके, कथमेकरूपानवस्थितविषयं तर्कप्रभवं सम्यक् ज्ञानं भवेत्। न च प्रधानवादी तर्कविदामुत्तम इति सर्वैस्तार्किकैः परिगृहीतः, येन तदीयं मतं सम्यक् ज्ञानमिति प्रतिपद्येमहि। न च श-

---

स्तीति सूत्रशेषं व्याचष्टे। यद्यपीत्यादिना। अतिगम्भीरत्वं ब्रह्मणो वेदान्यमानागम्यत्वं। भावस्य जगत्कारणस्य, याथात्म्यमद्वयत्वं, मुक्तिनिबन्धनं मुक्त्यालम्बनं। परमानन्दविषयं दर्शयति। रूपादीति। अविमोक्षो मुक्त्यभाव इत्यर्थान्तरमाह। अपि चेत्यादिना। एकरूपवस्तुज्ञानस्य सम्यग्ज्ञानत्वेऽपि तर्कजन्यत्वं किं न स्यादित्यत आह। तत्रैवं सतीति। तर्कज्ञानानां मिथो विप्रतिपत्तेर्न सम्यग्ज्ञानत्वं सम्यग्ज्ञाने विप्रतिपत्त्ययोगादित्यर्थः। एकरूपेणानवस्थितो विषयो यस्य तत् तर्कप्रभवं, कथं सम्यक् ज्ञानं भवेदिति योजना। ननु सांख्यस्य श्रेष्ठत्वात् तज्ज्ञानं सम्यगित्याशङ्क्य हेत्वसिद्धिमाह। न च प्रधानेति। ननु सर्वतार्किकैर्मिलित्वा निश्चितं तर्कात्या मतिर्मुक्तिहेतुरित्यत आह। न च शक्यन्त इति। तस्मात् तर्कोत्थज्ञानान्मुक्त्ययोगात् तर्कस्य वेदान्त-

---

* इति यावोचामेति का० मो० वर्ध०।

क्यन्ते अतीतानागतवर्त्तमानास्तार्किका एकस्मिन् देशे काले च समाहर्त्तुं, येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात्, वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेः, तज्जनितस्य ज्ञानस्य सम्यक्त्वम्-अतीतानागतवर्तमानैः सर्वैरपि तार्किकैः अपह्नोतुमशक्यं, अतः सिद्धमस्यैवौपनिषदस्य ज्ञानस्य सम्यग्ज्ञानत्वं, अतोऽन्यत्र सम्यग्ज्ञानत्वानुपपत्तेः संसाराविमोक्ष एव प्रसज्येत, अत आगमवशेनागमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितं ॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

वैदिकस्य *दर्शनस्य प्रत्यासन्नत्वात् गुरुतरतर्कबलोपेतत्वात् वेदानुसारिभिश्च कैश्चिच्छिष्टैः केनचिदंशेन परिगृहीतत्वात् प्रधानकारणवादं तावद्व्यपाश्रित्य यस्तर्कनिमित्त आक्षे-

---

समन्वयबाधो न युक्तस्तद्बाधे सम्यग्ज्ञानालाभेनानिर्मोक्षप्रसङ्गादिति सूत्रभाष्यार्थमुपसंहरति । अतोऽन्यत्रेति । समन्वयस्य तर्काविरोधे फलितमधिकरणार्थमुपसंहरति । अत आगमेति ।

ब्रह्म जगदुपादानमिति ब्रुवन् वेदान्तसमन्वयो विषयः स किं यदिभु तन्न द्रव्योपादानमिति वैशेषिकादिन्यायेन विरुध्यते न वेति सन्देहे सांख्यबाधानां †तर्ककुशलमतित्वेऽपि वैशेषिकादीनां ‡तर्कमतिकुशलत्वप्रसिद्धेस्तदीयन्यायस्य अबाधितत्वाद्विरुध्यत इति प्रत्युदाहरणेन प्राप्तेऽतिदिशति । एतेनेति । फलं पूर्ववत् । ननु सांख्यमतस्योपदेशस्तार्किकमतस्यातिदेशः किमिति । कृतो वैपरीत्यस्यापि

---

* सम्यग्दर्शनस्येति वर्ध० ।

† तर्कामतित्वेऽपि इति सो० १ टी० ।

‡ तर्कमतित्वप्रसिद्धेरिति सो० १ टी० ।

यो वेदान्तवाक्येषूद्भावितः स परिहृतः; इदानीमण्वादिवादव्यपाश्रयेणापि कैश्चिन्मन्दमतिभिर्वेदान्तवाक्येषु पुनस्तर्कनिमित्त आक्षेप आशङ्क्यते इत्यतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति, परिगृह्यन्त इति परिग्रहाः न परिग्रहा अपरिग्रहाः शिष्टानामपरिग्रहाः शिष्टापरिग्रहाः, एतेन प्रकृतेन प्रधानकारणवादनिराकरणकारणेन शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदप्यंशेनापरिगृहीता येऽण्वादिकारणवादास्तेऽपि प्रतिषिद्धतया व्याख्याता निराकृता वेदितव्याः, तुल्यत्वात् निराकरणकारणस्य नात्र पुनराशङ्कितव्यं किञ्चिदस्ति। तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं तर्कस्य चाप्रतिष्ठितत्वमन्यथानुमानेऽप्यविमोक्ष आगमविरोधश्चेत्येवंजातीयकं निराकरणकारणं ॥

---

सम्भवादित्याशङ्क्य पूर्वोत्तरयोरुपदेशातिदेशभावे कारणमाह। वैदिकस्येति। सत्कार्यत्वात्मासङ्गत्वस्वप्रकाशत्वाद्यंशैर्वेदान्तशास्त्रस्य प्रत्यासन्नः प्रधानवादः शिष्टैर्देवलादिभिः सत्कार्यत्वांशेन स्वीकृत इति प्रबलत्वादुपदेशः। अण्वादिवादानां निर्मूलत्वेन दुर्बलत्वादतिदेश इति भावः। किं निराकरणकारणमिति प्रष्टव्यं नास्तीत्याह। तुल्यत्वादिति। कारणमेवाह। तुल्यमिति। यदुक्तं विभुत्वान्न द्रव्योपादानं ब्रह्मेति तन्न पक्षसाधकत्वेन श्रुतेरुपजीव्यत्वात् तया बाधः। महापरिमाणवत्त्वस्य सर्वसंयोगित्वरूपविभुत्वस्य निर्गुणे ब्रह्मण्यसिद्धेश्चेति द्रष्टव्यं, अतः समन्वयस्य तार्किकन्यायेन न विरोध इति सिद्धं। अद्वितीयात् ब्रह्मणो जगत्सर्गादिवादी वेदान्तसमन्वयो विषयः, स किं यन्मिथोऽभिन्नं तन्नाद्वितीयकारणाभिन्नं यथा मृत्तन्तुजौ घटपटाविति तर्कसहितभेदप्रत्यक्षादिना विरुध्यते न वेति सन्देहे ब्रह्मणि तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे प्रतिष्ठितत्वाद्विरुध्यत इति पूर्वपक्षयति।

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

अन्यथा पुनर्ब्रह्मकारणवादस्तर्कबलेनैवाक्षिप्यते। यद्यपि श्रुतिः प्रमाणं स्वविषये भवति, तथापि प्रमाणान्तरेण विषयापहारेऽन्यपरा भवितुमर्हति, यथा मन्त्रार्थवादौ, तर्कोऽपि हि स्वविषयादन्यत्राप्रतिष्ठितः स्यात् यथा धर्माधर्मयोः। किमतो यद्येवं अत इदमयुक्तं यत्प्रमाणान्तरप्रसिद्धार्थबाधनं श्रुतेः, कथं पुनः प्रमाणान्तरप्रसिद्धोऽर्थः श्रुत्या बाध्यत इति, अत्रोच्यते, प्रसिद्धो ह्ययं भोक्तृभोग्यविभागः, लोके भोक्ता च चेतनः शारीरः, भोग्याः शब्दादयो विषया इति। यथा भोक्ता देवदत्तः भोग्य ओदन इति, तस्य च विभागस्याभावः प्रसज्येत, यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावं

---

भोक्त्रापत्तेरिति। विरोधादद्वैतासिद्धिः पूर्वपक्षफलं सिद्धान्ते तत्सिद्धिरिति भेदः। अनपेक्षत्वेन श्रुत्या स्वार्थनिर्णयात् तर्कणाक्षेपो न युक्त इत्युक्तमिति शङ्कते। यद्यपीति। मानान्तरायोग्यश्रुत्यर्थे भवत्यनाक्षेपः। यस्त्वद्वितीयब्रह्माभेदाद्भूजलादीनामभेदो ब्रह्मोपादानकत्वश्रुतिविषयः स चादित्यो यूप इत्यर्थवादार्थवन्मानान्तरयोग्य एवेति द्वैतप्रमाणैरपक्रियत इति समाधत्ते। तथापीति। अन्यपरत्वं गौणार्थकत्वं। स्वविषये जगद्भेदे तर्कस्य प्रतिष्ठितत्वाच्चेनाक्षेप इत्याह। तर्कोऽपीति। तर्काद्द्वैते प्रामाण्येऽपि ततः समन्वयविरोधे किमायातमिति शङ्कते। किमत इति। पूर्वपक्षी समाधत्ते। अत इति। तर्कादेः प्रामाण्यात् द्वैतबाधकत्वं श्रुतेरयुक्तमित्यद्वैतसमन्वयबाधो युक्त इत्यर्थः। इममर्थं शङ्कापूर्वकं स्पष्टयति, कथमित्यादिना। ननु भोक्तृभोग्ययोर्मिथ एकत्वं केनोक्तमित्याशङ्क्य श्रुतार्थापत्त्येत्याह। तयोश्चेति।

आपद्येत, तयोश्चेतरेतरभावापत्तिः परमकारणात् ब्रह्मणोऽनन्यत्वात् प्रसज्येत, न चास्य प्रसिद्धस्य विभागस्य बाधनं युक्तं। यथा त्वद्यत्वे भोक्तृभोग्ययोर्विभागो दृष्टः तथातीतानागतयोरपि कल्पयितव्यः, तस्मात् प्रसिद्धस्यास्य भोक्तृभोग्यविभागस्याभावप्रसङ्गात् अयुक्तमिदं ब्रह्मकारणतावधारणमिति चेत् कश्चिच्चोदयेत् तं प्रति ब्रूयात् स्याल्लोकवदिति, उपपद्यत एवायमस्मत्पक्षेऽपि विभागः, एवं लोके दृष्टत्वात्। तथा हि समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेणवीचीतरङ्गबुद्बुदादीनां इतरेतरविभाग इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते। न च समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेणतरङ्गादीनां इतरेतरभावापत्तिर्भवति, न चैतेषामितरेतरभावानुपपत्तावपि *समुद्रात्मनोऽनन्यत्वं भवति,

तयोरेकब्रह्माभेदश्रवणादेकत्वं कल्प्यते एकस्मादभिन्नयोर्भेदे एकस्यापि भेदापत्तेः ततश्च भेदो बाध्येतेत्यर्थः। इष्टापत्तिं वारयति। न चास्येति। श्रुतेर्गौणार्थत्वेन सावकाशत्वान्निरवकाशद्वैतमानबाधो न युक्त इत्यर्थः। ननु विभागस्याधुनिकत्वादनाद्यद्वैतश्रुत्या बाध इत्यत आह। यथेति। अतीतानागतकालौ भोक्त्रादिविभागाश्रयौ कालत्वाद्वर्तमानकालवदित्यनुमानाद्विभागोऽनाद्यनन्त इत्यर्थः। एवं प्राप्ते परिणामदृष्टान्तेनापातत सिद्धान्तमाह। स्याल्लोकवदिति। दृष्टान्तेऽपि कथमेकसमुद्राभिन्नानां परिणामानां मिथो भेदः कथं वा तेषां भेदे सत्येकस्मादभिन्नत्वमित्याशङ्क्य न हि दृष्टेऽनुपपत्तिरिति न्यायेनाह। न चेति। एवं भोक्तृभोग्ययोर्मिथो भेदो ब्रह्माभेदश्चेत्याह। एवमिहेति। जीवस्य ब्रह्मविकारत्वाभावात् दृष्टान्तवैष-

* समुद्रात्मनोऽनन्यत्वमिति भा० का० वर्ध०।

एवमिहापि, न च भोक्तृभोग्ययोरितरेतरभावापत्तिः, न च परस्माद्ब्रह्मणोऽन्यत्वमिति भविष्यति। यद्यपि भोक्ता न ब्रह्मणो विकारः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशेन भोक्तृत्वश्रवणात्, तथापि कार्यमनुप्रविष्टस्यास्ति कार्योपाधिनिमित्तो विभागः आकाशस्येव घटाद्युपाधिनिमित्तः, इत्यतः परमकारणात् ब्रह्मणोऽनन्यत्वेऽप्युपपन्नो भोक्तृभोग्यलक्षणो विभागः समुद्रतरङ्गादिन्यायेनेत्युक्तं॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः॥ १४॥

अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितो न त्वयं विभागः परमार्थतोऽस्ति यस्मात् तयोः कार्यकारणयोरनन्यत्वमवगम्यते। कार्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः का-

---

म्यमिति शङ्कते। यद्यपीति। औपाधिकं जन्मास्तीति तरङ्गादिसाम्यमाह। तथापीति। विभागो जन्म, यद्वा तथापीतिशब्देनैवोक्तः परिहारः। ननु भोक्तुः प्रतिदेहं विभागः कथमित्यत आह। कार्यमनुप्रविष्टस्येति। औपाधिकविभागे फलितमुपसंहरति। इत्यत इति। एकब्रह्माभिन्नत्वेऽपि भोक्त्रादेस्तरङ्गादिवद्भेदाङ्गीकारान्न द्वैतमानेनाद्वैतसमन्वयस्य विरोध इत्यर्थः॥

पूर्वस्मिन्नेव पूर्वपक्षे विवर्तवादेन मुख्यं समाधानमाह। तदनन्यत्वमिति। समानविषयत्वं सङ्गतिं वदन्नुभयोः परिहारयोः परिणामविवर्ताश्रयत्वेनार्थभेदमाह। अभ्युपगम्येति। प्रत्यक्षादीनामौत्सर्गिकप्रामाण्यमङ्गीकृत्य स्थूलबुद्धिसमाधानार्थं परिणामदृष्टान्तेन भे-

र्यस्यावगम्यते, कुतः आरम्भणशब्दादिभ्यः। आरम्भणशब्दस्ताव-देकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते "यथा सोम्यैकेन मृत्पिण्डेन *विज्ञातेन सर्वं मृण्मयं विज्ञातं स्या-द्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इति। एत-दुक्तं भवति एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घटशरावोदञ्चनादिकं मृदात्मत्वाविशेषाद्विज्ञातं भवेत्, यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्ती-त्यारभ्यते विकारो घटः शराव उदञ्चनञ्चेति न तु वस्तु-वृत्तेन विकारो नाम कश्चिदस्ति, नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यमिति। एष ब्रह्मणो दृष्टान्त आम्नातः, तत्र श्रुतादाचारम्भणशब्दात् दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण का-र्यजातस्याभाव इति गम्यते। पुनश्च तेजोऽवन्नानां ब्रह्मकार्य-तामुक्त्वा तेजोऽवन्नकार्याणां तेजोऽवन्नव्यतिरेकेणाभावं ब्रवीति

---

दाभेदावुक्तौ संप्रत्यङ्गीकृतं प्रामाण्यं तत्त्वावेदकत्वात् प्रच्याव्य व्याव-हारिकत्वे स्थाप्यते, तथा च मिथ्याद्वैतग्राहिप्रमाणैरद्वैतश्रुतेर्न बाधः, एकस्या रज्ज्वा दण्डस्रगादिद्वैतदर्शनादित्ययं मुख्यः परिहार इति भाव, एवमद्वैतसमन्वयस्याविरोधार्थं द्वैतस्य मिथ्यात्व साधयति। यस्मात् तयोरिति। स्वरूपैक्ये कार्यकारणत्वव्याघात इत्यत आह। व्यतिरेकेणेति। कारणात् पृथक् सत्त्वशून्यत्वं कार्यस्य साध्यते नैक्य-मित्यर्थः। वागारभ्यं नाममात्रं विकारो न कारणात् पृथक् वस्ती-त्येवकारार्थ इति श्रुतिं योजयति। एतदुक्तमिति। आरम्भण-शब्दार्थान्तरमाह। पुनश्चेति। अपागात् अग्नित्वमपगतं कारणमा-

---

* विज्ञातेनेति सर्वं० का० पु० नास्ति।

"अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं" इत्यादिना। आरम्भणशब्दादिभ्य इत्यादिशब्दात् "ऐतदात्म्यमिदं सर्वं" "तत्सत्यं स आत्मा" "तत्त्वमसि" "इदं सर्वं यदयमात्मा" "ब्रह्मैवेदं सर्वं" "आत्मैवेदं सर्वं" "नेह नानास्ति किञ्चन" इत्येवमाद्यप्यात्मैकत्वप्रतिपादनपरं वचनजातमुदाहर्तव्यं। न चान्यथा एकविज्ञानेन सर्वविज्ञानं सम्पद्यते, तस्माद्यथा घटकरकाद्याकाशानां महाकाशादनन्यत्वं, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात् स्वरूपेण त्वनुपाख्यत्वात् एवमस्य *भोग्यभोक्तृत्वादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यं। नन्वनेकात्मकं ब्रह्म यथा वृक्षोऽनेकशाखः एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म, अत एकत्वं नानात्वञ्चोभयमपि सत्यमेव, यथा वृक्ष इत्येकत्वं शाखा इति च नानात्वं, यथा च समुद्रात्मनैकत्वं फेणतरङ्गाद्यात्मना नानात्वं,

---

त्वात्, त्रीणि तेजोऽबन्नानां रूपाणि रूपतन्मात्रात्मकानि सत्यं, तेषामपि सन्मात्रत्वात् सदेव शिष्यत इत्यभिप्रायः। जीवजगतोर्ब्रह्मान्यत्वे प्रतिज्ञाबाध इत्याह। न चान्यथेति। तयोरनन्यत्वे क्रमेण दृष्टान्तावाह। तस्माद्यथेति। प्रतिज्ञाबलादित्यर्थः। दृष्टं प्रातीतिकं नष्टमनित्यं यत्स्वरूपं तद्रूपेणानुपाख्यत्वात् सत्तास्फूर्तिशून्यत्वादनन्यत्वमिति सम्बन्धः। शुद्धाद्वैतं स्वमतमुक्त्वा भेदाभेदमतमुत्थापयति। नन्विति। अनेकाभिः शक्तिभिः तदधीनप्रवृत्तिभिः परियुक्तमित्यर्थः। भेदाभेदमते सर्वव्यवस्थासिद्धिरत्यन्ताभेदे द्वैतमानबाध इत्यभिमन्यमानो दूषयति। नैवं स्यादिति। एवकारवाचारम्भणशब्दाभ्यां विकारसत्तानिषेधात् परिणामवादः श्रुतिबाह्य

---

* भोग्यभोक्त्रादि इति का० वर्ध० सो०।

यथा च मृदात्मना एकत्वं घटशरावाद्यात्मना नानात्वं, तत्र एकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति, एवं च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति। नैवं स्यात्मृत्तिकेत्येव सत्यमिति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात्, वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्, दार्ष्टान्तिकेऽपि "ऐतदात्म्यमिदं सर्वं" "तत्सत्यं" इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात्, "स आत्मा तत्त्वमसि श्वेतकेतो" इति च शारीरस्य ब्रह्मभावोपदेशात्। स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते न यत्नान्तरप्रसाध्यं, अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमभ्युपगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं सम्पद्यते रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनां। बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति,

---

इत्यर्थः। किञ्च संसारस्य सत्यत्वे तद्विशिष्टस्य जीवस्य ब्रह्मैक्योपदेशो न स्याद्विरोधादित्याह। स चात्मेति। एकत्वं ज्ञानकर्मसमुच्चयसाध्यमित्युपदेशार्थमित्याशङ्क्यासीतिपदविरोधान्नैवमित्याह। स्वयमिति। अतस्तत्त्वज्ञानबाध्यत्वात् संसारित्वं मिथ्येत्याह। अतश्चेति, स्वतः सिद्धोपदेशादित्यर्थः। यदुक्तं व्यवहारार्थं नानात्वं सत्यमिति, तत् किं ज्ञानादूर्द्ध्वं व्यवहारार्थं प्राग्वा नाद्य इत्याह। बाधिते चेति। स्वभावोऽनाविद्या तया कृतः स्वाभाविकः, ज्ञानादूर्द्ध्वं प्रमातृत्वादिव्यवहारस्याभावान्नानात्वं न कल्प्यमित्यर्थः। न द्वितीयः ज्ञानात् प्राक् कल्पितनानात्वेन व्यवहारोपपत्तौ नानात्वस्य सत्यत्वासिद्धेः। यत्तु प्रमातृत्वादिव्यवहारः सत्य एव मोक्षावस्थायां निवर्तत

यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत। दर्शयति च "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभाव। न चायं व्यवहाराभावोऽवस्थाविशेषनिबद्धोऽभिधीयत इति युक्तं वक्तुं, तत्त्वमसीति ब्रह्मात्मभावस्यानवस्थाविशेषनिबन्धनत्वात्। तस्करदृष्टान्तेन चानृताभिसन्धस्य बन्धनं सत्याभिसन्धस्य मोक्ष दर्शयन्नेकत्वमेवैकं पारमार्थिकं दर्शयति, मिथ्याज्ञानविजृम्भितञ्च नानात्वं। उभयसत्यतायां हि कथं व्यवहारगोचरोऽपि जन्तुरनृताभिसन्ध इत्युच्यते, "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति च भेददृष्टिमपवदन्नेतदेव दर्शयति। न चास्मिन् दर्शने ज्ञानान्मोक्ष इत्युपपद्यते। सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात्। उभयस्य सत्यतायां हि कथमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्यते। नन्वेकत्वैकान्ताभ्युपगमे नानात्वा-

---

इति तन्नेत्याह। न चायमिति। संसारसत्यत्वे तदवस्थाया जीवस्य ब्रह्मत्वं न स्यात्, भेदाभेदयोरेकदैकत्र विरोधादतोऽसंसारिब्रह्माभेदस्य सदातनत्वावगमात् संसारोऽपि मिथ्यैवेत्यर्थः। किञ्च यथा लोके कश्चित् तस्करबुद्ध्या भटैर्गृहीतोऽनृतवादी चेत्तप्तपरशुं गृह्णाति स दह्यते बध्यते च, तथा नानात्ववादी दह्यते, सत्यवादी चेन्न दह्यते मुच्यते च। तथैतदात्म्यमिदं सर्वमित्येकत्वदर्शी मुच्यत इति श्रुतदृष्टान्तेनैकत्वं सत्यं नानात्वं मिथ्येत्याह। तस्करेति। व्यवहारगोचरो नानात्वव्यवहाराश्रय। नानात्वनिन्दयाप्येकत्वमेव सत्यमित्याह। मृत्योरिति। किञ्चास्मिन् भेदाभेदमते जीवस्य ब्रह्माभेदज्ञानाद्भेदज्ञान-

भावात् प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन्, निर्विषयत्वात् स्थाण्वादिष्विव पुरुषादिज्ञानानि। तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात् तदभावे व्याहन्येत। मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात् तदभावे व्याघातः स्यात्, कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येत इति, अत्रोच्यते, नैष दोषः सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः, स्वप्नव्यवहारस्येव प्राक् बोधात्। यावद्धि न सत्यात्मैकत्वप्रतिपत्तिस्तावत् प्रमाणप्रमेयफललक्षणेषु *व्यवहारेष्वनृतबुद्धिर्न कस्यचिदुत्पद्यते, विकारानेव त्वहं ममेत्यविद्यया आत्मात्मीयभावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा, तस्मात् प्राग्ब्रह्मात्मताप्रबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः।

---

निवृत्तिर्मुक्तिरिष्टा सा न युक्ता भेदज्ञानस्य भ्रमत्वानभ्युपगमात्। प्रमायाः प्रमान्तराबाध्यत्वादित्याह। न चास्मिन्निति। वैपरीत्यस्यापि सम्भवादिति भावः। इदानीं प्रत्यक्षादिप्रामाण्यान्यथानुपपत्त्या नानात्वस्य सत्यत्वमिति पूर्वपक्षबीजमुद्घाटयति। नन्वित्यादिना। एकत्वस्यैकान्तः कैवल्यं व्याहन्येरन्नप्रमाणानि स्युः। उपजीव्यप्रत्यक्षादिप्रामाण्याय वेदान्ताना भेदपरत्वमुचितमिति भावः। ननु कर्मकारकाणां यजमानादीनां विद्याकारकाणां शिष्यादीनाञ्च कल्पितभेदमाश्रित्य कर्मज्ञानकाण्डयोः प्रवृत्तेः स्वप्रमेयस्य धर्मादेरबाधात् प्रामाण्यमव्याहतमित्याशङ्क्याह। कथञ्चानृतेनेति। धूलिकल्पितधूमेनानुमितस्य वह्नेरिव प्रमेयबाधापत्तेरिति भावः। तत्र द्वैतविषये प्रत्यक्षादीनां

---

* विकारेष्विति मो० सर्व०।

यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्ने उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक् प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति तद्वत्। कथं त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत, न हि रज्जुसर्पेण दष्टो म्रियते, नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इति। नैष दोषः, शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः। स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात्। तत्कार्यमप्यनृतमेवेति चेत् ब्रूयात् तत्र ब्रूमः। यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतं तथापि तदवगतिः सत्यमेव फलं प्रतिबुद्धस्याप्यबाध्यमानत्वात्। न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्य-

---

यावद्बाधं व्यावहारिकं प्रामाण्यमुपपद्यत इत्याह। अत्रोच्यत इत्यादिना। सत्यत्वं बाधाभावः बाधो मिथ्यात्वनिश्चयः वस्तुतो मिथ्यात्वेऽपि विकारेषु तन्निश्चयाभावेन प्रत्यक्षादिव्यवहारोपपत्तावुक्तदृष्टान्तं विवृणोति। यथा सुषुप्तस्य प्राकृतस्येति। एवं द्वैतप्रमाणानां व्यवहारकाले बाधशून्यार्थबोधकत्वं व्यावहारिकं प्रामाण्यमुपपाद्याद्वैतप्रमाणानां वेदान्तानां सर्वकालेषु बाधशून्यब्रह्मबोधकत्वं तात्त्विकं प्रामाण्यमुपपादयितुं उक्तशङ्कामनुवदति। कथन्त्वसत्येनेति। किमसत्यात् सत्यं न जायते किमुत सत्यस्य ज्ञानं नाद्य इष्ट एव, न हि वयं वाक्योत्थज्ञानं सत्यमित्यङ्गीकुर्मः। अङ्गीकृत्यापि दृष्टान्तमाह। नैष दोष इति। सर्पेण दष्टस्यापि दष्टत्वभ्रान्तिकल्पितविषात् सत्यमरणमूर्च्छादिदर्शनादसत्यात् सत्यं न जायत इत्यनियम इत्यर्थः। दृष्टान्तान्तरमाह। स्वप्नेति। असत्यात् सर्पोदकादेः सत्यस्य दंशनस्ना-

मानसदवगतिमपि मिथ्येति मन्यते कश्चित्। एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः।
तथा च श्रुतिः-

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने"॥ इति-

असत्येन स्वप्नदर्शनेन सत्यस्य फलस्य समृद्धेः प्राप्तिं दर्शयति। तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु न चिरमिव जीविष्यतीति विद्यादित्युक्त्वा अथ यः स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादिना तेनासत्येनैव स्वप्नदर्शनेन

---

नादिज्ञानस्य कार्यस्य दर्शनाद्व्यभिचार इत्यर्थः। यथाश्रुतमादाय शङ्कते। तत्कार्यमपीति। उक्तमर्थं प्रकटयति। अत्र ब्रूम इत्यादिना। अवगतिवृत्तिः घटादिवत् सत्यापि प्रातिभासिकस्वप्नदृष्टवस्तुनः फलं चैतन्यं वा वृत्त्यभिव्यक्तमवगतिशब्दार्थः। प्रसङ्गाद्देहात्मवादोऽपि निरस्त इत्याह। एतेनेति। स्वप्नस्यावगतेः स्वप्नदेहधर्मत्वे उत्थितस्य मया तादृशः स्वप्नोऽवगत इत्यबाधितावगतिप्रतिसन्धानं न स्यात्, अतो देहभेदेऽपि अनुसन्धानदर्शनाद्देहादन्योऽनुसन्धातेत्यर्थः। असत्यात् सत्यस्य ज्ञानं न जायत इति द्वितीयनियमस्य श्रुत्या व्यभिचारमाह। तथा च श्रुतिरिति। न च स्त्रियो मिथ्यात्वेऽपि तद्दर्शनात् सत्यादेव सत्याया· समृद्धेर्ज्ञानमिति वाच्यं, विषयविशिष्टत्वेन दर्शनस्यापि मिथ्यात्वात् प्रकृतेऽपि सत्ये ब्रह्मणि मिथ्यावेदानुगतचैतन्यज्ञानसम्भवाच्चेति भाव। असत्यात् सत्यस्येष्टस्य ज्ञानमुक्त्वानिष्टस्य ज्ञानमाह। तथेति। असत्यात् सत्यस्य ज्ञाने दृष्टान्तान्तरमाह। तथाऽकारादिति। रेखास्वकारत्वादिभ्रान्त्या सत्या अकारादयो ज्ञायन्त इति प्रसिद्धमित्यर्थः। एवमसत्यात् सत्यस्य जन्मोक्त्वा यदर्थक्रियाकारि तत्सत्यमिति नियमो भग्न· अनृतात् सत्यस्य ज्ञानोत्पत्त्या यद-

सत्यं मरणं सूच्यत इति दर्शयति। प्रसिद्धञ्चेदं लोकेऽन्वयव्यतिरेककुशलानां ईदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यते ईदृशेनासाध्वागम इति। तथाऽकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः। अपि चान्त्यमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकं नातः परं किञ्चिदाकाङ्क्ष्यमस्ति। यथा हि लोके यजेतेत्युक्ते किं केन कथं इत्याकाङ्क्ष्यते न चैवं तत्त्वमसीत्युक्ते किञ्चिदन्यदाकाङ्क्ष्यमस्ति, सर्वात्मैकत्वविषयत्वादवगतेः। सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थे आकाङ्क्षा स्यात् न त्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति य आकाङ्क्ष्येत। न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुं, "तद्धास्य विजज्ञौ" इत्यादिश्रुतिभ्यः, अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनाञ्च विधीयमानत्वात्। न चेयमवगतिरनर्थिका भ्रान्तिर्वेति शक्यं वक्तुं,

---

न्तत्वकरणगम्यत्तद्धार्थं कूटलिङ्गानुमितवह्निवदिति व्याप्तिर्भ्रमा। तथा च कल्पितानामपि वेदान्तानां सत्यब्रह्मबोधकत्वं सम्भवतीति तात्त्विकं प्रामाण्यमिति भावः। यदुक्तं एकत्वनानात्वव्यवहारसिद्धये उभयं सत्यमिति, तन्न भेदस्य लोकसिद्धस्यापूर्वफलवदभेदविरोधेन सत्यत्वकल्पनायोगात्। किञ्च यद्युभयोरेकदा व्यवहारः स्यात् तदा स्यादपि सत्यत्वं। नैवमस्ति एकत्वज्ञानेन चरमेणानपेक्षेण नानात्वस्य निःशेषं बाधात् शुक्तिज्ञानेनेव रजतस्येत्याह। अपि चान्त्यमिति। ननूपजीव्यद्वैतप्रमाणविरोधादेकत्वावगतिर्नोत्पद्यत इत्यत आह। न चेयमिति। तत् किलात्मतत्त्वमस्य पितुर्वाक्यात् श्वेतकेतुर्विज्ञातवान् इति ज्ञानोत्पत्तेः श्रुतत्वात् सामग्रीसत्त्वाच्चेत्यर्थः। व्यावहारिकगुरुशिष्यादिभेदमुपजीव्य जायमानवाक्यार्थावगतेः प्रत्यक्षादिगतं व्याव-

अविद्यानिवृत्तिफलदर्शनात्, बाधकज्ञानान्तराभावाच्च। प्राक् चात्मैकत्वावगतेरव्याहतः सर्वः *सत्यानृतव्यवहारो लौकिको वैदिकश्चेत्यवोचाम। तस्मादन्येन प्रमाणेन प्रतिपादिते आत्मैकत्वे समस्तस्य प्राचीनभेदव्यवहारस्य बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति। ननु मृदादिदृष्टान्तप्रणयनात् परिणामवत् ब्रह्मशास्त्रस्याभिमतमिति गम्यते, परिणामिनो हि मृदादयोऽर्था लोके समधिगता इति। नेत्युच्यते, "स वा एष महानजः" "आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" "स एष नेति नेत्यात्मा" "अस्थूलमनणु" इत्याद्याभ्यः सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात्। न ह्येकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वञ्च शक्यं प्रतिपत्तुं। स्थितिगतिवत्

---

हारिकप्रामाण्यमुपजीव्यं तच्च पारमार्थिकैकत्वावगत्या न विरुध्यते। किन्तु तया विरोधादनुपजीव्यं प्रत्यक्षादेस्तात्त्विकं प्रामाण्यं बाध्यत इति भावः। किञ्चैकत्वावगतेः फलवत्प्रमात्वान्निष्फलो द्वैतभ्रमो बाध्य इत्याह। न चेयमिति। ननु सर्वस्य द्वैतस्य मिथ्यात्वे स्वप्नो मिथ्या जाग्रत् सत्यमित्यादिलौकिको व्यवहारः सत्यश्चान्तृतश्च सत्यमभवदिति वैदिकश्च कथमित्याशङ्क्य यथा स्वप्ने इदं सत्यमिदमनृतमिति तात्कालिकबाधाबाधाभ्यां व्यवहारस्तथा दीर्घस्वप्नेऽपीत्युक्तस्वप्नदृष्टान्तं स्मारयति। प्राक् चेति। व्यवहारार्थं नानात्वं सत्यमिति कल्पनमसङ्गतमित्युपसंहरति। तस्मादिति। नेदं कल्पितं किन्तु श्रुतमिति शङ्कते। नन्विति। कार्यकारणयोरनन्यत्वांशे चायं दृष्टान्तो न परिणामित्वे ब्रह्मणः कूटस्थत्वश्रुतिविरोधादिति परिहरति। नेत्युच्यत इति। दृष्टौ परिणामित्वं प्रलये तद्राहित्यञ्च क्रमेणाविरुद्धमिति दृष्टान्तेन शङ्कते।

---

* सत्यानृतव्यवहार इति का०।

स्यादिति चेन्न, कूटस्थस्येति विशेषणात्। न हि कूटस्थस्य ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं सम्भवति। कूटस्थं नित्यञ्च ब्रह्म सर्वविक्रियाप्रतिषेधादित्यवोचाम। न च यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनं, एवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित् फलायाभिप्रेयेत, प्रमाणाभावात्। *कूटस्थब्रह्मात्मत्वविज्ञानादेव हि फलं दर्शयति शास्त्रं, "स एष नेति नेत्यात्मा" इत्युपक्रम्य "अभयं वै जनक प्राप्तोऽसि" इत्येवंजातीयकं। तत्रैतत्सिद्धं भवति ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, फलवत् सन्निधावफलं तदङ्गमितिवत्, न तु स्वतन्त्रफलाय कल्प्यते इति। न हि परिणामवत्त्वविज्ञानात् परिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तं,

---

स्थितीति। कूटस्थस्य कदाचिदपि विक्रिया न युक्ता कूटस्थत्वव्याघातादित्याह। नेति। कूटस्थत्वासिद्धिमाशङ्क्याह। कूटस्थस्येति। कूटस्थस्य निरवयवस्य पूर्वरूपत्यागेनावस्थान्तरात्मकपरिणामायोगात् शुक्तिरजतवद्विवर्त्त एव प्रपञ्च इति भावः। किञ्च निष्फलस्य जगतः फलवन्निष्प्रपञ्चब्रह्मधीशेषत्वेनानुवादान्न सत्यतेत्याह। न च यथेत्यादिना। तं यथा यथोपासते तदेव भवतीति श्रुतेः ब्रह्मणः परिणामित्वविज्ञानात् तत्प्राप्तिर्विदुषः फलमित्याशङ्क्याह। न हि परिणामवत्त्वेति। ब्रह्मविदाप्नोति परमिति श्रुतकूटस्थनित्यमोक्षफलसम्भवे दुःखानित्यपरिणामित्वफलकल्पनायोगादिति भावः। ननु पूर्वं जन्मा-

---

* कूटस्थब्रह्मात्मैकत्वज्ञानादिति का॰। कूटस्थब्रह्मात्मज्ञानादिति वर्ध॰।

कूटस्थनित्यत्वान्मोक्षस्य। ननु कूटस्थब्रह्मात्मवादिन एकत्वैकान्त्या-दीशित्रीशितव्याभावे ईश्वरकारणप्रतिज्ञाविरोध इति चेत्, न, अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात् सर्वज्ञत्वस्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात् सर्वज्ञात् सर्वशक्तेरीश्वराज्जगदुत्पत्तिस्थितिलयाः, नाचेतनात् प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातो जन्माद्यस्य यत इति। सा प्रतिज्ञा तदवस्थैव न तद्विरुद्धोऽर्थः पुनरिहोच्यते, कथं नोच्येत अत्यन्तमात्मन एकत्वमद्वितीयत्वञ्च ब्रुवता। शृणु यथा नोच्यते सर्वज्ञस्येश्वरस्य आत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते, ताभ्यामन्यः सर्वज्ञ ईश्वरः, "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतेः। "नामरूपे व्याकरवाणि", "सर्वाणि रूपाणि विचित्य धीरो नामानि

---

द्यस्य यत इति ईश्वरकारणप्रतिज्ञा कृता अधुना तदनन्यत्वमित्यन्ताभेदप्रतिपादने ईशित्रीशितव्यभेदाभावात् तद्विरोधः स्यादिति शङ्कते। कूटस्थेति। कल्पितद्वैतमपेक्ष्येश्वरत्वादिकं परमार्थतोऽनन्यत्वमित्यविरोधमाह। नेत्यादिना। अविद्यात्मके चिदात्मनि लीने नामरूपे एव बीजं तस्य व्याकरणं स्थूलात्मना सृष्टिस्तदपेक्षत्वादीश्वरत्वादेर्न विरोध इत्यर्थः। संगृहीतार्थं विवृणोति। तस्मादित्यादिना। तत्त्वान्यत्वाभ्यामिति नामरूपयोरीश्वरत्वं वक्तुमशक्यं जडत्वान्नापीश्वरादन्यत्वं कल्पितस्य पृथक् सत्तास्फूर्त्योरभावादित्यर्थः। सं-

कृत्वाभिवदन् यदास्ते। एकं बीजं बहुधा यः करोति" इत्यादिश्रुतिभ्यश्च। एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति। व्योमेव घटकरकाद्युपाध्यनुरोधि, स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसङ्घातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये। तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्ष्यमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वञ्च न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूपे आत्मनीशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते। तथा चोक्तं। "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति, "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादि च। एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः, तथेश्वरगीतास्वपि-

"न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥
नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"॥ इति-

---

स्वारात्मकनामरूपयोरविद्यैक्यविवक्षया ब्रूते। मायेति। नामरूपे चेदीश्वरस्यात्मभूते तर्हीश्वरो जड इत्यत आह। ताभ्यामन्य इति। अन्यत्वे व्याकरणे च श्रुतिमाह। आकाश इत्यादिना। अविद्याद्युपाधिना कल्पितभेदेन बिम्बस्थानस्येश्वरत्वं प्रतिबिम्बभूतानां जीवानां नियम्यत्वमित्याह। स च स्वात्मभूतानिति। न चात्र नानाजीवा भाष्योक्ता इति भ्रमितव्यं बुद्ध्यादिसङ्घातभेदेन भेदोक्तेः, अविद्याप्रतिबिम्बस्त्वेक एव जीव इत्युक्तं। परमार्थत ईश्वरत्वादिद्वैताभावे श्रुतिमाह। तथा

परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते। व्यवहारावस्थायान्तूक्तः श्रुतावपीश्वरादिव्यवहारः। "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इति। तथा चेश्वरगीतास्वपि-

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया"॥ इति।

सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह। व्यवहाराभिप्रायेण तु स्याल्लोकवदिति महासमुद्रादिस्थानीयतां ब्रह्मणः कथयति। अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयति सगुणोपासनेषूपयुज्यत इति॥

## भावे चोपलब्धेः॥ १५॥

इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते नाभावे। तद्यथा सत्यां मृदि घट

---

चेति। कथं तर्हि कर्तृत्वादिकमित्यत आह। स्वभावस्त्विति। अनाद्यविद्यैव कर्तृत्वादिरूपेण प्रवर्तत इत्यर्थः। भक्ताभक्तयोः पापसुकृतनाशकत्वादीश्वरस्य वास्तवमीश्वरत्वमित्यत आह। नादत्त इति। न संहरतीत्यर्थः। तेन स्वरूपज्ञानावरणेन कर्ताहमीश्वरो नियन्तेत्येवं भ्रमन्ति। उक्तार्थः सूत्रकारसम्मत इत्याह। सूत्रकारोऽपीति। न केवलं लौकिकव्यवहारार्थं परिणामप्रक्रियाश्रयणं किन्तूपासनार्थञ्चेत्याह। परिणामप्रक्रियाञ्चेति। तदुक्तं "उपायः सोऽवतारायेति"...

एवं तदनन्यत्वे प्रत्यक्षादिविरोधं परिहृत्यानुमानमाह। भावे चेति। कारणस्य भावे सत्त्वे उपलब्धौ च कार्यस्य सत्त्वादुपलब्धेश्चानन्यत्वमिति

उपलभ्यते *नाभावे सत्सु च तन्तुषु पटः। न च नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा, न ह्यश्वो गोरन्यः सन् गोर्भाव एवोपलभ्यते। न च कुलालभाव एव घट उपलभ्यते सत्यपि निमित्तनैमित्तिकभावेऽन्यत्वात्। नन्वन्यभावेऽपि अन्यस्योपलब्धिर्नियता दृश्यते, यथाऽग्निभावे एव धूमस्येति। नेत्युच्यते, †उद्धापितेऽप्यग्नौ गोपालघटिकादिधारितस्य धूमस्य दृश्यमानत्वात्। अथ ‡धूमं कयाचिदवस्थया विशिंष्यात् ईदृशो धूमो नासत्यग्नौ भवतीति, नैवमपि कश्चिद्दोषः, तद्भानुरक्तां हि

---

सूत्रार्थः। घटो मृदनन्यः मृत्सत्त्वोपलब्धिव्याप्तनियतसत्त्वोपलब्धिमत्त्वात मृद्वत्। अन्यत्वेऽप्ययं हेतुः किं न स्यादित्यप्रयोजकत्वमाशङ्क्य निरस्यति। न चेति। मृद्घटयोरन्यत्वे गवाश्वयोरिव हेतूच्छित्तिः स्यादित्यर्थः। गवाश्वयोर्निमित्तनैमित्तिकत्वाभावाद्धेत्वभावः। अतो मृद्घटयोस्तेन हेतुना निमित्तादिभावः सिध्यति नानन्यत्वमित्यर्थान्तरतामाशङ्क्याह। न च कुलालेति। न चोपादानोपादेयभावेनार्थान्तरता मृद्दृष्टान्ते तद्भावाभावेऽपि हेतुसत्त्वादन्यत्वे गवाश्ववत् तद्भावायोगाच्चेति भावः। कुलालघटयोर्निमित्तादिभावे सत्यप्यन्यत्वात् कुलालसत्यनियतोपलब्धिर्घटस्य नैवेत्यक्षरार्थः। यथाश्रुतहेतोर्व्यभिचारं शङ्कते। नन्विति। अग्निभाव एव धूमोपलब्धिरिति नियमात्मको हेतुस्तत्र नास्तीत्याह। नेति। अविच्छिन्नमूलदीर्घरेखावस्थधूमे नियमोऽस्तीति व्यभिचार इत्याशङ्कते। अथेति। तद्भावनियतभावत्वे सति तद्भानुरक्तबुद्धिविषयत्वस्य हेतोर्विवक्षितत्वान्न व्यभिचार इत्याह। नैवमिति। आलोकभान्वनुरक्तबुद्धिग्राह्ये रूपे व्यभिचारनिरासाय सत्यन्तं आलोकाभावेऽपि घटादिरूपसत्त्वान्न व्यभिचार उक्तः धूमविशेषस्याग्निबुद्धिं विनाप्युपलम्भात् न

---

* नाभावे इति वर्ध० का० पु० नास्ति। † उद्धापिते इति वर्ध० का०।

‡ धूम० कयाचिदवस्थया विशिष्यते इति भो०।

बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदामः, न चासावग्निधूमयोर्विद्यते॥ भावाच्चोपलब्धेरिति वा सूत्रं॥ न केवलं शब्दादेव कार्यकारणयोरनन्यत्वं, प्रत्यक्षोपलब्धिभावाच्च तयोरनन्यत्वमित्यर्थः। भवति हि प्रत्यक्षोपलब्धिः कार्यकारणयोरनन्यत्वे। तद्यथा तन्तुसंस्थाने तन्तुव्यतिरेकेण पटो नाम कार्यं नैवोपलभ्यते, केवलास्तु तन्तव आतानवितानवन्तः प्रत्यक्षमुपलभ्यन्ते, तथा तन्तुष्वंशवोऽंशुषु तदवयवाः, अनया प्रत्यक्षोपलब्ध्या लोहितशुक्लकृष्णानि त्रीणि रूपाणि ततो वायुमात्रमाकाशमात्रं चेति अनुमेयं, ततः परं ब्रह्मैकमेवाद्वितीयं, तत्र सर्वप्रमाणानां निष्ठामवोचाम॥

---

तत्र व्यभिचार इत्यर्थः। तथा च तयोः कार्यकारणयोर्भावेन सत्तयानुरक्ता सद्बुद्धिरिति भाष्यार्थः। यद्वा तद्भावः सामानाधिकरण्यं तद्विषयकबुद्धिग्राह्यत्वं हेतुं वदामः। मृद्घट इति सामानाधिकरण्यबुद्धिदर्शनादग्निर्धूम इत्यदर्शनादित्यर्थः। अनुमानार्थत्वेन सूत्रं व्याख्याय पाठान्तरेण प्रत्यक्षपरतया व्याचष्टे। भावाच्चेति। पूर्वसूत्रोक्तारम्भणशब्दसमुच्चयार्थश्चकारः। न चैकः पट इति प्रत्यक्षं पटस्य तन्तुभ्यः पृथक्सत्त्वे प्रमाणं अपृथक्सत्ताकमिथ्याकार्यविषयत्वेनाप्युपपत्तेः। अतः आतानवितानसंयोगवन्तस्तन्तव एव पट इति प्रत्यक्षोपलब्धेः सत्त्वादनन्यत्वमित्यर्थः। पटन्यायं तन्त्वादावतिदिशति। तथेत्यादिना। प्रत्यक्षोपलब्ध्या तत्तत्कार्ये कारणमात्रं परिशिष्यत इत्यर्थः। यत्र प्रत्यक्षं नास्ति तत्र कार्यं विमतं कारणादभिन्नं कार्यत्वात् पटवदित्यनुमेयमित्याह। अनयेति। कारणपरिशेषे प्रधानादिकं परिशिष्यतां न ब्रह्मेत्यत आह। तत्रेति। सर्वेति। ब्रह्मणि वेदान्तानां सर्वेषां तात्पर्यस्योक्तत्वात् तदेवाद्वितीयं परिशिष्यते न कारणान्तरं अप्रामाणिकत्वादिति भावः॥

सत्त्वाच्चावरस्य ॥ १६ ॥

इतश्च कारणात् कार्यस्यानन्यत्वं यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते, "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्। यच्च यदात्मना यत्र न वर्तते *न तत्तत्रोत्पद्यते, यथा सिकताभ्यस्तैलं, तस्मात् प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात् कार्यमित्यवगम्यते। यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति, एकञ्च पुनः सत्त्वं अतोऽप्यनन्यत्वं कारणात् कार्यस्य ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु क्वचिदसत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुतिः, "असदेवेदमग्र आसीत्" इति "असद्वा इदमग्र आसीत्" इति

---

इदं जगत् सदात्मैवेति सामानाधिकरण्यश्रुत्या सृष्टेः प्राक् कार्यस्य कारणात्मना सत्त्वं श्रुतं तदन्यथानुपपत्त्योत्पन्नस्यापि जगतः कारणादनन्यत्वं इत्याह सूत्रकारः। सत्त्वाच्चेति। श्रुत्यर्थे युक्तिमप्याह। यच्च यदात्मनेति। घटादिकं प्राक् मृदाद्यात्मना वर्तते तत्र उत्पद्यमानत्वात् सामान्यतो व्यतिरेकेण सिकताभ्यस्तैलवदित्यर्थः। कारणवत् कार्यस्यापि सत्त्वात् सत्त्वभेदे मानाभावात् कार्यस्य कारणादभिन्नसत्त्वाकत्वमिति सूत्रस्यार्थान्तरमाह। यथा चेति। इदानीं सतः कार्यस्य प्रागुत्तरकालयोरसत्त्वायोगात् सत्त्वाव्यभिचारस्तच्च सत्त्वं सर्वानुस्यूतचिन्मात्रमेकं तदभेदेन सती मृत्स्न् घट इति भासमानयोः कार्यकारणयोरनन्यत्वमित्यर्थः ॥

न चैवं घटपटयोरप्येकसत्त्वाभेदादनन्यत्वं स्यादिति वाच्य, वस्तुत

---

* न तत्तत उत्पद्यते इति वर्ध० सो०।

च। तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वमिति चेत्, नेति ब्रूमः। न ह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः किं तर्हि व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरं, तेन धर्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्यस्य कारणरूपेणानन्यस्य, कथमेतदवगम्यते वाक्यशेषात् यदुपक्रमे सन्दिग्धार्थं वाक्यं तच्छेषादेव निश्चीयते। इह च तावत् "असदेवेदमग्र आसीत्" इत्यसच्छब्देनोपक्रमे निर्दिष्टं यत् तदेव पुनः तच्छब्देन परामृश्य सदिति विशिनष्टि 'तत्सदासीत्' इति। असतश्च पूर्वापरकालासम्बन्धादासीच्छब्दानुपपत्तेश्च। "असद्वा इदमग्र आसीत्" इत्यत्रापि 'तदात्मानं स्वयमकुरुत' इति वाक्यशेषे विशेषणान्नात्यन्तासत्त्वं। तस्मात् धर्मान्तरेणैवायमसद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य। नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धं, अतः प्राक् नामरूपव्याकरणादसदिवासीदित्युपचर्यते॥

---

एकसत्त्वात्मनाऽनन्यत्वस्येष्टत्वात्, तर्हि मृद्घटयोः को विशेषः तादात्म्यमिति ब्रूमः। वस्तुतः सर्वत्र सत्त्वैक्येऽपि घटपटयोर्भेदेन सत्ताया भिन्नत्वात् न तादात्म्यं कार्यकारणयोर्भेदकस्य सत्त्वाभेदकत्वाभावादभिन्नसत्ताकत्वं तादात्म्यमिति विशेषः। उक्तं कार्यस्य प्राक् कारणात्मना सत्त्वमसिद्धमित्याशङ्क्य समाधत्ते। असदिति। अक्ताः शर्करा उपदध्यादित्युपक्रमे केनाक्ता इति सन्देहे तेजो घृतमिति वाक्यशेषात् घृतेनेति यथा निश्चयं एवमत्रापि तत्सदिति वाक्यशेषात् सन्निश्चय इत्यर्थः। आसीदित्यतीतकालसम्बन्धोक्त्यासदव्याकृतमेव न शून्यमित्याह। असतश्च पूर्वापरेति। उक्तन्यायं वाक्यान्तरेऽतिदिशति। असद्वा .... क्रियमाणत्वविशेषणं शून्यस्यासम्भवीति भावः॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वमनन्यत्वञ्च कारणादवगम्यते, शब्दान्तराच्च। युक्तिस्तावद्वर्ण्यते। दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि चीरसुवर्णमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते, न हि दध्यर्थिभिः मृत्तिकोपादीयते, न घटाद्यर्थिभिः चीरं तदसत्कार्यवादेनोपपद्यते। अविशिष्टे हि प्रागुत्पत्तेः सर्वत्र सर्वस्यासत्त्वे कस्मात् चीरादेव दध्युत्पद्यते न मृत्तिकायाः, मृत्तिकाया एव च घट उत्पद्यते न चीरात्। अथाविशिष्टेऽपि प्रागसत्त्वे चीर एव दध्नः कश्चिदतिशयो न मृत्तिकायां मृत्तिकायामेव च घटस्य कश्चिदतिशयो न चीरे इत्युच्येत। तर्हि अतिशयवत्त्वात् प्रागवस्थायाः असत्कार्यवादहानिः सत्कार्यवादसि-

---

सत्त्वानन्यत्वयोर्हेत्वन्तरमाह सूत्रकारः। युक्तेरिति। दध्याद्यर्थिना चीरादौ प्रवृत्त्यन्यथानुपपत्तिर्युक्तिस्तया कार्यस्य प्राक् कारणानन्यत्वेन सत्त्व सिध्यतीत्यर्थः। असतोऽपि कार्यस्य तस्मादुत्पत्ते कारणत्वधिया तत्र प्रवृत्तिरित्यन्यथोपपत्तिमाशङ्क्याह। अविशिष्टे हीति। असत उत्पत्त्यभावादुत्पत्तौ वा सर्वस्मात् सर्वोत्पत्तिप्रसङ्गात् तत्तदुपादानविशेषे प्रवृत्तिर्न स्यादित्यर्थः। तदुक्तं साङ्ख्यवृद्धैः "असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यं" इति। शक्तस्य कारणस्य शक्यकार्यकारित्वाच्छक्तिविषयस्य कार्यस्य सत्त्वमसतोऽशक्यत्वात् किञ्च सत्कारणाभेदात् कार्यं सदित्युत्तरार्धार्थः। कार्यस्यासत्त्वेऽपि कुतश्चिदतिशयात् प्रवृत्तिनियमोपपत्तिरिति शङ्कते। अथेति। अतिशयः कार्यधर्मः कारणधर्मो वा,

द्विश्च। शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना ना-न्यासती वा कार्यं नियच्छेत्, असत्त्वाविशेषादन्यत्वाविशेषाच्च। तस्मात् कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यं। अपि च कार्यकारणयोर्द्रव्यगुणादीनां चाश्वमहिषवद्भेदबुद्ध्यभावा-त्तादात्म्यमभ्युपगन्तव्यं। समवायकल्पनायामपि समवायस्य स-मवायिभिः सम्बन्धेऽभ्युपगम्यमाने तस्य तस्यान्योऽन्यः सम्बन्धः कल्पयितव्य इत्यनवस्थाप्रसङ्गः, अनभ्युपगम्यमाने वा विच्छेदप्र-सङ्गः। अथ समवायः स्वयं सम्बन्धरूपत्वादनपेक्ष्यैवापरं सम्बन्धं सम्बध्यते, संयोगोऽपि तर्हि स्वयं सम्बन्धरूपत्वादनपेक्ष्यैव सम-

---

आद्ये धर्मित्वात् प्रागवस्थारूपस्य कार्यस्य सत्त्वं दुर्वारमित्याह। तर्ह्यति-शयवत्त्वादिति। द्वितीयेऽपि कार्यसत्त्वमायातीत्याह। शक्तिश्चेति। कार्यकारणाभ्यामन्या कार्यवदसती वा शक्तिर्न कार्यनियामिका यस्य कस्यचिदन्यस्य नरशृङ्गस्य वा नियामकत्वप्रसङ्गादन्यत्वासत्त्वयोः श-क्तावन्यत्र चाविशेषात्, तस्मात् कारणात्मना लीनं कार्यमेवाभिव्यक्ति-नियामकतया शक्तिरित्येष्टव्यं ततः सत्कार्यसिद्धिरित्यर्थः। किञ्च का-र्यकारणयोरन्यत्वे मृद्घटौ भिन्नौ सन्ताविति भेदबुद्धिः स्यादित्याह। अपि चेति। तयोरन्यत्वेऽपि समवायवशात् तथाबुद्धिर्नेदेतीत्या-शङ्क्य समवायं दूषयति। समवायेति। समवायः समवायिभिः सम्बन्धो न वा, आद्ये सम्बन्धः किं समवायः उत स्वरूपं आद्ये समवा-यानवस्था द्वितीये मृद्घटयोरपि स्वरूपसम्बन्धादेवोपपत्तेः, समवा-यासिद्धिः असम्बन्ध इति पक्षे दोषमाह। अनभ्युपगम्यमाने इति। द्रव्यगुणादीनां विशिष्टधीविरहप्रसङ्गः असम्बन्धस्य विशिष्टधीनिया-मकत्वायोगादित्यर्थः। विशिष्टधर्मधीनियामको हि सम्बन्धः,न तस्य नि-यामकान्तरापेक्षा अनवस्थानात्, अतः स्वपरनिर्वाहकः समवाय इति

वायं सम्बध्येत, तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवाय-कल्पनानर्थक्यं। कथञ्च कार्यमवयवि द्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं वर्तेत किं समस्तेष्ववयवेषु वर्तेतोत प्रत्यवयवं। यदि तावत् समस्तेषु वर्तेत ततोऽवयव्यनुपलब्धिः प्रसज्येत, समस्ता-वयवसन्निकर्षस्याशक्यत्वात्। नहि बहुत्वं समस्तेषु आश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते। अथावयवशः समस्तेषु वर्तेत, तदाप्यारम्भकावयवव्यतिरेकेणावयविनोऽवयवाः कल्प्येरन् यैरवयवैरारम्भकेष्ववयवेषु अवयवशोऽवयवी वर्तेत। कोशावयव-व्यतिरिक्तैर्ह्यवयवैरसिः कोशं व्याप्नोति, अनवस्था चैवं प्रसज्येत, तेषु तेष्ववयवेषु वर्तयितुमन्येषामन्येषामवयवानां कल्पनीय-त्वात्। अथ प्रत्यवयवं वर्तेत तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात्, न हि देवदत्तः स्रुघ्ने सन्निधीयमानस्तदहरेव पाटलि-

---

शङ्कते। चयेति। सम्बध्यते स्वस्य स्वसम्बन्धिनश्च विशिष्टधियं करोती-त्यर्थः। प्रतिबन्ध्य दूषयति। संयोगोऽपीति। यत्तु गुणत्वात्संयोगस्य समवायमिच्छा न सम्बन्धत्वादिति तन्न, धर्मत्वात् समवायस्यापि सम्ब-न्धान्तरापत्तेरसम्बन्धस्याश्वत्वस्य गोधर्मत्वादर्शनात्। किञ्च निष्क्रियत्वा-दयो गुणा इति शुक्लत्वादिषु व्यवहाराद्विशेषो गुणा इति परिभा-षया समवायस्यापि गुणत्वाच्च जातिविशेषो गुणत्वमिति परिभाषा तु समवायसिद्ध्युत्तरकालीननित्यानेकसमवेता जातिरिति ज्ञानस्य सम-वायज्ञानाधीनत्वादतः समवायसिद्धेः प्राक् संयोगस्य गुणत्वमसि-द्धमिति दिक्। किञ्च प्रतीत्यनुसारेण वस्तु स्वीकार्यमन्यथा गोप्र-तीतेरश्व आलम्बनमित्यपि सुवचत्वात् तथा च घटो घट इति ह्यभे-दप्रतीतेरभेद एव स्वीकार्यः। ताभ्यां ह्यत्यन्तभिन्नस्य समवायस्य तन्नियामकत्वासम्भवादित्याह। तादात्म्येति। एव प्रतीत्यनुसारेण

पुत्रे सन्निधीयते, युगपदनेकत्र वृत्तावनेकत्वप्रसङ्गात्, देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः। गोत्वादिवत् प्रत्येकं परिसमाप्तेरदोष इति चेत्, न तथा प्रतीत्यभावात्। यदि गोत्वादिवत् प्रत्येकं परिसमाप्तोऽवयवी स्यात्। यथा गोत्वं प्रतिव्यक्तिप्रत्यक्षं गृह्यते एवमवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत, न चैव नियतं गृह्यते। प्रत्येकपरिसमाप्तौ चावयविनः कार्येणाधिकारात् तस्य चैकत्वात् शृङ्गेणापि स्तनकार्यं कुर्यात् उरसा च पृष्ठकार्यं न चैवं दृश्यते। प्रागु-

---

कार्यस्य कारणात्मना सत्त्वं। स्वरूपेण तु मिथ्यात्वमित्युक्तं। वृत्त्यनिरूपणाच्च तस्य मिथ्यात्वमित्याह। कथमिति। तत्राद्यमनूद्यावयविनः पटादेस्तन्त्वादिष्ववयवेषु त्रित्वादिवत् स्वरूपेण वृत्तिरुतावयवश इति विकल्प्याद्यं दूषयति। यदीत्यादिना। व्यासज्यवृत्ति वस्तु प्रत्यक्षस्य यावदाश्रयप्रत्यक्षजन्यत्वात् संवृतपटादेर्यावदवयवाना अप्रत्यक्षत्वादप्रत्यक्षत्वं प्रसज्येतेत्यर्थः। द्वितीयं शङ्कते। अथेति। यथा हस्ते कोशे चावयवशः खड्गो वर्तमानो हस्तमात्रग्रहेऽपि गृह्यते, एवं यत्किञ्चिदवयवग्रहेणावयविनो ग्रहसम्भवेऽपि अवयवानामनवस्था स्यादिति दूषयति। तदापीति। आद्यद्वितीयमुद्भाव्य दूषयति। अथ प्रत्यवयवमित्यादिना। एकस्मिंस्तन्तौ पटवृत्तिकाले तन्त्वन्तरे वृत्तिर्न स्यात् वृत्तावनेकत्वापत्तेरित्यर्थः। यथा युगपदनेकव्यक्तिषु वृत्तावपि जातेरनेकत्वदोषो नास्ति तथावयविन इत्याशङ्कते। गोत्वेति। जातिवदवयविनो वृत्तिरसिद्धा अनुभवाभावादिति परिहरति। न तथेति। दोषान्तरमाह। प्रत्येकेति। अधिकारासम्बन्धात् यथा देवदत्त स्वकार्यमध्ययनं ग्रामेऽरण्ये वा करोति, यथा गौरवयवी स्वकार्यं क्षीरादि शृङ्गपुच्छादावपि कुर्यादित्यर्थः। एवं वृत्त्यनिरूपणादनिर्वाच्यत्व कार्यस्य दर्शितं। सम्प्रत्यसत्कार्यवादे दोषान्तरमाह। प्रागिति।

प्रतीतेश्च कार्यस्यासत्त्वे उत्पत्तिरकर्तृका निरात्मिका च स्यात्। उत्पत्तिश्च नाम क्रिया सा सकर्तृकैव भवितुमर्हति गत्यादिवत्, क्रिया च नाम स्यात् अकर्तृका चेति विप्रतिषिध्येत। घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका किं तर्हि अन्यकर्तृकेति कल्प्या स्यात्। तथा कपालादीनामप्युत्पत्तिरुच्यमानान्यकर्तृकैव कल्प्येत, तथा च सति घट उत्पद्यत इत्युक्ते कुलालादीनि कारणान्युत्पद्यन्त इत्युक्तं स्यात्। न च लोके घटोत्पत्तिरित्युक्ते कुलालादीनामप्युत्पद्यमानता प्रतीयते, उत्पन्नताप्रतीतेश्च। अथ स्वकारणसत्तासम्बन्ध एवोत्पत्तिरात्मलाभश्च कार्यस्येति चेत्, कथमलब्धात्मकं सम्बध्येतेति वक्तव्यं। सतोर्हि द्वयोः सम्बन्धः सम्भवति न सदसतोरसतोर्वा, अभावस्य च निरुपाख्यत्वात् प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नं, सतां हि लोके क्षेत्रगृहादीनां मर्यादा दृष्टा नाभावस्य। न हि वन्ध्यापुत्रो राजा बभूव प्राक् पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्या-

---

यथा घटश्चलतीत्युक्ते चलनक्रिया प्रत्याश्रयत्वरूपं कर्तृत्वं घटस्य भाति तथा घटो जायत इति जनिक्रियाकर्तृत्वं अनुभूयते। अतो जनिकर्तुः जने प्राक् सत्त्वं वाच्यं। कर्तुरसत्त्वे क्रियाया अप्यसत्त्वापत्तेरित्यर्थः। जनेरनुभवसिद्धेऽपि सकर्तृकत्वे क्रियात्वेनानुमानमाह। उत्पत्तिश्चेति। असतो घटस्योत्पत्तौ कर्तृत्वासम्भवेऽपि कुलालादेः सत्त्वात् कर्तृत्वमित्याशङ्क्याह। घटस्य चेति। घटोत्पत्तिवदसत्कपालादुत्पत्तिरित्यतिदिशति। तथेति। शङ्कामनूद्य दोषमाह। तथा चेति, अनुभवविरोध इत्यर्थः। उत्पत्तिर्भावस्याद्या विक्रियेति स्वमतेन कार्यसत्त्वमा-

दाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भवि-ष्यति इति वा विशेष्यते। यदि च वन्ध्यापुत्रः कारक-व्यापारादूर्द्धमभविष्यत् तत इदमपि उपापत्स्यत कार्याभावो-ऽपि कारकव्यापारादूर्द्धं भविष्यतीति। वयन्तु पश्यामो वन्ध्या-पुत्रस्य कार्याभावस्य चाभावत्वाविशेषात्। यथा वन्ध्यापुत्रः कारकव्यापारादूर्द्धं न भविष्यति एवं कार्याभावोऽपि कार-कव्यापारादूर्द्धं न भविष्यतीति। नन्वेवं सति कारकव्यापारो-ऽनर्थकः प्रसज्येत, यथैव हि प्राक्सिद्धत्वात् कारणस्य स्वरूपसि-द्धये न कश्चिद्व्याप्रियते एवं प्राक्सिद्धत्वात् तदनन्यत्वाच्च कार्यस्वरूपप्रसिद्धयेऽपि न कश्चिद्व्याप्रियेत व्याप्रियते च, अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्यस्येति। नैष दोषः, यतः कार्याकारेण कारणं व्यवस्थापयतः कारक-

---

नीतं सम्प्रति कार्यस्योत्पत्तिर्नाम स्वकारणे समवायः स्वस्मिन् सत्ता-समवायो वेति तार्किकमतमाशङ्कते। अयेति। तन्मतेनापि कार्यस्य सत्त्वमावश्यकं असतः सम्बन्धित्वायोगादित्याह। कथमिति। असतोर्वेति दृष्टान्तोक्तिः। ननु नरशृङ्गादिवत् कार्यं सर्वदा सर्वत्रासन्न भवति किन्तूत्पत्तेः प्राक् ध्वंसानन्तरं चासत् मध्ये तु सदेवेति वैषम्यात् सम्बन्धित्वोपपत्तिरित्याशङ्क्याह। अभावस्येति। अत्राभावशब्दा असच्छब्दापरपर्याया व्याख्येयाः। असतः कालेनासम्बन्धात् प्राक्त्वं न युक्तमित्यर्थः। ननु कारकव्यापारादूर्द्धभाविनः कार्यस्य वन्ध्यापुत्र-तुल्यत्वं कथमित्यत आह। यदि चेति। कार्याभावः असत्कार्यमि-त्यर्थः, इत्युपापत्स्यत उपपन्नमभविष्यदित्यन्वयः। कस्तर्हि निर्णयस्त-माह। वयन्त्विति। नासतो विद्यते भाव इति स्मृतेरिति भावः। सत्का-

व्यापारस्यार्थवत्त्वमुपपद्यते। कार्याकारोऽपि कारणस्यात्मभूत एव, अनात्मभूतस्यानारभ्यत्वादित्यभाणि। न च विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति। न हि देवदत्तः सङ्कोचितहस्तपादः प्रसारितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति, स एवेति प्रत्यभिज्ञानात्। तथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति, मम पिता मम *माता मम भ्राता इति प्रत्यभिज्ञानात्। जन्मच्छेदानन्तरितत्वात् तत्र तत्र युक्तं नान्यत्रेति चेत्, न, क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात्। अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानामङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा तेषामेवावयवानां †अपचयवशाददर्शनापत्तावुच्छेदसंज्ञा। तत्रेदृक् जन्मोच्छेदान्तरितत्वेन

र्यवादे कारकवैयर्थ्यं शङ्कते। नन्विति। सिद्धकारणानन्यत्वाच्च कार्यस्य सिद्धत्वमित्याह। तदनन्यत्वाच्चेति। अनिर्वाच्यकार्यात्मना कारणस्याभिव्यक्त्यर्थः कारकव्यापार इत्याह। नैष दोष इति। कार्यसत्यत्वमिच्छतां साङ्ख्यानां सत्कार्यवादे कारकवैयर्थ्यं दोष आपतति, अभिव्यक्तेरपि सत्त्वात्, अद्वैतवादिनान्त्वघटितघटनावभासनचतुरमायामहिम्ना स्वप्नवद्यथादर्शनं सर्वमुपपन्नं। विचार्यमाणे सर्वमयुक्तं, युक्तत्वे द्वैतापत्तेरिति मुख्यसमाधानं समाधानान्तराभावात्। ननु कारणाद्भिन्नमसदेवोत्पद्यत इति समाधानं किं न स्यादित्याशङ्क्यासत्पक्षस्य दूषणमुक्तं स्मारयत्याह। कार्याकारोऽपीति। अतः कारणाद्भेदाभेदाभ्यां दुर्निरूपस्य सदसद्विलक्षणस्यानिर्वाच्याभिव्यक्तिरनिर्वाच्यकारकव्यापाराणां फलमिति पक्ष एव श्रेयानिति भावः। ननु स्वपटादि

* भ्राता मम पुत्र इति का० वर्ध० से०।

† अपकर्षादिति वर्ध०।

चेदमतः सत्त्वापत्तिः सतश्चासत्तापत्तिः, तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः। तथा बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः, पित्रादिव्यवहारलोपप्रसङ्गश्च। एतेन *क्षणभङ्ग-वादः प्रतिवदितव्यः। यस्य पुनः प्रागुत्पत्तेरसत्कार्यं तस्य नि-र्विषयः कारकव्यापारः स्यात्, अभावस्य विषयत्वानुपपत्तेः, आकाशस्य हननप्रयोजनखड्गाद्यनेकायुध†प्रयुक्तिवत्। समवायि-कारणविषयः कारकव्यापारः स्यादिति चेत्, न, अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात्। समवायिकारणस्यै-वात्मातिशयः कार्यमिति चेत् न ‡अतस्तर्हि सत्कार्यतापत्तिः। तस्मात् क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्यां लभन्त इति न कारणादन्यत् कार्यं वर्षशतेनापि शक्यं कल्पयितुं। यथा च मूलकारणमेवान्त्यात्कार्यात् तेन तेन कार्या-कारेण नटवत् सर्वव्यवहारास्पदत्वं प्रतिपद्यते, एवं युक्तेः कार्यस्य

---

पृथुबुध्नत्वाद्यवस्थाविशेषो घटे दृश्यते। तथा च घटो मृद्भिन्नः तद्विरु-द्धविशेषवत्त्वात् वृक्षवदित्यत आह। न चेति। वस्तुतोऽन्यत्वं सत्या भेद। हेतोर्व्यभिचारस्थलान्तरमाह। तथा प्रतिदिनमिति। प्रत्यहं पित्रादिदेहस्यावस्थाभेदेऽपि जन्मनाशयोरभावादभेदो युक्त, दार्ष्टा-न्तिके तु मृदादिनाशे सति घटादिक जायत इति जन्मविनाशरूप-विरुद्धधर्मवत्त्वात् कार्यकारणयोरभेदो न युक्त इति शङ्कते। जन्मेति। कारणस्य नाशाभावाद्धेत्वसिद्धिरिति परिहरति। नेति। दधिघटा-दिकार्यान्वितत्वेन क्षीरमृदादीना प्रत्यक्षत्वान्नाशासिद्धिरित्यर्थ। ननु

---

* क्षणिकवाद प्रत्युक्त इति वर्ध०।

† प्रयुक्तिवदिति वर्ध०।

‡ सत्कार्यापत्तेरिति सो० वर्ध०।

प्रागुत्पत्तेः सत्त्वमनन्यत्वञ्च कारणादवगम्यते, शब्दान्तराच्चैतदवगम्यते। पूर्वसूत्रेऽसद्व्यपदेशिनः शब्दस्योदाहृतत्वात्, ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरं, "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं" इत्यादि 'तद्धैक आहुः' 'असदेवेदमग्र आसीत्" इति चासत्पक्षमुपक्षिप्य कथमसतः सज्जायेतेति आक्षिप्य 'सदेव सोम्येदमग्र आसीत्' इत्यवधारयति। तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात् सत्त्वानन्यत्वे प्रसिध्यतः। यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात् पश्चाच्चोत्पद्यमानं कारणे समवेयात् तदाऽन्यत् कारणात् स्यात्, तत्र 'येनाश्रुतं श्रुतं भवति' इतीयं प्रतिज्ञा पीड्येत सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते॥

---

यत्रान्वयो दृश्यते तत्र हेत्वसिद्धावपि यत्राङ्कुरादौ वटबीजादीनां अन्वयो न दृश्यते तत्र हेतुसत्त्वाद्दस्त्वन्यत्वं स्यादित्यत आह। अदृश्येति। तत्राप्यङ्कुरादौ बीजाद्यवयवानामन्वयान्न त एव जन्मविनाशौ किन्त्ववयवान्तरोपचयापचयाभ्यां तद्व्यवहार इत्यर्थः। अस्तूपचयापचयलिङ्गेन वस्तुभेदानुमानं ततोऽसत उत्पत्तिः सतो नाश इत्याशङ्क्य व्यभिचारमाह। तत्रेदृशमिति। पितृदेहेऽपि भेदसत्त्वान्न व्यभिचार इत्यत्र बाधकमाह। पित्रादीति। एतेनेति कारणस्य सर्वकार्येष्वन्वयकथनेनेत्यर्थः। स्वपक्षे दोषं परिहृत्य परपक्षे प्रसञ्जयति। यस्य पुनरिति। असतः कार्यस्य कारकव्यापाराद्धितातिशयाश्रयत्वायोगादविषयत्वेऽपि मृदादेर्विषयत्वं स्यादिति शङ्कते। समवायीति। समवायिकारणात् कार्यं भिन्नमभिन्नं वेति विकल्पाद्यं निरस्यति, नेत्यादिना। द्वितीयमाशङ्क्येष्टापत्तिमाह। समवायीति। कार्याणामवान्तरकारणानन्यत्वमुपसंहरति। तस्मादिति। परमकारणानन्यत्व फलितमाह। यथा च मूलेति। असत्कार्यवादे प्रतिज्ञाबाधः स्यादित्याह। यदि तु प्रागुत्पत्तेरिति॥

## पटवच्च ॥ १९ ॥

यथा च संवेष्टितः पटो न व्यक्तं गृह्यते किमयं पटः किं वान्यत् द्रव्यमिति, स एव प्रसारितो यत्संवेष्टितं द्रव्यं स पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते। यथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते, न संवेष्टितरूपादयं भिन्नः पट इति। एवं तन्त्वादिकारणावस्थं पटादिकार्यमस्पष्टं सत्तुरीवेमकुविन्दादिकारकव्यापाराभिव्यक्तं स्पष्टं गृह्यते। अतः संवेष्टितपटप्रसारितपटन्यायेनैवानन्यत् कारणात् कार्यमित्यर्थः॥

## यथा च प्राणादि ॥ २० ॥

यथा च लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्ररूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते नाकुञ्चनप्रसारणादिकं कार्यान्तरं, तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चनप्रसरणादिकमपि का-

---

कार्यमुपादानाद्भिन्नं तदुपलब्धावप्यनुपलभ्यमानत्वात् ततोऽधिकपरिमाणत्वाच्च मशकादिव मशक इत्यत्र व्यभिचारार्थं सूत्रं। पटवच्चेति। द्वितीयहेतोर्व्यभिचारं स्फुटयति। यथा च संवेष्टनेति। आयामो दैर्घ्यं॥

तत्रैव विलक्षणकार्यकारित्वं हेतुमाशङ्क्य व्यभिचारमाह सूत्रकारः। यथा च प्राणादीति। एवं जीवजगतोर्ब्रह्मानन्यत्वात् प्रतिज्ञा-

र्थान्तरं निर्वर्त्त्यते। न च प्राणभेदानां प्रभेदवतः प्राणादन्यत्वं समीरणस्वभावाविशेषात्, एवं कार्य्यस्य कारणादनन्यत्वं। अतश्च कृत्स्नस्य जगतो ब्रह्मकार्य्यत्वात् तदनन्यत्वाच्च सिद्धैषा श्रौती प्रतिज्ञा येन 'अश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं' इति ॥

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते, चेतनाद्धि जगत्-प्रक्रियायामाश्रीयमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते, कुत इतरव्यपदेशात्। इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः "स आत्मा तत्त्वमसि श्वेतकेतो" इति प्रतिबोधनात्। यद्वा इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति "तत्सृष्ट्वा तदेवानुप्राविशत्" इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्य्यानुप्रवेशेन शारीरात्मत्वादर्शनात्। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च परा देवता जीवमात्मशब्देन व्यपदिशन्ती

---

सिद्धिरित्यधिकरणार्थमुपसंहरति। अतश्च कृत्स्नस्येति। जीवाभिन्नं ब्रह्म जगत्कारणमिति वेदान्तसमन्वयो विषयः॥

स यदि तादृक् ब्रह्म जगज्जनयेत् तर्हि स्वानिष्टं नरकादिकं न जनयेत् स्वतन्त्रचेतनत्वादिति न्यायेन विरुध्यते न वेति सन्देहे पूर्वोक्तजीवानन्यत्वमुपजीव्य जीवदोषाः ब्रह्मणि प्रसज्येरन् इति पूर्वपक्षसूत्रं गृहीत्वा व्याचष्टे। इतरव्यपदेशादित्यादिना। पूर्वपक्षे जीवाभिन्ने समन्वयासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलं, हिताकरणेत्यत्र नञ्व्यत्यासेनाहितकरणं

---

* यद्वेति वर्ध० का० पु० नास्ति।

न ब्रह्मणो भिन्नः शारीर इति दर्शयति। तस्माद् यद्ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैवेति, अतस्य स्वतन्त्रः कर्ता सन् हितमेवात्मनः सौमनस्यकरं कुर्यात् नाहितं जन्ममरणजरारोगाद्यनेकानर्थजालं। नहि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति। न च स्वयमत्यन्तनिर्मलः सन्नत्यन्तमलिनं देहमात्मत्वेनोपेयात् कृतमपि कथञ्चिद् यत् दुःखकरं तदिच्छया जह्यात् सुखकरञ्चोपाददीत स्मरेच्च, मयेदं जगद्विविधं विचित्रं विरचितमिति, सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति। यथा च मायावी स्वयं प्रसारितां मायामिच्छयाऽनायासेनैवोपसंहरति, एवं शारीरोऽपि इमां सृष्टिं उपसंहरेत्, स्वकीयमपि तावत् शरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुं। एवं हितक्रियाद्यदर्शनादन्याय्या चेतनात् जगत्प्रक्रियेति मन्यते।

अधिकन्तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति। यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत्तद्वयं जगतः स्रष्टृ ब्रूमः।

---

दोषो व्याख्यातः। आदिमदोक्त भ्रान्त्यादिक आपादयति। न च स्वयमित्यादिना॥

जीवेशयोरभेदाज्जीवजगतोर्दोषाः ब्रह्मणि स्युः ब्रह्मगताश्च सृष्टिसंहारसर्वज्ञत्वादयो गुणा जीवे स्युः, न चेष्टापत्तिः जीवस्य स्वशरीरेऽपि संहारसामर्थ्यादर्शनादिति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे। तुशब्द इत्यादिना। जीवेश्वरयोर्लोके विम्बप्रतिविम्बयोरिव कल्पितभेदाङ्गीकाराद्धर्मव्यवस्थेति सिद्धान्तग्रन्थार्थः।, यदि वयं जीवं

न तस्मिन् हिताकरणादयो दोषाः प्रसज्यन्ते, न हि तस्य हितं किञ्चित् कर्तव्यमस्ति अहितं वा परिहर्तव्यं नित्यमुक्तत्वात्। न च तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति, सर्वज्ञत्वात् सर्वशक्तित्वाच्च। शारीरस्त्वनेवंविधः, तस्मिन् न प्रसज्यन्ते हिताकरणादयो दोषा न तु तं वयं जगतः स्रष्टारं ब्रूमः। कुत एतत् भेदनिर्देशात्, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः सता सोम्य तदा सम्पन्नो भवति शारीर आत्मा प्राज्ञेनात्मनान्वारूढः" इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति। नन्वभेदनिर्देशोऽपि दर्शितः 'तत्त्वमसि' इत्येवंजातीयकः, कथं भेदाभेदौ विरुद्धौ सम्भवेयाताम्। नैष दोषः, आकाशघटाकाशन्यायेनोभयसम्भवस्य तत्र तत्र प्रतिष्ठापितत्वात्। अपि च यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वं, समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यक्ज्ञानेन बाधितत्वात्, तत्र कुत एव सृष्टिः कुतो वा हिता करणादयो दोषाः। अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसङ्घाता-

---

स्रष्टारं ब्रूमः तदा दोषाः प्रसज्यन्ते न तु तं ब्रूम इत्यन्वयः। किञ्चाभेदज्ञानादूर्द्ध्वं वा दोषा आपाद्यन्ते पूर्वं वा नाद्य इत्याह। अपि चेति। उक्तं मिथ्याज्ञानविजृम्भितत्वं स्फुटयति। अविद्येति। कर्तृत्वादिबुद्धिधर्माध्यासे देहधर्माध्यासं दृष्टान्तयति। जन्मेति। द्वितीयं प्रत्याह।

पाद्यविवेककृता हि भ्रान्तिः, हिताहितकरणादिलक्षणः संसारो न तु परमार्थतोऽस्तीत्यसकृदवोचाम जन्ममरणच्छेदनभेदनाद्यभिमानवत्। अबाधिते तु भेदव्यवहारे 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्येवंजातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचिन्महार्हाः मणयो वज्रवैदुर्यादयोऽन्ये मध्यमवीर्याः सूर्यकान्तादयोऽन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणाः इत्यनेकविधं वैचित्र्यं दृश्यते। यथा चैकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं *चन्दनकिंपाकादिषूपलभ्यते। यथा चैकस्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च विचित्राणि कार्याणि भवन्ति, एवमेकस्यापि

---

अबाधिते त्विति। ज्ञानादूर्ध्वं स्रष्टृत्वादिधर्माणां बाधात् पूर्वञ्च कल्पितभेदेन व्यवस्थोपपत्तेर्न किञ्चिदनवद्यमित्यर्थः ॥

नन्वखण्डैकरूपे ब्रह्मणि कथं जीवेश्वरवैचित्र्यं कथञ्च तत्कार्यवैचित्र्यमित्यनुपपत्तिं दृष्टान्तैः परिहरति सूत्रकारः। अश्मादिवच्चेति। किंपाको महातालफलं। तत्तत्कार्यसंस्काररूपानादिशक्तिभेदाद्वैचित्र्यमिति भावः। सूत्रस्थचकारार्थमाह। श्रुतेश्चेति। ब्रह्म जीवगतदोषवत् जीवाभिन्नत्वाज्जीववदित्याद्यनुमानं स्वतः प्रमाणनिरवद्यत्वादिश्रुतिबाधितं। किञ्च कर्तृत्वभोक्तृत्वादिविकारस्य मिथ्यात्वाज्जीवस्यैव तावद्दोषो नास्ति कुतो बिम्बस्थानीयस्याशेषविशेषदर्शिनः परमेश्वरस्य

---

* चन्दनचम्पकादिष्विति मु० पो० वर्ध० का०।

ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यञ्चोपपद्यत इति अतस्त-दनुपपत्तिः परपरिकल्पितदोषानुपपत्तिरित्यर्थः। अतश्च प्रामाण्यादिकारस्य वाचारम्भणमात्रत्वात् स्वप्नदृश्यभाववैचि-त्र्यवच्चेत्यभ्युच्चयः॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि॥ २४॥

चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नो-पपद्यते, कस्मादुपसंहारदर्शनात्। इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तः तत्तत्कार्यं कुर्वाणा दृश्यन्ते, ब्रह्म चासहायं तवाभिप्रेतं, तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत, तस्मान्न ब्रह्म जगत्कारणमिति चेत्, नैष दोषः। यतः क्षीरवत् द्रव्यस्वभावविशेषादुपपद्यते, यथा हि लोके क्षीरं जलं वा स्वयमेव *दधिहिमभावेन परि-

दोषप्रसक्तिः। यत्तु ब्रह्म न विचित्रकार्यप्रकृति एकरूपत्वाद्व्यतिरेकेण मृत्तन्त्वादिवदिति, तन्न, एकरूपे स्वप्नद्रष्टरीव विचित्रदृश्यवस्तुवैचित्र्य-दर्शनेन व्यभिचारादित्यर्थः, तस्मात् प्रत्यगभिन्ने ब्रह्मणि समन्वयस्या-विरोध इति सिद्धं॥

उपसंहारदर्शनात्। असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन् सम-न्वयो विषयः। स किं यदसहायं तन्न कारणमिति लौकिकन्यायेन विरुध्यते न वेति सन्देहे पूर्वमौपाधिकजीवभेदाद्ब्रह्मणि जीवदोषा न प्रसज्यन्त इत्युक्तं, सम्प्रति उपाधितोऽपि विभक्तं ब्रह्मणः प्रेरका-दिकं सहकारि नास्तीशनानात्वाभावादिति प्रत्युदाहरणेन पूर्वपक्ष-

* दधिहिमकरकादिभावेनेति पा०।

णमतेऽनपेक्ष्य बाह्यं साधनं तथेहापि भविष्यति। ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनं औष्ण्यादिकं, कथमुच्यते क्षीरवद्धीति। नैष दोषः, स्वयमपि हि क्षीरं याञ्च यावतीं च परिणाममात्रामनुभवत्येव त्वार्यते त्वौष्ण्यादिना दधिभावाय। यदि च स्वयं दधिभावशीलता न स्यान्नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत। न हि वायुराकाशो वौष्ण्यादिना बलाद् दधिभावमापद्यते, साधनसम्पत्त्या च तस्य पूर्णता सम्पद्यते। परिपूर्णशक्तिकन्तु ब्रह्म न तस्यान्येन केनचित् पूर्णता सम्पादयितव्या। श्रुतिश्च तत्र भवति

'न तस्य कार्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।

---

सूत्रार्थं व्याचष्टे। चेतनमित्यादिना। फलं पूर्ववत्, कारकाणां उपसंहारो मेलनं। उक्तन्यायस्य क्षीरादौ व्यभिचार इति सिद्धान्तयति। नैष इति। शुद्धस्य ब्रह्मणोऽकारणत्वमिष्टमेव विशिष्टस्येश्वरस्य तु मायैव सहाय इति भावेनाह। बाह्यमिति। क्षीरस्याप्यातञ्चनादिसहायोऽस्तीत्यसहायत्वहेतोर्न व्यभिचार इत्याशङ्क्य सहायाभावेऽपि यस्य कस्यचित् परिणामस्य क्षीरे दर्शनादव्यभिचारतादवस्थ्यमित्याह। नन्वित्यादिना। तर्हि सहायो व्यर्थस्तत्राह। त्वार्यते इति। ननु त्वार्यते क्षीरं दधिभावाय शैघ्र्यं कार्यत इति किमर्थं कल्प्यते, स्वतोऽशक्तं क्षीरं सहायेन शक्तं क्रियत इति किन्न स्यात् तत्राह। यदि चेति। शक्तस्य सहायसम्पदा किं कार्यमित्यत्राह। साधनेति। सहायविशेषाभावे कश्चिद्विकारः क्षीरस्य भवति, तत्र घातञ्चनप्रक्षेपौष्ण्याभ्यान्तूत्तमदधिभावसामर्थ्यं व्यज्यते इत्यर्थः। तर्हि शक्ति

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च' इति।

तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात् क्षीरादिवद्विचित्रपरिणाम उपपद्यते॥

## देवादिवदपि लोके ॥ २५ ॥

स्यादेतत्, उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः दृष्टत्वात्, चेतनाः पुनः कुलालादयस्तु साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्तमाना दृश्यन्ते, कथं ब्रह्म चेतनं सदसहायं प्रवर्त्तेतेति, देवादिवदिति ब्रूमः। यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किञ्चिद्बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि रथादीनि च निर्मिमाणा उपलभ्यन्ते मन्त्रार्थवादेतिहासपुराणप्रामाण्यात्। तन्तुनाभश्च स्वत एव तन्तून् सृजति, बलाका चान्तरेणैव शुक्रं गर्भं

---

व्यञ्जकोऽपि सहायो ब्रह्मणो वाच्यस्तत्राह। परिपूर्णेति। निरपेक्षमायाशक्तिकमित्यर्थः। तादृशशक्तौ मानमाह। श्रुतिश्चेति॥

ननु ब्रह्म न कारणं चेतनत्वे सत्यसहायत्वान्मृदादिशून्यकुलालादिवदिति न क्षीरादौ व्यभिचार इति सूत्रव्यावर्त्यां शङ्कामाह। स्यादेतदिति। तस्यापि हेतोर्देवादौ व्यभिचार इत्याह। देवादिवदिति। लोक्यते ज्ञायतेऽर्थोऽनेनेति लोको मन्त्रार्थवादादि शास्त्रं तद्व्यवहारश्च, अभिध्यानं सङ्कल्पः। ननु देवादिदृष्टान्तेषु शरीरेषु चेतनत्वं नास्ति, बलाकापद्मिनीचेतनयोर्गर्भप्रस्थानकर्तृत्वे

धत्ते, पद्मिनी चानपेक्ष्य किञ्चित् प्रस्थानसाधनं सरोऽन्तरात् सरोऽन्तरं प्रतिष्ठते, एवं चेतनमपि ब्रह्मानपेक्ष्य बाह्यं साधनं स्वत एव जगत् स्रक्ष्यति। स यदि ब्रूयाद्य एते देवादयो ब्रह्मणो दृष्टान्ता उपात्तास्ते दार्ष्टान्तिकेन ब्रह्मणा समानस्वभावा न भवन्ति, शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादेन उपादानं न तु चेतन आत्मा, तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणाल्लाला कठिनतामापद्यमाना तन्तुर्भवति। बलाका च स्तनयित्नुरवश्रवणाद्गर्भं धत्ते। पद्मिनी च चेतनप्रयुक्ता सती अचेतनेनैव शरीरेण सरोऽन्तरात् सरोऽन्तरमुपसर्पति वल्लीव वृक्षं न तु स्वयमेवाचेतना सरोऽन्तरोपसर्पणे व्याप्रियते, तस्मान्नैते ब्रह्मणो दृष्टान्ता इति, तं प्रति ब्रूयान्नायं दोषः, कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वादिति। यथा हि कुलालादीनां देवादीनाञ्च समाने चेतनत्वे कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते न देवादयः, तथा

---

मेघशब्दः शरीरस्य सहायोऽस्ति, अतो विशिष्टहेतोर्न व्यभिचार इति शङ्कते। स यदि ब्रूयादित्यादिना। व्यभिचारोऽस्तीति परिहरति। तं प्रति ब्रूयादिति। अयं दोषः दृष्टान्तवैषम्याख्यः। अत्र हि हेतौ चेतनत्वं अहंधीविषयत्वरूपं चित्तादात्म्यापन्नदेहसाधारणं ग्राह्यं न तु मुख्यात्मत्वं, तत्र कुलालदृष्टान्ते साधनवैकल्यापत्तेः। असहायत्वञ्च चेतनस्य स्वातिरिक्तहेतुशून्यत्वं तदुभयं देवादिषु अस्तीति व्यभिचारः, देहस्य स्वान्तःपातित्वेन स्वातिरिक्तत्वाभावात्। तथा च कुलालवैलक्षण्यं देवादीनां घटादिकार्ये स्वातिरिक्तानपेक्षत्वाद्देववैलक्षण्यं मृदाद्यपेक्षणात्। देहस्याप्यनपेक्षणात् नरदेवादीनां कार्यारम्भे नास्त्येकरूपा सा-

ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षिष्यत इत्येतावत् वयं देवाद्युदाहरणेन विवक्षामः, तस्मात् यथैकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा॥ २६॥

चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्षितबाह्यसाधनं स्वयं परिणममाणं जगतः कारणमिति स्थितं, शास्त्रार्थपरिशुद्धये तु पुनराक्षिपति कृत्स्नप्रसक्तिः, कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति, निरवयवत्वात्। यदि ब्रह्म पृथिव्यादिवत् सावयवमभविष्यत् ततोऽस्यैकदेशः पर्यणंस्यत, एकदेशश्चावास्थास्यत, निरवयवन्तु ब्रह्म श्रुतिभ्योऽवगम्यते-

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।
दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' ॥

---

मयी। श्रूयते हि महाभारते श्रीकृष्णस्य सङ्कल्पमात्रेण द्रौपद्याः पटपरम्परोत्पत्तिः, अतः सिद्धमसहायस्यापि ब्रह्मणः कारणत्वं॥

कृत्स्नप्रसक्तिः। क्षीरदृष्टान्तेन ब्रह्म परिणामीति भ्रमोत्पत्त्या पूर्वपक्षे प्राप्ते शास्त्रार्थो विवर्त्तो न परिणाम इति भ्रमनिवृत्त्या निर्णयार्थमिदमधिकरणमिति पूर्वाधिकरणेनोत्तराधिकरणस्य कार्यत्वसङ्गतिमाह। चेतनमिति। निरवयवात् ब्रह्मणो जगत्सर्गं वदन् समन्वयो विषयः, स किं यन्निरवयवं तन्न परिणामीति न्यायेन विरुध्यते न वेति सन्देहे विरुध्यत इति पूर्वपक्षसूत्रं व्याचष्टे। कृत्स्नेति। ब्रह्म परिणामीति वदता वक्तव्यं ब्रह्म निरवयवं सावयवं वा, आद्ये सर्वेण ब्रह्मणः परिणामात्मना स्थितिः स्यात् इत्युक्तं व्यतिरेकदृष्टान्तेन विवृणोति। यदि ब्रह्मेत्यादिना। पर्यणंस्यत परिणतोऽभविष्यत, एकदेशश्चावास्थास्य-

'इदं महद्भूतमनन्तमपारं विज्ञानघन एव स एष नेति नेत्यात्माऽस्थूलमनणु, इत्याद्याभ्यः सर्वविशेषप्रतिषेधश्रुतिभ्यः। ततश्चैकदेशपरिणामासम्भवात् कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत। द्रष्टव्यत्वोपदेशानर्थक्यं चापन्नं अयत्नदृष्टत्वात् कार्यस्य, तद्व्यतिरिक्तस्य च ब्रह्मणोऽभावात्, अजत्वादिशब्दव्याकोपश्च। अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत, तथापि ये निरवयवत्वस्य प्रतिपादकाः शब्दा उदाहृतास्ते प्रकुप्येयुः। सावयवत्वे चानित्यत्वप्रसङ्ग इति सर्वथायं पक्षो न घटयितुं शक्यते इत्याक्षिपति॥

श्रुतेस्तु शब्दमूलत्वात्॥ २७॥

तुशब्देनाक्षेपं परिहरति। न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति। न तावत् कृत्स्नप्रसक्तिरस्ति। कुतः श्रुतेः।

---

रपरिणतोऽभविष्यत्। उक्तश्रुतिभ्यो निरवयवत्वसिद्धेः फलितं दोषमाह। ततश्चेति। यदा परिणामव्यतिरेकेण मूलब्रह्मात्मनाऽस्ति तदात्मा द्रष्टव्य इत्युपदेशोऽर्थशून्यः स्यादिति दोषान्तरमाह। द्रष्टव्येति। ब्रह्मणः परिणामात्मना जन्मनाप्यङ्गीकारेऽजोऽमर इति श्रुतिविरोधश्चेत्याह। अजत्वादीति। सावयवत्वपक्षमाशङ्क्य सूत्रशेषेण परिहरति। अथेत्यादिना॥

परिणामपक्षे दुर्घट इति यदुक्तं तदस्मदिष्टमेवेति विवर्तवादेन सिद्धान्तयति। श्रुतेरिति। स्वपक्षे पूर्वोक्तदोषद्वयं नास्तीति सूत्रयोजनया दर्शयति। तुशब्देनेत्यादिना। ईक्षितृत्वेन व्याकर्तृत्वेन चेक्षणीय-

यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते, एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते, प्रकृतिविकारयोर्भेदेन व्यपदेशात् 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति चैवंजातीयकात्, तथा हृदयायतनत्ववचनात्, सत्सम्पत्तिवचनाच्च। यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात् 'सता सोम्य तदा सम्पन्नो भवति' इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात्, विकृतेन ब्रह्मणा नित्यं सम्पन्नत्वात्, अविकृतस्य च ब्रह्मणोऽभावात्, तथेन्द्रियगोचरत्वप्रतिषेधात् ब्रह्मणो विकारस्य चेन्द्रियगोचरत्वोपपत्तेः, तस्मादस्त्यविकृतं ब्रह्म। न च निरवयवत्वशब्दव्याकोपोऽस्ति, श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात्। शब्दमूलञ्च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकं तद्यथाशब्दमभ्युपगन्तव्यम्। शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयत्यकृत्स्नप्रसक्तिं निरवयवताञ्च। लौकिकानामपि मणिमन्त्रौ-

---

व्याकर्तव्यप्रपञ्चात् पृथगीश्वरसत्त्वश्रुतेर्न कृत्स्नप्रसक्तिरित्याह। सेयं देवतेति। न्यूनाधिकभावेनापि पृथक्सत्त्वं श्रुतमित्याह। तावानिति। इतश्चास्त्यविकृतं ब्रह्मेत्याह। तथेति। स वा एष आत्मा हृदीति श्रुतेरस्ति हृदयातिरिक्तं ब्रह्म। सदेति सुषुप्तिकालस्य विशेषणाच्चेत्यर्थः। लिङ्गान्तरमाह। तथेन्द्रियेति। भूम्यादेर्विकारस्येन्द्रियगोचरत्वान्न चक्षुषा गृह्यत इत्यादिश्रुत्या ब्रह्मणस्तन्निषेधादवाङ्मनसगोचरत्वश्रुतेश्चास्ति कूटस्थं ब्रह्मेत्यर्थः। कृत्स्नप्रसक्तिदोषो नास्तीत्युक्त्वा द्वितीयदोषोऽपि

निरवयवत्वं ब्रह्मणः कुप्यति। न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था, तत्प्रतिपत्तौ फलानवगमात्। सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा, तत्प्रतिपत्तौ फलावगमात् 'स एष नेति नेत्यात्मा' इत्युपक्रम्याह 'अभयं वै जनक प्राप्तोऽसि' इति; तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति॥

## आत्मनि चैवं विचित्राश्च हि॥२८॥

अपि च नैवात्र विवदितव्यं कथमेकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति; यतः आत्मन्यपि एकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते' इत्यादिना। लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते, तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति॥

---

निष्प्रपञ्चब्रह्मधीशेषत्वेन सृष्टिरनूद्यते न प्रतिपाद्यत इत्यसकृदावेदितं, अतो विवर्तवादे न कश्चिद्दोष इत्युपसंहरति। तस्मादिति॥

पूर्वावस्थानाशेनावस्थान्तरं परिणामः, यथा दुग्धस्य दधिभावः। पूर्वरूपानुपमर्देनावस्थान्तरं विवर्तः, यथा शुक्तेः रजतभावः। तत्र ब्रह्मणो विवर्तोपादानत्वं स्वप्नसाक्षिदृष्टान्तेन द्रढयन्मायावादं स्फुटयति सूत्रकारः। चात्मनि चेति। रथयोगाः अश्वाः, किञ्च सत्त्वप्रसत्त्यादीनां साङ्ख्यादिपक्षेऽपि दोषत्वान्नास्मान् प्रत्युद्भावनीयत्वं।

## *स्वपक्षदोषाच्च ॥ २९ ॥

परेषामप्येष समानः स्वपक्षदोषः, प्रधानवादिनोऽपि हि निरवयवमपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणमिति स्वपक्षस्तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वात् प्रधानस्य प्राप्नोति निरवयवत्वाभ्युपगमकोपो वा। ननु नैव तैर्निरवयवं प्रधानमभ्युपगम्यते, सत्त्वरजस्तमांसि हि त्रयो गुणाः, तेषां साम्यावस्था प्रधानं तैरेवावयवैस्तत् सावयवमिति, नैवंजातीयकेन सावयवत्वेन प्रकृतो दोषः परिहर्तुं पार्यते, यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम् एकैकमेव चेतरद्वयानुगृहीतं सजातीयस्य प्रपञ्चस्योपादानमिति समानत्वात् स्वपक्षदोषप्रसङ्गस्य।

---

यश्चोभयोः समो दोष इति न्यायादित्याह सूत्रकारः। स्वपक्षेति। प्रधानस्य निरवयवत्वे कृत्स्नप्रसक्तिः सावयवत्वे च निरवयवत्वाभ्युपगमविरोध इत्यत्र शङ्कते। नन्विति। किं साम्यावस्था गुणानां विकारः समुदायो वा, आद्ये तस्या न मूलप्रकृतित्वं विकारत्वात्, द्वितीये प्रपञ्चाभावः, समुदायस्यावस्तुत्वेन मूलाभावात्। अथ निरवयवा गुणा एव विविधपरिणामाना प्रकृतिरिति चेन्न, तर्हि कृत्स्नप्रसक्तिमूलोच्छेदो दुर्वार इत्यभिप्रेत्य परिहरति। नैवमित्यादिना। इति यतः अतः समानत्वान्न वयं पर्यनुयोज्या इत्यन्वयः। प्रत्येकं सत्त्वादिकमितरगुणद्वयसचिवं निरवयवं यद्युपादानं तर्हि कृत्स्नस्योपादानस्य कार्यरूपत्वप्रसक्तेर्मूलोच्छेद इत्युक्ते निरवयवत्वसाधकतर्कस्याभासत्वाद्गुणानां सावयवत्वमेव परिणामित्वेन मृदादिवदतो न कृत्स्नप्रसक्तिरेकदेशपरिणामसम्भवादिति शङ्कते। तर्केति। एत-

---

*स्वपक्ष इति वर्ध० पाठः।

तर्काप्रतिष्ठानात् सावयवत्वमेवेति चेत्, एवमप्यनित्यत्वादिदोषप्रसङ्गः। अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः, तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः, तथा अणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः। अथैकदेशेन संयुज्येत तथापि निरवयवत्वाभ्युपगमकोप इति स्वपक्षेऽपि समान एष दोषः। समानत्वाच्च नान्यतरस्मिन्नेव पक्षे उपक्षेप्तव्यो भवति। परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः॥

## सर्वोपेता च तद्दर्शनात्॥३०॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते, विचित्रो विकारप्रपञ्च इत्युक्तं, तत्पुनः कथमुपगम्यते विचित्रशक्ति-

---

दोषाभावेऽपि दोषान्तरं स्यादिति परिहरति। एवमपीति। ननु गुणानामवयवास्तन्तुवदारम्भका न भवन्ति किन्तु कार्यवैचित्र्यानुमितास्तद्गताः शक्तय इत्याशङ्क्य मायिकशक्तिभिर्ब्रह्मणोऽपि सावयवत्वं तुल्यमित्याह। अथेत्यादिना। अणुवादेऽपि दोषसाम्यमाह। तथेति। सांख्यवद्दोषः समान इति सम्बन्धः। निरवयवयोः परमाण्वोः संयोगः व्याप्यवृत्तिर्वा, आद्ये तत्कार्यस्य द्व्यणुकस्यैकपरमाणुमात्रत्वापत्तिः प्रथिम्नोऽधिकपरिमाणस्यानुपपत्तेः। न ह्यणोरण्वन्तरेणोपर्यधः पार्श्वतश्च व्याप्तौ ततोऽधिकद्रव्यं सम्भवति। द्वितीये परमाण्वोः सावयवत्वापत्तिरित्यर्थः। ननु त्वं चोर इत्युक्ते त्वमपि चोर इति वद्दोषसाम्योक्तिरयुक्तेत्यत आह। परिहृतस्त्विति।

उक्तं हि मायावादे स्वप्नवत् सर्वं सामञ्जस्यं, अतो निरवयवे ब्रह्मणि समन्वयस्याविरोध इति सिद्धं। सर्वोपेता माया शक्तिमतो ब्रह्मणो जगत्-

युक्तं परं ब्रह्मेति, तदुच्यते, सर्वोपेता च तद्दर्शनात्। सर्वशक्तियुक्ता च परा देवतेत्यवगन्तव्यं, कुतः, तद्दर्शनात्। तथा हि दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः सत्यकामः सत्यसङ्कल्पो यः सर्वज्ञः सर्वविदेतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्येवंजातीयका ॥

विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥

स्यादेतत्, विकरणां परां देवतां शास्ति शास्त्रम् 'अचक्षुष्कमश्रोत्रमवागमनाः' इत्येवंजातीयकं, कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत्, देवादयो हि चेतनाः सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसम्पन्ना एव तस्मै तस्मै कार्याय प्रभवन्तो विज्ञायन्ते, कथञ्च 'नेति नेति' इति प्रतिषिद्धसर्वविशेषाया देवतायाः सर्वशक्तियोगः सम्भवेदिति चेत्, यदत्र

---

सर्गं वदतः समन्वयस्याशरीरस्य न मायेति न्यायेन विरोधोऽस्ति न वेति सन्देहे न्यायस्याभासत्वादस्तीति पूर्वपक्षे पूर्वोक्तशक्तिमत्त्वसमर्थनादेकविषयत्वसङ्गतिं वदन् सिद्धान्तसूत्रं व्याचष्टे। एकस्येत्यादिना। पूर्वोत्तरपक्षयोर्विरोधाविरोधौ फलमित्युक्तमेवापादसमाप्तेरवगन्तव्यम्। अभ्यात्तः अभितो व्याप्तः, अवाकी वागिन्द्रियशून्यः, अनादरो निष्कामः ॥

पूर्वपक्षन्यायमनूद्य दूषयति। विकरणत्वादिति। देवादिचेतनानां शक्तानामपि देहाभिमाने सत्येव कर्तृत्वं दृष्टं तदभावे सुषुप्ते तन्न दृष्टं, अतो ब्रह्मणः शक्तत्वेऽप्यदेहत्वान्न कर्तृत्वं नाप्यदेहस्य शक्ति

वक्तव्यं तत्पुरस्तादेवोक्तं। श्रुत्यवगाह्यमेवेदमतिगम्भीरं परं ब्रह्म न तर्कावगाह्यं, न च यथैकस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोगः सम्भवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव। तथा च शास्त्रं-

"अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः"।

इत्यकरणस्यापि ब्रह्मणः सर्वसामर्थ्ययोगं दर्शयति।

## न प्रयोजनवत्त्वात्॥३२॥

अन्यथा पुनश्चेतनकर्तृकत्वं जगत आक्षिपति, न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति। कुतः प्रयोजनवत्त्वात् प्रवृत्तीनां। चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत् प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः किमुत गुरुतरसंरम्भां। भवति च लोक-

---

सम्भवतीति शङ्कार्थं। विकरणस्य जीवस्य कर्तृत्वासम्भवेऽपीश्वरस्य सम्भवतीति देवादिवदपि लोक इत्यत्रोक्तं, तत्र शरीरस्य कल्पितस्य मायाश्रयत्वायोगात् निर्विशेषचिन्मात्रस्यैव मायाधिष्ठानत्वं युक्तमिति समाधानार्थं॥

न प्रयोजनवत्त्वात्। परिणामात् ब्रह्मणो जगत्सर्गं वदन् समन्वयो विषय, स किमभ्रान्तश्चेतनो य स निष्फलं वस्तु न रचयतीति न्यायेन विरुध्यते न वेति सन्देहे पूर्वमदेहस्यापि श्रुतिबलात् शक्तत्वोक्त्या

प्रसिद्धानुवादिनी श्रुतिः 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' इति। गुरुतरसंरम्भा चेयं प्रवृत्तिः यदुच्चावचप्रपञ्चं जगदिदं विरचयितव्यं। यदीयमपि प्रवृत्तिः चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत, प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात्। अथ चेतनोऽपि सन् उन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टस्तथा परमात्मापि प्रवर्तिष्यत इत्युच्येत, तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत, तस्मादश्लिष्टा चेतनात् सृष्टिरिति॥

## लोकवत्तु लीलाकैवल्यं॥ ३३॥

तुशब्देनाक्षेपं परिहरति। यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किञ्चित् प्रयोजनम-

---

कर्तृत्वमुक्तं तदाक्षेपसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे। अन्यथेत्यादिना।
ईश्वरस्य फलाभावेऽपि परप्रयोजनाय सृष्टौ प्रवृत्तिरस्त्वित्याशङ्क्य श्रु-
तिमाह। भवति चेति। या प्रेक्षावत्प्रवृत्तिः सा स्वफलार्थेति लोक-
प्रसिद्धिः। न च दयालुप्रवृत्तौ व्यभिचारस्तस्यापि परदुःखासहन-
प्रयुक्तस्वचित्तव्याकुलतानिवृत्त्यर्थित्वादिति भावः। किञ्च गुरुत्वादायास्य फलं वाच्यमित्याह। गुरुतरेति। तर्हि अस्तीश्वरस्यापि प्रवृत्तिः
स्वार्थेत्यत आह। यदीयमपीति। स्वार्थत्वे प्रवृत्त्यभावः पूर्वोक्तः
स्यादित्यर्थः। ईश्वरः प्रेक्षावान्न भवतीत्याशङ्क्य श्रुतिविरोधमाह। अथे-
त्यादिना। बुद्धेरपराधो विवेकाभावः॥
उक्तन्यायस्य राजलीलाया व्यभिचार इति सिद्धान्तसूत्रं व्याचष्टे।

नभिसन्धाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति, यथा चोच्छ्वासप्रश्वासादयोऽनभिसन्धाय बाह्यं किञ्चित् *प्रयोजनान्तरं स्वभावादेव भवन्ति, एवमीश्वरस्याप्यनपेक्ष्य किञ्चित् प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति। न हीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः श्रुतितो वा सम्भवति, न च स्वभावः पर्यनुयोक्तुं शक्यते। यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरम्भेवाभाति तथापि परमेश्वरस्य लीलैव केवलेयं अपरिमितशक्तित्वात्। यदि नाम लोके लीलास्वपि किञ्चित् सूक्ष्मं प्रयोजनं उत्प्रेक्षेत तथापि नैवात्र किञ्चित् प्रयोजनमुत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः। नाप्यप्रवृत्तिः उन्मत्तप्रवृत्तिर्वा सृष्टिश्रुतेः सर्वज्ञश्रुतेश्च। न चेयं

---

तुशब्देनेति। व्यतिरिक्तं लीलातिरिक्तं, क्रीडारूपा विहारा येषु रम्यदेशेषु तेष्वित्यर्थः। कदाचिद्राजादीनां लीलाया अपि किञ्चित् फलं सुखोल्लासादिकं सम्भाव्येत तथापि निश्वासादौ प्रेक्षावत्प्रवृत्तित्वमस्ति न तु तस्य तच्चोद्देश्यं फलं किञ्चिदस्तीति व्यभिचारस्थलान्तरमाह। यथा चेति। प्राणस्य स्वभावश्चलत्वं प्रारब्धं वा उच्छ्वासादिहेतुः, ईश्वरस्य स्वभावः कालकर्मसहितमाया। नन्वीश्वरस्य जगद्रचनायाः केवललीलात्वं किमित्युच्यते फलमेव किञ्चित् कल्प्यतां तत्राह। नहीति। आप्तकामत्वव्याघातादित्यर्थः। नन्वीश्वरस्तूष्णीं किमिति न तिष्ठति किमिति स्वस्याफलां परेषां दुःखावहां सृष्टिं करोति तत्राह। न च स्वभाव इति। कालधर्मादिसामग्र्यां सत्यां सृष्टेरपरिहार्यत्वादित्यर्थः। यदुक्तं गुरुतरायासत्वात् फलं वाच्यमिति तत्र हेत्वसिद्धिमाह।

---

* प्रयोजनमिति वर्ध०।

परमार्थविषया सृष्टिश्रुतिः, अविद्याकल्पितनामरूपव्यवहारगो-
चरत्वात् ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि न प्रस्मर्तव्यं॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति॥ ३४॥

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखन-
न्यायेन प्रतिज्ञातस्यार्थस्य द्रढीकरणाय। नेश्वरो जगतः का-
रणमुपपद्यते, कुतः वैषम्यनैर्घृण्यप्रसङ्गात्। कांश्चिदत्यन्तसुख-
भाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः करोति
पश्वादीन् *कांश्चिन्मध्यमभाजो मनुष्यादीनित्येवं विषमां सृष्टिं
निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यव-
धारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत। तथा खल-
जनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्

---

यद्यपीत्यादिना। अल्पप्रवृत्तेरपि फलं वाच्यं लोके तथा दर्शनादि-
त्यादितर्कस्यागमबाधमाह। यदि नामेति। सृष्टिश्रुतेरप्रवृत्तिर्नास्ति,
सर्वज्ञत्वश्रुतेरुन्मत्तता नास्तीति विभागः स्वप्नसृष्टिवदस्याः सृष्टेर्मा-
यामात्रत्वान्न फलापेक्षेत्याह। न चेयमिति। न च निष्फलसृष्टि-
श्रुतीनामानर्थक्यं सफलब्रह्मधीशेषत्वेनार्थवत्त्वादित्युक्तं न विस्मर्तव्य-
मित्यर्थः॥

वैषम्यनैर्घृण्ये न। निर्दोषाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो वि-
षयः, स किं यो विषमकारी स दोषवानिति न्यायेन विरुध्यते न
वेति सन्देहे पूर्वत्र लीलया यत्स्रष्टृत्वमुक्तं तदेव कर्मादिसापेक्षस्य
न युक्तं अनीश्वरत्वापत्तेः, निरपेक्षत्वे रागादिदोषापत्तेरित्याक्षेपस-
ङ्गत्या पूर्वपक्षयति। पुनश्चेत्यादिना। ब्रह्मैव जगत्कारणमिति जन्मा-

---

*कांश्चिन्मध्यमभोगभाज इति वर्ध० सो० का०।

ञ्जीपसंहरणाच्च प्रसज्येत, तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः
रणमित्येवं प्राप्ते ब्रूमः। वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते,
ात् सापेक्षत्वात्। यदि हि निरपेक्षः केवल ईश्वरो वि-
ं सृष्टिं निर्मिमीते स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यञ्च,
तु निरपेक्षस्य निर्मातृत्वमस्ति, सापेक्षो हीश्वरो विषमां
ष्टिं निर्मिमीते। किमपेक्षत इति चेत्, धर्माधर्मावपेक्षत इति
ामः। अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति
यमीश्वरस्यापराधः। ईश्वरस्तु पर्ज्जन्यवत् द्रष्टव्यः। यथा
ि पर्ज्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्री-
इयवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि
ारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं
ारणं भवति, देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासा-
ारणानि कर्माणि कारणानि भवन्ति, एवमीश्वरः सापेक्षत्वान्न
वैषम्यनैर्घृण्याभ्यां दूष्यति, कथं पुनरवगम्यते सापेक्ष ईश्वरो

---

दिसूत्रे प्रतिज्ञातोऽर्थः। पृथग्जनः पामरः, निरवद्यं निरञ्जनमिति श्रुतिः, न मे द्वेष्योऽस्ति न प्रिय इति स्मृतिः, स्वच्छत्वादित्यादिपदेन कूटस्थत्वग्रहः, स्वच्छत्वादिश्चासावीश्वरस्वभावश्चेति विग्रहः, निमित्तमनपेक्ष्य विषमकारित्वे वैषम्यादिदोषः स्यान्न त्वनपेक्षत्वमीश्वरस्यास्तीति सिद्धान्तयति। एवं प्राप्ते इत्यादिना। न च सापेक्षत्वे अनीश्वरत्वं, सेवामपेक्ष्य फलदातरि राज्ञीश्वरत्वानपायात्। ननु तर्हि धर्माधर्माभ्यामेव विचित्रा सृष्टिरस्तु किमीश्वरेणेत्यत आह। ईश्वरस्तु पर्ज्जन्यवदिति। साधारणहेतुसहितस्यैवासाधारणहेतोः कार्यकारित्वान्नेश्वर-

नीचमध्यमोत्तमं संसारं निर्मिमीत इति। तथा हि दर्शयति श्रुतिः, 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति च। स्मृतिरपि प्राणिकर्मविशेषापेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वञ्च दर्शयति 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं' इत्येवंजातीयका ॥

## न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इति प्राक् सृष्टेरविभागावधारणान्नास्ति कर्म यदपेक्षा विषमा सृष्टिः स्यात्। सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म कर्मापेक्षश्च शरीरादिविभाग इति इतरेतराश्रयत्वं प्रसज्येत। अतो विभागादूर्द्ध्वं कर्मापेक्ष ईश्वरः प्रवर्त्ततां नाम, प्राक् तु विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत्, नैष दोषः,

---

वैयर्थ्यं, अन्यथा पर्जन्यवैयर्थ्यप्रसङ्गादिति भावः। यं जनमुन्निनीषते ऊर्द्ध्वं नेतुमिच्छति तं साधु कारयति, एष ईश्वर इत्यन्वयः। न च कञ्चिज्जनं साधु कञ्चिदसाधु कर्म कारयतो वैषम्यं तदवस्थमिति वाच्यं, अनादिपूर्वार्जितसाध्वसाधुवासनया स्वभावेन जनस्य तत्तत्कर्मसु प्रवृत्तावीश्वरस्य साधारणहेतुत्वात्, अतोऽनवद्य ईश्वर इति भावः॥

प्रथमसर्गस्य वैषम्यहेतुकर्माभावादेकरूपत्वं स्यात् तथा तदुत्तर... समाधत्ते सूत्रकारः। न कर्मेति। प्रथमसृष्टे

अनादित्वात् संसारस्य। भवेदेष दोषो यद्यादिमानयं संसारः स्यात्, अनादौ तु संसारे वीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते। कथं पुनरवगम्यते अनादिरेष संसार इति, अत उत्तरं पठति॥

## उपपद्यते चाप्युपलभ्यते च॥ ३६॥

उपपद्यते च संसारस्यानादित्वं, आदिमत्त्वे हि संसारस्य अकस्मादुद्भूतेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः अकृताभ्यागमप्रसङ्गश्च, सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात्। न चेश्वरो वैषम्यहेतुरित्युक्तं। न चाविद्या केवला वैषम्यस्य कारणं एकरूपत्वात्। रागादिक्लेशवासनाक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात्। न च कर्मान्तरेण शरीरं सम्भवति, न च शरीरमन्तरेण कर्म सम्भवतीतीतरेतराश्रयदोषप्रसङ्गः। अनादित्वे तु वीजाङ्कुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति। उपलभ्यते च

---

पश्चाद्भाविकर्मकृतं वैषम्यमित्याशङ्क्यान्योन्याश्रयमाह। सृष्ट्युत्तरेति। आद्या सृष्टिरित्युपलक्षणं आदावेकरूपत्वे मध्ये विषमकर्मोत्पत्तौ हेत्वभावेनोत्तरसृष्टीनामपि तुल्यत्वस्य दुर्वारत्वादिति द्रष्टव्य। परिहारः सुगम, प्रथमसर्गः कश्चिन्नास्तीत्यत्र प्रमाणं पृच्छति। कथ पुनरिति॥

उपपत्तिसहितश्रुत्यादिकं प्रमाणमिति सूत्रव्याख्यया दर्शयति। उपपद्यते इति। हेतु विनैव सर्गाङ्गीकारे ज्ञानकर्मकाण्डवैयर्थ्यं स्यादित्यर्थं। ननु सुखादिवैषम्ये ईश्वरोऽविद्या वा हेतुरस्त्वित्याशङ्क्य क्रमेण दूषयति। नचेश्वर इत्यादिना। कस्तर्हि हेतुस्तत्राह। रागादीति। रागद्वेषमोहाः क्लेशास्तेषां वासनाभिराक्षिप्तानि कर्माणि धर्माधर्मात्मिश्ररूपाणि, तदपेक्षा त्वविद्या सुखादिसर्गवैषम्यहेतुः, तस्मा-

संसारस्यानादित्वं श्रुतिस्मृत्योः। श्रुतौ तावत् 'अनेन जीवेनात्मना' इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिः संसार इति दर्शयति। आदिमत्त्वे तु ततः *प्रागनवधारितः प्राणः स कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत। न च धारयिष्यतीत्यतोऽभिलप्येत, अनागताद्धि सम्बन्धादतीतः सम्बन्धो बलीयान् भवति अभिनिष्पन्नत्वात्। 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति। स्मृतावप्यनादित्वं संसारस्योपलभ्यते। 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा' इति। पुराणे चातीतानामनागतानाञ्च कल्पानां न परिमाणमस्तीति स्थापितं॥

---

दविद्यासहकारित्वेन क्लेशकर्मणामनादिप्रवाहोऽङ्गीकर्तव्य इति भावः। किञ्च सृष्टेः सादित्वे प्रथमशरीरस्योत्पत्तिर्न सम्भवति हेत्वभावात्, न च कर्म हेतुः शरीरात् प्राक् कर्मासम्भवात्, तस्मात् कर्मशरीरयोरन्योन्याश्रयपरिहाराय सर्वैरेव वादिभिः संसारस्यानादित्वमङ्गीकार्यमित्याह। न चेति। सर्गप्रमुखे सृष्ट्यादौ प्रागधारितप्राणोऽपि, सन् प्रत्यगात्मभाविधारणनिमित्तेन जीवशब्देनोच्यतामित्याशङ्क्याह। न च धारयिष्यतीति। 'गृहस्थः सदृशीं भार्यामुपेयात्' इत्यादावगत्या भाविवृत्त्याश्रयणमिति भाव। अस्य संसारवृक्षस्य स्वरूपं सत्यं मिथ्या वेत्युपदेशं विना नोपलभ्यते, ज्ञानं विनान्तोऽपि नास्ति नाप्यादिरुपलभ्यते असत्त्वादेव न च सम्प्रतिष्ठा मध्ये स्थितिः दृष्टनष्टस्वरूपत्वादिति गीतावाक्यार्थः। संसारस्यानादित्वेऽपि मिथ्यात्वादेकमेवाद्वितीयमित्यवधारणमुपपन्नं। तस्मान्निरवद्ये ब्रह्मणि समन्वयाविरोध इति सिद्धं॥

---

* प्रागधारितेति टी० वर्ध० सो० का०।

तद्यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति, तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति, तथा चामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते, तस्मात्तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति। यच्च नित्यत्वे कारणं तैरुक्तं 'सदकारणवन्नित्यं' [वै० अ०४।आ०१।सू०१] इति, तदप्येवं सत्यणुषु न सम्भवति, उक्तेन प्रकारेण कारणवत्त्वोपपत्तेः, यदपि नित्यत्वे द्वितीयं कारणमुक्तं 'अनित्यमिति च विशेषतः प्रतिषेधाभावः' [वै० अ० ४।आ०१।सू० ४] इति, तदपि नावश्यं परमाणूनां नित्यत्वं साधयति, असति हि यस्मिन् कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः समासो नोपपद्यते न पुनः परमाणुनित्यत्वमेवापेक्ष्यते, तत्रास्त्येव नित्यं परमकारणं ब्रह्म। न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति,

---

यदपीति। कार्ये नित्यत्वप्रतिषेधव्यवहारमङ्गीकृत्य ब्रह्मणि प्रतियोगिप्रसिद्धिरुक्ता, वस्तुतस्तु विशेषव्यवहार एवासिद्धः, कारणनित्यत्वस्य प्रमाणान्तरेण ज्ञानं विना कार्यमनित्यमिति व्यवहारायोगादित्याह। न च शब्देति। यदि प्रमाणान्तरं कारणनित्यत्वे स्यात्तदायं व्यवहारः समूलो भवति ततो मूलज्ञानात् प्रागव्यवहारमात्रान्न वस्तुसिद्धिः वटे यक्षव्यवहारादपि तत्सिद्धिप्रसङ्गान्मूलज्ञाने तु तेनैव विशेषसिद्धेर्व्यवहारोपन्यासवैयर्थ्यमिति भावः। एवं परमाणुनित्यत्वे काणादसूत्रद्वयं निरस्य तृतीयं निरस्यति। यदपीति। सतामणूनां दृश्यमानस्थूलकार्याणां प्रत्यक्षेण कारणाज्ञानमविद्येति यदि सूत्रार्थं तर्हि प्रत्यक्षाकारणत्वं नित्यत्वे हेतुः स्यात् तन्न द्व्यणुके व्यभिचारादित्यर्थः। यद्यारम्भकद्रव्यशून्यत्वं हेतुविशेषणं तदा विशेष्यवैयर्थ्यं चापद्येत पुनरुक्तिश्चेत्याह। यद्येत्यादिना। परमाणवो नित्या नाशकानुपलम्भादात्म-

प्रमाणान्तरसिद्धयोः शब्दार्थयोर्व्यवहारावतारात्। यदपि नित्यत्वे तृतीयं कारणमुक्तं 'अविद्या च' [वै०अ०४।आ०१।सू०५] इति; तद्यद्येवं विशेषेत सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेणाग्रहणमविद्येति, ततो द्व्यणुकनित्यताप्यापद्येत। अथाद्रव्यत्वे सतीति विशेष्येत तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत, तस्य च प्रागेवोक्तत्वात् 'अविद्या च' इति पुनरुक्तं स्यात्, अथापि कारणविभागात् कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतोरसम्भवोऽविद्या सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत, नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनंष्टुमर्हतीति नियमोऽस्ति, संयोगसचिवे हि अनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमाने एतदेवं स्यात्, यदा त्वपास्तविशेषं

---

वदिति सूत्रार्थमाशङ्कते। अथापीति। तन्त्वाद्यवयवानां विभागान्नाशाद्वा पटादिनाशो दृष्टः तच्च द्वयं निरवयवाणूनां नास्तीति नित्यत्वमित्यर्थः। परिणामवादमाश्रित्याणूनां नाशकं किञ्चित् सम्भवति इति परिहरति। नेति। अवयवानां संयोगेन द्रव्यान्तरोत्पत्तिरारम्भ इति यदि मतं स्यात् तदा द्रव्यविनाशे द्वाभ्यामेवेति नियमः स्यान्नारम्भे मानमस्ति संयुक्ततन्त्वन्यपटादर्शनादतः कारणमेव स्वतो निर्विशेषं विशेषवदवस्थात्मना कार्यमित्यनुभवबलादास्थेयं। तथा चाणूनामप्यविद्यापरिणामरूपाणां प्रलयनिमित्तेन कालादिना पिण्डात्मकस्वरूपतिरोभावेन कारणभावापत्तिर्विनाश उपपद्यते। यथाग्निसम्पर्कात् घृतकाठिन्यमवयवसंयोगस्यावयवानाञ्च नाशं विनैव लीयते तद्वत्, न च काठिन्यस्य संयोगविशेषत्वेन गुणत्वात् द्रव्यनाशेऽनुदाहरणत्वमिति शङ्क्यं, गुणवद्द्रव्यस्यापि कुतश्चिद्विनाश इत्यंशेनोदाहरणाद्गुणपरि-

सामान्यात्मकं कारणं विशेषवद्वस्थान्तरमापद्यमानं आरम्भकमभ्युपगम्यते तदा घृतकाठिन्यविलयनवन्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते, तस्मात् रूपादिमत्त्वात् स्यादभिप्रेतविपर्ययः परमाणूनां, तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १५ ॥

## उभयथा च दोषात् ॥ १६ ॥

गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी, रूपरसस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः, स्पर्शगुणः सूक्ष्मतमो वायुरित्येवमेतानि चत्वारि भूतानि उपचितापचितगुणानि स्थूलसूक्ष्मतारतम्योपेतानि च लोके लक्ष्यन्ते, तद्वत् परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन् न वा, उभयथापि च दोषानुषङ्गोऽपरिहार्य एव स्यात्। कल्प्यमाने तावदुपचितापचितगुणत्वे उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः।

---

भावाभावास्वातन्त्र्यात्। वस्तुतस्तु घृतं कठिनं द्रवमित्यनुस्यूतघृतपरिणामविशेषो द्रव्यमेव काठिन्यं। न च द्रव्यत्वेऽपि अवयवविभागादेव तस्य नाश इति वाच्यं, घृतस्य परिणामिन एकत्वेन विभागासम्भवात्, परमाणुकाठिन्यनाशे तदसम्भवाच्च इति भावः। किञ्च प्रलये नासीद्राजा नान्यत् किञ्चनेत्यमुना नाशसिद्धि, तस्मान्नेषा परमकारणत्वमित्युपसंहरति। तस्मादिति॥

यद्यस्मादधिकगुणवत्तत्तस्मात स्थूलमिति व्याप्तिमुक्त्वा विकल्पयति। तद्वदिति। पार्थिवः परमाणु अधिकगुणस्तत एकैकन्यूनगुणा जलादि-

नचान्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्येत, कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्। अकल्प्यमाने तु उपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत् सर्वे एकैकगुणा एव कल्प्येरन् ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात् अप्सु रूपस्पर्शयोः पृथिव्याञ्च रसरूपस्पर्शानां, कारणगुणपूर्वकत्वात् कार्यगुणानां। अथ सर्वे चतुर्गुणा एव कल्प्येरन् ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात् तेजसि गन्धरसयोर्वायौ च गन्धरूपरसानां, न चैवं दृश्यते, तस्मादप्यनुपपन्नः परमाणुकारणवादः॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा॥१७॥

प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनिबद्धः, अयन्तु परमा-

---

पचयात् स्थौल्यादित्यर्थः। पार्थिवोऽणुराप्यात् स्थूलः, अधिकगुणत्वात् घटवदित्येवं प्रयोक्तव्यः। अप्रयोजकत्वं निरस्यति। न चान्तरेणेति। दृष्टविरोधः स्यादिति भावः। नेति पक्षे सर्वेषां अणूनां साम्यार्थमेकैकगुणवत्त्वं वा स्याच्चतुर्गुणवत्त्वं वा, उभयथापि दोषमाह। अकल्प्यमाने त्वित्यादिना॥

न केवलमनुवादस्यायुक्तत्वादुपेक्षा किन्तु शिष्टबहिर्भूतत्वात् पन्थतोऽर्थतश्चाग्राह्यत्वमित्याह। अपरिग्रहाच्चेति। चकारार्थं प्रपञ्चयितुमुपक्रमते। अपि चेति। अत्यन्तभेदज्ञापकमाह। भिन्नलक्षणानिति। द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वजातयो लक्षणानि गुणाश्रयत्वाद्युपाधयो वा, निर्गुणत्वे सति जातिमदक्रियात्वं गुणलक्षणं, संयोग-

णकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः । अपि च वैशेषिकाः तन्त्रार्थभूतान् षट् पदार्थान् द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति, यथा मनुष्योऽश्वः शश इति, तथात्वञ्चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युप*गच्छन्ति तन्नोपपद्यते कथं, यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामप्यत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति, अथ च भवति द्रव्याधीनत्वं गुणादीनां । ततो द्रव्यभावे भावात् द्रव्याभावे चाभावात् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति । यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग्भवति तद्वत् ।

---

विभागयोर्निरपेक्षकारणं कर्म नित्यमेकं, अनेकसमवेतं सामान्यं नित्यद्रव्यवृत्तयो विशेषा, नित्यः सम्बन्धः समवायः इति भिन्नानि लक्षणानि, तैर्मिथोऽत्यन्तभेदसिद्धिरित्यर्थः । तथात्वमत्यन्तभिन्नत्वं तेन विरुद्धो यो धर्मधर्मिभावः गुणादयो न द्रव्यधर्माः स्युः ततोऽत्यन्तभिन्नत्वाच्छशकुशादिवदित्यर्थः । भेदबाधकमुपन्यस्याभेदमाह । अथ च भवतीति । गुणादिषु तदधीनत्वं तावदन्वयव्यतिरेकसिद्धं, तथा च गुणादयो द्रव्याभिन्नाः द्रव्याधीनत्वात् यद्यस्माद्भिन्नं तत् तदधीनं यथा शशभिन्नः कुश इत्यर्थः । अभेदे द्रव्य गुण इति शब्दप्रत्ययभेदः कथं तत्राह । द्रव्यमिति । कल्पितभेदोऽप्यस्तीत्याशयः । अन्यथात्यन्तभेदवदत्यन्ताभेदेऽपि धर्मधर्मित्वायोगादिति मन्तव्य । अस्तु गुणादीना द्रव्य-

---

* गच्छन्ति धर्ममित्यधिकपाठः का॰ वर्ध॰ ।

तथा सति साङ्ख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्।
नन्वग्नेरन्यस्यापि धूमस्याग्न्यधीनत्वं दृश्यते, सत्यं दृश्यते, भेद-
प्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते, इह तु शुक्लः
कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन
तेन विशेषेण प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेद-
प्रतीतिरस्ति, तस्माद्द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्य-
विशेषसमवायानां द्रव्यात्मकता व्याख्याता। गुणादीनां द्रव्या-
धीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यदुच्येत तत्पुनरयुतसि-
द्धत्वमपृथग्देशत्वं वा स्यादपृथक्कालत्वं वा अपृथक्स्वभा-
वत्वं वा, सर्वथापि नोपपद्यते। अपृथग्देशत्वे तावत् स्वाभ्युपग-
मो विरुध्येत कथं, तन्त्वारब्धो हि पटः तन्तुदेशोऽभ्युपगम्यते
न तु पटदेशः, पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्यु-
पगम्यन्ते न तन्तुदेशाः। तथा चाहुः 'द्रव्याणि द्रव्यान्त-
रमारभन्ते गुणाश्च गुणान्तरं' [वै०अ०१।आ०१।सू०१०]

---

तादात्म्यमिति वदन्तं तार्किकम्मन्यं प्रत्याह। तथा सतीति। साङ्ख्योऽत्र
वेदान्ती ग्राह्यः। यद्वा कापिलस्यापि तादात्म्यसिद्धान्त इति साङ्ख्य-
ग्रहणम्। यद्यपि तदधीनत्वं तद्धर्मत्वं तच्च धूमे नास्ति धर्मिं विनापि
भावात्, तथापि तत्कार्यत्वं तदधीनत्वं मत्वा व्यभिचारं शङ्कते। नन्विति।
सत्यमिति। तथापि तादात्म्येन प्रतीय-
कार्यत्वमन्यत्वं चाङ्गीकरोति। सत्यमिति। तथापि तादात्म्येन प्रतीय-
मानत्वस्य हेतोर्विवक्षितत्वान्न व्यभिचार इत्याशयः। अस्य हेतोरन्यथा
सिद्धिमाशङ्कते। गुणादीनामिति। गुणादीनां द्रव्येणाभेदाभावेऽपि
अयुतसिद्धत्वेन तादात्म्यप्रतीतिसिद्धिरित्यर्थः। दूषयितुं विकल्पयति।

इति। तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटमारभन्ते, तन्तुगताश्च गुणाः शुक्लत्वादयः कार्यद्रव्ये पटे शुक्लत्वादिगुणान्तरमारभन्ते इति हि तेऽभ्युपगच्छन्ति। सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत। अथापृथक्कालत्वं अयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत। *तथाऽपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः सम्भवति, तस्य तादात्म्येनैव प्रतीयमानत्वात्। युतसिद्धयोः सम्बन्धः संयोगोऽयुतसिद्धयोऽस्तु समवाय इत्ययमभ्युपगमो मृषैव तेषां, प्राक् सिद्धस्य कार्यात् कारणस्यायुतसिद्धत्वानुपपत्तेः। †अथान्यतरापेक्ष एवायमभ्युपगमः स्यादयुतसिद्धस्य कार्यस्य कारणेन सम्बन्धः

---

तत्पुनरिति। शौक्लस्य पटनिष्ठत्वात् पटस्य तन्तुदेशत्वात् पटशौक्ल्ययोरपृथक्देशत्वाभावाच्छुक्लः पट इति सामानाधिकरण्यप्रतीतिर्न स्यादित्याद्यं दूषयति। अपृथग्देशत्व इति। काणादसूत्रद्वयं व्याचष्टे। तन्तवो हीति। स्वभावो हि स्वरूपं तस्यापृथक्त्वेऽस्मदिष्टाऽभेदसिद्धिरित्याह। अपृथक्स्वभावत्व इति। अभेदे युक्तिमाह। तस्येति। गुणस्येत्यर्थः। एवं षट् पदार्थाः अत्यन्तभिन्ना इति सिद्धान्तोऽनुभवविरोधेन दूषितः। सिद्धान्तान्तरं दूषयति। युतेति। अयुतसिद्धत्वं किमुभयोरुतान्यतरस्य,नाद्य इत्याह। प्रागिति। द्वितीयमाशङ्क्य दूषयति। अथेत्यादिना। कारणस्य पृथक्सिद्धत्वेऽपि कार्यमपृथक्सिद्धमित्युक्तमुपेत्य सम्बन्धोऽसिद्धस्य सिद्धस्य वेति विकल्प्याद्यं दूषयित्वा द्वितीयं शङ्कते। सिद्धं भूत्वेति। सतोरप्राप्तयोः प्राप्तिः संयोग इत्यभ्युपगमात् तन्तुपटयोरपि संयोगापत्तिरित्यपसिद्धान्तः स्यादित्यर्थः। सद्योजात-

---

* तथेति का० वर्ध० नास्ति। † अथेति का० वर्ध० नास्ति।

समवाय इति। एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन सम्बन्धो नोपपद्यते द्वयायत्तत्वात् सम्बन्धस्य। सिद्धं भूत्वा सम्बध्येत इति चेत्, प्राक् कारणसम्बन्धात् कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते इतीदमुक्तं दुरुक्तं स्यात्। यथा चोत्पन्नमात्रस्याक्रियस्य कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैः सम्बन्धः संयोग एवाभ्युपगम्यते न समवायः, एवं कारणद्रव्येणापि सम्बन्धः संयोग एव स्यात् न समवायः, नापि संयोगस्य समवायस्य वा सम्बन्धस्य सम्बन्धिव्यतिरेकेणास्तित्वे किञ्चित् प्रमाणमस्ति। सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवाय-

---

पटस्य क्रियाभावात् कथं संयोगस्तत्राह। यथेति। किञ्च सम्बन्धस्यापि सम्बन्धेनावस्थानादसम्बन्धस्यानियामकत्वात् सम्बन्धोऽपि दुर्निरूप इत्याह। नापीति। सम्बन्धः सम्बन्धिभिन्नः, तद्विलक्षणशब्दधीगम्यत्वाद्वस्त्वन्तरवदिति शङ्कते। सम्बन्धीति। कल्पितभेदसाधने सिद्धसाधनता वस्तुभेदसाधने तु व्यभिचार इति समाधत्ते। नैकत्वेऽपीति। स्वरूपेणैव मनुष्यादिशब्दभावे च पुत्राद्यपेक्षया पित्रादिविलक्षणशब्दधीगम्यो भवति न च भिद्यत इति व्यभिचार इत्यर्थः। फलितमाह। इत्युपलब्धीति। विलक्षणशब्दधीगम्यत्वादिलुपलब्धिघटितेन लक्षणेन लिङ्गेन प्राप्तस्य वस्त्वन्तरस्य संयोगादेः सम्बन्धिव्यतिरेकेणानुपलब्धेरभावो निश्चीयत इत्यर्थः। न ह्यङ्गुलिद्वयस्य नैरन्तर्यातिरेकेण संयोग उपलभ्यते, समवायस्तु न कस्यापि क्वचिदप्यनुभवमारोहयतीति भावः। सम्बन्धस्य सम्बन्धिभेदे सम्बन्धिनः सदा सत्त्वात् सम्बन्धबुद्धिप्रसङ्ग इति शङ्कां निषेधति। नापीति। परापेक्षया नैरन्तर्यावस्थायामङ्गुल्याः रूपद्वयमिनोऽस्य सम्बन्धधीर्न सत इत्युक्तमित्यर्थः।

शब्दप्रत्ययदर्शनात् तयोरस्तित्वमिति चेत् न, एकत्वेऽपि स्वरूप-बाह्यरूपापेक्षयाऽनेकशब्दप्रत्ययदर्शनात्। यथैकोऽपि सन् देवदत्तो लोके स्वरूपं सम्बन्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति। यथा चैकापि सती रेखा स्थानान्यत्वेन निवेश्यमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति तथा सम्बन्धिनोरेव सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वं न व्यतिरिक्तवस्त्वस्तित्वेन दृष्टोपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य। नापि सम्बन्धिविषयत्वे सम्बन्धशब्दप्रत्यययोः सन्ततभावप्रसङ्गः, स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात्। तथाण्वात्ममनसामप्रदेशत्वान्न संयोगः

---

पूर्वपरमाण्वोः संयोगनिरासेन द्व्यणुकादिसृष्टिर्निरस्ता, संप्रत्यदृष्टवदात्मनाणूनां संयोगोऽणुषु क्रियाहेतुरात्ममनसोः संयोगो बुद्ध्याद्यसमवायिकारणं निरस्यते। तथाण्वात्मेति। निरस्तमपि कल्पितप्रदेशपक्षमतिप्रसङ्गाख्यदोषान्तरं वक्तुं पुनरुद्भावयति। कल्पिता इति। कल्पनमूहः ऊहितार्थाः सन्तोऽसन्तो वा द्वितीयेन संयोगसिद्धिः सत्त्वाभावयोरेकत्र ह्यवच्छेदकासत्त्वादाद्ये तूहमात्रेण सर्वार्थसिद्धिप्रसङ्गः, ऊहस्य स्वाधीनत्वात् प्रभूतत्वं निरवधित्वं तत्सम्भवाच्चेत्यर्थः। यद्यूहात् सर्वसिद्धिस्तदा पदार्थबन्धमुक्तिनियमा लुप्येरन्नित्याह। न चेत्यादिना। संयोगं दूषयित्वा समवायं दूषयति। किञ्चान्यदिति। तन्मते दूषणान्तरं उच्यत इत्यर्थः। संक्षेप- संग्रहः। यत एकाकर्षणेनापराकर्षणं तस्यानुपपत्तिरित्यर्थः। द्व्यणुकं निरवयवासमवेतं सावयवत्वादाकाशासमवेतभूमिवदिति भावः। ननु द्व्यणुकस्यासमवेतत्वे सदा-

सम्भवति, प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात्। कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेत् न, अविद्यमानार्थस्य कल्पनायां सर्वार्थसिद्धिप्रसङ्गात्, इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमे हेत्वभावात्, कल्पनायाश्च स्वायत्तत्वात्, प्रभूतत्वसम्भवाच्च। न च वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्योऽन्येऽधिकाः शतं सहस्रं वार्था न कल्पितव्या इति निवारको हेतुरस्ति, तस्माद्यस्मै यस्मै यद्यद्रोचते तत्तत् सिध्येत्, कश्चित्कृपालुः प्राणिनां दुःखबहुलः संसार एवं माभूदिति कल्पयेत्, अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत्, कस्तयोर्निवारकः स्यात्। किञ्चान्यद्द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः, न ह्याकाशस्य पृथिव्यादीनाञ्च जतु-

---

श्रितत्वं न स्यात्, सम्बन्धं विना तदयोगात्, न च संयोगादाश्रितत्वं कार्यद्रव्यस्य प्रकृत्य संयोगादिति शङ्कते। कार्येति। प्रकृतिविकारयोरभेदादाश्रयाश्रयिभावानुपपत्तिरिष्टेति परिहरति। नेति। भेदात् तद्भाव इति वदन्तं प्रत्याह। इतरेतराश्रयत्वादिति। कथं तर्हि कार्यस्य कारणाश्रितत्वव्यवहारः कल्पितभेदादित्याह। कारणस्यैवेति। परमाणूनां निरवयवत्वमप्ययुक्तमित्याह। किञ्चेति। परमाणवः सावयवाः अल्पत्वात् घटवदिपक्षे तेषां दिग्भेदावधित्वं न स्यादात्मवदित्यर्थः। ननु परमाण्वपेक्षया योऽयं प्राची दक्षिणेत्यादिदिग्भेदव्यवहारस्तदवधित्वेन येऽवयवास्त्वयोच्यन्ते त एव परमाणवस्तेऽपि सावयवाश्चेत् तदवयवा एवेति, एवं यतः परं न विभागः स एव निरवयवः परमाणुरिति शङ्कते। यांस्त्वमिति। परिहरति। न स्थूलेति। अयमर्थः यत्सर्वा-

काष्ठवत् संश्लेषोऽस्ति, कार्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यः समवाय इति चेत् न, इतरेतराश्रयत्वात्। कार्यकारणयोर्हि भेदसिद्धावाश्रिताश्रयभावसिद्धिराश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः कुण्डवदरवदिति इतरेतराश्रयता स्यात्। नहि कार्यकारणयोर्भेदः आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते, कारणस्यैव संस्थानमात्रं कार्यमित्यभ्युपगमात्। किञ्चान्यत् परमाणूनां परिच्छिन्नत्वात् यावन्त्यो दिशः षडष्टौ दश वा तावद्भिरवयवैः सावयवास्ते स्युः सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत। यांस्त्वं दिग्भेदभेदिनोऽवयवान् कल्पयसि त एव मम परमाणव इति चेत् न, स्थूलसूक्ष्मतारतम्यक्रमेणापरमकारणाद्विनाशोपपत्तेः। यथा पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभू-

---

त्मना विभागायोग्यं वस्तु स परमाणुरिति यद्युच्येत तर्हि ब्रह्मण एव परमाणुसंज्ञा कृता स्यात्, तदन्यस्याल्पस्य दिग्भावाद्यत्वेनावयवविभागावश्यम्भावात्, यदि पृथिव्यादिजातीयाल्पपरिमाणविश्रान्तिभूमिर्यः स परमाणुरित्युच्येत तर्हि तस्य न मूलकारणत्वं विनाशित्वात् घटवत्, न च हेत्वसिद्धिः, अणवो विनाशिनः पृथिव्यादिजातीयत्वात् घटवदिति साधनादिति, सम्प्रति निरवयवद्रव्यस्य नाशहेत्वभावात् आत्मवदविनाश इत्याशङ्क्य पूर्वोक्तं परिहारं स्मारयति। विनश्यन्त इत्यादिना। यद्यातिरिक्तस्य आश्रयानिकत्वाच्च द्रव्यस्य निरवयवत्वमसिद्धं निमित्तादृष्टादिनाशाद्विनाशः प्रलये सम्भवति, मुक्तौ ज्ञानादृष्टनाशे तत्कार्यगुणनाशसम्भव इति भाव। यदुक्तं यत्कार्यद्रव्यं तत्स-

तापि विनश्यति ततः सूक्ष्मं सूक्ष्मतरञ्च पृथिव्येकजातीयकं विनश्यति ततो द्व्यणुकं, तथा परमाणवोऽपि पृथिव्येकजातीयकत्वादिनश्येयुः। विनश्यन्तोऽप्यवयवविभागेनैव विनश्यन्तीति चेत् नायं दोषः, यतो घृतकाठिन्यविलयनवदपि विनाशोपपत्तिमवोचाम। यथा हि घृतसुवर्णादीनामविभज्यमानावयवानामपि अग्निसंयोगाद्द्रवभावापत्त्या काठिन्यविनाशो भवति, एवं परमाणूनामपि परमकारणभावापत्त्या मूर्त्यादिविनाशो भविष्यति, तथा कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेन भवति, क्षीरजलादीनामन्तरेणापि अवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात् तदेवमसारतरतर्कसन्दृब्धत्वादी-

---

योगसचिवानेकद्रव्यारब्धमिति तन्नेत्याह। तथा कार्यारम्भोऽपीति। कैवल्यं प्राधान्यं कार्यद्रव्यस्थितावपि हेतुत्वात् संयोगस्य क्षीरारम्भकसंयोगाद्दध्यारम्भकं न संयोगान्तरं, तथा च दध्यादौ व्यभिचारान्न व्याप्तिरित्यर्थः। किञ्च यत्कार्यद्रव्यं तद्द्व्यारब्धमित्येव व्याप्तिरस्तु लाघवान्न तु संयोगसचिवस्वन्यूनपरिमाणानेकद्रव्यारब्धमिति गौरवाद्दीर्घविस्तृतदुकूलारब्धरज्जौ न्यूनपरिमाणायां व्यभिचाराच्च। न च रज्जुर्न द्रव्यान्तरमिति वाच्यं, अवयवविभागविज्ञानाभावात्। किञ्च निरवयवद्रव्यत्वस्यैकात्मवृत्तित्वे लाघवान्न निरवयवानेकाणुसिद्धिः। यत्त्वणुत्वतारतम्यविश्रान्तिभूमित्वेन तत्सिद्धिरिति तन्न त्र्यणुकत्वेनोक्तत्रुटिषु विश्रान्तेः। न च त एव त्रुटिनामानो जगद्धेतव इति वाच्यं। पृथिवीत्वादिना सावयवत्वानित्ययोरनुमानात्। न चावयवत्वस्य क्वचित् विश्रान्तौ परमाणुसिद्धिः अविश्रान्तावनवस्थेति वाच्यं। मायायां ब्रह्मणि चावयवत्वविश्रान्तिसम्भवात्। अतो न किञ्चिदणुसद्भावे प्रमाणं, निरवयवानां संयोगसमवाययोरसम्भवात् समवेतद्व्यणुकाद्यारम्भकत्वायोग

श्वरकारणश्रुतिविरुद्धत्वाच्छ्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षास्मिन् परमाणुकारणवादे कार्याऽऽर्यैः श्रेयोऽर्थिभिरिति वाक्यशेषः ॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

वैशेषिकराद्धान्तो दुर्युक्तियोगाद्वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्य इत्युक्तं, सोऽर्द्धवैनाशिक इति वैनाशिकत्वसाम्यात् सर्ववैनाशिकराद्धान्तो नितरामनपेक्षितव्य इतीदमिदानीमुपपादयामः । स च बहुप्रकारः प्रतिपत्तिभेदाद्विनेयभेदाद्वा । तत्रैते त्रयो वादिनो भवन्ति, केचित् सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्व-

---

इत्यादि बाधकमुक्तमेव । सम्यक्परिग्रहाच्चेति सूत्रवाक्यशेषं पूरयन्नधिकरणार्थमुपसंहरति । तदेवमिति । तस्माद्भ्रान्तिमूलेन वैशेषिकमतेन वेदान्ततात्पर्यस्याविरोध इति सिद्धं ॥

वैशेषिकं निरस्य वैनाशिकं निरस्यति । समुदाय इति । परिमाणभेदेन देहादेराशुतरविनाशाङ्गीकारादर्द्धवैनाशिको वैशेषिकस्तस्य निरासानन्तरं सर्वक्षणिकवादी बुद्धिस्थो निरस्यत इति प्रसङ्गसङ्गतिमाह । वैशेषिकेति । नाभाव उपलब्धेरिति निरसनीयसिद्धान्तादत्र निरस्यति, सिद्धान्तस्य भेदं वक्तुं तत्सिद्धान्तं विभजते । स चेति । ननु सुगतप्रोक्तागमस्यैक्यात् कुतो बहुप्रकारता तत्राह । प्रतिपत्तीति । एकस्यैवागमव्याख्यातुः शिष्यस्यावस्थाभेदेन बुद्धिभेदात् मन्दमध्यमोत्तमधिया शिष्याणां वा भेदाद्बहुप्रकारत्वेत्यर्थः । तानेव प्रकारानाह । तत्रेति । सौत्रान्तिको वैभाषिको योगाचारो माध्यमिकश्चेति

शून्यत्ववादिन इति। तत्र ये सर्वास्तित्ववादिनो बाह्यमान्तरञ्च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं चित्तं चैत्तञ्च तांस्तावत् प्रति ब्रूमः। तत्र भूतं पृथिवी धात्वादयः, भौतिकं रूपादयश्चक्षुरादयश्च। चतुष्टये च पृथिव्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावास्ते पृथिव्यादिभावेन संहन्यन्त इति मन्यन्ते। तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः, तेऽप्याध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्त इति मन्यन्ते[सर्वदर्शनसं०पृ०२२। पं०१७]। तत्रेदमभिधीयते। योऽयमुभयहेतुक उभयप्रकारः

---

चत्वारः शिष्याः, तेष्वाद्ययोर्बाह्यार्थानां परोक्षत्वापरोक्षत्वविवादेऽप्यस्तित्वसम्मतिपक्षेस्तयोः सिद्धान्तमेकीकृत्य निरस्यत इत्याह। तत्र य सर्वास्तित्वेति। भूतं भौतिकं बाह्यं, चित्तचैत्तञ्च कामाद्यान्तरमिति विभागः। तत्र सन्दिह्यते किं मानमूलो भ्रान्तिमूलो वायं सिद्धान्त इति। तत्र प्रमाणमूल इति पूर्वपक्षयन् सिद्धान्तं तदीयं दर्शयति। तत्र भूतमिति। स्थिरः प्रपञ्चो ब्रह्महेतुक इति वेदान्तसिद्धान्तस्य मानमूलक्षणिकसिद्धान्तविरोधादसिद्धिः पूर्वपक्षफलं सिद्धान्ते तदविरोध इति ज्ञेयं। पृथिव्यादिभूतचतुष्टयं विषयेन्द्रियात्मकं भौतिकञ्च परमाणुसमुदाय एव नावयव्यन्तर इति मत्वा परमाणून् विभजते। चतुष्टये चेति। चतुर्विधा इत्यर्थः। खरः कठिनः तत्स्वभावाः पार्थिवाः परमाणवः स्निग्धा आप्याः उष्णास्तैजसाः ईरणश्चलनस्वभावो वायव्यानामिति। बाह्यसमुदायमुक्त्वाध्यात्मिकसमुदायमाह। तथेति। सविषयेन्द्रियाणि रूपस्कन्धः, विषयाणां बाह्यत्वेऽपि देहस्थेन्द्रियग्राह्यत्वादाध्यात्मिकत्वं, अहमहमित्यालयविज्ञानप्रवाहो विज्ञानस्कन्धः, सुखाद्यनुभवो वेदनास्कन्धः, गौरश्व इत्येवं नामविशिष्टसविकल्पकः प्रत्ययः संज्ञास्कन्धः, रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः। तत्र

समुदायः परेषामभिप्रेतोऽणुहेतुकस्य भूतभौतिकसंहतिरूपः स्कन्धहेतुकस्य पञ्चस्कन्धीरूपः, तस्मिन्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे तदप्राप्तिः समुदायभावानुपपत्तिरित्यर्थः। कुतः समुदायिनामचेतनत्वात्, चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात्, अन्यस्य च कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुरनभ्युपगमात्, निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमप्रसङ्गात्, आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् क्षणिकत्वाभ्युपगमाच्च निर्व्यापारत्वात् तत्प्रवृत्त्यनुपपत्तेः। तस्मात्

---

विज्ञानस्कन्धश्चित्तमात्मेति गीयते, अन्ये चत्वारः स्कन्धाश्चैत्तास्तेषां सङ्घात आध्यात्मिकः सकललोकयात्रानिर्वाहक इत्यर्थः। अवयवातिरिक्तावयव्यनुपलब्धेरवयवाः क्षिप्यन्ते यत् सत् तत् क्षणिकं, यथा विद्युदिति तेषां क्षणिकत्वमिति मानमूलोऽयं सिद्धान्त इति प्राप्ते सिद्धान्तसूत्रं योजयति। योऽयमिति। सर्गादौ परमाणूनां स्कन्धानां च स्वतः सङ्घातस्तावन्न सम्भवति अचेतनत्वात्। नापि चित्ताख्यमभिज्वलनं विज्ञानं समुदायहेतुः सङ्घाते देहाकारे जाते विज्ञानं विज्ञाने जाते सङ्घात इत्यन्योन्याश्रयात्। न च क्षणिकविज्ञानादन्यः कश्चिज्जीव ईश्वरो वा त्वयाभ्युपगम्यते यः सङ्घातकर्ता भवेत्। न च कर्तारमनपेक्ष्यैव स्कन्धाश्च स्वयमेव सङ्घाताय प्रवर्तन्त इति वाच्यम्। अनिर्मोक्षप्रसङ्गात्। नन्वालयविज्ञानसन्तानः संहन्तास्त्वित्यत आह। आशयस्येति। आशेरतेऽस्मिन् रागादय इत्याशयः सन्तानः, स किं सन्तानिभ्यो विज्ञानेभ्योऽन्योऽनन्यो वा, आद्येऽपि स्थिरः क्षणिको वा, नाद्यः अस्मदिष्टनित्यात्मवादप्रसङ्गात्। द्वितीये दोषमाह। क्षणिकत्वेति। क्षणिकस्य जन्मातिरिक्तव्यापारो नास्ति, तस्मात्तस्य परमाण्वादिमेलनार्थं प्रवृत्तिरनुपपन्ना क्षणिकत्वव्याघातादित्यर्थः। एतेनानन्यः सन्तानः

समुदायानुपपत्तिः। समुदायानुपपत्तौ च तदाश्रया लोकयात्रा लुप्येत॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्॥१९॥

यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपगम्यते, तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा, तस्यां चोपपद्यमानायां न किञ्चिदपरमपेक्षितव्यमस्ति। ते चाविद्यादयः अविद्या संस्कारो विज्ञानं नाम रूपं षडायतनं स्पर्शो वेदना तृष्णोपादानं भवो जातिः जरा मरणं

---

इति पक्षो निरस्तः, क्षणिकस्य मेलकत्वानुपपत्तेः, तस्मात् संहन्तुरसत्त्वात् सङ्घातानुपपत्तिरित्यर्थः॥

संहन्तुरभावेऽपि सङ्घातोपपत्तिमाशङ्क्य निषेधति। इतरेति। कार्यं प्रत्ययते गच्छतीति प्रत्ययः कारणं अविद्यादिभिरेवार्थात् सङ्घातसिद्धौ व्यवहारोपपत्तिरित्यर्थः। अविद्यादीनाह। ते चेति। क्षणिकेषु स्थिरत्वबुद्धिरविद्या ततो रागद्वेषमोहाः संस्कारा भवन्ति तेभ्यो गर्भस्थस्याद्यं विज्ञानं उत्पद्यते तस्माच्चालयविज्ञानात् पृथिव्यादिचतुष्टयं नामाश्रयत्वान्नाम भवति। ततो रूपं सितासितात्मकं शुक्रशोणितं निष्पद्यते गर्भस्थकललबुद्बुदावस्था नामरूपशब्दार्थ इति निष्कर्षः, विज्ञानं पृथिव्यादिचतुष्टयं रूपञ्चेति षडायतनानि यस्येन्द्रियजातस्य तत् षडायतनं, नामरूपेन्द्रियाणां मिथः संयोगः स्पर्शः, ततः सुखादिका वेदना तया पुनर्विषयतृष्णा तया प्रवृत्तिरुपादानं, तेन भवत्यस्माज्जन्मेति भवो धर्मादिस्ततो जातिर्देहजन्म, पञ्चस्कन्धसमुदाय इति यावत्। जातानां स्कन्धानां परिपाको जरास्कन्धः, नाशो मरणं, म्रियमाणस्य पुत्रादिस्नेहादन्तर्दाहः शोकस्तेन हा पुत्रेत्यादिप्रलाप-

शोकः परिदेवना दुःखं दुर्मनस्तेत्येवंजातीयका इतरेतरहेतुकाः सौगते समये क्वचित् संक्षिप्ता विनिर्दिष्टाः, क्वचित् प्रपञ्चिताः, सर्वेषामप्ययमविद्यादिकलापोऽप्रत्याख्येयः । तदेवमविद्यादिकलापेऽपि परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्त्तमानेऽर्थाक्षिप्त उपपन्नः सङ्घात इति चेत्, तन्न, कस्मादुत्पत्तिमात्रनिमित्तत्वात् । भवेदुपपन्नः सङ्घातो यदि सङ्घातस्य किञ्चिन्निमित्तमवगम्येत, न त्ववगम्यते । यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरस्योत्पत्तिमात्रनिमित्तं भवद्भवेत्, न तु सङ्घातोत्पत्तेः किञ्चिन्निमित्तं सम्भवति । नन्वविद्यादिभिरर्थादाक्षिप्यते सङ्घात इत्युक्तं, अत्रोच्यते यदि तावदयमभिप्रायः, अविद्यादयः सङ्घातमन्तरेणात्मानमलभमाना अपेक्षन्ते सङ्घातमिति, ततस्तस्य सङ्घातस्य किञ्चित् निमित्तं वक्तव्यं, तच्च नित्येष्वप्यणुषु अभ्युपगम्यमानेष्वा-

---

परिदेवना, अनिष्टानुभावो दुःखं, तेन दुर्मनस्ता मानसी व्यथा इतिशब्दो मानापमानादिक्लेशसंग्रहार्थः, न केवलं सुगतानामेवाविद्यादयः सम्मताः किन्तु सर्ववादिनामपीत्याह । सर्वेषामिति । अविद्यादिहेतुका जन्मादयो जन्मादिहेतुकाश्चाविद्यादय इति मिथो हेतुहेतुमद्भावादर्थात् सङ्घातसिद्धिरिति शङ्कामुपसंहरति । तदेवमिति सिद्धान्तभागं व्याचष्टे । तन्नेति । अविद्यादीनां उत्तरोत्तरहेतुत्वमङ्गीकृत्य सङ्घातहेतुत्वाभावात् सङ्घातो न स्यादित्युक्तं पूर्वोक्तं स्मारयति । नन्विति । किमविद्यादयः सङ्घातस्य गमका उतोत्पादका इति विकल्प्याद्ये सङ्घातस्योत्पादकं किञ्चिद्वाच्यं तन्नास्तीत्याह । अत्रोच्यते यदीति । आश्रयाश्रयिभूतेष्विति भोक्तृविशेषणं षट्स्वाश्रयेष्वित्यर्थः ।

अथाश्रयिभूतेषु भोक्तृषु सत्सु न सम्भवतीत्युक्तं वैशेषिकपरीक्षायां किमङ्ग पुनः क्षणिकेष्वणुषु भोक्तृरहितेष्वाश्रयाश्रयिशून्येषु वाभ्युपगम्यमानेषु सम्भवेत्। अथायमभिप्रायः अविद्यादय एव सङ्घातस्य निमित्तमिति। कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैव निमित्तं स्युः। अथ मन्यसे सङ्घाता एवानादौ संसारे सन्तत्यानुवर्त्तन्ते तदाश्रयाश्चाविद्यादय इति तदापि सङ्घातात् सङ्घातान्तरं उत्पद्यमानं नियमेन वा सदृशमेवोत्पद्येत अनियमेन वा सदृशं विसदृशं वोत्पद्येत नियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्य्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात्, अनियमाभ्युपगमेऽपि मनुष्यपुद्गलः कदाचित् क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेत् इति प्राप्नुयात्, उभयमप्यभ्युपगमविरुद्धं। अपि च यद्भोगार्थः सङ्घातः स्यात्

---

यथा स्थिरेष्वणुषु सङ्घातं योग्येषु कर्त्तृषु चादृष्टसहायेषु सत्सु ज्ञानाभावमात्रेण संहतिकर्त्तृत्वायोगात् सङ्घातापत्तेर्निमित्तं नास्तीत्युक्तं तदा क्षणिकपक्षे तन्नास्तीति किमु वक्तव्यमित्याह। किमिति। आश्रयाश्रयः सङ्घातकर्त्ता तच्छून्येष्वित्यर्थः। आश्रयाश्रयिशून्येष्विति पाठे उपकार्य्योपकारकत्वशून्येष्वित्यर्थः। द्वितीयं शङ्कते। अथायमिति। सङ्घातस्याविद्यादीनां चोत्पत्तौ अन्योन्याश्रयः स्यादिति दूषयति। कथमिति। स्वाभाविकः खल्वयं सङ्घातानां हेतुहेतुमद्भावेन प्रवाहो न संहन्तारमपेक्षते, पूर्वसङ्घाश्रया अविद्यादय उत्तरे सङ्घातप्रवर्त्तका इति नान्योन्याश्रयदोषोऽपीत्याशङ्कते। अथ मन्यस इति। स्वभावस्य नियमानियमयोरपसिद्धान्तापातः स्यादिति परिहारार्थः। पूर्य्यते गलति चेति पुद्गलो देहः। किञ्च भोक्तुः क्षणिकत्वपक्षे भोगापवर्गव्यव-

स जीवो नास्ति स्थिरो भोक्तेति तवाभ्युपगमः, ततश्च भोगो भोगार्थ एव स नान्येन प्रार्थनीयः, तथा मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यं। अन्येन चेत् प्रार्थ्येतोभय भोग मोक्षकालावस्थायिना तेन भवितव्यं, अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः, तस्मादितरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेत् भवतु नाम न तु सङ्घातः सिध्येत् भोक्त्रभावादित्यभिप्रायः॥

## उत्तरोत्पादे च पूर्वनिरोधात्॥ २०॥

उक्तमेतदविद्यादीनामुत्पत्तिमात्रनिमित्तत्वान्न सङ्घातसिद्धिरस्तीति, तदपि तूत्पत्तिमात्रनिमित्तत्वं न सम्भवतीतीदमिदानीमुपपाद्यते। क्षणभङ्गवादिनोऽयमभ्युपगमः उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वक्षणो निरुध्यत इति। न चैवमभ्युपगच्छता पूर्वोत्तरयो. क्षणयोः हेतुफलभावः शक्यते सम्पा-

हारोऽपि दुर्घट इत्याह। अपि चेति। यो यदिच्छति स तत्काले नास्ति चेत् इच्छा व्यर्था, अस्ति चेत् क्षणिकत्वभङ्ग इत्यर्थः। प्रकृत स ङ्घातनिरासमुपसंहरति। तस्मादिति॥

द्विविधो हि कार्यसमुत्पाद सुगतसम्मत हेत्वधीन कारणसमुदायाधीनश्चेति। तत्राविद्यात संस्कारस्ततो विज्ञानमित्येवरूप प्रथम, पृथिव्यादिसमुदायात कार्य इत्येव द्वितीय, तत्राद्यमङ्गीकृत्य द्वितीय सङ्घातकर्त्रभावेन दूषित, सम्प्रत्याद्य दूषयति सूत्रकारः। उत्तरेति। क्षणिकोऽर्थः क्षण इत्युच्यते, निरुध्यमानत्व विनाशकसान्निध्य, निरुद्धत्वमतीतत्व। ननु कार्यकाले विनाशव्याप्तत्वेऽपि पूर्वक्षणे

दयितुं निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्याभावग्रस्तत्वाद्-
त्तरक्षणहेतुत्वानुपपत्तेः। अथ भावभूतः परिनिष्पन्नावस्थः
पूर्वक्षण उत्तरक्षणस्य हेतुरित्यभिप्रायस्तथापि नोपपद्यते,
भावभूतस्य पुनर्व्यापारकल्पनायां क्षणान्तरसम्बन्धप्रसङ्गात्।
अथ भाव एवास्य व्यापार इत्यभिप्रायः, तथापि नैवोपपद्यते
हेतुस्वभावानुपरक्तस्य फलस्योत्पत्त्यसम्भवात्। स्वभावोपरागा-
भ्युपगमे च हेतुस्वभावस्य फलकालावस्थायित्वे सति क्षणभ-
ङ्गाभ्युपगमत्यागप्रसङ्गः। विनैव वा स्वभावोपरागेण हेतु-
फलभावमभ्युपगच्छतः सर्वत्र तत्प्राप्तेरतिप्रसङ्गः। अपि चो-
त्पादनिरोधौ नाम वस्तुनः स्वरूपमेव वा स्यातां, अवस्था-
न्तरं वा वस्त्वन्तरमेव वा, सर्वथापि नोपपद्यते। यदि ताव-
द्वस्तुनः स्वरूपमेवोत्पादनिरोधौ स्यातां ततो वस्तुशब्द उत्पा-
दनिरोधशब्दौ च पर्यायाः प्राप्नुयुः। अथास्ति कश्चिद्विशेष
इति मन्येत उत्पादनिरोधशब्दाभ्यां मध्यवर्तिनो वस्तुन आद्य-

---

सत्त्वात् क्षणिकार्थस्य हेतुत्वमक्षतमिति शङ्कते। अथ भावेति, सद्रूप
इत्यर्थः। किं हेतोरुत्पत्त्यतिरिक्तः कार्योत्पादनाख्यो व्यापारः अनतिरि-
क्तो वा, नाद्य इत्युक्ता द्वितीय शङ्कते। अथेति। भाव उत्पत्तिः, उक्तं हि
'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत' इति।
येषां क्षणिकभावानां या भूतिः सैव क्रिया कारकञ्चेत्यर्थः। नष्टस्यापि
निमित्तत्वं स्यान्नोपादानत्व, तथा च मृदादेर्घटादिकालासत्त्वे घटाद्य-
नुत्पत्तिः सत्त्वे च क्षणिकत्वहानिरिति परिहरति। तथापीत्यादिना।
प्रथमपक्षोक्तदोषं द्रढयति। विनैवेति। वस्तुनो जन्मध्वसानिरूपणाच्च
न क्षणिकत्वमित्याह। अपि चेति। तयोः स्वरूपत्वे वस्तुन्यन्तर्भावात्

न्ताख्ये अवस्थे अभिलप्येते इति, एवमप्याद्यन्तमध्यक्षणत्रयसम्बन्धित्वाद्वस्तुनः क्षणिकत्वाभ्युपगमहानिः। अथात्यन्तव्यतिरिक्तावेवोत्पादनिरोधौ वस्तुनः स्यातां अश्वमहिषवत्, ततो वस्तूत्पादनिरोधाभ्यामसंसृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गः। यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्यातां, एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनः शाश्वतत्वप्रसङ्ग एव, तस्मादप्यसङ्गतं सौगतं मतं॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा॥ २१॥

क्षणभङ्गवादे पूर्वक्षणो निरोधग्रस्तत्वान्नोत्तरस्य क्षणस्य हेतुर्भवतीत्युक्तं। अथासत्येव हेतौ फलोत्पत्तिं ब्रूयात्, ततः प्रतिज्ञोपरोधः स्यात्, चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यन्त इतीयं प्रतिज्ञा हीयेत, निर्हेतुकायां चोत्पत्तावप्र-

---

वस्तुनोऽनाद्यनन्तत्वमित्यपि द्रष्टव्यं। द्वितीयं शङ्कते। अथास्तीति। विशेषमेवाह। उत्पादेति। दूषयति। एवमपीति। ताभ्यां संसर्गे वस्तुनः क्षणिकत्वभङ्गः स्यात। संसर्ग एव नास्तीति तृतीयकल्पमुत्थाप्य दूषयति। अथात्यन्तेति॥

सूत्रं व्याख्यातुं वृत्तं स्मारयति। क्षणभङ्गेति। किं कार्योत्पत्तिर्निर्हेतुका सहेतुका वा, आद्ये प्रतिज्ञाहानिरित्याह। अथासत्येवेत्यादिना। विषयकरणसहकारिसंस्काराश्चतुर्विधा हेतवस्तान् प्रतीत्य प्राप्य चित्त रूपादिविज्ञानं चैत्ताश्चित्तात्मकाः सुखादयश्च जायन्त इति प्रतिज्ञार्थः। यथा नीलविज्ञानस्य नीलं वस्तु, आलम्बनप्रत्ययो विषयः, चक्षुः करणमधिपतिप्रत्ययः, सहकारिप्रत्यय आलोकः, समनन्तरपूर्व्वप्रत्ययः

तिवन्मात् सर्वं सर्वत्रोत्पद्येत। अथोत्तरक्षणोत्पत्तिं यावत्तावदवतिष्ठते पूर्वक्षण इति ब्रूयात्, ततो यौगपद्यं हेतुफलयोः स्यात्, तथापि प्रतिज्ञोपरोध एव स्यात्, क्षणिकाः सर्वे संस्कारा इतीयं प्रतिज्ञोपरुध्येत॥

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्॥२२॥

अपि च वैनाशिकाः कल्पयन्ति 'बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिकञ्च' इति। तदपि च त्रयं प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधावाकाशञ्चेत्याचक्षते। त्रयमपि चैतदवस्तुभावमात्रं निरुपाख्यमिति मन्यन्ते। बुद्धिपूर्वकः किल विनाशो भावानां प्रतिसङ्ख्यानिरोधो नाम भाष्यते तद्विपरीतोऽप्रतिसङ्ख्यानिरोधः, आवरणाभावमात्रमाकाशमिति। तेषामाकाशं पर-

---

संस्कार इति भेदः। प्रतिज्ञाहानिपुरुषदोषमुक्त्वा वस्तुदोषमप्याह। निर्हेतुकायाश्चेति। सहेतुकत्वपक्षेऽन्वयिकारणस्य मृदादेः कार्य्यसहभावापत्त्या क्षणिकत्वप्रतिज्ञाहानिरिति सूत्रशेषं व्याचष्टे। अथोत्तरक्षणेत्यादिना। सम्यक् क्रियन्त इति संस्काराः, आद्यन्तवन्तो भावा इत्यर्थः॥

एवमाद्यसूत्राभ्यां समुदायो निरस्तः, उत्तरसूत्राभ्यां कार्य्यकारणभावक्षणिकत्वे निरस्ते, सम्प्रति तदभिमतं द्विविधं विनाशं दूषयति। प्रतिसङ्ख्येति। संस्कृतमुत्पाद्यं बुद्धिबोध्यं प्रमेयमात्रं त्रयात्तुच्छरूपादन्यदित्यर्थः। किं तत्त्रयं तदाह। तदपीति। निरुपाख्यं निःस्वरूपं, प्रतिसंख्या सन्तं भावमसन्तं करोमीत्येवंरूपा सख्या बुद्धिः प्रतिसंख्या तया निरोधः कस्यचिद्भावस्य भवति, अबुद्धिपूर्वकस्तु स्तम्भादीनां स्वरसभङ्गुराणामित्याह। विपरीत इति। परप्रक्रियामुक्त्वा सूत्रं व्या-

स्यात् प्रत्याख्यास्यति, निरोधद्वयमिदानीं प्रत्याचष्टे। प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधयोरप्राप्तिरसम्भव इत्यर्थः। कस्मादविच्छेदात्। एतौ हि प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधौ सन्तानगोचरौ वा स्यातां भावगोचरौ वा, न तावत् सन्तानगोचरौ सम्भवतः, सर्वेष्वपि सन्तानेषु सन्तानिनामविच्छिन्नेन हेतुफलभावेन सन्तानविच्छेदस्यासम्भवात्। नापि भावगोचरौ सम्भवतः, न हि भावानां निरन्वयो निरुपाख्यो विनाशः सम्भवति, सर्वास्ववस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात्। अस्पष्टप्रत्यभिज्ञानास्ववस्थासु क्वचित् दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानात्। तस्मात् परपरिकल्पितस्य निरोधद्वयस्यानुपपत्तिः॥

---

चष्टे। तेषामिति। भावाः सन्तानिनः, सन्तानो नाम भावानां हेतुफलभावेन प्रवाहस्तस्मिन् सन्ताने चरमक्षणः क्षणान्तरं करोति वा नवा, आद्ये चरमत्वव्याघातः सन्तानाविच्छेदात्, द्वितीये चरमस्यासत्त्वप्रसङ्गः, अर्थक्रियाकारित्वं सत्त्वमिति तत्सिद्धान्तात्, चरमस्यासत्त्वे पूर्वेषामप्यसत्त्वप्रसङ्गः अर्थक्रियाशून्यत्वात्, तस्मात् सन्तानस्य विच्छेदासम्भवान्निरोधाप्राप्तिरित्याह। न तावदिति। न द्वितीय इत्याह। नापीति। घटकपालचूर्णाद्यवस्थासु सेयं मृदिति प्रत्यभिज्ञानादन्वयिभावस्य मृदादेर्नात्यन्तिकविनाश इत्यर्थः। बीजस्याङ्कुरादिषु प्रत्यभिज्ञानादर्शनादन्वयिनो विच्छेद इत्यत आह। अस्पष्टेति। अङ्कुरादयोऽनुस्यूतान्वयिभावस्थाः कार्यत्वात् घटवदित्यन्वय्यविच्छेदसिद्धिरित्यर्थः। यस्माद्भावानां स्थायित्वं तस्मात् प्रतिसङ्ख्यानिरोधासम्भव इत्युपसंहारः।

## उभयथा च दोषात्॥ २३॥

योऽयमविद्यादिनिरोधः प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधान्तःपाती परपरिकल्पितः स सम्यग्ज्ञानाद्वा सपरिकरात् स्यात् स्वयमेव वा, पूर्वस्मिन् विकल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गः। उत्तरस्मिंस्तु मार्गोपदेशानर्थक्यप्रसङ्गः। एवमुभयथापि दोषप्रसङ्गादसमञ्जसमिदं दर्शनं॥

## आकाशे चाविशेषात्॥ २४॥

यच्च तेषामेवाभिप्रेतं निरोधद्वयमाकाशञ्च निरुपाख्यमिति। तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तान्निराकृतं आकाशस्येदानीं निराक्रियते। आकाशे *चायुक्तो निरुपाख्यत्वाभ्युपगमः, प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात्, आगमप्रामाण्यात्तावत् 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतिभ्य आकाशस्य च वस्तुत्वप्रसिद्धिः। †विप्रतिपन्नानपि प्रति शब्दगुणानुमेयत्वं वक्तव्यं, गन्धादीनां गुणानां

---

अविद्यादीनां प्रतिसंख्यानिरोधं तदभिमतं दूषयति। उभयथेति। यमनियमादयः परिकराः सर्वं दुःखं क्षणिकमिति भावनोपदेशो मार्गोपदेशः।

आगमप्रामाण्यादिति। तत्राकाशस्य कार्यत्वोक्त्या घटादिवद्वस्तुत्वं प्रसिध्यतीत्यर्थः। नन्वागमप्रामाण्ये विप्रतिपन्नान् सुगतान् प्रत्याकाशस्य वस्तुत्वं कथं सिध्यतीत्यत आह। विप्रतिपन्नानिति। शब्दो वस्तुनिष्ठः गुणत्वाद्गन्धादिवदित्यनुमानादाकाशस्य वस्तुत्वं सिध्यति पृथिव्याद्यष्टद्रव्याणां श्रोत्रग्राह्यगुणाश्रयत्वायोगादित्यर्थः। व्या-

---

* चानुक्त इति का०। † विप्रतिपन्नान् प्रति तु शब्देत्यादि का० सर्व० सो०।

पृथिव्यादिवस्त्वाश्रयत्वदर्शनात्। अपि चावरणाभावमात्राकाशमिच्छतस्तवं एकस्मिन् सुपर्णे पतत्यावरणस्य विद्यमानत्वात् सुपर्णान्तरस्या*पित्सतोऽनवकाशत्वप्रसङ्गः। यत्रावरणाभावस्तत्र पतिष्यतीति चेत्, येनावरणाभावो विशिष्यते तत्तर्हि वस्तुभूतमेवाकाशं स्यान्नावरणाभावमात्रं। अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत। सौगते हि समये पृथिवी भगवन् किंसन्निःश्रयेत्यस्मिन् प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते वायुः किंसन्निःश्रय इत्यस्य प्रश्नस्य प्रतिवचनं भवति वायुराकाशसन्निःश्रय इति, तदाऽऽकाशस्य वस्तुत्वे समञ्जसं स्यात्, तस्मादप्ययुक्तमाकाशस्यावस्तुत्व। अपि च निरोधद्वयमाकाशञ्च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यञ्चेति विप्रतिषिद्धं, न ह्यवस्तुनो नित्यत्वमनित्यत्वं वा सम्भवति, वस्त्वाश्रयत्वात् धर्मधर्मिव्यवहारस्य। धर्मधर्मि†भावे हि घटादिवद्वस्तुत्वमेव स्यान्न निरुपाख्यत्व॥

---

काशस्य भावत्व प्रसाध्याभावत्वं दूषयति। अपि चेति। यथैकघटसत्त्वेऽपि घटसामान्याभावो नास्ति तथैकपक्षिसत्त्वेऽपि मूर्त्तद्रव्यसामान्याभावात्मकाकाशो नास्त्येवेति पक्ष्यन्तरसञ्चारो न स्यादित्यर्थं। देशविशेषावच्छेदेनावरणाभावोऽस्तीत्याशङ्काभावावच्छेदकादेशविशेष एवाकाशो नाभाव इत्याह। यत्रेत्यादिना। पतिष्यति पक्षी सञ्चरिष्यतीत्यर्थं। आकाशस्यावस्तुत्वं स्वग्रन्थविरुद्धञ्चेत्याह। अपि चेति। किं सम्यक् निश्चय आश्रयोऽस्या इति किंसन्निश्रया अवस्तुनः प्रश्नविषयस्याश्रयत्वादर्शनादिति भावः। व्याघातान्तरमाह। अपि चेति। ध्वंसाप्रतियोगिताख्यो धर्मो नित्यत्वं नासति सम्भवति धर्मिणोऽसत्त्वव्याघातादित्यर्थ.।

---

* स्त्वित्सतो।नाकाशत्वेति का०। † भाव' इति पो० का०।

## अनुस्मृतेश्च ॥ २५ ॥

अपि च वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपयन्नुप-*लब्धेरपि क्षणिकतामभ्युपेयात् न च सा सम्भवति, अनुस्मृतेः। अनुभवमुपलब्धिमनुत्पद्यमानं स्मरणमेवानुस्मृतिः सा चोपलब्ध्येककर्तृका सती सम्भवति, पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात्। कथं ह्यहमदोऽद्राक्षमिदं पश्यामीति च पूर्वोत्तरदर्शिन्येकस्मिन्नसति प्रत्ययः स्यात्। अपि च दर्शनस्मरणयोः कर्तर्येकस्मिन् प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धोऽहमदोऽद्राक्षमिदं पश्यामीति। यदि हि तयोर्भिन्नः कर्ता स्यात्, ततोऽहं स्मराम्यद्राक्षीदन्य इति प्रतीयात् न त्वेवं प्रत्येति कश्चित्, यत्रैवं प्रत्ययः तत्र दर्शनस्मरणयोर्भिन्नमेव कर्तारं सर्वलोकोऽवगच्छति, स्मराम्यहमसावदोऽद्राक्षीदिति। †इह त्वहमदोऽद्राक्षमिति दर्शनस्मरण-

---

आत्मनः क्षणिकत्वं दूषयति। अनुस्मृतेरिति। अनुभवजन्या स्मृतिरनुस्मृतिस्तस्याः अनुभवसमानाश्रयत्वात्तदुभयाश्रयात्मनः स्थायित्वमित्यर्थः। क्षणिकत्वज्ञानस्यानुसन्धानञ्च न स्यादित्याह। कथं ह्यहमिति। पूर्वदर्शनकर्तुरद्राक्षमिति स्मरणकर्त्रैक्यप्रत्यभिज्ञानाच्चात्मनः स्थायित्वमित्याह। अपि चेति। योऽहमदः पूर्वमद्राक्षं स एवाहमद्य तत् स्मरामीति प्रत्यभिज्ञानाकारो द्रष्टव्यः, इदं पश्यामीति ज्ञानान्तरसम्बन्धकथनं योऽहमद्राक्षं सोऽहं पश्यामीति प्रत्यभिज्ञान्तरद्योतनार्थं। विपक्षे बाधकमाह। यदि हीति। द्रष्टृस्मर्त्रोर्भेदेऽहं स्मरामि अन्योऽद्राक्षीदिति प्रतीतिः स्यादित्यत्र दृष्टान्तमाह। यत्रैवमिति। प्रत्ययमाह। स्मरामीति। स्मराम्यहमन्योऽद्राक्षीदिति प्रत्ययो यत्र

---

* लब्धुरिति सो॰ का॰। † यत्रेहेति का॰।

योऽवैनाशिकोऽप्यात्मानमेवैकं कर्तारमवगच्छति, न नाहमित्यात्मनो दर्शनं निर्वृत्तं निह्नुते, यथाग्निरनुष्णोऽप्रकाश इति वा। तत्रैवं सत्येकस्य दर्शनस्मरणक्षणद्वयसम्बन्धे क्षणिकत्वाभ्युपगमहानिरपरिहार्या वैनाशिकस्य स्यात्, तथानन्तरामनन्तरामात्मन एव प्रतिपत्तिं प्रत्यभिजानन्नेककर्तृकामोत्तमादुच्छ्वासादतीताश्च प्रतिपत्तीराजन्मन आत्मैककर्तृकाः प्रतिसन्दधानः कथं क्षणभङ्गवादी वैनाशिको नापत्रपेत। स यदि ब्रूयात् सादृश्यादेतत् सम्पत्स्यत इति, तं प्रतिब्रूयात् तेनेदं सदृशमिति द्वयायत्तत्वात् सादृश्यस्य क्षणभङ्गवादिनः सदृशयोर्द्वयोर्वस्तुनोर्ग्रहीतुरेकस्याभावात् सादृश्यनिमित्तं प्र-

---

तत्र भिन्नमेव कर्तारं लोकोऽवगच्छतीत्यविवादमित्यर्थः। प्रकृतप्रत्यभिज्ञाया तादृशभेदप्रत्ययस्य बाधकस्यादर्शनादात्मस्थायित्वं दुर्वारमित्याह। इह त्वहमद इति। यथाग्नेरौष्ण्यादिकं न बाधते कश्चित्तथा नाहमद्राक्षमिति पूर्वदर्शनं न निह्नुत इत्यनेन बाधाभावात् प्रत्यभिज्ञा प्रमेत्युक्तं भवति। तथा द्रष्टृस्मर्त्रैक्ये सति स्थायित्वं फलितमित्याह। तत्रैवं सतीति। क्षणद्वयसम्बन्धेऽप्यात्मनस्तृतीयक्षणे भङ्गोऽस्त्विति वदन्तं प्रत्याह। तथेति। वर्तमानदशामारभ्योत्तमाच्छ्वासादामरणादनन्तरामनन्तरां स्वस्यैव प्रतिपत्तिमात्मैककर्तृका प्रत्यभिजानन्नाजन्मनश्च वर्तमानदशापर्यन्तं व्यतीताः प्रतिपत्तीः स्वकर्तृका. प्रतिसन्दधानः सन्निति योजना। दीपज्वालास्विवात्मनि प्रत्यभिज्ञानं सादृश्यदोषादिति शङ्कते। स इति। सादृश्यज्ञानस्य धर्मिप्रतियोगिज्ञानाधीनत्वात् स्थिरस्य ज्ञातुरसत्त्वान्न सादृश्यज्ञानं सम्भवति सत्त्वे वापसिद्धान्तः स्यादिति परिहरति। तमित्यादिना। स्यादेतत् न सादृश्यप्रत्ययः पूर्वोत्तरवस्तुद्वयज्ञानजन्यस्तद्द्वयसादृश्यावगाही, किं तर्हि

तिसन्धानमिति मिथ्याप्रलाप एव स्यात्, स्याच्चेत् पूर्वोत्तरयोः *क्षणयोः सादृश्यस्य ग्रहीतैकस्तथा सत्येकस्य क्षणद्वयावस्थानात् क्षणिकत्वप्रतिज्ञा पीड्येत, तेनेदं सदृशमिति प्रत्ययान्तरमेवेदं न पूर्वोत्तरक्षणद्वयग्रहणनिमित्तमिति चेत्, न तेनेदमिति भिन्नपदार्थोपादानात्। प्रत्ययान्तरमेव चेत् सादृश्यविषयं स्यात्, तेनेदं सदृशमिति वाक्यप्रयोगोऽनर्थकः स्यात्, सादृश्यमित्येव प्रयोगः प्राप्नुयात्। यदा हि लोकप्रसिद्धः पदार्थः परीक्षकैर्न परिगृह्यते तदा स्वपक्षसिद्धिः परपक्षदोषो वा उभयमप्युच्यमानं परीक्षकाणामात्मनश्च यथा-

कश्चिदेष विकल्पः स्वाकारमेव वाह्यत्वेन विषयीकुर्वाणः क्षणान्तरास्पर्शी, अतो न स्थिरद्रष्टृपेक्षेति भ्रङ्क्ते। तेनेदमिति। अत्र वक्तव्यं सादृश्यप्रत्यये तेनेदं सदृशमिति वस्तुत्रयं भासते न वेति। नेति वदतः स्वानुभवविरोधः, किञ्चार्थभेदाभावात् पदत्रयप्रयोगो न स्यात्, तस्मात् पदत्रयेण मिथः संसृष्टभिन्नार्थभानादभानमसिद्धमिति परिहरति। न तेनेति। अथ भासते वस्तुत्रयं तच्च प्रत्ययाभिन्नमेव न वाह्यमिति चेन्न त्रयाणामेकप्रत्ययाभेदे मिथोऽप्यभेदापत्तेः। इष्टापत्तिरिति ब्रुवाणं विज्ञानवादिनं प्रत्याह। यदा हीति। वस्तुत्रयं ज्ञेयं सादृश्यप्रत्ययाद्भिन्नं सर्वलोकप्रसिद्धं तच्च नाङ्गीक्रियते। स्थायिद्रष्टृप्रसङ्गभयेन तर्हि तत्तदाकाराणां क्षणिकविज्ञानानां मिथो वार्तानभिज्ञत्वादेकस्मिन् धर्म्मिणि विरुद्धानेकपक्षस्फुरणात्मकविप्रतिपत्त्यसम्भवात् स्वपक्षसाधनादिव्यवहारो लुप्येत;. अतो यथानुभवं ज्ञानज्ञेयभेदोऽङ्गीकार्य्यः। तथा च तेनेदं सदृशमिति वाह्यार्थयोर्ज्ञानपूर्वकं सादृश्यं जानत आत्मनः स्थायित्वं दुर्वारमित्यर्थः। ननु सन्त्येव वाह्यार्थाः क्षणिकस्वलक्षणा निर्विकल्पकग्राह्याः, सविकल्पाध्यवसेयास्तु स्थायित्वसादृश्यादयो वाह्याः कल्पिता अवभासन्ते, अतो विप्रति-

* द्वयोरिति वर्ध०।

र्थत्वेन न बुद्धिसन्तानमारोहति, एवमेवैषोऽर्थ इति निश्चितं यत्तदेव वक्तव्यं, ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत्। न चायं सादृश्यात् संव्यवहारो युक्तः, तद्भावावगमात् तत्सदृशभावानवगमाच्च। भवेदपि कदाचित् बाह्यवस्तुनि विप्रलम्भसम्भवात् तदेवेदं स्यात् तत्सदृशं वेति सन्देहः, उपलब्धरि तु सन्देहोऽपि न कदाचिद्भवति स एवाहं स्यां तत्सदृशो वेति। य एवाहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति निश्चितात् तद्भावोपलम्भात्, तस्मादप्यनुपपन्नो वैनाशिकसमयः॥

---

पत्त्यादिव्यवहार इति बाह्यार्थवादमाशङ्क्य निरस्यति। एवमेवेति। यत् प्रमाणसिद्धं तदेव वक्तव्यं। न हि क्षणिकत्वे किञ्चित् प्रमाणमस्ति न चेदानीं घट इति प्रत्यक्षमवर्त्तमानकालासत्त्वं घटस्य गोचरं यद्वर्त्तमानक्षणमात्रसत्त्वरूपे क्षणिकत्वे मानमिति वाच्यं। तस्य वर्त्तमानत्वमात्रगोचरत्वेन कालान्तरासत्त्वासिद्धेः। न च यत् सत्तत् क्षणिकमिति व्याप्तिरस्ति, विद्युदादेरपि द्वित्रिक्षणस्थायित्वेन दृष्टान्ताभावात्। न च स्थायिनमनुमातारमन्तरेणानुमानं सम्भवति, तस्मादनुमानसिद्धार्थवक्ता तथागतोऽश्रद्धेयवचन इत्यर्थः। किञ्च सादृश्यं प्रत्यभिज्ञाया दोषतया निमित्तं विषयतया वा। आद्येऽपि स्वरूपसत् ज्ञातं वा, नाद्यः मन्दान्धकारे शुक्तिमात्रग्रहे श्वैत्याज्ञानेऽपि रूप्याभेदभ्रमापत्तेः। न द्वितीय स्थायिज्ञातारं विना तज्ज्ञानासम्भवस्योक्तत्वात्। नापि विषयतया निमित्तमित्याह। न चेति। सोऽहमित्युल्लेखात्ताहं सदृश इत्यनुल्लेखादित्यर्थः। सोऽहमिति प्रत्यभिज्ञाया भ्रमत्वं निरस्य संशयत्वं निरस्यति। भवेदिति। जडार्थे प्रत्यभिज्ञानेऽपि बाधसम्भावनया संशयः कदाचित् स्यान्नात्मनीत्यर्थः। असन्दिग्धाविपर्य्यस्तप्रत्यभिज्ञाविरोधादात्मक्षणिकत्वमतमत्यन्तासङ्गतमित्युपसंहरति। तस्मादिति॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

इतश्चानुपपन्नो वैनाशिकसमयो यतः स्थिरमनुयायि कारणमनभ्युपगच्छतामभावाद्भावोत्पत्तिरित्येतदापद्यते। दर्शयन्ति चात्राभावाद्भावोत्पत्तिं 'नानुपमृद्य प्रादुर्भावाद्' इति। विनष्टाद्धि किल बीजादङ्कुर उत्पद्यते, तथा विनष्टात् क्षीराद्दधि मृत्पिण्डाच्च घटः, कूटस्थाच्चेत् कारणात् कार्य्यमुत्पद्येत, अविशेषात् सर्वं सर्वत उत्पद्येत, तस्मादभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पद्यमानत्वात् अभावाद्भावोत्पत्तिरिति मन्यन्ते। तत्रेदमुच्यते, 'नासतोऽदृष्टत्वात्' इति। नाभावाद्भाव उत्पद्यते, यद्यभावाद्भाव उत्पद्येत, अभावत्वाविशेषात् कारणविशेषाभ्युपगमोऽनर्थकः स्यात्। न हि बीजादीनां उपमृदि-

---

अभावः प्रध्वंसवदत्यन्तासन्नित्यङ्गीकृत्य मृदादिनाशादसतो घटादिकं जायते इति सुगता वदन्ति तद्दूषयति। नासत इति। न केवलं बलादापद्यते किन्तु स्वयं दर्शयन्ति च। द्वौ नञौ प्रकृतार्थं गमयतः। मृदादिकं उपमृद्य घटादेः प्रादुर्भावादितीमसर्थमाह। विनष्टादिति। कारणविनाशात् कार्य्यजन्मेत्यत्र युक्तिमाह। कूटस्थादिति। विनाशशून्यादित्यर्थः। नित्यस्य निरतिशयस्य कार्य्यशक्तत्वे तत्कार्य्याणि सर्वाण्येकस्मिन्नेव क्षणे स्युस्तथा चोत्तरक्षणे कार्य्याभावादसत्त्वापत्तिः। न च सहकारिकृतातिशयक्रमात् कार्य्यक्रम इति युक्तं। अतिशयस्यातिशयान्तरापेक्षायां अनवस्थादनपेक्षायां कार्य्यस्याप्यतिशयानपेक्षत्वेन सहकारिवैयर्थ्यात् तस्मान्न स्थायिभावात् कार्य्यजन्मेत्यर्थः। क्षणिकभावस्य हेतुत्वमुत्तरोत्पादे चेत्यत्र निरस्तं। अभावस्य हेतुत्वनिरासार्थं सूत्रं व्याचष्टे। तत्रेदमिति। यदि बीजाभावस्याभावान्तराद्विशेषः स्यात् तदा विशेषवदभावद्वारा बीजादेवाङ्कुर इति

तानां योऽभावस्तस्य च शशविषाणादीनाञ्च निःस्वभावत्वाविशेषादभावत्वे कश्चिद्विशेषोऽस्ति येन बीजादेवाङ्कुरो जायते, क्षीरादेव दधीत्येवजातीयकं कारणविशेषाभ्युपगमोऽर्थवान् स्यात्। निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्, न चैवं दृश्यते। यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येत उत्पलादीनामिव नीलत्वादिस्ततो विशेषवत्त्वादेवाभावस्य भावत्वमुत्पलादिवत् प्रसज्येत, नाप्यभावः कस्यचिदुत्पत्तिहेतुः स्यात्, अभावत्वादेव शशविषाणादिवत्। अभावाच्च भावोत्पत्तावभावान्वितमेव सर्वं कार्यं स्यात्, नैव दृश्यते, सर्वस्य वस्तुनः स्वेन स्वेन रूपेण भावात्मनैवोपलभ्यमानत्वात्। न च मृदन्विताः शरावादयो भावास्तन्त्वादिविकारा केनचिदभ्युपगम्यन्ते। मृद्विकारानेव तु मृदन्वितान् भावान् लोकः प्रत्येति। यत्तूक्तं स्वरूपोपमर्दमन्तरेण कस्यचित् कूटस्थस्य

---

लोकायतिकानामभ्युपगमोऽर्थवान् स्यान्न सोऽस्तीत्याह। येनेति। सूत्रं योजयति। निर्विशेषस्येति। शशविषाणादेः कार्यकारित्वस्यादृष्टत्वान्नाभावस्यासतो हेतुत्वमित्यर्थः। असभावस्यापि विशेष इत्यत आह। यदीति। अभावस्य हेतुत्वेऽतिप्रसङ्ग इति तर्कमुक्त्वानुमानमाह। नापीति। अभावो न हेतुरसत्त्वात् सम्मतवदित्यर्थः। अभावो न प्रकृतिः कार्य्यानन्वितत्वात् यथा शरावाद्यनन्वितस्तन्तुर्न शरावादिप्रकृतिरिति तर्कपूर्वकमाह। अभावाच्चेति। अतोऽन्वितत्वान्मृदादिर्भाव एव प्रकृतिरित्याह। मृदिति। स्थायिनः कारणत्वायोगमुक्तमनूद्य दूषयति। यत्तूक्तमित्यादिना। अनुभवबलात् स्थिरभावानामेव सहकारिसन्निधिक्रमेण कार्य्यक्रमहेतुत्वमङ्गीकार्य्यं, न च शक्तस्य सह-

वस्तुनः कारणत्वानुपपत्तेरभावाद्भावोत्पत्तिर्भवितुमर्हतीति, तदुक्तं, स्थिरस्वभावानामेव सुवर्णादीनां प्रत्यभिज्ञायमानानां रुचकादिकार्यकारणभावदर्शनात्, येष्वपि बीजादिषु स्वरूपोपमर्दो लक्ष्यते तेष्वपि नासावुपमृद्यमाना पूर्वावस्थोत्तरावस्थायाः कारणमभ्युपगम्यते, अनुपमृद्यमानानामेवानुयायिनां बीजाद्यवयवानामङ्कुरादिकारणभावाभ्युपगमात्, तस्मादसद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात् सद्भ्यश्च सुवर्णादिभ्यः सदुत्पत्तिदर्शनात् अनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः। अपि च चतुर्भ्यश्चित्तचैत्ता उत्पद्यन्ते परमाणुभ्यश्च भूतभौतिकलक्षणः समुदाय उत्पद्यत इत्यभ्युपगम्य पुनरभावात् भावोत्पत्तिं कल्पयद्भिरभ्युपगममपह्नुवानैर्वैनाशिकैः सर्वो लोक आकुलीक्रियते॥

---

कार्य्यपेक्षा न युक्तेति वाच्यं, यतोऽशक्तस्यापि नापेक्षेत्यसहकारि विलम्बं स्यात्। तत्र स्वर्णादौ स्वतोऽतिशयशून्येऽग्नितापादिसहकारिकृतातिशयक्रमाद्रुचकादिकार्य्यक्रम। न चातिशयस्यातिशयान्तरानपेक्षत्वे कार्य्यस्याप्यनपेक्षेति वाच्य। घटस्य मृदनपेक्षत्वे कार्य्यत्वाविशेषात् घटस्यापि मृदनपेक्षाप्रसङ्गादन्वयव्यतिरेकाभ्यामपेक्षा सहकारिष्वपि तुल्या। यदुक्त कार्य्याभावदशायां कारणस्यासत्त्वापत्तिरिति तन्न, अकारणस्यापि बाधाभावेन सत्तोपपत्ते, न ह्यर्थक्रियाकारित्वमेव सत्त्व असतस्तदयोगेन सत्त्वस्य ततो भेदात सतो ह्यर्थक्रियाकारित्व नासत अत कारणतावच्छेदकमबाधितस्वरूपात्मक सत्त्व कारणत्वाद्भिन्नमेव तस्मादणुस्थूलस्थिरभावाना हेतुत्व उपपन्नमिति भाव। पूर्वापरविरोधमप्याह। अपि चेति॥

## उदासीनानामपि चैवं सिद्धिः॥ २७॥

यदि चाभावाद्भावोत्पत्तिरभ्युपगम्येत, एवं सत्युदासीनानामनीहमानानामपि जनानामभिमतसिद्धिः स्यात्, अभावस्य सुलभत्वात्। कृषीवलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात्, कुलालस्य च मृत्संस्क्रियायामप्रयतमानस्याप्यमत्रोत्पत्तिः। तन्तुवायस्यापि तन्तून् तन्वानस्यापि तन्वानस्येव वस्त्रलाभः। स्वर्गापवर्गयोश्च न कश्चित् कथञ्चित् समीहेत न चैतद्युज्यते ऽभ्युपगम्यते वा केनचित्, तस्मादनुपपन्नोऽयमभावाद्भावोत्पत्त्यभ्युपगमः॥

## नाभाव उपलब्धेः॥ २८॥

एवं वाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषूद्भावितेषु विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते। केषाञ्चित् किल विनेयानां वाह्यवस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन वाह्यार्थवादप्रक्रियेयं विरचिता, नासौ सुगताभिप्राय',

---

अभावादुत्पत्तौ मृदविघाणादप्युत्पत्तिः स्यादित्युक्तं। अतिप्रसङ्गान्तरमाह। उदासीनानामिति। अनीहमानाना प्रयत्नशून्याना, अमत्रं घटादिपात्रं। तन्वानस्य व्यापारयतः। तस्माद् भ्रान्तिमूलेन क्षणिकवाह्यार्थवादेन कूटस्थनित्यब्रह्मसमन्वयस्य न विरोध इति सिद्धं॥

नाभाव उपलब्धेः। अखण्डनिर्विशेषब्रह्मविज्ञानं वाह्यार्थोपादानं वदतां वेदान्तानां भिन्नं साकारं क्षणिकं विज्ञानं न ततोऽन्योऽर्थोऽस्तीति योगाचारमतेन विरुध्यते न वेति तन्मतस्य मानभ्रान्तिमूलत्वाभ्यां संशये पूर्व्वोक्तवाह्यार्थवादनिरासमुपजीव्य पूर्व्वपक्षमाह।

तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः, तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तःस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते, सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात्। कथं पुनरवगम्यते अन्तःस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति तदसम्भवादित्याह। स हि बाह्योऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युस्तत्समूहा वा स्तम्भादयः स्युः, तत्र न तावत् परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति परमाण्वाभासज्ञानानुपपत्तेः, नापि तत्समूहाः स्तम्भादयस्तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां

---

एवमित्यादिना। पूर्वोत्तरपक्षयोः विरोधाविरोधौ फलं। नन्वेकस्य सुगतागमस्य कथं बाह्यार्थसत्त्वासत्त्वयोस्तात्पर्यं विरोधादित्याशङ्क्याधिकारिभेदादविरोध इति वदन् विज्ञानवादिनः सुगताभिप्रायज्ञत्वेन मन्दाधिकारिभ्यो बाह्यार्थवादिभ्यः श्रैष्ठमाह। केषाञ्चिदिति। उक्तञ्च *धर्मकीर्तिना 'देशना लोकनाथानां सत्त्वाशयवशानुगाः' इति [सर्व-द०पृ०२३।पं०७] सुगतानामुपदेशाः शिष्यमत्यनुसारिण इत्यर्थः। नन्वसति बाह्यार्थे मानमेयव्यवहारः कथं तत्राह। तस्मिन्निति। विज्ञानमेव कल्पितनीलाद्याकारत्वेन प्रमेयमवभासात्मना मानफलं शक्त्यात्मना मानं शक्त्याश्रयत्वाकारेण प्रमातेति भेदकल्पनया व्यवहार इत्यर्थः। मुख्य एव भेदः किं न स्यादत आह। सत्यपीति। न हि बुद्ध्यनारूढस्य नीलादेः प्रमेयत्वव्यवहारोऽस्ति, अतो बुद्ध्यारूढाकार एव प्रमेयं न बाह्यमित्यर्थः। बाह्यार्थासत्त्वे प्रश्नपूर्वकं युक्तीरुपन्यस्यति। कथमित्यादिना। ज्ञेयं ज्ञानातिरेकेनासत् तदतिरेकेनासम्भवान्नरशृङ्गवदित्याह। तदसम्भवादिति। असम्भवं विवृणोति। स हीति। परमाण्वस्वेदैकस्थूल-

---

* बोधचित्तविवरणग्रन्थेति बोध्य।

निरूपयितुमशक्यत्वात्। एवं जात्यादीनपि प्रत्याचक्षीत। अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः स्तम्भज्ञानं कुड्यज्ञानं घटज्ञानं पटज्ञानमिति, नासौ ज्ञानगतविशेषमन्तरेण उपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याङ्गीकर्तव्यं। अङ्गीकृते च तस्मिन् विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिकार्थसद्भावकल्पना। अपि च सहोपलम्भनियमादभेदो विषयविज्ञानयोरापतति, न ह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भोऽस्ति, न चैतत् स्वभावविवेके युक्तं प्रतिबन्धकारणाभावात्, तस्मादप्यर्थाभावः स्वप्नादिवच्चेदं द्रष्टव्यं। यथा हि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति एवं जागरित-

---

स्तम्भ इति ज्ञानं न स्यात् समूहस्यसन्निधेर्यः। अवयव्यभावेऽपि जात्यादयो बाह्यार्थाः सुलभाः स्युरिति तत्राह। एवमिति। जातिगुणकर्मणां धर्मिणः सकाशादभेदेऽत्यन्तभेदे वा धर्मिवद्धर्म्यन्तरवच्च न धर्मधर्मिभाव. भेदाभेदौ च विरुद्धाविति न सन्ति जात्याद्यर्था इत्यर्थः। किञ्च ज्ञानस्य ज्ञेयसारूप्यरूपविशेषसम्बन्धाभावे सर्वविषयत्वापत्तेर्विशेषोऽङ्गीकार्यस्तथा च ज्ञानगतविशेषस्यैव ज्ञानेन विषयीकरणान्न बाह्यार्थसिद्धिर्मानाभावात् गौरवाच्चेत्याह। अपि चेति। पक्षपातो विषयविशेषवैशिष्ट्यव्यवहारः, किञ्च ज्ञेयं ज्ञानाभिन्नं ज्ञानोपलम्भलक्षणनियतोपलम्भयाग्यत्वात् ज्ञानवदित्याह। अपि चेति। ज्ञानार्थयोर्वास्तवभेदेऽपि सहोपलम्भनं स्यात् ग्राह्यग्राहकभावादित्यत आह। न चैतदिति। क्षणिकज्ञानस्यार्थेन सम्बन्धहेत्वभावान्न ग्राह्यग्राहकभाव इत्यर्थः। किञ्च जाग्रद्विज्ञानं न बाह्यालम्बनं विज्ञानत्वात् स्वप्नादिज्ञानवदित्याह। स्वप्नेति। विज्ञानानां वैचित्र्यानुपपत्तिनाधितमनु-

तद्गोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते, प्रत्ययत्वाविशेषात्। कथं पुनरसति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्येत वासनावैचित्र्यादित्याह। अनादौ हि संसारे बीजाङ्कुरवत् विज्ञानानां वासनानां चान्योन्यनिमित्तनैमित्तिकभावेन वैचित्र्यं न विप्रतिषिध्यते। अपि चान्वयव्यतिरेकाभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते, स्वप्नादिष्वन्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्योभाभ्यामप्यावाभ्यामभ्युपगम्यमानत्वादन्तरेण तु वासनां अर्थनिमित्तस्य ज्ञानवैचित्र्यस्य मयानभ्युपगम्यमानत्वात्, तस्मादप्यभावो बाह्यस्यार्थस्येत्येवं प्राप्ते ब्रूमः। नाभाव उपलब्धेरिति। न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते, कस्मादुपलब्धेः। उपलभ्यते हि प्रति प्रत्ययं बाह्योऽर्थः स्तम्भः कुड्यं घटः पट इति, न चोपलभ्यमानस्यैवाभावो भवितुमर्हति। यथा हि कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयात् नाहं भुञ्जे न वा तृप्यामीति, तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभ्यमान

---

मानमिति शङ्कते। कथमिति। अन्यथोपपत्त्या परिहरति। वासनेति। अनादिसन्तानान्तर्गतपूर्वज्ञानमेव वासना, तद्वशादनेकक्षणव्यवधानेऽपि नीलाद्याकारज्ञानवैचित्र्यं भवति, यथा बीजवासनया कार्पासरक्तत्वं तद्वदित्यर्थः। उभयवादिसम्मतत्वाच्च वासना एव ज्ञानवैचित्र्यहेतवो न बाह्यार्था इत्याह। अपि चेति। क्षणिकविज्ञानमात्रवादस्य मानमूलत्वात्तेन नित्यविज्ञानवादो विरुध्यते इति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे। नाभाव इत्यादिना। किं बाह्यार्थस्यानुपलब्धेरभाव उत ज्ञानाद्भेदेनानुपलब्धेः, नाद्य इत्युक्तं उपलब्धेरिति। द्वितीय

एव बाह्यमर्थं नाहमुपलभे न च सोऽस्तीति ब्रुवन् कथमुपादेयवचनः स्यात्। ननु नाहमेवं ब्रवीमि न कञ्चिदर्थमुपलभ इति, किन्तूपलब्धिव्यतिरिक्तं नोपलभ इति ब्रवीमि। बाढमेवं ब्रवीषि निरङ्कुशत्वात् ते तुण्डस्य न तु युक्त्युपेतं ब्रवीषि, यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्यः उपलब्धेरेव। न हि कश्चिदुपलब्धिमेव स्तम्भः कुड्यञ्चेत्युपलभते, उपलब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन् सर्वे लौकिका उपलभन्ते। अतश्चैवमेव सर्वे लौकिका उपलभन्ते यत् प्रत्याचक्षाणा अपि बाह्यमर्थमेवमाचक्षते यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति, तेऽपि हि सर्व्वलोकप्रसिद्धां बहिरवभासां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः। न हि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चिदाचक्षीत। तस्माद् यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगन्तुं न तु बहिर्वदवभासत इति। ननु बाह्यस्यार्थस्यासम्भवाद्बहिर्वदवभा-

---

शङ्कते। ननु नाहमिति। ज्ञानज्ञेययोर्विषयिविषयभावेन भेदस्य साक्षिप्रत्यक्षसिद्धत्वात्, प्रत्यक्षविरुद्धमभेदाभिधानमित्याह। बाढमित्यादिना। तद्वचनादपि जनो बाह्यार्थं ज्ञानाद्भेदेनैवोपलभत इत्याह। अतश्चेति। बाह्यार्थस्यात्यन्तासत्त्वे प्रत्यक्षोपलम्भायोगात् दृष्टान्तत्वासम्भवाच्च बहिर्वच्छब्दो न स्यादित्याह। इतरथेति। अबाधितभेदानुभवादेवकारो युक्तो न वत्कार इत्याह। तस्मादिति। ज्ञेयार्थो ज्ञानातिरेकेणासत्त्वसम्भवादित्युक्तमाधाद्वत्कारणमिति शङ्कते। नन्विति। कोऽसावसम्भवः असत्त्वं वा असत्त्वनिश्चयो वा अयुक्तत्वं वा उत्कट-

गत इत्यध्यवसितं। नायं साधुरध्यवसायो यतः प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवाववधार्य्येते न पुनः सम्भवासम्भवपूर्विके प्रमाणप्रवृत्त्यप्रवृत्ती। यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते तत् सम्भवति यन्न केनचिदपि प्रमाणेनोपलभ्यते तन्न सम्भवति। इह तु यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न सम्भवतीत्युच्येत उपलब्धेरेव। न च ज्ञानस्य विषयसारूप्याद्विषयनाशो भवति, असति विषये विषयसारूप्यानुपपत्तेः बहिरुपलब्धेश्च विषयस्य,

---

कोटिकसमुदायात्मकसम्भवस्याभावो वा। नाद्य साध्यभेदात। न द्वितीय स्थूलौ घटस्तम्भाविति समूहालम्बने स्थूलत्वद्वित्वघटत्वस्तम्भत्वरूपविरुद्धधर्म्मवतोरर्थयोरस्थूलादेकस्मात् द्वयावगाहिविज्ञानाद्भेदसत्त्वनिश्चयेनासम्भवासिद्धेरित्याह। नायं साधुरिति। सम्भव सत्तानिश्चयः प्रमाणाधीन। असम्भवोऽसत्त्वनिश्चय प्रमाणाभावाधीन न वैपरीत्यमिति व्यवस्थामेव स्फुटयति। यद्धीति। उक्तव्यवस्थाया फल बाह्यार्थस्य प्रत्यक्षादिभि सम्भव वदन्नेव तृतीय दूषयति। इहेति। प्रमाणनिश्चितबाह्यार्थस्य स्तम्भादे परमाणुभ्यो भेदविकल्पैरयुक्तत्वमात्रेणासत्त्वनिश्चयो न युक्तस्त्वत्पक्षेऽप्ययुक्तत्वस्य तुल्यत्वात्, न ह्यस्थूलस्यैकस्य विज्ञानस्य स्थूलानेकसमूहालम्बनस्य विषयाभेदो युक्त स्थूलत्वानेकत्वप्रसङ्गात्, न चेष्टापत्ति समूहालम्बनोच्छेदे विज्ञानाना मिथो वार्त्तानभिज्ञतया विषयद्वित्वादिव्यवहारलोपापत्तेः, तस्मादयुक्तत्वेऽपि यथानुभव व्यवहारयोग्योऽर्थ स्वीकार्य्य न चतुर्थ निश्चिते तादृशसम्भवस्यानुपयोगात्तस्य क्वचित प्रमाणप्रवृत्ते पूर्व्वाङ्गत्वादिति भाव। यदुक्त ज्ञानगतार्थसारूप्यस्यैव ज्ञानालम्बनत्वोपपत्तेर्बहिरर्थाभाव इति तत्राह। न चेति। यत्तु गौरवमुक्त तन्न दूषण प्रामाणिकत्वादित्याह। बहिरिति। यत एव ज्ञानार्थयोर्भेद सर्व्वलोके

अत एव सहोपलम्भनियमोऽपि *प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यभ्युपगन्तव्यं। अपि च घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो न विशेष्यस्य ज्ञानस्य, यथा शुक्लो गौः कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य, द्वाभ्याञ्च भेद एकस्य सिद्धो भवति, एकस्माच्च द्वयोः, तस्मादर्थज्ञानयोर्भेदः। तथा घटदर्शनं घटस्मरणमित्यत्रापि प्रतिपत्तव्यं, अत्रापि हि विशेष्ययोरेव दर्शनस्मरणयोर्भेदो न विशेषणस्य घटस्य, यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य तद्वत्। अपि च द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोः स्वसंवेदनेनैवोपक्षीणयोरितरेतर-

---

साद्यनुभवसिद्ध, अत एव सहोपलम्भनियमोऽपि नाभेदसाधक इत्याह। अत एवेति। यथा चाक्षुषद्रव्यरूपस्यालोकोपलम्भनियतोपलब्धिकत्वेऽपि नालोकाभेदः, तथार्थस्य न ज्ञानाभेदः, भेदेऽपि ग्राह्यग्राहकभावेन नियमोपपत्तेः। न च ज्ञानस्य क्षणिकत्वात् स्वभिन्नग्राह्यसम्बन्धायोगः स्थायित्वादिति भाव। विज्ञानमनेकार्थेभ्यो भिन्नं एकत्वात् गोत्ववदिति सत्प्रतिपक्षमाह। अपि चेति। न च हेत्वसिद्धिः ज्ञानं ज्ञानमित्येकाकारप्रतीतेः ज्ञानैकनिश्चयात्। न च सा जातिविषया व्यक्तिभेदानिश्चयादित्याह। न विशेष्यस्येति। घटादेश्चैतन्याद्भेदमुक्त्वा वृत्तिज्ञानाद्भेदमाह। तथेति। घटो द्वाभ्यां भिन्न एकत्वात् क्षीरवदित्यर्थः। ज्ञानाभिन्नार्थानङ्गीकारे स्मृत्याख्यव्यवहारलोपं बाधकमाह। अपि चेति। क्रमिकयोः स्वप्रकाशयोः क्षणिकज्ञानयोर्मिथो ग्राह्यग्राहकत्वमयुक्तमभ्युपगतञ्च, तथा च तयोर्भेदप्रतिज्ञा न युक्ता धर्मिप्रतियोगिनोर्मिथः परेण चाग्रहेण भेदग्रहायोगात्, तथा च तयोर्भेदग्राहकस्याप्यात्मा तद्भिन्न एष्टव्यः। एवं पक्षसाध्यहेतुदृष्टा-

---

* अर्थप्रत्यययोरिति पा०।

ग्राह्यग्राहकत्वानुपपत्तिः, ततश्च विज्ञानभेदप्रतिज्ञा क्षणिकत्वादिधर्मप्रतिज्ञा स्वलक्षणसामान्यलक्षणवास्यवासकत्वाविद्योपप्लवसदसद्धर्मबन्धमोक्षादिप्रतिज्ञाश्च स्वशास्त्रगतास्ते हीयेरन् । किञ्चान्यद्विज्ञानं विज्ञानमित्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः कुड्यमित्येवंजातीयकः कस्मान्नाभ्युपगम्यत इति वक्तव्यं। विज्ञानमनुभूयत इति चेत् बाह्योऽप्यर्थोऽनुभूयत एवेति युक्तमभ्युपगन्तुं । अथ विज्ञानं प्रकाशात्मकत्वात् प्रदीपवत् स्वयमेवानुभूयते न तथा बाह्योऽप्यर्थ इति चेत्, अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छसि अग्निरात्मानं दहतीतिवत् । अविरुद्धन्तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति

---

न्तभेदाभावे इदं क्षणिकमसदिति प्रतिज्ञा न युक्ता । सर्व्वतो व्यावृत्तं व्यक्तिमात्रं स्वलक्षणं अनेकानुगतं सामान्यमतद्व्यावृत्तिरूपमिति प्रतिज्ञा न युक्ता, सर्व्वानेकार्थानां ज्ञानमात्रत्वेन मिथः परेण वा दुर्ज्ञानत्वात् उत्तरनीलज्ञानं वास्यं पूर्व्वनीलज्ञानं वासकमिति प्रतिज्ञा न युक्ता, तयोर्भिन्नस्य ज्ञातुरभावात् । किञ्चाविद्योपप्लवोऽविद्यासंसर्गः,तेन नीलमिति सद्धर्म्मः, नरविषाणमिति असद्धर्म्मः, अमूर्त्तमिति सदसद्धर्म्मः, सतो विज्ञानस्यासतो नरविषाणस्य चामूर्त्तत्वादिति प्रतिज्ञा दुर्लभा, अनेकार्थज्ञानसाध्यत्वादज्ञानेनास्य बन्धो ज्ञानेनास्य मोक्ष इति च प्रतिज्ञा बह्वर्थज्ञानसाध्या, आदिपदेन सामान्यत इष्टं ग्राह्यमनिष्टं त्याज्यमिति शिष्यहितोपदेशोऽनेकज्ञानसाध्यो गृहीतः, तस्मात् प्रतिज्ञादिव्यवहाराय ग्राहकभेदोऽङ्गीकार्य्य इत्यर्थः । ज्ञानार्थयोर्भेदे युक्त्यन्तरमस्तीत्याह । किञ्चान्यदिति । ज्ञानवदर्थस्याप्यनुभवाविशेषात् स्वीकारो युक्त इत्यर्थः । स्वविषयत्वाद्विज्ञानं स्वीक्रियते नार्थः परग्राह्यत्वादिति शङ्कते । अथ विज्ञानमिति । विरुद्धं स्वीकृत्याविरुद्धन्त्यजता बौद्धतनयन मौग्ध्यं दर्शितमित्याह । अत्यन्तेति । ज्ञानं स्ववेद्यमित्यङ्गी-

नेच्छस्यहो पाण्डित्यं महद्दर्शितं। न चार्थव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते स्वात्मनि क्रियाविरोधादेव। ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे तदप्यन्येन ग्राह्यं तदप्यन्येनेत्यनवस्था प्राप्नोति। अपि च प्रदीपवदवभासात्मकत्वात् ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पनानर्थक्यमिति। तदुभयमप्यसत् विज्ञानग्रहणमात्र एव विज्ञानसाक्षिग्रहणाकाङ्क्षानुत्पादादनवस्थाशङ्कानुपपत्तेः, साक्षिप्रत्यययोश्च स्वभाववैषम्यादुपलब्ध्रुपलभ्यभावोपपत्तेः, स्वयंसिद्धस्य साक्षिणोऽप्रत्याख्येयत्वात्। किञ्चान्यत् प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवता प्रमाणागम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत्। बाढमेवमनुभवरूपत्वात्तु विज्ञानस्येष्टो नः

---

क्तत्य मौर्ख्यमापादितं वस्तुतः स्ववेद्यत्वमयुक्तमित्याह। न चेति। कर्त्रादिक्रियां प्रति गुणभूते प्रधानत्वाख्यकर्मत्वायोगात् सकर्तृकवेदनकर्मत्वमसदित्यर्थः। न च स्वविषयत्वमात्रं स्ववेद्यत्वमिति वाच्यं। अभेदविषयित्वस्याप्यसम्भवादिति भावः। ज्ञानस्य स्ववेद्यत्वाभावे दोषद्वयं स्यादिति शङ्कते। नन्विति। अनवस्था च साम्यञ्चेति दोषद्वयं परिहरति। तदुभयमपीति। अनित्यज्ञानस्य जन्मादिमत्त्वेन घटवज्जडस्य स्वेन स्वीयजन्मादिग्रहायोगादस्ति ग्राहकाकाङ्क्षा साक्षिणस्तु सत्तायां स्फूर्त्तौ च निरपेक्षत्वान्नानवस्था नापि साम्यञ्चिज्जडत्ववैषम्यादित्यर्थः। साक्षी क इत्यत आह। स्वयं सिद्धस्येति। निरपेक्षस्य साक्षिणोऽसत्त्वे क्षणिकविज्ञानभेदासिद्धेः सोऽङ्गीकार्य्य इत्यर्थः। अनित्यज्ञानस्वरूपसाधकत्वाच्च साक्षी स्वीकार्य्य इत्याह। किञ्चेति।

पक्षस्याभ्यनुज्ञात इति चेत्, न, अन्यस्यावगन्तुश्चक्षुरादिसाधनस्य प्रदीपादिप्रथनदर्शनात्, अतो विज्ञानस्याप्यवभास्यत्वाविशेषात् सत्येवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवदवगम्यते। साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपता स्वयं प्रथते विज्ञानमित्येष एव मम पक्षस्त्वया वाचो युक्त्यन्तरेणाश्रित इति चेत्, न, विज्ञानस्योत्पत्तिप्रध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात्। अतः प्रदीपवद्विज्ञानस्यापि व्यतिरिक्तावगम्यत्वमस्माभिः प्रसाधितं॥

## वैधर्म्याच्च न स्वप्नादिवत्॥ २९॥

यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्यय-

---

विज्ञानं ज्ञानान्तरानपेक्षमिति ब्रुवता सत्त्वप्रामाणिकत्वमुक्तं स्यात् स्वयं प्रथनमिति ब्रुवता ज्ञातृशून्यत्वस्योक्तं स्यात्तथा च ज्ञातृज्ञानाविषयत्वाच्छिलास्थप्रदीपवदसदेव विज्ञानं स्यादतस्तत्साक्ष्येष्टव्य इत्यर्थः। विज्ञानस्य स्वान्यज्ञातृशून्यत्वमिष्टमेव त्वयाऽऽपाद्यते, न चासत्त्वापत्तिः ज्ञानभावादिति वाच्यं। स्वस्यैव ज्ञातृत्वादिति शङ्कः शङ्कते। बाढमिति। अभेदे ज्ञातृज्ञेयत्वायोगात् ज्ञानान्तरमावश्यकमिति परिहरति। नेति। विमतं विज्ञानं स्वातिरिक्तवेद्यं वेद्यत्वाद्घटवदित्यर्थः। व्यतिरिक्तः साक्षी किमन्यवेद्यः स्ववेद्यो वा आद्येऽनवस्था द्वितीये विज्ञानवाद एव भङ्ग्यन्तरेणोक्तः स्यादिति शङ्कते। साक्षिण इति। त्वया विज्ञानं जन्मविनाशयुक्तमुच्यते। अतः कार्यस्य जडत्वनियमात् स्वातिरिक्तवेद्यमस्माभिः साधितं कूटस्थचिदात्मनो ग्राहकानपेक्षत्वान्नानवस्थेति चोक्तमतो महद्वैलक्षण्यमावयोरिति परिहरति। न विज्ञानस्येति॥

एवं वेद्यविज्ञानपदार्थस्याप्युपलम्भेन ह्यर्थाभाव इत्युक्तं, संप्रति जा-

त्वाविशेषादिति, तत् प्रति वक्तव्यं, अत्रोच्यते, न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात् वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः किं पुनर्वैधर्म्यं बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रबुद्धस्य मिथ्यामयोपलब्धो महाजनसमागम इति। न ह्यस्ति मम महाजनसमागमो निद्राग्लानन्तु मे मनो बभूव, तेनैषा भ्रान्तिरुद्भूवेति। एवं मायादिष्वपि भवति यथायथं बाधः। न चैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदवस्थायां बाध्यते, अपि च स्मृतिरेषा यत् स्वप्नदर्शनं, उपलब्धिस्तु जागरितदर्शनं स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयते, अर्थविप्रयोगसम्प्रयोगात्मकं इष्टं पुत्रं स्मरामि नोपलभे उपलब्धुमिच्छामि इति।

---

ग्रहिज्ञानं स्वप्नादिविज्ञानवन्न बाह्यालम्बनमित्यनुमानं दूषयति। वैधर्म्याच्चेति। किमत्र निर्विषयत्वं साध्यमुत पारमार्थिकविषयशून्यत्वं, अथ वा व्यवहारिकविषयशून्यत्वं, नाद्यः स्वप्नादिविभ्रमाणामप्यर्थालम्बनत्वेन दृष्टान्ते साध्यवैकल्यात्। न द्वितीयः सिद्धसाधनात्, इति सूत्रस्थचकारार्थः। तृतीये तु व्यवहारदशायां बाधितार्थत्वं उपाधिरित्याह। बाध्यते हीत्यादिना। निद्राग्लानमिति करणदोषोक्तिः। साधनव्यापकत्वमित्याह। न चैवमिति। किञ्च प्रमाणजानुभव उपलब्धिः पक्षो प्रमाणजं स्वप्नज्ञानदृष्टान्त इति वैधर्म्यान्तरं। परमतेन स्वप्नस्य स्मृतित्वमङ्गीकृत्याह। अपि चेति। स्मृतिप्रत्यक्षोपलब्ध्योर्वैधर्म्यान्तरमाह। अर्थविप्रयोगेति। असम्बद्धस्यावर्त्तमानस्य स्मृतेरर्थो विषय इति निरालम्बनत्वमप्यस्याः कदाचिद्भवेत् न संप्रयुक्तवर्त्तमानार्थमात्रग्राहिण्या उपलब्धेरिति भावः। पूर्व्वोक्तदमानामम-

तच्चैवं सति न शक्यते वक्तुं मिथ्या जागरितोपलब्धिरुपलब्धित्वात् स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता। न च स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुं। अपि चानुभवविरोधप्रसङ्गात् जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुमिष्यते। न च यो यस्य स्वतो धर्मो न सम्भवति सोऽन्यस्य साधर्म्यात्तस्य सम्भविष्यति। न ह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति। दर्शितन्तु वैधर्म्यं स्वप्नजागरितयोः॥

## न भावोऽनुपलब्धेः॥ ३०॥

यदप्युक्तं विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्प्यत इति तत् प्रति वक्तव्यं। अत्रोच्यते न भावो वासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानां। अर्थोपलब्धि-

---

ग्राजत्ववैधर्म्योक्तिफलमाह। तच्चैवं सतीति। वैधर्म्ये सतीत्यर्थः। अप्रमाणजत्वोपाधेर्निरालम्बनत्वानुमानं न युक्तमिति भावः। वैधर्म्यासिद्धिं निरस्यति। न चेति। बाधमप्याह। अपि चेति। वस्तुतो घटाद्यनुभवस्य निरालम्बत्वं धर्मो यदि स्यात्तदा किं दृष्टान्तग्रहेण, प्रत्यक्षतोऽपि वक्तुं शक्यत्वात्, न हि वक्तैरौष्ण्यदृष्टान्तेन वक्तव्यं, यदि न वस्तुतो धर्मोऽस्ति तदा किं दृष्टान्तेन, बाधितस्य दृष्टान्तसहस्रेणापि दुःसाध्यत्वादतः स्वतो निरालम्बनत्वोक्तौ सालम्बनत्वानुभवबाधभिया त्वयानुमातुमारब्धं तथापि बाधो न मुच्यतीत्यर्थः। उक्तोपाधिरपि न विस्मर्तव्य इत्याह। दर्शितन्त्विति॥

सूत्रव्यावर्त्यं स्मारयित्वा दूषयति। यदप्युक्तमित्यादिना। भाव उत्पत्तिः सत्ता वा। ननु वाह्यार्थानुपलब्धावपि पूर्व्वपूर्व्ववासनाव-

निमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति, अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः, अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारविलोपिनी स्यान्नाभिप्रायसिद्धिः । यावप्यन्वयव्यतिरेकावर्थापलापिनोपन्यस्तौ वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति तावप्येवं सति प्रत्युक्तौ द्रष्टव्यौ, विनार्थोपलब्ध्या वासनानुत्पत्तेः । अपि च विनापि वासनाभिरर्थोपलब्ध्युपगमात् विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमात् अर्थसद्भावमेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः । अपि च वासना नाम संस्कारविशेषाः, संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते, एवं लोके दृष्टत्वात्, न च तव वासनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः ॥

---

त्वादुत्तरोत्तरविज्ञानवैचित्र्यमस्तु बीजाङ्कुरवदनादित्वादित्यत आह । अनादित्वेऽपीति । बीजादङ्कुरो दृष्ट इति, अदृष्टेऽपि तज्जातीययोः कार्यकारणभावकल्पना युक्ता, इह त्वर्थानुभवनिरपेक्षवासनोत्पत्तेरादावेव कल्प्यत्वादनादित्वकल्पना निर्मूलेति नाभिप्रेतधीवैचित्र्यसिद्धिरित्यर्थः । ननु निरपेक्षवासनानां सत्त्वे धीवैचित्र्यमसत्त्वे तु नेति स्वप्ने दृष्टमिति समत्वाऽनवस्थेत्यत आह । याविति । वासनानां बाह्यार्थानुभवकार्यत्वे सति नैरपेक्ष्यासिद्धिर्न त्वयापि दृष्टेत्यर्थः । कार्यत्वसाधकं व्यतिरेकमाह । विनेति । अर्थानुभवकार्याणां वासनानां तदनपेक्षत्वायोगान्न त्वदुक्तान्वयादिदृष्टिरित्युक्तमभिनवार्थोपलब्धिवैचित्र्यस्य वासनानां विनापि भावेन व्यतिरेकव्यभिचाराच्च न क्वापि वासनामात्रकृतं धीवैचित्र्यं किन्त्वर्थानुभवे सति वासनाऽसति नेत्यन्वयव्यतिरेकाभ्यां वासनामूलानुभवावच्छेदकार्थसत्त्वमेवेति बाह्यार्थसद्भावसिद्धिरित्याह । अपि चेति । यः संस्कारः स साश्रयो लोके दृष्टः, यथा वेगादिर्घटाद्याश्रयः, अतो विज्ञानसंस्काराणां न भावः । आश्रयानुपलब्धेरित्यर्थान्तरमाह । अपि चेति ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं तदपि क्षणिकत्वाभ्युपगमादनवस्थितरूपं *सत्प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति। न हि कालत्रयसम्बन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधीनस्मृतिप्रतिसन्धानादिव्यवहारः सम्भवति। स्थिरस्वरूपत्वे त्वालयविज्ञानस्य सिद्धान्तहानिः। अपि च विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वात् यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि उक्त-

---

अस्त्वालयविज्ञानं आश्रय इत्यत आह। क्षणिकत्वाच्चेति। सूत्रं व्याचष्टे। यदपीति। सहोत्पन्नयोः सव्येतरविषाणवदाश्रयाश्रयिभावायोगात् पौर्व्वापर्य्ये चाधेयक्षणे सत आधारत्वायोगात् सत्त्वे क्षणिकत्वव्याघातान्नाधारत्वमालयविज्ञानस्य क्षणिकत्वान्नीलादिविज्ञानवदित्यर्थः। अस्तु तर्हि आलयविज्ञानसन्तानाश्रया वासना इत्यत आह। न हीति। सविकारः कूटस्थो वा स्थाय्यात्मा यदि नास्ति तदा सन्तानस्यावस्तुत्वाद्देशाद्यपेक्षया यद्वासनानामाधानं निक्षेपो यच्च स्मृतिप्रत्यभिज्ञयोस्तन्मूलो व्यवहारः, तत् सर्व्वं न सम्भवतीत्यर्थः। यदि व्यवहारार्थं आत्मस्थायित्व तदापसिद्धान्त इत्याह। स्थिरेति। सूत्रमतिदेशार्थत्वेनापि व्याचष्टे। अपि चेति। मतद्वयनिरासमुपसंहरति। एवमिति। ज्ञानज्ञेयात्मकस्य सर्व्वस्य सत्त्वासत्त्वाभ्यां निरूपयितुमशक्यत्वाच्छून्यतावशिष्यत इति माध्यमिकपक्षस्यापि मानमूलमाशङ्क्य सूत्रकारः किमिति न निराचकारेत्यत आह। शून्येति। आदरः पृथक्सूत्रारम्भो न क्रियते एतान्येव तन्मतनिरासार्थत्वेनापि योज्यन्त इत्यर्थः। तथा हि ज्ञानार्थयोर्नाभावः प्रमाणत उपलब्धेः। ननु जाग्रत्स्वप्नौ ज्ञानार्थशून्यौ अवस्थात्वात् सुषुप्तिवदित्यत आह। वैधर्म्याच्च

---

* स्वप्नप्रत्ययवदिति का० पुस्तके पाठः।

रोत्पादेच पूर्व्वनिरोधादित्येवमादीनि तानीहाप्यनुसन्धातव्यानि। एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च। शून्यवादिपक्षस्तु सर्व्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते। न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुं अपवादाभावे उत्सर्गप्रसिद्धेः॥

सर्व्वथानुपपत्तेश्च॥ ३२॥

किं बहुना सर्वप्रकारेण यथा यथायं वैनाशिकसमय उपपत्तिमत्त्वाय परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्यत एव न काञ्चिदप्यत्रोपपत्तिं पश्यामः, अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः। अपि च बाह्यार्थविज्ञानशून्यवादत्रय-

न स्वप्नादिवत् स्वप्नः घ्यादिर्यस्याः सुषुप्तेः तद्वन्नेतरावस्थयोः शून्यत्वम् उपलब्ध्यनुपलब्धिवैधर्म्यलक्षणबाधितज्ञानार्थोपलब्धिबाधात् सुषुप्तावप्यात्मज्ञानसत्त्वेन साध्यवैकल्याच्च नानुमानमित्यर्थः। किञ्च निरधिष्ठाननिषेधायोगादधिष्ठानमेव तत्त्वं वाच्यं, तस्य त्वन्मते न भावः। मानतोऽनुपलब्धेरित्याह। न भावोऽनुपलब्धेः। उपलब्ध्यनुपलब्धिलक्षणं यद्वैधर्म्यं तल्लक्ष्यतेऽनयेति सा चासौ बाधितज्ञानार्थोपलब्धिस्तद्रूपबाधात् इत्यर्थः। तदर्थमाह। न ह्ययमिति। यद्भाति तन्नासदित्युक्तत्वगतप्रपञ्चस्य न शून्यत्वं बाधाभावादित्यर्थः। न च सत्त्वासत्त्वाभ्यां विचारासहत्वा*च्छून्यत्वं मिथ्यात्वसम्भवादिति भाव। क्षणिकत्वाच्चेति सूत्रं क्षणिकत्वोपदेशाच्चेति पठनीयं। शून्यत्वविरुद्धक्षणिकत्वोपदेशादसङ्गतप्रलापी सुगत इत्यर्थः॥

सुगतमतासाङ्गत्यमुपसंहरति। सर्व्वथेति। सर्व्वथास्य कथं विचार

* चासत्त्वमिति भो० २।

मितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसम्बन्धप्रलापित्वं, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति। सर्वथाप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामैरित्यभिप्रायः॥

## नैकस्मिन्नसम्भवात्॥ ३३॥

निरस्तः सुगतसमयः, विवसनसमय इदानीं निरस्यते। सप्त चैषां पदार्थाः सम्मता जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम। संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ यथायोगं तयो-

---

प्रलापत्वमाह। प्रद्वेषो वेति। वेदबाह्या अत्र प्रजा ग्राह्याः, अतो भ्रान्त्येकमूलसुगतसिद्धान्तेन वेदसिद्धान्तस्य विरोध इति सिद्धं॥

नैकस्मिन्नसम्भवात्। मुक्तकच्छमते निरस्ते मुक्ताम्बराणां मतं बुद्धिस्थं भवति तन्निरस्यत इति प्रसङ्गसङ्गतिमाह। निरस्त इति। एकरूपं ब्रह्मेति वैदिकसिद्धान्तस्यानेकान्तवादेन विरोधोऽस्ति न वेति तद्वादस्य मानभ्रान्तिमूलत्वाभ्यां सन्देहे मानमूलत्वात् विरोध इति पूर्व्वपक्षफलमभिसन्धाय तन्मतमुपन्यस्यति। सप्त चेति। जीवाजीवौ भोक्तृभोग्यौ, विषयाभिमुख्येन इन्द्रियाणां प्रवृत्तिरास्रव, तां संवृणोति इति संवरो यमनियमादिः, निर्जरयति नाशयति कल्मषमिति निर्जरस्तप्तशिलारोहणादिः, बन्धः कर्म्म, मोक्षः कर्म्मपाशनाशे सत्यलोकाकाश*प्रविष्टस्य सततोर्द्ध्वगमनं। नन्वास्रवादीनां भोग्यान्तर्भावात् कथं सप्तत्वमित्यत आह। संक्षेपतस्त्विति। संक्षेपविस्तराभ्यामुक्तार्थेषु मध्यमरीत्या विस्तारान्तरमाह। तयोरिति। अस्ति कायशब्दः साङ्केतिकः पदार्थवाची। जीवश्चासावस्तिकायश्चेत्येवं विग्रहः। पूरयन्ति गलन्तीति पुद्गलाः परमाणुसङ्घाः कायाः, सम्यक् प्रवृत्त्यनुमेयो धर्मः, ऊर्द्ध्वगमनशीलस्य जीवस्य देहे स्थितिहेतुरधर्मः, आवरणाभाव आकाश इत्यर्थः। पञ्चपदार्थानामवान्तरभेदमाह। सर्व्वेषामिति। अयमर्थः।

---

* प्रविष्टस्येति सो० १।

एवंरूपास्येति ते तथैव वा स्युः नैव वा तथा स्युः इतरथा हि तथा वा स्युः अतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात्। नन्वनेकात्मकं वस्त्विति निर्द्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हति, नेति ब्रूमः। निरङ्कुशं ह्यनेकान्तं सर्ववस्तुषु प्रतिजानानस्य निर्द्धारणस्यापि वस्तुत्वाविशेषात् स्यादस्ति स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्धारणात्मकतैव स्यात्, एवं निर्द्धारयितुर्निर्द्धारणफलस्य च स्यात् पक्षेऽस्तिता स्याच्च पक्षे नास्तितेति, एवं सति कथं प्रमाणभूतः संस्तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्द्धारितासूपदेष्टुं

---

स्यादिति वाच्यं, अप्राप्तिभ्रान्त्या यत्नसम्भवात्। यन्नास्ति तन्नास्त्येव यथा शशविषाणादि, प्रपञ्चस्तु उभयविलक्षण एवेत्येकान्तवाद एव युक्तो नानेकान्तवाद। तथा हि किं येनाकारेण वस्तुनः सत्त्वं तेनैवाकारेणासत्त्वमुताकारान्तरेण, द्वितीये वस्तुन आकारान्तरमेवासदिति वस्तुनः सदेकरूपत्वमेव, न हि दूरस्थग्रामस्य प्राप्तेरसत्त्वे ग्रामोऽप्यसन् भवति, प्राप्त्यसत्त्वे प्राप्तियत्नानुपपत्तेः, अतो यथाव्यवहारं प्रपञ्चस्यैकरूपत्वमास्थेय नाद्य इत्याह। नायमिति। ननु विमतमनेकात्मकं वस्तुत्वान्नारसिंहवदिति चेत्, न, घट इदानीमस्त्येवेत्यनुभवबाधात्। किञ्च जीवादिपदार्थानां सप्तत्वं जीवत्वादिरूपं चास्त्येव नास्त्येवेति च नियतं वोतानियतं,आद्ये व्यभिचार इत्याह। य इति। द्वितीये पदार्थनिश्चयो न स्यादित्याह। इतरथेति। अनेकान्तं सर्वमित्येव निश्चय इति शङ्कते। नन्विति। तस्य निश्चयरूपत्वं नियतमनियतं वा आद्ये वस्तुत्वस्य तस्मिन्नेवैकरूपनिश्चये व्यभिचारः, द्वितीये तस्य संशयत्वं स्यादित्याह। नेति ब्रूम इति। प्रमायामुक्तन्यायं प्रमात्रादावतिदिशति। एवमिति। निर्धारणं फलं यस्य प्रमाणादेस्तस्येत्यर्थः। इत्येवं सर्वत्रानिर्धारणे सत्युपदेशो निष्कम्पप्रवृत्तिश्च न स्यादित्याह। एवं सतीति। अनेकान्त-

शक्नुयात्, कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्धा-
रितरूपे प्रवर्त्तेरन्। ऐकान्तिकफलत्वनिर्धारणे हि सति तत्-
साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्त्तते नान्यथा, अ-
तश्चानिर्धारितार्थं शास्त्रं *प्रलपन् मत्तोन्मत्तवदनुपादेयवचनः
स्यात्। तथा पञ्चानामस्तिकायानां पञ्चत्वसङ्ख्याऽस्ति वा नास्ति
वेति विकल्प्यमाना स्यात् तावदेकस्मिन् पक्षे पक्षान्तरे तु न स्या-
दित्यतो न्यूनसङ्ख्यात्वमधिकत्वं वा प्राप्नुयात्। न चैषां पदार्थाना-
मवक्तव्यत्वं सम्भवति अवक्तव्याश्चेन्नोच्येरन् उच्यन्ते चावक्तव्याश्चे-
ति विप्रतिषिद्धं। उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त
इति च, तथा तदवधारणफलं सम्यग्दर्शनमस्ति नास्ति वा, एवं
तद्विपरीतमसम्यग्दर्शनमप्यस्ति नास्ति वा, एवं तद्विपरीतमस-
म्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन्मत्तोन्मत्तपक्षस्यैव स्यात्। न
प्रत्ययितव्यपक्षस्य स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावस्तथा

---

वादे अस्तिकायपञ्चत्वमपि न स्यादित्याह। तथा पञ्चानामिति। यदु-
क्तमवक्तव्यत्वं तत् किं केनापि शब्देनावाच्यत्वं उत सकृदनेकशब्दावा-
च्यत्वं, नाद्यः व्याघातादित्याह। न चैषामिति। उच्यन्ते चावक्तव्या-
दिपदैरिति शेषः। न द्वितीयः सकृदेकवक्तृमुखजानेकशब्दानामप्रसि-
द्धेर्निषेधायोगात् शेषस्यापि मुखभेदात्। न चार्थस्य युगपद्विरुद्धधर्म्म-
क्रान्तौ वस्तुमूलकमानसप्रत्यक्षेण विनिश्चितमिति वाच्यं, तादृक्प्र-
त्यक्षस्य एवानुत्पत्तेरिति। किञ्च विरुद्धानेकप्रलापित्वादर्हन्मनाप्त
इत्याह। उच्यमानाश्चेत्यादिना। इति च प्रलपन्नित्यन्वयः। अर्हन्निति
शेषः। अनाप्तपक्षस्यैवान्तर्गतः स्यान्नाप्तपक्षस्येत्यर्थः। इतश्चासङ्गतो-
ऽनेकान्तवाद इत्याह। स्वर्गेति। कृत्स्नानादिसिद्धोऽर्हन्मुनिः। अन्ये तु

---

* प्रणयन्निति वर्ध० का०।

पचे नित्यता पचे चानित्यतेत्यनवधारणायां प्रवृत्त्यनुपपत्तिः। अनादिसिद्धजीवप्रभृतीनाञ्च स्वशास्त्रावधृतस्वभावानामयथावधृतस्वभावत्वप्रसङ्गः। एवं जीवादिषु पदार्थेष्वेकस्मिन् धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोर्धर्मयोरसम्भवात् सत्त्वे चैकस्मिन् धर्मेऽसत्त्वस्य धर्मान्तरस्यासम्भवात् असत्त्वे चैवं सत्त्वस्यासम्भवादसङ्गतमिदमार्हतं मतं। एतेनैकानेकनित्यानित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युपगमा निराकृता मन्तव्याः। यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः सङ्घाताः सम्भवन्तीति कल्पयन्ति तत् पूर्वेणैवाणुवादनिराकरणेन निराकृतं भवतीत्यतो न पृथक् तन्निराकरणाय प्रयत्यते॥

## एवञ्चात्माऽकार्त्स्न्यं ॥ ३४ ॥

यथैकस्मिन् धर्मिणि विरुद्धधर्मासम्भवो दोषः स्याद्वादे प्रसक्तः एवमात्मनोऽपि जीवस्याकार्त्स्न्यमपरो दोषः प्रसज्येत। कथं शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीर-

---

हेत्वनुष्ठानान्मुच्यन्ते, अननुष्ठानाद्बध्यन्त इत्यार्हततन्त्रावधृतस्वभावाना त्रिविधजीवाना त्रैविध्यनियमोऽपि न स्यादित्याह। अनादीति। प्रपञ्चितं सूत्रार्थं निगमयति। एवमिति। एतेनेति सत्त्वासत्त्वयोरेकत्र निरासेनेत्यर्थः। परमाणुसंघाताः पृथिव्यादय इति दिगम्बरसिद्धान्तः किमिह सूत्रकृतोपेक्षितस्तत्राह। यत्त्विति॥

जीवस्य देहपरिमाणता दूषयति। एवञ्चेति। अकार्त्स्न्यं मध्यमपरिमाणत्वं तेनानित्यं स्यादित्यर्थः। अर्थान्तरमाह। शरीराणाञ्चेति। विपाकः कर्म्मणामभिव्यक्तिर्जीवस्य हस्तिगजशरीराव्यापित्वमकार्त्स्न्यं शरीरैकदेशो निर्जीवः स्यादित्यर्थः। पुत्तिकादेहे हस्तो जीवो न

परिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत। शरीराणाञ्चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित् कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात्, पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नपुत्तिकाशरीरे संमीयेत। समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः। स्यादेतत्, अनन्तावयवो जीवस्तस्य त एवावयवा अल्पे शरीरे सङ्कुचेयुर्महति च विकाशेयुरिति। तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिविहन्येत वा न वेति वक्तव्यं। प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे संमीयेरन्। अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेः जीवस्याणुमात्रप्रसङ्गः स्यात्। अपि च शरीरमात्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यं। अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ च केचिज्जीवा-

---

प्रविशेत् देहाद्बहिरपि जीवः स्यादित्यर्थः। किञ्च बालदेहमात्र आत्मा ततः स्थूले युवदेहे क्वचित् स्यादिति कृत्स्नदेहः सजीवो न स्यादित्याह। समान इति। यथा दीपावयवानां घटे सङ्कोचो गेहे विकाशस्तथा जीवावयवानामिति। देहमानत्वनियमं शङ्कते। स्यादिति। दीपांशवज्जीवांशा भिन्नदेशा एकदेशा वेति विकल्प्याद्येऽन्यदेहाद्बहिरपि जीवः स्यादिति दूषयति। तेषामित्यादिना। दीपस्य तु न घटाद्बहिः सत्त्वं अधिकावयवानां विनाशात्। द्वितीयं दूषयति। अप्रतिघात इति। अवयवानां नित्यत्वमसिद्धं अल्पत्वाद्दीपांशवदित्याह। अपि चेति। एवं जीवावयवा नित्या इति मते देहमानत्वं निरस्तं, सम्प्रति जीवस्य

वयवा उपगच्छन्ति तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्ति इत्युच्येत तत्राप्युच्यते ॥

## न च पर्य्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

न च पर्य्यायेणाप्यवयवोपगमापगमाभ्यामेतद्देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते। कुतः विकारादिदोषप्रसङ्गात्। अवयवोपगमापगमाभ्यां ह्यनिशमापूर्य्यमाणस्यापचीयमाणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्यं, विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत, ततश्च बन्धमोक्षाभ्युपगमो बाध्येत, कर्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत् संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्द्ध्वगामित्वं भवतीति। किञ्चान्यदागच्छतामपगच्छताञ्चावयवानामागमापायिधर्मवत्त्वादेवानात्मत्वं शरीरादिवत् । ततश्चावस्थितः कश्चिदवयव

केचिदेव कूटस्था अवयवा अन्ये त्वागमापायिन इति शङ्कते। अथेति। वृहत्तनुकायामौ जीवस्यावयवागमोपायाभ्या देहमानत्वमित्यर्थः॥

सूत्रेण परिहरति । न चेति । आगमापायौ पर्य्यायः। किमागमापायिनामवयवानामात्मत्वमस्ति न वा, आद्ये आह। विकारादिदोषेति। कोऽसौ बन्धमोक्षाभ्युपगम इत्यत आह । कर्माष्टकेति। व्याख्यातमेतत्, आद्यकल्पे दोषं वदन् कल्पान्तरमादाय दूषयति। किञ्चेति। अवस्थितकूटस्थावयवस्य दुर्ज्ञानत्वादात्मज्ञानाभावान्न मुक्तिरित्यर्थः। यथा दीपावयवाना आकारस्तेजस्तथात्मावयवानामाकारकारणाभावान्नागमापायौ युक्ताविव्याह । किञ्चेति। सर्वजीवसाधारणः प्रतिजीवमसाधारणो वेत्यर्थः। किञ्चात्मन आगमापायिशीलावयवत्वे सति कियन्त आयान्त्यवयवाः कियन्तोऽपयन्तीत्यज्ञानादात्मनिश्चयाभावादनिर्मोक्षः स्या-

आत्मेति स्यात्, न च स निरूपयितुं शक्यते अयमसाविति। किञ्चान्यदागच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति अपगच्छन्तश्च क्व वा लीयन्त इति वक्तव्यं। न हि भूतेभ्यः प्रादुर्भवेयुः भूतेषु च लीयेरन् अभौतिकत्वाज्जीवस्य। नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते प्रमाणाभावात्। किञ्चान्यदनवधृतस्वरूपश्चैवं सत्यात्मा स्यात् आगच्छतामपगच्छताञ्चावयवानामनियतपरिमाणत्वात्, अत एवमादिदोषप्रसङ्गात् न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्यते। अथ वा पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकार्त्स्न्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसन्ताननित्यतान्यायेनात्मनो नि-

---

दित्याह। किञ्चेति। अपि चावयवारब्धावयवित्वे जीवस्यानित्यत्वं अनयवसमूहत्वेनासत्त्वं आत्मत्वस्य यावदवयववर्त्तित्वे यत्किञ्चिदवयवापायेऽपि सद्यः शरीरस्याचेतनत्वं गोत्ववत् प्रत्येकसमाप्तौ एकस्मिन् शरीर आत्मनानात्वं स्यादतो न देहपरिमाणत्वसावयवत्वे आत्मन इत्युपसंहरति। अत इति। सूत्रस्यार्थान्तरमाह। अथवेति। स्थूलसूक्ष्मशरीरप्राप्तावकार्त्स्न्यद्वारेणात्मानित्यतायामुक्तायां सुगतवत् सन्तानरूपेणात्मनित्यतामाशङ्कानेनोत्तरमुच्यत इत्यन्वयः। पर्यायेणेत्यस्य व्याख्या स्रोत इति देहभेदेन परिमाणस्यात्मनश्चानवस्थानेऽपि नाशेऽपि स्रोतः प्रवाहस्तदात्मकस्यात्मव्यक्तिसन्तानस्य नित्यतयात्मनित्यता स्यादित्यत्र दृष्टान्तमाह। यथेति। सिरवस्त्वं विगतं येभ्यस्ते विसिचो दिगम्बरास्तेषामित्यर्थः। पर्यायात् सन्तानादप्यात्मनित्यत्वस्याविरोध इति न

त्यता स्यात्, यथा रक्तपटादीनां विज्ञानानवस्थानेऽपि तत्सन्ताननित्यता तद्वद्दिक्सिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते। सन्तानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः, वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥**

अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैस्तद्वत् पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गात् अविशेषप्रसङ्गः स्यात् इत्युक्ते एकशरीरपरिमाणतैव स्यात् नोपचितापचितशरीरान्तरप्राप्तिः। अथ वान्त्यस्य

---

च कुतः, विकारादिभिः सन्तानस्यावस्तुनः आत्मत्वे शून्यवादः सन्तानस्य वस्तुत्वे सन्तानव्यतिरेके च कूटस्थात्मवादः, अनतिरेके जन्मादिविकारो विनाशो मुक्त्यभावदोष इत्युक्तप्रसङ्गात् सन्तानात्मपक्षोऽनुपपन्न इति सूत्रार्थः ॥

यः स्थूलं सूक्ष्मं वा देहं गृह्णाति तद्देहपरिमाण एव जीव इति नियमं दूषयति। अन्त्येति। अन्त्यशरीरपरिमाणस्यावस्थितेर्नित्यत्वदर्शनादुभयोराद्यमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषस्त्रयाणां नित्यपरिमाणानां साम्यं स्याद्विरुद्धपरिमाणानामेकत्रायोगादिति सूत्रयोजना। आद्यमध्यमपरिमाणे नित्ये आत्मपरिमाणत्वादन्त्यपरिमाणवत्। न चाप्रयोजकता, परिमाणनाशे सत्यात्मनोऽपि नाशादन्त्यपरिमाणनित्यत्वायोगादिति भावः। परिमाणत्रयसाम्यापादानफलमाह। एकेति। अन्त्यशरीरसमान्येव पूर्वशरीराणि स्युः विषमशरीरप्राप्तावात्मनस्तत्परिमाणत्वे परिमाणत्रयसाम्यानुमानविरोधादित्यर्थः। पूर्वं कालत्रये परिमाणत्रयमङ्गीकृत्यान्त्यदृष्टान्तेन नित्यत्वमनुमाय साम्यमापादितं, सम्प्रत्यन्त्यस्य मुक्तपरिमाणस्याणुत्वस्थूलत्वयो-

जीवपरिमाणस्यावस्थितत्वात् पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात्। ततश्चाविशेषेण सर्वदैवाणुर्महान् वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः, अतश्च सौगतवदार्हतमपि मतमसङ्गतमित्युपेक्षितव्यं॥

पत्युरसामञ्जस्यात्॥ ३७॥

इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते। तत् कथमवगम्यते, प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधादभिध्योपदेशाच्चेत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात्। यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत पूर्वोत्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत। तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मै-

---

रन्यतरत्वेनावस्थितेस्तदेवान्त्यमाद्यमध्यमकालयोरपि नित्यत्वात् स्यात् प्रागसतोऽनित्यत्वायोगात्, तथा चाविशेषः कालत्रयेऽपि जीवपरिमाणाभेद इत्याह। अथ वेति। तस्माद् भ्रान्त्येकशरणक्षपणकसिद्धान्तेनाविरोधः समन्वयस्येति सिद्धं॥

पत्युरसामञ्जस्यात्। लुञ्चितकेशमतनिरासानन्तरं जटाधारिशैवमतं बुद्धिस्थं निराक्रियते इति प्रसङ्गसङ्गतिमाह। इदानीमिति। सामान्य ईश्वरनिरास एवात्र किं न स्यादिति शङ्कते। तदिति। स्वोक्तिविरोधान्नैवमित्याह। प्रकृतिश्चेत्यादिना। प्रतिष्ठापितत्वात् फलनिमित्तेश्वरप्रतिषेधोऽवगम्यत इत्यन्वयः। व्याहतो विरुद्धोऽभिव्याहार उक्तिर्यस्य स तथा। अद्वितीयब्रह्मप्रकृतिकं जगदिति वदतो वेदान्तसमन्वयस्य कर्त्तैवेश्वरो न प्रकृतिरिति शैवादिमतेन विरोधोऽस्ति न

कत्वप्रतिपन्नत्वात् यत्नेनात्र प्रतिषिध्यते । सा चेयं वेदबाह्येश्वरकल्पनाऽनेकप्रकारा । केचित्तावत् साङ्ख्ययोगव्यपाश्रयाः कल्पयन्ति प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति । माहेश्वरास्तु मन्यन्ते कार्य्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षायोपदिष्टाः, पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति । तथा वैशेषिकादयोऽपि केचित् कथञ्चित् स्वप्रक्रियानुसारेण निमित्तकारणमिति । अत उत्तरमुच्यते । पत्युरसामञ्जस्यादिति । पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते, कस्मादसाम-

---

वेति सन्देहे तन्मतस्य मानमूलत्वाविरोधे सति वेदान्तोक्ताद्वयब्रह्मासिद्धिरिति फलमभिप्रेत्य सत्त्वासत्त्वयोरेकत्रासम्भवात् कर्तृत्वोपादानत्वयोरप्येकत्रासम्भवात् कर्त्तैवेश्वर इति पूर्वपक्षं कुर्वन्नवान्तरमतभेदमाह । सा चेति । सेश्वराः साङ्ख्या, साङ्ख्यशब्दार्थः चत्वारो माहेश्वराः शैवाः पाशुपताः कारुकसिद्धान्तिनः कापालिकाश्चेति । सर्वेऽप्यमी महेश्वरप्रोक्तागमानुगामित्वान्माहेश्वरा उच्यन्ते । कार्य्यं महदादिकं, कारणं प्रधानं ईश्वरश्च, योगः समाधिः, विधिः त्रिसवनस्नानादिः, दुःखान्तो मोक्षः इति पञ्च पदार्थाः । पशवो जीवास्तेषां पाशो बन्धस्तन्नाशायेत्यर्थः । पाशुपतागमप्रामाण्यात् पशुपतिर्निमित्तमेवेति मतमुक्त्वाऽऽनुमानिकेश्वरमतमाह । तथेति । विमतं सकर्तृकं कार्य्यत्वात् घटवदिति वैशेषिकाः कर्त्तारमीश्वरं साधयन्ति, कर्मफलं सपरिकराभिज्ञदातृकं कालान्तरभावि फलत्वात् सेवाफलवदिति गौतमा दिगम्बराश्च । ज्ञानैश्वर्य्योत्कर्षं क्वचिद्विश्रान्तः सातिशयत्वात् परिमाणवदिति साङ्ख्यसौगतपातञ्जला इति मत्वोक्तं केचित् कथञ्चिदिति । सिद्धान्तयति । अत इति । आगमादिना निर्दोषेश्वरसिद्धेः कथं दोष

प्रवर्त्तनालक्षणा दोषा इति न्यायवित्समयः। न हि कश्चिद-
दोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्त्तमानो दृश्यते। स्वार्थप्रयुक्त
एव च सर्वो जनः परार्थेऽपि प्रवर्त्तत इत्येवमप्यसामञ्जस्यं, स्वा-
र्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात्। पुरुषविशेषत्वाभ्युपगमाच्चेश्व-
रस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यं॥

---

णाच्च, दृष्टान्तस्याव्यापकधर्माणां पक्षे आपादनं ह्युत्कर्षसमा जाति-
र्यथा शब्दो यदि कृतकत्वेन हेतुना घटवदनित्यः स्यात् तर्हि तेनैव-
हेतुना सावयवोऽपि स्यादिति। न ह्यनित्यत्वस्य व्यापकं सावय-
वत्वं गन्धादौ व्यभिचारादिति भावः। ननु प्राणिकर्मप्रेरित ईश्वरो
विषमफलान् प्राणिनः करोति न स्वेच्छयेति शङ्कते। प्राणीति।
जडस्य कर्मणः प्रेरकत्वायोगान्नैवमित्याह। नेति। न चेश्वरप्रेरितं
कर्मेश्वरस्य प्रेरकमिति वाच्यमित्याह। कर्मेति। अतीतकर्मणा प्रेरित
ईश्वरो वर्त्तमानं कर्म तत्फलाय प्रेरयतीत्यनादित्वात् प्रेर्यप्रेरकभावस्य
नानुपपत्तिरिति शङ्कते। अनादित्वादिति। अतीतकर्मणोऽपि जडत्वाने-
श्वरप्रेरकता न च तदपीश्वरेण प्रेरितं सदीश्वरं प्रेरयति उक्तान्योऽ-
न्याश्रयात्ततोऽप्यतीतकर्मप्रेरितेश्वरप्रेरितं तदेवेश्वरं वर्त्तमाने कर्मणि
फलदानाय प्रेरयतीति चेन्न मानहीनाया मूलक्षयावहाया अनवस्थायाः
प्रसङ्गादतः कर्मनिरपेक्ष एवेश्वरो विषमस्तस्यासामञ्जस्यं दुर्वारमि-
त्यर्थः। यत्तु फलदानं ईश्वरस्य कर्मनिमित्तमात्रं न प्रेरकमिति नोक्त-
दोष इति, तन्न, विषमकर्म कारयितुरीश्वरस्य दोषवत्त्वानपायात, पूर्व-
कर्मापेक्षया कर्मकारयितृत्वे चोक्ताप्रामाणिकानवस्थानात्, अस्माकन्त्वेष
ह्येव साध्वसाधु कारयतीति निरवद्यमिति च श्रुतिमूलं पूर्वकर्मापेक्षया
कल्पनमिति वैषम्य। किञ्च परमतानुसारेणापीश्वरस्य रागादिमत्त्वं
प्राप्नोतीत्याह। अपि चेति। प्रवर्त्तकत्वलिङ्गा दोषा इति तार्किकाणां
स्थितिः, तथा चेश्वरः स्वार्थरागादिमान् प्रवर्त्तकत्वात् सम्मतवत्। न च
कारुणिके व्यभिचारः परदुःखप्रयुक्तस्वदुःखनिवृत्त्यर्थित्वात्तस्येत्यर्थः।
उदासीनः प्रवर्त्तक इति च व्याहतमिति योगान् प्रत्याह। पुरुषेति।

## सम्बन्धानुपपत्तेश्च॥३८॥

पुनरप्यसामञ्जस्यमेव, न हि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण सम्बन्धं प्रधानपुरुषयोरीशिता। न तावत् संयोगलक्षणः सम्बन्धः सम्भवति, प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च। नापि समवायलक्षणः आश्रयाश्रयिभावानिरूपणात्। नाप्यन्यः कश्चित् कार्य्यगम्यः सम्बन्धः शक्यते कल्पयितुं, कार्य्यकारणभावस्यैवाद्याप्यसिद्धत्वात्। ब्रह्मवादिनः कथमिति चेत्, न, तस्य तादात्म्यलक्षणसम्बन्धोपपत्तेः। अपि चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यं। परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः। परस्यापि सर्वज्ञप्रणीतागमसद्भावात् समानमागमबलमिति चेत्, न, इतरेतराश्रयप्रसङ्गात् आगमप्रत्ययात् सर्वज्ञत्वसिद्धिः सर्वज्ञत्व-

---

प्रधानवादे दोषान्तरमाह सूत्रकारः। सम्बन्धेति। ईश्वरेणासम्बन्धस्य प्रधानादेः प्रेर्य्यत्वायोगात् सम्बन्धो वाच्यः, स च संयोगः समवायो वाऽस्तीत्यर्थः। कार्य्यबलात् प्रेरणयोग्यत्वाख्यः सम्बन्धः कल्प्यतामित्यत आह। नाप्यन्य इति। ईश्वरप्रेरितप्रधानकार्य्यं जगदिति सिद्धश्चेत् सम्बन्धकल्पना स्यात्, तच्चाद्याप्यसिद्धमित्यर्थः। मायाब्रह्मणोस्त्वनिर्वाच्यतादात्म्यसम्बन्धः, देवात्मशक्तिमिति श्रुतेः। किञ्च वेदस्यापूर्वार्थत्वान्न लोकदृष्टमृत्कुलालसम्बन्धो वैदिकेनानुसर्त्तव्यः। आनुमानिकेन त्वनुसर्त्तव्यः इति विशेषमाह। अपि चेति। सर्वज्ञस्यागमप्रामाण्यस्य च ज्ञप्तावन्योन्याश्रयः अनुमानात् सर्वज्ञसिद्धेर्निरस्तत्वात्, न ह्यमनस्कस्य ज्ञानं मनोजन्यमिति व्याप्तिविरोधादित्यनाक-

प्रत्ययाच्चागमसिद्धिरिति, तस्मादनुपपन्ना साङ्ख्ययोगवादिनामीश्वरकल्पना। एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासम्भवमसामञ्जस्यं योजयितव्यं॥

## अधिष्ठानानुपपत्तेश्च॥ ३९॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानान्यधिष्ठाय प्रवर्त्तयेत्। न चैवमुपपद्यते। न ह्यप्रत्यक्षं रूपादिहीनञ्च प्रधानमीश्वरस्याधिष्ठेयं सम्भवति, मृदादिवैलक्षण्यात्॥

## करणवच्चेन्न भोगादिभ्यः॥ ४०॥

स्यादेतत्, यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनञ्च पुरुषोऽधितिष्ठति, एवं प्रधानमीश्वरोऽधिष्ठास्यतीति, तथापि नोपपद्यते। भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते, न चात्र भोगादयो दृश्यन्ते। करणग्रामसाम्ये चाभ्युपगम्यमाने

---

ल्पनाऽनवकाशादिति भाव। प्रधानवत् परमाणूनामपि निरवयवेश्वरेण संयोगाद्यसत्त्वात् प्रेर्यत्वायोग, प्रेरकत्वे चेश्वरस्य दोषवत्त्वमित्याह। एवमन्यास्वपीति॥

ईश्वरस्य प्रधानादिप्रेरणानुपपत्तेश्च सामञ्जस्यमित्याह सूत्रकार। अधिष्ठानेति। प्रधानादिकं चेतनस्यानधिष्ठेयं प्रत्यक्षत्वादीश्वरव्यतिरेकेण मृदादिवच्चेत्यर्थ॥

संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन्। अन्यथा वा सूत्रद्वयं व्याख्यायते। अधिष्ठानानुपपत्तेश्च। इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते न निरधिष्ठानः, अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किञ्चिच्छरीरं करणायतनं वर्णयितव्यं स्यात्, न च तद्वर्णयितुं शक्यते। सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक् सृष्टेस्तदनुपपत्तेः निरधिष्ठानत्वे चेश्वरस्य प्रवर्त्तकत्वानुपपत्तिः, एवं लोके दृष्टत्वात्। करणवच्चेन्न भोगादिभ्यः। अथ लोकदर्शनानुसारेणेश्वरस्यापि

---

दात् विषयानुभवग्रहः। न च यत् येनाधिष्ठेयं तत्तदीयभोगहेतुत्वे सति प्रत्यक्षमिति व्यतिरेकव्याप्तौ करणेषु व्यभिचारतादवस्थ्यमिति वाच्यं, भोगहेतुत्वविशिष्टाप्रत्यक्षत्वस्य हेतुत्वात्, करणेषु च विशेषणाभावेन विशिष्टस्य हेतोरभावात्। न च विशेष्यवैयर्थ्यं परार्थपाचकाधिष्ठेयकाष्ठादौ व्यभिचारात्। न च प्रधानादेरीश्वरप्रत्यक्षत्वाद्विशेष्यासिद्धिः, अतीन्द्रियत्वरूपाप्रत्यक्षत्वस्य सत्त्वादित्यभिप्रायः। जीवे करणकृता भोगादयो दृश्यन्ते, ईश्वरे तु प्रधानकृतास्ते न दृश्यन्त इत्यक्षरार्थः। विपक्षे दोषं वदन् अप्रयोजकत्वं हेतोर्निरस्यति। करणेति। प्रधानादेः प्रेर्य्यत्वाङ्गीकारे प्रेरकभोगहेतुत्वं स्यादतीन्द्रियस्य प्रेर्य्यस्य भोगहेतुत्वनियमादित्यर्थः। सूत्रद्वयस्यार्थान्तरमाह। अन्यथा वेति। यः प्रवर्त्तकश्चेतनः स शरीरीति लोके व्याप्तिर्दृष्टा। ईश्वरस्य च शरीरानुपपत्तेर्न प्रवर्त्तकत्वमिति सूत्रार्थमाह। इतश्चेति। विमतं सेश्वरं कार्य्यत्वाद्राष्ट्रवदिति कल्पयतो राजवत् सशरीर एवेश्वरः स्यादित्युक्तं, तच्चेष्टापत्तिं निरस्यति। न च तद्वर्णयितुमिति। न च नित्यं शरीरं सर्गात् प्रागपि सम्भवतीति वाच्यं, शरीरस्य भौतिकत्वनियमादित्यर्थः। अतस्त्वशरीर एवेश्वर इत्यत आह। निरधिष्ठानत्वे चेति। जीवस्येव शरीरं भौतिकं ईश्वरस्य

## उत्पत्त्यसम्भवात् ॥ ४२ ॥

येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणं ईश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः, येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राक् निर्धारितः प्रकृतिश्चाधिष्ठाता चेति, श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः, तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति। उच्यते। यद्यप्येवंजातीयकोऽंशः समानत्वान्न विसंवादगोचरो भवत्यस्ति त्वंशान्तरं विसंवादस्थानमिति, अतस्तत्प्रत्याख्यानायारम्भः। तत्र भागवता मन्यन्ते भगवानेवैको वासुदेवः निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण सङ्कर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेण अनिरुद्धव्यूहरूपेण च। वासुदेवो नाम परमात्मोच्यते, सङ्कर्षणो नाम जीवः, प्रद्युम्नो नाम मनः, अनिरुद्धो नामाहङ्कारः, तेषां

---

पशुपदार्थवादिमाहेश्वरमतनिरासानन्तरं चतुर्व्यूहवादं बुद्धिस्थं निरस्यति। उत्पत्त्यसम्भवात्। अधिकरणतात्पर्यमाह। येषामिति। अधिकरणारम्भमाक्षिपति। नन्विति। वेदाविरुद्धांशमङ्गीकृत्य वेदविरुद्ध जीवोत्पत्त्यंशं निराकर्तुमधिकरणारम्भ इत्याह। उच्यत इति। अत्र भागवतपञ्चरात्रागमो विषयः स किं जीवोत्पत्त्याद्यंशे मानं नवेति सन्देहे बाधानुपलम्भान्मानमिति पूर्वपक्षयति। तत्रेति। पूर्वपक्षे तदागमविरोधाज्जीवाभिन्नब्रह्मसमन्वयासिद्धिः, सिद्धान्ते तदंशे तस्याऽमानत्वादविरोधात्तत्सिद्धिरिति फलभेदः। सावयवत्वं निरस्यति। निरञ्जनेति। कथं तर्ह्यद्वितीये वासुदेवे मूर्त्तिभेदस्तत्राह। स इति। चतुर्धा

वासुदेवः परा प्रकृतिः, इतरे सङ्कर्षणादयः कार्य्यं, तमित्थम्भूतं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति। 'तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मनाऽऽत्मानमनेकधा व्यूह्यावस्थित इति, तन्न निराक्रियते, 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधा भवस्याधिगतत्वात्। यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनं अजस्रमनन्यचित्ततयाऽभिप्रेयते तदपि न प्रतिषिध्यते श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्। यत् पुनरिदमुच्यते वासुदेवात् सङ्कर्षण उत्पद्यते संङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति। अत्र ब्रूमः, न वासुदेवसंज्ञकात् परमात्मनः सङ्कर्षणसंज्ञस्य जीवस्योत्पत्तिः सम्भवति, अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन्, ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्, कारणप्राप्तौ कार्य्यस्य प्रवि-

---

मूर्त्तिः। सविशेषं शास्त्रार्थमुक्त्वा सहेतुं पुरुषार्थमाह। 'तमित्थम्भूतमिति। यथोक्तव्यूहवन्तं सर्वप्रकृतिं निरञ्जनं विज्ञानरूपं परमात्मानमिति यावत्। वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनमभिगमनं, पूजाद्रव्याणामर्ज्जनमुपादानं, इज्या पूजा, स्वाध्यायोऽष्टाक्षरादिजप, योगो ध्यानं। तत्राविरुद्धांशमनुमोदते। तत्रेति। समाहितः श्रद्धावित्तो भूत्वेति 'तं यथा यथोपासते' इत्याद्या च श्रुतिः। मत्कर्मकृन्मत्परमः' इत्याद्या स्मृतिः। विरुद्धांशमनूद्य दूषयति। यत् पुनरिति। कृतहान्यादिदोष आदिशब्दार्थः। न्यायोपेतया 'अज आत्मा' इत्यादिश्रुत्या पञ्चरात्रागमस्योत्पत्त्यंशे मानत्वाभावनिश्चयाज्जीवाभिन्नब्रह्मसमन्वयस्थैर्य्यमिति भावः। जीवस्योत्पत्तिं निरस्य जीवान्मनस उत्पत्तिं निर-

वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा दृश्यन्ते। न चैते भगवद्व्यूहाश्चतुःसङ्ख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात्॥

विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः। ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात्। वेदविप्रतिषेधश्च भवति, चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रं अधिगतवान् इत्यादिवेदनिन्दादर्शनात्, तस्मादसङ्गतैषा कल्पनेति सिद्धं॥

इति श्रीशारीरकमीमांसाभाष्ये शङ्करभगवत्पादकृतौ द्वितीयाध्यायस्य द्वितीयः पादः॥ ० ॥

---

प्रकृतितुल्या वा न्यूना वा, आद्यमुत्थाप्य निषेधति। अथेत्यादिना। न्यूनत्वपक्षेऽपसिद्धान्तमाह। न च पक्षेति। यदि न्यूना अपि भगवतो व्यूहास्तदा चतुर्धा व्याघात इत्याह। न चैत इति॥

इतश्च जीवोत्पत्तिवाद उपेक्ष्य इत्याह सूत्रकारः। विप्रतिषेधाच्चेति। स्वस्यैव गुणत्वं गुणित्वञ्च विरुद्धं आदिपदात् प्रद्युम्नानिरुद्धौ भिन्नावात्मन इत्युक्त्वात्मन एवैते इति विरुद्धोक्तिग्रह। पूर्वापरविरोधादासङ्गत्यमिति सूत्रार्थमुक्त्वार्थान्तरमाह। वेदेति। एकस्यापि तन्त्रादरस्याध्येता चतुर्वेदिभ्योऽधिक इति निन्दाऽऽदिपदार्थः, तस्मान्मिथो विरुद्धाभिः पौरुषेयकल्पनाभिर्नापौरुषेयवेदान्तसमन्वयविरोध इति सिद्धं।

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां द्वितीयाध्यायस्य द्वितीयः पादः।

ॐ परमात्मने नमः ।



## न वियदश्रुतेः ॥ १ ॥

वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते । केचिदाकाशस्योत्पत्तिमामनन्ति केचिन्न । तथा केचिद्वायोरुत्पत्तिमामनन्ति केचिन्न । एवं जीवस्य प्राणानाञ्च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते । विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं तद्वत् स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव; तत्र प्रथमं तावदाकाशमाश्रित्य

---

ॐ ब्रह्मणे नमः ।

वियदादिविधातारं सीताख्याजमधुव्रतम् ।
नित्यचिद्विश्वकर्तारमात्माभिन्नं सर्वेश्वरं भजे ॥ १ ॥

जीवस्यानुत्पत्तिप्रसङ्गेनाकाशस्याप्युत्पत्त्यसम्भवमाशङ्क्य परिहरन्नादावेकदेशिमतमाह । न वियदश्रुतेः । वियत्प्राणपादयोरर्थं सङ्क्षिपन् पूर्वपादेन सङ्गतिमाह । वेदान्तेष्विति । भिन्नोपक्रमत्वमेवाह । केचिदित्यादिना । भूतभोक्तृश्रुतीनां मिथोविरोधशङ्कानिरासो वियत्पादार्थः । लिङ्गशरीरश्रुतीनां तन्निरासः प्राणपादार्थः । यथा मिथोविरोधात् पूर्वापरविरोधाच्च परपक्षा उपेक्ष्याः तथा श्रुतिपक्षोऽपि उपेक्ष्य इति शङ्कोत्थाने पादद्वयस्यारम्भात् पूर्वपादेन दृष्टान्तसङ्गतिरिति समुदायार्थः । आकाशवाय्वोरुत्पत्तिमामनन्ति तैत्तिरी-

चिन्त्यते किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति। तत्र तावत् प्रतिपद्यते। न वियदश्रुतेरिति। न खल्वाकाशमुत्पद्यते। कस्मात् अश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति। छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत तत्तेजोऽसृजत' इति च पञ्चानां महाभूतानां मध्यमं तेज आदिं कृत्वा त्रयाणां तेजोऽबन्नानामुत्पत्तिः श्रूयते। श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ न चात्र श्रुतिरस्याकाशस्योत्पत्तिप्रतिपादिनी तस्मान्नाकाशस्योत्पत्तिरिति ॥

## अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे। मा नामाकाशस्य छान्दोग्येऽभूदुत्पत्तिः श्रुत्यन्तरे त्वस्ति। तैत्तिरीयकाः समामनन्ति

---

यका', नामनन्ति छन्दोगाः, जीवस्य प्राणानाञ्चोत्पत्तिं सर्व एत आत्मनो व्युच्चरन्तीति वाजिनः, एतस्माज्जायते प्राण इत्याथर्वणिकाः समनन्ति। नन्वेवमाकाशपूर्विका क्वचित् सृष्टिः क्वचित्तेजःपूर्विकेति क्रमविरोधः। च्यादिपदात् 'स इमाँल्लोकानसृजतेत्यत्राम्भ.' क्वचित् सप्त प्राणाः क्वचिदष्टावित्यादिसङ्ख्यादारकश्च विरोधो ग्राह्यः, प्रपञ्च पाद-द्वयं, तथा च पादद्वयस्य श्रुतीनां मिथोविरोधनिरासार्थत्वाच्छ्रुतिशास्त्राध्यायसङ्गतयः सिद्धाः। अत्राकाशस्योत्पत्त्यनुपपत्तिश्रुत्योर्मिथो विरोधोऽस्ति न वेति वाक्यभेदैकवाक्यत्वाभ्यां सन्देहे यद्युत्पत्तिस्तदा वाक्यभेदेन विरोधादप्रामाण्यं अनयोः श्रुत्योरिति पूर्वपक्षयित्वा आदावनुत्पत्तिपक्षमेकदेशी गृह्णातीत्याह तत्र तावदिति ॥

उत्पत्तिश्रुतिर्मुख्या नास्तीति गूढाभिसन्धिः सम्प्रति पूर्वपक्षयति सूत्रकारः। अस्ति त्विति। एकवाक्यत्वेन प्रामाण्यसम्भवे किमिति श्रुत्यो-

'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः' इति। ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखेति। नन्वेकवाक्यताऽनयोः श्रुत्योर्युक्ता। सत्यं सा युक्ता न तु सावगन्तुं शक्यते, कुतः तत्तेजोऽसृजतेति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धानुपपत्तेः 'तत्तेजोऽसृजत तदाकाशमसृजत' इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन सम्बन्धो दृश्यते *यथा स सूपं पक्वौदनं पचतीति। एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामः। नैवं युज्यते, प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते, तैत्तिरीयके चाकाशस्य, न चोभयोः प्रथमजत्वं सम्भवति। एतेनेतरश्रुत्यन्तरविरोधोऽपि व्याख्यातः। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यत्रापि तस्मात् *आकाशः सम्भूतस्तस्मात्तेजः सम्भूतमिति सकृच्छ्रुतस्यापादानस्य सम्भवनस्य च वियत्तेजोभ्यां यु-

---

रप्रामाण्यमिति प्राप्ते। नन्वेकवाक्यतेति। एकवाक्यत्वासम्भवादप्रामाण्यं युक्तमित्याह। सत्यमित्यादिना। एकस्य युगपत् कार्यद्वयासम्बन्धेऽपि क्रमेण सम्बन्धसम्भवादेकवाक्यतेति मुख्यसिद्धान्ती शङ्कते। ननु सकृदिति। अप्रामाण्यवादी दूषयति। नैवमिति। क्रमो न युज्यते द्वयोः श्रुतप्राथम्यभङ्गापत्तेरित्यर्थः। एकस्माद्विदलबीजाद्दलद्वयवदुभयं प्रथममित्यत आह। न चेति। वायोरग्निरिति क्रमश्रुतिभङ्गादिति भावः। छान्दोग्यश्रुतेस्तैत्तिरीयश्रुतिविरुद्धार्थत्वमुक्त्वा तैत्तिरीयश्रुतेस्तद्विरुद्धार्थत्वमाह। एतेनेति। एतत्पदार्थमाह। तस्मादिति। छान्दोग्ये श्रुतं तेजसः प्राथम्यं अत्र दुर्योज्यमित्यर्थः। किञ्च सत्पदार्थः आत्मा छान्दोग्ये तेजस उपादानं श्रूयते अत्र तु वायुरिति नैकवाक्यते-

---

* यथेति वर्ध० का० पु० नास्ति।

गपत् सम्बन्धानुपपत्तेः, वायोरग्निरिति च पृथगाम्नानात्। अस्मिन् विप्रतिषेधे कश्चिदाह॥

## गौण्यसम्भवात्॥ ३॥

नास्ति वियदुत्पत्तिः अश्रुतेरेव। या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति। कस्मात् असम्भवात्। न ह्याकाशस्योत्पत्तिः सम्भावयितुं शक्या श्रीमत् कणभुगभिप्रायानुसारिषु जीवत्सु। ते हि कारणसामग्र्यसम्भवादाकाशस्योत्पत्तिं वारयन्ति। समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते। द्रव्यस्य चैकजातीयकमनेकञ्च द्रव्यं समवायिकारणं भवति। न चाकाशस्यैकजातीयकमनेकञ्च द्रव्यमारम्भकमस्ति यस्मिन् समवायिकारणे सति असमवायिकारणे च तत्संयोगे आकाश उत्पद्येत। तदभावात्तु

---

त्याह। वायोरिति। एवं श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे प्राप्ते स एव वियदनुत्पत्तिवादी स्वमतेन प्रामाण्यं ब्रूत इत्याह। अस्मिन्निति॥

एवमध्यायसमाप्तेरधिकरणेषु प्रथमं विरोधात् श्रुत्यप्रामाण्यमिति पूर्वपक्षफलं ततः एकदेशिसिद्धान्तः पश्चान्मुख्यसिद्धान्ते श्रुतीनामविरोधेनैकवाक्यतया ब्रह्मणि समन्वयसिद्धिरिति फलं क्रमेणावगन्तव्यं तत्र, श्रुत्योर्विरोधे सत्यध्ययनविध्युपात्तयोरप्रामाण्यायोगाद्वियदुत्पत्त्यसम्भवरूपतर्कानुगृहीतच्छान्दोग्यश्रुतिर्मुख्यार्था इतरा गौणीत्यविरोध इत्येकदेशिमतं विवृणोति। नास्तीत्यादिना। आकाशो नोत्पद्यते सामग्रीशून्यत्वादात्मवत्, न चाविद्यामन्नगुणो सत्त्वादिलक्षणो सिद्धः विजातीयत्वेनानयोरारम्भकत्वायोगादसंयुक्तत्वाच्च संयोग एव

तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति। उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः सम्भाव्यते प्रागुत्पत्तेः *प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति। आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यते। किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुं। पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः। तस्माद् यथा लोके आकाशं कुरु आकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो भवति। वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इत्येवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या॥

---

हि द्रव्यस्यासमवायिकारणमतः समवाय्यसमवायिनोरभावान्न हेतुसिद्धिरित्यर्थः। प्रागभावशून्यत्वाच्चात्मवदाकाशो नोत्पद्यते इत्याह। उत्पत्तिमतां चेति। प्रकाशस्याक्षुषानुभवः ध्वांदिपदात्तमोध्वंसपाकयोर्ग्रहणं। मूर्तद्रव्याश्रयत्वं ह्याकाशस्य कार्यं, तच्च प्रलयेऽप्यस्ति परमाण्वाश्रयत्वात् अतो न प्रागभाव इत्यर्थः। प्रागभावासत्त्वं स्फुटयति। किं हीति। स्थूलाश्रयोऽवकाशः सूक्ष्माश्रयः छिद्रमणवाश्रयः सुषिरमिति भेदः। किञ्चात्मवदाकाशो न जायते विभुत्वादस्पर्शद्रव्यत्वाच्चेत्याह। पृथिव्यादीति। तस्मादुक्ततर्कबलाद्गौणी द्रष्टव्येत्यन्वयः। भेदोक्तेर्गौणत्वे वैदिकोदाहरणमाह। वेदेऽप्यारण्यानिति। आकाशेष्विति भेदव्यपदेशो गौण इति सम्बन्धः॥

---

* प्रकाशेति टी॰ सम्मतः पाठः।

## शब्दाच्च ॥ ४ ॥

शब्दः खल्वप्याकाशस्याजत्वं ख्यापयति। यत आह 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति न ह्यमृतस्योत्पत्तिरुपपद्यते। 'आकाशवत् सर्वगतश्च नित्यः' इति च। आकाशेन ब्रह्मसर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति, न च तादृशस्योत्पत्तिरुपपद्यते। स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्य इति चोदाहरणं, आकाशशरीरं ब्रह्म आकाश आत्मेति च। न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं सम्भवति नीलेनेवोत्पलस्य। तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

इदं परोत्तरं सूत्रं। स्यादेतत् कथं पुनरेकस्य सम्भूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं सम्भवति आ-

---

न केवलं तर्कादाकाशस्यानुत्पत्तिः किन्तु श्रुतितोऽपीत्याह सूत्रकारः। शब्दाच्चेति। नित्यभावस्यानादित्वादिति भावः। चात्मेति च शब्द इत्युदाहरणमित्यन्वयः। आकाशः शरीरमस्येति बहुव्रीहिणात्यन्तसाम्यमानात् ब्रह्मवदाकाशस्यानादित्वमित्यर्थः ॥

परोत्तरमिति। शङ्कोत्तरमिति यावत्। तान्येव शङ्कापदानि पठति। स्यादेतदिति। अधिकारे प्रकरणे, यथैकस्मिन् ब्रह्मप्रकरणे अन्न ब्रह्मानन्दो ब्रह्मेति वाक्ययोर्ब्रह्मशब्दस्यान्ने गौणत्वमानन्दे मुख्यता तथैकवा-

काशे च गौणत्वमिति। अत उत्तरमुच्यते। स्याच्चैकस्यापि सम्भूतशब्दस्य विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत्। यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोगः आनन्दे च मुख्यः, यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यते अञ्जसा तु विज्ञेये ब्रह्मणि तद्वत्। कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' इतीयं प्रतिज्ञा समर्थ्यते। ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति कथञ्च ब्रह्मणि विदिते सर्वं विदितं स्यादिति। तदुच्यते। एकमेवेति तावत् स्वकार्यापेक्षयोपपद्यते। यथा लोके कश्चित् कुम्भकारकुले पूर्वेद्युर्मृद्दण्डचक्रादीनि चोपलभ्यापरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात् मृदेवैकाकिनी पूर्वेद्युरासीदिति। स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयात् न दण्डचक्रादि तद्वत्। अद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति। न च नभसाऽपि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते। लक्षणान्यत्वनिमित्तं हि

---

स्यात्स्यैकस्याऽपि सम्भूतशब्दस्य गुणमुख्यार्थभेदो योग्यताबलादित्याह। स्याच्चेति। उदाहरणान्तरमाह। यथा चेति। अभेदोपचारो भक्तिः। मुख्यसिद्धान्त्याक्षिपति। कथं पुनरिति। स एवाक्षेपद्वयं स्फुटयति। नन्विति। अद्वितीयत्वश्रुतिबाधः सर्वविज्ञानप्रतिज्ञाबाधश्चेत्यर्थः। प्रथमाक्षेपं दृष्टान्तेन परिहरति। एकमेवेति। कार्यरूपद्वितीय-

नानात्व, न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति। क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्त्तत्वादिधर्मसामान्यात्। सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरत्तिष्ठति तेनान्यत्वमवसीयते। तथाचाकाशशरीरं ब्रह्मेत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः। अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः। अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवति इत्यतो ब्रह्मणा तत्कार्येण च विज्ञातेन सह विज्ञातमेवाकाशं भवति। यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति। न हि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते। एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वात् गृहीतमेव ब्रह्मग्रहणेन नभो भवति तस्माद्भाक्तं नभसः सम्भवश्रवणमित्येवं प्राप्त इदमाह॥

---

शून्यत्वं प्रागवस्थायामवधारणश्रुत्यर्थः। कुले गृहे, अमत्राणि घटादीनि भाण्डानि। एकमेवेत्यवधारणाव्यावर्त्यं कार्यमिति व्याख्याय द्वितीयपदव्यावर्त्यमाह। अद्वितीयश्रुतिरिति। आकाशस्य द्वितीयत्वमङ्गीकृत्याद्वितीयादिपदसङ्कोच कृतस्तदपि नास्तीत्याह। न च नभसापीति। धर्मसाम्ये ब्रह्मनभसोः कथं भेदस्तत्राह। सर्गकाले त्विति। धर्मसाम्याद्द्वितीयत्वोपचार इत्यर्थं श्रुतिमाह। तथा चाकाशेति। द्वितीयमाक्षेपं परिहरति। अत एवेति। अभेदोपचारादेवेत्यर्थः। नभसो कार्याणां चाभिन्नदेशकालत्वाच्च तज्ज्ञाने ज्ञानमित्याह। अपि चेति।

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इति 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति न काचन *मद्बहिर्धा विद्यास्तीति चैवंरूपा प्रति वेदान्तं प्रतिज्ञा विज्ञायते। तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात् यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात्। व्यतिरेके हि सति एकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतीज्ञा हीयेत। स चाव्यतिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत। शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते। तथा हि येनाश्रुतं श्रुतं भवतीति प्रतिज्ञाय

---

एवमाकाशस्यानुत्पत्तौ सर्वश्रुतीनामविरोध इत्येकदेशिसिद्धान्तः प्राप्तः, तं मुख्यसिद्धान्ती दूषयति। प्रतिज्ञेति। अहानिरबाधः साम-यजुराथर्वणशाखाभेदज्ञानशब्दार्था इति शब्दाः। न काचनेति। आत्मभिन्नं ज्ञेयं नास्तीत्यर्थः। ननु सर्वस्य ब्रह्माव्यतिरेकात् प्रतिज्ञाया अहानिरित्यस्तु तथापि जीवादिवदनुत्पन्नस्याऽपि नभसो ब्रह्मणि कल्पितत्वेनाव्यतिरेकात् प्रतिज्ञासिद्धिः किं न स्यात् किमुत्पत्त्येत्यत आह। शब्देभ्यश्चेति। अव्यतिरेक एव न्यायस्तेनेत्यर्थः। अयं भावः जीवस्य तावदात्मत्वात् ब्रह्माव्यतिरेकः अज्ञानतत्सम्बन्धयोः कल्पितत्वेनाव्यतिरेकः स्वतन्त्राज्ञानायोगादज्ञानान्यजडद्रव्यस्य तु कार्यत्वेनैवाव्यतिरेकसिद्धिस्तस्याकार्यत्वे प्रधानवत् स्वातन्त्र्यादव्यतिरेकायोगात्। तथाऽऽ-न्वीयविदः 'नित्यद्रव्याणि स्वतन्त्राणि भिन्नान्यनाश्रितानि' इति, तस्मात् प्रतिज्ञासिद्धये आकाशस्य कार्यत्वेनैवाव्यतिरेको वाच्य इति

---

* मद्बहिर्धेति पर्ध० का०।

मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोऽसृजत' इति, एवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति 'ऐतदात्म्यमिदं सर्वम्' इत्यारभ्याप्रपाठकसमाप्तेः, तद्यद्याकाशं न ब्रह्मकार्यं स्यात् न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत ततश्च प्रतिज्ञाहानिः स्यात्, न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुं। तथा च प्रति वेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदममृतं पुरस्ताद्' इत्येवमादयः, तस्मात् ज्वलनादिवदेव गगणमप्युत्पद्यते। यदुक्तं अश्रुतेर्न वियदुत्पद्यते इति तदयुक्तं वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति, सत्यं दर्शितं, विरुद्धन्तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण नैकवाक्यत्वात् सर्वश्रुतीनां भवति, एकवाक्यत्वमविरुद्धानामिह तु विरोध उक्तः। सकृच्छ्रुतस्य

---

दृष्टान्तद्योतिसार्वात्म्यशब्दानाह। तथा हीति। तेन तेन दृष्टान्तेनेति यजुषि दुन्दुभ्यादिदृष्टान्तेनाथर्वणे ऊर्णनाभ्यादिदृष्टान्तेनेत्यर्थः। यजुषि प्रतिज्ञासाधका इदं सर्वमितिशब्दाः आथर्वणे ब्रह्मैवेदमिति शब्दा इति भावः। एवमाकाशोत्पत्तिकथनादेकदेशिमते दूषिते श्रुत्यप्रामाण्यवादिनोक्तं स्मारयति। सत्यं दर्शितमिति। मुख्यसिद्धान्त्याह। नैकेति। तत्तेजोऽसृजतेति सकृच्छ्रुतस्य स्रष्टुराकाशतेजोभ्यां युगपत् सम्बन्धे तित्तिरिक्रमबाधात् क्रमेणाकाशं सृष्ट्वा तेजोऽसृजतेति सम्बन्धे तेज प्राथम्यभङ्गप्रसङ्गाद्वस्तुनि विकल्पासम्भवेन तयोः

स्रष्टुः स्रष्टव्यद्वयसम्बन्धासम्भवात् द्वयोश्च प्रथमजत्वासम्भवाद्विकल्पासम्भवाच्चेति। नैष दोषः। तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः वायोरग्निः' इति। अशक्या हीयं श्रुतिरन्यथा परिणेतुं, शक्या परिणेतुं छान्दोग्यश्रुतिः तदा आकाशं वायुञ्च सृष्ट्वा तत्तेजोऽसृजतेति। न हीयं श्रुतिः तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति। एकस्य वाक्यस्य व्यापारद्वयासम्भवात्। स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत् इत्येकवाक्यत्वकल्पनायां सम्भवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हा-

---

शाखाभेदेन प्राथम्यव्यवस्थाया अयोगान्नैकवाक्यतेति प्राप्ते मुख्य एव दूषयति। नैष दोष इति। अप्रामाण्यकल्पनादरं अपौरुषेयश्रुतीनामेकवाक्यत्वेन प्रामाण्यकल्पनं तच्चैकवाक्यत्वं बलवच्छ्रुत्या दुर्बलश्रुतेः कल्प्यं, बलवती च तित्तिरिश्रुतिः प्रकृतिमपञ्चम्या पौर्वापर्याख्यक्रमस्य श्रुतत्वात्, छान्दोग्यश्रुतिस्तु दुर्बला। तेजःप्राथम्यश्रुत्यभावात् तेजःसर्गमात्रन्तु श्रुतं तृतीयत्वेन परिणेयमित्येकवाक्यतेत्यर्थः। यदुक्तं एकदेशिना छान्दोग्यश्रुत्याकाशोत्पत्तिर्वा यत इति तन्निरस्तं। किञ्च सा श्रुतिः किं तेजोजन्मपरा तत्तेजोजन्म वियदनुत्पत्त्युभयपरा, आद्ये न तद्वारणमित्याह। न हीति। अविरोधादित्यर्थः। न द्वितीयः श्रुत्यन्तरविरोधेनोभयपरत्वकल्पनायोगाद्वाक्यभेदापत्तेश्चेत्याह। एकस्येति। नन्वेकस्य स्रष्टुरनेकार्थसम्बन्धवद्वाक्यस्याप्यनेकार्थता किं न स्यादित्यत आह। स्रष्टा त्विति। एकस्य कर्तुरनेकार्थसम्बन्धो दृष्टः। न त्वेकस्य वाक्यस्य नानार्थत्वं दृष्टं नानार्थकप्रयोगे तु पय आनयेत्यादावावृत्त्या वाक्यभेद एव। आनयनस्य जलक्षीराभ्यां पृथक्सम्बन्धादित्यर्थः। फलितमाह। इत्येकेति। एकस्य शब्दस्यावृत्तिं विनाऽनेकार्थत्वं नास्ति इत्यसृजतेति शब्दस्य छान्दोग्य उपसंहृताकाशादिसम्बन्धार्थमावृ

तव्या। न चास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसम्बन्धोऽभिप्रेयते, श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्। यथा च 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति। एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति। ननु समविधानार्थमेतद्वाक्यं 'तज्जलानिति शान्त उपासीत' इति श्रुतेर्नैतत् सृष्टिवाक्यं, न तस्मादेतत्प्रदेशान्तरप्रसिद्धं क्रममनुरोद्धुमर्हति, तत्तेजोऽसृजतेत्येतत्सृष्टिवाक्यं तस्मादत्र यथाश्रुतिक्रमो ग्रहीतव्य इति, नेत्युच्यते। न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति पदार्थधर्मत्वात् क्र-

---

त्तिदोषः स्यादित्यत आह। न चेति। छान्दोग्यस्थतेजोजन्म आकाशादिजन्मपूर्वकं तेजोजन्यत्वात् तैत्तिरीयस्थतेजोजन्मवदित्याकाशादिजन्मोपसंहारि तदाकाशमसृजतेति वाक्यान्तरस्यैव कल्पनान्नावृत्तिदोष इत्यर्थः। श्रुत्यन्तरस्थः क्रमः श्रुत्यन्तरे ग्राह्य इत्यत्र दृष्टान्तमाह। यथा चेति। सृष्टौ तात्पर्यातात्पर्याभ्यां दृष्टान्तश्रुतिवैषम्यं शङ्कते। नन्वित्यादिना। तेजःप्राथम्यस्वीकारे आकाशसर्गो धर्मी तद्धर्मः प्राथम्यं चेति द्वयं श्रुतं बाधनीयमिति गौरवम् आकाशप्राथम्यस्वीकारे तेजःसर्गप्राथम्यमात्रबाध इति लाघवमिति मत्वाह। नेत्युच्यत इति। किञ्च प्रधानधर्मित्यागादरं गुणभूतस्य तेजःप्राथम्यस्य धर्मस्य त्याग इत्याह। न हीति। किञ्च किं सृष्टिपरश्रुतिसिद्धत्वात् तेजःप्राथम्यं गृह्यते उत प्रथमस्थाने तेजःसर्गश्रुत्याऽर्थात् प्राथम्यभानान्नाद्य इत्याह। अपि चेति। द्वितीयमनूद्य दूषयति। अर्थात्त्विति। यदुक्तं वस्तुनि विकल्पासम्भवादुभयोः प्राथम्यं शाखाभेदेन व्यवस्थितं न भवति

मस्य। अपि च तत्तेजोऽसृजतेति नात्र क्रमस्य वाचकः कश्चि-
च्छब्दोऽस्ति अर्थात्तु क्रमो गम्यते, स च वायोरग्निरित्यनेन श्रुत्य-
न्तरप्रसिद्धेन क्रमेण निवार्यते। विकल्पसमुच्चयौ तु वियत्तेजसोः
प्रथमजत्वविषयावसम्भवानभ्युपगमाभ्यां निवारितौ, तस्मान्नास्ति
श्रुत्योर्विप्रतिषेधः। अपि च छान्दोग्ये 'येनाश्रुतं श्रुतं भवति'
इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि
वियदुत्पत्तावुपसंख्यातव्यं किमङ्ग पुनस्तैत्तिरीयके समाम्नातं
नभो न संगृह्यते। यच्चोक्तमाकाशस्य सर्वेणानन्यदेशकालत्वाद्ब्रह्मणा
तत्कार्यैश्च सह विदितमेव तद्भवति, अतो न प्रतिज्ञा हीयते न
चैकमेवाद्वितीयमिति श्रुतिकोपो भवति क्षीरोदकवद्ब्रह्मनभसो-
रव्यतिरेकोपपत्तेरिति। अत्रोच्यते। न क्षीरोदकन्यायेनेदमेक-
विज्ञानेन सर्वविज्ञानं नेतव्यं। मृदादिदृष्टान्तप्रणयनाद्धि प्रकृ-
तिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते। क्षीरो-
दकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्।
न हि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति।

---

नाप्युभययोर्द्विदलाङ्कुरवत् समुच्चयोत्पत्त्या प्राथम्यं वायोरग्निरिति
क्रमबाधापातादिति। तदिति तदिष्टमेवेत्याह। विकल्पेति। न के-
वलं श्रुतिद्वयोरविरोधः सौहार्दञ्चास्तीत्याह। अपि चेति। विय-
दुपसंग्राह्यमित्यन्वयः। वियदनुत्पत्तिवादिनोऽक्रममनूद्य प्रतिज्ञाया
अद्वितीयश्रुतेश्च मुख्यार्थतात्पर्यावगमान्न गौणार्थतेति दूषयति। यच्चो-
क्तमित्यादिना। प्रकृतिविकारन्यायः तदनन्यत्वन्यायः, उदकं क्षीर-
स्थमपि क्षीरज्ञानान्न गृह्यते भेदादिति भावः। मास्तु सम्यक्-
ज्ञानं श्रुतेर्भ्रान्तिमूलत्वसम्भवादित्याशङ्क्यापौरुषेयत्वान्नैवमित्याह। न च

न च वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारण-मुपपद्यते। सावधारणा चेयमेकमेवाद्वितीयमिति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत। न च स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकाद्वितीयतावधारणञ्चेति न्याय्यं। मृदादिष्वपि हि तत्सम्भवात् न तदपूर्ववदुपन्यसितव्यं भवति 'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवति' इत्यादिना। तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्य। यत्पुनरेतदुक्तमसम्भवाद्गौणी गगणस्योत्पत्तिश्रुतिरिति तत्र ब्रूमः ॥ ६ ॥

## यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥

तुशब्दोऽसम्भवाशङ्काया व्यावृत्त्यर्थः। न खल्वाकाशोत्पत्त्यसम्भवाशङ्का कर्तव्या, यतो यावत् किञ्चिद्विकारजातं दृश्यते

---

वदस्येति। माया भ्रान्ति तयाऽलीकं मिथ्याभाषणं तेन वञ्चनमयथार्थबोधनं आदिपदाद्विप्रलिप्साप्रमादकरणापाटवानि गृह्यन्ते। प्रतिज्ञामुख्यत्वमभिधायाद्वितीयश्रुतिमुख्यत्वमाह। सावधारणेति। सर्वद्वैतनिषेधपरेत्यर्थः। उभयगौणत्वेऽद्भुतवदुपन्यासो मृदादिदृष्टान्तैस्साधनं च स्यादिति दोषान्तरमाह। न चेत्यादिना। कार्यमेव वस्त्वेकदेशः आकाशो नोत्पद्यते सामग्रीशून्यत्वादित्यनाकाशो विकारः विभक्तत्वाद्घटादिवदिति सत्प्रतिपक्षमाह। यत्पुनरित्यादिना।

यो विभक्तः स विकार इत्यन्वयमुक्त्वा यस्त्वविकारः स न विभक्तः यथात्मेति व्यतिरेकव्याप्तिमाह। न त्वविद्यतमिति। दिगादिषु व्यभि-

घटघटिकोदञ्चनादि वा कटककेयूरकुण्डलादि वा सूचीनाराचनिस्त्रिंशादि वा तावानेव विभागो लोके लक्ष्यते, न त्वविकृतं किञ्चित् कुतश्चिद्विभक्तमुपलभ्यते। विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते, तस्मात् सोऽपि विकारो भवितुमर्हति। एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातं। नन्वात्माप्याकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिवत् प्राप्नोति, न आत्मन आकाशः सम्भूत इति श्रुतेः। यदि ह्यात्मापि विकारः स्यात् तस्मात् परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे स्यात्, तथा च शून्यवादः प्रसज्येत। आत्मत्वादेवात्मनो निराकरणशङ्कानुपप-

---

पारमार्थ्यशङ्का पञ्चसमत्वान्मैवमित्याह। एतेनेति। विभक्तत्वेनेत्यर्थः। आत्मनि व्यभिचारं शङ्कते। नन्विति। धर्मिसमानसत्ताकविभागस्य हेतुत्वात् परमार्थात्मनि विभागस्य कल्पितत्वेन भिन्नसत्ताकत्वान्न व्यभिचार इत्याह। नेति। अत्र चाज्ञानान्यद्रव्यत्वं विशेषणं अतो नाज्ञानतत्सम्बन्धादौ व्यभिचारः। नन्वात्मा कार्यः विभक्तत्वात् वस्तुत्वाद्वा घटवदित्याभासतुल्यमिदं अनुमानमित्याशङ्क्यात्मनः परमकारणत्वेन श्रुतस्य कार्यत्वे शून्यताप्रसङ्ग इति बाधकसत्त्वात् तस्याभासत्वं नात्र किञ्चिद्बाधकमस्ति प्रत्युत आकाशस्याकार्यत्वे नित्यानेकद्रव्यकल्पना श्रौतप्रतिज्ञाहान्यादयो बाधकाः सन्तीति नाभासतुल्यतेत्याह। आत्मन इति। दुष्टप्रसङ्ग इति वदन्तं प्रत्याह। आत्मत्वादिति। आत्माभावः केनचित् ज्ञायते न वा, आद्ये यो ज्ञाता स परिशिष्यत इति न शून्यता, द्वितीयेऽपि न शून्यता मानाभावादित्यर्थः। किञ्च यद्धि कार्यं सत्तास्फूर्त्योरन्यापेक्षं तन्निराकार्यमात्मा त्वकार्यो निरपेक्षत्वान्न बाधयोग्य इत्याह। न ह्यात्मेत्यादिना। कस्यचित्कारकस्यागन्तुकः कार्यो न हि सत्ता स्फूर्तिरनन्या यत्त्वादि-

त्ति। न ह्यात्माऽऽगन्तुकः कस्यचित् स्वयं सिद्धत्वात्। न ह्यात्माऽऽत्मनः प्रमाणमपेक्ष्य सिध्यति। तस्य हि प्रत्यक्षादीनि प्रमाणान्यसिद्धप्रमेयसिद्धये उपादीयन्ते। न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वय सिद्धाः केनचिदभ्युपगम्यन्ते। आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति। न चेदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते न स्वरूपं। य एव हि निराकर्ता तदेव तस्य स्वरूपं। न ह्यग्नेरौष्ण्यमग्निना निराक्रियते, तथाहमेवेदानीं जानामि वर्तमानं वस्त्वहमेवातीतमतीततरञ्चाज्ञासिषमहमेवानागतमनागततरञ्च ज्ञास्यामीत्यतीतानागतवर्तमानभावेनान्यथा

---

व्यवहारार्थं। तत्र स्फुर्तेरनन्यायत्तत्वं विवृणोति। न हीति। तदुक्तं सुरेश्वराचार्यैः॥

"प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्तथा।
यस्य प्रसादात् सिध्यन्ति तत्सिद्धौ किमपेक्ष्यते"॥ इति॥

तथा श्रुतिराह 'पुरुषः स्वयं ज्योतिस्तस्य भासा सर्वमिदं विभाति' इति च। नन्वात्मनः स्वतः सिद्धौ प्रमाणवैयर्थ्यं तत्राह। तस्येति। ननु प्रमेयस्यापि स्वप्रकाशत्वं किं न स्यादित्यत आह। न हीति। अतो न प्रमाणवैयर्थ्यमिति भावः। आत्माऽपि मानाधीनसिद्धिकः किं न स्यादित्यत आह। आत्मा त्विति। अयमर्थः निश्चितसत्ताकं हि ज्ञानं प्रमेयसत्तानिश्चायकं गेहे घटो दृष्टो न वेति ज्ञानसंशयेन दृष्ट इति व्यतिरेकनिश्चये चार्थस्वरूपानिश्चयात् ज्ञानसत्तानिश्चयश्च न स्वतः कार्यस्य स्वप्रकाशत्वायोगान्नापि ज्ञानान्तरादनवस्थानादतः साक्षिणैव ज्ञानसत्तानिश्चयो वाच्यः। तत्र साक्षिणश्चेत् ज्ञानाधीनसत्तानिश्चयः अन्योन्याश्रयः स्यादतः सर्वसाधकत्वादात्मा स्वतः सिद्ध इति।

भवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति सर्वदा वर्तमान-
स्वभावत्वात्, तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्त-
मानस्वभावत्वादन्यथास्वभावत्वं वा न सम्भावयितुं शक्यं। एव-
मप्रत्याख्येयस्वभावत्वादेवाकार्य्यत्वमात्मनः कार्य्यत्वञ्चाकाशस्य।
यत्तूक्तं समानजातीयमनेककारणद्रव्यं व्योम्नो नास्तीति तत्
प्रत्युच्यते, न तावत् समानजातीयमेवारभते न भिन्नजातीय-
मिति नियमोऽस्ति। न हि तन्तूनां तत्संयोगानाञ्च समान-
जातीयत्वमस्ति द्रव्यगुणत्वाभ्युपगमात्। न च निमित्तकारणा-
नामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति। स्यादे-
तत् समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न

---

स्वप्रकाशस्यापि बाधः किं न स्यादित्यत आह। न चेति। जडं हि
परायत्तप्रकाशत्वादागन्तुकं बाधयोग्यं न प्रकाशात्मस्वरूपं, तस्य सर्व-
बाधसाक्षिस्वरूपस्य निराकर्त्रन्तराभावात् स्वस्य च स्वनिराकर्तृ-
त्वायोगात्। न हि सुनिपुणेनापि स्वाभावो द्रष्टुं शक्यत इत्यर्थः।
एवं स्वतः स्फूर्तित्वादात्माऽबाध्यः इत्युक्त्वा स्वतःसत्ताकत्वाच्च न बाध्य
इत्याह। तथाहमेवेति। ज्ञानज्ञेययोः सत्ताव्यभिचारेऽपि ज्ञातुः
सदैकरूपत्वान्न सत्ताव्यभिचार इत्यर्थः। मास्तु जीवतो ज्ञातुरन्य-
थाभावः मृतस्य तु स्यादित्यत आह। तथेति। उच्छेदो विनाशो-
ऽन्यथास्वभावत्वं मिथ्यात्वं वा सम्भावयितुमपि न शक्यं, अहमस्मीत्यनु-
भवसिद्धसत्स्वभावस्य बाधकाभावादित्यर्थः। एवमात्मनः शून्यत्व-
निरासेन शून्यताप्रसङ्गस्यानिष्टत्वं उक्तं, ततस्त्वात्मनः कार्यत्वानुमानं
आभास इत्याह। एवमिति। अकार्यात्मनः सिद्धौ तस्याविद्यास-
हितस्योपादानस्यादृष्टादिनिमित्तस्य च सत्त्वादाकाशानुत्पत्तिहेतोः सा-
ध्यशून्यत्वस्य स्वरूपासिद्धेरुक्तसत्प्रतिपक्षबाधाच्चाकाशस्य कार्य्यत्वं
निरवद्यमित्याह। कार्यत्वञ्चेति। आत्माविषययोर्विजातीयत्वान्नाका-

कारणान्तरविषय इति, तदप्यनैकान्तिकं। सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते। तथा सूत्रैरूर्णादिभिश्च विचित्रान् कम्बलान् वितन्वते। सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यं सर्वस्य सर्वेण समानजातीयकत्वात्, नाप्यनेकमेवारभते नैकमिति नियमोऽस्ति। अणुमनसोराद्यकर्मारम्भाभ्युपगमात्। एकैको हि परमाणुर्मनश्चाद्यं स्वकर्मारभते न द्रव्यान्तरैः संहत्येत्यभ्युपगम्यते। द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेन्न, परिणामाभ्युपगमात्। भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत। तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्य्यं नामाभ्युपगम्यते तच्च क्वचिदनेकं परिणमते मृद्बीजा-

---

मारम्भकत्वमित्युक्तमनूद्य निरस्यति। यत्त्वित्यादिना। किं कारणमात्रस्य साजात्यनियम उत समवायिन तत्राद्यं निरस्य द्वितीयं शङ्कते। स्यादेतदिति। किं समवायितावच्छेदकधर्म्मेण साजात्यं उत सत्तादिना, नाद्य इत्याह। तदपीति। न च रज्ज्वादि न द्रव्यान्तरमिति वाच्यं, पटादेरपि तथात्वापाताद्द्वितीयोऽस्मदिष्ट, आत्माविद्ययोर्वस्तुत्वेन साजात्यादित्याह। सत्त्वेति। उपादानस्य साजात्यनियमं निरस्य संयुक्तानेकत्वनियमाद्द्वितीयस्यासङ्गस्याप्यात्मन उपादानत्वसिद्धये निरस्यति। नापीत्यादिना। किमारम्भकमात्रस्याय नियम उत द्रव्यारम्भकस्य नाद्य इत्याह। अणुवेति। द्व्यणुकस्य ज्ञानस्य चासमवायिकारणसंयोगजनकमाद्यं कर्म्म, यद्यप्यदृष्टवदात्मसंयुक्ते अणुमनसी चाद्यकर्मारम्भके तथापि कर्मसमवायिन एकत्वादनेकत्वनियमभङ्ग इत्याह। एकैको हीति। द्रव्यान्तरैः समवायिभिरित्यर्थः। द्वितीयमुत्थाप्यारम्भवादानङ्गीकारेण दूषयति। द्रव्येत्यादिना। न त्व-

यङ्कुरादिभावेन कचिदेकं परिणमते चीरादिदध्यादिभावेन। नेश्वरशासनमस्त्यनेकमेव कारणं कार्य्यं जनयतीति, अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते। तथाचोक्तं 'उपसंहारदर्शनान्नेति चेन्न चीरवद्धि' [शा० सू०२।१।२४] इति। यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यत इति, तदयुक्तं, येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभःस्वरूपवदिदानीमध्यवसीयते स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते। यथाच ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत् 'अस्थूलमनखित्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते, तस्मात् प्रागुत्पत्तेरनाकाश*मच्छिद्रमिति स्थितं। यदप्युक्तं पृथिव्यादिवैधर्म्या-

---

भ्युपगम्यते तस्मान्नैष नियम इति शेषः। यत्तु चीरपरमाणुषु रसान्तरोत्पत्तौ तैरेव दध्यारम्भ इति तन्न, चीरनाशे मानाभावात् रसवद्भेऽप्येकद्रव्यारभ्यत्वसम्भवाच्च द्रव्यगुणसङ्केतस्य पौरुषेयस्य श्रुत्यर्थनिर्णयाहेतुत्वादिति भावः। लोके कर्तुः सहायदर्शनात् असहायाद्ब्रह्मणः कथं सर्ग इति तत्राह। तथा चोक्तमिति। प्रागभावशून्यत्वं हेतुरप्यसिद्ध इत्याह। यच्चोक्तमित्यादिना। शब्दाश्रयत्वं विशेषः शब्दादिमानाकाशः प्रलये नास्ति 'नासीद्रजो नो व्योम' इति श्रुतेः। नन्वाकाशाभावे काठिन्यं स्यादिति चेत्, सुशिक्षितोऽयं नैयायिकतनयः। न ह्याकाशाभावस्तद्धर्मो वा काठिन्यं किन्तु मूर्तद्रव्यविशेषः तत्संयोगविशेषो वा काठिन्यं,तच्च प्रलये नास्तीति भावः। 'आकाशशरीरं ब्रह्म' इति श्रुतेरन्यैरप्यवद्ब्रह्मस्वभावस्याकाशस्य सति ब्रह्मणि कथमभावस्तत्राह। यथा चेति। विभुत्वादाकाशसमं ब्रह्मेति श्रुत्यर्थः। विभुत्वास्पर्श-

---

* अनाकाशत्वमुचितमिति वर्ध० का०।

दाकाशस्याजत्वमिति, तदप्यसत्, श्रुतिविरोधे सत्युत्पत्त्यसम्भावानुमानस्याभासत्वोपपत्तेः, उत्पत्त्यनुमानस्य च दर्शितत्वात्, अनित्यमाकाशमनित्यगुणाश्रयत्वात् घटादिवदित्यादि*प्रयोगसम्भवाच्च। आत्मनानैकान्तिकमिति चेत् न, तस्योपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः। विभुत्वादीनाञ्चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात्। यच्चोक्तमेतच्छब्दाच्चेति तत्राप्यतत्वश्रुतिस्तावदियत्यन्तता द्विवौकस इतिवद्द्रष्टव्याः। उत्पत्तिप्रलययोरुपपादितत्वात् 'आकाशवत् सर्वगतश्च नित्यः' इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते, निरतिशयमहत्त्वाय नाकाशसमत्वाय यथेषुरिव सविता धावतीति क्षिप्रगतित्वायोच्यते

---

द्रव्यत्वनिरवयवत्वलिङ्गाना विभक्तत्वादिलिङ्गसहितागमबाधमाह। यदपीत्यादिना। धर्मिविकाराभावे गुणनाशो न स्यादिति तर्कार्थमनित्यपदं गुणाश्रयत्वमेव हेतुः, तच्च स्वसमानसत्ताकगुणवत्त्वमतो निर्गुणात्मनि न व्यभिचारः। भूतत्वमादिशब्दार्थः। स्वरूपासिद्धिमप्याह। विभुत्वादीनाञ्चेति। सर्वमूर्तसंयोगः परिमाणविशेषो वा विभुत्वं निर्गुणात्मनि दृष्टान्तेनास्ति संयोगस्य सावयवत्वनियतस्याजत्वसाध्यविरुद्धता च, स्वरूपोपचयरूपं तु विभुत्वमात्माकाशयोर्न समं, 'ज्यायानाकाशाद्' इति श्रुतेः। क्वचिदाकाशसाम्यन्तु ब्रह्मणो यत्किञ्चित्सर्वसम्बन्धेन व्यपदिश्यते व्यासक्तत्वेन वा एवकीकरणादस्पर्शत्वमसिद्धं कार्यद्रव्यत्वान्निरवयवत्वमप्यसिद्धं, द्रव्यत्वजातिस्वात्मन्यसिद्धेत्यर्थः। नित्य इत्यंशेन साम्यं न विवक्षितं। ननु स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मेति श्रुतिर्नित्यत्वेनैव साम्यं ब्रूते नेत्याह। एतेनेति। आकाशस्य कार्यत्वेनानित्यत्वादित्यर्थः। श्रुतिस्त्वापेक्षिकाऽऽनन्त्यद्वारा मुख्याऽऽनन्त्यं बोधयतीति भावः। न्यूनत्वाच्चाकाशस्य न मुख्योपमानत्वमित्याह। ज्या-

---

* अनित्यप्रयोगेति वर्ध० का०।

नैपुतुल्यगतित्वाय तद्वत्। एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता। ज्यायानाकाशादित्यादिश्रुतिभ्यश्च ब्रह्मणः *सकाशात् आकाशस्यानपरिमाणत्वसिद्धिः न तस्य प्रतिमास्तीति च ब्रह्मणोऽनुपमानत्वं दर्शयति, अतोऽन्यदार्त्तम्' इति च ब्रह्मणोऽन्येषामाकाशादीनामार्त्तत्वं दर्शयति। तपसि ब्रह्मशब्दवत् आकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसम्भवश्रुत्यनुमानाभ्यां परिहृतं, तस्माद्ब्रह्मकार्य्यं वियदिति सिद्धं॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अतिदेशोऽयं एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः। तत्राप्येते यथायोगं पक्षा रचयितव्याः। न वायुरुत्पद्यते, छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः, अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरणे आम्नानं 'आकाशा-

---

यानिति। मुख्योपमानासत्त्वे श्रुतिर्न तस्येति तस्मादाकाशस्योपमानमात्रेण नित्यत्वं नास्तीति भावः। अनित्यत्वेनासत्त्वे श्रुतिमाह। अतोऽन्यदिति। यत्तु एकस्यैव सम्भूतशब्दस्य गौणत्वं मुख्यत्वञ्चेति तन्न, आकाशेऽपि तस्य मुख्यत्वसम्भवादित्याह। तपसीति। बलवत्तित्तिरिश्रुत्या छान्दोग्यश्रुतेर्नयनादेकवाक्यतया स्रष्टरि ब्रह्मात्मनि समन्वय इत्युपसंहरति। तस्मादिति॥

एतेन मातरिश्वा व्याख्यातः। अतिदेशत्वान्न पृथक् सङ्गत्याद्यपेक्षा, तत्तेजोऽसृजतेति श्रुतेः। आकाशाद्वायुरिति श्रुत्या विरोधोऽस्ति न वेति एकवाक्यभावाभावाभ्यां संशये गौणपक्षपूर्व्वपक्षसिद्धान्तपक्षानतिदि-

---

* सकाशादिति वर्ध० का० नास्ति।

द्वायुरिति पक्षान्तरं। ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायो-
रुत्पत्तिश्रुतिः असम्भवादित्यपरोऽभिप्रायः, असम्भवश्च दर्शितः।
'सैषाऽनस्तमिता देवता यद्वायुः' इत्यस्तमयप्रतिषेधादमृतत्वा-
दिश्रवणाच्च प्रतिज्ञानुपरोधाद्यावद्विकारञ्च विभागाभ्युपगमा-
दुत्पद्यते वायुरिति सिद्धान्तः। अस्तमयप्रतिषेधो अपरवि-
द्याविषय आपेक्षिक, अग्न्यादीनामिव वायोरस्तमयाभावात्।
कृत प्रतिविधानञ्चामृतत्वादिश्रवणे। ननु वायोराकाशस्य च
तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयवि-
षयमस्तु किमतिदेशेनास्मिन् विशेषे इति, उच्यते, सत्यमेवमेतत्,
तथापि मन्दधिया शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः।

---

स्तीति। तथापीत्यादिना। पूर्वत्र ह्याकाशानन्तर्यं तेजसः स्थापितं तत्र
वायुतेजसोस्तुल्यवदानन्तर्यं वायोरग्निरिति क्रमश्रुतिबाधात् 'पौर्वापर्यं
तेजःप्राथम्यभङ्गान्नैकवाक्यतेति पूर्वपक्षे गौणविद्याभिप्रायमाह। तत-
श्चेति। अस्तमयप्रतिषेधो मुख्योत्पत्त्यसम्भवे लिङ्गं, वायुश्चान्तरिक्षं चैत-
दमृतमिति। तस्यैव लिङ्गस्याभ्यासः वायुरेव व्यष्टिः समष्टिश्चेति सर्वा-
त्मत्वलिङ्गान्तरमादिपदार्थः। तथा संवर्गविद्यायां वायुर्ह्येवैतान् स-
र्वानग्न्यादीन् संहरतीति शब्दमात्रेणैश्वर्यश्रवणं लिङ्गान्तरं ग्राह्यम्।
एतैर्लिङ्गैर्वायुरनाद्यनन्त इति प्रतीतेरुत्पत्तिर्गौणीत्यविरोधः। श्रुत्यो-
रिति प्राप्ते प्रतिषेधाद्यविषयप्रतिज्ञाश्रुतेर्बलीयस्त्वात् तत्साधकानां तत्र
तत्र वायूत्पत्तिवाक्यानां भूयस्त्वादुक्तविभक्तत्वादिलिङ्गानुग्रहाच्च मुख्यैव
वायोरुत्पत्तिः, तथाचाकाशं वायुश्च सृष्ट्वा तेजोऽसृजतेति श्रुत्योरेक-
वाक्यतया ब्रह्मणि समन्वयः। लिङ्गानि तूपास्यवायुस्तावकत्वादा-
पेक्षिकतया व्याख्येयानीति मुख्यसिद्धान्तमाह। प्रतिज्ञेत्यादिना।
कृतं प्रतिविधानं आपेक्षिकत्वेन समाधानं यस्य तत्तथा। अधिकर-
णारम्भमाक्षिप्योक्तामधिकाशङ्कामाह। नन्वित्यादिना। वायुर्ह्येवै

क्रियते। संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात्, अस्तमयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥

**असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

वियत्पवनयोरसम्भाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत् कुतश्चिदुत्पत्तिरिति स्यात् कस्यचिन्मतिः। तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत, तामाशङ्कामपनेतुमिदं सूत्रं। असम्भवस्त्विति। न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः सम्भव उत्पत्तिराशङ्कितव्या, कस्मात् अनुपपत्तेः, सन्मात्र हि ब्रह्म न तस्य सन्मा-

---

तान सर्वान संवृक्ते इत्यादिशब्दमात्रं शङ्कामूलं नार्थ इति द्योतनार्थं मात्रपदं। तामेव शङ्कामाह। संवर्गेति। व्यष्टिसमष्ट्युपास्तिर्वायु दिशा वत्स वेदेत्युपास्तिस्तादिशब्दार्थं ॥

असम्भवस्तु सतोऽनुपपत्ते। 'अनाद्यनन्तं महत परं ध्रुवं न चास्य कश्चिज्जनिता' इत्यादि ब्रह्मानादित्वश्रुतीनां त्वं जातो भवसि विश्वतोमुख इत्युत्पत्तिश्रुत्या विरोधोऽस्ति नवेत्येकवाक्यभावाभावाभ्यां सन्देहे अस्ति विरोध इति पूर्वपक्षे यथा वाय्वादेरमृतत्वादिकमुत्पत्तिश्रुतिबलादापेक्षिकं तथा ब्रह्मानादित्वं चापेक्षिकमिति दृष्टान्तसङ्गत्या एकदेशिपक्षं प्रापयति। वियदिति। ब्रह्म कुतश्चिज्जायते कार्यत्वादाकाशवदिति अनुमानानुग्रहाज्जन्मश्रुतिर्बलीयसीत्याह। तथेति। न चानादिकारणाभावेनानवस्था बीजाङ्कुरवदनादित्वोपपत्ते। तथा च दीपाद्दीपवद्ब्र-

चादेवोत्पत्तिः सम्भवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः। नापि सद्विशेषात् दृष्टविपर्ययात् सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते। मृदादेर्घटादयो न तु विशेषेभ्यः सामान्यं नाप्यसतो निरात्मकत्वात्, कथं 'असतः सज्जायेत' इति चाक्षेपश्रवणात् 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता न तु ब्रह्मणः साऽस्तीति वैषम्यं। न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात्। या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः॥

---

ह्मान्तराद्ब्रह्मान्तरोत्पत्ति, उत्पत्तिश्रुत्या चानादित्वश्रुतिर्नेयेत्यनाद्यनन्तब्रह्मसमन्वयासिद्धिरिति प्राप्ते मध्यसिद्धान्तमाह। तामिति। ब्रह्म न जायते कारणशून्यत्वान्नरविषाणवद्व्यतिरेकेण घटवच्चेत्यनुमानानुग्रहादिपक्षे चाकारणककार्यवादप्रसङ्गाद्ब्रह्मानादित्वश्रुतयो बलीयस्य इति कारणत्वलिङ्गबाधाज्जन्मश्रुति कार्यभेदेन व्याख्येयेत्यनाद्यनन्तब्रह्मसमन्वयसिद्धिरिति सिद्धान्तफलं। न च हेत्वसिद्धि कारणस्यानिरूपणात। तथा हि किं सन्मात्रस्य ब्रह्मण सन्मात्रमेव सामान्य कारण सद्विशेषो वा असद्वा न चेथापीत्याह। सन्मात्र हीत्यादिना। दीपस्तु दीपान्तरे निमित्तमित्यनुदाहरण। वियत्पवनयोर्ब्रह्मणश्च विभक्तत्वाविभक्तत्वाभ्या कारणभावाभावाभ्याश्च वैषम्य। कारणत्वलिङ्गस्याप्रामाणिकानवस्था। तर्केणापि बाधमाह। न च विकारेभ्य इत्यादिना। कारणस्यानभ्युपगमे यदृच्छावादप्रसङ्ग, अनादिकारणानभ्युपगमेऽनवस्थाप्रसङ्ग, तदभ्युपगमे ब्रह्मवादप्रसङ्ग, कारणान्तरस्य प्रधानादेर्निरासादिति भाव ॥

तेजोऽतस्तथाह्याह॥१०॥

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वं, तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावत् ब्रह्मयोनि तेज इति। कुतः, सदेवेत्युपक्रम्य तत्तेजोऽसृजतेत्युपदेशात्, सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य सम्भवात्, तज्जलानिति चाविशेषश्रुतेः, एतस्माज्जायते प्राण इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्, तैत्तिरीयके च 'स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च' इत्यविशेषश्रवणात्। तस्माद्वायोरग्निरिति क्रमोपदेशो द्रष्टव्यः, वायोरनन्तरमग्निः सम्भूत इति, एवं प्राप्ते उच्यते। तेजोऽतो मातरिश्वनो जायत इति। कस्मात् तथा ह्याह 'वायोरग्निः' इति। अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरितीयं श्रुतिः कदर्थिता

---

तेजोऽतस्तथाह्याह। 'तत्तेजोऽसृजत' इति 'वायोरग्नि' इति च श्रुत्योर्विरोधोऽस्ति न वेति सन्देहे सामान्यात् सामान्योत्पत्त्यसम्भवेऽपि प्रकारान्यो: सामान्ययोस्तेजोरूपविशेषोपादानत्वसम्भवात् तुल्यबलतयास्ति विरोध इति प्रत्युदाहरणेन पूर्वपक्ष· सर्वत्राध्यायसमाप्तेरैकवाक्यत्वासम्भवासम्भवौ संशयबीजं। पूर्वपक्षे श्रुतीना विरोधादप्रामाण्यं फलं सिद्धान्ते प्रामाण्यमित्युक्तं न विस्मर्तव्यं। एव पूर्वपक्षे कार्यमात्रस्य विवर्तत्वात् कल्पितस्य वायोस्तेजःकल्पनाधिष्ठानत्वायोगात् ब्रह्मैव तेजस उपादानं सर्वकार्याणां ब्रह्मैवोपादानमित्यर्थे श्रुतीना भूयस्त्वाच्च तदनुरोधाद्वायोरिति क्रमार्थी पञ्चमीत्यविरोध इत्येकदेशिसिद्धान्तं प्राप्यति। प्राप्तं तावद्ब्रह्मयोनि तेज इत्यादिना। श्रुतीना विरोधमाशङ्क्यन्यासेन पूर्वपक्षः स्वपसिद्धान्तेनाविरोधात् तावदेकदेशिपक्ष इति ज्ञेयं। तदुभयमपि मुख्यसिद्धान्तापेक्षया पूर्वपक्षत्वेन व्यवह्रियते। सिद्धान्त-

स्यात्। ननु क्रमार्थैषा भविष्यतीत्युक्तं नेति ब्रूमः। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति पुरस्तात् सम्भवति अपादानस्यात्मनः पञ्चमीनिर्देशात्, तस्यैव च सम्भवतेरिहाधिकारात् परस्तादपि तदधिकारे पृथिव्या ओषधयः इत्यपादाने पञ्चमीदर्शनाद्वायोरग्निरित्यपादानपञ्चम्येवैषेति गम्यते। अपि च वायोरूर्ध्वमग्निः सम्भूत इति कल्प्य उपपदार्थयोगः, कॢप्तस्तु कारकार्थयोगः वायोरग्निः सम्भूत इति। तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति। नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति तत्तेजोऽसृजतेति। न तस्याः पारम्पर्यजत्वेऽप्यविरोधात्। यदापि ह्याकाशं वायुञ्च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति

यति। एवं प्राप्त इति। कदर्थिता बाधितार्थेति यावत्। वायोस्तेजःप्रकृतित्वं पञ्चमीश्रुत्या निर्धारितं, न च कल्पितस्योपादानत्वासम्भवः, अधिष्ठानत्वासम्भवेऽपि मृदादिवत्परिणामित्वसम्भवात्, सतस्तु ब्रह्मणः छान्दोग्ये स्रष्टृत्वमात्रं श्रुतं नोपादानत्वं। न च बहु स्यामिति कार्याभेदेच्छालिङ्गादुपादानत्वसिद्धिर्लिङ्गात् श्रुतेर्बलीयस्त्वेन श्रुत्यविरोधेन लिङ्गस्य नेयत्वात्। नयनञ्चेत्थं वायोर्ब्रह्मानन्यत्वाद्वायुजस्यापि तेजसो ब्रह्मप्रकृतिकत्वमविरुद्धमिति सिद्धान्तमभ्याशय। इहाधिकारादिति वायोरग्निः सम्भूत इति वाक्ये सम्बन्धादित्यर्थः। तदधिकारे सम्भूत्यधिकारे निरपेक्षकारकविभक्तेरुपपदसापेक्षविभक्त्यपेक्षया प्रबलत्वाच्च न क्रमार्था पञ्चमीत्याह। अपि चेति। ऊर्ध्वमनन्तरमिति चोपपदं विना पञ्चमीमात्रात् क्रमो न भातीति कल्प्य उपपदार्थयोग प्रकृत्यार्थोपादानकारकन्तु निरपेक्षपञ्चम्या भाति विशेषतोऽत्र प्रकरणादुपादानार्थत्व पञ्चम्या. कॢप्त* सति विरोधे बाध्यमिति स्थितिरित्यर्थः। पारम्पर्यजत्वमेवाह। यदापीति। तस्या धेनोः घृतं तस्य क्षीरं साक्षात्

* कॢप्तेन च कल्प्यमिति सो० टी०।

कल्प्यते तदापि ब्रह्मजत्वं तेजसो न विरुध्यते, यथा तस्याः शृतं तस्या दधि तस्या आमिक्षेत्यादि। दर्शयति च ब्रह्मणो विकारात्मनावस्थानं 'तदात्मानं स्वयमकुरुत' इति। तथा चेश्वरस्मरणं भवति। बुद्धिर्ज्ञानमसंमोह इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति। यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते तथापि सर्वस्य भावजातस्य साक्षात् प्रणाड्या वा ईश्वरवंश्यत्वात्। एतेनाक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः तासां सर्वथोपपत्तेः क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः प्रतिज्ञापि सद्वंश्यत्वमात्रमपेक्षते नाव्यवहितजन्यत्वमित्यविरोधः॥

आपः॥ ११॥

अतस्तथा ह्याहेत्यनुवर्तते। आपोऽतस्तेजसो जायन्ते, कस्मात्

---

कार्यं दध्यादिकन्तु पारम्पर्यजमित्यर्थः। दध्नि सहृष्ट कठिनक्षीरमामिक्षा। ब्रह्मणो वायुभावे मानमाह। दर्शयति चेति। पारम्पर्यजस्यापि तज्जत्वव्यपदेशे स्मृतिमाह। तथा चेति। अन्तःकरणादिभ्यो जायमानबुद्ध्यादीनां मत्त एवेत्यवधारणं कथमित्याशङ्क्याह। यद्यपीत्यादिना। प्रणाड्या परम्परया ईश्वरवश्यत्वात् तज्जत्वात् परमकारणान्तरनिरासार्थं अवधारणं युक्तमिति शेषः। एतत्पदार्थमाह। तासामिति। तज्जलानित्याद्युक्तश्रुतीनां साक्षात् प्रणाड्या वा ब्रह्मजत्वमात्रेणोपपत्ते रित्यर्थः। अक्रमश्रुतीनां बलवत्क्रमश्रुत्यनुसारेणैकवाक्यत्वादिति यदायु- द्वारा तेजःकारणे ब्रह्मणि समन्वय इति सिद्धः॥

आपः। अतिदेशोऽयं तथा ह्याथर्वणे मुण्डकग्रन्थे 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धा-

तथाह्याह 'तदपोऽसृजत' इति 'अग्नेरापः' इति च। सति वचने नास्ति संशयः। तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरयामीत्याप इति सूत्रयाम्बभूव॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः॥ १२॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' इति श्रूयते। तत्र संशयः। किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं वौदनाद्युच्यते किं वा पृथिवीति। तत्र प्राप्तं तावत् व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति, तत्र ह्यन्नशब्दः प्रसिद्धो लोके वाक्यशेषोऽप्येतमर्थमुपोद्बलयति, तस्माद्यत्र क्वचन वर्षति

---

रिणी' इति मन्त्रे अपां ब्रह्मजत्वं श्रुतं। अग्नेराप इति श्रुत्या तस्य विरोधोऽस्ति न वेति सन्देहे तुल्यत्वादस्ति विरोध इति पूर्वपक्षे अपामग्निदाह्यत्वेन विरोधादग्निजत्वासम्भवात् क्रमार्था पञ्चमीत्यविरोध इत्यधिकाशङ्कायामुक्ततेजोन्यायमतिदिश्य व्याचष्टे। अत इति। प्रत्यक्षविरोधे कथमपामग्निजत्वनिर्णयस्तत्राह। सति वचन इति। त्रिवृत्कृतयोरग्न्यसोर्विरोधेऽप्यग्नेराप इति वचनादतीन्द्रिययोस्तयोर्नास्ति विरोध इति निर्णीयत इत्यर्थः। न केवलं श्रुत्यविरोधज्ञानायायमतिदेशः किन्तु पञ्चभूतोत्पत्तिक्रमनिर्णयार्थश्चेत्याह। तेजसस्त्विति। तस्मात्तेजोभावापन्ने ब्रह्मणि श्रुतिसमन्वय इति सिद्धं॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यो विषयमुक्त्वान्नशब्दमहाभूतप्रकरणाभ्यां संशयमाह। ता इति। अभ्यवहार्यं भक्ष्यं, अत्र श्रुतौ यद्यन्नमोदनादिकं तदा अद्भ्यः पृथिवीति श्रुत्या विरोधः, यदि पृथिवी तदा न विरोध इति फलं बोध्यं। अप्पृथिव्योः कार्यकारणभावादधिकरणसङ्गतिः। अन्नश्रुतिरपि भवत्वलिङ्गाभ्यां पूर्वपक्षः। तदेव तत्रैवेति श्रुत्यर्थः। ।यापि क्वचिदन्नं क्वचिदद्भ्यः पृथिवी ततोऽन्नमिति विरोधान्नैकवाक्यतेति

तदेव भूयिष्ठमन्नं भवतीति व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवीति, एवं प्राप्ते ब्रूमः। पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति। कस्मात् अधिकारात् रूपात् शब्दान्तराच्च। अधिकारस्तावत् तत्तेजोऽसृजत, तदपोऽसृजतेति च महाभूतविषयो वर्तते। तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः, तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते यत्कृष्णं तदन्नस्येति। न ह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति नापि व्रीह्यादीनां। ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति, पयःपाण्डरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात्। नायं दोषो बाहुल्यापेक्षत्वात्। भूयिष्ठं हि पृथिव्याः कृष्णं रूपं न तथा श्वेतरोहिते। पौराणिका अपि पृथिवीच्छायां शर्वरीमुपदिशन्ति, सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति

---

प्राप्ते सिद्धान्तयति। एवं प्राप्त इति। अधिकारं प्रकरणं, रूपं लिङ्गं पय० क्षीरं तद्वत् पाण्डरं श्वेतं,अङ्गारवत् रोहितं रक्तं। शब्दान्तरशब्दितं स्थानं व्याचष्टे। श्रुत्यन्तरमपीति। *अथवानन्तर्यं पृथिव्या स्थानं श्रुत्यन्तरसिद्धान्तेनाप्यन्नस्य पृथिवीत्वमित्यर्थः। तत्तत्र सृष्टिकाले यदपां शरः यो मण्डवद्घनीभाव आसीत् स एव समहन्यत कठिनः सङ्घातोऽभूत् सा अपां कठिना परिणतिः पृथिव्यभवदिति श्रुत्यर्थः। व्रीह्याद्यन्नसर्गः कस्मिन् स्थान इति विवक्षायामाह। पृथिव्यास्त्विति। पञ्चमीयं सृष्टिभवत्वलिङ्गसहितान्नश्रुतेः कथं प्रकरणलिङ्गस्थानैर्बाध इत्याशङ्क्याह। वाक्यशेषोऽपीति। प्रबलदुर्बलप्रमाणसन्निपाते बहूनां दुर्बलानामत्यन्तबाधादरं प्रबलप्रमाणस्याल्पबाधेन कथञ्चिन्नयनमिति न्यायेन श्रुतिलिङ्गयोरन्नमात्रनिष्ठत्वं बाधित्वान्नात्मकपृथिवीनिष्ठत्वं नीयते ताभ्यामन्नमात्रग्रहे प्रकाशादीनां पृथिवीमात्रविषयाणा-

---

* अवान्तर्यमिति पा०।

श्रियते। श्रुत्यन्तरमपि समानाधिकारमन्नः पृथिवीति भवति तद्यदपां शर आसीत् तत्समहन्यत सा पृथिव्यभवदिति च। पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति पृथिव्या ओषधयः ओषधीभ्योऽन्नमिति च। एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः। प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते। वाक्यशेषोऽपि पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवान्न प्रभवत्वं सूचयतीति द्रष्टव्यं, तस्मात् पृथिवीयमन्नशब्देति॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः॥१३॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्ति आहोस्वित् परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति सन्देहे सति प्राप्तं तावत् स्वयमेव सृजन्तीति। कुतः आकाशाद्वायुर्वायोरग्निरित्यादि स्वातन्त्र्य-

---

मत्यन्तबाधापत्तेरिति भाव। अन्नस्य वृष्टिजत्वोक्तिद्वारा पृथिव्या अन्नजन्यत्वं सूच्यते। पृथिव्यन्ना पृथिवीत्वादन्नवदित्यनुमानादित्यक्षरार्थं। एवं तित्तिरिश्रुत्यनुसारेण छन्दोगश्रुतेर्नयनादविरुद्धा भूतसृष्टिश्रुतीनां ब्रह्मणि समन्वय इति सिद्ध॥

सम्प्रति तानि भूतान्याश्रित्याश्रयाश्रयिभावसङ्गत्या तेषां स्वातन्त्र्यमाशङ्क्य निषेधति। तदभिध्यानादेव तु तल्लिङ्गात् स। उक्तभूतान्याश्रित्य संशयपूर्वपक्षौ दर्शयति। किमिमानीत्यादिना। संशयबीजाङ्कुरौ पूर्वोत्तरपक्षयुक्तयोर्बीजमिति ज्ञेय। नन्वत्र भूतानां किं स्वातन्त्र्येणोपादानत्वमाशङ्क्यते कर्तृत्वं वा, नाद्य, वचनानुपपत्तेरित्यादिन्यायविरोधादिति शङ्कते। नन्विति। न द्वितीय अचेतनत्वादिति भाव।

श्रवणात्। नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा, नैष दोषः, तत्तेज ऐक्षत ता आप ऐक्षन्तेति च भूतानामपि चेतनत्वश्रवणादित्येवं प्राप्तेऽभिधीयते। स्वयमेव परमेश्वरः तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति। कुतस्तल्लिङ्गात्। तथा हि शास्त्रं यः पृथिव्यां तिष्ठन् यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति। तथा

---

यथा मनुष्यादिशब्दैस्तत्तद्देहाभिमानिनो जीवा उच्यन्ते तथाकाशाद्वायुरित्यादिश्रुतौ आकाशादिशब्दैस्तत्तद्भूताभिमानिदेवता उच्यन्ते, तासां स्वकार्ये वाय्वादौ कर्तृत्वसम्भवान्निरपेक्षनिमित्तत्वं पञ्चम्यर्थः। एवं तदात्मानं स्वयमकुरुतेति श्रुतौ स्वयमिति विशेषणाद्ब्रह्मणोऽन्यानपेक्षं सर्वकर्तृत्वं श्रुतं। तथा च मिथोनिरपेक्षेश्वरभूतकर्तृत्वश्रुत्योर्विरोधान्न ब्रह्मणि समन्वय इति सफलं पूर्वपक्षमाह। नैष दोष इति। भूतानां तदभिमानिदेवतानामित्यर्थः। यथा आकाशादिभावापन्नब्रह्मणः सर्वोपादानत्वं तथा तदभिमानिदेवताजीवभावमापन्नब्रह्मणः कर्तृत्वमिति परम्परया ईश्वरकर्तृत्वश्रुत्यविरोधः। स्वयमिति विशेषणं ईश्वरान्तरनिरासार्थं न जीवभावापेक्षानिरासार्थमित्येकदेशिसिद्धान्त ऊहनीयः। मुख्यसिद्धान्तमाह। एवं प्राप्त इति। आकाशादिशब्दैर्न देवतालक्षणा मुख्यार्थे बाधकाभावात्, पञ्चम्यश्च प्रकृतित्वार्थोस्तत्र रूढतरत्वात्, तथा चाचेतनानां भूतानां कर्तृत्वमेव नास्ति, कुतः ईश्वरानपेक्षकर्तृत्वं यद्यपि देवतानां कर्तृत्वं सम्भवति तथापीश्वरनियम्यत्वश्रवणाच्चेतनानामपि न स्वातन्त्र्यं किमु वाच्यमचेतनानां भूतानां न स्वातन्त्र्यमिति मत्वोक्तं। तल्लिङ्गादिति। तत्तदचेतनात्मनावस्थितस्य ब्रह्मण उपादानत्वेऽपि जीवव्यावृत्तेश्वरत्वाकारेणैव साक्षात् सर्वकर्तृत्वं न जीवत्वद्वारा तस्य सर्वनियन्तृत्वाल्लिङ्गादित्यर्थः। प्रकरणाच्च साक्षात्

'सोऽकामयत बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत् तदात्मानं स्वयमकुरुत' इति तस्यैव सर्वात्मभावं दर्शयति। यत्त्वीक्षणश्रवणमप्तेजसोस्तत् परमेश्वरावेशवशादेव द्रष्टव्यं 'नान्योऽतोऽस्ति द्रष्टा' इतीक्षित्रन्तरप्रतिषेधात् प्रकृतत्वाच्च सत ईक्षितुः तदैक्षत बहु स्यां प्रजायेयेत्यत्र॥

विपर्ययेण तु क्रमोऽत उपपद्यते च॥ १४॥

भूतानामुत्पत्तिक्रमश्चिन्तितः, अथेदानीमप्ययं क्रमश्चिन्त्यते किमनियतेन क्रमेणाप्यय उतोत्पत्तिक्रमेणाथ वा तद्विपरीतेनेति। त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते, 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति

---

सर्वकर्तृत्वमित्याह। तथेति। पूर्वोक्तमनूद्य निरस्यति। यत्त्विति। परमेश्वरस्यान्तर्यामिभावेनावेशः सम्बन्धः। तद्वशाद्भूतेष्वीक्षणश्रवणं नैतावता तेषां चेतनत्वं स्वातन्त्र्यं वेत्यर्थः। अनेन तदभिध्यानादिति पदं व्याख्यातं, इत्थं सूत्रयोजना। स ईश्वरस्तत्तदात्मना स्थितोऽपि साक्षादेव सर्वकर्ता तस्यान्तर्यामित्वलिङ्गाज्जीवत्वद्वारा कर्तृत्वं नाम जीवस्यैव कर्तृत्वमित्यन्तर्यामिणः कर्तृत्वासिद्धेरन्तर्यामित्वायोगात तदभिध्यानादीश्वरेच्छयादेव भूतेषु श्रुतेक्षणोपपत्तेश्चेति तत्तेज ऐक्षतेति श्रुत ईक्षिता परमात्मैवेत्यत्र श्रुत्यन्तरं प्रकरणञ्चाह। नान्य इति। तस्मादीश्वरपदार्थलोपप्रसङ्गेनेश्वरादन्यस्य स्वातन्त्र्याभावान्नेश्वरकर्तृत्वश्रुतेर्भूतश्रुत्या विरोध इति सिद्धं॥

विपर्ययेण तु। यद्यप्यत्र श्रुतिविरोधो न परिह्रियत इत्यसङ्गतिस्तथाप्युत्पत्तिक्रमे निरूपिते लयक्रमो बुद्धिस्थो विचार्यत इति प्रासङ्गिकावेव पादावान्तरसङ्गतिमिति मत्वाह। भूतनामिति। अत्रोत्पत्तिक्रमाद्विपरीतक्रमनिर्णयात सिद्धान्ते भूताना प्रातिलोम्येन लयध्यानपूर्वकं

यत्प्रयन्त्यभिसंविशन्ति' इति, तत्रानियमोऽविशेषादिति प्राप्तं, अथवोत्पत्तेः क्रमस्य श्रुतत्वात् प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादित्येवं प्राप्तं ततो ब्रूमः विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद्भवितुमर्हति, तथा हि लोके दृश्यते येन क्रमेण सोपानमारूढस्ततो विपरीतक्रमेणावरोहतीति, अपि च दृश्यते मृदो जातं घटशरावाद्यप्ययकाले मृद्भावमप्येति, अद्भ्यश्च जातं हिमकरकाद्यब्भावमप्येतीति। अतश्चोपपद्यत एतद्यत् पृथिव्यद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयात्, आपश्च तेजसो जाताः सत्यस्तेज अपीयुः, एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरतरं कारणमपीत्यसर्वं कार्यजातं परमकारणं परमसूक्ष्मञ्च ब्रह्माप्येतीति वेदितव्यं। नहि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः। स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः,

---

प्रत्यग्ब्रह्मणि मनःसमाधानं फलं, पूर्वपक्षे तु कारणनाशे सति कार्यनाश इति सर्वलयाधारब्रह्मासिद्धेरुक्तसमाध्यसिद्धिरिति भेदः। सति भूतानां लये क्रमचिन्ता स एव नास्तीति केचित्तान् प्रत्याह। अयोऽपीति। अनियम इत्यनास्थयोक्तं श्रौतस्य प्रलयस्य क्रमाकाङ्क्षायां श्रौत उत्पत्तिक्रम एव ग्राह्यः, श्रौतत्वेनान्तरङ्गत्वादित्येव पूर्वपक्षः, सति कारणे कार्यं नश्यतीति लोके दृश्यते। तथा च श्रौतोऽप्युत्पत्तिक्रमो लयेन गृह्यते किन्तु लौकिकक्रम एव गृह्यते श्रुतेर्लोकदृष्टपदार्थबोधाधीनत्वेन श्रौतादपि लौकिकस्यान्तरङ्गत्वाद्योग्यत्वाच्च, कारणमेव हि कार्यस्य रूपमिति तदनन्यत्वन्यायेन स्थापितं। न हि स्वरूपनाशे कार्यस्य क्षणमपि स्थितिर्युक्ता, तस्मादयोग्य उत्पत्तिक्रमो लयस्य न ग्राह्यः

'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते'॥

इत्येवमादौ। उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वात् नाप्यये भवितुमर्हति, नचासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते, न हि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः कारणाप्यये कार्यस्यावस्थानानुपपत्तेः। कार्याप्यये तु कारणस्यावस्थानं युक्तं मृदादिष्वेवं दृष्टत्वात्॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥ १५॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तं, आत्मादिरुत्पत्तिः प्रलयश्चात्मान्त इत्यप्युक्तं, सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः। 'बुद्धिं तु सारथिं

---

लौकिकक्रमावरोधेन निराकाङ्क्षत्वादिति सिद्धान्तयति। ततो ब्रूम इत्यादिना। क्रमेण परम्परया सर्वकार्यलयाधारत्वं ब्रह्मणः किमित्याश्रीयते साक्षादेव तत् किं न स्यादित्यत आह। न हि स्वकारणव्यतिक्रमेणेति। घटनाशे मृदनुपलब्धिप्रसङ्गादित्यर्थः। 'वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते' इति स्मृतिशेषः आदिपदार्थः। योग्यताधीनः सम्बन्ध इति न्यायादयोग्यक्रमबाध इति सिद्धं॥

अन्तराविशेषात्। उक्तभूतोत्पत्तिलयक्रममुपजीव्य स किं करणोत्पत्तिक्रमेण विरुध्यते न वेति करणानामभौतिकत्वभौतिकत्वाभ्यां सन्देहे वृत्तानुवादपूर्वकपूर्वपक्षमाह। भूतानामित्यादिना। करणान्येव न सन्तीति वदन्तं प्रत्याह। सेन्द्रियस्येति। 'मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः। श्रोत्रादीनीन्द्रियाण्यन्ये' इति स्मृतिर्द्रष्टव्या। अन्यपराः

विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुः' इत्यादिलिङ्गेभ्यः। तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ, सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात्। अपि चाथर्वणे उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति, तस्मात् पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेन्न, अविशेषात्। यदि तावद्भौतिकानि करणानि ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्तरं मृग्यं। भवति च भौतिकत्वे लिङ्गं

---

शब्दाः लिङ्गानीत्युच्यन्ते। करणानां क्रमाकाङ्क्षामाह। तयोरिति। आकाङ्क्षायां श्रुतिसिद्धः क्रमो ग्राह्य इत्याह। अपि चेति। विज्ञायतेऽनेनेति विज्ञानं सेन्द्रिया बुद्धिः। आत्मनो भूतानां चान्तरा मध्ये तल्लिङ्गात् सृष्टिवाक्यात् 'एतस्माज्जायते प्राणो मन' इत्यादिरूपाद्विज्ञानमनसी अनुक्रम्येते। तथा च करणक्रमेण पूर्वोक्तक्रमभङ्ग इति शङ्कासूत्रार्थः। न च करणानां भौतिकत्वाद्भूतानन्तर्यमिति वाच्यं, तेषां भौतिकत्वे मानाभावात्। तथा चात्मनः प्रथममाकाशस्य जन्म पश्चाद्वायोरित्युपक्रमस्यात्मनः करणानि ततो भूतानीति क्रमेण विरोध इति तित्तिर्यथर्वश्रुत्योर्विरोधान्न ब्रह्मणि समन्वय इति पूर्वपक्षफलं सिद्धान्तयति। नेति। 'आत्मन आकाशः' इत्यादि तित्तिरिश्रुतौ पञ्चम्याः कार्यकारणभावेनार्थतः क्रमो भवति न तस्याथर्वणपाठेन बाधः अर्थक्रमविरोधिक्रमविशेषस्याश्रुतेः पाठक्रमस्यार्थक्रमधीशेषस्य शेषिबाधकत्वायोगादिति श्रुत्यर्थक्रमाविरोधेन पाठस्य नेयत्वाद्भूतानन्तर्यं करणानामित्यर्थः। किञ्च भौतिकत्वात् तेषां तदानन्तर्यमित्याह। यदीति। न च प्राणस्याधिकारत्वायोगादन्नमयमित्यादि मयटो न विकारार्थतेति

करणानां, 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्येवं जातीयकं। व्यपदेशोऽपि क्वचिद्भूतानां करणानाञ्च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः। अथ त्वभौतिकानि करणानि तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते, प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि प्रथमं वा भूतानि उत्पद्यन्ते चरमं करणानीति। आथर्वणे तु समाम्नाय क्रममात्र करणानां भूतानाञ्च न तत्रोत्पत्तिक्रम उच्यते। तथान्यत्रापि पृथगेव भूतक्रमात् करणक्रम आम्नायते 'प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत् तदा-

---

वाच करणानां विभक्तत्वेन कार्यतया कारणाकाङ्क्षायामन्नमयमित्यादिश्रुतेराकाङ्क्षितोक्त्यर्थमसति बाधके मयटो विकारार्थताया युक्तत्वात्। प्राचुर्यार्थत्वे त्वनाकाङ्क्षितोक्तिप्रसङ्गाच्छ्रुत्यैव तेजोऽबन्नप्राशने वाक्प्राणमनसां वृद्धिस्तदभावे तन्नाश इति विकारत्वस्य दर्शितत्वान्न विवादावसरः। यद्वा स्थूलभूताधीना तेषां वृद्धिर्विकारो मयडर्थः श्रूयमाणो भौतिकत्वे लिङ्गं प्राणेन्द्रियमनांसि भौतिकानि भूताधानवृद्धिमत्त्वाद्देहवदिति भावः। ननु तेषां भौतिकत्वे कथमाथर्वणे पृथक्जन्मकथनं भूतजन्मोक्त्यैव तज्जन्मसिद्धेरित्यत आह। व्यपदेशोऽपीति। प्रौढवादेन तेषामभौतिकत्वमुपेत्यापि श्रुत्यविरोधमाह। अथ त्विति। करणानां भूतानाञ्च पूर्वापरत्वे मानाभावात् नोक्तभूतक्रमभङ्ग। न चाथर्वणवाक्यं मानं पाठमात्रत्वादित्यर्थः। तर्हि कथं क्रमनिर्णयस्तत्राह। तथेति। इदं स्थूलं उत्पत्तेः प्राक् प्रजापतिः सूत्रात्मासीत्। ननु लिङ्गदेहस्य मनोघटितत्वात् प्रजापतेश्च लिङ्गसमष्टिरूपत्वात् कथं प्रजापतिसृष्ट्यनन्तरं मनःसृष्टिरिति विचारणीयं। अथ सूक्ष्मभूतात्मकप्रजापतिसर्गः प्रथमं ततो मनआदिसर्ग इति क्रमो भवतीति भावः। एवञ्च भूत

त्मानमैक्षत तद्दापोऽसृजत' इत्यादिना। तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः॥

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्॥ १६॥

स्तो जीवस्याप्युत्पत्तिप्रलयौ जातो देवदत्तो मृतो देवदत्त इत्येवंजातीयकाल्लौकिकव्यपदेशाज्जातकर्मादिसंस्कारविधानाच्चेति स्यात् कस्यचिद्भ्रान्तिः, तामपनुदामः, न जीवस्योत्पत्तिप्रलयौ स्तः शास्त्रफलसम्बन्धोपपत्तेः। शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम्। श्रूयते च 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति। ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः सत्यं दर्शितः, भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः, किमाश्रयः पुनरयं मुख्यो यदपेक्षया भाक्त

---

कार्योत्पत्तिश्रुत्योरविरोधात् ब्रह्मणि समन्वयसिद्धिरिति सिद्धान्तफलं गमयति। तस्मादिति॥

चराचरभावित्वात्। एवं तावत् तत्पदवाच्यकारणनिर्णयाय भूतश्रुतीनां विरोधो निरस्त इदानीमापादसमाप्तेस्त्वंपदार्थशुद्धौ जीवश्रुतीनां विरोधो निरस्यते इह जीवो न जायते म्रियते इत्यादिश्रुतेः जातेष्टिश्राद्धशास्त्रेण विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति प्राप्ते लौकिकजन्मादिव्यपदेशसहायाज्जातेष्ट्यादिशास्त्रेण जीवाजत्वादिश्रुतिबाध इति पूर्वपक्षयति। स्त इति। तथा च कार्योत्पत्तिक्रमेण भूतक्रमस्य बाधाभावेऽपि जीवोत्पत्तिक्रमेण बाधः स्यादिति प्रत्युदाहरणसङ्गतिः। पूर्वपक्षे जीवब्रह्मैक्यासिद्धिः सिद्धान्ते तत्सिद्धिरिति

इति, उच्यते। चराचरव्यपाश्रयः। स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ, स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते चातस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते। तद्भावभावित्वात्। शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतः नासतोः। नहि शरीरसम्बन्धादन्यत्र जीवो जातो मृतो वा केनचिदुपलक्ष्यते। 'स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन् म्रियमाणः' इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यं, अभावाज्जीवप्रादुर्भावस्य। जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति। देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणावोचत्॥

---

भेद। चेतनजन्माद्युद्देशेन चेतनस्य तस्य जन्मान्तरीयफलसाधन जातकर्मादि संस्कारो विधीयते तथा चोद्देश्यविधेययोर्मिथोविरोधे सति विधेयाविरोधेनोद्देश्य नेयमिति न्यायात् जन्मादिक देहोपाधिक न स्वत इति सिद्धान्तयति। तामित्यादिना। जीवापेत जीवेन त्यक्त इद शरीर जन्मादिव्यपदेशः स्थावरजङ्गमदेहविषयो मुख्य जीवे तु भाक्तो गौणः औपाधिकजन्मादिविषय स्यादुपाधिजन्माभावे भावादसत्यभावादिति सूत्रार्थ। जीवस्यौपाधिकजन्ममृत्यो श्रुतिमप्याह। स वा इति। जायमानपदार्थमाह। शरीरमिति। म्रियमाणत्व व्याचष्टे। उत्क्रामन्निति। ननूत्तरत्र जीवस्य जन्मादि निरस्यते अत्रापि तन्निरासे पुनरुक्तिरित्याशङ्क्याह। जीवस्येति। तदेव जातेष्ट्यादिशास्त्रस्यौपाधिकजन्मादिविषयत्वान्न जीवनाद्यजन्यत्वश्रुतिविरोध इति सिद्ध॥

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी, स किं व्योमादिवदुत्पद्यते ब्रह्मण आहोस्विद्ब्रह्मवदेव नोत्पद्यते इति श्रुतिविप्रतिपत्तेर्विषयः कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्मात् ब्रह्मण उत्पत्तिराम्नायते, कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते नचोत्पत्तिराम्नायत इति। तत्र प्राप्तं तावदुत्पद्यते जीव इति, कुतः प्रतिज्ञानुपरोधात्। 'एकस्मिन् विदिते सर्वमिदं विदितम्' इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत। न चाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात्। अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः, विभागाच्चास्य विकारत्वसिद्धिः। यावान् हि आकाशादिः प्रविभक्तः स सर्वो विकारः, तस्य चाकाशादेरुत्पत्तिः समधिगता जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभाक् प्रति शरीरं विभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवितुमर्हति।

---

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः। 'अग्नेर्विस्फुलिङ्गवदेतस्मात् परमात्मनः सर्वे जीवात्मानो व्युच्चरन्ति' इत्यादिजीवोत्पत्तिश्रुतीनां 'स एष इह प्रविष्ट' 'अजो ह्येको' 'न जायते म्रियते वा' 'अज आत्मा' इत्याद्यनुत्पत्तिश्रुतीनाञ्च मिथोविरोधात् संशये व्यानखायेभ्य अज आत्मा'इत्याद्यनुत्पत्तिश्रुतीनाञ्च मिथोविरोधात् संशये देहजन्मनाशयोर्जीवजन्मनाशौ, देहान्तरभोग्यसर्गादिहेतुविभूता देहजन्मनाशयोर्जीवजन्मनाशौ, देहान्तरभोग्यसर्गादिहेतुवि- भूता ... न स्यातां तत्-व्याद्यसम्भवात्। कल्पाद्यन्तयोर्नभस इव जीवस्य तौ किं न स्यातां तत्-

अपि च 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा सर्वे एते आत्मानो व्युच्चरन्तीति भोक्तॄणामात्मनां पृथक् सृष्टिं शास्ति। 'यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपास्तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति' इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते सरूपवचनात्। जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात्। न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति, श्रुत्यन्तरगतस्यापि अविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्त्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या 'तदात्मानं स्वयमकुरुत' इत्यादिवत् तस्मादुत्पद्यते जीव इत्येवं प्राप्ते ब्रूमः', नात्मा जीव उत्पद्यत इति। कस्मादश्रुते', न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु। ननु क्वचिदश्रवणमन्यत्र श्रुत न वारयतीत्युक्तं, सत्यमुक्तं उत्पत्तिरेव त्वस्य न सम्भवतीति वदामः। कस्मात् नित्यत्वाच्च ताभ्यः। चशब्दादजत्वादिभ्यश्च। नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथाजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मता चेति। न चैवंरूपस्योत्पत्तिरुपप-

---

सम्भवादिति प्रत्युदाहरणेन पूर्वपक्षमाह। तत्र प्राप्तं तावदिति। फलं पूर्ववत्,उपरोधो बाधः। नन्वविकृतब्रह्मैवात्र प्रविष्टं जीवो न तत्त्वान्तरमिति प्रतिज्ञासिद्धिस्तत्राह। न चेति। जीवः परस्माद्भिन्नः विरुद्धधर्मवत्त्वाद्भिन्नस्याविकारत्वे प्रतिज्ञाबाध इति तर्कोपेतविभक्तत्वलिङ्गानुगृहीतोत्पत्तिश्रुतेर्बलीयस्त्वात् प्रवेशश्रुतिर्जीवरूपविकारात्मना प्रतिष्ठित

द्यते, ताः काः श्रुतयः, 'न जीवो म्रियते' 'स वा एष महानज आत्माऽजरो*ऽमृतोऽभयो ब्रह्म' 'न जायते म्रियते वा विपश्चित्' 'अजो नित्यः शाश्वतोऽयं पुराणः' 'तत् सृष्ट्वा तदेवानुप्राविशत्' 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'स एष इह प्रविष्ट आनखाग्रेभ्यः' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म सर्वानुभूः' इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति। ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यते इत्युक्तं, अत्रोच्यते, नास्य प्रविभागः स्वतोऽस्ति, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुतेः, बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसम्बन्धनिमित्तं। तथाच शास्त्रं 'स वा

ईश्वर इति व्याख्येयमिति समुदायार्थः, स्वरूपा इति दृष्टान्तश्रुतेर्भावो जीव इति निश्चीयते। ननु आत्मन आकाशः सम्भूत इत्यादौ जीवस्योत्पत्त्यश्रवणादनुत्पत्तिस्तत्राह। न चेति। एवं विकारत्वे सति विकारप्रपञ्चात्मना स्वात्मानमकुरुतेति वद्विकारजीवात्मना प्रवेश इत्यर्थः। अजत्वादिति श्रुतिः कल्पमध्ये जीवस्यानुत्पत्त्यादिविषया तत्त्वमसीति श्रुतिश्च मृद्घट इत्यभेदवाक्यवद्व्याख्येयेति प्राप्ते सिद्धान्तयति। एवमिति। धर्मिवत् सत्यो विभागो हेतुरौपाधिको वा नाद्यः असिद्धेरित्याह। अत्रोच्यते नास्येति। द्वितीये जीवस्य न स्वतो विकारत्वसिद्धिः अप्रयोजकत्वादित्याह। बुद्ध्यादाविति। औपाधिकभेदे मानमाह। तथा चेति। मयटो विकारार्थत्वमाशङ्क्याह। तन्मयत्वञ्चेति। जाल्मः कामजडः स्त्रीपरतन्त्र। स्त्रीमय इतिवज्जीवस्य स्वरूपाज्ञानाद्बुद्ध्यादिपरतन्त्रत्वेन भेदकर्तृत्वादिमात्वात् प्राचुर्यार्थमयट्प्रयोग इत्यर्थः। लिङ्गं निरस्य तदनुग्राह्यश्रुतेर्गतिमाह। यद-

* अमरोऽमृत इति मर्ष० का०।

अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽस्यैकस्यानेकबुद्ध्यादिमयत्वं दर्शयति। तन्मयत्वञ्चास्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म इत्यादिवद्द्रष्टव्यं। यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसम्बन्धान्नेतव्यं, उपाध्युत्पत्त्यौ चास्योत्पत्तिस्तत्प्रलये च प्रलय इति। तथा च दर्शयति 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति। तथोपाधिप्रलय एवायं नात्मप्रलय इत्येतदपि, अत्रैव 'मा भगवान्मोहान्तमापीपदन्न वा *अहमिमं विजानामि न प्रेत्य संज्ञास्ति' इति प्रश्नपूर्वकं प्रतिपादयति, 'न वा अरे अहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्ति-

---

धीति। जीवस्यौपाधिकजन्मनाशयोः श्रुतिमाह। तथेति। एतेभ्यो देहात्मना परिणतेभ्यो भूतेभ्य समुत्थाय जनित्वा तान्येव लीयमानान्यनु पश्चाद्विनश्यति प्रेत्यौपाधिकमरणानन्तरं सञ्ज्ञा नास्तीत्यर्थः। ननु प्रज्ञानघनः सञ्ज्ञा नास्तीति च विरुद्धमित्यत आह। तथेति। उपाधिलयाद्विशेषज्ञानाभावः। एवं सञ्ज्ञाभावो नात्मस्वरूपविज्ञानाभाव इत्युत्तरं प्रतिपादयति श्रुतिरित्यन्वयः। अत्रैवात्मविज्ञानघने प्रेत्य सञ्ज्ञा नास्तीत्युक्त्या मा मोहान्तं मोहमध्यं भ्रान्तिमापीपददपीपदितवानितमर्थं न जानामि ब्रूहि त्वदुक्तेरर्थमिति मैत्रेयीप्रश्नार्थः। मुनिराह। न वा इति। मोहकरं वाक्यमुच्छित्तिः पूर्वावस्थानाशो धर्मोऽस्येत्युच्छित्तिधर्मा परिणामी, तस्मादविनाशीत्यर्थः, तर्हि न प्रेत्य सञ्ज्ञेति कथमुक्तं तत्राह। मात्रेति। मात्राभिर्विषयैरसंसर्गात् तथोक्तमित्यर्थः। बिम्बप्रतिबिम्बयोरिव विरुद्धधर्मभेदोऽध्यस्त इत्यत्र हेतुमाह। अत ऊर्ध्वमिति। जीवस्य विकारित्वे मुक्त्ययोगात् तत्त्वमसीति वाक्यमखण्डार्थ-

---

* अहमिदमिति वर्ध० का०।

धर्मा नाचासंसर्गस्तस्य भवति' इति। प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्। लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात्। तस्मान्नैवात्मोत्पद्यते प्रविलीयते वेति ॥

ज्ञोऽत एव ॥ १८ ॥

स किं काणभुजानामिवागन्तुकचैतन्यः स्वतोऽचेतनः आहोस्वित् साङ्ख्यानामिव नित्यचैतन्यस्वरूप एवेति वादिविप्रतिपत्तेः संशयः। किं तावत् प्राप्तं आगन्तुकमात्मनश्चैतन्यमात्ममनःसंयोगजमग्निघटसंयोगजरोहितादिगुणवदिति प्राप्तं। नित्यचैतन्यत्वे हि *सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यात्, ते पृष्टाः सन्तो न किञ्चिद्वयमचेतयामहीति जल्पन्ति। स्वस्था-

मिति वक्तव्यं, तथा च फलवत्प्रधानवाक्यापेक्षितजीवनित्यत्वश्रुतीनां बलवत्त्वादुत्पत्त्यादिकमध्यस्तमनुवदन्त्युत्पत्त्यादिश्रुतय इत्यविरोध इति सिद्धम् ॥

ज्ञोऽत एव। 'आत्मैव ज्योतिः' इत्याद्यात्मस्वप्रकाशत्वश्रुतीनां 'पश्यंश्चक्षुः शृण्वन् श्रोत्रम्' इत्यनित्यज्ञानवत्त्वश्रुतिभिर्विरोधोऽत्र निरस्यते अस्य लोकस्य चक्षुर्द्रष्टा श्रोत्रं श्रोतेत्यर्थः। प्रागुक्तजीवानुत्पत्तिहेतुमादाय स्वप्रकाशत्वसाधनाद्धेतुसाध्यभावः सङ्गतिः। अनुत्पत्तौ हि स्वप्रकाशं ब्रह्मैवोपहितं जीव इति जीवस्य स्वप्रकाशता सिध्यति। न चैवं गतार्थता अनुत्पन्नस्यापि जीवस्य स्वप्रकाशत्वे ज्ञानसाधनवैयर्थ्यमिति तर्कसहितानित्यज्ञानश्रुतिबलेन स्वप्रकाशत्वश्रुतेर्बाध्यतया ब्रह्माभेदाशङ्कायां तदैक्ययोग्यतार्थं स्वप्रकाशत्वस्याप्य साधनात्, तथा च पूर्वपक्षे जीवस्य ब्रह्मैक्यायोग्यता सिद्धान्ते तद्योग्यतेत्यापादसमाप्तेः फलं व्यव-

* सुषुप्तेत्यादि वर्ध० का०।

स्थ चेतयमाना दृश्यन्ते, अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेत्येवं प्राप्तेऽभिधीयते। ज्ञः, नित्यचैतन्योऽयमात्मा, अत एव यस्मादेव नोत्पद्यते परमेव ब्रह्माविकृतमुपाधिसम्पर्काज्जीवभावेनावतिष्ठते। परस्य हि ब्रह्मणः चैतन्यस्वरूपत्वमाम्नातं 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इत्यादिषु श्रुतिषु। तदेव चेत् परं ब्रह्म जीवस्तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौष्ण्यप्रकाशवदिति गम्यते। विज्ञानमयप्रक्रियायाञ्च श्रुतयो भवन्ति 'असुप्तः सुप्तानभिचाकशीति' इत्यत्र 'अत्र पुरुषः स्वयंज्योतिर्भवति' 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'

---

गन्तव्यं। इत्यापत्तिं निराचष्टे। ते एष्टा इति। साधनाधीनज्ञानत्वान्न स्वप्रकाशो जीवो व्यतिरेकेनेश्वरवदित्याह। अत कादाचित्केति। यथाश्रुते भाष्ये हेतोः साध्याविशेष इति मन्तव्यं अतो जीवस्य स्वप्रकाशत्वश्रुतिर्बाध्येति प्राप्ते सिद्धान्तयति। एवमिति। चेच्छब्दो निश्चयार्थे। न केवलं स्वप्रकाशब्रह्माभेदाज्जीवस्य स्वप्रकाशता किन्तु श्रुतितोऽपीत्याह। विज्ञानमयेति। योऽयं विज्ञानमय इति प्रकरणमित्यर्थः। असुप्तः स्वयं भासमान एवात्मा सुप्तान् लुप्तव्यापारान् वागादीनभिलक्ष्य चाकशीति सुप्तार्थान् पश्यतीति यावत्। अत्र स्वप्ने विज्ञातुर्बुद्धिसत्त्वस्य साक्षिणो विज्ञातेर्विनाशो नास्तीत्यर्थः। घ्राणादिजन्यगन्धादिज्ञानानुसन्धानसिद्धये आत्मनो ज्ञानरूपत्वं वाच्यमिति श्रुत्यन्तरेणाह। अथेति। आत्मनो नित्यचिद्रूपत्वेऽपि स्वतोऽसङ्गतया गन्धाद्यसम्बन्धात् तत्सम्बन्धघटनात्मकवृत्त्यर्थानि ज्ञानसाधनानि इति न तेषां वैयर्थ्यमित्याह। न गन्धेति। परिच्छेदो वृत्तिः गन्धाय तद्गोचरान्तःकरणवृत्त्यै इत्यर्थः। सुप्ताद्यवस्थासात्मसत्त्वेऽपि चैतन्याभावान्नात्मा चिद्रूप इत्युक्तं दूषयति। यत्त्विति। तत् तदा सुप्तो न पश्यतीति यत् तत्प्रसुप्तेवाल्पज्ञान एव

इत्येवं रूपाः। अथ 'यो वेदेदं जिघ्राणि' इति 'स आत्मा' इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेनानुसन्धानात् तद्रूपत्वसिद्धिः, नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चेन्न, गन्धादिविषयविशेषपरिच्छेदार्थत्वात्। तथा हि दर्शयति गन्धाय घ्राणमित्यादि। यत् तु *सुप्तादयो न चेतयन्त इति तस्य श्रुत्यैव परिहारोऽभिहितः। सुषुप्तं प्रकृत्य 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इत्यादिना। एतदुक्तं भवति विषयाभावादियमचेतयमानता न चैतन्याभावादिति। यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपाभावात् तद्वत्। वैशेषिकादितर्कस्य श्रुतिविरोधे आभासीभवति तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः॥

तन्न पश्यतीत्यत्र हेतुः। नहीति। नाशायोग्यत्वादित्यर्थः। किमिति न पश्यतीत्यत आह। न त्विति। वृत्तेः साधनाधीनत्वोक्त्या स्वरूपज्ञानस्य साधनाधीनत्वं हेतुरसिद्ध इत्युक्तं, साधनवैयर्थ्यतर्कोऽपि निरस्तः, धूमवन्निश्वासादिवदनित्यज्ञानश्रुतीनां वृत्तिविषयत्वं व्याख्यातं, चात्मा न ज्ञानं द्रव्यत्वादित्यादितर्कास्त्वागमबाधिताः फलवत्प्रधानवाक्यापेक्षितस्वप्रकाशत्वागमस्य बलवत्त्वात्। किञ्च निरवयवात्मनो मनःसंयोगायोगान्नानित्यज्ञानगुणता समवायाभावाच्च न स्वसमवेतज्ञानवेद्यता कर्मकर्तृत्वविरोधाच्च। किञ्च ज्ञानत्वस्यैकवृत्तित्वे लाघवादात्मैव ज्ञानं वृत्तेश्च मनःपरिणामत्वश्रुत्या कामः संकल्प इत्याद्यया जडत्वाच्चास्माकं ज्ञानद्वैविध्यगौरवमित्यनवद्यमात्मनः स्वप्रकाशत्वमिति सिद्धं॥

* सुषुप्तादय इति वर्ध० का०।

## उत्क्रान्तिगत्यागतीनां ॥ १९ ॥

इदानीन्तु किंपरिमाणो जीव इति चिन्त्यते, किमणु-परिमाण उत मध्यमपरिमाणं आहोस्विन्महत्परिमाण इति। ननु नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तं, अतश्च पर एवात्मा जीव इत्यापतति, परस्य चात्मनोऽनन्तत्वमाम्नातं, तत्र कुतो जीवस्य परिमाणचिन्तावतार इति, उच्यते सत्यमेतत्, उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति, स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते, तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः। तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणात् परिच्छिन्नोऽणुपरिमाणो जीव इति, उत्क्रान्तिस्तावत् 'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' इति। गतिरपि, 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति, आगतिरपि 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणः' इति, आसामुत्क्रान्तिगत्यागतीनां श्रवणात्

---

स्वप्रकाशत्वादात्मस्वरूपादीषद्बहिष्ठं परिमाणमेवाश्रिताश्रयत्वेनान्तर्बहिर्भावेनैवासङ्गत्या विचारयति। उत्क्रान्तिगत्यागतीनां। विषयसंशयौ दर्शयति। इदानीमिति। नात्माश्रुतेरित्यादिना गतार्थत्वमस्याशङ्क्यात्माणुत्वश्रुतीनां महत्त्वश्रुतीनाञ्च विरोधकथनार्थमस्याधिकरणस्यारम्भ इत्याह। नन्वित्यादिना। न केवलं श्रुतोत्क्रान्त्याद्यनुपपत्त्याऽऽत्मनोऽणुत्वं किन्त्वेषोऽणुरात्मेति श्रुत्यापीत्याह। स्वशब्देनेति। पूर्वपक्षे जीवस्याणुत्वात् ब्रह्मैक्यसिद्धिः सिद्धान्ते तत्सिद्धिरिति मत्वा सूत्रं व्याकुर्वन् पूर्वपक्षमाह। तत्र प्राप्तमित्यादिना। श्रुतेरणुरिति

परिच्छिन्नत्वादणुर्जीव इति प्राप्नोति, न हि विभोश्चलनमवकल्पत इति। सति च परिच्छेदे शारीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते ॥

स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्पेत, उत्तरे तु गत्यागती नाचलतः सम्भवतः, स्वात्मना हि तयोः सम्बन्धो भवति, गमेः कर्तृस्थक्रियात्वात्। अमध्यमपरिमाणस्य च गत्यागती अणुत्व एव सम्भवतः। सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृप्तिरेव देहादिति प्रतीयते, न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम्, देहप्रदेशानाञ्चोत्क्रान्तावपादानत्ववचनाच्चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरी-

---

उत्तरसूत्रादाकृष्य सूत्रं पूरितं, उत्क्रान्तिः श्रूयत इति शेषः। स मुमूर्षुः जीव एवैर्बुद्ध्यादिभिस्तस्माच्चन्द्रलोकादिमं लोकं प्रति कर्म कर्तुमायातीत्यर्थः ॥

उत्क्रान्तिरात्मनो देहान्निर्गमो न भवति येनाणुत्वं स्यात् किन्तु स्वामित्वनिवृत्तिरिति केचित्। तदङ्गीकृत्याप्यणुत्वमावश्यकमित्याह। स्वात्मनेति। उत्क्रान्तेरुत्तरयोर्गत्यागत्योः स्वात्मना कर्त्रा सम्बन्धादणुत्वमिति सूत्रयोजना, पाकानाश्रयस्य पक्तृत्ववद्गत्यनाश्रयस्यापि गन्तृत्वोक्तिः किं न स्यादित्यत आह। गमेरिति। गमनस्य कर्तरि संयोगविभागरूपातिशयहेतुत्वात् कर्त्राश्रितत्वं लोकसिद्धमित्यर्थः। जीवोऽणुरमध्यपरिमाणत्वे सति गतिमत्त्वात् परमाणुवदित्याह। अमध्यमेति। अङ्गीकारं त्यजति। सत्योश्चेति। न स्वाम्यनिवृत्तिमात्रं उत्क्रान्तिरित्यर्थः। देहान्निर्गम एवोत्क्रान्तिरित्यत्र लिङ्गान्तरमाह। देहप्रदेशा-

रदेशेभ्य इति। स एतास्तेजोमात्राः समभ्याददानो हृदय-मेवान्ववक्रामति शुक्रमादाय पुनरेति स्थानमिति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतस्तस्मादप्यस्याणुत्वसिद्धिः ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अथापि स्यान्नाणुरयमात्मा, कस्मादतच्छ्रुतेः अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः। 'स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु, आकाशवत् सर्वगतश्च नित्यः, सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेन्नैष दोषः। कस्मादितराधिकारात्। परस्य हि आत्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः, परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्, विरजः पर आकाशादित्येवंविधाच्च परस्यैवात्मनः तत्र तत्र विशेषाधिकारात्। ननु 'योऽयं विज्ञानमयः प्राणेषु' इति शारीर एव महत्त्वसम्बन्धित्वेन प्रति-

---

नामिति। अपादानत्वं अवधित्वं अन्येभ्यो वा मुखादिभ्य एष आत्मा निष्क्रामतीति शेषः। किञ्च देहमध्येऽपि जीवस्य गत्यागतिश्रुतेरणुत्वमित्याह। स इति। इन्द्रियाणि गृह्णन् स्वापादौ हृदयं स जीवो गच्छति शुक्रं प्रकाशकं इन्द्रियग्राममादाय पुनर्जागरितस्थानमागच्छतीत्यर्थः ॥

इतराधिकाराद्ब्रह्मप्रकरणात्। ननु महत्त्वश्रुतेः कथं परप्रकरणस्थत्वमित्यत आह। परस्यैवेति। या वेदान्तश्रुतिः सा परप्रकरणस्थेत्युत्सर्गात् तस्याप्तरस्थत्वं ब्रह्मारभ्याधीतत्वाच्चेत्याह। विरज इति। निर्दोष इत्यर्थः। विज्ञानमयश्रुत्या प्रकरणं बाध्यमिति शङ्कते। नन्विति।

निर्दिश्यते। शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववदित्यतः, तस्मात् प्राज्ञविषयत्वात् परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते॥

## स्वशब्दोन्मानाभ्याञ्च॥ २२॥

इतश्चाणुरात्मा यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते, 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' इति, प्राणसम्बन्धाच्च जीव एवायमणुरभिहित इति गम्यते। *तथा चोन्मानमपि जीवस्याणिमानं गमयति 'बालाग्रशतभागस्य शतधा कल्पितस्य तु। भागो जीवः स विज्ञेयः' इति 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति चोन्मानान्तरं। नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते, दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरित्यत उत्तरं पठति॥

---

अणोर्जीवस्य ब्रह्मणा भेदाभेदाङ्गीकाराच्छास्त्रीयाभेददृष्ट्या महत्त्वोक्तिर्यथा वामदेवस्याहं मनुरिति सर्वात्मत्वोक्तिरित्यविरोधमाह। शास्त्रेति॥

एवमुत्क्रान्त्यादिश्रुत्याणुत्वमनुमितं, तत्र श्रुतिमप्याह। स्वशब्देति। बालाग्रादुद्धृतः शततमो भागस्तस्मादप्युद्धृतः शततमो भागो जीव इति उद्धृत्य मानमुन्मानमत्यन्ताल्पत्वमित्यर्थः। बालः केशः, तोत्रप्रोताय:शलाकाग्रमाराग्रं, तस्मादुद्धृता मात्रा मानं यस्य स जीवस्तथा॥

---

* तथोन्मानमिति वर्ध॰ का॰।

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथाहि हरिचन्दनबिन्दुः शरीरैकदेशसम्बन्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोति, एवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति, त्वक्सम्बन्धाचास्य सकलशरीरगता वेदना न विरुध्यते, त्वगात्मनोर्हि सम्बन्धः कृत्स्नायां त्वचि वर्त्तते, त्वक् च कृत्स्नशरीरव्यापिनीति ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह यदुक्तमविरोधश्चन्दनवदिति तदयुक्तं, दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात्, सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति, प्रत्यक्षन्तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्व सकलदेहाह्लादन च आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्ष नैकदेशवर्त्तित्वं। अनुमेयन्तु तदिति यदप्युच्येत, न चात्रानुमानं सम्भवति। किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिन. सतः किं वा विभोर्नभस इव आ-

---

आत्मसयुक्तायास्त्वचो देहव्यापिस्पर्शोपलब्धिकरणस्य महिम्नाऽऽत्मनोऽव्यापिकार्य्यकारित्वमविरुद्ध। त्वगात्मनोरिति सम्बन्धस्य त्वगवयविनिष्ठत्वादवयविनश्चैकत्वादात्मसयोगस्य कृत्स्नत्वङ्निष्ठतेत्यर्थः ॥

सिद्धे हीति। न तु सिद्धमित्यतुल्यतेत्यर्थः। विशेष एव वैशेष्य, चन्दनबिन्दोरल्पत्वस्य प्रत्यक्षत्वात् त्वग्व्याप्यव्यापिकार्य्यकारित्वकल्पना युक्ता, जीवस्य त्वणुत्वे सन्देहाद्व्यापिकार्यदृष्ट्या व्यापित्वकल्पनमेव युक्त। व्या-

शेखिचन्दनबिन्दोरिवाणोरेकदेशस्थस्येति संशयानिवृत्तेरिति। अत्रोच्यते नायं दोषः। कस्मात् अभ्युपगमात्। अभ्युपगम्यते ह्यात्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यं कथमिति उच्यते। हृदि हि। एष आत्मा पठ्यते वेदान्तेषु 'हृदि ह्येष आत्मा' 'स वा एष आत्मा' 'हृदि कतम आत्मा' इति 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्याद्युपदेशेभ्यः। तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्याद्युक्तमेवैतदविरोधश्चन्दनवदिति॥

## गुणाद्वा लोकवत्॥ २५॥

चैतन्यगुणव्याप्तेर्वाणोरपि सतो जीवस्य सकलदेहव्यापि कार्य्यं न विरुध्यते। यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्त्तिनामपि प्रभाऽपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्य्यं करोति तद्वत्। स्यात् कदाचिच्चन्दनस्य सावयवत्वात् सूक्ष्मावयवविसर्पणेनापि सकलदेहे आह्लादयितृत्वं न त्वणोर्जीव-

---

पिकार्य्याश्रयो व्यापीत्युत्सर्गादिति सूत्रशङ्काभागार्थः। आत्माल्पः व्यापिकार्य्यकारित्वाच्चन्दनबिन्दुवदित्यनुमानमयुक्तं, त्वगादौ व्यभिचारादित्याह। न चात्रानुमानमिति। पूर्व्वोक्तश्रुतिभिर्जीवस्याणुत्वनिश्चयाद्धृदिस्थत्वश्रुतिभिरेकदेशस्थत्वनिश्चयाच्च न दृष्टान्तवैषम्यमिति परिहारभागार्थमाह। अत्रोच्यत इति॥

आत्मवत्तद्धर्म्मज्ञानस्याप्यणुत्वं स्वतः, कादाचित्कन्तु देहपरिमाणत्वमित्युक्ता स्वत एव व्यापित्वमिति मतान्तरमाह। गुणाद्वेति। वाशब्देन चन्दनदृष्टान्तामरितोषः सूचितस्तमाह। स्यादिति। उत्तरसूत्र-

स्यावयवाः सन्ति यैरयं सकलं देहं विप्रसर्पेदित्याशङ्क्य गुणाद्वा लोकवदित्युक्तं, कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्त्तेत, नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्त्तमानो दृश्यते। प्रदीपप्रभावद्भवेदिति चेन्न, तस्या अपि द्रव्यत्वाभ्युपगमात्। निविडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवन्तु तेजोद्रव्यमेव प्रभेति अत उत्तरं पठति॥

## व्यतिरेको गन्धवत्॥ २६॥

यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु गन्धोपलब्धेः, एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति, अतश्चानैकान्तिकमेतद्गुणत्वाद्रूपादिवत् आश्रयविश्लेषानुपपत्तिरिति गुणस्यैव सतो गन्धस्याश्रयविश्लेषदर्शनात्, गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेन्न, यस्मान्मूलद्रव्याद्विश्लेषस्तस्य

---

व्यावर्त्त्य शङ्कते। कथमिति। ज्ञानं न गुणिव्यतिरिक्तदेशव्यापि गुणत्वाद्रूपवत्, न च प्रभाया व्यभिचारस्तस्या अपि द्रव्यत्वादिति प्राप्ते गन्धव्यभिचारमाह। अत उत्तरमिति॥

गुणस्य द्रव्यव्यतिरेक आश्रयविश्लेषः। ननु विश्लिष्टावयवानामल्पत्वाद्द्रव्यक्षयो न भासीत्यत आह। अक्षीयमाणमपीति। अपिरवधारणे, पूर्वावस्थालिङ्गेनाक्षीयमाणमेव तद्द्रव्यमनुमीयत इत्यर्थः। विमतं अविश्लिष्टावयवं पूर्वावस्थातो गुरुत्वाद्यपचयहीनत्वात् सम्मतवदिति भावः। शङ्कते। स्यादेतदिति। विश्लिष्टानामल्पत्वादित्युपलक्षणं, अवयवान्तराणां प्रवेशादित्यपि द्रष्टव्यं। विशेषोऽवयवानां विश्लेषप्रवेशरूपः

चयप्रसङ्गात्। अचीयमाणमपि तत्पूर्वावस्थातो गम्यते, अन्यथा तत्पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत। स्यादेतत् गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात् सन्नपि विशेषो नोपलक्ष्यते, सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेत्, न अतीन्द्रियत्वात् परमाणूनां, स्फुटगन्धोपलब्धेश्च नागकेशरादिषु। न च लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति, गन्ध एवाघ्रात इति तु लौकिकाः प्रतीयन्ति। रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत्, न प्रत्यक्षत्वादनुमानाप्रवृत्तेः, तस्माद्यद्यथा लोके दृष्टं तत् तथैवानुमन्तव्यं निरूपकैर्नान्यथा। न हि रसो गुणो जिह्वयोपलभ्यत इति अतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते॥

तथा च दर्शयति॥ २७॥

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव

---

सन्नपि न ज्ञायते, तथा च गुरुत्वापचयो न भवतीति हेतोरन्यथासिद्धिरिति शङ्कार्थः। व्यागच्छन्तोऽवयवाः परमाणवस्त्रसरेणवो वा, नाद्यस्तद्गतरूपवद्गन्धस्याप्यनुपलब्धिप्रसङ्गादिति परिहरति। नेति। द्वितीयं प्रत्याह। स्फुटेति। त्रसरेणुगन्धश्चेत् स्फुटो न स्यादित्यर्थः। गन्धो न चतो गन्धस्य पुष्पादिस्थस्यैव गुणिव्यतिरेको वाच्य इति भावः। रूपेति। विश्लेषस्य प्रत्यक्षत्वाद्बाध इत्याह। नेति॥

चात्मनश्चैतन्यगुणेनैव देहव्याप्तिरित्यत्र श्रुतिमाह सूत्रकारः। तथा च दर्शयतीति। तद्व्याचष्टे। हृदयेति॥

'आलोमभ्य आनखाग्रेभ्यः' इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥

पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात् चैतन्यगुणेनैवास्य शरीरव्यापिताऽवगम्यते, तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति च कर्तुः शरीरात् पृथग्विज्ञानस्योपदेशः, एतमेवाभिप्रायमुपोद्बलयति, तस्मादणुरात्मेत्येवं प्राप्ते ब्रूमः ॥

तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्त्यणुरात्मेति, उत्पत्त्यश्रवणात्, परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तं। परमेव चेद्ब्रह्म जीवः तस्माद्यावत् परं ब्रह्म तावानेव जीवो भवितुमर्हति, परस्य च ब्रह्मणो विभुत्वमाम्नातं, तस्माद्विभुर्जीवः। तथा च 'स वा एष महानज

---

तत्रैव श्रुत्यन्तरार्थं सूत्रं। पृथगिति। विज्ञानमिन्द्रियाणां ज्ञानशक्तिं विज्ञानेन चैतन्यगुणेनादाय शेत इत्यर्थं। एतं चैतन्यगुणव्याप्तिमात्रपरमभिप्रायं॥

तत्रात्माणुत्वविभुत्वश्रुतीनां विरोधादप्रामाण्यप्राप्तावणुत्वं जीवस्य विभुत्वमीश्वरस्येत्यविरोध इत्येकदेशिपक्षो दर्शितस्तं दूषयन् सिद्धान्तसूत्रं व्याचष्टे। तुशब्द इत्यादिना। तस्माद् ब्रह्माभिन्नत्वात् विभुर्जीवः ब्रह्मवदित्यनुमानानुगृहीते श्रुतिस्मृती चाह। तथा च

आत्मा योऽयं विज्ञानमयः प्राणेषु' इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्त्ताश्च समर्थिता भवन्ति। न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते। त्वक्सम्बन्धात् स्यादिति चेत्, न, त्वक्कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत, त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्त्तते, त्वक् च कृत्स्नशरीरव्यापिनीति पादतल एव तु कण्टकतुन्ना वेदनां प्रतिलभन्ते। न चाणोर्गुणव्याप्तिरुपपद्यते गुणस्य गुणिदेशत्वात्, गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत। प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातं, गन्धोऽपि गुणत्वाभ्युपगमात् साश्रय एव सञ्चरितुमर्हति, अन्यथा गुणत्वहानिप्रसङ्गात्। तथा

---

स वा एष इति। नित्यः सर्व्वगतः स्थाणुरित्याद्याः स्मार्त्तवादाः। एतेन जीवस्य ब्रह्माभेदज्ञानेऽणुत्वाभावधीस्तस्यां तद्धित्यन्योन्याश्रय इति निरस्तं। प्रधानमहद्वाक्यानुगुणश्रुतिस्मृतिभिरणुत्वाभावनिश्चयानन्तरमभेदज्ञानात् प्रधानवाक्यविरोधे गुणभूताणुत्वश्रुतीनामौपाधिकाणुत्वविषयकल्पनादगुणे त्वन्याय्यकल्पनेति न्यायादिति भावः। किञ्च सर्वदेहव्यापिशैत्यानुभवान्यथानुपपत्त्याऽणुत्वविषयत्वेन कथञ्चिदर्थवादा नेयाः लौकिकन्यायादपि तेषां दूर्बलत्वादिति न्यायादिति मत्वाह। न चाणोरिति। प्राह्वते। त्वगिति। यद्येवात्मसम्बन्धस्य त्वग्व्याप्त्या देहव्यापिनी वेदना स्यात् तर्ह्यतिप्रसङ्ग इति दूषयति। नेति। प्रसङ्गस्येष्टत्वं निरस्यति। पादतल एवेति। तस्मादल्पमहतोः संयोगो न महद्व्यापी कण्टकसंयोगस्य देहव्याप्त्यदर्शनात्, तथा च त्वगात्मसंयोगस्त्वगेकदेशस्य एवेति देहव्यापिवेदनानुपपत्तिः। न च सिद्धान्ते त्वगात्मसम्बन्धस्य व्यापित्वात् कण्टकसम्बन्धे देहव्यापिवेदनाप्रसङ्ग इति वाच्यं। यावती विषयसम्बन्धा त्वक् ताव-

चोक्तं भगवता द्वैपायनेन 'उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः। पृथिव्यामेव तं विद्यादपो वायुञ्च संश्रितमिति। यदि चैतन्यं जीवस्य समस्तशरीरं व्याप्नुयान्नाणुर्जीवः स्यात्, चैतन्यमेव ह्यस्य स्वरूपमग्नेरिवौष्ण्यप्रकाशौ, नात्र गुणगुणिविभागो विद्यत इति। शरीरपरिमाणत्वञ्च प्रत्याख्यातं, पारिशेष्याद्विभुर्जीवः। कथं तर्ह्यणुत्वादिव्यपदेश इत्यत आह। तद्गुणसारत्वात् तु तद्व्यपदेश इति। तस्या बुद्धेर्गुणास्तद्गुणा इच्छा द्वेषः सुखं दुःखं इत्येवमादयस्तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे सम्भवति स तद्गुणसारस्तस्य भावस्तद्गुणसारत्वं। न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्तुरभोक्तुश्चासंसारिणो

---

द्यात्मसम्बन्धस्तावद्व्यापिवेदनाहेतुरिति नियमात्। न चैवं विषयत्वक्सम्बन्ध एव तद्धेतुरस्तु किमात्मव्याप्त्येति वाच्यं। वेदना हि सुखं दुःखं तदनुभवश्च, न चैषा व्यापकाना कार्य्याणामल्पमुपादानं सम्भवति कार्यस्योपादानादतिश्लेषानुपपत्तेः। न चैषा व्यापकत्वमसिद्धं सूर्य्यतप्तस्य गङ्गानिमग्नस्य सर्वाङ्गव्यापिदुःखसुखानुभवस्य दुरपह्नवत्वात्। यदुक्तं गुणस्यापि गुणिविश्लेषो गन्धवदिति तन्नेत्याह। न चाणोरिति। गन्धो नाश्रयाद्विश्लिष्टः गुणत्वाद्रूपवदित्यागममाह। तथा चोक्तमिति। न च प्रत्यक्षबाधः गन्धस्य प्रत्यक्षत्वेऽपि निराश्रयत्वस्याप्रत्यक्षत्वान्महता त्रसरेणूनामनुद्भूतस्पर्शानामुद्भूतगन्धानामागमनात् स्फुटगन्धोपलम्भसम्भवः, अवयवान्तरप्रवेशान्न सहसा मूलद्रव्यक्षय इति भावः। पूर्वं चैतन्यस्य गुणत्वमुपेत्य तद्वाराणा गुणात्मात्मत्व निरस्तं, सम्प्रति तस्य गुणत्वमसिद्धमित्याह। यदि चैतन्यमिति। उत्सूत्रं सूत्रं विना विभुत्व प्रसाध्याणुत्वायुक्तेर्गतिप्रदर्शनार्थं सूत्रं व्याचष्टे। कथमित्यादिना।

नित्यमुक्तस्य सत आत्मनस्तस्मात् तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः, तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वतः, तथा च,

"बालाग्रशतभागस्य शतधा कल्पितस्य तु।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" ॥

इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह। तच्चैवमेव समञ्जसं स्यात् यद्यौपचारिकमणुत्वं जीवस्य भवेत् पारमार्थिकञ्चानन्त्यं। न ह्युभयं मुख्यमवकल्पेत। न चानन्त्यमौपचारिकमिति शक्यं विज्ञातुं सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात्।*तथेतरस्मिन्नप्युन्माने बुद्धेर्गुणेनात्मगुणेन चैव 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति बुद्धिगुणसम्बन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मना। 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यत्राऽपि न जीवस्याणुपरिमाणत्वं शिष्यते परस्यैवात्मनश्चक्षुराद्यनवगा-

---

अन्तरा विज्ञानमनसी हृदि ह्येति च प्रकृता बुद्धिर्योग्यत्वात् तच्छब्देन परामृश्यते। बुद्धिगुणानामात्मन्यध्यासादणुत्वाद्युक्तिर्न स्वतः आनन्त्यश्रुतिविरोधादित्याह। तथा चेति। अकार्यकारणद्रव्यसमानाधिकरणतया तत्त्वमसीति वाक्यस्य सोऽयमिति वाक्यवदखण्डाभेदार्थत्वादानन्त्यं सत्यमणुत्वमध्यस्तमित्यर्थः। उक्तञ्चैतदङ्गुष्ठाधिकरणे 'प्रतिपाद्यविरुद्धमुद्देश्यगतविशेषणमविवक्षितं' इति बालाग्रवाक्यमाराग्रवाक्यञ्चेत्युन्मानद्वयमुक्तं तत्राद्यं निरस्य द्वितीयं निरस्यति। तथेतरस्मिन्नपीति। बुद्धेर्गुणनिमित्तेनात्मन्यध्यस्तो गुणो भवति तेनात्मगुणेनाध्यस्तेनैवाराग्रपरिमाणोऽपकृष्टश्च जीवो दृष्टः स्वतस्त्वनन्त एवेत्यर्थः।

---

* तथोत्तरस्मिन्निति वर्ध० का०।

स्थत्वेन ज्ञानप्रसादावगम्यत्वेन च प्रकृतत्वात्, जीवस्याऽपि च मुख्याणुपरिमाणत्वानुपपत्तेः, तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा द्रष्टव्यं। तथा प्रज्ञया शरीरं समारुह्येत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यं व्यपदेशमात्रं वा शिलापुत्रकस्य शरीरमित्यादिवत्। न ह्यत्र गुणगुणिविभागो विद्यत इत्युक्तं। हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात्। तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति, 'स प्राणमसृजत' इति। उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते, न ह्यनपसृप्तस्य देहाद्गत्यागती स्यातां। एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः प्राज्ञवत्, यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशोऽणीयान् व्रीहेर्वा यवाद्वा मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसङ्कल्प इत्येवंप्रकारस्तद्वत्।

---

'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' इत्युक्त्वा एषोऽणुरात्मेत्युक्तः पर एव यदि जीवः तदाप्यस्याणुत्वं दुर्ग्रहत्वार्थं इत्याह। जीवस्यापीति। यदुक्तं पृथगुपदेशाच्चैतन्यगुणेनैवात्मनो देहव्याप्तिरिति तत्राह। तथा प्रज्ञयेति। बुद्धिप्रज्ञयेत्यर्थः। यदि चैतन्यं प्रज्ञा तदा भेदोपचार इत्याह। व्यपदेशमात्रं वेति। ननु चैतन्यं गुण इति भेदो मुख्योऽस्तु नेत्याह। न ह्यत्रेति। निर्गुणत्वश्रुते-

स्यादेतद् यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यं भावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेत्यत उत्तरं पठति ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया, कस्मात् यावदात्मभावित्वात्। बुद्धिसंयोगस्य यावदयमात्मा संसारी भवति यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते तावदस्य बुद्ध्या संयोगो न शाम्यति। यावदेव चायं बुद्ध्युपाधिसम्बन्धस्तावदेवास्य जीवस्य जीवत्वं संसारित्वञ्च, परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेणास्ति। न हि नित्यमुक्तस्वरूपात् सर्वज्ञादीश्वरादन्यश्चेतनधातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' 'तत्त्वमसि' 'अहं ब्रह्मास्मि'

---

रित्यर्थः। अन्यदपि पूर्वोक्तं बुद्ध्याद्युपाधिकमित्याह। हृदयेत्यादिना। सोऽयं दृष्टान्तं विवृणोति। यथेति। असत्त्वमित्यापाततः असंसारित्वमापाद्यं। शेषं सुबोधं।

ननु स्वतः संसारित्वमस्तु किं बुद्ध्युपाधिनेत्यत आह। यावदेव चायमिति। समानो बुद्धितादात्म्यापन्नः सन् विज्ञानं ब्रह्म तन्मयो विकारोऽणुरित्यर्थः किं न स्यादित्यत आह। प्रदेशान्तर इति। विज्ञानमयो बुद्धिप्रचुर इत्यर्थः। केन समान इत्याकाङ्क्षायामिति

इत्यादिश्रुतिभ्यः। कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति तद्दर्शनादित्याह। तथा हि शास्त्रं दर्शयति 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' इत्यादि। तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति। प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इति विज्ञानस्य मनआदिभिः सह पाठात् बुद्धिमयत्वञ्च तद्गुणसारत्वमेवाभिप्रेयते, यथा लोके स्त्रीमयो देवदत्तः इति स्त्रीरागादिप्रधानोऽभिधीयते तद्वत्। स समानः सन्नुभौ लोकावनुसञ्चरति इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्यादेर्दर्शयति, केन समानस्तयैव बुद्ध्या इति गम्यते सन्निधानाच्च। तच्च दर्शयति 'ध्यायतीव लेलायतीव' इति, एतदुक्तं भवति नायं स्वतो ध्यायति नापि चलति ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां चलतीवेति। अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसम्बन्धः, न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावत् ब्रह्मात्मतानवबोधः तावदयं बुद्ध्याद्युपाधिसम्बन्धो न शाम्यति। दर्शयति च,

---

शेषः। श्रुतिबलाद्बुद्धेर्यावत्संसारमात्मभावित्वमुक्तं सति मूले कार्यस्य वियोगासम्भवाच्चेति युक्त्याप्याह। अपि च मिथ्येति। सम्यग्ज्ञानादेव बुद्ध्यादिसम्बन्धध्वंस इत्यत्र श्रुतिमाह। दर्शयतीति। म्त्युम-स्मीत्यन्वयः। आदित्यवर्णं स्वप्रकाशं। तमसः परस्तादज्ञानास्पृष्टमि-

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति। ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसम्बन्धः आत्मनोऽभ्युपगन्तुं 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति वचनात् कृत्स्नविकारप्रलयाभ्युपगमाच्च तत्कथं यावदात्मभावित्वं बुद्धिसम्बन्धस्येत्यत्रोच्यते॥

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्॥ ३१॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानानि अविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति, नाविद्यमानान्युत्पद्यन्ते षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात्, एवमयमपि बुद्धिसम्बन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति। एवं ह्येतद्युज्यते, न ह्याकस्मिकी कस्यचिदुत्पत्तिः सम्भवति अतिप्रसङ्गात्। दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितं सति सम्पद्य न विदुः सति सम्पद्यामह इति

---

त्यर्थः। यावदात्मभावित्वस्यासिद्धिं शङ्कते। नन्विति। सुषुप्तौ बुद्धिसत्त्वे ब्रह्मसम्पत्तिर्न स्यात् प्रलये तत्सत्त्वे प्रलयव्याहतिरित्यर्थः॥

सूक्ष्मरूपात्मना बुद्धेर्यावदात्मभावित्वमस्ति इत्याह। पुंस्त्वेति। पुंस्त्वं रेतः, आदिपदेन श्मश्र्वादिग्रहः, अस्य बुद्धिसम्बन्धस्येत्यर्थः। स्वापे बीजात्मना सतो बुद्ध्यादेः प्रबोधेऽभिव्यक्तिरित्यत्र श्रुतिमाह।

'न इह व्याघ्रो वा सिंहो वा' इत्यादिना। तस्मात् सिद्धमेत-द्यावदात्मभावी बुद्ध्याद्युपाधिसम्बन्ध इति॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा॥ ३२॥

तच्चात्मन उपाधिभूतमन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते। क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति। तच्चैवम्भूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यं। अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात् आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां सन्निधाने सति नि-

---

दर्शयतीति। न विदुरित्यविद्यात्मकबीजसद्भावोक्तिः। ते व्याघ्रादयः पुनराभवन्ति इत्यभिव्यक्तिनिर्देशः॥

बुद्धिसद्भावे मानमाह सूत्रकारः। नित्येति। मनसा ह्येव पश्यति, बुद्धिश्च न विचेष्टति, विज्ञानं यज्ञं तनुते, चेतसा वेदितव्यः, चित्तश्च चेतयितव्यश्चेति तत्र तत्र श्रुतिषु मनआदिपदवाच्यं तावद्बुद्धिद्रव्यं प्रसिद्धमित्यर्थः। कथमेकस्यानेकोक्तिस्तत्राह। क्वचिच्चेति। गर्ववृत्तिकोऽहङ्कारो विज्ञानं चित्प्रधानं स्मृतिप्रधानं वा चित्तमित्यपि द्रष्टव्यं। यद्यपि साक्षिप्रत्यक्षसिद्धमन्तःकरणं श्रुत्यनूदितञ्च तथापि प्रत्यक्षश्रुत्योर्विवदमानं प्रति व्यासङ्गानुपपत्त्या तत्साधयति। तच्चेत्यादिना। सूत्रं योजयति। अन्यथेति। पञ्चेन्द्रियाणां पञ्चविषयसम्बन्धे सति नित्यं युगपत् पञ्चोपलब्धयः स्युः, मनोऽतिरिक्तसामग्र्याः सत्त्वात् यदि सत्यामपि सामग्र्यां उपलब्ध्यभावस्तर्हि सदैवानुपलब्धिप्रसङ्गादित्यर्थः। अतः कादाचित्कोपलब्धिनियामकं मन एष्टव्यमिति

त्यमेवोपलब्धिः प्रसज्येत। अथ सत्यपि हेतुसमवधाने फलाभाव-स्ततोऽपि नित्यमेवानुपलब्धिः प्रसज्येत, न चैवं दृश्यते। अथ वान्य-तरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः। न चा-त्मनः शक्तिप्रतिबन्धः सम्भवति अविक्रियत्वात्, नापीन्द्रियस्य, न हि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य ततोऽकस्माच्छ-क्तिः प्रतिबध्येत, तस्मात् यस्यावधानानवधानाभ्यामुपलब्ध्यनु-पलब्धी भवतस्तन्मनः। तथा च श्रुतिः, 'अन्यत्रमना अभूवं नाद्-र्शमन्यत्रमना अभूवं नाश्रौषम्' इति 'मनसा ह्येव पश्यति मनसा शृणोति' इति च। कामादयश्चास्य वृत्तय इति दर्शयति 'कामः

---

भावः। ननु सत्यपि करामिसंयोगे दाहकादाचित्कत्ववदुपलब्धि-कादाचित्कत्वमस्तु किं मनसेत्याशङ्क्यान्यतरनियमो वेत्येतद्व्याचष्टे। अ-थवेति। सत्यां सामग्र्यां नित्योपलब्धिर्वाङ्गीकार्या अन्यतरस्य का-रणस्य केनचिच्छक्तिप्रतिबन्धनियमो वाङ्गीकार्यः, यथा मणिनाऽग्नि-शक्तिप्रतिबन्ध इति वाकारार्थः। अस्तु प्रतिबन्ध इत्यत आह। न चेति। न चेन्द्रियस्यैवास्तु शक्तिप्रतिबन्धकत्वं प्रतिबन्धकाभावात्, न च दृष्टसामग्र्यां सत्यां अदृष्टं प्रतिबन्धकमिति युक्तं अतिप्रसङ्गात्। न च व्यासङ्गः प्रतिबन्धकमनोऽसत्त्वे तस्यासम्भवात्, तथा हि रसा-दीनां सद्योपलब्धिप्राप्तौ रसबुभुत्सारूपो व्यासङ्गो रूपाद्युपलब्धिप्रति-बन्धको वाच्यः, स च गुणत्वाद्रूपवद्द्रव्याश्रयः, तच्चात्मनोऽसङ्गनिर्गुण-कूटस्थस्य गुणित्वायोगान्मन एव गुणित्वेनैष्टव्यमिति व्यासङ्गानुपपत्त्या मनःसिद्धिः। एतदभिप्रेत्योपसंहरति। तस्मादिति। अवधानं बुभु-त्सा, न चानिच्छतोऽपि दुर्गन्धाद्युपलम्भान्न बुभुत्सोपलब्धिर्नियामिकेति वाच्यं, अनेकविषयसन्निधौ क्वचिदेव तस्या नियामकत्वाङ्गीकारात्। येषां मते पुनरिच्छादीनामात्मधर्मत्वं तेषां मनो दुर्लभमिति मन्तव्यं। इच्छा-

सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति, तस्माद्युक्तमेतत् तद्गुणसारत्वात् तद्व्यपदेश इति ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते। कर्ता चायं जीवः स्यात्, कस्मात् शास्त्रार्थवत्त्वात्। एवञ्च यजेत जुहुयात् दद्यादित्येवंविधं विधिशास्त्रमर्थवद्भवति, अन्यथा तदनर्थकं स्यात्। तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति, न चा-

---

दिधर्मिणैवात्मना व्यासङ्गोपपत्तेः। सम्प्रति व्यासङ्गस्य मानसत्वे श्रुतिमाह। तथा चेति। न केवलं व्यासङ्गात्मनः सिद्धिः किन्तु कामाद्याश्रयत्वेनापीत्याह। कामादयश्चेति। बुद्धेः प्रामाणिकत्वोक्तिफलमाह। तस्मादिति ॥

एवमात्मन्यणुत्वाध्यासोक्त्या स्वाभाविकं महत्त्वं स्थापितं सम्प्रति ततो बहिष्ठं कर्तृत्वं साधयति। कर्ता शास्त्रार्थवत्त्वात्। स नित्यचिद्रूपो महानात्मा कर्ता न वेत्यसङ्गत्वश्रुतीनां विध्यादिश्रुतीनाञ्च विप्रतिपत्त्या संशये बुद्धिकर्तृत्वेनैव विध्यादिशास्त्रोपपत्तेरकर्तात्मेति साङ्ख्यपक्षप्राप्तौ सिद्धान्तयत्येव तद्गुणसारत्वोक्त्यात्मनि कर्तृत्वाध्यासस्याऽपि सिद्धत्वात् पुनरुक्तिमाशङ्क्य साङ्ख्यपक्षनिरासार्थमात्मनि कर्तृत्वाध्यासप्रपञ्चनान्न पुनरुक्तिरित्याह। तद्गुणेति। अधिकारः प्रसङ्गः, वस्तुतोऽसङ्गत्वमविद्यातः, कर्तृत्वमित्यसङ्गत्वकर्तृत्वश्रुतीनां अविरोधोक्तेः कर्तृत्वविचारात्मकाधिकरणद्वयस्य पादसङ्गतिः, श्रुतीनां मिथोविरोधाविरोधौ पूर्वोत्तरपक्षयोः फलं, यदात्र पूर्वपक्षे बन्धाभावाच्छास्त्रवैयर्थ्यं फलं सिद्धान्ते कर्तृत्वादिसम्बन्धसत्त्वाच्छास्त्रार्थवत्त्वमिति भेदः। ननु बुद्धिकर्तृत्वेन शास्त्रार्थवत्ताऽस्तु किं जीवकर्तृ-

सति कर्तृत्वे तदुपपद्यते तथेदमपि शास्त्रमर्थवद्भवति, 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति॥

## विहारोपदेशात्॥ ३४॥

इतश्च जीवस्य कर्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति 'स ईयते मृतो यत्र कामम्' इति 'स्वे शरीरे यथाकाम परिवर्तते' इति च॥

## उपादानात्॥ ३५॥

इतश्चास्य कर्तृत्व यज्जीवप्रक्रियायामेव करणानामुपादानं सङ्कीर्तयति 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति 'प्राणान् गृहीत्वा' इति च॥

---

त्वेन तत्राह। तद्धि कर्तुं सत इति। मयेद कर्तव्यमिति बोधसमर्थस्य
चेतनस्यैव कर्तृत्व वाच्य न त्वचेतनाया बुद्धे। किञ्च भोक्तुरात्मन एव
कर्तृता वाच्या शास्त्रफल प्रयोक्तरीति न्यायादिति भाव.। सन्ध्य स्थानं
स्वप्न अमृत स आत्मा यथेष्टमीयते गच्छतीति॥
विहारोपदेशात। आत्मा कर्ता प्राणाना मध्येऽपि ज्ञानेन बुद्धा
विज्ञानसमर्थमिन्द्रियजात आदाय शेते इति प्राणान् गृहीत्वा परि-
वर्तत इति॥
उपादानकर्तृत्वमात्मन, अकर्तृत्वे उपादानानुपपत्तेरिति भाव।
विज्ञानशब्दो जीवस्य निर्देशो न चेत तदा प्रथमानिर्देशाद्विपर्यय
करणद्योतितृतीयया निर्देश स्यात, तस्मादिह श्रुतौ तनुत इत्या-
ख्यातेन कर्तृवाचिना विज्ञानपदस्य सामानाधिकरण्यनिर्देशात् क्रि-
यायामात्मन कर्तृत्व सूच्यत इति सूत्रभाष्ययोरर्थ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३६॥

इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रं 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति। ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यत इति नेत्युच्यते जीवस्यैष निर्देशो न बुद्धेर्न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्याद्विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति। इह तु विज्ञानं यज्ञं तनुत इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात् स स्वतन्त्रः सन् प्रियं हितञ्चैवात्मनो नियमेन सम्पादयेन्न विपरीतं, विपरीतमपि तु सम्पादयन्नुपलभ्यते, न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इत्यत उत्तरं पठति ॥

## उपलब्धिवदनियमः ॥३७॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टञ्चोपलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति, उपलब्धा-

---

सूत्रान्तरमवतारयति। अत्राहेति। जीव स्वतन्त्रश्चेदिष्टमेव कुर्यादस्वतन्त्रश्चेन्न कर्ता स्वतन्त्रः कर्तेति न्यायादित्यर्थः ॥

सत्यपि स्वातन्त्र्ये कारकवैचित्र्यादनियता प्रवृत्तिरिति सूत्रेण परि

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः ॥ ३६ ॥

इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रं 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति। ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यत इति नेत्युच्यते जीवस्यैवैष निर्देशो न बुद्धेर्न चेज्जीवस्य स्यान्निर्देशविपर्य्ययः स्याद्विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति। इह तु विज्ञानं यज्ञं तनुत इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात् स स्वतन्त्रः सन् प्रियं हितञ्चैवात्मनो नियमेन सम्पादयेन्न विपरीतं, विपरीतमपि तु सम्पादयन्नुपलभ्यते, न च स्वतन्त्रस्यात्मन ईदृ[शी] प्रवृत्तिरनियमेनोपपद्यत इत्यत उत्तरं पठति ॥

## उपलब्धिवदनियमः ॥ ३७ ॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनि[ष्टं चो]पलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति, —

---

सूत्रान्तरमवतारयति। अत्राहेति। जीवः स्वतन्त्रश्चे[त्] इष्टमेव कुर्यात् स्वतन्त्रः कर्तेति न्यायादित्यर्थः।

सत्यपि स्वातन्त्र्ये कारकवैचित्र्यादनियता प्रवृत्तिरि[ति]

सत्याञ्च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यं, अहङ्कारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्, अहं गच्छाम्यहं आगच्छाम्यहं भुञ्जेऽहं पिबामीति च। तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारिण्याः सर्वार्थकारि करणमन्यत् कल्पयितव्य, शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यते। ततश्च सञ्ज्ञामात्रे विसंवादः स्यात् न वस्तुभेदः कश्चित्, करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्॥

## समाध्यभावाच्च॥ ३९॥

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ओमित्येवं ध्यायथ आत्मानम्' इत्येवंलक्षणः सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत तस्मादप्यस्य कर्तृत्वसिद्धिः॥

## यथा च तक्षोभयथा॥ ४०॥

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्व शारीरस्य

---

योऽहंधीगम्य स कर्ता स एव जीवो यत् तदपेक्षित करणं तन्मन इति जीवकर्तृत्वसिद्धिरिति भाव॥

ज्ञानसाधनविध्यन्यथानुपपत्त्याप्यात्मन कर्तृत्वं वाच्यमित्याह। समाधीति। मुक्तिफलभोक्तुरेव तदुपायसमाधिकर्तृत्व युक्तं अन्यथात्मनोऽकर्तृत्वे बुद्धेरपि अभोक्तृ कर्तृत्वायोगात् समाध्यभावप्रसङ्ग इत्यर्थ।

यथा च तक्षोभयथा। उक्तमात्मन कर्तृत्वमुपजीव्य संशयपूर्वपक्षा-

इतरं पश्यति' इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति। यत्र त्वस्य 'सर्वमात्मैवाभूत्तत् केन कम्पश्येत्' इति तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनात्मना सम्परिष्वक्तस्य श्रावयति 'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' इत्यारभ्य 'एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' इत्युपसंहारात्। तदेतदाहाचार्यः। 'यथा च तक्षोभयथा' इति त्वर्थे चायं चः पठितः। नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति। यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तः विमुक्तवास्यादिकरणः स्वस्थो *निर्वृत्तो निर्व्यापारः सुखी भवति, एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं प्रविश्य विमुक्तकार्यकरणसङ्घातोऽकर्ता सुखी भवति, सम्प्र-

नित्यमुक्तत्वव्याघातादिति शङ्कते। पर एवेति। न वयं शुद्धस्य चिद्धातोः परस्य बन्धं वदामः किन्तु तस्यैवाविद्याबुद्ध्यादिप्रतिबिम्बितस्याविद्यया भिन्नस्य जीवत्वं प्राप्तस्य बन्धमोक्षाविति ब्रूमः। कल्पितभेदोऽपि लोके बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थापको दृष्ट इति परिहरति। नाविद्येति। अविद्योपहिते बन्धो न शुद्धात्मनीत्यत्र श्रुतिमाह। तथा चेति। कर्तृत्वस्य बुद्ध्याद्यन्वयव्यतिरेकानुविधायित्वाच्छ्रुतेश्च न स्वाभाविकत्वमित्याह। तथा स्वप्नेति। आत्मैव काम्यते आनन्दत्वादि-

* निर्वृत्तव्यापार इति वर्ध०।

सादावस्थायां तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृतः सुखी भवति। तत्र दृष्टान्तस्यैतावतांशेन द्रष्टव्यः, तथा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति स्वशरीरेण त्वकर्त्तैव, एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति स्वात्मना त्वकर्त्तैवेति न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा। यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति तत्र विधिशास्त्रं तावद्यथा प्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति। न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम, तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते। 'कर्ता विज्ञानात्मा पुरुषः' इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथा प्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहा-

---

आप्तकाम स्वरूपं स्वातिरिक्तकाम्याभावादकामं आप्तकामत्वादकामत्वाच्चाप्तकाम विशोकत्वाच्चेत्याह। शोकेति। शोकान्तरं दुःखास्पृष्टमित्यर्थः। तस्यैव सुषुप्तात्मरूपस्य परमपुरुषार्थमाह। एष इति। गतिं प्राप्य सम्पदैश्वर्यं लोको भोग्यसुखं चैतस्मादन्यन्नास्तीत्यर्थः। आत्मा स्वतोऽकर्ता बुद्ध्याद्युपाधिना तु कर्त्तेत्युभयथाभाव उक्तस्तत्रार्थे सूत्रं योजयति। तदेतदाहेत्यादिना। सम्प्रसादः सुषुप्तिः। यथा स्फटिकस्य लौहित्यं कुसुमाद्युपाधिकं तथात्मनः कर्तृत्वं बुद्ध्याद्युपाधिकमन्वय-

रोपादाने परिहृते, तयोरप्यनुवादरूपत्वात्। ननु सन्ध्ये स्थाने प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परिवर्तत इति विहार उपदिश्यमान. केवलस्यात्मन कर्तृत्वमावहति, तथोपादानेऽपि 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यैवात्मन. कर्तृत्वङ्गमयत इति। अत्रोच्यते, न तावत् सन्ध्ये स्थानेऽत्यन्तमात्मन करणविरमणमस्ति 'सधी' स्वप्नो भूत्वा इम लोकमतिक्रामति' इति, तत्रापि धीसम्बन्धश्रवणात्। तथा च स्मरन्ति,

'इन्द्रियाणामुपरमे मनोऽनुपरत यदि।
सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनम्' ॥ इति।

'कामादयश्च मनसो वृत्तय' इति श्रुति, ताश्च स्वप्ने

---

व्यतिरेकाभ्यां सिद्ध। न च तौ बुद्धेरात्मकर्तृत्वे करणत्वविषयौ नोपादानत्वविषयाविति यत्ता, करणत्वात् कार्यान्वय्युपादानत्वस्यान्तरङ्गतया चित्सम्बलितबुद्धेस्ताभ्यामुपादानत्वस्यैव सिद्धे, एव बुद्ध्य भेदेनाध्यस्तचिदहङ्कारस्य कर्तृत्वोपादानत्वे महावाक्यसम्मतिश्चेति भाव। ननु तक्षा स्वहस्तादिना वास्यादिप्रेरणशक्तत्वात स्वत कर्ता आत्मा तु निरवयवत्वादशक्त इति दृष्टान्तवैषम्यमाशङ्क्यौपाधिककर्तृत्वांशेन विवक्षितेन साम्यमाह। तक्षदृष्टान्तश्चेति। शास्त्रेणानूद्यमान कर्तृत्व स्वाभाविकमेव किं न स्यादित्यत आह। न च स्वाभाविकमिति। उपाध्यभावकाले श्रुत कर्तृत्व स्वाभाविकमेवेति शङ्कते। ननु सन्ध्य इति। किञ्च करणैर्विशिष्टस्य कर्तृत्वे तेषां कर्तृन्तर्भावात्तेष्वपि कर्तृविभक्ति स्यात् न चैवमस्ति, तत केवलात्मन कर्तृत्वमित्याह। तथेति। स्वप्नविहारे तावदुपाध्यभावोऽसिद्ध इत्याह। न तावत् सन्ध्य इति। विहारस्य मिथ्यात्वात् तत्कर्तृत्वमपि मिथ्येत्याह। विहारोऽपीति। जक्षत भुञ्जान इव। करणविशिष्टस्य कर्तृ-

ग्यन्ते, तस्मात् समना एव स्वप्ने विहरति, विहारोऽपि च
ात्यो वासनामय एव न तु पारमार्थिकोऽस्ति। तथा च
श्रुतिरिवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति 'उतेव स्त्रीभिः
सह मोदमानो जक्षदुतेवाऽपि भयानि पश्यन्' इति। लौकिका
अपि तथैव स्वप्नं कथयन्ति आरुक्षमिव गिरिशृङ्गमद्राक्षमिव
वनराजिमिति। तथोपादाने यद्यपि करणेषु कर्मकरण-
विभक्तिनिर्देशः तथापि तत्संयुक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यं,
केवले कर्तृत्वासम्भवस्य दर्शितत्वात्। भवति च लोकेऽनेकप्रका-
रा विवक्षा योधा युध्यन्ते योधै राजा युध्यत इति। अपि

---

त्वे करणेषु कर्तृविभक्तिः स्यात् न करणविभक्तिरित्युक्तं प्रत्याह। भवति
च लोके इति। कर्तृष्वपि करणविभक्तिर्न विरुध्यते दृष्टत्वात्, अस्ति
च कर्तृप्रयोगः, विज्ञानं यज्ञं तनुत इत्यादाविति भावः। उपादा-
नस्य सकर्तृकत्वमङ्गीकृत्य केवलात्मनः कर्तृत्वं निरस्तं इदानीं तस्या-
क्रियत्वात् तत्कर्तृत्वमपेक्षेत्याह। अपि चेति। पूर्वं विज्ञानं जीव इत्य-
ङ्गीकृत्य जीवस्य कर्तृत्वे तनुत इति श्रुतिरुक्ता, सम्प्रति तया श्रुत्या-
ऽनुपहितात्मनः कर्तृत्वमिति भ्रान्तौ विज्ञानं बुद्धिरेव तस्या एवात्र
कर्तृत्वमुच्यते। तदुपहितात्मनः कर्तृत्वसिद्धये इत्यभिप्रेत्याह। यस्त्विति।
योऽयं विज्ञानमय इत्यादिश्रुतिषु विज्ञानशब्दस्य बुद्धौ प्रसिद्ध-
त्वादन्न च मनोमयकोशानन्तरं पठितत्वात् श्रद्धादिलिङ्गाच्च बुद्धि-
रेव विज्ञानमित्यर्थः। तत्रैव लिङ्गान्तरमाह। विज्ञानं देवा इति।
ब्रह्मज्येष्ठं प्रथमजं इत्यादिश्रुतौ हिरण्यगर्भब्रह्मात्मकबुद्धेर्ज्येष्ठत्वोक्तेः
सर्व देवैरिन्द्रियैरुपास्यमानं ज्येष्ठं ब्रह्मविज्ञानं बुद्धिरेवेत्यर्थः। यज्ञं
पूर्णं। किञ्च श्रुत्यन्तरे यज्ञस्य बुद्धिकार्यत्वोक्तेः अत्रापि यज्ञकर्तृ विज्ञानं
बुद्धिरित्याह। स एष इति। चित्तेन ध्यात्वा वाचा मन्त्रोक्त्या यज्ञो

चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते न स्वा-
तन्त्र्यं कस्यचिदबुद्धिपूर्वकस्याऽपि स्वापेक्षकरणव्यापारोपरमस्य
दृष्टत्वात्। यस्त्वयं व्यपदेशो दर्शितो 'विज्ञानं यज्ञं तनुते' इति
स बुद्धेरेव कर्तृत्वं प्रापयति विज्ञानशब्दस्य तत्र प्रसिद्धत्वा-
न्मनोऽनन्तरपाठाच्च, तस्य श्रद्धैव शिर इति च विज्ञानमय-
स्यात्मनः श्रद्धाद्यवयवत्वसङ्कीर्तनात् श्रद्धादीनाञ्च बुद्धिध-
र्मत्वप्रसिद्धेः 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते' इति च
वाक्यशेषात् ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात् 'स
एष वाचस्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' इति च श्रुत्यन्तरे

---

जायते तत्स्थित्तस्य वाच पूर्वोत्तरभावो यज्ञ इत्यर्थः। यच्चोक्तं
बुद्धे कर्तृत्वे प्राप्तिवैपरीत्यप्रसङ्ग इति तन्न, विक्लिद्यन्ते तण्डुलाः, ज्वल-
न्ति काष्ठानि, बिभर्ति स्थालीति स्वस्वव्यापारेषु सर्वकारकाणां कर्तृत्व-
स्वीकारादित्याह। न चेति। तर्हि बुद्ध्यादीनां कर्तृत्वे करणत्ववार्ता
तेषु न स्यादित्यत आह। उपलब्धीति। यथा काष्ठानां स्वव्यापारे
कर्तृत्वेऽपि पाकापेक्षया करणत्वं तथा बुद्ध्यादीनां अध्यवसायसङ्क-
ल्पादिक्रियाकर्तृत्वेऽप्युपलब्ध्यपेक्षया करणत्वमित्यर्थः। ननु तर्ह्युपलब्धि
कस्य व्यापार इत्याह। सा चेति। तर्हि तस्यामात्मा केवलः कर्ता
स्यात् यस्य यो व्यापारः स तस्य कर्तेति स्थितिरित्यत आह। न चेति।
उपलब्धेः नित्यत्वे बुद्ध्यादीनां कथं करणत्वमुक्तमिति चेत्, उच्यते
अखण्डसाक्षिचैतन्यं बुद्धिवृत्तिभिर्भिन्नं सद्विषयावच्छिन्नत्वेन जायते,
तथा च विषयावच्छिन्नचैतन्यस्योपलब्धौ बुद्ध्यादीनां करणत्वं बुद्ध्या-
द्युपहितात्मनः कर्तृत्वं न केवलस्य, न च बुद्धेरेव तत्कर्तृत्वं चैतन्यस्य
व्यापारत्वायोगादिति भावः। यच्चोक्तं बुद्धेः कर्तृत्वे स एवाहंधी-
गम्यो जीव इति तस्य करणान्तरं कल्पनीयं तथा च नाममात्रे विवाद
इति तत्र केवलात्मनः कर्तृत्वमुक्तमिति भ्रान्तिं निरस्यति। अहङ्का-

यत्नस्य शास्त्रबुद्धिसाध्यत्वावधारणात्। न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति सर्वकारकाणामेव स्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्। उपलब्ध्यपेक्षन्त्वेषां करणानां करणत्वं, सा चात्मनः। न च तस्यामप्यस्य कर्तृत्वमस्ति नित्योपलब्धिस्वरूपत्वात्। अहङ्कारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति अहङ्कारस्याप्युपलभ्यमानत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः, बुद्धेः करणत्वाभ्युपगमात्। समाधभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः, यथाप्राप्तमेव कर्तृत्वं उपादाय समाधिविधानात्, तस्मात् कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितं ॥

परात्तु तच्छ्रुतेः ॥ ४१ ॥

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितं तत् किमनपेक्षेश्वरं भवति आहोस्वित् ईश्वरापेक्ष-

---

रेति। साङ्ख्यनिरासार्थं बुद्ध्यभेदेनाध्यस्तचिदात्मकाहङ्कारगतं कर्तृत्वं यदुक्तं तदहंधीगम्यस्य बुद्धिविशिष्टात्मन एव न केवलस्य साक्षिणो भवितुमर्हति, दृश्यधर्मस्य साक्षित्वभावत्वायोगात्। एव विशिष्टात्मन कर्तृत्वे विशेषणीभूताया जडबुद्धेरेव कारणत्वोपपत्तेर्न करणान्तरकल्पनाप्रसङ्ग। अध्यासं विना केवलबुद्धिकर्तृत्ववादिनस्तु करणान्तरप्रसङ्गो दुर्वार इत्यर्थं। एवं शास्त्रार्थवत्त्वादिहेतूनामात्मन कर्तृत्वमात्रसाधकत्वेऽपि स्वाभाविककर्तृत्वसाधनसामर्थ्याभावादध्यस्तमेव कर्तृत्वं विध्यादिकर्तृत्वश्रुतीनामुपजीव्य। तस्मादसङ्गत्वविध्यादिकर्तृत्वश्रुतीनामविरोध इति सिद्धं।

परात्तु तच्छ्रुतेः। यथा स्फटिको लौहित्याध्यासे लोहितद्रव्यं कारणं

मिति भवति विचारणा। तत्र प्राप्तं तावन्नेश्वरमपेक्षते जीवः कर्तृत्वे इति। कस्मादपेक्षाप्रयोजनाभावात्। अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसम्पन्नः कर्तृत्वमनुभवितुं शक्नोति तस्य किमीश्वरः करिष्यति। न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियासु अनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति। क्लेशात्मकेन च कर्तृत्वेन जन्तून् संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत। विषमफलञ्चैषां कर्तृत्वं विदधतो वैषम्यं। ननु वैषम्यनैर्घृण्ये सापेक्षत्वादित्युक्तं। सत्यमुक्तं सति त्वीश्वरस्य सापेक्षत्वसम्भवे, सापेक्षत्वञ्च नेश्वरस्य सम्भवति सतोर्जन्तूनां धर्माधर्मयोस्तयोश्च सद्भावः सति जीवस्य कर्तृत्वे तदेव चेत् कर्तृत्वं ईश्वरापेक्षं स्यात् किं विषयमीश्वरस्य सापेक्षत्वमुच्येत। अकृता-

---

तेनायं स्फटिको लोहित इत्यनुभवात् तथा कामादिपरिणामिबुद्धि-
रात्मनि कर्तृत्वाद्यध्यासे करणमित्युक्तं तदध्यस्तं कर्तृत्वमुपजीव्य जीवस्य
कारकसम्पन्नत्वादीश्वरस्य कारयितृत्वश्रुतेश्च संशयमाह। यदिद-
मिति। चनैष ह्येवेत्यादिश्रुतीनां कर्तृत्वस्वातन्त्र्यद्योतकविध्यादिश्रु-
तिभिर्विरोधसमाधानात् पादसङ्गतिः। कर्ममीमांसकमतेन पूर्व-
पक्षयति। तत्रेत्यादिना। बुद्ध्यादिकारकसम्पत्तावीश्वरव्यतिरेके कर्तृ-
त्वव्यतिरेकानुपलब्धेर्नेश्वरः प्रयोजकः। किञ्च प्रयोजकत्वे नैर्घृण्यादिप्र-
सङ्ग इत्याह। क्लेशात्मकेन चेति। दत्तोत्तरमिदं चोद्यमिति शङ्कते।
नन्विति। पूर्वं जीवस्य धर्माधर्मवत्त्वं सिद्धवत्कृत्य तत्सापेक्षत्वात्
विषमजगत्कर्तृत्वमविरुद्धमित्युक्तं सम्प्रति ईश्वराधीनत्वे जीवस्य
कर्तृत्वे सिद्धे धर्माधर्मवत्त्वसिद्धिः तद्वत् तत्सिद्धौ तत्सापेक्षकारयितृ-
त्वसिद्धिः ईश्वरस्य कारयितृत्वे सिद्धे जीवस्य कर्तृत्वसिद्धिरिति
चक्रकापत्तेः कर्मसापेक्षत्वं न सम्भवतीत्युच्यत इत्याह। सत्यमिति।

भ्यागमश्चैवं जीवस्य प्रसज्येत । तस्मात् स्वत एव जीवस्य कर्तृत्वमिति । एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते । परादिति । अविद्यावस्थायां कार्यकरणसङ्घाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात् सर्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिस्तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति । कुतस्तच्छ्रुतेः । यद्यपि रागादिदोषप्रयुक्तः सामग्रीसम्पन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धं, तथापि सर्वास्वेव प्रवृत्तिषु ईश्वरो हेतुकर्तेति श्रुतेरवसीयते। तथा हि श्रुतिर्भवति 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति' इति चैवंजातीयका । नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातां अकृताभ्यागमश्च जीवस्येति, नेत्युच्यते ॥

---

अस्तु कर्मानपेक्षस्य प्रवर्तकत्वं तत्राह । अपेक्षतेति । अनपेक्षस्य प्रवर्तकत्वे धर्मवतो नरान् दुःखेनाधर्मवतः सुखेन योजयेत्, कारुणिकत्वे वा सर्वे सुखेन एकरूपाः स्युरिति जगद्वैषम्ये विध्यादिशास्त्रस्य न स्यात् । तस्माद्विध्यादिशास्त्रार्थवत्त्वाय रागद्वेषापन्नं स्वत एव जीवस्य कर्तृत्वं वाच्यं, तथा च कारयितृत्वश्रुतिविरोधः । ईश्वरस्याविका वा सा श्रुतिरिति प्राप्ते सिद्धान्तयति । एतामिति । यथा चन्दनादिसामग्र्यां सत्यां धर्मव्यतिरेके सुखव्यतिरेकप्रसङ्गाभावेऽपि 'पुण्यो वै पुण्येन कर्मणा भवति' इत्यादिशास्त्रप्रामाण्यादेव धर्मस्य हेतुत्वसिद्धिः, एवमीश्वरस्याऽपि शास्त्रत एव कारयितृत्वसिद्धिरिति भावः ।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

तुशब्दश्चोदितदोषव्यावर्तनार्थः। कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणः तदपेक्ष एवैनमीश्वरः कारयति, ततश्चैते *चोदिता दोषा न प्रसज्यन्ते। जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजते पर्जन्यवदीश्वरो निमित्तत्वमात्रेण। यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चाऽसाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः, न ह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते। ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते। नैष दोषः, परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः, कुर्वन्तं हि तमीश्वरः कारयति। अपि च पूर्वप्रयत्नमपेक्ष्येदानीं कारयति पूर्वतरञ्च प्रयत्न-

मपेक्ष्य पूर्वमकारयदित्यनादित्वात् समारस्यानवद्य। कथं पुन-रवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति। विहितप्रतिषिद्धा-वैयर्थ्यादिभ्य इत्याह। एवं हि स्वर्गकामो यजेत, ब्राह्मणो न हन्तव्य इत्येवजातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति, अन्यथा तदनर्थकं स्यात्, ईश्वर एव विधिप्रतिषेधयो-र्नियुज्येत अत्यन्तपरतन्त्रत्वात् जीवस्य। तथा विहितकारिण-मप्यनर्थेन संसृजेत् प्रतिषिद्धकारिणमप्यर्थेन, ततश्च प्रामाण्यं वेदस्यास्तमियात्। ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्याऽपि पुरुषकारस्य वैयर्थ्यं, तथा देशकालनिमित्तानां पूर्वोक्तदोष-प्रसङ्गश्चेत्येवजातीयकं दोषजातमादिग्रहणेन दर्शयति॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्व मधीयत एके॥ ४३॥

जीवेश्वरयोरुपकार्योपकारकभावं उक्तः, स च सम्बद्ध-

---

ईश्वरस्य सापेक्षत्वे विध्यादिशास्त्रप्रामाण्यान्यथानुपपत्तिं प्रमाणयति। कथमित्यादिना। एवं सापेक्षत्वे तस्य वैयर्थ्यं भवति अन्यथानपेक्षत्वे वैयर्थ्यं प्रपञ्चयति। ईश्वर इति। तयोः स्थाने स एव नियुज्येत इत्यभिधिषत तयोः कार्यं स एव कुर्यादिति यावत्। तथा च जीवस्य निरपेक्षेश्वरपरतन्त्रत्वाद्विध्यादिशास्त्रमकिंचित्करमनर्थकं स्यात् इति सम्बन्धः। आदिशब्दार्थमाह। तथेति। पुरुषकारः प्रयत्नः। पूर्वोक्तदोषोऽकृताभ्यागमादि, तस्मात् कर्मसापेक्षेश्वरस्य कारयितृत्वा-देव जीवत्वादिश्रुतेर्विध्यादिश्रुत्यविरोध इति सिद्धम्॥

अथ 'एको नित्यः स्वप्रकाशो नाणुरकर्ता जीव' इति शोधितत्व-

योरेव लोके दृष्टः, यथा स्वामिभृत्ययोर्यथावाऽग्निस्फुलिङ्गयोः। ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत् सम्बन्धः आहोस्वित् विस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति, अथवा स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात् तद्विध एव सम्बन्ध इति प्राप्नोति। अतो ब्रवीति अंश इति। जीव ईश्वरस्यांशो भवितुमर्हति यथाऽग्नेर्विस्फुलिङ्गः। अंश इवांशः, न हि निरवयवस्य मुख्योऽंशः सम्भवति। कस्मात् पुनर्निरवयवत्वात् स एव न भवति नानाव्यपदेशात्। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' एतमेव विदित्वा मुनिर्भवति 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते। ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इति, अत आह, अन्यथा चापीति। न च नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः किं तर्ह्यन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः। तथा

---

पदार्थस्यात्र ब्रह्मैक्यसाधनेन भेदाभेदश्रुतीनां विरोधसमाधानात् पादसङ्गतिः। पूर्वपक्षे प्रत्यगभिन्नब्रह्मासिद्धिः सिद्धान्ते तत्सिद्धिरिति भेदः। पूर्वोक्तोपकार्योपकारकभावाश्रितं जीवात्मनोः सम्बन्धं विषयीकृत्य द्विविधदृष्टान्तदर्शनात् संशयमाह। ततश्चेति। प्रसिद्धस्वस्वामित्वसम्बन्धसम्भवात् कश्चित् सम्बन्ध इत्यनियमो न युक्त इत्यरुचेराह। अथ वेति। अनेन य आत्मनि तिष्ठन्नित्यादिश्रुतिप्रसिद्धभेदकोटिदर्शिता। एवं तत्त्वमसीत्यादिश्रुतिसिद्धा भेदकोटिर्द्रष्टव्या, तथा च भेदाभेदश्रुतीनां समबलत्वाद्विरोधे सति सम्बन्धानिश्चयात् सम्बन्धा-

हि एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्ति 'आथर्वणिका ब्रह्मसूक्ते ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत' इत्यादिना। दाशा य एते कैवर्ताः प्रसिद्धा ये चामी दासाः स्वामिष्वात्मानमुपक्षिपन्ति ये चान्ये कितवा द्यूतकृतस्ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसङ्घातप्रविष्टानां जीवानां ब्रह्मत्वमाह। तथा अन्यत्रापि ब्रह्मप्रक्रियायामेवायमर्थः प्रपञ्च्यते 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' इति, "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" इति च। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिभ्यश्चास्यार्थस्य सिद्धिः। चैतन्यञ्चाविशिष्टं जीवेश्वरयोर्यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाभेदावगमाभ्यामंशत्वावगमः। कुतश्चांशत्वावगमः॥

---

एवमंशत्वे पूर्वोक्तोपकार्योपकारकभावस्यासिद्धिरित्याक्षेपात् सङ्गतिः। लोकसिद्धानर्थात्मकभेदानुवादित्वेन भेदश्रुतीनां दुर्बलत्वादज्ञातफलवदभेदश्रुत्यनुसारेण प्रकल्पितभेदनिबन्धनोऽंशांशिभावः सम्बन्ध इति सिद्धान्तयति। अत इत्यादिना। अंशे सांशत्वेऽपि निष्कलेश्वरस्य कथं सांशत्वमत आह। अंश इवेति। जीव इत्यनुषङ्गः। भेद एव चेत् स्वस्वामिभावो युक्तो नांशांशिभाव इति शङ्कते। ननु चेति। अभेदस्यापि सत्त्वादंशांशिभाव इत्याह। अत इति। वञ्चसि गच्छसि, यदास्ते यो नामरूपे निर्माय प्रविश्य व्यवहरन् वर्तते तं विद्वानमृतो भवतीति श्रुत्यर्थः। श्रुतिसिद्धाभेदे युक्तिमाह। चैतन्येति। जीवो मदीय चेतनत्वाद्रूपवदित्यर्थः॥

## मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्चैतमर्थमवगमयति 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति। अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति 'अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्य.' इति प्रयोगात्। अंशः पादो भाग इत्यनर्थान्तरं, तस्मादप्यंशत्वावगमः। कुतश्चांशत्वावगमः॥

## अपि च स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते 'ममैवांशो जीवलोके जीवभूतः सनातन.' इति। तस्मादप्यंशत्वावगमः। यत्तूक्तं स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति। यद्यप्येषा लोके प्रसिद्धिस्तथापि शास्त्रात्त्वंशांशित्वमीशित्रीशि-

---

अस्य सहस्रशीर्षपुरुषस्य तावान् प्रपञ्चो महिमा विभूति पुरुषस्तस्मात् प्रपञ्चो ज्यायान्महत्तरं। भूतानि देहिनो जीवा इत्यत्र नियामकमाह। अहिंसन्निति। तीर्थानि शास्त्रोक्तकर्माणि, तेभ्योऽन्यत्र सर्वप्राणिहिंसामकुर्वन् ब्रह्मलोकमाप्नोतीत्यर्थ। अत्र भूतशब्दस्य प्राणिषु प्रयोगात् स्वचोक्तमन्त्रेऽपि तथेति भाव। भूतानां पादत्वेऽप्यंशत्वं कुतस्तत्राह। अंश पाद इति॥

जीवस्य पुरुषसूक्तमन्त्रोक्तभगवदंशत्वे भगवद्गीतामुदाहरति सूत्रकार। अपि चेति। अत्यन्तभिन्ने ईशित्रीशितव्यभावप्रसिद्धे ईशितव्यजीवस्य कथमीश्वरांशत्वमित्याशङ्क्य कल्पितभेदेनापीशितव्यत्वोपपत्ते अनन्यथासिद्धाभेदशास्त्रबलादंशत्वमित्याह। यत्त्वित्यादिना। औपाधिके ईश्वरस्य नियन्तृत्वे जीव एव तन्नियन्ता किं न स्यादि-

तत्स्वभावश्च निश्चीयते। निरतिशयोपाधिसम्पन्नश्चेश्वरो निहीनोपाधिसम्पन्नान् जीवान् प्रशास्तीति न किञ्चिद्विप्रतिषिध्यते। अत्राह ननु जीवेश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेनांशिन ईश्वरस्याऽपि दुःखित्वं स्यात्, यथा लोके हस्तपादाद्यन्यतमाङ्गगतेन दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वं तद्वत्। ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्, अतोऽवरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादिति। अत्रोच्यते॥

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवः संसारदुःखमनुभवति नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे। जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमिति अविद्याकृतं दुःखोपभोगमभिमन्यते नैवं परमेश्वरस्य देहाद्यात्मभावो

---

व्यत आह। निरतिशयेति। नितरां हीनः शरीराद्युपाधिः, अज्ञानिकोपाधितारतम्यादीशेशितव्यव्यवस्था, न वस्तुतः। तदुक्तं सुरेश्वराचार्यैः "ईशेशितव्यसम्बन्धः प्रत्यगज्ञानहेतुजः। सम्यग्ज्ञाने तमोध्वस्तावीश्वराणामपीश्वरः" इति। उत्तरसूत्रमवतारयति। अत्राहेति। ईश्वरः स्वांशदुःखैर्दुःखी अंशित्वात् देवदत्तवदित्यर्थः। ततः किं तत्राह। ततश्चेति। ज्ञानात् सर्वांशदुःखसमष्टिप्राप्त्यपेक्षया संसारोऽवरं तत्र स्वदुःखमात्रानुभवादित्यर्थः॥

नैवं पर इति प्रतिज्ञां विभजते। यथा जीव इति। देवदत्तदृष्टान्ते भ्रान्तिकामकर्मरूपदुःखसामग्रीमत्त्वमुपाधिः तदभावान्नेश्वरस्य दुःखित्वप्राप्तिः। वास्तवैक्ये तदभेदेऽपि बिम्बप्रतिबिम्बयोर्धर्मव्यवस्थेति भावः। दुःखस्य

दुःखाभिमानो वास्ति। जीवस्याऽपि अविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो न तु पारमार्थिकोऽस्ति। यथा च स्वदेहगतं दाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवत्यहमेव पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः। ततश्च निश्चितमेतदवगम्यते मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति। व्यतिरेकदर्शनाच्चैवमवगम्यते। तथा हि पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्सम्बन्धाभिमानिष्वितरेषु च पुत्रो मृतो मित्रं मृतमित्येवमाद्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामेव तन्निमित्तं दुःखमुत्पद्यते नाभिमानहीनानां परिव्राजकानां। अतश्च लौकिकस्याऽपि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टं किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति। तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः। प्रकाशादिवदिति निदर्शनोपन्यासः। यथा प्रकाशः सौर्यश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात् तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भा-

---

भ्रान्तिकृतत्वं प्रपञ्चयति। जीवस्यापीत्यादिना। भ्रान्तौ सत्यां दुःखमित्यन्वयमुक्त्वा भ्रान्त्यभावे दुःखाभाव। दर्शनाच्च भ्रान्तिकृतं दुःखमिति निश्चीयत इत्याह। व्यतिरेकेति। इतरेष्वभिमानशून्येष्वित्यर्थः। जीवस्याऽपि सम्यग्ज्ञाने दुःखाभावो दृष्ट किमु वाच्य नित्यसर्वज्ञेश्वरस्येत्याह। अतश्चेति। एवमंशत्वे हेतौ सोपाधित्वमुक्त्वा योऽंशी स

वमिव प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते, यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा चोदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते, एवमविद्या-प्रत्युपस्थापिते बुद्ध्याद्युपाध्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते । जीवस्याऽपि दुःखप्राप्तिरविद्यानिमि-त्तैवेत्युक्तं । तथाचाविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः 'तत्त्वमसि' इत्येवमादयः, तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः ॥

स्मरन्ति च ॥ ४७ ॥

स्मरन्ति च व्यासादयः यथा जैवेन दुःखेन न परमात्मा दुःखायते इति ।

"तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चाऽपि पद्मपत्रमिवाम्भसा ॥
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते पुनः" ॥ इति ।

---

वस्तुतः स्वांशधर्मवानिति व्याप्तिस्थलत्रये व्यभिचारयति । प्रकाशादिव-दिति । वस्तुतः स्वांशदुःखित्वसाध्यस्य देवदत्तदृष्टान्ते वैकल्यमप्याह । जीवस्येति । कल्पितदुःखित्वसाध्यन्तु भ्रान्त्याद्यभावादीश्वरे नास्तीत्युक्तं, तस्य जीवस्येश्वरस्य वा वस्तुतो दुःखित्वानुमानं न युक्तं आगमबाधा-दित्याह । तथा चेति । दुःखित्वे तद्भावोपदेशो न स्यादित्यर्थः ।

स्मृत्याप्यनुमानं बाध्यमित्याह । स्मरन्ति चेति । सूत्रं व्याचष्टे । स्मर-न्तीति । तत्र जीवपरयोर्मध्ये कर्मात्मा कर्माश्रयो जीवः । दशेन्द्रियाणि

च शब्दात् समामनन्ति चेति वाक्यशेषः। 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति च। अत्राह यदि तर्हि एक एव सर्वेषां भूतानामन्तरात्मा स्यात् कथमनुज्ञापरिहारौ स्यातां लौकिकौ वैदिकौ वेति। ननु चांशो जीव ईश्वरस्येत्युक्तं तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते किमत्र चोद्यते इति। उच्यते नैतदेवं, अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'नान्योऽतोऽस्ति द्रष्टा' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्येवंजातीयिकाः। ननु भेदाभेदावगमाभ्यामंशत्वं सिध्यतीत्युक्तं। स्यादेतदेवं यद्युभावपि भेदाभेदौ प्रतिविपादयिषितौ स्यातां, अभेद एव तत्र प्रतिपिपादयिषितः, ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः। स्वभावप्राप्तस्तु भेदोऽनूद्यते। न च निरवयवस्य ब्रह्मणो मुख्योऽंशो जीवः सम्भवतीत्युक्तं,

---

पञ्च प्राणाः मनो बुद्धिश्चेति सप्तदशसङ्ख्याको राशिर्लिङ्गं। सूत्रे चशब्दः श्रुतिसमुच्चयार्थ इत्याह। चशब्दादिति। यथाऽऽदित्य प्रकाश्यदोषैर्न लिप्यते तथेत्यर्थः। यतो बाह्योऽसङ्ग तस्मात् न लिप्यते, एवमंशित्वहत- मीश्वरे दोषं निरस्यांश इत्युक्तं जीवस्याशत्व देहाद्युपाधिकमिति स्फुटयितुमत्यन्तस्वरूपैक्यमादायाक्षिपति। अत्राहेत्यादिना। कथं तर्हि इत्यन्वयः। तद्भेदादंशभेदात्। निरवयवब्रह्मणो मुख्यांशेन सम्भव- तीति वदता सिद्धान्तिना भेदो नास्तीत्युक्तं भवति, भेदाभावे चांशांशित्वाभावादनुज्ञादिभेदाव्यवहारानुपपत्तिरित्याक्षेपाभिप्रायः। न वयं भेदस्यासत्त्वं नरशृङ्गवत् ब्रूमः, किन्तु मिथ्यात्वं वदामः। तथा च

तस्मात् पर एव एकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्यानुज्ञापरिहारोपपत्तिः, तां ब्रूमः ॥

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

ऋतौ भार्यामुपेयादित्यनुज्ञा, गुर्वङ्गनां नोपगच्छेदिति परिहारः, तथाऽग्नीषोमीयं पशुं सञ्ज्ञपयेदित्यनुज्ञा, मा हिंस्यात् सर्वा भूतानीति परिहार । एवं लोकेऽपि मित्रमुपसेवितव्यमित्यनुज्ञा, शत्रुः परिहर्तव्य इति परिहारः, एवम्प्रकारावनुज्ञापरिहारावेकत्वेऽप्यात्मनो देहसम्बन्धात् स्यातां। देहैः सम्बन्धो देहसम्बन्धः। कः पुनर्देहसम्बन्धः। देहादिरयं सङ्घातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च सा सर्वप्राणिनां अहं गच्छाम्यहमागच्छामि अहमन्धोऽहमनन्धोऽहं मूढोऽहममूढ इत्येवमात्मिका। न ह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति। प्राक् तु सम्यग्दर्शनात् प्रततैषा भ्रान्तिः *सर्वजन्तूनां। तदेवमविद्यानिमित्तदेहाद्युपाधिसम्बन्धकृताद्विशेषादैकात्म्याभ्युपगमेऽपि अनुज्ञापरिहाराववकल्प्येते, सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तं न तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः।

---

देहाद्युपाधिभेदेनाज्ञजीवानामाब्रह्मबोधात् कल्पितभेदाद्विद्व्यवहारोपपत्तिरिति सूत्रेण समाधत्ते। तामित्यादिना ॥

ननु भ्रान्तेः कुतश्चिन्निवृत्तौ व्यवहारविच्छेदः स्यादित्यत आह। न ह्यस्या इत्यादिना। प्रतता सन्तता, विशेषो भेदः, अनियोज्यत्वाद्ब्रह्मविदः। शास्त्रानर्थक्यमिष्टमित्याह। न तस्येति। नियोगविषय-

---

* सर्वजन्तुष्विति वर्ध० का०।

हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्, आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन् कथं नियुज्येत, न ह्यात्माऽऽत्मन्येव नियोज्यः स्यात्। शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेन्न तत्संहतत्वाभिमानात्। सत्यं व्यतिरेकदर्शिनो नियोज्यत्वं तथापि व्योमादिवद्देहाद्यसंहतत्वमपश्यत एवात्मनो नियोज्यत्वाभिमानः। न हि देहाद्यसंहतत्वदर्शिनः *कस्यचिदपि नियोगो दृष्टः किमुतैकात्म्यदर्शिनः। न च नियोगाभावात् सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः, सर्वत्राभिमानस्यैव प्रवर्तकत्वात्, अभिमानाभावाच्च सम्यग्दर्शिनः, तस्माद्देहसम्बन्धादेवानुज्ञापरिहारौ ज्योतिरादिवत्। यथा ज्योतिष एकत्वेऽपि अग्निः क्रव्यात् परिह्रियते नेतरः, यथा च प्रकाश एकस्यापि सवितुरमेध्यप्रदेशसम्बन्धः परिह्रियते नेतरः शुचिभूमिष्ठः, तथा भौमाः प्रदेशा वज्र-

---

द्वैताभावादात्मन्यसाध्ये नियोगानुपपत्तेर्न ब्रह्मविन्नियोज्य इत्यर्थः। नन्वामुष्मिकफलहेतुके कर्मणि देहभिन्नात्मविवेकिन एवाधिकारो वाच्यः, तथा च ब्रह्मविन्नियोज्यो विवेकित्वात् कर्माधिकारिवदिति शङ्कते। शरीरव्यतिरेकेति। परोक्षविवेकस्यापरोक्षभ्रमाविरोधित्वात् कर्मिणो देहाभेदभ्रमोऽस्ति, तथा च भ्रम उपाधिरिति परिहरति। नेत्यादिना। यथा व्योम देहाद्भिन्नं तद्वदहमित्यपश्यतः भ्रान्तस्येत्यर्थः। ब्रह्मविन्नियोज्यः अभ्रान्तत्वात् सुषुप्तवदित्याह। न हीति। देहादिष्वसंहतत्वदर्शिनः संहतत्वदर्शनशून्यस्य भेदभ्रान्तिरहितस्य सुषुप्तस्येति यावत्। अज्ञस्याऽपि भ्रान्त्यभावकाले नियोज्यत्वं न दृष्टं किमु वाच्यमात्मविद इत्यर्थः। अनियोज्यत्वे बाधकमाशङ्क्य परिहरति। न चेति। विषयवैराग्यस्य ज्ञानार्थमभ्यस्तस्य ज्ञानान्तरमनुवृत्त्या विषयेषु प्रवर्तकरागनिवृत्तेर्नातिप्रसङ्ग इत्यर्थः। यदुक्तं भगवता 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति। एवमनुज्ञादिप्रसङ्गेनानियोज्यत्वं विदुष उक्त्वा प्रकृत-

---

* कस्यचिदपीति वर्ध०।

वैदूर्यादयः उपादीयन्ते, भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते, तथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते, तदेव जात्यन्तरे परिवर्ज्यते तद्वत्॥

असन्ततेश्चाव्यतिकरः॥ ४९॥

स्यातां नामानुज्ञापरिहारावेकस्याप्यात्मनो देहविशेषयोगात्। यस्त्वयं कर्मफलसम्बन्धः स चैकात्म्याभ्युपगमे व्यतिकीर्येत स्वाम्येकत्वादिति चेत्, नैतदेवं, असन्ततेः। न हि कर्तुर्भोक्तुश्चात्मनः सन्ततिः सर्वैः शरीरैः सम्बन्धोऽस्ति। उपाधितन्त्रो हि जीव इत्युक्तं, उपाध्यसन्तानाच्च नास्ति जीवसन्तानः, ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति॥

आभास एव च॥ ५०॥

आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत् प्रतिपत्तव्यः, न स एव साक्षान्नापि वस्त्वन्तरं। अतश्च यथा

---

मुपसंहरति। तस्मादिति। एकस्याप्युपाधिभेदात् अनुज्ञापरिहारयो र्दृष्टान्तमाह। ज्योतिरिति। क्रव्यं मांसमत्तीति क्रव्यादशुचिः श्मशानाग्निरित्यर्थः॥

शङ्कोत्तरत्वेन सूत्रं व्याचष्टे। स्यातामित्यादिना। यद्यपि स्थूलदेहसम्बन्धादुपादानपरित्यागौ स्यातां तथाप्यन्यकृतकर्मफलमितरेणापि भुज्येतेति कर्मफलव्यतिकरः साङ्कर्यं स्यादिह विभिन्नस्य स्वर्गादिभोगायोगेनाविभिन्नस्यात्मन एकस्यैव भोक्तृत्वात्। तस्मात् स्वर्गी नरकी चेति व्यवस्थासिद्धये आत्मस्वरूपभेदो वाच्य इति शङ्कार्थः। भवेत्तदा साङ्कर्यं यद्यनुपहितात्मन एव भोक्तृत्वं स्यान्न त्वेतदस्ति। तद्गुणसारत्वादित्यत्र मोक्षस्यापि, बुद्ध्युपहितस्यैव कर्तृत्वादिस्थापनात्, तथा च बुद्धेः परदेहासम्बन्धात् तदुपहितजीवस्य नास्ति परदेहसम्बन्ध इति बुद्धिभेदेन भोक्तृभेदान्न कर्मादिसाङ्कर्यमिति समाधानार्थः॥

नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते,
नैकस्मिन् जीवे कर्मफलसम्बन्धिनि जीवान्तरस्य तत्सम्ब
एवमव्यतिकर एव कर्मफलयोः आभासस्य चाविद्याकृतत
तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति तद्व्युदासेन
पारमार्थिकस्य *ब्रह्मात्मभावस्योपदेशोपपत्तिः। येषान्तु ब
आत्मानस्ते च सर्वे सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति। क
बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशया
तदर्थं साधारणं प्रधानं तन्निमित्तैषां भोगापवर्गसिद्धिरि
साङ्ख्याः। सति बहुत्वे विभुत्वे च घटकुड्यादिसमानाः द्रव्यमा

---

अंशेत्याद्यसूत्रे जीवस्यांशत्वं घटाकाशस्येवोपाध्यवच्छेदबुद्ध्योक्तं स
म्प्रति एवकारेणावच्छेदपक्षारुचिं सूचयन् रूपं रूपं प्रतिरूपो
बभूवेत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षमुपन्यस्यति भगवान् सूत्रकारः
आभास एव चेति। स परमात्मैवानुपहितो जीवो न भवति
उपाध्यनुभवात् नापि ततो भिन्नः, स एष इह प्रविष्ट इत्याद
भेदश्रुतिस्मृतिविरोधात्, तस्मादविद्यातत्कार्यबुद्ध्यादिप्रतिबिम्ब ए
जीव इत्यर्थः। अस्मिन् पक्षे बुद्धिप्रतिबिम्बभेदात् स्वर्गी नरकीत्यादि
व्यवस्था जीवस्याविद्यकत्वाद्विद्यया मोक्षश्चेत्युपपद्यत इत्याह। अतश्चे
त्यादिना। यस्त्वयं भास्करस्य प्रलापः प्रतिबिम्बस्य नोपाधिसंसृष्टतया
कल्पितत्वं किन्तु स्वरूपेणैव, अतः कल्पितप्रतिबिम्बस्य मुक्तौ स्थित्ययो-
गात् न जीवत्वं इति स सिद्धान्तरहस्याज्ञानकृत इत्युपेक्षणीयः। यदि
दर्पणे मुखं शुक्तौ रजतवत् कल्पितं स्यात् तदा नेदं रजतमिति स्वरू-
पबाधवन्नेदं मुखमिति बाध्यं स्यात्, अतो नास्ति दर्पणे मुखमिति सं-
सर्गमात्रबाधान्मदीयं मुखमेवेदमित्यबाधितमुखाभेदानुभवात् संसृष्ट-
त्वेनैव कल्पितत्वं प्रवेशवाक्यैश्चाविकृतब्रह्मण एव प्रतिबिम्बभावाख्य-
प्रवेशोक्तेर्न स्वरूपकल्पना, यदाक्रान्तं चात्र दर्पणटीकायामाचार्यैरित्यु-

---

* ब्रह्मभावस्येति पर्भे॰।

स्वरूपाः स्वतोऽचेतना आत्मानस्तदुपकरणानि चाणूनि मनांसि अचेतनानि तत्रात्मद्रव्याणां मनोद्रव्याणां च संयोगान्न वेच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते, ते चाव्यतिकरेण प्रत्येकमात्मसु समवयन्ति, स संसारस्तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः। तत्र साङ्ख्यानां तावच्चैतन्यस्वरूपत्वात् सर्वात्मनां सन्निधानाद्यविशेषाच्च एकस्य सुखदुःखसम्बन्धे सर्वेषां सुखदुःखसम्बन्धः प्राप्नोति। स्यादेतत् प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वात् व्यवस्था भविष्यति। अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात्, तथा चानिर्मोक्षः प्रसज्येतेति। नैतत्सारं। न ह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुं, उपपत्त्या तु कयाचित् व्यवस्थोच्येतासत्यां पुनरुपपत्तौ कामं माभूदभिलषितं पुरुषकैवल्यं, प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः, काणादाना-

---

परम्यते। एवं स्वमते स्वरूपैक्येऽप्युपहितजीवभेदादसाङ्कर्यमुक्तं, सम्प्रति सूत्रे चकारसूचितं परेषां साङ्कर्यं वक्तुमुपक्रमते। येषामित्यादिना। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना नवात्मविशेषगुणाः, सन्निधानादित्यादिपदादौदासीन्यमुक्तं। साङ्ख्यः स्वाभिप्रायं शङ्कते। स्यादेतदिति। सर्वथा पुंसां प्रकृतिसान्निध्याद्यविशेषेऽपि प्रकृतिरेव प्रतिपुरुषं नियमेन भोगापवर्गार्थं प्रवर्त्तते, तथा चोद्देश्यपुरुषार्थनियता प्रधानप्रवृत्तिरिति भोगादिव्यवस्था, अन्यथा नियमप्रवृत्त्यनङ्गीकारे स्वमाहात्म्यख्यापनार्था प्रधानस्य प्रवृत्तिरित्युद्देश्यविघातः स्यादित्यर्थः। जडप्रधानस्योद्देश्यविवेकाभावात् पुरुषार्थस्याप्यनागतस्याचेतनस्यानियामकत्वान्न व्यवस्था मानयुक्तिशून्यत्वादित्याह। नैतदिति। यो हि नियामकाभावेनोद्देश्यविघातमापादयति तं प्रति तस्यैवापादनमिष्टमिति भावः। तार्किकमतेऽपि भोगादिसाङ्कर्यमित्याह। काणादाना-

मपि यदैकेनात्मना मनः संयुज्यते तदात्मान्तरैरपि नान्तरीयकः संयोगः स्यात् सन्निधानाद्यविशेषात्, ततश्च हेत्वविशेषात् फलाविशेष इत्येकस्यात्मनः सुखदुःखसंयोगे सर्वात्मनामेव समानसुखदुःखत्वं प्रसज्येत। स्यादेतत् *अदृष्टनिमित्तो नियमो भविष्यतीति, नेत्याह॥

अदृष्टानियमात्॥ ५१॥

बहुष्वात्मसु †आकाशवत् सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण सन्निहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणं अदृष्टमुपार्ज्यते। साङ्ख्यानां तावत्तदनात्मसमवायिप्रधानवर्तिप्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते। काणादानामपि पूर्ववत् साधारणेन आत्ममनःसंयोगेन निर्वर्त्तितस्यादृष्टस्यापि, अस्यैवात्मन इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः। स्यादेतत् अहमिदं फलं प्राप्नवानीदं परिहराणि इत्थं प्रयते इत्थं करवाणीत्येवंविधा अभिसन्ध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति, नेत्याह॥

---

मिति। हेतुर्मनःसंयोगः, फलं सुखादि, यदात्माद्दष्टकृतो यो मनःसंयोगः स तदात्मन एव सुखादिहेतुरिति व्यवस्थां प्रङ्क्ते। स्यादेतदिति। सूत्रेण परिहरति। नेत्याहेति॥

पूर्ववत् मनःसंयोगवत्, अदृष्टस्याऽपि सर्वात्मसाधारण्यात् न व्यवस्थेत्यर्थः। रागादिनियमात् तज्जादृष्टनियम इत्याशङ्क्योत्तरत्वेन सूत्रं गृह्णाति। स्यादेतदित्यादिना॥

---

* अदृष्टनियत इति वर्ध०। † आकाशवदिति वर्ध० नास्ति।

## अभिसन्ध्यादिष्वपि चैवं ॥ ५२ ॥

अभिसन्ध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसन्निधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

अथोच्येत विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्ने एवात्मप्रदेशे भविष्यति, अतः प्रदेशकृता व्यवस्थाऽभिसन्ध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति। तदपि नोपपद्यते, कस्मात् अन्तर्भावात्। विभुत्वाविशेषाद्धि सर्व एवात्मनः सर्वशरीरेष्वन्तर्भवन्ति। तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः। कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति। शरीरमपि सर्वात्मसन्निधावुत्पद्यमानमस्यैवात्मनो नेतरेषामिति न नियन्तुं शक्यं। प्रदेशविशेषाभ्युप-

---

अनियमः उक्तदोषः, आत्मान्तरप्रदेशस्य परदेहे अन्तर्भावात् व्यवस्थेति सूत्रार्थः ॥

किं मनसा संयुक्तस्सैवात्मनः प्रदेशः उत कल्पितः। आद्ये सर्वात्मनां सर्वदेहेषु अन्तर्भाव इति व्यवस्था। द्वितीयं दूषयति। तत्र न वैशेषिकैरिति। सर्वात्मसान्निध्ये सति कस्यचिदेव प्रदेशः कल्पयितुमशक्य नियामकाभावादित्यर्थः। प्रदेशकल्पनामङ्गीकृत्याह। कल्प्येति। कार्यमभिसन्ध्यादिकं यस्यात्मनो यच्छरीरं तत्र तस्यैव भोग इति व्यवस्थामाशङ्क्याह। शरीरमपीति। प्रदेशपक्षे दोषान्तरमाह। प्रदेशेति। यस्मिन्नात्मप्रदेशेऽदृष्टोत्पत्तिः स किं चलः स्थिरो वा, नाद्य अचलेऽप्यंशस्य चलनविभागयोरसम्भवादनात्मधर्मादापाताच्च। द्वितीये तस्मिन्नेव प्रदेशे परस्याऽपि भोगदर्शनाददृष्टमर्जयितेनापि शरीरेण द्वयोरात्मनोर्भोगप्रसङ्गः। यद्यात्म-

गमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदे-
केनैव तावच्छरीरेणोपभोगसिद्धिः स्यात्, समानप्रदेशस्यापि
द्वयोरात्मनोरदृष्टस्य सम्भवात्। तथा हि देवदत्तो यस्मिन्
प्रदेशे सुखदुःखमन्वभूत् तस्मात् प्रदेशादपक्रान्ते तच्छरीरे
यज्ञदत्तशरीरे च तं देशमनुप्राप्ते तस्यापीतरेण समानः
सुखदुःखानुभवो दृश्यते स न स्यात् यदि देवदत्तयज्ञदत्त-
योः समानप्रदेशमदृष्टं न स्यात्, स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदे-
शवादिनः स्यात्, ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदे-
शान्तरवर्तित्वाच्च। स्वर्गाद्युपभोगस्य सर्वगतत्वानुपपत्तिश्च बहूना-
मात्मनां दृष्टान्ताभावात्। वद तावत् त्वं के बहवः समानप्रदे-

---

भेदात् प्रदेशयोर्भेदः तदापि तयोरेकदेहान्तर्भावाद्भोगसाङ्कर्यं तदवस्थं
सावयवात्मवादप्रसङ्गश्च। किञ्च यत्र यत्रात्मन प्रदेशे शरीरादिसंयो-
गाददृष्टमुत्पन्न तत्तत्रैवाचलप्रदेशे स्थितमिति स्वर्गादिशरीरावच्छि-
न्नात्मन्यदृष्टाभावात् भोगो न स्यात्, अत प्रदेशभेदो न व्यवस्थापक।
यत्तु स्वनोत्पन्नमदृष्टं स्वाश्रये यत्र क्वचित् भोगहेतुरिति स्वर्गादिभोग-
सिद्धिरिति, तन्न भोगशरीरात् दूरस्थादृष्टे मानाभावादिति भाव।
यदपि केचिदाहुः मनस एकत्वेऽप्यात्मना भेदेन संयोगव्यक्तीना
भेदात् कयाचित् संयोगव्यक्त्या कस्मिंश्चिदेवात्मन्यदृष्टादिकमित्यसाङ्कर्य-
मिति, तन्न संयोगव्यक्तीना वैजात्याभावेन सर्वासामेवैकदेहान्त सर्वा-
त्मस्वदृष्टहेतुत्वापत्ते, तथाच सर्वात्मना एकस्मिन देहे भोक्तृत्वं दुर्वारं।
किञ्च बहूना विभुत्वमङ्गीकृत्य साङ्कर्यमुक्त सम्प्रति कर्तॄणां विभुत्वम-
सिद्धमहमिहैवास्मि इत्यल्पत्वानुभवात् मानाभावाच्चेत्याह। सर्वगत-
त्वानुपपत्तिश्चेति। किञ्च बहूना विभुत्वे समानदेशत्व वाच्य तच्चायुक्तं
दृष्टत्वादित्याह। वदेति। ननु रूपरसादीनामेकघटस्थत्व दृष्टमिति
चेत् नायमस्मत्सम्मतो दृष्टान्त। रूपस्य तेजोमात्रत्वाद्रसस्य जलमात्र-
त्वात् गन्धस्य पृथिवीमात्रत्वात् इत्येवं तत्तद्गुणस्य स्वस्वधर्म्यंशेनाभेदात्

शास्त्रेति। रूपादय इति चेत् न, तेषामपि धर्म्यंशेनाभेदा-ल्लक्षणभेदाच्च न तु बहूनामात्मनां लक्षणभेदोऽस्ति अन्त्य-विशेषवशाद्भेदोपपत्तिरिति चेत् न, भेदकल्पनाया अन्त्यवि-शेषकल्पनायाश्चेतरेतराश्रयत्वात्, आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धं कार्यत्वाभ्युपगमात्, तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धं ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पादकृतौ द्वितीयस्याध्यायस्य तृतीयः पादः ॥ ✻ ॥

---

तन्त्वादिधर्म्यतिरिक्तपटाभावात्। किञ्चात्मना बहुत्वमप्यसिद्धं, आत्मत्वरूपलक्षणस्याभेदात्, तथा च देवदत्तात्मा यज्ञदत्तात्मनो न भिन्नः आत्मत्वाद्यज्ञदत्तात्मवत्। अत्र वैशेषिक शङ्कते। अन्त्यविशेषेति। नित्यद्रव्यमात्रवृत्तयो विशेषास्ते च स्वय स्वाश्रयव्यावर्तका एव न स्वेषां व्यावर्तकमपेक्षन्ते इत्यन्त्या उच्यन्ते। तथा च विशेषरूपलक्षणभेदात् भेदस्यात्मभेद इत्यर्थं। न तावदात्मन्यनात्मन सकाशाद्भेदज्ञानार्थो विशेषकल्पना आत्मत्वादेवानात्मभेदसिद्धे। नाप्यात्मना मिथो भेद-ज्ञानार्थं तत्कल्पना, आत्मभेदस्याद्याप्यसिद्धे। न च विशेषभेदकल्पना-देवात्मभेदकल्पना युक्ता आत्मभेदज्ञानावात्मसु विशेषभेदसिद्धिस्तत्सि-द्धौ तत्सिद्धिरित्यन्योन्याश्रयादिति परिहारार्थं। यत्तु बहूना विभुत्वे आकाशदिक्कालदृष्टान्त इति सोऽप्यसम्मत इत्याह। आकाशादीना-मिति। विभुत्वस्यैकवृत्तित्वे लाघवान्न विभुभेद। यथैकस्मिन्नाकाशे भेरीवीणादिभेदेन तारमन्दादिशब्दव्यवस्था एवमेकस्मिन्नप्यात्मनि बुद्ध्युपाधिभेदेन सुखादिव्यवस्थोपपत्तेरात्मभेदेऽपि व्यवस्थानुपपत्ते रुक्तत्वान्मुधा भेदकल्पनेत्युपसंहरति। तस्मादिति। एवम्भूतभोक्तृ-श्रुतीना विरोधाभावात् ब्रह्मण्यद्वये समन्वय इति सिद्ध॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीगोविन्दानन्दभगवत्पाद-कृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां द्वितीयाध्यायस्य तृतीय पाद । ✻ ।

ॐ परमात्मने नमः।

---

## तथा प्राणाः ॥ १ ॥

वियदादिविषयः श्रुतिविप्रतिषेधः तृतीयेन पादेन परिहृतः, चतुर्थेनेदानीं प्राणविषयः परिह्रियते। तत्र तावत् 'तत्तेजोऽसृजत' इति, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति चैवमादिषूत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्नाम्नायते। क्वचिच्चानुत्पत्तिरेवैषामाम्नायते 'असद्वा इदमग्र आसीत् तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रे सदासीत् तदाहुः के ते ऋषय इति प्राणा वा ऋषयः' इत्यत्र प्रागुत्पत्तेः प्राणानां

---

ॐ ब्रह्मणे नमः।

पूर्वाधिकरणे कर्तुः स्वरूपं विचार्य तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयति। तथा प्राणाः। भूतभोक्तृविचारानन्तरं भौतिकप्राणविचार इति हेतुहेतुमद्भावं पादयोः सङ्गतिमाह। वियदादीति। तमेव विप्रतिषेधमाह। तत्रेत्यादिना। यद्यपि प्राणानामनुत्पत्तौ एकविज्ञानप्रतिज्ञानुपपत्तेर्वियदधिकरणन्यायात्तेषामुत्पत्तिः सिध्यति तथापि प्रलये प्राणसद्भावश्रुतेः गतिकथनार्थमेतदधिकरणमित्यपौनरुक्त्यं। अत्र प्राणाः विषयाः। ते किमुत्पद्यन्ते न वेति श्रुतीनां विप्रतिपत्त्या संशये तासां समबलत्वादनिर्णय इत्यप्रामाण्यमिति पूर्वपक्षफलं, तत्र गौणत्वादिसमाधानमाह। अथ वेति। प्राणानां प्रलये सद्भावश्रुतेर्निरवकाशत्वेन बलीयस्त्वादुत्पत्तिश्रुतिर्जीवोत्पत्तिश्रुतिवद्गौणीत्यविरोध इत्यर्थः।

सद्भावश्रवणात्। अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्वे प्राणाः' इति 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नं' इति चैवमादिप्रदेशेषु। तत्र तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाच्चा-प्रतिपत्तिः प्राप्नोति, अथवा प्रागुत्पत्तेः सद्भावश्रवणाद् गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति, अत इदं पठति। तथा प्राणा इति। कथं पुनरत्र तथेत्यक्षरानुलोम्यं, प्रकृतोपमा-नाभावात्। सर्वगतात्मवक्तृत्ववादिदूषणमतीतानन्तरपादान्ते प्रकृतं तत्तावन्नोपमानं सम्भवति, सादृश्याभावात्। सादृश्ये

---

अप्रमाणपक्षवद्गौणपक्षोऽपि मुख्यसिद्धान्तिना पूर्वपक्ष एवेति ज्ञापनार्थमथवेत्युक्तं। मुख्यसिद्धान्त्याह। अत इति। तथाशब्दमाक्षिपति। कथमिति। आनुलोम्यं सामञ्जस्यमित्यर्थः। तदेव स्फुटयति, यथा दृष्टस्येति। दूष्यवत् प्राणा इत्यनुचितं। यद्यप्यदृष्टवत् प्राणा अप्यनियता इति सूत्रमन्वेति तथापि पुनरुक्तं जीववत् प्राणा नोत्पद्यन्त इति सूत्रार्थश्चेदपसिद्धान्त इत्याशयोऽर्थः। समाधत्ते। न उदाहरणेति। दृष्टान्ता दार्ष्टान्तिकसन्निहितो वाच्य इत्यङ्गीकृत्यैकवाक्यत्वेन सान्निध्यमुक्तं, सम्प्रति नायं नियमः। जैमिनिना भगवता व्यवहिताव्यवहितदृष्टान्तस्याश्रितत्वादित्याह। अथ वेति। अस्ति तृतीयाध्यायेऽप्रतिग्रहेष्ट्यधिकरणं, तत्रेदं विषयवाक्यं, "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेद्" इत्येतदुत्तराधिकरणे किमिष्टं वारुणीष्टिर्दातुरुत प्रतिग्रहीतुरिति विषये प्रतिगृह्णीयादिति श्रुतेः प्रतिग्रहीतुरित्याशङ्क्य प्रजापतिर्वरुणायाश्वमनयदि-

हि सत्युपमानं स्यात्, यथा सिंहस्तथा बलवर्मेति। अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत, यथा अदृष्टस्य सर्वात्मसन्निधावुत्पद्यमानस्यानियतत्वं, एवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वमिति, तदपि देहानियमेनैवोक्तत्वात् पुनरुक्तं भवेत्। न च जीवेन प्राणा उपमीयेरन्, सिद्धान्तविरोधात्। जीवस्य ह्यनुत्पत्तिराख्याता प्राणानां तूत्पत्तिराचिख्यासिता। तस्मात् तथेत्यसम्बन्धमेतत् प्रतिभाति। न, उदाहरणोपात्तेनाप्युपमानेन सम्बन्धोपपत्तेः। अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणं 'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि च व्युचरन्त्येवंजातीयकं। तत्र यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते तथा प्राणा* अपीत्यर्थः।

---

त्युपक्रमे दातृकीर्तनात् लिङ्गादश्वदातुरेवेति व्याख्यास्यति, अतः प्रतिगृह्णीयादित्यस्य पदस्याऽश्वान् यः प्रतिग्राहयेदित्यर्थः। दद्यादिति यावत्। योऽश्वदाता स वारुणीमिष्टिं कुर्यादिति वाक्यार्थे स्थिते चिन्ता, अश्वदाननिमित्तेयमिष्टिः किं लौकिकेऽश्वदाने वैदिके वेति। तत्र 'न केसरिणो ददाति' इति निषिद्धलौकिकाश्वदाने दोषसम्भवात् तन्निरासार्थेयमिष्टिरिति दोषाच्चेष्टिर्लौकिके स्यादिति सूत्रेण प्राप्ते सिद्धान्तः। 'यत्र हि वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इति दातुर्दोषं सङ्कीर्त्येष्टिर्विहिता। वरुणशब्दो जलोदराख्यरोगरूढः। न च लौकिकेऽश्वदानेऽयं दोषो भवति इति प्रसिद्धं। न चानेनैव वाक्येन प्रसिद्धिः। दाने दोषस्तन्निरासार्था चेष्टिरित्यर्थभेदे वाक्यभेदात्। न च वृणोति इति व्युत्पत्त्या वरुणशब्दो निषेधातिक्रमकृतदोषानुवादक इति युक्तं, रूढियोगापातात्। तत्त्यागे च वैदि-

* प्राण इव इति वर्ध॰ का॰।

तथा एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्येवमादिष्वपि खादिवत् प्राणानामुत्पत्तिरिति द्रष्टव्यं। अथवा पानव्यापच्च तद्वदित्येवमादिषु व्यवहितोपमानसम्बन्धस्याप्याश्रितत्वात् यथातीतानन्तरपादाद्युक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगतास्तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योजयितव्यं। कः पुनः प्राणानां विकारत्वे हेतुः, श्रुतत्वमेव। ननु केषुचित् प्रदेशेषु न प्राणानामुत्पत्तिः श्रूयत इत्युक्तं, तदयुक्तं, प्रदेशान्तरेषु श्रवणात्। न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते, तस्माच्छ्रुतत्वाविशेषादाकाशादिवत् प्राणा अपि उत्पद्यन्त इति सूक्तं॥

---

कोऽपि दानेऽश्वत्यागजन्यदुःखं प्रागुक्तव्युत्पत्त्या प्रकृतोत्यनुवदितुं, तस्मात् प्राप्तानुवाद्यर्थवादोऽयमिति यज्ञसम्बन्धिन्यश्वदाने इयमिष्टिरित्येवं विचार्योक्तं। पानव्यापच्च तद्वदिति। सोमपाने क्रियमाणे व्यापद्वमनं यदि स्यात् तदा एतं सौमेन्द्रं श्यामाकचरुं निर्वपेदिति श्रूयते। तत्राऽश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षन्यायो बहुसूत्रव्यवहितस्तद्वदिति परामृश्यते, तद्वल्लौकिके धातुसाम्यार्थं पीतसोमस्य वमनेऽयं चरुः स्याद्वमननिमित्तेन्द्रियशोषाख्यदोषस्य इष्टम्येन्द्रियेण वीर्येण बाध्यते, यः सोमं वमतीत्यनुवादादिति पूर्वपक्षसूत्रार्थः। वैदिके तु सोमपाने श्रेयःप्रतिपत्तेर्जातत्वाद्वमनेऽपि न दोष इति प्राप्ते सिद्धान्तः। लोके वमनहेतेन्द्रियशोषस्य धातुसाम्यकरत्वेन गुणत्वान्न दोषता, वेदे तु मा मे वाङ्नाभिमतिगा इति सम्यग्जरणार्थमन्त्रलिङ्गाद्वमने कर्मवैगुण्यात् तस्य दोषता। तस्माद्वैदिकसोमवमने सौमेन्द्रश्चरुरिति स्थितमित्येवमादिषु सूत्रेष्वित्यर्थः।

## गौण्यसम्भवात्॥ २ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणात् गौणी प्राणानामुत्पत्तिरिति तत्प्रत्याह। गौण्यसम्भवादिति। गौण्या असम्भवो गौण्यसम्भवः। न हि प्राणानामुत्पत्तिश्रुतिर्गौणी सम्भवति, प्रतिज्ञाहानिप्रसङ्गात्। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्साधनार्थमिदमाम्नायते 'एतस्माज्जायते प्राणः' इत्यादि। सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतः ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात् सिध्यति, गौण्यान्तु प्राणानामुत्पत्तिश्रुतौ प्रतिज्ञेयं हीयेत। तथा च प्रतिज्ञातार्थमुपसंहरति 'पुरुष एवेदं विश्वं* तपो ब्रह्म परामृतं' इति, 'ब्रह्मैवेदं विश्व-

ननु प्रतिज्ञाऽपि गौणी किं न स्यात् इत्यत आह। तथा च प्रतिज्ञातार्थमिति। उपक्रमोपसंहाराभ्यां प्रतिपिपादयिषिता हि-
प्रतिज्ञातार्थमिति। उपक्रमोपसंहाराभ्यां प्रतिपिपादयिषिता हि- प्रतिज्ञा मुख्यैवेति भाव। मुण्डकवत् श्रुत्यन्तरीयत्वप्रतिज्ञानुरोधेन प्राणोत्पत्तिर्मुख्यैवेति भाव। मुण्डकवत् श्रुत्य-
तीयत्वप्रतिज्ञानुरोधेन प्राणोत्पत्तिर्मुख्यैवेति भाव। मुण्डकवत् श्रुत्य-
न्तरेऽपि प्रतिज्ञादर्शनात् सा मुख्येत्याह। तथेति। एषा प्रतिज्ञा प्रा-
णोत्पत्तिमुख्यत्वे हेतुत्वेन द्रष्टव्येत्यर्थः। इदानीं प्रलये प्राणसत्त्वश्रुतेर्गतिं
प्रश्नपूर्वकमाह। कथमित्यादिना। नेदं वाक्यं महाप्रलये परमका-
रणस्य ब्रह्मणः प्राणवत्त्वपरं किन्त्ववान्तरप्रलये हिरण्यगर्भाख्यावा-
न्तरप्रकृतिरूपप्राणसद्भावपरमित्यर्थः। ननु हिरण्यगर्भरूपविका-
रस्य सत्त्वे कथं तदा विकारासत्त्वकथनं तत्राह। स्वविकारेति। स्वस्य
कार्यब्रह्मणो यत् कार्यं स्थूलं तस्योत्पत्तिरित्यर्थः। ननु यथाश्रुति महा-
प्रलये प्राणसद्भावरूपं लिङ्गं प्राणानुत्पत्तिसाधकं किमित्यवान्तरप्र-

* कर्म्म तप इति वर्ध० का०।

मिदं वरिष्ठं' इति च। तथा 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं' इत्येवंजातीयकासु श्रुतिषु एषैव प्रतिज्ञा योजयितव्या। कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणं, नैतन्मूलप्रकृतिविषयं, 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः' इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात्। अवान्तरप्रकृतिविषयस्त्वेतत् स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यं, व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः। वियदधिकरणे हि गौणसम्भवादिति पूर्वपक्षसूत्रत्वात् गौणी जन्मश्रुतिरसम्भवादिति व्याख्यातं। प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः। इह तु सिद्धान्तसूत्रत्वात् गौण्या जन्मश्रुतेरसम्भवादिति व्याख्यातं। तदनुरोधेन त्विहापि गौणी जन्मश्रुतिरसम्भवादिति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात्॥

---

क्षयपरतया नीयत इति चेत्, एतस्माज्जायते प्राण इत्यादि प्रबलजन्मश्रुतिबलादिति वदामः। ननु विकारस्य ब्रह्मणः कथं प्रकृतित्वमित्यत आह। व्याकृतेति। 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतौ 'स आदिकर्ता स भूतानां' इत्यादि स्मृतौ च विकारात्मनामपि मूलकारणावस्थारूपाणां ब्रह्मविराडादीनां प्रकृतिविकारभावेन प्रसिद्धिरस्ति। पूर्वापेक्षया विकारस्याप्युत्तरत्वादप्रकृतित्वमित्यर्थः। केचिद्वियदधिकरणानुरोधेनेदं सूत्रं व्याचक्षते तान् दूषयति। वियदिति।

तस्य जायत इति पदस्याकाशादिषु मुख्यस्य पाठापेक्षया प्राचीनेषु प्राणेषु श्रुतेर्मुख्यं जन्मेति सूत्रयोजना। तत्सामान्यादिति। तेनाकाशादिजन्मना सामान्यमेकशब्दोपात्तं तस्मादित्यर्थः। एकस्मिन् वाक्ये

## तत् प्राक् श्रुतेः ॥ ३ ॥

इतश्चाकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः, यज्जायत इत्येकं जन्मवाचि पदं प्राणेषु प्राक् श्रुतं सदुत्तरेष्वाकाशादिष्वनुवर्तते, 'एतस्माज्जायते प्राणः' इत्यत्राकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितं, तत् सामान्यात् प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति। न ह्येकस्मिन् प्रकरणे एकस्मिन् वाक्ये एकः शब्दः सकृदुच्चरितो बहुभिः सम्बध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यं, वैरूप्यप्रसङ्गात्। तथा 'स प्राणमसृजत प्राणाच्छ्रद्धां' इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वपि उत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते। यत्रापि पश्चाच्छ्रुतः उत्पत्तिवचनः शब्दः पूर्वैः सम्बध्यते तत्राप्येष एव न्यायः, यथा सर्वाणि भूतानि व्युच्चरन्तीत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः सम्बध्यते ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' इत्येतस्मिन् प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते तेजोऽबन्नानामेव त्रयाणां भूतानां उत्पत्तिश्रवणात्,

---

एकस्य शब्दस्य क्वचिन्मुख्यत्वं क्वचित् गौणत्वमिति वैरूप्यं न युक्तमिति न्यायमन्यत्राप्यतिदिशति। यत्रापि पश्चाच्छ्रुत इति ॥

यच्चोक्तं छान्दोग्येऽपि प्राणानामुत्पत्तिर्न श्रूयत इति। तत्राह। तत्पूर्वकत्वाद्वाच इति। अत्र सूत्रे वाक्पदं प्राणमनसोरुपलक्षणं।

तथापि ब्रह्मप्रकृतिकतेजोऽबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसां तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति। तथा ह्यस्मिन्नेव प्रकरणे तेजोऽबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्' इति। तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वं ततो वर्तत एव* ब्रह्मप्रभवत्वं अथ भाक्तं तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात् 'येनाश्रुतं श्रुतं भवति' इति चोपक्रमात् 'ऐतदात्म्यमिदं सर्वं' इति चोपसंहारात् श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते। तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः॥

सप्तगतेर्विशेषितत्वाच्च॥ ५॥

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः,

---

वाक्प्राणमनसां तेजोऽबन्नपूर्वकत्वोक्तेरवयवमसिद्धमिति योजना। तैर्वागादिभिश्चक्षुरादीनां सामान्यं करणत्वं तत्सामान्यादित्यर्थः। अत्र मयड्विकारे मुख्य इति पक्षे वर्तत एव प्राणानां ब्रह्मकार्यत्वं तेजोऽबन्नानां ब्रह्मविकारत्वात्। यदि प्राणस्य वायोर्जलविकारत्वायोगात् तदधीनस्थितिकत्वमात्रेण भाक्तस्तथापि प्राणानां विकारत्वे भूताधीनस्थितिकत्वं लिङ्गं मयटोक्तमिति सिद्धं ब्रह्मकार्यत्वं 'स प्राणमसृजत' इत्यादिश्रुत्यन्तरे स्पष्टं ब्रह्मकार्यत्वोक्तेः। तस्मात् प्राणानामुत्पत्तिश्रुतीनां सद्भावश्रुत्यविरोधात् कारणे ब्रह्मणि समन्वय इति सिद्धं। लिङ्गशरीरविचारात्मकाधिकरणानां लिङ्गात् तत्त्वंपदार्थभेदधीः फलमिति द्रष्टव्यं॥

एवं जन्मलब्धसत्ताकानां प्राणानामुपजीव्योपजीवकत्वसङ्गत्या सङ्ख्यां निर्णेतुं श्रुतीनां विरोधात् संशये पूर्वपक्षयति। सप्तगतेर्विशेषित-

---

* ब्रह्मप्रकृतिकत्वमितिवर्ध० का०।

सङ्ख्याविषय इदानीं परिक्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति। सम्प्रति तु कतीतरे प्राणा इति सम्प्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः। क्वचित् सप्त प्राणाः सङ्कीर्त्यन्ते "सप्त प्राणाः प्रभवन्ति तस्मात्" इति। क्वचिदष्टौ प्राणा ग्रहत्वेन गुणेन सङ्कीर्त्यन्ते, "अष्टौ ग्रहा अष्टावतिग्रहाः" इति, क्वचिन्नव "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" इति। क्वचिद्दश "नव वै पुरुषे प्राणा नाभिर्दशमी" इति। क्वचिदेकादश "दशेमे पुरुषे प्राणा आत्मैकादशः" इति। क्वचिद्द्वादश "सर्वेषां स्पर्शानां त्वगेकायनम्" इत्यत्र। क्वचित्त्रयोदश "चक्षुश्च द्रष्टव्यञ्च" इत्यत्र। एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः, किं तावत् प्राप्तं सप्तैव प्राणा इति। कुतः गतेः, यतस्तावन्तोऽवगम्यन्ते "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्येवंविधासु श्रुतिषु। विशेषिताश्चैते "सप्त वै शीर्षण्याः प्राणाः" इत्यत्र। ननु "गुहाशया निहिताः

---

त्वाच। विशय संशय। इन्द्रियाण्येव विषय। पञ्च धीन्द्रियाणि वाङ्मन-
श्चेति सप्त प्राणास्त एव हस्तेन सहाष्टौ। ग्रहत्वं बन्धकत्वं गृह्णन्ति बध्न-
न्तीति ग्रहा इन्द्रियाणि तेषां बन्धकत्वं विषयाधीनमित्यतिग्रहा ग्रहा-
नतिक्रान्ता विषया इत्यर्थः। द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे वाक् चेति सप्त
शीर्षिभवा प्राणा द्वाववाञ्चौ पायूपस्थौ चेति नव, ज्ञानकर्मेन्द्रियाणि
दशेमे पुरुषे देहे प्राणा आत्मा मन एकादशप्राण इति सिद्धान्तको-
टिस्था एत एव हृदयाख्यया बुद्ध्या सह द्वादश। अहङ्कारेण सह
त्रयोदश, श्रुतिगत सप्तत्वावगतेर्ये शीर्षण्याः सप्त ते प्राणा इति शीर्षण्यो-
द्देशेन प्राणत्वविशेषणाच्च शीर्षण्यानां प्राणत्वशब्दता, इन्द्रियत्वपरिसङ्ख्या-
या सप्तैव प्राणा इति सूत्रयोजना। सप्तत्वं वीप्साविरुद्धमिति शङ्कते।

सप्त सप्त'' इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान् प्राणान् गमयतीति। नैष दोषः, पुरुषभेदाभिप्रायेयं वीप्सा प्रति पुरुषं सप्त सप्त प्राणा इति, न तत्त्वभेदाभिप्राया सप्त सप्तान्येऽन्ये प्राणा इति। नन्वष्टत्वादिकापि सङ्ख्या प्राणेषूदाहृता कथं सप्तैव स्युः। सत्यमुदाहृता विरोधात्त्वन्यतमा सङ्ख्याध्यवसातव्या, तत्र स्तोककल्पनानुरोधात् सप्तसङ्ख्याध्यवसानं वृत्तिभेदापेक्षञ्च सङ्ख्यान्तरश्रवणमिति गम्यते। अत्रोच्यते॥

हस्तादयस्तु स्थितेऽतो नैवं॥ ६॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते, "हस्तो वै ग्रहः स कर्म्मणातिग्रहेण गृहीतः, हस्ताभ्यां हि कर्म्म करोति" इत्येवमाद्यासु श्रुतिषु। स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते सम्भावयितुं। हीनाधिकसङ्ख्याविप्रतिपत्तौ ह्यधिका सङ्ख्या संग्राह्या भवति, तस्यां *हीनान्तर्भवति, न तु ही-

---

नन्विति। गुहाया हृदये शेरत इति गुहाशयाः। स्वस्थानेषु निहिताः निक्षिप्ता इत्यर्थः। चित्तेन चतुर्दशत्वं मन्तव्यं। पूर्वपक्षी परिहरति। नैष दोष इति। सिद्धान्तिनाप्येकादशत्वस्य मनोवृत्तिभेदान्निश्चयात्मिका बुद्धिः गर्वात्मकोऽहङ्कारः, स्मरणात्मकं चित्तं इति द्वादशादिसङ्ख्यान्तर्भावनीया। ततो वरं प्राथमिकसप्तत्वेऽन्तर्भाव· लाघवादिति प्राप्ते सिद्धान्तयति। अत्रेति॥

आदानेन कर्म्मणा गृहीतः सम्बद्ध। सम्बन्धमेवाह। हस्ताभ्यामिति। अतोऽधिकसङ्ख्याया· न्यूनायामन्तर्भावायोगात् सप्तैव प्राणाः स्युर्लाघवानुरोधादित्येवं न मन्तव्यमित्यन्वयः। तर्हि कतीन्द्रियाणी-

---

* हीनमेति का० वर्ध०।

नायामधिका, अतश्च नैवं मन्तव्यं लोककल्पनानुरोधात् सप्तैव प्राणाः स्युरिति। उत्तरसङ्ख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः "दशेमे पुरुषे प्राणा आत्मैकादश" इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते करणाधिकारात्। ननु एकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते। सत्यमुदाहृते न त्वेकादशभ्यः कार्य्यजातेभ्योऽधिकं कार्य्यजातमस्ति यदर्थं अधिकं करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदास्तदर्थानि पञ्च बुद्धीन्द्रियाणि वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्म्मभेदास्तदर्थानि च पञ्च कर्म्मेन्द्रियाणि सर्व्वार्थविषयं त्रैकाल्यवृत्ति मन एकमनेकवृत्तिकं तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते "मनो बुद्धिरहङ्कारश्चित्तञ्च" इति। तथाच श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह "एतत् सर्वं मन एव" इति। अपि च सप्तैव शीर्षण्यान् प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते, "द्वे श्रोत्रे द्वे चक्षुषी

---

त्याकाङ्क्षायामाह। उत्तरेति। श्रुतीनां मिथो विरोधे सति मानान्तरानुगृहीता श्रुतिर्बलीयसीति न्यायेन कार्य्यलिङ्गानुमानानुगृहीतैकादशप्राप्तश्रुत्यनुसारेणान्याः श्रुतयो नेया इत्यभिसन्धायाह। सत्यमिति। एकादशकार्य्यलिङ्गान्याह। शब्देति। त्रयः कालास्त्रैकाल्यं, तद्विषया वृत्तिर्यस्य तत् त्रैकाल्यवृत्ति। इन्द्रियान्तराणां वर्त्तमानमात्रग्राहित्वादतीतादिज्ञानाय मनोऽङ्गीकार्य्यमित्यर्थः। विशेषितत्वादित्युक्तं निरस्यति। अपि च सप्तेति। न च तावतामिति। आदानादीनां श्रोत्रा-

द्वे नासिके एका वाक्" इति। न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुं, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात्। तथा "नव वै पुरुषे प्राणा नाभिर्दशमी" इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण 'नाभिर्दशमी' इति वचनात्। न हि नाभिर्नाम कश्चित् प्राणः प्रसिद्धोऽस्ति, मुख्यस्य तु प्राणस्य भवति, नाभिरपि एकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते। क्वचिदुपासनार्थं कतिचित् प्राणा गण्यन्ते, क्वचित् प्रदर्शनार्थं। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किं परमाम्नानमिति विवेक्तव्य। कार्य्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थित। इयमपरा सूत्रद्वययोजना। सप्तैव प्राणाः स्युः यतः सप्तानामेव गतिः श्रूयते "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यत्र। ननु सर्वशब्दोऽप्यत्र पठ्यते कथं सप्तानामेव गतिः प्रतिज्ञायत इति, विशेषितत्वादित्याह। सप्तैव हि प्राणाश्चक्षुरादयः त्वक्पर्य्यन्ता विशे-

---

दिभ्योऽत्यन्तवैजात्यादित्यर्थ। तेषां तद्वृत्तित्वे बधिरादीनामादानादि न स्यादिति भाव'। कथं तर्हि छिद्रे प्राणशब्द. इत्याशङ्क्य व्याचष्टे-त्याह। मुख्यस्य त्विति। सप्त प्राणा प्रभवन्तीत्युपासनार्थं। अष्टौ ग्रहा इति श्रुतिस्तूपलक्षणार्था। पायूपस्थपादानामपि बन्धकत्वाविशेषादिति विवेक्तव्य। नन्विदं सूत्रयाख्यानमसङ्गतं पञ्चधीन्द्रियमात्रस्य सप्तत्वावगतिः शीर्षण्यानाञ्चतुर्णां विशेषितत्वमिति चेन्नो. वैयधिकरण्यादुक्तपरिसङ्ख्यादोषापत्तेरुपेक्षयाह। इयमपरेति। इन्द्रि-

पिताः इह प्रकृताः, स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते अथारूपज्ञो भवति एकीभवति न पश्यतीत्याहुरित्येवमादिनानुक्रमणेन। प्रकृतगामी च सर्वशब्दो भवति। यथा सर्वे ब्राह्मणा भोजिता इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते नान्ये, एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते नान्य इति। नन्वत्र विज्ञानमष्टममनुक्रान्तं कथं सप्तानामेवानुक्रमणं, नैष दोषः। मनोविज्ञानयोस्तत्त्वाभेदाद्वृत्तिभेदेऽपि सप्तत्वोपपत्तेः। तस्मात् सप्तैव प्राणा इत्येवं प्राप्ते ब्रूमः। हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते "हस्तो वै ग्रहः" इत्यादिश्रुतिषु। ग्रहत्वञ्च बन्धनभावो गृह्यते, बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति। स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य। तस्माच्छरीरान्तरसञ्चारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति। तथा च स्मृतिः "पुर्य्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च" इति। प्राङ्मोक्षाद्ग्रहसंज्ञकेनानेन बन्धनेनावियोगं

---

याणि कतीति सन्देहे पूर्वपक्षसूत्रं योजयति। सप्तेति। तं जीवात्मानं ये प्राणाः सह गच्छन्ति तेषामेव भोगहेतुत्वादिन्द्रियत्वमित्यर्थः। विपन्नावस्थायां एष चाक्षुषश्चक्षुषि स्थितोऽनुग्राहकसूर्य्यांशरूपः पुरुषः पराङ् पर्य्यावर्त्तते बहिर्देशात् स्वांशिनं सूर्य्यं प्रतिगच्छति। अथ तदानीमयं मुमूर्षुररूपज्ञो भवति देवांशे देवं प्रविष्टे लिङ्गांशचक्षुर्हृदये मनसैकीभवति तदायं न पश्यतीति पार्श्वस्था आहुरित्यर्थः। आदिपदात्र जिघ्रति न वदति न रसयते न शृणोति न मनुते न स्पृ-

दर्शयति। आथर्वणे च विषयेन्द्रियानुक्रमणे "चक्षुश्च द्रष्टव्यञ्च" इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति "हस्तौ चादातव्यञ्च उपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च" इति। तथा "दशेमे पुरुषे प्राणा आत्मैकादश' ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति" इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति। सर्वशब्दोऽपि च प्राणशब्देन सम्बध्यमानोऽशेषान् प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेव व्यवस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य च बलीयस्त्वात्। सर्वे ब्राह्मणा भोजिता इत्यत्रापि सर्वेषामेव अवनिवर्त्तिनां ब्राह्मणानां ग्रहणं न्याय्यं सर्वशब्दसामर्थ्यात्। सर्वभोजनासम्भवात् तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता, इह तु न किञ्चित् सर्वशब्दार्थसङ्कोचकारणमस्ति, तस्मात् सर्वशब्देनात्राशेषाणां प्राणानां परिग्रहप्रदर्शनार्थं सप्तानामनुक्रमणमित्यनवद्यं। तस्मादेकादशैव प्राणाः शब्दतः कार्य्यतश्चेति सिद्धं॥

---

श्रुति न विजानातीति शङ्कते। सप्तानामेव जीवेन सह गतिरित्यसिद्धं। ग्रहत्वश्रुत्या हस्तादीनामपि गतिप्रतीतेरिति सिद्धान्तयति। एवमित्यादिना। हस्तादिबन्धस्यामोक्षात् सहगतौ स्मृतिमाह। पुर्य्यष्टकेनेति। प्राणादिपञ्चकं भूतसूक्ष्मपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकं अन्तःकरणचतुष्टयमविद्या कामकर्म्म चेति पुर्य्यष्टकमात्मनो ज्ञापकत्वाल्लिङ्गं सति सम्भवे सर्वश्रुतिसङ्कोचो न युक्त इत्याह। सर्वशब्दोऽपीति। तस्मात् सप्तानां श्रुतीनामविरोधादेकादशेन्द्रियकारणं सप्ताणि समन्वय इति सिद्धं।

अणवश्च ॥ ७ ॥

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति। अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः। अणुत्वञ्चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, कृत्स्नदेहव्यापि *कार्य्यानुपपत्तिप्रसङ्गात्। सूक्ष्मा एते प्राणाः स्थूलाश्चेत् स्युः मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन् म्रियमाणस्य पार्श्वस्थैः। परिच्छिन्नाश्चैते प्राणाः सर्वगताश्चेत् स्युः उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्, तद्गुणसारत्वञ्च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्, न, वृत्तिमात्रस्य करणत्वोपपत्तेः। यदेव ह्युपलब्धिसाधनं वृत्तिः अन्यद्वा तस्यैव नः करणत्वं, तेन संज्ञामात्रे विवाद इति करणानां व्याप्तित्वकल्पना निरर्थिका, तस्मात् सूक्ष्माः परिच्छिन्नाश्चैते प्राणा इत्यध्यवस्यामः ॥

---

अणवश्च। 'प्राणाः सर्वे समाः' इति श्रुतेः' इन्द्रियाणां विभुत्वात् तेषामुत्क्रान्तिरसिद्धा किन्तु तत्तद्देहे तेषामभिव्यक्तिरूपाः प्रादेशिक्यो वृत्तयः सन्ति न तासामुत्क्रान्त्यादिरिति साङ्ख्यानामाक्षेपसत्सङ्गत्या प्राणाः किंपरिमाणा इति सन्देहे सिद्धान्तयति। अधुनेत्यादिना। उत्पत्तिसङ्ख्यानिर्णयानन्तरं परिमाणं निरूप्यत इत्यर्थः। अनुद्भूतरूपस्पर्शत्वं सूक्ष्मत्वं, परिच्छेदोऽल्पत्वं, बुद्ध्यादीनां विभुत्वे तदुपाधिकमात्मनोऽणुत्वादिकं न सिध्येदित्युक्तन्यायविरोधमाह। तद्गुणसारत्वमिति। उक्ताक्षेपमनूद्य निरस्यति। सर्वगतानामिति। आनन्त्यश्रुतेरुपासनार्थत्वान्नोत्क्रान्त्यादिश्रुतीनां तया विरोध इति सिद्धं ॥

---

* कार्यानुपपत्तीति का० वर्ध०।

## श्रेष्ठश्च ॥ ८ ॥

'मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति। नन्वविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातं, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति, सेन्द्रियमनोव्यतिरेकेणापि प्राणस्योत्पत्तिश्रवणात्, 'स प्राणमसृजत' इत्यादिश्रवणेभ्यश्च। किमर्थं पुनरतिदेशः, अधिकाशङ्कावारणार्थः। नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति, 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्च नास' इति। आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति। तस्मात् अजः प्राण इति जायते कस्यचिन्मतिः, तामतिदेशेनापनुदति। आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति। अवातमिति विशेषणात्, "अप्राणो ह्यमनाः शुभ्रः" इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात्। तस्मात्

---

श्रेष्ठश्च। अतिदेशत्वान्न सङ्गत्याद्यपेक्षा तथा प्राणा इत्युक्तन्यायोऽत्रातिदिश्यते। ननु प्राणो जायते न वेति संशयाभावादतिदेशो न युक्त इत्याक्षिपति। किमर्थमिति। निश्चितमहाप्रलये प्राणसद्भावश्रुत्याऽधिकाशङ्कामाह। नासदासीये हीति। नासदासीदित्यारभ्याधीत इत्यर्थः। तर्हि तदा प्रलयकाले मृत्युर्मारको मृत्युमत्कार्यं वा नासीदमृतं देवभोग्यं नासीत् रात्र्याः प्रकेतश्चिह्नं चन्द्रः अह्नः प्रकेतः सूर्यश्च नास्ति, स्वधया सहेत्यन्वयः, पितृभ्यो देयमन्नं स्वधा। यद्वा स्वेन धृता माया स्वधा तया सह तदेकं ब्रह्मानीदासीदिति परमार्थः। अनानीदिति तच्चेष्टा हतवदिति पूर्वपक्षार्थः। तस्माद् ब्रह्मण

कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति। श्रेष्ठ इति च मुख्यं प्राणमभिदधाति, "प्राणो वाव ज्येष्ठः श्रेष्ठश्च" इति श्रुतिनिर्देशात्। ज्येष्ठश्च प्राणः, शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात्, न चेत् तस्य तदानीं वृत्तिलाभः स्यात् योनौ निषिक्तं शुक्रं पूयेत न सम्भवेद्वा, श्रोत्रादीनान्तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वं। श्रेष्ठश्च प्राणः गुणाधिक्यात्, "न वै शक्ष्यामस्त्वदृते जीवितुम्" इति श्रुतेश्च॥

## न वायुक्रिये पृथगुपदेशात्॥ ९॥

स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते। तत्र प्राप्तं तावत् श्रुतेर्वायुः प्राण इति, एवं हि श्रूयते, 'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' इति। अथवा तन्त्रान्तरीयाभिप्रायात् सम-

---

परः परमुत्कृष्टमन्यच्च किमपि न बभूवेत्यर्थः। परिहारः सुबोधः। ननु श्रेष्ठशब्दस्य प्राणे प्रसिद्ध्यभावात् कथं सूत्रमिति तत्राह। श्रेष्ठ इति चेति। श्रुतिं व्याचष्टे। ज्येष्ठश्च प्राण इत्यादिना। पूयेत पूयं भवेत्। न सम्भवेद्गर्भो न भवेदित्यर्थः। वागादिजीवनहेतुत्वं प्राणस्य गुणः। एवमानीच्छ्रुत्यविरोधात् प्राणोत्पत्तिश्रुतीनां ब्रह्मणि समन्वय इति सिद्धं॥

इन्द्रियाणि विचार्य्य तदाधारात् प्राणं पृथक् कर्तुमुत्पत्तिरतिदिष्टा, संप्रत्युत्पन्नप्राणस्वरूपं पृथक् करोति। न वायुक्रिये पृथगुपदेशात्। मुख्यः प्राणः किं वायुमात्रं उत करणानां साधारण्या-

सकरणवृत्तिः प्राण इति इति प्राप्तं, एवं हि तन्त्रान्तरीया आचक्षते। 'सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च' इति। अत्रोच्यते। न वायुः प्राणः नापि करणव्यापारः। कुतः पृथगुपदेशात्। वायोस्तावत् प्राणस्य पृथगुपदेशो भवति, 'प्राण एव ब्रह्मणश्चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च' इति। नहि वायुरेव सन् वायोः पृथगुपदिश्यते तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक् प्राणस्यानुक्रमणात् वृत्तिवृत्तिमतोश्चाभेदात्। नहि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायु.' इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्त्तव्याः। न च समस्तानां करणानामेका वृत्तिः सम्भवति, प्रत्येकमेकैकवृत्तित्वात्, समुदायस्य चाकारकत्वात्। ननु पञ्जरचालनन्यायेन एतद्भविष्यति यथैकपञ्जरवर्त्तिनः एकादश पक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः सम्भूयैकं पञ्जरं चालयन्ति एवमेकशरीरवर्त्तिन. एकादश प्राणा. प्रत्येकं नियतवृत्तयः सन्तः सम्भूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति। नेत्युच्यते

---

पादः आहोस्वित्तत्त्वान्तरमिति वायुप्राणयोर्भेदाभेदश्रुतीनां मिथो विरोधात्। संशये पूर्वपक्षमाह। तत्रेति। द्वितीयं साङ्ख्यपूर्वपक्षमाह। अथवेति। सिद्धान्तत्वेन सूत्रमादत्ते। अत्रोच्यत इति। मनोरूपब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैश्चतुष्पात्त्वं श्रुतावुक्तं, तत्र प्राणो वायुनाधिदैविकेन भात्यभिव्यज्यते अभिध्यातः सन् तपति कार्यक्षमो

युक्तं। तत्र प्रत्येकवर्त्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः सम्भूयैकं पञ्जरं चालयेयुरिति तथा दृष्टत्वात्। इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न सम्भूय प्राण्युरिति युक्तं, प्रमाणाभावात् अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य। तथा प्राणस्य श्रेष्ठताद्युद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां न करणवृत्तिमात्रे प्राणेऽवकल्पते, तस्मादन्यो वायुक्रियाभ्यां प्राणः। कथं तर्हीयं श्रुतिः, 'यः प्राणः स वायुः' इति, उच्यते। वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते न तत्त्वान्तरं नापि वायुमात्रं, अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते। स्यादेतत्, प्राणोऽपि तर्हि जीववदस्मिन् शरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वात् गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणां। तथा हि अनेकविधा विभूतिः प्राणस्य श्राव्यते। 'सुप्तेषु वागादिषु प्राण एवैको जागर्त्ति

---

भवतीत्यर्थः। श्रुतिषु तत्र तत्र प्राणस्य वागादीनाञ्च मिथः संवादलिङ्गेन पृथगुत्पत्तिलिङ्गेन चेन्द्रियतदभिन्नव्यापारेभ्योऽपि भिन्नत्वमित्याह। तथेति। प्राणस्येन्द्रियवृत्तित्वं श्रुत्या निरस्य युक्त्यापि निरस्यति। न च समस्तानामिति। या चक्षुःसाध्या वृत्तिः सैव न श्रोत्रादिसाध्या करणानां प्रत्येकमेकैकरूपग्रहणादिवृत्तावेव हेतुत्वात्। न च समुदायस्य वृत्तिः सम्भवति तस्यासत्त्वादित्यर्थः। प्रमाणाभावादिति श्रोत्रादीनामेकप्राणनाख्यवृत्त्यनुकूलपरिस्पन्देषु मानाभावात् श्रवणादीनामपरिस्पन्दत्वेन विजातीयत्वात् परिस्पन्दरूपप्राणनानुकूलत्वादवान्तरव्यापाराभावान्न समस्तकरणवृत्तिः प्राण इत्यर्थः। किञ्च प्राणस्य वृत्तित्वे वागादीनामेव प्राधान्यं वाच्यं नैतदस्तीत्याह। तथा

प्राण एवैको मृत्युनाऽनाप्तः प्राणः संवर्गो वागादीन् संवृङ्क्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान्' इति । तस्मात् प्राणस्यापि जीववत् स्वातन्त्र्यप्रसङ्गः, तं परिहरति ॥

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुशब्दः प्राणस्य स्वातन्त्र्यं व्यावर्त्तयति । यथा चक्षुरादीनि राजप्रकृतिवत् जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतन्त्राणि तथा मुख्योऽपि प्राणो राजमन्त्रिवत् जीवस्य सर्वार्थत्वेन उपकरणभूतो न स्वतन्त्रः । कुतः तत्सहशिष्ट्यादिभ्यः तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते, प्राणसंवादादिषु समानधर्माणाञ्च सहशासनं युक्तं बृहद्रथन्तरादिवत् । आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति । स्यादेतत् यदि चक्षुरादिवत् प्राणस्य जीवं

---

प्राणस्येति । यथा मृदो घटो न वस्त्वन्तरं नापि मृण्मात्रं तद्विकारत्वात् तथा वायोर्विकारः प्राण इत्यभेदश्रुतेर्गतिमाह । उच्यत इति । देहं प्राप्य पञ्चावस्थो विकारात्मना स्थितो वायुरेव प्राण इत्यर्थः । प्राणस्य करणवृत्तित्वाभावे जीववत् भोक्तृत्वं स्यादिति शङ्कते । स्यादेतदिति ॥

प्राणो न भोक्ता भोगोपकरणत्वात् चक्षुरादिवदिति सूत्रार्थमाह । तुशब्द इत्यादिना । यथा बृहद्रथन्तरयोः सर्वत्र सहप्रयुज्यमानत्वेन सामत्वेन वा साम्यात् सहपाठस्तथा करणैः सहोपकरणत्वेन साम्यात् प्राणस्य पाठ इति न हेत्वसिद्धिरित्यर्थः । किञ्च प्राणो न भोक्ता सा-

प्रति करणभावोऽभ्युपगम्येत विषयान्तरं रूपादिवत् प्रसज्येत रूपालोचनाद्याभिर्वृत्तिभिर्यथा चक्षुरादीनां स्वं जीवं प्रति करणभावो भवति। अपि चैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः न तु द्वादशमपरं कार्यजातमवगम्यते यदर्थमयं द्वादशः प्राणः प्रतिज्ञायत इति। अत उत्तरं पठति॥

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति॥ ११॥

न तावद्विषयान्तरप्रसङ्गो दोषः, अकरणत्वात् प्राणस्य। नहि चक्षुरादिवत् प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते। न चास्यैतावता कार्याभाव एव। कस्मात्, तथा हि श्रुतिः प्राणान्तरेष्वसम्भाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति। प्राणसंवादादिषु "अथ ह प्राणा अहंश्रेयसे व्यूदिरे" इत्युपक्रम्य 'यस्मिन् व उत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति चोपन्यस्य प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्ति-

---

वयवत्वाज्जडत्वाद्भौतिकत्वाच्च देहवत्। ननु यद्भोगोपकरणं तत् सविषयं दृष्टं यथा चक्षुरादिकं, प्राणस्य तु निर्विषयत्वादसाधारणकार्याभावाच्च नोपकरणत्वमिति शङ्कते। स्यादेतदिति॥

उत्क्रान्तेः शरीरे व्यभिचाराद्देहेन्द्रियधारणोत्क्रान्त्याद्यसाधारणकार्यसत्त्वाच्च निर्विषयस्यापि प्राणस्य शरीरवद्भोगोपकरणत्वमक्षतं न तु चक्षुरादिवत् ज्ञानकर्मकरणत्वमस्ति येन सविषयत्वं स्यादिति परिहरति। न तावदित्यादिना। अहंश्रेयसे स्वस्य श्रेष्ठतानिमित्तं,

मात्रहीनं यथापूर्वं जीवनं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयित्वा प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गञ्च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति 'तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति च। एतमेवार्थं श्रुतिराह। "प्राणेन रक्षन्नवरं कुलायं" इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति। 'यस्मात् कस्माचाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति' इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति। 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठितेऽहं प्रतिष्ठास्यामीति स प्राणमसृजत' इति प्राणनिमित्ते एव जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

इतश्चास्ति मुख्यप्राणस्य वैशेषिकं कार्यं यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु 'प्राणोऽपानो व्यान उदानः स-

---

थूदिरे विवादं चक्रिरे। तद्वृत्तिमात्रहीनमिति मूकादिभावेन स्थितमित्यर्थः। अवरं नीचं, कुलायं देहाख्यं गृहं, प्राणेन रक्षञ्जीवः स्वपितीत्यर्थः। तदेव तदानीमेव, तेन प्राणेन यदश्नाति जीवः तेन प्राणकृताशनेनेति यावत्। एवश्रुतेः प्राणस्यासाधारणं कार्यमस्तीत्युक्तं॥

तत्रैव हेत्वन्तरार्थं सूत्रं व्याचष्टे। इतश्चेत्यादिना। वृत्तिरवस्था।

मानः' इति। वृत्तिभेदश्चायं कार्य्यभेदापेक्षः। 'प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा, अपानोऽवाग्वृत्तिर्निश्वासादिकर्मा, व्यानः तयोः सन्धौ वर्त्तमानो वीर्य्यवत् कर्महेतुः, उदानः ऊर्द्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयति' इति। एवं पञ्चवृत्तिः प्राणः मनोवत् यथा मनसः पञ्चवृत्तयः एवं प्राणस्यापीत्यर्थः। श्रोत्रादिनिमित्ताः शब्दादिविषयाः मनसः पञ्च वृत्तयः प्रसिद्धाः। न तु कामः सङ्कल्प इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसङ्ख्यातिरेकात्। नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसङ्ख्यातिरेकः। एवं तर्हि परमतमप्रतिषिद्धमनुमतं भवतीति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयो नाम। बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यं। जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यं॥

---

ह्यग्निमन्थनादिकं वीर्य्यवत् कर्म। कामादिवृत्तिवर्ज्जनेऽपि पञ्चत्वनियमो नास्तीत्यरुचिं स्वयमेवोद्भाव्य पक्षान्तरं गृह्णाति। नन्वत्रापीत्यादिना। प्रमायां प्रमितिः। विपर्य्ययो भ्रमः। शशविषाणादिज्ञानं विकल्पः। तामसी वृत्तिर्निद्रा। स्मृतिः प्रसिद्धा। भ्रमनिद्रयोरविद्यावृत्तित्वान्न मनोवृत्तित्वमित्यरुच्या स्वमतमाह। बह्विति। सूत्रस्यार्थान्तरमाह। जीवेति। तदेवं प्राणवाय्वोर्भेदाभेदश्रुत्योरविरोध इति सिद्धं॥

## अणुश्च ॥ १३ ॥

अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः इतरः प्राणवत्। अणुत्वञ्चेहापि सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वं, पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्। सूक्ष्मः प्राण उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात्, परिच्छिन्नस्तोत्क्रान्तिगत्यागतिश्रुतिभ्यः। ननु विभुत्वमपि प्राणस्य समाम्नायते, "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इत्येवमादिषु प्रदेशेषु। तदुच्यते, आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मना एतद्विभुत्वमाम्नायते नाध्यात्मिकेन। अपि च समः प्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्त्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोषः ॥

---

एवं मुख्यप्राणस्योत्पत्तिं स्वरूपञ्चोक्त्वा परिमाणसन्देहेऽणुत्वमुपदिशति। अणुश्चेति। अधिकाशङ्कामाह। ननु विभुत्वमपीति। प्लुषिमशकादपि सूक्ष्मो जन्तुः पुत्तिकेत्युच्यते। नागो हस्ती। प्राण उत्क्रामतीति श्रुत्याल्पत्वं प्राणस्य भाति, समोऽनेन सर्वेणेति श्रुत्या विभुत्वमिति विरोधे आध्यात्मिकप्राणस्याल्पत्वमाधिदैविकस्य विभुत्वमिति विषयभेदाच्छ्रुत्योरविरोधः इति समाधत्ते। तदुच्यत इति। किञ्चोपक्रमे प्राणस्य प्लुष्यादिसमत्वेनाल्पत्वोक्तेः सम एभिस्त्रिभिर्लोकैरिति विराड्देहसाम्यं। समोऽनेनेति सूत्रात्मत्वमिति विषयव्यवस्था सुस्थेत्याह। अपि चेति। अथवच्चैत्यत्र सर्वेऽनन्ता इति इन्द्रियानन्त्यमुपासनार्थमिति समाहितं, अत्र तु प्राणविभुत्वमाधिदैविकमिति समाधानान्तरोक्तिरपौनरुक्त्यं। अन्ये तु प्रसङ्गात्तत्र साख्याद्येपो निरस्तः अत्र तु श्रुतिविरोधो निरस्त इत्यपौनरुक्त्यमाहुः। पूर्वं प्राणस्याध्यात्मिकाधिदैविकविभागेनाप्यणुत्वविभुत्वव्यवस्थोक्ता ॥

## ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ १४ ॥

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्य्याय प्रभवन्ति आहोस्विद्देवताधिष्ठिताः प्रभवन्तीति विचार्य्यते। तत्र प्राप्तं तावद्यथा स्वकार्य्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्त्तेरन्निति। अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गात् शारीरस्य भोक्तृत्वं प्रलीयेत, अतः स्वमहिम्नैवैषां प्रवृत्तिरिति, एवं प्राप्त इदमुच्यते। ज्योतिराद्यधिष्ठानन्त्विति। तुशब्देन पूर्वपक्षो व्यावर्त्यते। ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादिकरणजातं स्वकार्य्येषु प्रवर्त्तत इति प्रतिजानीते। हेतुञ्च व्याचष्टे। तदामननादिति। तथा ह्यामनन्ति अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादि। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनाऽधिष्ठा-

---

तत्प्रसङ्गेनाध्यात्मिकानां प्राणानामाधिदैविकाधीनत्वमाह। ज्योतिराद्यधिष्ठानन्तु तदामननात्। 'वाचा हि नामान्यभिवदति चक्षुषा रूपाणि पश्यति' इति तृतीयाश्रुत्याऽन्वयव्यतिरेकवत्त्या वागादीनां निरपेक्षसाधनत्वोक्तिविरोधादग्निर्वाग्भूत्वेत्यादिश्रुतिस्तेषामचेतनाग्न्याद्युपादानकत्वपरा न तु तेषामधिष्ठातृदेवतापरा। न च स्वकार्य्ये शक्तानामपि वागादीनामचेतनत्वादधिष्ठात्रपेक्षा न विरुध्यत इति वाच्यं, जीवस्याधिष्ठातृत्वात्। किञ्च देवतानामधिष्ठातृत्वे जीववद्भोक्तृत्वमस्मिन् देहे स्यात्, तथा चैकस्यानेकभोक्तृणां विरोधात् दुर्बलस्य जीवस्य भोक्तृत्वं न स्यादिति पूर्वपक्षार्थः। सिद्धान्तयति। एवं प्राप्त इत्यादिना। अग्निर्वाग्भूत्वादित्यश्चक्षुर्भूत्वेति च तद्भावोऽग्न्यादिदेवताधिष्ठेयत्वरूप एव सम्बन्धो न तदुपादानकत्वरूपो। दूरस्थादित्य-

त्वमङ्गीकृत्योच्यते। नहि देवतासम्बन्धं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषः सम्बन्धो दृश्यते। तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्येवमाद्यपि योजयितव्यं। तथान्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्ववचनेनैतमेवार्थं द्रढयति। 'स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवदिति च' एवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति।* सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति। स्मृतावपि।

'वागध्यात्ममिति प्राहुः ब्राह्मणास्तत्त्वदर्शिनः।
वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतम्'॥

इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं प्रदर्शितं। यदुक्तं स्वकार्य्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्त्ते-

---

मण्डलादेर्मुखस्य चक्षुराद्युपादानत्वासम्भवादित्याह। अग्नेरित्यादि वायुरिति। वायुः प्राणाधिष्ठाता भूत्वा नासापुटे प्राविशदिति व्याख्येयमित्याह। तथेति। भाति दीप्यते, तपति स्वकार्य्यं करोतीत्यर्थः। एतस्मिन्नधिष्ठानधिष्ठेयत्वरूपार्थे लिङ्गान्तरमाह। स वै वाचमिति। स प्राणो वाचं प्रथमामुद्गीथकर्म्मणि प्रधानामन्वृतादिपाप्मरूपं मृत्युमतीत्यावहत्-मृत्युना मुक्ता कृता अग्निदेवतात्मत्वं प्रापितवानित्यर्थः। किञ्चाग्नेस्तस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यमित्यादिश्रुतिरप्यधिष्ठानधिष्ठेयत्वे सम्बन्धं द्योतयतीत्याह। सर्वत्रेति। ननु शकटादीनां बलीवर्दादिप्रेरितानां प्रवृत्तिर्दृष्टा, क्षीरादीनामन्यनधिष्ठितानामपि दध्यादिप्रवृत्तिर्दृश्यते, तथा चोभयथासम्भवे कथं निश्चयस्तत्राह।

रचितिः, तदयुक्तं। शकानामपि शकटादीनामनडुहाद्यधिष्ठितानां प्रवृत्तिदर्शनात्। उभयथोपपत्तौ चागमाद्देवताधिष्ठितत्वमेव निश्चीयते। यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्य जीवस्येति तत् परिह्रियते ॥

प्राणवता शब्दात् ॥ १५ ॥

सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसङ्घातस्वामिना शारीरेणैवैषां प्राणानां सम्बन्धः श्रुतेरवगम्यते। तथा हि श्रुतिः 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' इत्येवंजातीयका शारीरेणैव प्राणानां सम्बन्धं श्रावयति। अपि चानेकत्वात् प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिन् शरीरेऽवकल्पते। एको ह्ययमस्मिन् शरीरे शारीरो भोक्ता प्रतिसन्धानादिसम्भवादवगम्यते ॥

---

उभयथोपपत्तौ चेति। उक्तदोषान्तरनिरासाय सूत्रमवतारयति। यदपीति ॥

शारीरेणैवेति। भोक्त्रेति शेषः। सम्बन्धो भोक्तृभोग्यभावः। अथ देहे प्राणप्रवेशानन्तरं यत्र गोलके एतच्छिद्रमनुप्रविष्टं चक्षुरिन्द्रियं तत्र चक्षुष्यभिमानी स आत्मा चाक्षुषः तस्य रूपदर्शनाय चक्षुः। यद्यप्यात्मा करणान्यपेक्षते तथापि विषयज्ञानतदाश्रयाहङ्कारं यो वेद स आत्मा चिद्रूप एव, करणानि तु गन्धादिप्रवृत्तयेऽपेक्ष्यन्ते न चैतन्यायेति श्रुत्यर्थः। किञ्च योऽहं रूपमद्राक्षं स एवाहं स्पृशामीति प्रतिसन्धानादेकः शारीर एव भोक्ता न बहवो देवा इत्याह। अपि चेति ॥

## तस्य च नित्यत्वात्॥ १६॥

तस्य च शारीरस्यास्मिन् शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसम्भवात् सुखदुःखोपभोगसम्भवाच्च न देवतानाम्। ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्छरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति 'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति' इति शारीरेणैव च नित्यः प्राणानां सम्बन्धः। उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभ्यः। तस्मात् सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति, करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति॥

---

कदाचिद्देवानामन्नभोक्तृत्वं कदाचिज्जीवस्येत्यनियमोऽस्त्वित्याशङ्क्य स्वकर्मार्जिते देहे जीवस्य भोक्तृत्वनियमान्मैवमित्याह सूत्रकारः। तस्य चेति। उत्क्रमणादिषु जीवस्य प्राणाव्यभिचारात्तस्यैव प्राणस्वामित्वं, देवतानान्तु परस्वामिकरथसारथिवदधिष्ठातृत्वमात्रमिति व्याख्यान्तरमाह। शारीरस्यैव च नित्य इति। यथा प्रदीपादिः करणोपकारकतया करणपक्षान्तर्गतस्तथा देवाः करणोपकारिण एव न भोक्तार इत्यर्थः। जीवस्यादृष्टद्वारा करणाधिष्ठातृत्वाद्रथस्वामिवद्भोक्तृत्वं, देवानान्तु करणोपकाराभिज्ञतया सारथिवदधिष्ठातृत्वमिति। जीवेनान्यथासिद्धिः। देवानामधिष्ठातृत्वेनास्मिन् देहे भोक्तृत्वानुमानमपि न ह वै देवान् पापं गच्छतीत्यादिश्रुतिबाधितं, तस्माच्चक्षुषा हि रूपाणि पश्यतीति श्रुतेः साधनत्वमात्रबोधित्वादभिमान्यधिष्ठातृदेवतापेक्षाबोधकश्रुतिभिरविरोध इति सिद्धम्॥

## न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः, तत्रेदमपरं सन्दिह्यते किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणा आहो-स्वित् तत्त्वान्तराणीति। किन्तावत् प्राप्तं मुख्यस्यैवेतरे वृत्तिभेदा इति। कुतः श्रुतेः। तथा हि श्रुतिर्मुख्यमितरांश्च प्राणान् सन्निधाप्य मुख्यात्मतामितरेषां ख्यापयति 'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्' इति। प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः, इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत एकत्र वा मुख्यत्वमितरत्र वा लाक्षणिकत्वमापद्येत। तस्माद् यथैकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तयः एवं वागाद्या अप्येकादशेत्येवं प्राप्ते ब्रूमः। तत्त्वान्तराण्येव प्राणाद्वागादीनीति। कुतः, व्यपदेशभेदात्। कोऽयं व्यपदेशभेदः, ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वाऽवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते।

---

सत्स्विन्द्रियेषु तदधिष्ठातृदेवताचिन्ता तान्येव प्राणवृत्तिव्यतिरेकेण न सन्तीत्याक्षेपं प्रत्याह। न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्। मुख्य-प्राणादिन्द्रियाणां भेदाभेदश्रुतिभ्यां संशयं वदन् पूर्वपक्षयति। मुख्य-... हन्त इदानीमस्यैव मुख्यप्राणस्य सर्वे वयं स्वरूपं भवामेत्यादिना। हन्त इदानीमस्यैव मुख्यप्राणस्य सर्वे वय स्वरूपं भवा-मेति सङ्कल्प्यते वागादयस्तथाऽभवन्नित्यभेदश्रुत्यर्थः। ते प्राणादभिन्नाः प्राणपदवाच्यत्वात् प्राणवदित्याह। प्राणेति। ते प्राणा श्रेष्ठादन्यत्रान्य इति प्रतिज्ञार्थत्वेन पदत्रयं व्याचष्टे। तत्त्वान्तराण्येवेति। तद्व्यपदेशा-दित्यत्र तच्छब्दः प्रतिज्ञातान्यत्वं परामृशति। प्राणा इन्द्रियाणीति। व्यप-देशशब्दाभ्यामन्यत्वोक्तेरिति हेतूपपादनार्थत्वेन पुनस्तानि सूत्रपदानि योजयति। क इत्यादिना। सूत्रस्य विश्वतोमुखत्वादुभयार्थत्वमलङ्कार एव न दूषणं, एतेन प्रतिज्ञाध्याहारः तच्छब्दस्याप्रकृतभेदपराम-

श्रुतावेवं व्यपदेशभेददर्शनात्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्येवंजातीयकेषु श्रुतिप्रदेशेषु, पृथक् प्राणो व्यपदिश्यते पृथक् चेन्द्रियाणि। ननु मनसोऽप्येवं सति वर्जनम् *इन्द्रियत्वेन प्राणवत् स्यात् 'मनः सर्वेन्द्रियाणि च' इति पृथक् व्यपदेशभेददर्शनात्। सत्यमेतत्, स्मृतौ तु एकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत् संगृह्यते, प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति। व्यपदेशभेदश्चायं †तत्त्वभेदपक्षे उपपद्यते। तत्त्वैकत्वे तु 'स एवैकः सन् प्राण इन्द्रियव्यपदेशं लभते न लभते च' इति विप्रतिषिद्धं, तस्मात्तत्त्वान्तरभूता मुख्यादितरे। कुतश्च तत्त्वान्तरभूता मुख्यादितरे॥

भेदश्रुतेः ॥ १८ ॥

भेदेन च वागादिभ्यः प्राणः सर्वत्र श्रूयते। 'ते ह वाचमूचुः'

---

र्णत्वश्चेति दोषद्वयमपास्तं। शब्दभेदाद्वस्तुभेदसाधनेऽतिप्रसङ्गं शङ्कते। नन्विति। प्राणवन्मनसोऽपि इन्द्रियेभ्यो भेदः स्यादित्यर्थः। अपर्यायसंज्ञाभेदात् स्वतन्त्रसंज्ञिवस्तुभेद इत्युत्सर्गः। स च मन षष्ठानीन्द्रियाणीत्यादिस्मृतिबाधान्मनस्यपोद्यते, प्राणे तु बाधकाभावादुत्सर्गसिद्धिरिति समाधत्ते। सत्यमित्यादिना। मन इन्द्रियाणि चेति भेदोक्तिर्गोबलीवर्दन्यायेन नेया। सिद्धान्ते मनसः प्रथमोपादानत्वादात्मवदनिन्द्रियत्वमिष्टं ततो नोत्सर्गबाध इति केचित्। किञ्चैतस्माज्जायते प्राण मन सर्वेन्द्रियाणि चेति पृथक्जन्मव्यपदेशात् स्वतन्त्रवस्तुभेद इत्याह। व्यपदेशभेदश्चायमिति। एकस्मिन् वाक्ये प्राण इन्द्रियशब्दमेकाल्लभते पुनरुक्तिभयान्न लभते चेति व्याख्यात इत्यर्थः।

एव भेदेनापर्यायसंज्ञाभ्यामुक्तेः पृथक्जन्मोक्तेश्चेति तद्व्यपदेशादिति

---

* इन्द्रियत्वे इति वर्ध० का०।
† तत्त्वभेदे सताति वर्ध० का०।

इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्योपसंहृत्य वागा-दिप्रकरणं, 'अथ हेममासन्यं प्राणमूचुः' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमात्, तथा 'मनो वाचं प्राणं तान्या-त्मनेऽकुरुत' इत्येवमाद्या अपि भेदश्रुतय उदाहर्त्तव्याः। तस्मादपि तत्त्वान्तरभूता मुख्यादितरे। कुतश्च तत्त्वान्तरभूता मुख्यादितरे॥

वैलक्षण्याच्च॥ १९॥

वैलक्षण्यञ्च भवति मुख्यप्राणस्येतरेषाञ्च सुप्तेषु वागादिषु मुख्य एको जागर्त्ति स एव चैको मृत्युनाऽनाप्तः। आप्तास्त्वितरे तस्यैव प्राणस्यावस्थित्युत्क्रान्तिभ्यां देहधारणपातनहेतुत्वं नेन्द्रियाणां विषयालोचनहेतुत्वञ्चेन्द्रियाणां न प्राणस्येत्येवंजातीयको भूयान् लक्षणभेदः प्राणेन्द्रियाणां। तस्मादप्येषां तत्त्वान्तरभावसिद्धिः। यदुक्तं 'तत्र तस्यैव सर्वे रूपमभवन्' इति श्रुतेः प्राण एवेन्द्रि-याणीति, तदयुक्तं। तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः।

---

हेतुर्व्याख्यातः। भेदश्रुतेरिति सूत्रेण प्रकरणभेदो हेतुरुक्त इति न
पौनरुक्त्यं। ते देवाः शास्त्रीयेन्द्रियमनोवृत्तिरूपाः असुराणां पाप-
वृत्तिरूपाणां जयार्थमुद्गीथकर्म्मणि प्रथमं व्यापृता वाचमूचुस्त्वन्न
उद्गायासुरनाशार्थमिति तथास्त्वित्यङ्गीकृत्योद्गायन्तीं वाचमन्तृतादि-
दोषेण विध्वसितवन्तोऽसुरा इत्येवं क्रमेण सर्वेष्विन्द्रियेषु पापग्रस्तेषु
पश्चादथेति प्रकरणं विच्छिद्य प्रसिद्धमास्ये भवमासन्यं मुख्यं प्राणमूचु-
स्त्वन्न उद्गायेति तेन प्राणेनोद्गाता निर्विषयतया सङ्गदोषशून्येनासुरा
नष्टा इत्यसुराणां विध्वंसिनो मुख्यप्राणस्योक्तेर्भेदसिद्धिरित्याह। ते
हेति। तानि त्रीण्यन्यान्यात्मने स्वार्थं प्रजापतिः कृतवानित्यर्थः॥
विरुद्धधर्म्मवत्त्वाच्च भेद इत्याह। वैलक्षण्यञ्चेति। मृत्युनासङ्गदो-
षः। वाग्वधे हतवदित्यर्थः। बहुभिर्भेदलिङ्गैर्विरोधाद्वागादीनां प्राण-

तथा हि 'वदिष्याम्येवाहमिति वाग्दध्रे' इति वागादीनीन्द्रियाण्यनुक्रम्य 'तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्' इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय 'अथेममेव नाप्नोत् योऽयं मध्यमः प्राणः' इति पृथक्प्राणं मृत्युनानभिभूतमनुक्रामति। 'अयं वै नः श्रेष्ठः' इति च श्रेष्ठतामस्यावधारयति। तस्मात्तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागादीनामिति मन्तव्यं न तु तादात्म्यं। अतएव प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धिः। तथा च श्रुतिः 'तत्र तस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्ते प्राणाः' इति मुख्यप्राणविषयस्यैव प्राणशब्दस्य इन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति। तस्मात्तत्त्वान्तराणि प्राणाद्वागादीन्द्रियाणीति ॥

संज्ञामूर्त्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

सत्प्रक्रियायां तेजोऽबन्नानां *सृष्टिमभिधायोपदिश्यते। 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानु-

रूपभवनं प्राणाधीनस्थितिकत्वरूपं व्याख्येयं। एतदेव प्राणशब्दस्येन्द्रियेषु लक्षणाबीजं श्रुतौ तस्मादेत एतेनाख्यायन्त इति परामृष्टमिति न भेदाभेदश्रुत्योर्विरोध इति सिद्धं ॥

उत्पत्तिवत्पादनेति च कार्य्यकर्त्रोर्व्यापारौ प्रसिद्धौ, तत्र जगदुत्पत्तिश्रुतिविरोधः अतीतेन पादद्वयेन निरस्तः, सम्प्रत्युपादानश्रुतिविरोधो निरस्यते। 'तत्रापि सूक्ष्मभूतोत्पादनं पारमेश्वरमेवेति श्रुत्यविप्रतिपन्नं, स्थूलभूतोत्पादने त्वस्ति श्रुतिविप्रतिपत्तिरिति तन्निरासार्थमाह। संज्ञामूर्त्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात्। नामरूप-

* दृष्टिं विधायेति का० वर्ध०।

अनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति। तत्र संशयः किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित् परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावत् जीवकर्तृकमेवेदं नामरूपव्याकरणमिति। कुतः, अनेन जीवेनात्मनेति विशेषणात्। यथा लोके चारेणाहं परसैन्यमनुप्रविश्य सङ्कलयामीत्येवंजातीयके प्रयोगे चारकर्तृकमेव *सत्सैन्यसङ्कलनं हेतुकर्तृत्वाद्राजात्मन्यध्यारोपयति सङ्कलयामीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वाद्देवतात्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अपि च डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टं, तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्तेऽभिधत्ते। संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत इति।

---

भेदात् कथमिव प्राण इत्युक्तं, तत्प्रसङ्गेन स्थूलनामरूपक्लृप्तिः किंकर्तृकेति चिन्त्यत इत्यवान्तरसङ्गतिः। प्रक्रियां प्रकटयन्नीक्षणमेवाह। हन्तेत्यादिना। हन्त इदानीं देवता रूपाणि अनुप्रविश्येति सम्बन्धः। तासां तिसृणां देवतानामेकैकां देवतां तेजोऽबन्नात्मना त्र्यात्मिकां करिष्यामीति श्रुतिः पञ्चीकरणोपलक्षणार्था। छान्दोग्येऽप्याकाशवाय्वोरुपसंहारस्योक्तत्वात्। एवं स्थूलीकृतेषु भूतेषु प्राणिनां व्यवहारः सेत्स्यतीति परदेवतायास्तात्पर्यं। जीवेनेतिपदस्य व्याकरवाणीत्यनेन सम्बन्धसम्भवासम्भवाभ्यां संशयमाह। तत्रेति। पूर्वपक्षे जीवस्यैव भौतिकस्रष्टृत्वाद्ब्रह्मणः सर्वस्रष्टृत्वासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलं। जीवेनेत्यस्य व्याकरवाणीतिप्रधानक्रियापदेन सम्बन्ध इति पूर्वपक्षमाह। तत्र प्राप्तमिति। परदेवताया अकर्तृत्वे कथमुत्तमपुरुषप्रयोग इत्याशङ्क्य प्रयोजककर्तृत्वात् कर्तृत्वोपचार इत्याह। यथा

---

* परसैन्येति वर्ध० का०।

तुशब्देन पक्षं व्यावर्तयति। संज्ञामूर्तिकॢप्तिरिति नामरूपव्याक्रियेत्येतत् त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात्। येयं संज्ञाकॢप्तिर्मूर्तिकॢप्तिश्चाग्निरादित्यश्चन्द्रमा विद्युदिति तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा सा खलु परमेश्वरस्यैव तेजोऽबन्नानां निर्मातुः कृतिर्भवितुमर्हति। कुतः उपदेशात्। तथा हि सेयं देवतेत्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते। ननु जीवनेति विशेषणाज्जीवकर्तृकं व्याकरणमध्यवसितं नैतदेवं जीवेनेत्येतदनुप्रविश्येत्यनेन सम्बध्यते आनन्तर्यान्न व्याकरवाणीत्यनेन। तेन हि सम्बन्धे व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत। न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेषु अनीश्वरस्य जीवस्य

---

लोक इति। सिद्धान्तयति। तुशब्देनेत्यादिना। प्रत्याकृति प्रतिजातीयम्। अनेन स्थूलसर्गे जीवस्यासामर्थ्यं द्योतितं। तथा च पदान्वयस्य पदार्थयोग्यताधीनत्वाज्जीवरूपेण प्रविश्याहमेव व्याकरवाणीत्यन्वयः न तु जीवेन व्याकरवाणीति। ननु तर्हि प्रवेशक्रिया जीवकर्तृका व्याकरणमीश्वरकर्तृकमिति कर्तृभेदात् क्त्वाप्रत्ययो न स्यादित्यत आह। न च जीवो नामेति। वस्तुतस्तु सूर्यो जले प्रविष्ट इति प्रतिबिम्बभावास्यप्रवेशे सूर्यस्यैव कर्तृत्वप्रयोगाज्जीवात्मना प्रवेशोऽपीश्वर एव कर्तेति क्त्वाश्रुतिर्युक्तेति बोध्यं। नन्वभेदश्चेज्जीव एव व्याकर्ता किं न स्यादित्याशङ्क्य कल्पनया भिन्नस्य तत्त्वाशक्तत्वाच्छ्रुतिविरोधाच्च नैवमित्याह। परमेश्वर इति। प्रत्येकं महाभूतसर्गस्य प्रागुक्तत्वा-

व्याकरणसामर्थ्यमस्ति, येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत्। न च जीवो नाम परमेश्वरादत्यन्तभिन्नश्चार इव राज्ञः, आत्मनेति विशेषणात्, उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य। तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति। परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः। 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्यादिश्रुतिभ्यः। तस्मात् परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपव्याकरणं, त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते। प्रत्येकं नामरूपव्याकरणस्य तेजोऽबन्नोत्पत्तिवचनेनैवाम्नातत्वात्, तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुतिर्दर्शयति 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य' इत्यादिना। तत्राग्निरितीदं रूपं व्याक्रियते। सति च रूपव्याकरणे विषयप्रतिलम्भादग्निरितीदं नाम व्याक्रियते। एवमेवादित्यचन्द्रविद्युत्स्वपि

---

हि व्याकरणवाक्ये यत्नपूर्वकस्थूलभौतिकसर्ग उच्यते इति पाठव्यत्ययेन सूचितं श्रुत्यर्थमाह। त्रिवृत्करणपूर्वकमिति। ईश्वरकृतं व्याकृतत्वमिति क्व दृष्टमित्यत आह। तच्चेति। इदानीं नामरूपव्याकरणे क्रममाह। तत्राग्निरिति। यद्यप्यतः प्रभवादित्यत्र वेदशब्दपूर्विकाऽर्थसृष्टिरुक्ता तथाप्यव्यक्तात् स्मृताच्छब्दादर्थसृष्टौ सत्यां स्फुटनामसन्धाभिव्यक्तिरत्रोक्तेत्यविरोधः। नन्वग्न्यादीनां तैजसानामेव श्रुतावुदाहरणात् भूजलयोस्त्र्यात्मकत्वं न विवक्षितमित्यत आह। यनन चेति। उपक्रमे तासां मध्य इति शेषः। यत्कपालरूपादिकं कृष्णत्वादिविशेषाकारेणाविज्ञातमिव भवति तद्देवतानां समुदय-

द्रष्टव्यं। अनेन चाग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति, उपक्रमोपसंहारयोः साधारणत्वात्। तथा हि अविशेषेणैवोपक्रमः 'इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति' इति। अविशेषेणैव चोपसंहारः 'यदु रोहितमिवाभूत्' इति तेजसस्तद्रूपमित्येवमादिः 'यदविज्ञातमिवाभूत्' इत्येतासामेव देवतानां समास इत्येवमन्तः। तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनामध्यात्ममपरं त्रिवृत्करणमुक्तं 'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' इति। तदिदानीमाचार्यो यथाश्रुत्येवोपदर्शयत्याशङ्कितं कञ्चित् दोषं परिहरिष्यन्॥

## मांसादि भौमं यथाशब्दमितरयोश्च॥ २१॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपयुज्यमानाया मांसादि कार्यं यथाशब्दं निष्पद्यते। तथा हि श्रुतिः 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः। तस्याश्च

---

रूपमित्यर्थः। बाह्यं त्रिवृत्करणमुक्त्वाध्यात्मिकमपरं पूर्वोक्तलक्षणं वदन् उत्तरसूत्रमवतारयति। तासामित्यादिना। पुरुषशरीरं प्राप्यैकैका त्रिवृद्भवति कार्यरूपात्मना भवतीत्यर्थः। उत्तरसूत्रेण शङ्कितं दोषं निरसितुमादौ श्रुतिविषयमाध्यात्मिकत्रिवृत्करणं दर्शयतीति भाष्यार्थः।

स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति, मध्यममध्यात्मं मांसं वर्धयति, अणिष्ठन्तु मनः। एवमितरयोरप्तेजसोर्यथाशब्दं कार्यमवगन्तव्यं 'मूत्रं लोहितं प्राणश्चापां कार्यं अस्थि मज्जा वाक् तेजस.' इति। अत्राह यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकं अविशेषश्रुते. 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति, किं कृतस्तर्ह्ययं विशेषव्यपदेशः, 'इदं तेज इमा आप इदमन्नं' इति। तथा 'अध्यात्ममिदमन्नस्याशितस्य कार्यं मांसादि इदमपां पीतानां कार्यं लोहितादि इदं तेजसोऽशितस्य कार्यमस्थ्यादि' इति। अत्रोच्यते॥

वैशेष्यात्तु तद्वादस्तद्वादः॥ २२॥

तुशब्देन चोदितं दोषमपनुदति। विशेषस्य भावो वैशेष्यं, भूयस्त्वमिति यावत्। सत्यपि त्रिवृत्करणे क्वचित् कस्यचित् भूतधातोर्भूयस्त्वमुपलभ्यते 'अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वं' इति। व्यवहारप्रसिद्ध्यर्थञ्चेदं त्रिवृत्करणं। व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत्। तस्मात् सत्यपि त्रिवृत्करणे वैशे-

---

नन्वन्नमयं मांसादि कथं भौममित्यत आह। त्रिवृत्कृता भूमिरेवेति। प्राणस्य वायोरपकार्यत्वं चौपचारिकं द्रष्टव्यम्॥

एवं विषयमुक्त्वा दोषं शङ्कते। अत्राहेति। तदुत्तरत्वेन सूत्रं व्याचष्टे। तुशब्देनेति। स्वभागाधिक्यं वैशेष्यं किमर्थं कृतमित्यत

दर्थजातं तृतीयेऽध्याये निरूपयिष्यते प्रसङ्गागतञ्च किमप्यन्यत्। तत्र प्रथमे तावत् पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते, वैराग्यहेतोस्तस्माज्जुगुप्सेतेति चान्ते *श्रवणात्। जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्को विद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यत इत्येतदवगतं। 'अथैनमेते प्राणा अभिसमायन्ति' इत्येवमादेः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्येवमन्तात् संसारप्रकरणस्थाच्छब्दात्, धर्माधर्मफलोपभोगसम्भवाच्च। स किं देहबीजैर्भूतसूक्ष्मैरसम्परिष्वक्तो गच्छति आहोस्वित् सम्परिष्वक्त इति चिन्त्यते। किन्तावत् प्राप्तं असम्परिष्वक्त इति। कुतः, करणोपादानवद्भूतोपादानस्याश्रुतत्वात्। 'स एतास्तेजोमात्राः समभ्याददानः' इत्यत्र तेजोमात्राशब्देन करणानामुपादानं सङ्कीर्तयति, वाक्यशेषे चक्षुरादिसङ्कीर्तनात्। नैवंभूतमात्रोपादानसङ्कीर्तनमस्ति सुलभाश्च सर्वत्र भूतमात्राः, यत्रैव देह आरब्धव्यस्तत्रैव सन्ति

---

तत्तारतम्यनियमाभाव एकरूपमिति यावत्। प्रसङ्गागतं देहात्मदूषणं। पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्सु अग्नित्वध्यानं पञ्चाग्निविद्या। यस्मात् कर्मणा गत्यागतिरूपोऽनर्थस्तस्मात् कर्मफले जुगुप्सा घृणा विरक्तिं कुर्वीतेति पञ्चाग्निविद्योपसंहारे श्रवणाद्वैराग्यार्थं प्रदर्श्यते इत्यन्वयः। शास्त्रादिसूत्रे नित्यानित्यविवेककृतं वैराग्यमुक्तम् इह तद्दार्ढ्याय गत्यागतिक्लेशभावनाकृतं तदुच्यत इत्यपौनरुक्त्यं। अधिकरणविषयमाह। जीव इति। अविद्या प्रसिद्धा। विद्येति पाठे उपासना ग्राह्या। कर्म धर्माधर्माख्यं, पूर्वप्रज्ञा जन्मान्तरसंस्कारः। अथ मरणकाले प्राणा हृदये जीवेनैकीभवन्तीत्यर्थः। रूपं शरीरं, पञ्चीकृतभूतभागा उत्तर-

---

* श्रवणादिति वर्ध० का० नास्ति।

ततश्च तासां नयनं निष्प्रयोजनं, तस्मादसंपरिष्वक्तो यातीत्येवं प्राप्ते पठत्याचार्यः। तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति। तदन्तरप्रतिपत्तौ देहात् देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः सम्परिष्वक्तो रंहति गच्छतीत्यवगन्तव्यं। कुतः प्रश्ननिरूपणाभ्यां। तथाहि प्रश्नः 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति। निरूपणञ्च प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति। तस्माद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते। नन्वन्या श्रुतिः 'जलौकावत् पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति

---

देहपरिणामिनो भूतसूक्ष्माः। वेदान्तार्थज्ञानसाधनविचारत्वात् सर्वा-
धिकरणानां, श्रुतिशास्त्राध्यायसङ्गतयः वैराग्यफलकत्वादेतत्पादसङ्गतिः।
पूर्वाधिकरणे व्यवहारार्थं पञ्चीकरणमुक्तं स व्यवहारोऽत्र निरूप्यत
इति फलफलिभावोऽवान्तरसङ्गतिः। अत्र पूर्वपक्षे निराश्रयप्राणगत्य-
भावात् न वैराग्यं सिध्यति, सूत्राश्रयप्राणगतेर्वैराग्यमिति फलभेदः।
तेजोमात्राश्चक्षुरादयः, पश्यति जिघ्रतीति वाक्यशेषात्। आपः पञ्चस्व-
ग्निषु हुताः पञ्चम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्याः पुरुषात्मना
परिणमन्ते तथा किं त्वं वेत्थेति श्वेतकेतुं प्रति राज्ञः प्रवाहणस्य प्रश्नः,
तस्य चोत्तराज्ञाने तत्पितरं प्रति राज्ञो 'वाचासौ वाव लोको गौत-
माग्निस्तत्र श्रद्धाख्या आपः आहुतिः पर्जन्याग्नौ सोमरूपा इह खल्व-
ग्निहोत्रे श्रद्धया हुता, दध्याख्या हि रूपा आपो यजमानसंलग्नाः
स्वर्गं लोकं प्राप्य सोमाख्यदिव्यदेहात्मना स्थिताः कर्मान्ते हुताः पर्जन्ये
भूयन्ते ततो वृष्टिरूपाः पृथिव्यां अन्नरूपाः पुरुषे रेतोरूपाः यो-
षिति हुताः आप पुरुषशब्दवाच्या भवन्ति' इति निरूपणं कृतं। नन्वे-

दर्शयति, इति। तद्यथा तृणजलायुकेति, तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः। एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः प्रकल्पनाः व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशात् वृत्तिलाभस्तत्र भवति केवलस्यैव वात्मनो वृत्तिलाभस्तत्र तत्र भवति इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते जीव एव वोत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक इव वृक्षाद् वृक्षान्तरमित्येवमाद्याः ताः सर्वा एवानादर्तव्याः, श्रुतिविरोधात्। ननूदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः सम्परिष्वक्तो रंहतीति प्राप्नोति, अप्शब्दश्रवणसामर्थ्यात्, तत्र

---

तद्देहं त्यक्त्वाऽद्भिः सह गतस्य पश्चाद्देहान्तरप्राप्तिरित्ययुक्तं। यथा तृणजलायुका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवो देहान्तरं गृहीत्वा पूर्वदेहं त्यजतीति श्रुतिविरोधादिति शङ्कते। नन्वित्येति। इहैव कर्मोपात्तभाविदेहे देवोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजतीति श्रुत्यर्थः, अतो न विरोधः, इति समाधत्ते। तत्रापीति। भावनाया दीर्घभावो भाविदेहविषयत्वं। घटाकाशवदुपहितो जीवः सूक्ष्मोपाधिगत्या लोकान्तरं गच्छतीति पञ्चाग्निश्रुत्युक्त प्रकारस्तद्विरोधादन्याः कल्पना अनादर्तव्या इत्यन्वयः। सांख्यकल्पनामाह। व्यापिनामिति। सुगतकल्पनामाह। केवलस्येति। निर्विकल्पकज्ञानसन्तानरूपस्यात्मनो देहान्तरे शब्दादिसविकल्पज्ञानाख्यवृत्तिलाभो भवतीत्यर्थः। कारणादकल्पनामाह। मन इति। देहान्तरं प्रति मनोमात्रं गच्छति, इन्द्रियाणि तु भूतान्येवारभ्यन्ते।

कथं सामान्येन प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः सम्परिष्वक्तो रंहतीत्यत उत्तरं पठति॥

## त्र्यात्मकत्वात् तु भूयस्त्वात्॥ २॥

तुशब्देन चोदितामाशङ्कामुच्छिनत्ति। त्र्यात्मिका ह्यापः त्रिवृत्करणश्रुतेः। तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति। त्र्यात्मकश्च देहस्त्रयाणामपि तेजोऽबन्नानां तस्मिन् कार्योपलब्धेः, पुनश्च त्र्यात्मकस्त्रिधातुकत्वात् त्रिभिर्वातपित्तश्लेष्मभिः। न भूतान्तराणि स प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते। तस्मात् भूयस्त्वापेक्षोऽयमापः पुरुषवचस इति प्रश्नप्रतिवचनयोरप्शब्दो न कैवल्यापेक्षः, सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते। ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते, नैष दोषः, इतरापेक्षयाऽपां बाहुल्यं भविष्यति। दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यं। कर्म च निमित्तकारणं, देहान्तरारम्भे कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्य*व्यपाश्रयाणि। कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाख्ये-

---

दिगम्बरकल्पनामाह। जीव इति। ननु पाकस्वेदगन्धस्वमकार्यत्रयोपलब्धेस्त्र्यात्मको देह इत्ययुक्तं॥

प्राणावकाशयोरप्युपलब्ध्या देहस्य पञ्चभूतात्मत्वादित्यरुच्या व्याख्यान्तरमाह। पुनश्चेति। देहधारकत्वाद्धातवो वातादयस्त्रिधातुत्वाद्व्यात्मक इत्यन्वयः। देहस्य केवलाप्त्वे वातं पित्तञ्च वायव्यं तैजसं न

---

* व्यपाश्रयाणीति वर्धं० का०।

ऽग्नौ हूयन्त इति वक्ष्यति, तस्मादप्यपां बाहुल्यप्रसिद्धिः। बाहुल्याच्चाप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यं॥

## प्राणगतेश्च॥ ३॥

प्राणानाञ्च देहान्तरप्रतिपत्तौ गतिः श्राव्यते। 'तमुत्क्रान्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभिः। सा च प्राणानां गतिराश्रयमन्तरेण न सम्भवतीत्यतः प्राणगतिप्रयुक्तानां तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते। न हि निराश्रयाः प्राणाः कचिद्गच्छन्ति तिष्ठन्ति वा, जीवतोऽदर्शनात्॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥ ४॥

स्यादेतत्, नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुतेः। तथाहि श्रुतिः मरणकाले वागादयः प्राणाः अग्न्यादीन् देवान् गच्छन्तीति दर्शयति 'यत्रास्य पुरुषस्य मृतस्याऽग्निं वागप्येति वातं प्राणः' इत्यादिनेति चेन्न,

---

स्यातामिति भावः। पृथिवीतरभूतापेक्षया बाहुल्यं। किञ्च देहनिमित्तानां कर्मणामपूर्वबाहुल्यात्ताभिर्भूतान्तराण्युपलक्ष्यन्त इत्याह। कर्म चेत्यादिना॥

उक्तांश्च प्राणा देहबीजपञ्चभूताश्रयाः प्राणत्वाज्जीवद्देहस्थ प्राणवदित्याह। प्राणगतेश्चेति॥

प्राणानां गतिरसिद्धेत्याशङ्कां निषेधति। अग्न्यादीति। अदर्शनादोषधिवनस्पतिगमनस्येति शेषः। लोमान्यपि यन्तीत्यर्थः। प्राणानाम-

भाक्तत्वात्। वागादीनामग्न्यादिगतिश्रुतिर्गौणी लोमसु केशेषु चादर्शनात्। 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति हि तत्राम्नायते। न हि लोमानि केशाश्चोत्प्लुत्यौषधीर्वनस्पतींश्च गच्छन्तीति सम्भवन्ति। न च जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवकल्पते, नापि प्राणैर्विना देहान्तर उपभोग उपपद्यते, विस्पष्टञ्च प्राणानां सह जीवेन गमनमन्यत्र आवितं, अतो वागाद्यधिष्ठात्रीणां अग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाल उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन् गच्छन्तीत्युपचर्यते ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

स्यादेतत्, कथं पुनः पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्तीत्येतन्निर्द्धारयितुं पार्यते यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति। इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चानामाहुतीनामाधारत्वेनाधीताः, तेषाञ्च प्रमुखे 'असौ वाव लोको गौतमाग्निः' इत्युपन्यस्य तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धा होम्यद्रव्यत्वेनावेदिता:, न तत्रापो होम्यद्रव्यतया श्रुताः। यदि नाम पर्जन्यादिषु उत्तरेषु चतुर्ष्वग्निष्वपां होम्यद्रव्यता

---

ग्न्यादिषु लयस्य मुख्यत्वे जीवस्य गतिभोगयोरयोगात् सर्वे प्राणा अनूत्क्रामन्तीति विस्पष्टश्रुतेर्लोमादिगौणफलपाठाच्च गौणत्वमित्यर्थः ॥

भूतान्तरयुक्तानामपामाहुतिमुक्ता पुरुषवचस्त्वं तासामाक्षिप्य समाधत्ते। प्रथम इति। ननु प्रथमपदं व्यर्थं उत्तराग्निष्वप्यपामश्रवणा-

परिकल्प्येत परिकल्पतां नाम, तेषु होतव्यतयोपात्तानां सोमादीनामब्रूपत्वोपपत्तेः। प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्याश्रुता आपः परिकल्प्यन्त इति साहसमेतत्। श्रद्धा च नाम प्रत्ययविशेषः प्रसिद्धिसामर्थ्यात्। तस्मादयुक्तः पञ्चम्यामाहुतावपां पुरुषभाव इति चेन्नैष दोषः। हि यतस्तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभिप्रेयन्ते। कुतः, उपपत्तेः। एवं ह्यादिमध्यावसानसंज्ञानादेकवाक्यमेतदेकवाक्यमुपपद्यते, इतरथा पुनः पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्यं श्रद्धां नामावतारयेत् ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यादिति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति चोपसंहरन्नेतदेव दर्शयति। श्रद्धाकार्यञ्च सोमवृष्ट्यादि स्थूलीभवद्ब्रूपं लक्ष्यते। सा च श्रद्धाया अप्सु युक्तिः। कारणा-

---

दित्याशङ्क्य सोमवृष्ट्यन्तरे तासामगतत्वादुत्तरं एतासा अवश्यमस्ति। न प्रथम इत्याह। यदि नामेति। पञ्चास्वप्यपामाहुतित्वे सिद्धे तासां पञ्चम्यामाहुतौ पुरुषवचस्त्वं भवेन्न तत्सिद्धं प्रथमाग्नौ तासामनाहुतित्वादिति शङ्कार्थः। एवं हि श्रद्धाशब्देनापां ग्रहे सति प्रश्नोत्तरोपसंहाराणां संज्ञानादेकार्थत्वादेकवाक्यतोपपद्यते, अग्रहे चतुर्ष्वग्निष्वेवापामाहुतित्वाच्चतुर्थ्यामाहुताविति वाच्य, अतः प्रश्नोपसंहारयोः पञ्चम्यामिति श्रवणात् प्रथमाग्नावप्याप एव ग्राह्या इति समाधानार्थः। अनपः श्रद्धोऽन्यत एतदेवेति श्रद्धाशब्दस्याप्यर्थान्तरत्व दर्शयतीत्यर्थः। उपपत्तेरित्यस्यार्थान्तरमाह। श्रद्धाकार्यमिति। तस्याः श्रद्धाहुते सोमः सम्भवतीत्यादिना श्रद्धासोमादीनां पूर्वपूर्वपरिणामत्वं श्रुतं ततो श्रवपरिणामत्वात् श्रद्धाया अप्त्वं प्रत्यया-

नुरूपं हि कार्यं भवति। न च श्रद्धाख्यः प्रत्ययो मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनीत्याप एव श्रद्धाशब्दा भवेयुः, श्रद्धाशब्दश्चाप्सूपपद्यते, वैदिकात् प्रयोगदर्शनात् 'श्रद्धा वा आपः' इति। तनुत्वं च 'श्रद्धासारूप्यं गच्छन्त्यापो देहबीजभूताः' इत्यतः श्रद्धाशब्दाः स्युः, यथा सिंहपराक्रमो नरः सिंहशब्दो भवति। श्रद्धापूर्वककर्मसमवायाच्चाप्सु श्रद्धाशब्द उपपद्यते मञ्चशब्द इव पुरुषेषु। श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः 'आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे' इति श्रुतेः॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः॥ ६॥

अथापि स्यात् प्रश्नप्रतिवचनाभ्यामापः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन्, न तु तत्सम्परिष्वक्ता जीवा रंहेयुः, अश्रुतत्वात्। न ह्यत्रापामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति। तस्माद्रंहति सम्परिष्वक्त इत्ययुक्तमिति चेत्, नैष दोषः। कुतः, इष्टादिकारिणां प्रतीतेः। अथ 'य इमे

---

त्वमुख्यश्रद्धाया आहुतित्वायोगाच्चेत्यर्थः। श्रद्धाशब्दस्याप्सु स्वरूपा-त्वगुणेन वृत्तिमुक्त्वा लक्षणां वक्तुं श्रद्धया अद्भिरेव कर्मयोगित्वं हेतुत्वं वा सम्बन्धमाह। श्रद्धापूर्वेति। अस्मै यजमानाय। स्नानाद्यर्थमापः श्रद्धां संनमन्ते जनयन्तीति अर्थः॥

अपां गतिमुपेत्याद्भिः सह जीवानां गतिमाक्षिप्य समाधत्ते। यथा-
...टिना। द्युलोकाग्नौ श्रद्धाहुतेः सोमो राजा सम्भवतीत्युक्ता वाक्य-

ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इत्युपक्रम्ये-
ष्टादिकारिणां धूमादिना पितृयानेन पथा चन्द्रमाप्तिं कथ-
यति 'आकाशाच्चन्द्रमसमेष सोमो राजा इति त एवेहापि प्रती-
यन्ते तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः
सोमो राजा सम्भवति' इति श्रुतिसामान्यात्। तेषां चाग्निहोत्र-
दर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभू-
यस्त्वात् प्रत्यक्षमेवापः सम्भवन्ति, ता आहवनीये हुताः सूक्ष्मा
आहुत्योऽपूर्वरूपाः सत्यस्तानिष्टादिकारिण आश्रयन्ति। तेषां च
शरीरं नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वत्यसौ स्वर्गाय लो-
काय स्वाहेति। ततस्ताः श्रद्धापूर्वककर्मसमवायिन्य आहुति-
मय्य आपोऽपूर्वरूपाः सत्यस्तानिष्टादिकारिणो जीवान् परि-
वेष्ट्यामुं लोकं फलदानाय नयन्तीति यत्तदत्र जुहोतिनाभि-
धीयते श्रद्धां जुह्वतीति। तथा चाऽग्निहोत्रे षट्प्रश्नीनिर्वचन-

---

श्रेषे धूमादिमार्गेण आकाशाच्चन्द्रमसं प्राप्ता इष्टादिकारिण एष
सोमो राजेत्युक्ताः अतः सोमराजशब्दसामान्यादिष्टादिकारिणां जी-
वानां श्रद्धाशब्देनाद्भिः सह गतिरिह श्रद्धाहुतिवाक्ये प्रतीयत इत्य-
र्थः। तेषां सूक्ष्माभिर्यथापूर्वरूपाभिः पयःप्रभृतिभिरद्भिः सम्बन्धं वदन्
सहगतिं विवृणोति। तेषां चाग्निहोत्रेति। नैधनं मरणं, तन्निमित्त-
कमन्त्येष्टिविधानं, असौ यजमानः, स्वर्गाय गच्छत्विति मन्त्रार्थः।
हुतद्रव्यरूपाणामपां गमने श्रुत्यन्तरमाह। तथा चेति। अग्निहोत्र-
प्रकरणे जनकेन याज्ञवल्क्यं प्रति 'नत्वेवैनयोः सायंप्रातराहुत्योस्त्वमु-
त्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं
वेत्थ' इति षट् प्रश्नाः कृतास्तेषां निर्वचनमपि राज्ञैव ते एते आहुती
हुते उत्क्रामतः [illegible]

रूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' इत्येवमादिनाऽग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिर्दर्शिता। तस्मादाहुतिमयीभिरद्भिः सम्परिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते। कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते, यावता तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानामन्नभावं दर्शयति 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति। 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति' इति *च समानविषयं श्रुत्यन्तरं। न च व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः सम्भवतीत्यत उत्तरं पठति॥

भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति॥ ७॥

वाशब्दश्चोदितदोषव्यावर्तनार्थः। भाक्तमेषामन्नत्वं न मुख्यं, मुख्ये ह्यन्नत्वे 'स्वर्गकामो यजेत' इत्येवंजातीयकाधिकारश्रुति-

---

कुर्वाते दिवं तर्पयतस्ते तत पुनरावर्तेते तत पृथिव्या पुरुषे योषिति च हुते पुरुषरूपेणोत्तिष्ठत इति वाक्यशेषेण हुतं। सम्भृतरसूत्रव्यावर्त्यं शङ्कते। कथमित्यादिना। अत्र सोमाख्यचन्द्रस्यान्नत्वमुक्तं नेष्टादिकारिणामिति भ्रान्तिनिरासार्थं श्रुत्यन्तरमाह। ते चन्द्रमिति। यथा यज्ञे चमसस्थं सोममृत्विज आप्यायस्वेति क्रियावृत्तौ लोट् पुनः पुनराप्याय्य पुनः पुनरपक्षय्य भक्षयन्ति। एव एतानिष्टादिकारिणोऽन्नरूपान् भक्षयन्ति देवा इत्यर्थं॥

अधिक्रियते पुरुषो विधिना सम्बध्यतेऽनेनेत्यधिकारः फलकामना।

---

* चेति वर्ध० पु० नास्ति।

उपपद्येत। चन्द्रमण्डले चेदिष्टादिकारिणामुपभोगो न स्यात् किमर्थमधिकारिण इष्टाद्यायासबहुलं कर्म कुर्युः। अन्नशब्दस्योपभोगहेतुत्वसामान्यात् अनन्नेऽप्युपचर्यमाणो दृश्यते 'यथा विशोऽन्नं राज्ञां पशवोऽन्नं विशाम्' इति। तस्मादिष्टस्त्रीपुत्रमित्रादिभिरिव गुणभावोपगतैरिष्टादिकारिभिर्यत्सुखविहरणं देवानां तदेवैषां भक्षणमभिप्रेतं न मोदकादिवच्चर्वणं निगरणं वा। 'न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इति देवानां चर्वणादिव्यापारं वारयति। तेषां चेष्टादिकारिणां देवान् प्रति गुणभावोपगतानामप्युपभोग उपपद्यते राजोपजीविनामिव परिजनानां, अनात्मवित्त्वाच्चेष्टादिकारिणां देवोपभोग्यभाव उपपद्यते। तथा हि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' इति। स चास्मिन्नपि लोक इष्टादिभिः कर्मभिः प्रीणयन् पशुवद्देवानामुपकरोत्यमुष्मिन्नपि लोके तदुपजीवी तदादिष्टं फलमुपभुञ्जानः पशुवदेव देवानामुपकरोतीति गम्यते। अनात्मवित्त्वात् तथा हि दर्शयति इत्यस्यापरा व्याख्या।

---

भाख्यानर्थक्यवारणाय अन्नत्वं गौणमिति भाव। केन दोषेण तेषां देवभोग्यतेत्यत आह। अनात्मवित्त्वाच्चेति। यथा पशुर्भोग्य एवमज्ञः स इह भेदधीमान् देवानां भोग्य इत्यर्थः। आत्मशब्दस्य मुख्यत्वबलेन सूत्रार्थं व्याख्याय प्रकृतपञ्चाग्नयः सूत्रकृतात्मत्वेनोपचरिता इति व्याख्यान्तरमाह। अनात्मेत्यादिना। विद्यास्तुत्यर्थमन्नत्वं न मुख्यमित्यत्र

अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणो न ज्ञान-कर्मसमुच्चयानुष्ठायिनः। पञ्चाग्निविद्यामिहात्मविद्येत्युपचरन्ति प्रकरणात् पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुण-वादेनान्नत्वमुद्भाव्यते पञ्चाग्निविद्याप्रशंसायै। पञ्चाग्निविद्या इह विधित्सिता वाक्यतात्पर्यावगमात्। तथा हि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' इति। तथान्यदपि श्रुत्यन्तरं 'अथ ये शतं पि-तृणां *जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दो ये* कर्मणा देवत्वमभिसम्पद्यन्ते' इतीष्टादिकारिणां देवैः संवसतां भोगप्राप्तिं दर्शयति। एवं भाक्तत्वादन्नभाववचनस्येष्टादिका-रिणो जीवा रंहन्तीति प्रतीयते। तस्माद्रंहति सम्परिष्वक्त इति युक्तमेवोक्तं॥

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च॥ ८॥

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते 'तस्मिन् यावत्-सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमित्यारभ्य या-

---

श्रुत्यन्तरार्थं सूत्रशेषं व्याचष्टे। तथाहीति। एवं गतिपर्यालोचनया वैराग्यमिति सिद्धं॥

इदानीं गत्यन्तरभाविनीमागतिं निरूपयति। कृतात्यय इति। भोक्तव्यकर्मसमाख्यानन्तर्यमथशब्दार्थः। यथेतमित्यारभ्य श्वादियोनि-मित्यन्तं वाक्यं यावत्सम्पातदाम्नायत इति योजना। अत्र यावत्-

वद्रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिम्' इति। तत्रेदं विचार्यते किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्त्याहोस्वित्सानुशया इति। किन्तावत् प्राप्तं निरनुशया इति। कुतः यावत्सम्पातमिति विशेषणात्। सम्पातशब्देनात्र कर्माशय उच्यते। सम्पतन्त्यनेनास्माल्लोकादमुं लोक फलोपभोगायेति, यावत्सम्पातमुषित्वेति च कृत्स्नस्य तस्य तत्रैव भुक्ततां दर्शयति। 'तेषां यदा तत्पर्यवैति' इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते। स्यादेतत् यावदमुष्मिँल्लोके उपभोक्तव्य कर्म तावदुपभुङ्क्ते इति कल्पयिष्यामीति। नैवं कल्पयितुं शक्यते यत्किञ्चेत्यन्यत्र परामर्शात्। 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं। तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इत्यपरा श्रुति यत्किञ्चेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षयितता दर्शयति। अपि च प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जक। प्राक् प्रायणादारब्धफलेन कर्मणा प्रतिबन्धस्याभिव्यक्त्यनुपपत्तेः। तच्चाविशेषात् यावत् किञ्चिदनारब्धफल तस्य सर्वस्याभिव्यञ्जक, न हि साधारणे निमित्ते नैमित्तिकमसाधारण भवितुमर्हति। न ह्यविशिष्टे

सम्पातमिति विशेषणाद्रमणीयचरणा इति वाक्याच्च संशयमाह। तत्रेति। अनुशय कर्म, अत्र पूर्वपक्षे कर्माभावेनागतेरनियमात् वैराग्यादार्ढ्यं, सिद्धान्ते कर्मसत्त्वेनागतिनियमाद्वैराग्यदार्ढ्यमिति भेदः। तेषामिष्टादिकारिणां यदा तत्कर्म पर्यवैति विपरिक्षीणं भवति तदा पुनरावर्तन्त इति श्रुत्यन्तरेणापि कृत्स्नकर्मणश्चन्द्रलोके भुक्तत्वमुच्यते

प्रदीपसन्निधौ घटोऽभिव्यज्यते न पट इत्युपपद्यते। तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः। कृतात्ययेऽनुशयवानिति। येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसम्पर्कात् प्रविलीयते सवितृकिरणसम्पर्कादिव हिमकरके, हुतभुगर्चिःसम्पर्कादिव घृतकाठिन्यं। ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति। केन हेतुना दृष्टस्मृतिभ्यामित्याह। तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति 'तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा' इति। चरणशब्देनाचानुशयः सूच्यते इति वर्णयिष्यते। दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्य-

---

इत्यर्थः। यावत् पदसङ्कोचो न युक्तः श्रुत्यन्तरविरोधादित्याह। नैवमिति। अय नरो यत्किञ्चिदिह लोके कर्म करोति तस्यान्तं फलं परलोके प्राप्य कर्मार्थं पुनरायातीति श्रुत्यर्थः। कर्माभावे श्रुतिमुक्का युक्तिमाह। अपि चेति। अभिव्यक्तिः फलोन्मुखता, मरणेनाभिव्यक्तस्य सर्वस्य कर्मणः परलोकभोगस्यावश्यम्भावात् कर्माभाव इत्यर्थः। चरणाख्यशीलमात्रादवरोह इति प्राप्ते सिद्धान्तप्रतिज्ञां व्याचष्टे येनेत्यादिना। तत्रावरोहतां जीवानां मध्ये ये केचिदिह कर्मभूमौ रमणीयचरणाः पुण्यकर्माणः पुण्ययोनिभाज इति यत् अभ्याशो ह

भानः आकस्मिकत्वासम्भवादनुशयसद्भावं सूचयति। अभ्युदय-प्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात्। स्मृतिरपि वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रत्येक-कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त इति सानुशयानामेवावरोहं दर्शयति। कः पुनरनुशयो नामेति, केचित्तावदाहुः स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत्। यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते भाण्डानुसार्येव कश्चित् स्नेहशेषोऽवतिष्ठते तथानुशयोऽपीति। ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यं। नायं दोषः न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे। ननु निरवशेषकर्मफलोपभोगाय चन्द्र-मण्डलमारूढाः। बाढं। तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न शक्यते। यथा किल कश्चित् सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृप्तश्चिरप्रवासात् परिक्षीणबहूपकरण-

---

अवशय इत्यर्थः। कपूयं पापं। इष्टशब्दस्य श्रुतमर्थमुक्त्वार्थान्तरमाह। इष्टचेति। पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेत्यादिशास्त्रेण सुखदुःखयोर्धर्माधर्महेतुकत्वमवगतं। ततश्च जन्मारभ्य दृष्टो भोगः कर्महेतुकभोगत्वात् स्वर्गभोगवत् इत्यनुशयसिद्धिः। विपक्षे च हेत्वभावात् भोगस्याकस्मिकत्वप्रसङ्ग इत्यर्थः। स्मृता वा अन्याः चाश्रमिणः प्रेत्य मृत्वा लोकान्तरे कर्मफलं भुक्त्वा ततः शेषेण भुक्तादन्येन कर्मणा अनुशयाख्येन पुनर्जन्म प्रतिपद्यन्त इति सम्बन्धः। विशिष्टा देशादयो मेधान्ता दश गुणा येषु ते तथोक्ताः। श्रुतं ज्ञानं, वृत्तं आचारः। साभिमतानुशयं

च्छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोत्येवमनुशयलेशमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति। न चैतद्युक्तमिव, न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते कार्यविरोधित्वादित्युक्तं। नन्वेतदप्युक्तं न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भवतीति। तदेतदपेशलं। स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं जनयति स्वर्गच्युतस्यापि कश्चित् फललेशं जनयतीति न शब्दप्रमाणकानां ईदृशी कल्पनावकल्पते। स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते। तथा सेवकस्योपकरणलेशानुवृत्तिर्दृश्यते न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात्। अवश्यञ्चैतदेवं विज्ञेयं न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति। यदि हि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभूवन् तस्यैव कश्चिदेकदेशोऽनुशयः

---

वक्तुं पृच्छति। क पुनरिति। कृतस्य कर्मणः स्वर्गे भोगे सति भुक्तस्य कर्मणो लेशोऽनुशयस्तद्वानवरोहति, भाण्डे स्नेहलेशस्य दृष्टत्वात्। ततः श्लेषेणेति सूत्रस्यैकदेशिव्याख्यामाह। केचिदित्यादिना। रिच्यमानं स्नेहेन वियुज्यमानं। ननु भोगनाश्यत्वात कर्मणो लेशो न युक्त इति शङ्कते। नन्विति। कृत्स्नकर्मणो भोगे जाते नाशः स्यात् न तु भोगो जात इति परिहारार्थो भोगो न जायत इत्ययुक्तमिति शङ्कते। नन्विति। भोगः सावशेषो जात इति समाधत्ते। बाढमित्यादिना। इदमेकदेशिव्याख्यानं दूषयति। न चेति। स्वर्गकामो यजेतेत्यादिशास्त्रेण स्वर्गभोगार्थं कर्म चोदितं, तच्छेषस्य मर्त्यभोगहेतुत्वे शास्त्रवि-

कल्प्येत ततो रमणीय एवैकोऽनुशयः स्यान्न विपरीतस्तत्रेयमनुशयविभागश्रुतिरुपरुध्येत 'तद् य इह रमणीयचरणा अथ य इह कपूयचरणाः' इति। तस्मादामुष्मिकफले कर्मजाते उपभुक्ते अवशिष्टमैहिकफलं कर्मान्तरजातं अनुशयस्तद्वन्तोऽवरोहन्तीति। यदुक्तं यत्किञ्चेत्यविशेषपरामर्शात् सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति। नैतदेवं, अनुशयसद्भावस्यावगमितत्वात्। यत्किञ्चिदिह कृतमामुष्मिकफलं कर्मारब्धभोगं तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते। यदप्युक्तं प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति, तत्र केनचित् कर्मणामुष्मिन् लोके फलमारभ्यते केनचिदस्मिन्नित्ययं विभागो न सम्भवतीति। तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तं। अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति

---

रोध इत्यर्थः। किञ्च स्वर्गहेतुकर्मशेषादवरोहे कपूययोन्यापत्तिश्रुतिविरोध इत्याह। व्यवशयश्चेति। स्वाभिमतमनुशयमाह। तस्मादिति। पूर्वपक्षबीजमनूद्य दूषयति। यदित्यादिना। क्षपयित्वा पुनरागच्छतीति प्राप्यान्तमिति वाक्येन गम्यत इति योजना। जन्मारभ्य दृष्टभोगलिङ्गानुगृहीतया रमणीयकपूयचरणश्रुत्यैहिकानुशयाख्यकर्मविशेषपरया विरोधात यत्किञ्चेति यावत्सम्पातमिति च सामान्यशब्दयोरामुष्मिकविषयत्वेन सङ्कोचो न्याय्य इति भाव·। मरणं कृत्स्नकर्माभिव्यञ्जकमित्ययुक्तं उक्तानुशयश्रुतिविरोधादित्याह। तदपीति। बलवदनारब्धकर्मप्रतिबन्धाच्च न कृत्स्नकर्माभिव्यक्तिरित्याह। अपि चेत्यादिना। तस्य कृत्स्नकर्मव्यञ्जकत्वे हेतुर्नास्तीति भाव। प्रश्नमत्वोत्तरं प्रश्ने। आरब्धेति। आरब्धवदनारब्धस्यापि बलवत

वक्तव्यं। आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यदुच्येत तत्र वक्तव्यं, यथा तर्हि प्राक् प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिः, एवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासम्भवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति। न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन् प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुं, प्रतिनियतफलत्वविरोधात्, नापि कस्यचित् कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुं, ऐकान्तिकफलत्वविरोधात्। न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः सम्भाव्यते। स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति—

---

प्रतिबन्धकत्वात् न सर्वकर्मणः फलदानायाभिव्यक्तिरिति समाधत्ते। यथेति। अनारब्धफलत्वाविशेषात् सर्वकर्मणामभिव्यक्तिमाशङ्क्य मिथो विरुद्धस्वर्गनरकादिदेहफलानामेकदेहारम्भकत्वासम्भव उक्तस्तं विवृणोति। नहीति। अस्तु तर्हि दुर्बलस्य कर्मणो नाश इत्यत आह। नापीति। नाभुक्तं क्षीयते कर्मेत्यैकान्त उत्सर्गः, स च प्रायश्चित्तब्रह्मज्ञानाभ्यां निर्बाध्यते न मरणमात्रेणेत्यर्थः। मरणेन दुर्बलकर्माविनाशे मानमाह। स्मृतिरिति। कर्मनाशपक्षं निरस्य प्रकृतकृत्स्नकर्माभिव्यक्तिपक्षे दोषान्तरमाह। यदि चेति। कृत्स्नकर्मणामेकस्मिन् देवादिजन्मनि भोगेन क्षयात् न जन्मान्तरं स्यात् ज्ञानाभावात् न मुक्तिरित्यसद्देवस्य कष्टा दशा स्यादित्यर्थः।

"कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति।
*पच्यमानस्य संसारे यावद्दुःखाद्विमुच्यते"॥

इत्येवंजातीया। यदि च कृत्स्नमनारब्धफलं कर्म एकस्मिन् प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत ततः स्वर्गनरकतिर्यग्योनिषु अधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत। ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत। न च धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं सम्भावयितुं। न च दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभि-

"श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम्।
चण्डालपुक्कसानां च ब्रह्महा योनिमिच्छति"॥

इत्यादिस्मृतिविरोधाच्च न सर्वकर्मणामेकजन्मारम्भकत्वमित्याह। ब्रह्मेति। नन्वेकस्य कर्मणः कथमनेकजन्मफलकत्वं अदृष्टत्वादित्यत आह। न चेति। किञ्च व्यञ्जकत्वेऽपि मरणस्य किं सर्वकर्मव्यञ्जकत्वं कल्प्यते उत यत्किञ्चित्कर्मव्यञ्जकत्वं, नाद्य, इह कृतकारीर्यादेरन्यैव फलहेतोर्मरणाद्व्यङ्ग्यत्वासम्भवादित्याह। न चेति। द्वितीयं निरस्यन् परोक्तं दृष्टान्तं विघटयति। प्रदीपेति। रूपाणां प्रदीपवत् मरणं न कस्यचिदपि कर्मणो व्यञ्जकं किन्तु प्रबलकर्मप्रतिबन्धाभावे दुर्बलं व्यज्यत इत्यर्थः। एवं मरणस्य व्यञ्जकत्वानङ्गीकारेण दीपदृष्टान्तो निरस्तः, अङ्गीकारेऽप्यननुकूलो दृष्टान्त इत्याह। स्थूलेति। सूक्ष्ममनुद्भूतरूपमिति मरणे सर्वकर्माभिव्यक्त्यसिद्धिरिति शेषः। एवं सर्वकर्मसङ्घ एकजन्मारम्भ इत्यैकभविकः कर्माशय इति मतनिरासमुपसंहरति। तस्मादिति। चरणश्रुत्या तत शेषेणेत्यादिस्मृत्या प्रबलप्रतिबन्धादितिन्यायेन चानभिव्यक्तकर्मसद्भावादित्यर्थः। ननु मुक्त्यनुपपत्त्याऽङ्गीकार्यं एकभविकत्वमित्यत आह। शेषेति। सूत्रशेषं व्याचष्टे। ते चेत्यादिना।

* पच्यमानस्येति मे० सर्व० का०।

व्यञ्जकं *सम्भवतीत्येषापि कीयं प्रायणस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः, स्थूलसूक्ष्मरूपाभिव्यक्तिवद्वेदं द्रष्टव्यं। यथा हि प्रदीपः समानेऽपि सन्निधाने स्थूलरूपमभिव्यनक्ति न सूक्ष्मं, एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति न दुर्बलस्येति। तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः, शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने सम्भ्रमः सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः। तस्मात् स्थितमेतदनुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्ति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे सङ्कीर्तनात् यथेतशब्दाच्च यथागतमिति प्रतीयते, राध्याद्यसङ्कीर्तनादभ्राद्युपसङ्ख्यानाच्च विपर्ययोऽपि प्रतीयते॥

---

अवरोहमार्गं इत्थं श्रूयते 'तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते अतो वै दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तद् य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते' इति। धूमाभ्रनां यथेतं यथागतं तथेतमध्वानं पुनरायान्तीत्युक्ता धूमादिरूपपितृमार्गस्य राध्यादिकं नोक्तं अधिकं चाभ्रादिकमुक्तमिति मत्वा सूत्रकृतोक्तं यथेतमनेवञ्चेति। अवशिष्टश्रुत्यर्थोऽपि स्फुटीभविष्यति॥

---

* सम्भवतीत्यत्राधिकेयमिति वर्ध०।

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

अथापि स्यात् या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता 'तद् य इह रमणीयचरणाः' इति सा खलु चरणाद्योन्यापत्तिं दर्शयति नानुशयादन्यच्चरणमन्योऽनुशयः, चरणञ्चारित्रमाचारः शीलमित्यनर्थान्तरं। अनुशयस्तु भुक्तफलात् कर्मणोऽतिरिक्तं कर्माभिप्रेतं। श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति। 'यथाचारी तथा भवति' इति 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' इति च। तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेन्नैष दोषः। यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्यादेतत्, कस्मात् पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते। ननु शीलस्यैव तु श्रौतस्य विहित-

---

सम्प्रति श्रुतिस्थचरणशब्दमाक्षेपपूर्वकं सूत्रकृद्व्याचष्टे। चरणादिति चेदिति।

"अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानञ्च शीलमेतद्विदुर्बुधाः" ॥ इति—

स्मृतावक्रोधादयः शास्त्रार्थज्ञानरूपं शीलं सर्वकर्माङ्गमुक्तं तद्बोधकं चरणपदमङ्गिनः श्रौतादिकर्मणो लक्षकं 'कर्मण एवोत्तरावस्था धर्माधर्माख्यापूर्वं' इति कर्मलक्षणयैव तदभिन्नापूर्वाख्यानुशयसिद्धिरिति कार्ष्णाजिनिमतं ॥

तदेव शङ्कासमाधानाभ्यामाह। आनर्थक्यमिति चेदित्यादिना सूत्रेण। चरणशब्दवाच्यस्यैव ग्रहणसम्भवानुपलक्षणा युक्तेति शङ्कितेव

प्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति, अवश्यं च शीलस्यापि किञ्चित् फलमभ्युपगन्तव्यं। अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत्। नैष दोषः। कुतस्तदपेक्षत्वात्। इष्टादि हि कर्मजातं चरणापेक्षं। न हि सदाचारहीनः कश्चिदधिकृतः स्यात्। 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः। पुरुषार्थत्वादप्याचारस्य नानर्थक्यं। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेच एवाचारस्तत्रैव कञ्चिदतिशयमारप्स्यते। कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः, तस्मात् कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतं। न हि कर्मणि सम्भवति शीलाद्योन्यापत्तिर्युक्ता। न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति॥

---

सूते। नन्विति। प्रतिषिद्धं शीलं क्रोधानृतादिरूपं। किञ्च शीलस्य विफलत्वायोगाच्छ्रुतयोन्यापत्तिस्तस्यैव फलं नानुशयस्येत्याह। अवश्यञ्चेति। वेदास्तदर्थकर्माण्याचारं विना न फलन्तीति स्मृत्या शीलस्य कर्माङ्गत्वान्न पृथक्फलापेक्षा अङ्गिफलेनार्थवत्त्वात्। न चाङ्गमात्राद्योन्यापत्तिः फलमिति वाच्यं। अङ्गस्य फलासम्भवेन मुख्यार्थस्याचारस्य ग्रहणायोगात्तल्लक्षणा युक्तेति समाधानार्थः। यद्याचारस्य स्नानादिवत् पुरुषसंस्कारतया पुरुषार्थत्वं तदाप्यविरोध इत्याह। पुरुषार्थत्वेऽपीति। अङ्गावबद्धोपास्तिवदाचारोऽर्थवानित्यर्थः। अस्तु तर्हि शीलाख्याचारादेव योन्यापत्तिरित्याशङ्क्य पुण्यो वै पुण्येन कर्मणेत्यादि श्रुत्यादिविरोधान्नैवमित्याह। कर्म चेति। कार्यसामान्यः शब्दो यद्यपि क्रोधादिरूपं शीलं साधारणधर्मात्मकं विशेषरूपात् कर्मणोऽभिन्नं तथापि चरणाचारशब्दौ कर्मवाचिनावेव न शीलवाचकाविति न लक्षणावसर इति बादरिमतं॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरं। तथा ह्यविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते। यो हीष्टादिलक्षणं पुण्यं कर्म करोति, तं लौकिका आचक्षते धर्मञ्चरत्येष महात्मेति। आचारोऽपि धर्मविशेष एव, भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते। तस्माद्रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निन्दितकर्माण इति निर्णयः ॥

## अनिष्टादिकारिणामपि च श्रुतं ॥ १२ ॥

इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तं। *ये त्वितरेऽनिष्टादिकारिणस्तेऽपि किं चन्द्रमसं गच्छन्ति उत न गच्छन्तीति चिन्त्यते। तत्र तावदाह। इष्टादिकारिण एव चन्द्रमसं गच्छन्ती-

---

मुख्यसिद्धान्तमाह। सुकृतेति। चरणशब्दार्थमुपसंहरति। आचारोऽपीति। कर्मण एवाचारत्वे यथाकारीत्यादिभेदोऽस्ति कथमित्यत आह। भेदव्यपदेश इति। निरुपपदाचारशब्दात् सदाचाररूपो विशेषो भाति अतस्तत्समभिव्याहृत कर्मसामान्यवाचको यथाकारीतिशब्दस्तदितरविशेषपरः, एवमनवद्यानि कर्माणीति सामान्यत', अस्माकं सुचरितानीति विशेष इति विवेक, तस्मादनुशयबलादागत्यावरोहभावानुसन्धानाद्वैराग्यमिति सिद्धं ॥

एव पुण्यात्मनां गत्यागतिचिन्तया वैराग्यं निरूप्य पापिनां तच्चिन्तया सन्निरूपयति। अनिष्टादिकारिणामपीति। ये के चेत्यविशेषश्रुतेर्वैवस्वतं सङ्गमनं जनानामिति श्रुतेश्च संशये प्रथमाधिकरणेन सिद्ध-

---

* ये त्वितरे इष्टादिभ्य इति पर्थ० का०।

व्येतन्न, कस्मात्, यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतं। तथा ह्यविशेषेण कौषीतकिनः समामनन्ति 'ये वै केचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति। देहारम्भोऽपि च पुनर्जायमानानां नान्तरेण चन्द्रप्राप्तिमवकल्प्येत, पञ्चम्यामाहुतावित्याहुतिसङ्ख्यानियमात्, तस्मात् सर्व एव चन्द्रमसमासीदेयुः। इष्टादिकारिणामितरेषाञ्च समानगतित्वं न युक्तमिति चेत्, न, इतरेषां चन्द्रमण्डले भोगाभावात्॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्॥ १३॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति सर्वे चन्द्रमसं गच्छन्तीति। कस्मात्, भोगायैव हि चन्द्रारोहणं न निष्प्रयोजनं नापि प्रत्यवरोहायैव, यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानाय न निष्प्रयोजनं नापि पतनायैव। भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तं, तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे। इतरे तु संयमनं यमालयमवगाह्य स्वदुष्कृतानु-

---

नियमाक्षेपसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे। तथेत्यादिना। यमदाज्ञं पापिजनानां सम्यग्गम्यं, ह्रविषा स्वीयां पततीति श्रुत्यर्थः। पूर्वपक्षे पुण्यवतामेव चन्द्रगतिरिति नियमाभावात् पुण्यवैयर्थ्यं पापाद्वैराग्यदार्ढ्यं चेति फलं, सिद्धान्ते पापिनां चन्द्रलोकदर्शनमपि नास्तीति पुण्यार्थत्वं वैराग्यदार्ढ्यं चेति फलं, पञ्चमाग्नौ देहारम्भ इति नियमात् पापिनामपि प्रथमद्युलोकाभिप्राप्तिर्वाच्येत्याह। देहारम्भ इति। पापिनां स्वर्गभोगाभावेऽपि मार्गान्तराभावाच्चन्द्रगतिरिति भावः॥

सिद्धान्तसूत्रं व्याचष्टे। तुशब्द इत्यादिना। संयमने यमलोके यमकृता

रूपा यामीर्यातनाः अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति, एवम्भूतौ तेषामारोहावरोहौ भवतः। कुतः तद्गतिदर्शनात्। तथा हि। यमवचनस्वरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति—

'न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढं।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे'॥

इति। 'वैवस्वतं सङ्गमनं *जनानां' इत्येवंजातीयकञ्च वक्ष्येव यमवश्यताप्राप्तिलिङ्गं भवति॥

स्मरन्ति च॥१४॥

अपि च मनुव्यासप्रभृतयः शिष्टा संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु॥

†अपि च सप्त॥१५॥

अपि च सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः, ताननिष्टादिकारिणः प्राप्नुवन्ति, कुतस्ते चन्द्रं प्राप्नुयुरित्यभिप्रायः। ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति, नेत्याह॥

---

यातनाः अनुभूयावरोहन्तीत्येवं आरोहावरोहाविति योजना सूत्रस्य ज्ञेया। यमवश्यतां मत्वा गच्छतां। सम्यक् परस्तात् प्राप्यत इति संपरायः परलोकः, तदुपायः साम्परायः, बालमज्ञं, विशेषतो वित्तरागेण मूढं मोहात् प्रमादं कुर्वन्तं प्रति न भाति। स च बालोऽयं स्त्रीवित्तादिर्लोकोऽस्ति न परलोकोऽस्तीति मानी स मे मम यमस्य वशमाप्नोतीत्यर्थः॥

---

* जनानां यमराजं हविषेति मे० का० वर्ध०। † अपि सप्तेति का० वर्ध०।

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः। यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पञ्चाग्निविद्यायां 'वेत्थ यथासौ लोको न सम्पूर्यते' इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते, 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' इति। तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत्। कस्मात् प्रकृतत्वात्। विद्याकर्मणी हि देवयानपितृयानयोः पथोः प्रतिपत्तौ प्रकृते। 'तद् य इत्थं विदुः' इति विद्या तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः, इष्टापूर्ते दत्तमिति कर्म तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः, तत्प्रक्रियायामथैतयोः पथोर्न

---

पापिनां यमवश्यतावादिविशेषश्रुतिस्मृतिबलात् 'ये वै के च' इत्यविशेषश्रुतिरिष्टादिकारिविषयत्वेन व्याख्येयेति भावः ॥

सूत्रत्रयस्य भाष्यं सुबोधं ॥

यदुक्तं मार्गान्तराभावात् पापिनामपि चन्द्रगतिरिति तन्न, तृतीयमार्गश्रुतेरित्याह। विद्याकर्मणोरिति। मार्गद्वयोक्त्यनन्तरं तृतीयमार्गोक्तिसमारम्भार्थं श्रुतावथशब्दः। एतयोर्विद्याकर्मणोः पथिद्वयसाधनयोरन्यतरेणापि साधनेन ये नरा न युक्तास्ते जन्ममरणावृत्तिरूपतृतीयसर्गस्थानि भूतानि भवन्ति, क्रियावृत्तौ लोट्, तेन

कतरेण च नेति श्रुतं। एतदुक्तं भवति, ये च न विद्यासाधनेन देवयाने पथ्यधिकृता. नापि कर्मणा पितृयाने तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीय पन्था भवतीति, तस्मादपि नानिष्टादिकारिभिश्चन्द्रमाः प्राप्यते। स्यादेतत्, तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्व प्रतिपद्यन्ते इति, तदपि नास्ति, आरोहानर्थक्यात्। अपि च सर्वेषु प्रयत्सु चन्द्रलोक प्राप्नुवत्स्वसौ लोकः प्रयद्भि सम्पूर्येतेत्यत प्रश्नविरुद्ध प्रतिवचनं प्रसज्येत। तथाहि प्रतिवचन दातव्य यथासौ लोको न सम्पूर्यते। अवरोहाभ्युपगमादसम्पूरणोपपत्तिरिति चेत्, न, अश्रुतत्वात्। सत्य अवरोहादप्यसम्पूरणमुपपद्यते। श्रुतिस्तु तृतीयस्थानसङ्कीर्तनेनासम्पूरण दर्शयति 'एतत् तृतीयं स्थान तेनासौ लोको न सम्पूर्यते' इति। तेनानारोहादेवासम्पूरणमिति युक्त। अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात्। तुशब्दस्तु शाखान्तरीयवाक्यप्रभवामशेषगमनाशङ्कामुच्छिनत्ति, एव सत्यधिकृतापेक्ष शाखान्तरीये

---

पापिनां चन्द्रगत्यभावाच्चन्द्रलोको न सम्पूर्यत इति श्रुत्यर्थः। प्रतिपत्ताविति प्राप्तिसाधने इत्यर्थः। अपि च पापिनां चन्द्रगतौ 'असौ लोक सम्पूर्येत अतस्य न सम्पूर्यते' इत्येतत्प्रतिवचनं विरुद्ध प्रसज्येतेत्यन्वय। अवरोहादसम्पूरणमश्रुत न कल्प्य श्रुतहान्यापत्तेरित्याह। नाश्रुतत्वादिति। अवरोह एव तृतीय स्थान श्रुत्युक्तमित्यत आह। अवरोहस्येति। इममध्वानं पुनर्निवर्तन्त इति इष्टादिकारिणामवरोहोक्तेरनिष्टादिकारिणामपि अवरोहस्यार्थसिद्धत्वात् पुनरुक्तिर्व्यर्थेत्यर्थः। अपेतयोरिति गामीभ्रटोपक्रमबाधकृतौ सशब्दबाधश्चेत्यत आग-

वाक्ये सर्वशब्दोऽवतिष्ठते 'ये वै केचिदस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति। यत्पुनरुक्तं देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति पञ्चम्यामाहुतावित्याहुतिसङ्ख्यानियमादिति तत्प्रत्युच्यते॥

## न तृतीये तथोपलब्धेः॥१८॥

न तृतीये स्थाने देहलाभाय पञ्चसङ्ख्यानियम आहुतीनामादर्तव्यः। कुतः, तथोपलब्धेः। तथा ह्यन्तरेणैवाहुतिसङ्ख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते 'जायस्व म्रियस्व' इत्येतत् तृतीयं स्थानमिति। अपि च 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति मनुष्यशरीरहेतुत्वेनाहुतिसङ्ख्या संकीर्त्यते न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात्। अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते नापञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात्, तत्र येषामारोहावरोहौ सम्भवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यत्यन्येषां तु विनैवाहुतिसङ्ख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरभ्यते॥

---

शब्दो मार्गजत्वञ्च इति अर्थः। एवमविशेषश्रुतेर्मार्गाभावाच्चेति पूर्वपक्षबीजद्वयं निरस्य तृतीयबीजनिरासार्थं सूत्रमाह। यत्पुनरित्यादिना॥

विद्याकर्मशून्यानां कृमिकीटादिभावेन जायस्वेत्यादिश्रुत्या निरन्तरजन्ममरणोपलब्धेर्नाहुतिसङ्ख्यादर इत्यर्थः। पुरुषशब्दाच्चैवमित्याह। अपि चेति॥

## स्मर्य्यतेऽपि च लोके ॥ १९ ॥

अपि च स्मर्य्यते लोके द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनाञ्चायोनिजत्वं, तत्र द्रोणादीनां योषिद्विषयैकाहुतिर्नास्ति, धृष्टद्युम्नादीनान्तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः। यथा च तत्राहुतिसङ्ख्यानादरो भवति एवमन्यत्रापि भविष्यति। बलाकाप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति लोके रूढिः ॥

## दर्शनाच्च ॥ २० ॥

अपि च चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्तिदर्शनादाहुतिसङ्ख्यानादरो भवति, एवमन्यत्रापि भविष्यति। ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति 'आण्डजं जीवजमुद्भिज्जमिति' अत्र त्रिविध एव भूतग्रामः श्रूयते कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमित्यत्रोच्यते ॥

---

मनुष्यदेहस्याऽपि नाहुतिसङ्ख्यानियम इत्याह। अपि चेत्यादिना। विधिनिषेधरूपार्थद्वये वाक्यभेदः स्यादित्यर्थः। अनियमे स्मृतिसंवादार्थं सूत्रं। स्मर्य्यतेऽपीति। लोक्यतेऽनेनेति लोको भारतादिरुक्तः। मुख्यार्थमप्याह। बलाकेति ॥

अण्डजानि च जरायुजानि च स्वेदजानि च उद्भिज्जानीति च्छेच्छुं-त्यवष्टम्भेन सूत्रं व्याचष्टे। अपि चेति। अन्यत्राप्यनियमादिकारि-निदर्शः। अनया श्रुत्या चातुर्विध्यं कथमुक्तं ग्रन्थकारेण त्रीण्येवेत्यवधारणविरोधादिति शङ्के। सरलेन सूत्रमादत्ते। नन्वित्यादिना ॥

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः, उभयोरपि स्वेदजोद्भिज्जयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः॥

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

इष्टादिकारिणश्चन्द्रमसमारुह्य 'तस्मिन् यावत्सम्पातमुषित्वा ततः सानुशया अवरोहन्ति' इत्युक्तं, अथावरोहप्रकारः परीक्ष्यते। तत्रेयमवरोहश्रुतिर्भवति 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति। तत्र संशयः किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते किं वाकाशादिसाम्यमिति। तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्त इति। कुतः, एवं हि श्रुतिर्भवति, इतरथा-

---

जीवजं जरायुजं मनुष्यादि, भूमिमुद्भिद्य जायते वृक्षादिकं, उदकं भित्त्वा जायते यूकादिजङ्गममिति भेदः। संशोकः स्वेदः॥

एवं पापिनां गत्यागती विचार्य सम्पातीष्टादिकारिणामवरोहे विशेषमाह। साभाव्यापत्तिरुपपत्ते.। यथेतमनेवं चेत्युक्तरीत्या यथागतं धूमाद्यध्वानं पुनर्निवर्तन्ते, निवृत्ताश्चानुशयिनः कर्मान्ते द्रुतदेहाश्चाकाशं गताः आकाशसदृशा भवन्ति। आकाशसादृश्यानन्तरं पिण्डीकृता अतिसूक्ष्मलिङ्गोपहिताः वायुनेतस्ततश्च नीयमाना वायुसमा भवन्ति। सानुशयः सद्यो वायुसमो भूत्वा धूमं गतस्तत्समो भवति, धूमसमो भूत्वाऽभ्रसमो भवति। अपो बिभर्तीत्यभ्रं, मेहति सिञ्चतीति वृष्टिकर्ता मेघस्तत्समो भूत्वा वर्षधारादारा पृथिवीं प्रविश्य व्रीहियवादिरूपो

लक्षणा स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या न लक्षणा, तथा च 'वायुर्भूत्वा धूमो भवति' इत्येवमादीन्यक्षराणि तत्तद्रूपोपपत्तावेव कल्प्यन्ते, तस्मादाकाशादिस्वरूपोपपत्तिरित्येवं प्राप्ते ब्रूमः, आकाशादिसाम्यं प्रतिपद्यन्त इति। चन्द्रमण्डले यदम्मयं शरीरं उपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमम्भवति ततो वायोर्वशमेति ततो धूमादिभिः संसृज्यत इति। तदेतदुच्यते 'यथेतमाकाशमाकाशाद्वायुमित्येवमादिना। कुतः, एतदुपपत्तेः। एवं ह्येतदुपपद्यते, न ह्यन्यस्यान्यभावो मुख्य उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते। विभुत्वाच्चाकाशेन नित्यसम्बन्धत्वान्न तत्सादृश्यापत्तेरन्यस्तत्सम्बन्धो घटते। श्रुत्यसम्भवे च लक्षणाश्रयणं न्याय्यमेव, अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते॥

---

भवतीति सिद्धान्तगत्या श्रुत्यर्थः। पूर्वान्तरयुक्तिरियं संशयबीजं मन्तव्यं, पूर्वत्र मार्गद्वयं उत्क्रान्तीयत्वोक्तेर्युक्तं स्थानशब्दस्य मार्गलक्षकत्वमिह दुग्धं दधि भवतीत्यादिप्रयोगे भवति श्रुतेर्विकारस्वरूपापत्तौ मुख्यत्वात् सादृश्यापत्तिलक्षणाबीजं नास्तीति प्रत्युदाहरणसङ्गतिः। श्रुतिमुख्यत्वं फलमिति पूर्वपक्षः। अनुशयिनां पूर्वसिद्धाकाशादिस्वरूपापत्त्ययोगाल्लक्षणेति सिद्धान्तयति। एवमित्यादिना। समानो भावो धर्मो यस्य तद्भावः साभाव्यं साम्यमिति सूत्रपदार्थः। एवं ह्येतदिति एतद्वचनमेवंसादृश्यरूपमेवोपपद्यत इत्यर्थः। अनुशयिनामाकाशादिभ्यो निर्गमनान्यथानुपपत्त्यापि सादृश्यलक्षणेत्याह। आकाशस्वरूपेति। संयोगलक्षणामाशङ्क्याह। विभुत्वादिति। भवतिश्रुत्या संयोगलक्षणाया अनुवादः स्यादित्यर्थः। विविधभूतसाम्यमवरोहे भवतीत्यनुसन्धानाद्वैराग्यमुपसंहरति। अत इति॥

## नातिचिरेण विशेषात् ॥ २३ ॥

तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशय: किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति उताल्पमल्पमिति। तत्रानियमो नियमकारिण: शास्त्रस्याभावात् इत्येवं प्राप्त इदमाह। नातिचिरेणेति। अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभि: सहेमां भुवमापतन्ति। कुत एतत् विशेषदर्शनात्। तथा हि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि 'अतो वै खलु दुर्निष्प्रपतरम्' इति। तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्य:। दुर्निष्प्रपतरं दुर्निष्क्रमतरं दु:खतरमस्मात् व्रीह्यादिभावान्नि:सरणं भवतीत्यर्थ:। तदत्र दु:खं निष्प्रपतनं प्रदर्शयन् पूर्वेषु सुखं निष्प्रपतनं दर्शयति। सुखदु:खताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्त:, तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासम्भवात्, तस्मात् व्रीह्यादिभावापत्ते: प्रागल्पेनैव कालेनावरोह: स्यादिति ॥

---

नातिचिरेण। उक्तं सादृश्यमुपजीव्य लोके गन्तृणां चिराचिरगतिदर्शनात् संशयं वदन् पूर्वपक्षयति। तत्रेत्यादिना। अनियमात् कदाचिद्विलम्बेन योन्यापत्तिरिति पूर्वपक्षफलं, सिद्धान्ते तु व्रीहियवादिभावादनुशयिना विलम्बेन निर्गमनमिति विशेषादाकाशादिभावाच्छीघ्रं निर्गम इत्यविलम्बेन योन्यापत्तिरित्यनुसन्धानाद्वैराग्यदार्ढ्यमिति विवेक:। नन्वाकाशादिष्वनुशयिना सुखं व्रीहियवादिषु दु:खमिति दु:शब्दाद्भाति न चिराचिरनिर्गमनमित्यत आह। सुखदु:खताविशेषश्चायमिति। अवधि: काल: ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति। तत्र संशयः किमस्मिन्नेवावधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो भवन्त्याहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति। किं तावत् प्राप्तं स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति। कुत एतत्, जनेर्मुख्यार्थत्वोपपत्तेः, स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः, पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः तस्मान्मुख्यमेवानुशयिनां व्रीह्यादिजन्म-

---

अन्याभिलापात् श्रुतिक्रमात् अर्थक्रमाच्चाधिकरणानां क्रमो बोध्यः। इह भूमौ वर्षधाराद्वारा पतितास्तेऽनुशयिनो व्रीह्यादिसाम्येन जायन्त इति श्रुत्यर्थः। अत्र जायन्त इति श्रुतेः पूर्वत्राकाशादिवर्षान्तसादृश्योक्तिवच्च संशयमाह। तत्रेति। अस्मिन्नवधौ वर्षसादृश्यानन्तरमित्यर्थः। दुर्निष्प्रपतरशब्देन चिरनिर्गमनलक्षणोक्ता न युक्ता दुःखेन निर्गमनमिति मुख्यसम्भवादित्याक्षेपसङ्गत्या पूर्वपक्षयति। किन्तावदित्यादिना। अत्र पूर्वपक्षे स्थावरत्वनिवृत्तयेऽधिकारिणा यत्नगौरवं, सिद्धान्ते व्रीह्यादिसंश्लेषमात्रं परिहर्तुं यत्नलाघवमवैधर्म्यञ्चेति विवेकः। ननु देहोत्पत्त्या जीवानां जन्म स्यान्न स्वत', व्रीह्यादेस्तु न देहत्वमित्यत आह। स्थावरभावस्येति। 'स्थाणुमन्येऽनुसंयन्ति' इत्याद्या श्रुतिः। 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इत्याद्या स्मृतिः। ननु स्वर्गिणां पापाभावात् कथं स्थावरत्वं तत्राह। पश्विति। सोमाद्युच्छिष्टभक्षणसुरापशार्वादिशब्दार्थः। क्रत्वर्थहिंसादेरपि हिंसात्वादिसामान्येन प्रवृत्ते-

श्वादिजन्मवत्। यथा श्वयोनिं वा शूकरयोनिं वा चण्डाल-
योनिं वेति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं
भवति एवं व्रीह्यादिजन्मापीत्येवं प्राप्ते ब्रूमः। अन्यैर्जीवैर-
धिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते न
तत्सुखदुःखभाजो भवन्ति पूर्ववत्। यथा वायुधूमादिभावो-
ऽनुशयिनां तत्संश्लेषमात्रमेवं व्रीह्यादिभावोऽपि जातिस्थावरैः
संश्लेषमात्रं। कुत एतत्, तद्वदेवेहाप्यभिलापात्। कोऽभि-
लापस्य तद्भावः कर्मव्यापारमन्तरेण सङ्कीर्तनं यथाका-
शादिषु प्रवर्षणान्तेषु न कञ्चित् कर्मव्यापारं परामृशत्येवं
व्रीह्यादिजन्मन्यपि। तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनां।
यत्र तु सुखदुःखभाक्त्वमभिप्रैति परामृशति तत्र कर्मव्यापारं
रमणीयचरणाः कपूयचरणा इति। अपि च मुख्येऽनुशयिनां
व्रीह्यादिजन्मनि व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु भज्यमानेषु
पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः,

---

नं हिंस्यादित्यादिशास्त्रनिषिद्धत्वाकारेण दुरितापूर्वकारित्वमविरुद्ध-
मिति साङ्ख्या आहुः। श्रुतौ तु व्रीह्यादिभावोऽनुशयिनां न जन्मरूपः
कर्मविशेषपरामर्शं विनाचोक्तत्वात् पूर्वोक्ताकाशादिभाववदिति सि-
द्धान्तयति। एवं प्राप्त इत्यादिना। पूर्ववदिति पद दृष्टान्तत्वेन हेत्व-
शत्वेन च व्याख्यातं, यदत्रप्रकरणे कर्मविशेषपरामर्शपूर्वकमुच्यते तज्ज-
न्मेति व्यतिरेकदृष्टान्तमप्याह। यत्र त्विति। अपि च 'यो यो ह्यन्नमत्ति
यो रेतः सिञ्चति तद्रूप एव भवति' इति वाक्यशेषे व्रीह्यादिषु
प्रविष्टस्यानुशयसङ्घस्य न दारारेतःसिक्पुरुषयोगः श्रुत' तदन्यथा-
नुपपत्त्यापि जन्मश्रुतिर्न मुख्येत्याह। अपि चेत्यादिना। व्रीह्यादिरू-

यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने प्रवसति इति प्रसिद्धं। तच्च व्रीह्यादिभावाद्देहेतःसिभावोऽनुशयिनां नाभिलष्येत, अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति। एतेन जनेर्मुख्यार्थत्वं प्रति ब्रूयात्, उपभोगस्थानत्वञ्च स्थावरभावस्य। न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे, भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानामेतदुपभोगस्थानं। चन्द्रमसस्त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे॥

## अशुद्धमिति चेन्न शब्दात्॥ २५॥

यत्पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवेहानुशयिनां व्रीह्यादिजन्मास्तु तत्र गौणी कल्पनाऽनर्थिकेति, तत्परिह्रियते। न

---

पदहनाशे देहिनामुत्क्रान्तेरवश्यम्भावाद्देहेतःसिभ्योगो न स्यादित्यर्थः। एतेनेति उक्तानुमानार्थापत्तिभ्यां। जायत इति श्रुतेर्मुख्यार्थत्वमनुशये भोगायतनत्वञ्च व्रीह्यादेः प्रति ब्रूयादित्यर्थः। ननु व्रीह्यादेर्भोगायतनत्वानङ्गीकारे पूर्वोक्तश्रुतिस्मृतिप्रवृत्तिबाध इत्यत आह। न चेति॥

वैदिकं कर्माशुद्धं न भवति शास्त्रविहितत्वादिति सूत्रार्थं प्रपञ्चयति। अथ धर्म इत्यादिना। शुचौ देशे प्रातःसायङ्काले जीवनादिनिमित्तं कृतमग्निहोत्रं धर्मो भवति स एवाशुचिदेशे मध्यरात्रे मरणादिनिमित्ते कृतः सन्नधर्मो भवतीति निर्णयः शास्त्रैकसाध्य इत्यर्थः। तत किन्तत्राह। शास्त्राच्चेति। ननु या हिंसा सोऽधर्म इत्युत्सर्गस्य विशेषविधिना बाधोऽत्र न युक्तः! नाभिचरेदिति निषिद्धश्ये-

शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य। अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणमतीन्द्रियत्वात् तयोरनियतदेशकालनिमित्तत्वाच्च। यस्मिन् देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेष्वधर्मो भवति, तेन न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति। शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितं, स कथमशुद्ध इति शक्यते वक्तुं। ननु न हिंस्यात् सर्वभूतानीति शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति। बाढं, उत्सर्गस्तु सः, अग्नीषोमीयं पशुमालभेतेति अपवादः, उत्सर्गापवादयोश्च व्यवस्थितविषयत्वं। तस्माद्विशुद्धं वैदिकं कर्म शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वाच्च। तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वं। न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति। तद्धि कपूयचरणानधिकृत्योच्यते, नैवमिह

---

नस्य पुरुषार्थत्ववत् निषिद्धहिंसादेरपि क्रतूपकारकत्वाविरोधादिति तत्राह। उत्सर्गापवादयोरिति। अयमर्थः काम्ये कर्मणि सर्वत्र करणांशे रागतः प्रवृत्तिः अङ्गेषु विधित इति स्थितिः। तथा च श्येनाख्ये कर्मणि निषेधापरोधप्राबल्यात् प्रवृत्तिः स्यात् क्रत्वङ्गहिंसादौ तु विधित एव प्रवृत्तिर्वाच्या। स च विधिर्यद्युत्सर्गप्राप्तं अनर्थहेतुत्वं न बाधेत तर्हि प्रवर्तको न स्यात्, प्रवर्तकत्वे वा विधिरनर्थाय स्यात, अतो निरवकाशो विधिः सावकाशमुत्सर्गमविहितहिंसादिषु स्थापयतीति। इदञ्च निषेधशास्त्रस्य हिंसात्वादिसामान्येन प्रवृत्तिमङ्गीकृत्योक्तं। वस्तुतस्तस्य रागप्राप्तहिंसाविषयत्वाद्वैधहिंसायामप्रवृत्तेर्नाशुद्धत्वशङ्कावसर इति द्रष्टव्यं। प्रतिरूपं दुःखरूपं तस्य फलं नेति योजना। इह व्रीह्या-

शेषिकः कश्चिदधिकारोऽस्ति, अतश्चन्द्रमस्त्वात् स्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते ॥

रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावो यत्कारणं व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इति। न चात्र मुख्यो रेतःसिग्भावः सम्भवति। चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति कथमिवानुपचरिततद्भावमन्नमद्यमानानानुगतोऽनुशयी प्रतिपद्येत। तत्र तावदवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः तद्वत् व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः ॥

योनेः शरीरं ॥ २७ ॥

अथ रेतःसिग्भावानन्तरं योनौ निषिक्ते रेतसि योनेरधि शरीरमनुशयिनामनुशयफलोपभोगाय जायत इत्याह शास्त्रं

---

दिभावे कश्चिदधिकारः कर्मपरामर्शो नास्तीत्युक्तं। अथ व्रीह्यादिभावानन्तरं रेत.सिग्भावः श्रुतः। तत्रान्नस्थानुशयिनो रेतःसेककर्तृत्वायोगाद्योगमात्रं वाच्यं तद्वदनुशयक्रमेऽपि योग एवास्थेयः, अन्यथोपक्रमोपसंहारयोः विरोधः स्यादिति मत्वोक्तमित्यविरोध इति योनेः शरीरश्रुतेर्न व्रीह्यादिशरीरत्वमनुशयिनामिति सूत्रार्थः।

एवं कर्मिणां गत्यागतिसंसारो दुर्वार इत्यनुसन्धानात् कर्मफला-

'तद् य इह रमणीयचरणाः' इत्यादि, तस्मादप्यवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति, तस्मात् व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धं ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीशङ्करभगवत्पादकृतौ तृतीयाध्यायस्य प्रथमः पादः ॥

---

वैराग्यतत्त्वज्ञानसाधनं सिद्धमिति पादार्थमुपसंहरति। इति सिद्धमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमद्गोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां तृतीयाध्यायस्य प्रथमः पादः ॥

ॐ परमात्मने नमः ।

---

## सन्ध्ये सृष्टिराह हि ॥ १ ॥

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः, इदानीं तस्यैवावस्थाभेदः प्रपञ्च्यते । इदमामनन्ति 'स यत्र प्रस्वपिति' इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' इत्यादि । तत्र संशयः किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिरा-

---

ॐ वेदव्यासाय नमः ।

सन्ध्ये सृष्टिराह हि । उक्तवैराग्यसाध्यस्त्वंपदार्थविवेको वाक्यार्थज्ञानसाधनमस्मिन् पादे निरूप्यत इति पादयोर्हेतुसाध्यभावसङ्गतिमाह । अतिक्रान्त इति । साधनविचारत्वादेवास्य पादस्यास्मिन्नध्याये सङ्गतिः । अस्मिन् पादे न स्थानतोऽपीत्यतः प्रागुद्देश्यत्वेन प्रथमं जिज्ञासितत्वंपदार्थोऽवस्थाद्वारा विविच्यते, तदारभ्यापादसमाप्तेर्विधेयस्तत्पदार्थविवेकः, तत्र पूर्वं गत्यागतिचिन्तया जाग्रदवस्था निरूपिता तदनन्तरभाविनीं स्वप्नावस्थां श्रुत्युक्तां विषयीकृत्य तत्र स्वप्ने रथादिसृष्ट्युक्तेस्तदभावोक्तेश्च संशयं वदन् पूर्वपक्षसूत्रं योजयति । तत्र संशय इत्यादिना । स्वप्नरथादयो जाग्रद्रथादिवत् व्यावहारिकसत्ताका उत शुक्तिरजतवत् प्रातीतिका इति संशयार्थः । आरम्भाधिकरणे प्रपञ्चस्य पारमार्थिकत्वनिषेधादिति मन्तव्यं । अत्र पूर्वपक्षे जाग्रद्वत् स्वप्नाज्जीवस्य विवेकासिद्धिः

छोखिन्नायामधीति। तत्र तावत् प्रतिपद्यते सन्ध्ये सृष्टि-रिति। सन्ध्यमिति स्वप्नस्थानमाचष्टे वेदे प्रयोगदर्शनात् 'सन्ध्यं तृतीय स्वप्नस्थानम्' इति। द्वयोर्लोकस्थानयोः प्रबोध-सम्प्रसादस्थानयोर्वा सन्धौ भवतीति सन्ध्यं तस्मिन् सन्ध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति। कुतः, यतः प्रमाणभूता श्रुतिरेव-माह 'अथ रथान् रथयोगान् पथः सृजते' इत्यादि। स हि कर्तेति चोपसंहारादेवमेवावगम्यते॥

## निर्मातारं चैके पुत्रादयश्च॥२॥

अपि चैके शाखिनोऽस्मिन्नेव सन्ध्ये स्थाने कामानां निर्माता-रमात्मानमामनन्ति 'य एष सुप्तेषु जागर्ति कामं कामं पुरु-

---

सिद्धान्ते प्रातीतिकदृश्यसाक्षितया विवेकात् स्वयञ्ज्योतिष्ट्वसिद्धिरि-ति फल। मुमूर्षो सर्वेन्द्रियोपसंहारादेतल्लोकाननुभवे सति वा-सनामात्रेण इम लोक स्मरत कर्मबलाद्धृदये भानसपरलोकस्फूर्ति-रूप स्वप्नो भवति, सोऽय लोकद्वयसन्धौ भवतीति सन्ध्य स्वप्न। तथा च श्रुति 'तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यति इदञ्च परलोकस्थानञ्च' इति अथ स्वप्न कादाचित्क इत्यरुच्या नित्यस्वप्नस्य प्रबोधस्वप्नस्य प्रबोधसम्प्रसादसन्धिभवत्वमुक्त। श्रुतयस्तु मर्त्यचक्षुरा-द्यजन्यरूपादिसाक्षात्कारवत्त्वं परलोकलक्षण, दैवचक्षुराद्यजन्यत्व मर्त्यलोकलक्षणञ्च स्वप्नेऽस्तीति लक्ष्यतो लोकद्वयस्पर्शित्वात नित्यस्वप्न स्यैव लोकद्वयसन्ध्यत्व ग्रामद्वयस्पर्शिमार्गस्य तत्सन्ध्यत्ववदिति व्याच ख्यते। न केवल श्रुत्या स्वप्नार्थाना व्यावहारिकसत्यत्व किन्तु सकर्तृक-त्वादपीत्याह। स हि कर्तेति॥

किञ्च स्वप्नार्था सत्या प्राज्ञनिर्मितत्वात् व्याकाशादिवदिति सूत्रा-र्थमाह। अपि चेत्यादिना। रूढिमाशङ्क्य प्रकरणान्निरस्यति। नन्वि-

ये निर्मिमाणः' इति। पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति। ननु कामशब्देनेच्छाविशेषा एवोच्येरन्, न, 'शतायुषः पुत्रपौत्रान् वृणीष्व' इति प्रकृत्य 'अन्ते कामानान्त्वा कामभाजं करोमि' इति प्रकृतेषु तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात्। प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः। प्राज्ञस्य हीदं प्रकरणं 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादि। तद्विषयएव च वाक्यशेषोऽपि--

'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।

तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन'॥ इति प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति। तथा च श्रुतिः 'अथो खल्वा-हुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त.' इति स्वप्नजागरितयोः समानन्यायतां श्रावयति। तस्मात् तथ्यरूपैव सन्ध्ये सृष्टिरित्येव प्राप्ते प्रत्याह॥

मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्॥ ३॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति यदुक्तं सन्ध्ये सृष्टिः पार-मार्थिकीति। मायामय्येव सन्ध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति।

---

त्यादिना। य सुप्तेषु करणेषु जागर्ति तदेव शुक्रं स्वप्रकाशं ब्रह्मेत्यर्थः। स्वप्नस्य जाग्रद्वत् समानदेशत्वश्रुतेरभेदश्रुतेश्च सत्यत्वे तात्पर्यमित्याह। अथो खल्वाहुरिति॥

स्वप्नरथादयः प्रातीतिका जाग्रद्रथादौ कॢप्तसामग्रीं विनादृष्टत्वा-च्छुक्तिरूप्यादिवदिति सिद्धान्तयति। तुशब्द इत्यादिना। चिन्मात्रनिष्ठाऽ

कुतः, कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः। किं पुनरत्र कार्त्स्न्यमभिप्रेतं, देशकालनिमित्तसम्पत्तिरबाधश्च। न हि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने सम्भाव्यन्ते। न तावत् स्वप्ने रथादीनामुचितो देशः सम्भवति, न *तावत् संवृते देहदेशे रथादयोऽवकाशं लभेरन्। स्यादेतत्, बहिर्देहात् स्वप्नं द्रक्ष्यति दिशान्तरितद्रव्यग्रहणात्। दर्शयति च श्रुतिः 'बहिर्देहात् स्वप्न बहिःकुलायादमृतश्चरित्वा स ईयते अमृतो यत्र कामम्' इति। स्थितिगतिप्रत्ययभेदश्च नानिष्क्रान्ते जन्तौ सामञ्जस्यमनुबीतेति। नेत्युच्यते, न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुञ्च ततः सामर्थ्यं सम्भाव्यते। क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति 'कुरुष्वहं †शय्यायां शयानो निद्रयाभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्च' इति। देहाच्चेदपेयात् पञ्चालेष्वेव प्रतिबुध्येत तानसावभिगत इति कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो मन्यते ‡तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथा-

---

विद्या चित्तावच्छेदेन जीवेऽपि स्थिता रथाद्याकारा मायेति सूत्रभाष्ययोरुक्तमायाविद्ययोरभेदज्ञापनार्थमात्रपदेन सति प्रमातर्यबाध्यत्वरूपस्य व्यावहारिकसत्यत्वस्य निरास उक्त। कार्त्स्न्यमत्र जाग्रति याक प्रसामग्री, तज्जन्यत्व परमार्थवस्तुनो जाग्रदर्थस्य कार्यस्य धर्म सत्यत्व व्यापकः तदभाव स्वप्ने विस्तृणोति। न तावदित्यादिना। संवृते सङ्कीर्णे,

---

* तावदित्यस्य स्थाने हीति वर्ध० का०।

† शय्यायामित्यस्य स्थानेऽप्येति वर्ध० का० गो०।

‡ तमस्याभ्यासधस्था इति वर्ध० का०।

भूतानि चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति, परिधावंश्चेत् पश्येज्जाग्रद्वद्भूतमर्थमाकलयेत्। दर्शयति च श्रुतिः 'अन्तरेव देहे स्वप्नं स यत्रैतत् स्वप्नया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' इति। अतश्च श्रुत्युपपत्तिविरोधाद्बहिःकुलायश्रुतिर्गौणी व्याख्यातव्या 'बहिरिव कुलायादमृतश्चरित्वा' इति यो हि वसन्नपि शरीरेण तेन प्रयोजनं करोति स बहिरिव शरीराद्भवति इति। स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः, कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते तथा मुहूर्तमात्रप्रवर्तिनि स्वप्ने कदाचिद्बहून् वर्षपूगानतिवाहयति। निमित्तान्यपि च स्वप्ने बुद्धये कर्मणे वोचितानि विद्यन्ते, करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा, बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे, स्वप्न एव चैते सुलभबाधा भवन्ति आद्यन्तयोर्व्यभिचारदर्शनात्, रथोऽयमिति हि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्प-

---

पर्येतुं गन्तु, विपर्येतुमागन्तुं, आवयति प्रबुद्धो जन, पार्श्वस्थान् प्रतीति शेष। एतत् स्वप्नं यथा स्यात् तथा यत्र काले स्वप्नव्यात्त्या चरति तदा स्वशरीरे यथेष्ट चरतीत्यर्थ। बहिरिवेति कुलायदेहात् बहिरिवामृत आत्मा चरित्वा यत्र कामं यथेष्टमीयते विहरतीत्यर्थ। युक्तमाह। यो हीति। देहाभिमानहीनत्वगुणेन बहिष्ठवद्देहस्थोऽपि विहरतीत्युक्त इत्यर्थ। एवं सति श्रुतियुक्तिभ्या अत एव स्वप्ने सतीत्यर्थ। विप्रलम्भो विभ्रम, योग्यदेशाभावमुक्त्वा काला-

ध्यते, मनुष्योऽयमिति वा निर्धारितः क्षणेन वृक्षः। स्पष्टञ्चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रं 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादि। तस्मान्मायामात्रं स्वप्नदर्शनं॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ४॥

मायामात्रत्वात् तर्हि न कश्चित् स्वप्ने परमार्थगन्ध इति, नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा हि श्रूयते 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने' इति। तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति। आचक्षते च स्वप्नाध्यायविदः 'कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति, मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते, तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं

---

भावमाह। कालेति। अत्र रात्रिसमयेऽपि केतुमालादिवर्षान्तरे वासरो भवति इति भारत इत्युक्तं॥

पूर्वपक्षानुमानानां जाग्रदर्थदृष्टान्ते क्लृप्तसामग्रीजन्यत्वमबाध्यत्वं उपाधिरिति सूत्रतात्पर्यं स्वप्नस्य भ्रान्तिमात्रत्वे तत्सूचितोऽप्यर्थः सत्यो न स्यादिति शङ्कोत्तरत्वेन सूत्रान्तरं व्याचष्टे। मायेत्यादिना। मन्त्रेण देवतानुग्रहेणौषधिसेवया वा स्वप्नाः सत्यसूचकाश्चेत् स्वप्नाः स्युरित्यत आह। तत्रापि भवतु नामेति। सत्यहर्षहेतोरपि शुक्तिरूप्यस्य सत्यत्वादर्शनादिति भावः। यथा कश्चिद्दारा खा-

बाध्यमानत्वादित्यभिप्रायः। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वं। यदुक्तमाह हीति तदेवं सति भाक्तं व्याख्यातव्यं, यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते न तु प्रत्यक्ष-मेव लाङ्गलं गवादीनुद्वहति, एवं निमित्तमात्रत्वात् सुप्तो रथादीन् सृजते स हि कर्त्तेति चोच्यते न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वञ्चास्य रथादिप्रतिभान-निमित्तमोदत्रासदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्य। अपि च जागरिते विषयेन्द्रियसंयोगादा-दित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयंज्योतिष्ट्वं द्रष्टुर्दुर्विवेच-नमिति तद्विवेचनाय स्वप्न उपन्यस्तः, तत्र यदि रथादिसृष्टि-वचनं श्रुत्या नीयेत स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्। तस्माद्र-थाद्यभाववचनश्रुत्या रथादिसृष्टिवचनं *भाक्तमिति व्याख्येयं।

---

ङ्गलस्य गवादिजीवननिमित्तत्वं तथा स्वप्नभोक्तुरदृष्टद्वारा स्वप्नसृष्टि-निमित्तत्वं नतु कुम्भं प्रति कुम्भकारस्येव साक्षात् स्वप्नकर्तृत्वं साम-ग्र्यभावबाधयोरुक्तत्वादित्याह। यदुक्तमित्यादिना। तथा च स्वप्नस्य सकर्तृकत्वं मुख्यं नास्तीति हेत्वसिद्धिरिति भावः। श्रुतितात्पर्य-विरोधाच्च न स्वप्नसत्यतेत्याह। अपि चेति। व्यतिकरः सङ्करः, श्रुत्या तत्परतयेत्यर्थः। जागरितादविशेषादिति भावः। फलित-माह। तस्मादिति। एतेनेति भाक्तत्वेनेत्यर्थः। द्वितीयसूत्रोक्तप्राज्ञ-कर्तृत्वहेतुरपि स्वप्नस्य किं श्रुतिसिद्धः उत प्राज्ञस्य सर्वेश्वरत्वात् सिद्ध, नाद्य इत्याह। यदुक्तमित्यादिना। स्वयं विहत्य जाग्रद्देहं निश्चेष्टं कृत्वा, स्वयं वासनया देहं निर्माय, स्वेन भासा स्वीयबुद्धिवृत्त्या स्वेन ज्योतिषा स्वरूपचैतन्येन च स्वप्नमनुभवतीत्यर्थः। न केवलं दृह-

---

* भक्त्येति का० वर्ध०।

एतेन निर्माणश्रवणं व्याख्यातं। यदप्युक्तं 'प्राज्ञमेनं निर्मातारमामनन्ति' इति, तदप्यसत् श्रुत्यन्तरे 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति जीवव्यापारश्रवणात्। इहापि च 'य एष सुप्तेषु जागर्ति' इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता सङ्कीर्त्यते, तस्य तु वाक्यशेषेण तदेव शुक्रन्तद्ब्रह्मेति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते, 'तत्त्वमसि' इत्यादिवदिति न ब्रह्मप्रकरणत्वं विरुध्यते। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः। पारमार्थिकस्तु नायं सन्ध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत् प्रतिपाद्यते। न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति, प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्यः', इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वं। प्राक् च ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति, सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्यतो वैशेषिकमिदं सन्ध्यस्य मायामात्रत्वमुदितं॥

---

दारण्यके जीवस्य स्वप्नकर्तृत्वं श्रुतं किन्तु काठकेऽपीत्याह। इहापीति। जीवोक्तौ ब्रह्मप्रकरणविरोध इत्यत आह। तस्य त्विति। एवं हेतोः श्रुतिसिद्धत्वं निरस्य द्वितीयमङ्गीकरोति। न चास्माभिरिति। तर्हि हेतुसिद्धेः स्वप्नस्य सत्यत्वमित्याशङ्क्य सत्यत्वं व्यावहारिकं पारमार्थिकञ्चेति विकल्प्य व्यवहारकाले बाधदर्शनात् नाद्य इत्याह। पारमार्थिकस्त्विति। द्वितीये दृष्टान्तस्य साध्यवैकल्यमित्याह। न चेति। कस्तर्हि स्वप्नस्य जाग्रतो विशेषोऽत्र कथन इत्याशङ्क्य प्रतिभासिकत्वमित्याह। प्रागिति॥

पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्ध-
विपर्ययौ ॥ ५ ॥

अथापि स्यात् परस्यैव तावदात्मनोऽंशो जीवोऽग्नेरिव विस्फुलिङ्गः, तत्रैवं सति यथाग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती, ततश्च जीवस्यैश्वर्यवशात् साङ्कल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति, अत्रोच्यते। सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवेश्वरविपरीतधर्मत्वं, किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव न नास्तीति, विद्यमानमपि तु तत् तिरोहितं, अविद्याव्यवधानात्। तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतस्येव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति न स्वभावत

---

पूर्वं कृत्स्नसामग्र्यभावात् स्वप्नो मायेत्युक्तमयुक्तं सङ्कल्पमात्रेणापि सत्यसृष्टिसम्भवात् इति शङ्कां कृत्वा परिहरन् सूत्रं व्याचष्टे। अथापि स्यादित्यादिना। सत्यसङ्कल्पस्य हि सङ्कल्पात् सृष्टिः सत्या भवति जीवस्य त्वसत्यसङ्कल्पत्वं प्रत्यक्षमिति परिहारार्थः। तर्हि विरुद्धधर्मवत्त्वाज्जीवस्येश्वरत्वं नास्त्येवेति शङ्कते। किमिति। नास्तीति न किन्त्वावृतमस्ति, तत्पुनरीश्वरप्रसादात् कस्यचित् व्यज्यत इत्याह। न नास्तीति। विधूतध्वान्तस्य निष्पापस्य संसिद्धस्याणिमादिविशिष्टस्येत्यर्थः। ब्रह्मैवाहमिति देव ज्ञात्वा साक्षात्कृत्य सर्वपाशानामविद्यादिक्लेशानामपहानिरपक्षयस्तद्भूयो भवति। क्षीणैश्च क्लेशैस्तत्कार्यजन्ममरणात्मकबन्धध्वंस इति निर्गुणविद्याफलमुक्तं सगुणविद्याफल-

एव सर्वेषां जन्तूनां, कुतस्ततो हि ईश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः, ईश्वरस्य स्वरूपापरिज्ञानाद्बन्धः तत्स्वरूपपरिज्ञानात्तु मोक्षः। तथा च श्रुतिः 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इत्येवमाद्या।

## देहयोगाद्वा सोऽपि॥ ६॥

कस्मात् पुनर्जीवः परमात्मांश एव सन्तिरस्कृतज्ञानैश्वर्यो भवति, युक्तन्तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशयोरिति। उच्यते सत्यमेवैतत्, सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति। अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसम्पन्नस्यापरणिगतस्य दहनप्रकाशने तिरोभवतः, यथा वा भस्मनाच्छन्नस्य, एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीव

---

माह। तस्येति। सत्स्याभिमुख्येनाहंग्रहेण ध्यानाद्बन्धमोक्षापेक्षया सन्तोत्कृष्टाभिदयापेक्षया वा तृतीयं विश्वैश्वर्यमणिमादिरूपं मर्त्यदेहपाते सति लिङ्गदेहे भवति तद्भोगानन्तरमात्मध्यानात् केवलो द्वैतशून्य आप्तकामः प्राप्तस्वयञ्ज्योतिरानन्दो भवतीति क्रममुक्तिरित्यर्थः॥

उक्तैश्वर्यतिरोभावे देहाभिमानो हेतुरिति पृथगर्थं सूत्रं, तन्निरस्याशङ्कामाह। कस्मादिति। सत्यावरणे नास्तीत्यङ्गीकृत्य कल्पि-

ईश्वरादस्य तिरस्कृतज्ञानैश्वर्यत्वात् किं देहयोगकल्पनया। नेत्युच्यते, न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते 'सेयं देवतैक्षत' इत्युपक्रम्य 'अनेन जीवेनात्मनानुप्रविश्य' इत्यात्मशब्देन जीवस्य परामर्शात्। 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति च जीवायोपदिशतीश्वरात्मत्वं, अतोऽनन्य एवेश्वरात् जीवः सन् देहयोगात् तिरोहितज्ञानैश्वर्यो भवति, अतश्च न साङ्कल्पिकी जीवस्य स्वप्ने रथादिसृष्टिसिद्धिर्घटते। यदि च साङ्कल्पिकी स्वप्ने सृष्टिसिद्धिः स्यात् नैवानिष्टं कश्चित् स्वप्नं पश्येत्। न हि कश्चिदनिष्टं सङ्कल्पयते। यत्पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्, जागरितप्रभववासनानिमित्तत्वात् तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

स्वप्नावस्था परीक्षिता सुषुप्तावस्थेदानीं परीक्ष्यते। तत्रैताः

---

तावदर्थं साधयति। उच्यत इत्यादिना। जीवस्येश्वरत्वमङ्गीकृत्यावरणकल्पनात्परमन्यत्वकल्पनेत्याशङ्कामुद्भाव्य श्रुत्या निरस्यति। नन्वित्यादिना। स्वप्नेऽप्यालोकादेः स्वप्नत्वे जाग्रतीवात्मनः स्वप्रकाशत्वमस्फुटं स्यात् प्रातिभासिकत्वे त्वालोकेन्द्रियाद्यसत्त्वेऽप्यर्थापरोक्ष्यमात्मज्योतिष एवेति स्फुटं सिध्यति, तस्माद्देशादिसाम्यवचनं स्वप्नस्य जाग्रत्तुल्यभानाभिप्रायमित्यर्थः ॥

एवं बाह्यकरणोपरमे सति मनोवासनोद्दीपिताविद्याविलासात्मकं

सुषुप्तविषयाः श्रुतयो भवन्ति। क्वचिच्छ्रूयते 'तद् यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति' इति। अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति। तथान्यत्रापि नाडीरेवानुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति। तथान्यत्रापि 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति। तथान्यत्र 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति। तथा 'प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्' इति च। तत्र संशयः। किमेतानि नाड्यादीनि *परस्परनिरपेक्षतया भिन्नानि सुप्तिस्थानानि आहोस्वित् परस्परापेक्षतयैकं सुप्तिस्थानमिति। किन्तावत् प्राप्तं भिन्नानीति। कुतः एकार्थत्वात्। न हि एकार्थानां क्वचित्

स्वप्नमात्मनः साक्षिणः स्वयंज्योतिःस्वार्थं विचार्य प्रतियोग्यनुयोगिभावसङ्गत्या स्वप्नावस्थमनोलयात्मिकां सुषुप्तिं विचारयति। तदभावो नाडीषु तच्छ्रुतेरात्मनि च। तदेतत् स्वप्नं यथा स्यात् तथा। यत्र काले सुप्तः सुषुप्तः समस्तो निरस्तवाह्यकरणो मनोलयात् सम्यक् प्रसन्न इत्यर्थः। स्वापे नाडीस्थानमुक्त्वा नाडीपुरीततो नाडीपरमात्मनोश्च समुच्चयश्रुती आह। अन्यत्रेति। परमात्ममात्रश्रुतीराह। तथान्यत्रेत्यादिना। नाडीपुरीतद्ब्रह्मसु सप्तमीश्रुतेः समुच्चयश्रुतेश्च संशयमाह। तत्रेति। पूर्वपक्षे स्थानविकल्पाज्जीवस्य ब्रह्मात्मैक्यानिर्णयः सिद्धान्ते नाडीभिः पुरीततं गत्वा तर्हि ब्रह्मण्येव शेत इति समुच्चयात् तन्निर्णय इति विवेकः। एकपुरोडाशार्थत्वं व्रीहियवयोरिव नाड्यादीनामेकस्मिन् स्वापरूपार्थे निरपेक्षस्थानत्वन्तु कुत इत्यत आह। नाड्यादीनाञ्चेति। सति ब्रह्मणि तृतीयाश्रुतेर्न सप्त-

* परस्परनिरपेक्षाणीति वर्ध॰ का॰।

परस्परापेक्षत्वं दृश्यते व्रीहियवादीनां। नाड्यादीनां त्वेकार्थता सुषुप्तौ दृश्यते 'नाडीषु सुप्तो भवति पुरीतति शेते' इति च तत्र तत्र सप्तमीनिर्देशस्य तुल्यत्वात्। ननु नैवं सति सप्तमीनिर्देशो दृश्यते 'सता सोम्य तदा सम्पन्नो भवति' इति। नैष दोषः, तत्रापि सप्तम्यर्थस्य गम्यमानत्वात्। वाक्यशेषे हि 'तत्रायतनैषी जीवः सदुपसर्पति' इत्याह। 'अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते' इति प्राणशब्देन तत्र प्रकृतस्य सत उपादानात्। आयतनञ्च सप्तम्यर्थः, सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते, 'सति सम्पद्य न विदुः सति सम्पद्यामहे' इति। सर्वत्र च विशेषविज्ञानोपशमलक्षणं सुषुप्तं न विशिष्यते। तस्मादेकार्थत्वान्नाड्यादीनां विकल्पेन कदाचित् किञ्चित् स्थानं स्वापायोपसर्पतीत्येवं प्राप्ते प्रतिपद्यते तदभावो नाडीषु आत्मनि चेति। तदभाव इति तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः

---

मेति शङ्कार्थः। आयतनशब्दस्तु सप्तम्यर्थं आधारत्वं गमयत इत्याह। नैष दोष इति। अन्यत्रावस्थात्रये श्रान्तो जीवो विश्रान्तिस्थानं प्राणाख्यं सद्ब्रह्मोपसर्पति सुषुप्तावित्यर्थः। सप्तमीश्रुत्या निरपेक्षाधारत्वभानाद्विकल्प आस्थेयः। कदाचित् समुच्चित्यापि नाड्यादीनां स्थानत्वमिति न समुच्चयश्रुतिविरोध इति पूर्वपक्षार्थः। सिद्धान्तयति। एवं प्राप्त इति। सूत्रे चकारः पुरीतत्समुच्चयार्थः। यदा नाड्यः सुषुप्तिस्थानं तदा पुरीतत्स्थानं न भवतीति श्रुतस्थानत्वस्य पक्षे बाधः स्यात् स न युक्त इत्याह। विकल्पे ह्येषामिति। व्रीहियवयोस्त्वगत्या विकल्प इति भावः। यत् तु सप्तमीश्रुत्या नाड्यादीनामेकफलकत्वमिति तन्नेत्याह। न ह्येकेति। प्रासादस्य पर्यङ्कधारणमर्थः पर्यङ्कस्य तु शयनमिति फलभेदेऽप्येकविभक्तिर्दृश्यते, व्यवधानाद्य-

सुषुप्तमित्यर्थः, नाडीष्वात्मनि चेति समुच्चयेनैतानि नाड्यादीनि स्वापायोपैति न विकल्पेनेत्यर्थः। कुतः तच्छ्रुतेः। तथा हि सर्वेषामेषां नाड्यादीनां तत्र तत्र सुप्तिस्थानत्वं श्रूयते तच्च समुच्चये संगृहीतं भवति, विकल्पे ह्येषां पक्षे बाधः स्यात्। नन्वेकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवदित्युक्तं। नेत्युच्यते, न ह्येकविभक्तिनिर्देशमात्रेणैकार्थत्वं विकल्पश्चापतति, नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात् प्रासादे शेते पर्यङ्के शेते इत्येवमादिषु, तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्येतदुपपद्यते समुच्चयः, तथा च श्रुतिः 'तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति' इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयति, एकवाक्योपादानात्। प्राणस्य च ब्रह्मत्वं समधिगतं 'प्राणस्तथानुगमात्' इत्यत्र। यत्रापि निरपेक्षा इव नाडीः सुप्तिस्थानत्वेन श्रावयति 'आसु तदा नाडीषु सृप्तो भवति' इति तत्रापि प्रदेशान्तरप्रसिद्धस्य ब्रह्मणोऽप्रतिषेधान्नाडीद्वारेण ब्रह्मण्येवावतिष्ठत इति प्रतीयते। न चैवमपि नाडीषु सप्तमी विरुध्यते, नाडीभिरपि ब्रह्मोप-

---

वधानाभ्यां शयनसाधनत्वात् समुच्चयस्य, तथेहापि नाडीपुरीततो जीवस्य सञ्चारद्वारा ब्रह्मण्येव स्वाप्तिरिति समुच्चय इत्यर्थः। नाडीनां प्राणस्य च एकेन वाक्येनोपादानान्मिथः समुच्चय इत्याह। एकवाक्येति। आधारत्वमात्रं सप्तम्यर्थो न निरपेक्षत्वं चातो न समुच्चयस्य सप्तम्या बाध इत्याह। न चैवमपीति। समुच्चयेऽपीत्यर्थः। यत्र नाडी-

सर्पन् सुप्त एव नाडीषु भवति। यो हि गङ्गया सागरं गच्छति गत एव स गङ्गायां भवति। अपि चात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोकमार्गस्य विवक्षितत्वान्नाडीस्तुत्यर्थं सुप्तिसङ्कीर्तनं, नाडीषु सुप्तो भवतीत्युक्त्वा 'अतस्तं न कश्चन पाप्मा स्पृशति' इति ब्रुवन् नाडीः प्रशंसति। ब्रवीति च पाप्मस्पर्शाभावे हेतुं 'तेजसा हि तदा सम्पन्नो भवति' इति। तेजसा नाडीगतेन पित्ताख्येनाभिव्याप्तकरणो न बाह्यान् *विषयानीक्षते इत्यर्थः। अथवा तेजस इति ब्रह्मण एवाय निर्देशः, श्रुत्यन्तरे 'ब्रह्मैव तेज एव' इति तेजःशब्दस्य ब्रह्मणि प्रयुक्तत्वात्, ब्रह्मणा हि तदा सम्पन्नो भवति नाडीद्वारेणातस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः। ब्रह्मसम्पत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः, सर्वे पाप्मानोऽतो निवर्तन्ते अप-

---

[त]ो नाडीषु भोक्तु सुप्तिर्न विवक्षिता रश्मिसम्बन्धनाडीरूपमा[र्ग]स्तुत्यर्थत्वादित्याह। अपि चेति। पित्तेन विषयेच्छाभावे सुख[दुः]खयोरभावात् तद्धेतुधर्माधर्मात्मकपाप्मास्पर्श इत्यर्थः, अपहतपाप्म[ब्र]ह्मसम्पत्त्या वा पाप्मास्पर्श इत्याह। अथ वेति। अस्मिन् व्या[ख्य]ाने लाभमाह। एवञ्च सतीति। तासु तदा भवत्यथास्मिन् प्राण एवैकधा भवतीति श्रुतः समुच्चय आश्रितो भवतीत्यर्थः। नाडीब्रह्मणो[र्ग]ुणप्रधानभावेन सुप्तौ समुच्चयवत् पुरीतद्ब्रह्मणोरपीत्याह। तयेत्यादिना। आकाशे ब्रह्मणि शेत इत्युपक्रम्य ताभिः प्रत्यवसृप्य पुरीतति शेत इत्युक्तं, तथा च नाडीद्वारा पुरीततं गत्वा ब्रह्मणि शेत इति समुच्चय सिद्ध इत्याह। तथा नाडीति। सता सम्पन्नो भवति प्राज्ञेन सम्परिष्वक्त इति सत्प्राज्ञयोः श्रुतेः पञ्च सुप्तिस्थानानीत्यत आह। सत्प्राज्ञयोरिति। किञ्च प्रकृतदर्शादिसाधनैकपुरोडाशनिष्पत्तौ मिथोऽनपेक्षतया समर्थत्वाद्युक्तो व्रीहियवयोर्विकल्पः, ना-

---

* विषयान् वेदेति अर्थः का०।

'तपामा ह्येष ब्रह्मलोकः' इत्यादिश्रुतिभ्यः। एवञ्च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुप्तिस्थानेनानुगतो नाडीनां *चयः समाश्रितो भवति। तथा पुरीततोऽपि ब्रह्मप्रक्रियायां सङ्कीर्तनात् तदनुगुणमेव सुप्तिस्थानत्वं विज्ञायते 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति हृदयाकाशे सुप्तिस्थाने प्रकृते इदमुच्यते 'पुरीतति शेते' इति। पुरीतदिति हृदयपरिवेष्टनमुच्यते, तदन्तर्वर्त्तिन्यपि हृदयाकाशे शयानः शक्यते पुरीतति शेत इति वक्तुं, प्राकारपरिच्छिन्नेऽपि हि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते। हृदयाकाशस्य च ब्रह्मत्वं समधिगतं 'दहर उत्तरेभ्यः' इत्यत्र। तथा नाडीपुरीतत्समुच्चयोऽपि ताभिः प्रत्यवसृप्य पुरीतति शेत इत्येकवाक्योपादानादवगम्यते। सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वमेतासु श्रुतिषु 'त्रीण्येव सुप्तिस्थानानि सङ्कीर्तितानि नाड्यः पुरीतद्ब्रह्म च' इति, तत्रापि च द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं अनपायि सुप्तिस्थानं। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति, तत्रास्य करणानि वर्तन्त इति। न ह्युपाधिसम्बन्धमन्तरेण स्वत एव जीवस्या-

---

ध्यादीनान्तु ब्रह्मनिरपेक्षतया सुषुप्तजीवाधारत्वासामर्थ्यात् न विकल्प इत्याह। अपि च नाड्य इति। उपाधिलिङ्गाश्रयनाडीपुरीतोरुपहितजीवाश्रयत्वं परम्परया वाच्यं, तदपि सुषुप्तौ न सम्भवति उपाधिलयादित्यर्थः। ननु ब्रह्मापि जीवस्य न मुख्यं स्थानं त्वभेदादित्यत आह। ब्रह्माधारत्वमिति। जीवस्य ब्रह्मण्यभेदेनावस्थानं नाडीपुरीतोऽस्तु लीनोपाधेर्जीवस्य स्थितिरेव न सम्भवतीत्येका-

---

* चय इत्यस्य स्थाने त्रय इति वर्ध० का०।

धारः कश्चित् सम्भवति, ब्रह्माव्यतिरेकेन स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्तेनैवाधाराधेयभेदाभिप्रायेणोच्यते कथं तर्हि तादात्म्याभिप्रायेण यत आह 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति। स्वशब्देनात्माभिलप्यते स्वरूपमापन्नः सुषुप्तो भवतीत्यर्थः। अपि च न कदाचिज्जीवस्य ब्रह्मणा सम्पत्तिर्नास्ति स्वरूपस्यानपायित्वात्, स्वप्नजागरितयोस्तु उपाधिसम्पर्कवशात् पररूपापत्तिमिवापेक्ष्य *तदुपशममात्रात् सुषुप्ते स्वरूपापत्तिर्विवक्ष्यते, अतश्च सुषुप्तावस्थायां कदाचित् सता सम्पद्यते कदाचित् न सम्पद्यत इत्ययुक्तं। अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत् सुषुप्तं न क्वचिद्विशिष्यते तत्र सति सम्पन्नस्तावदेकत्वात् न विजानातीति युक्तं 'तत्केन कं विजानीयात्' इति श्रुतेः। नाडीषु पुरीतति च शयानस्य न किञ्चिदविज्ञाने कारणं शक्यं विज्ञातुं भेदविषयत्वात्, 'यत्र वान्यदिव स्यात् तत्रान्योऽन्यत्प-

र्थसामर्थ्याभावात् न विकल्प इत्यर्थः। सुषुप्तौ जीवस्य भेदकोपाधिलयाद्यौत्सर्गिकब्रह्माभेदस्य विकल्पो न युक्त इत्याह। अपि चेति। किञ्च नाड्यादीनामन्यतमस्थाने क्व सुप्तिवादिनापि सुप्तं न विशिष्यत इति वक्तव्यं तच्च वक्तुं न शक्यत इत्याह। अपि च स्थानेति। भेदाभावो हि भेदज्ञानाभावे हेतुः, नाडीपुरीतद्गतस्य तु जीवस्य भेदावस्थत्वात् भेदाविज्ञाने कारणं नास्तीत्यर्थः। द्वैतावस्थस्यापि द्वैताज्ञाने हेतुं पृच्छते। ननु भेदेति। दूरदेशस्यात् दूरत्वं स्वाभाविकमौपाधिकं वा। तत्राद्यं सदृष्टान्तमनूद्य प्रत्याह। वाढमित्यादिना। द्वितीयमनूद्य दूषयति। उपाधिगतमेवेति। उपाधिभिन्नस्यैव नाड्यादौ स्वापे

* तदुपशमादिति वर्ध० का०। तदुपरमादिति से०।

ष्येत्' इति श्रुतेः। ननु भेदविषयस्याप्यतिदूरादिकारणमविज्ञाने स्यात्। बाढमेवं स्यात् यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यतीति, न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते, उपाधिगतमेवातिदूरादिकारणमविज्ञान इति यद्युच्येत तथाप्युपाधेरुपशान्तत्वात् सत्येव सम्पन्नो न विजानातीति युक्तं। न च वयमिह तुल्यवत् नाड्यादिसमुच्चयं प्रतिपादयामः, न हि नाड्यः सुप्तिस्थानं पुरीतच्चेत्यनेन विज्ञानेन किञ्चित् प्रयोजनमस्ति, न ह्येतद्विज्ञानप्रतिबद्धं फलं किञ्चित् श्रूयते, नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते, ब्रह्म त्वनपायि सुप्तिस्थानमित्येतत् प्रतिपादयामः, तेन तु विज्ञानेन प्रयोजनमस्ति, जीवस्य ब्रह्मात्मत्वावधारणं *स्वप्नजागरितगतव्यवहारविमुक्तत्वावधारणञ्च। तस्मादात्मैव सुप्तिस्थानं॥

## अतः प्रबोधोऽस्मात्॥ ८॥

यस्माच्चात्मैव सुप्तिस्थानं अत एव कारणात् नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते, कुत एतदागा-

---

कतिपयसन्निहितार्थज्ञानप्रसङ्गात् सुषुप्तिव्याघातः स्यात्। उपाधिलये त्वन्यत् न जीवस्य स्थित्ययोगात् ब्रह्मण्येव स्वाप व्यास्थेय इत्यर्थः। एवं विकल्पं निरस्य नाडीपुरीतौ ब्रह्मणा सह तुल्यवत्समुच्चयवत्पक्षत्वेन दूषयन् गुणप्रधानत्वेन समुच्चयमुपसंहरति। न च वयमित्यादिना॥

किञ्च ब्रह्मणः सकाशाज्जीवस्योत्थानश्रुतेर्ब्रह्मैव सुषुप्तिस्थानमित्याह

---

* स्वप्नजागरितव्यव॰ इति वर्ध॰ का॰।

दित्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' *इत्यादि, 'सत आगम्य न विदुः सत आगच्छामहे' इति च। विकल्प्यमानेषु तु †सुषुप्तिस्थानेषु कदाचित् नाडीभ्यः प्रतिबुध्यते कदाचित् पुरीततः कदाचिदात्मन इत्यभाषिष्यत् । तस्मादप्यात्मैव तु सुषुप्तिस्थानमिति ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

तस्याः पुनः सत्सम्पत्तेः प्रतिबुध्यमानः किं य एव सत्सम्पन्नः स एव प्रतिबुध्यते ‡उतान्यो वेति चिन्त्यते। तत्र प्राप्तं तावत् अनियम इति। कुतः, यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते जलराशिरेव स तदा भवति, पुनस्तदुद्धरणे स एव जलबिन्दुर्भवतीति दुःसम्पादं, तद्वत् सुप्तः परेणैकत्वमापन्नः सम्प्रसीदति न स एव पुनरुत्थातुमर्हति,

---

सूत्रकारः। अत प्रबोध इति। नाडीपुरीततोः क्वाप्युत्थानापादनत्वाश्रवणात् न सुषुप्तिस्थानमित्यर्थः, तस्मादुपाधिलये जीवस्य ब्रह्माभेदादौपाधिक एव भेद इति विवेकाद्वाक्यार्थाभेदसिद्धिरिति स्थितं ॥

स एव कर्मानुस्मृतिशब्दविधिभ्य सुप्तौ उपाधिनाशात् कर्मानुस्मृत्यादेर्दर्शनाच्च संशये सत्यस्मात् ब्रह्मणो जीवस्योत्थानश्रुतेर्ब्रह्मैव सुषुप्तिस्थानमित्युक्तमयुक्तं। सुप्तादन्यस्याप्युत्थानसम्भवेन सुषुप्तस्थानामादिस्थानत्वसम्भवादित्याक्षेपसङ्गत्या नियामकाभावादनियम इति पूर्वपक्षमाह। तस्याः पुनरित्यादिना। पूर्वपक्षे ध्यानवैयर्थ्यं सुषुप्त्येवापुनरावृत्तिरूपमुक्तिसिद्धेः, सिद्धान्ते तु ब्रह्मात्मना स्थितस्या-

---

* इत्यादिनेति पर्धे० का० मो०। † सुप्तौति पर्धे० का०।
‡ उत स वा अन्यो वेति पर्धे० का०।

तस्मात् स एवेश्वरो वान्यो वा जीवः प्रतिबुध्यत इत्येवं प्राप्ते इदमाह। स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति नान्यः। कस्मात्, कर्मानुस्मृतिशब्दविधिभ्यः। विभज्य हेतून् दर्शयिष्यामि, कर्मशेषानुष्ठानदर्शनात् तावत् स एवोत्थातुमर्हति नान्यः। तथा हि पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन् दृश्यते, न चान्येन सामिकृतस्य कर्मणोऽन्यः शेषक्रियायां प्रवर्तितुमर्हति अतिप्रसङ्गात्, तस्मादेक एव पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते। इतश्च स एवोत्तिष्ठति यत्कारणमतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात् स्मरणं अन्यस्योत्थाने नोपपद्यते, न ह्यन्यदृष्टमन्योऽनुस्मर्तुं अर्हति। 'सोऽहमस्मि' इति चात्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते। शब्देभ्यश्च तस्यैवोत्थानमवगम्यते 'तथा हि पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति। त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद् यद्भवन्ति तत्तदा भवन्ति' इत्येवमादयः शब्दाः स्वापप्र-

---

ज्ञानबलेन पुनस्तस्यैवोत्थानावश्यम्भावादज्ञाननाशाय ज्ञानापेक्षेति फलं ईश्वरो वेत्यनियमदार्ढ्यायोक्तं। 'स वान्यो वे'त्येव पूर्व्वपक्षः। ज्ञानं विना बुद्ध्याद्युपाधेरत्यन्तनाशाभावाद्यया बुद्ध्योपहितो जीवः सुषुप्तो कारणात्मना स्थितस्तयैव नानाकर्म्मानुभवसंस्कारवत्योपहित उत्तिष्ठतीति सिद्धान्तयति। स एव त्वित्यादिना। सामिकृतस्यार्द्धकृतस्य' एकस्यैव ज्योतिष्टोमादेरनेकयजमानकलापतोऽतिप्रसङ्गः। स्मृतिमुक्तानुशब्दसूचितां प्रत्यभिज्ञामाह। सोऽहमिति। अयनं गमनं आयः।

बोधाधिकारे पठिता नात्मान्तरोत्थाने सामञ्जस्यमीयुः। कर्मविद्याविधिभ्यश्चैवमेव गम्यते, अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः, अन्योत्थानपक्षे हि सुप्तमात्रो मुच्येत इत्यापद्येत, एवं चेत् स्यात् वद किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात्। अपि चान्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत् तत्तद्व्यवहारलोपप्रसङ्गः स्यात्। अथ तत्र सुप्त उत्तिष्ठेत कल्पनानर्थक्यं स्यात्, यो हि यस्मिन् शरीरे सुप्तः स तस्मिन्नोत्तिष्ठति, अन्यस्मिन् शरीरे सुप्तोऽन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्। अथ मुक्त उत्तिष्ठेत् अन्तवान्मोक्ष आपद्येत, निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नं। एतेनेश्वरोत्थानं प्रत्युक्तं, नित्यनिवृत्ताविद्यत्वात्। अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्यातां, तस्मात् स एवोत्तिष्ठति नान्य इति। यत्पुनरुक्तं 'यथा जलराशौ प्रक्षिप्ता जलबिन्दुर्नोद्धर्तुं शक्यते एवं सति सम्पन्नो जीवो नोत्पतितुमर्हतीति, तत्परिह्रियते। युक्तं तत्र

---

योनिं तत्तदिन्द्रियस्थानं प्रति नियतं गमनं यथा भवति तथा प्रतियोन्यागच्छति जागरणायेति श्रुत्यर्थः। न विन्दन्तीत्यज्ञानसत्त्वात् सुप्तस्योत्थाननियम उक्तः, इह पूर्वप्रबोधे ये भवन्ति त एव तदोत्तरप्रबोधे भवन्तीत्यर्थः। विधिं व्याचष्टे। कर्मेति। स एवोत्तिष्ठतीति निश्चीयते इत्यर्थः। अत्रैवोत्थाने युक्त्यन्तरमाह। अपि चेत्यादिना। अन्योत्थाने सुखादेर्न पूर्वकर्मकार्यतेत्यकृतसुखाद्यागमः पूर्वसुप्तजीवकृतकर्मनाशश्चेत्यर्थः। पूर्वपक्षोक्तं दृष्टान्तं वैधर्म्येण दूषयति। यत् पुनरित्यादिना। अस्मदाद्यशक्यमपि विवेचनं प्राण्यदृष्टापेक्षः ईश्वरः करो-

विवेककारणाभावाज्जलविन्दोरनुद्धरणं, इह तु विद्यते विवेककारणं, कर्म च विद्या चेति वैषम्यं। दृश्यते च दुर्विवेचनयोरपि असज्जातीयैः क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनं। अपि च न जीवो नाम कश्चित् परस्मादात्मनोऽन्यो विद्यते यो जलविन्दुरिव जलराशेः सतो विविच्येत, सदेव तूपाधिसम्पर्कात्जीव इत्युपचर्यते इत्यसकृत् प्रपञ्चितं। एवं सति यावदेकोपाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः, उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः, स एवायमुपाधिः स्वापप्रबोधयोर्बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यत इति युक्तं॥

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात्॥ १०॥

अस्ति मुग्धो नाम यं मूर्च्छित इति लौकिकाः कथयन्ति, स तु किमवस्थ इति परीक्षायामुच्यते, तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः जागरितं स्वप्नः सुषुप्तमिति। चतुर्थी शरीरादपसृप्तिः, न तु पञ्चमी काचिदवस्था जीवस्य

---

तीति मत्वा दृष्टान्तमाह। दृश्यते चेति। ब्रह्माभेदाच्च जीवस्य जलविन्दुवैषम्यमित्याह। अपि चेति। अभेदे 'स वान्यो वोत्तिष्ठति' इति चिन्तानवकाश इत्याशङ्क्य बुद्धिभेदेन जीवभेदाच्चिन्तेत्याह। एवं सतीति। सुषुप्तौ बुद्धिनाशेन प्रत्यहं बुद्ध्युपाधिभेदादेकजीवस्य व्यवहारो न स्यादित्यत आह। स एवायमिति। स्थूलसूक्ष्मात्मना तिष्ठत्येकोपाधिरित्यर्थः॥

अवस्थात्रयादात्मानं विविच्य मूर्च्छातो विवेचयति। मुग्धेऽर्द्धसम्पत्ति परिशेषात्। मूर्च्छा प्रसिद्धावस्थान्तर्गता वा पञ्चमावस्था वेति

श्रुतौ स्मृतौ वा प्रसिद्धास्ति, तस्माच्चतसृणामेवावस्थानामन्यतमावस्था मूर्च्छेत्येवं प्राप्ते ब्रूमः। न तावन्मुग्धो जागरितावस्थो भवितुमर्हति, न ह्ययमिन्द्रियैर्विषयानीक्षते। स्यादेतत् इषुकारन्यायेन मुग्धो भविष्यति, यथेषुकारो जाग्रदपि इष्वासक्तमनस्तया नान्यान् विषयानीक्षते एवं मुग्धो मुसलसम्पातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान् विषयानीक्षते इति। न, अचेतयमानत्वात्। इषुकारो हि व्यापृतमना ब्रवीति इषुमेवाहमेतावन्तं कालं उपलभमानोऽभूवमिति, मुग्धस्तु लब्धसञ्ज्ञो ब्रवीति अन्धे तमसि अहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किञ्चिन्मया चेतितमिति। जाग्रतश्चैकविषयासक्तचेतसोऽपि देहो विध्रियते, मुग्धस्य तु देहो धरण्यां पतति, तस्मात् न जागर्ति नापि स्वप्नान् पश्यति, निःसञ्ज्ञत्वात्। नापि मृतः, प्राणोष्मणोर्भावात्। मुग्धे हि जन्तौ मृतोऽयं स्यात् न वाऽमृत इति संशयाना ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थं, प्राणोऽस्ति नास्तीति च नासिकादेशं, यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति ततो मृतोऽयमित्यध्यवसाय

---

व्यवस्थाचतुष्टयसिद्धेर्मुग्धस्य तद्वैलक्षण्याच्च संशये सोऽहमिति प्रत्यभिज्ञयोत्थितस्य साक्षिभेदवद्विशेषज्ञानाभावाविशेषेण लिङ्गेन सुषुप्तिरेव मूर्च्छेति प्रत्यभिज्ञानात् सुषुप्त्यन्तर्गता मूर्च्छेति दृष्टान्तसङ्गत्या पूर्वपक्षमाह। तिसृणावदिति। पूर्वपक्षे प्रसिद्धावस्थात पृथगात्मनो मूर्च्छातो विवेकार्थं यत्नासिद्धिः फलं, सिद्धान्ते पृथक्प्रयत्नध्रौव्यमिति भेद। परिशेषं दर्शयन् सिद्धान्तयति। न तावदित्यादिना। जाग्रदपि जागरावस्थोऽपीत्यर्थः। ऐन्द्रियमर्थज्ञानं देहधारणञ्च तस्यास्ति न मुग्धस्येति वैधर्म्योक्त्या दूषयति। नेत्यादिना। मूर्च्छाया जागरद्वद-

दहनायारण्यं नयन्ति, अथ तु प्राणमुष्माणं वा प्रतिपद्यन्ते ततो नायं मृत इत्यध्यवसाय सञ्ज्ञालाभायाभिपद्यन्ति। पुनरुत्थाय च न दिष्टं गतः न हि यमं गतो यमराष्ट्रात् प्रत्यागच्छति। अस्तु तर्हि सुषुप्तः निःसञ्ज्ञत्वात् अमृतत्वाच्च। न, वैलक्षण्यात्। मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति सवेपथुरस्य देहो भवति भयानकञ्च वदनं विस्फारिते नेत्रे, सुषुप्तस्तु प्रसन्नवदनः तुल्यकालं पुनः पुनरुच्छ्वसिति निमीलिते अस्य नेत्रे भवतः, न चास्य देहो वेपते, पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि। निमित्तभेदश्च भवति मोहस्वापयोः, मुषलसम्पातादिनिमित्तत्वान्मोहस्य श्रमनिमित्तत्वाच्च स्वापस्य। न च लोकेऽस्ति प्रसिद्धिः मुग्धः सुप्त इति। परिशेषादर्द्धसम्पत्तिर्मुग्धतेत्यवगच्छामः निःसञ्ज्ञत्वात् सम्पन्नः इतरस्माच्च वैलक्षण्यादसम्पन्न इति। कथं पुनरर्द्धसम्पत्तिर्मुग्धता इति शक्यते वक्तुं, यावता सुप्तं प्रति तावदुक्तं श्रुत्या 'सता सोम्य तदा सम्पन्नो भवति अत्र स्तेनोऽस्तेनो भवति नैनं सेतुमहोरात्रे

---

मुक्ता स्वप्नमृतिभ्यां भेदमाह। नापीत्यादिना। आलभते स्पृशन्ति। दिष्टं मरणं। सुषुप्तिमूर्च्छयोः किञ्चित्साम्येऽपि बहुवैलक्षण्याद्भेद इत्याह। नेति। लक्षणभेदमुक्ता निमित्तभेदमाह। निमित्तेति। प्रत्यभिज्ञाप्यसिद्धेत्याह। न चेति। उक्तसाम्यवैरूप्याभ्यामर्द्धसम्पत्तिः सर्वैः सुषुप्तिधर्मैरसम्पन्नो मुग्ध. सुषुप्तो न भवति, सर्वैर्मरणावस्थाधर्मैरसम्पत्तेर्मृतोऽपि न किन्तु अवस्थान्तरं गत इति सूत्रार्थः। अत्र सूत्रे जीवस्य ब्रह्मणार्द्धसम्पत्तिरुक्तेति भ्रान्तः शङ्कते। कथमिति। यत् सुषुप्तं प्रति सत्सम्पन्नत्वं श्रुतं तदुपाध्यभावाभिप्रायं। उपाध्यभावस्य मुग्धस्यापि सम इति यतः तस्मात् कृत्स्नसम्पत्तिरेवेत्यर्थः। सुषुप्तकाले

तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' इत्यादि। जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति, न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्यते, मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते, तस्मादुपाध्युपशमात् सुषुप्तवन्मुग्धेऽपि कृत्स्नसम्पत्तिरेव भवितुमर्हति नार्द्धसम्पत्तिरिति। अत्रोच्यते न ब्रूमो मुग्धेऽर्द्धसम्पत्तिर्जीवस्य ब्रह्मणा भवति इति, किं तर्हि अर्द्धेन सुषुप्तपक्षस्य भवति मुग्धत्वं अर्द्धेनावस्थान्तरपक्षस्येति ब्रूमः। दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये। द्वारञ्चैतन्मरणस्य यदास्य सावशेषं कर्म भवति तदा वाङ्मनसे प्रत्यागच्छतः यदा तु निरवशेषं कर्म भवति तदा प्राणोष्माणावपगच्छतः, तस्मादर्द्धसम्पत्तिं ब्रह्मविद इच्छन्ति। यत्तूक्तं न पञ्चमी काचिदवस्था प्रसिद्धास्तीति, नैष दोषः, कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात्, प्रसिद्धा चैषा लोकायुर्वेदयोः। अर्द्धसम्पत्त्यभ्युपगमाच्च न पञ्चमी *गण्यत इत्यनवद्यं॥

---

कर्मासम्बन्धे पुनरुत्थानं कथमित्याशङ्क्य तत्कार्याभावात्तदसम्बन्धोक्तिरित्याह। जीवे हीति। ब्रह्मणा कृत्स्नसम्पत्तिमङ्गीकृत्य परिहरति। न ब्रूम इति। मुग्धत्वं हि सुषुप्तस्यार्द्धेन निःसंज्ञत्वादिधर्मेण साम्येन सम्पन्नं भवति, मरणस्यार्द्धेन कम्पादिना सम्पन्नमित्यर्द्धसम्पत्तिरित्यर्थः। इतोऽपि सुषुप्तिवैधर्म्यमित्याह। द्वारञ्चेति। अप्रसिद्धिमङ्गीकृत्योक्तं प्रसिद्धिरप्यस्तीत्याह। प्रसिद्धा चेति। आयुर्वेदो वैद्यशास्त्रं। प्रसिद्धेः कथं विचार इत्याशङ्क्य पञ्चमत्वेनाप्रसिद्धेरित्याह। अर्द्धेति। सुषुप्तिमृतिधर्मार्द्धसम्पत्त्या तदन्तर्भाववुद्धिर्लोकानामित्यर्थः॥

---

* गण्यत इति सो०।

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

येन ब्रह्मणा सुषुप्तादिषु जीव उपाध्युपशमात् सम्पद्यते तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते। सन्त्युभयलिङ्गाः श्रुतयः ब्रह्मविषयाः 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्येवमाद्याः सविशेषलिङ्गाः, 'अस्थूलमनण्वह्रस्वमदीर्घम्' इत्येवमाद्याश्च निर्विशेषलिङ्गाः। किमासु श्रुतिषु उभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गं, यदाप्यन्यतरलिङ्गं तदापि सविशेषमुत निर्विशेषमिति मीमांस्यते। तत्रोभयलिङ्गश्रुत्यनुग्रहात् उभयलिङ्गमेव ब्रह्मेत्येवं प्राप्ते ब्रूम', न तावत् स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते, न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतञ्चेत्यभ्युपगन्तुं शक्यं विरोधात्। अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति, तदपि नोपपद्यते। न ह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशस्वभावः सम्भवति। न हि स्वच्छः सन् स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति,

---

सर्वाभिरवस्थाभिरलिप्तस्वरूपं इति विचार्य्यापादसमाप्तेस्तत्पदार्थं निरूपयितुकाम प्रथम तस्य निर्विशेषत्वमाह। न स्थानतोऽपि परस्योभयलिङ्ग सर्वत्र हि। उद्देश्यत्व पदार्थजिज्ञासोपरमानन्तर ततस्वरूप ब्रह्मविचारस्यावसरसङ्गतिमाह। येनेति। निर्विशेषत्व सविशेषत्वञ्चेत्युभय लिङ्ग्यते ज्ञाप्यते याभिस्ता उभयलिङ्गा श्रुतय संशयबीजत्वेन सन्तीत्यर्थं। यथा विरुद्धयपुष्पिमरत्ने।भयरूप मुग्धत्व तथा श्रुतिप्रामाण्यादुभयरूप ब्रह्म ध्येयमिति दृष्टान्तेन पूर्वपक्ष। निर्विशेषमेकरूपमेव ज्ञेयमिति सिद्धान्तयति। एवमिति। किमुभयरूपत्वं स्वत उत स्वतो निर्गुणस्य सर्वगन्धत्वादिविशेष उपाधित सत्य चाहोस्वित् स्वत सविशेषमेव ब्रह्मेति, तत्राद्य निरस्य द्वितीयं चानूद्य दूषयति। चस्तु

ममात्रत्वादस्वच्छताभिनिवेशस्य, उपाधीनाञ्चाविद्याप्रत्युप-
यापितत्वात्। अतश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषर-
हितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं न तद्विपरीतं। सर्वत्र हि
ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्'
इत्येवमादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात्॥ १२॥

अथापि स्यात्, यदुक्तं निर्विकल्पकमेकलिङ्गमेव ब्रह्म नास्य
स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति, तन्नोपपद्यते। कस्मात्, भे-
दात्। भिन्ना हि प्रतिविद्य ब्रह्मण आकारा उपदिश्यन्ते 'चतु-
ष्पात् ब्रह्म षोडशकलं ब्रह्म वामनत्वादिलक्षणं ब्रह्म त्रैलोक्य-
शरीरवैश्वानरशब्दोदितं ब्रह्म' इत्येवंजातीयकाः, तस्मात् सवि-
शेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यं। ननूक्तं नोभयलिङ्गत्वं ब्रह्मणः
सम्भवति इति। अयमप्यविरोधः, उपाधिकृतत्वादाकारभे-
दस्य, अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति चेत्। नेति

---

तर्ह्येति। स्थानमुपाधिः, ब्रह्मणि विशेषः कल्पितः चौपाधिकत्वात्
स्फटिकलौहित्यवदित्यर्थः। उपाधेः सत्यत्वेऽपि तत्कृतं मिथ्येति दृष्टं
ब्रह्मणि तूपाधीनां मिथ्यात्वात् तत्कृतो विशेषो मिथ्येति किमु वाच्य
मित्याह। उपाधीनामिति। हतीयं निरस्यति। अतश्चेति। सर्वस्य
विशेषस्य कल्पितत्वादेवेत्यर्थः। निषेधश्रुतेश्चैवमित्याह। सर्वत्र हीति॥

भिद्यत इति भेदो विशेष, विशेषश्रुतावपि विशेषस्यापि श्रुते-
रुभयरूपत्वं स्यादिति शङ्का व्याचष्टे। अथापि स्यादिति। पूर्वोक्तं
विरोधं स्मारयति। ननूक्तमिति। भेदश्रुतिप्रामाण्यार्थमौपाधिक-
रूपभेदस्वीकारादविरोध इति समाधर्थः। किमुपाधिगत एव रूप-

ब्रूमः। कुतः, प्रत्येकमतद्वचनात्। प्रत्युपाधिभेदं हि अभेदमेव ब्रह्मणः श्रावयति शास्त्रं 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' इत्यादि। अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुं, *भेदस्योपासनार्थत्वादभेदे तात्पर्यात्॥

अपि चैवमेके॥ १३॥

अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति—

"मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ॥ इति।

तथान्येऽपि 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते, कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमित्येतदुत्तरं पठति॥

---

भेदो ब्रह्मण्युपचर्यते ध्यानार्थमुक्तोपाधियोगात् सत्यविरुद्धरूपवत्तया ब्रह्मणो भेदो भवतीति। आद्येऽस्मदिष्टसिद्धिः द्वितीये भेदश्रुत्या दूषयति। नेति ब्रूम इति॥

द्वैतनिन्दापूर्वकमद्वैतोक्तेश्च निर्विशेषं तत्त्वमिति सूत्रार्थमाह। अपि चेति। भोक्ता जीवो भोग्यं शब्दादि तयोः प्रेरितारमीश्वरं च मत्वा विचार्य मे मम प्रोक्तं तत्सर्वं त्रिविधं ब्रह्मैवेति जानीयादित्यर्थः। द्विविधश्रुतीषु सतीषु निर्विशेषत्वे किं नियामकमिति शङ्कते। कथं पुनरिति॥

---

* भेदेत्यादि तात्पर्यादित्यन्त वर्ध० का० नास्ति।

## अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

रूपाद्याकाररहितमेव हि ब्रह्मावधारयितव्यं न रूपादिमत्। कस्मात् तत्प्रधानत्वात्। 'अस्थूलमनण्वह्रस्वमदीर्घं, अशब्दमस्पर्शमरूपमव्ययं, आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म, दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः, तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इत्येवमादीनि हि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं 'तत्तु समन्वयात्' इत्यत्र। तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यं, इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि उपासनाविधिप्रधानानि हि तानि, तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यं, सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति इति। एष विनिगमनायां हेतुः येनोभयास्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति का तर्हि आकारवद्विषयाणां श्रुतीनां गतिरित्यत आह॥

---

तत्परातत्परविरोधे तत्परं बलवदिति न्यायो नियामक इत्याह। अरूपवदेवेति। उपासनपरवाक्येषु आकारे तात्पर्याभावेऽपि देवतात्वविग्रहवदाकारसिद्धिमाशङ्क्य निष्प्रपञ्चपरश्रुतिविरोधात् नैवमित्याह। तेष्वसतीति॥

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेषु ऋजुवक्रादिभावम्प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते एवं ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात् तदाकारमिव प्रतिपद्यते, तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते, एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति, न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुं प्रमाणत्वाविशेषात्। नन्वेवमपि यत् पुरस्तात् प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति तद्विरुध्यते, नेति ब्रूमः। उपाधिनिमित्तस्य वस्तुधर्मतानुपपत्तेः, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। सत्यमेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम॥

---

कल्पितद्वैते सावकाशत्वाच्च सप्रपञ्चत्वश्रुतयो दुर्बला इत्याह। प्रकाशवच्चेति। नन्वाकारवाक्यानामुपाधिकल्पितसर्वगन्धत्वादिनार्थवत्त्वं किमिति वर्ण्यते वैयर्थ्यमेवोच्यतां। तत्राह। न हि वेदवाक्यानामिति। नन्वेवमपीति उक्तरीत्योभयरूपत्वाङ्गीकारेण श्रुतीनां व्यवस्थिते त्वपोत्यर्थं। उपाधीनां कल्पितत्वादौपाधिकस्य सत्यत्वानुपपत्तेर्न सत्यमुभयरूपत्वमिति पूर्वमुक्तं सम्प्रति सत्यं निर्विशेषत्वं मिथ्या सविशेषत्वमित्युच्यत इत्युभयरूपत्वाङ्गीकारेऽपि न पूर्वापरविरोध इत्याह। नेति ब्रूम इति। द्वैतस्य मिथ्यात्वे ज्ञानेन बाधादुपासनादिव्यवहारो न स्यादित्याशङ्क्य बाधात् प्रागेव स इत्याह। सत्यमिति॥

आह च तन्मात्रं ॥ १६ ॥

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति। एतदुक्तं भवति, नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपं, यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरन्तथैवायमपीति ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषं 'अथात आदेशो नेति नेति, अन्यदेव तद्विदितादथो अविदितादधीति, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्येवमाद्या। बाष्कलिना च बाह्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते 'स होवाचाधीहि भगवो ब्रह्मेति स तूष्णीं बभूव तं ह द्वितीये वा

---

यतः श्रुतिश्चिन्मात्रमाह अतश्च विशेषो मिथ्येति सूत्रार्थमाह। आह चेति। सैन्धवघनो लवणपिण्डः ॥

किञ्च श्रुतिस्मृत्योः परनिषेधेन ब्रह्मोपदेशात् निष्प्रपञ्चं ब्रह्मेत्याह। दर्शयति चेति। अथ द्वैतोक्त्यनन्तरं ज्ञानहेतुत्वान्नेति नेति उपदेशः क्रियत इत्यर्थः। अधि अन्यत् पुनः पुनरधीहि भो इति निर्बन्धकारिणं तं द्वितीये तृतीये च प्रश्ने तूष्णीभावं त्यक्त्वा उवाच। उपशान्तो निरस्तद्वैतः। अतस्तस्य तूष्णींभाव एवोत्तरमिति भावः। अथोशब्दस्तथार्थकः। आदिमत्कार्यं तन्न भवतीत्यनादिमत्। सत् इन्द्रियवेद्यं। असत् परोक्षञ्च न स्वप्रकाशत्वादित्यर्थः। सर्वभूतगुणैर्दिव्य-

तृतीये वा वचन उवाच ब्रूमः खलु त्वन्तु न विजानासि उपशान्तोऽयमात्मा' इति। तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते—

"ज्ञेयं यत् तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" ॥

इत्येवमाद्यासु। तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते—

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि" ॥ इति।

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एव चायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधेनोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवत् इत्युपमोपादीयते मोक्षशास्त्रेषु—
'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति।

---

गन्धादिभिर्युक्तं मां मूर्तिमन्तं पश्यसीति यत्सा माया अत एव सद्वैतो भगवानिति मां द्रष्टुं नार्हसि वस्तुतो द्वैतातीतत्वादित्यर्थः ॥
किञ्च यथा जलाद्युपाधिकल्पितः सूर्यचन्द्रादेर्भेदचलनादिर्धर्म एवमात्मन इति दृष्टान्तः। श्रुतेश्च निर्विशेषं तत्त्वमित्याह। अत एव चोपमेति। जलबिम्बत्वाकारेण सूर्यस्याभासत्वद्योतनाय सूर्यकेति कप्रत्ययः। यथायं ज्योतिर्मयो विवस्वान् स्वत एकोऽपि घटभेदेन भिन्नाः

"एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" ॥
इति चैवमादिषु । अत्र प्रत्यवस्थीयते ॥

अम्बुवदग्रहणात् तु न तथात्वं ॥ १९ ॥

न जलसूर्यादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात् । सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः न त्वात्माऽमूर्तो न चास्मात् पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात् सर्वानन्यत्वाच्च । तस्मादयुक्तोऽयं दृष्टान्त इति । अत्र प्रतिविधीयते ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं ॥ २० ॥

युक्त एव त्वयं दृष्टान्तः विवक्षितांशसम्भवात्, न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् किञ्चिद्विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते, सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । न चेदं स्वमनीषिकया जलसूर्यकादिदृष्टान्तप्रणयनं । शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते

---

घटेष्वनुगच्छन् बहुधा क्रियते एवमजोऽयमात्मा देवः स्वप्रकाशः एकोऽप्युपाधिना मायया क्षेत्रेष्वनुगच्छन् भेदरूपः क्रियत इति योजना ॥

इहात्मन्युक्तदृष्टान्तवैषम्यशङ्कासूत्रं । अम्बुवदिति । आत्मनो रूपत्वात् दूरस्थोपाध्यभावाच्च मायया बुद्ध्यादिषु प्रतिबिम्बभेदो न युक्त इत्यर्थः ॥

उपाध्यन्तर्भावेन तत्कल्पितधर्मवत्त्वमत्र विवक्षितांशस्तेन साम्येन समाधानसूत्रं । वृद्धिह्रासेति । दृष्टान्तसाम्येऽपि नीरूपात्मनः प्रति-

किं पुनरत्र विवक्षितं सारूप्यमिति। तदुच्यते। वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुविधायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति, एवं परमार्थतोऽविकृतमेकरूपमपि सत् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीन्, एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः॥

## दर्शनाच्च॥२१॥

दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिषु अन्तरनुप्रवेशम्—

'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्'॥

इति, 'अनेन जीवेनात्मनानुप्रविश्य' इति च। तस्मा-

---

बिम्बं स्वबुद्ध्या कथं कल्प्यत इत्याह। न चेदमिति। श्रूयते न कल्प्यत इत्यर्थः। श्रुतदृष्टान्तस्य सूर्यकादिवत् इत्युपन्यासेन किं फलमित्यत आह। प्रास्त्रेति। आत्मनो निर्विशेषत्वं फलमित्यर्थः। अविरोध इति न वैषम्यमित्यर्थः। आत्मा प्रतिबिम्बशून्यः नीरूपद्रव्यत्वात् वायुवत् इत्यनुमाने आकाशे व्यभिचारः। अल्पजले विदूराकाशप्रतिबिम्बदर्शनादुपाधिरूपस्थत्वमपि क्वचिदनपेक्षितमिति भावः॥

प्रवेशश्रुतेश्चोक्तानुमानबाध इत्याह सूत्रकारः। दर्शनाच्चेति। द्विपदः पुरो मनुष्यादिदेहाञ्चक्रे चतुष्पदः पुरः पशून् कृत्वा पुरः स्वसृष्टाद्यभिव्यक्तेः पुरस्तात् स ईश्वरः पक्षी लिङ्गशरीरी भूत्वा पुरः उक्तानि शरीराण्याविशत् स च प्रविष्टोऽपि पुरुषः पूर्ण एवेत्यर्थः।

युक्तमेतत् अत एवोपमासूर्यकादिवदिति। तस्मात् निर्वि-
कल्पकैकलिङ्गमेव ब्रह्म नोभयलिङ्गं न विपरीतलिङ्गञ्चेति
सिद्धं। अत्र केचित् द्वे अधिकरणे कल्पयन्ति, प्रथमं तावत्
किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म उत प्रपञ्चवदने-
काकारोपेतमिति, द्वितीयन्तु स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं
सल्लक्षणं ब्रह्म उत बोधलक्षणं उतोभयलक्षणमिति। अत्र वयं
वदामः सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति। यदि ता-
वदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्त्तव्यमित्ययं प्रयासः
तत्पूर्वेणैव न स्थानतोऽपीत्यनेनाधिकरणेन निराकृतमित्युत्तर-
मधिकरणं प्रकाशवच्चैतत् व्यर्थमेव भवेत्। न च सल्लक्षणमेव
ब्रह्म न बोधलक्षणमिति शक्यं वक्तुं, विज्ञानघन एवेत्यादि
श्रुतिवैयर्थ्यप्रसङ्गात्। कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीव-
स्यात्मत्वेनोपदिश्येत। नापि बोधलक्षणमेव ब्रह्म, न सल्लक्षण-

---

तैत्तिरीयके लिङ्गस्य पश्चादुक्तेः पश्चित्वं मन्तव्यं। एवं प्रतिविम्ब-
भावेन भेदादेः कल्पितत्वात् निर्विशेषं ब्रह्मेति स्वमतमुपसंहरति।
तस्मादिति। एकदेशिव्याख्यामुत्थापयति। अत्रेति। न स्थानतोऽ-
पीत्याद्येकमधिकरणं, तत्र ब्रह्मणो निष्प्रपञ्चत्वे स्थिते किंलक्षणं ब्रह्मेति
सन्देहे प्रकाशवच्चेत्यादिद्वितीयमधिकरणं प्रवृत्तं न सद्रूपमेव ब्रह्म
किन्तु प्रकाशवच्च चिद्रूपञ्च। कुतः, अवैयर्थ्यात्। सत्यं ज्ञानं सदेव
सोम्येत्युभयश्रुतेर्द्विरूपे ब्रह्मण्यर्थवत्त्वादिति पूर्वपक्षे सिद्धान्तः। आह
च तन्मात्रं सन्मात्रं ब्रह्म। श्रुतिराह ज्ञानस्य सत्तानतिरेकादिति। इदं
द्वितीयाधिकरणं दूषयति। अत्र वयमिति। द्वितीयाधिकरणस्य किं ब्रह्म-
णोऽनेकरूपत्वनिरासः फलं उत बोधरूपत्वनिरासः आहोस्वित् सत्ता
निरास इति विकल्प्य सर्वथाप्यानर्थक्यं प्रपञ्चयन् आद्ये गतार्थतामाह।

मिति शक्यं वक्तुं, 'अस्तीत्येवोपलब्धव्यः' इत्यादिश्रुतिवैयर्थ्य-प्रसङ्गात्, कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत। नाप्यु-भयलक्षणमेव ब्रह्मेति शक्यं वक्तुं, पूर्वाभ्युपगमविरोधप्रसङ्गात् सत्ताव्यावृत्तेन बोधेन बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं प्रस-ज्येत। श्रुतत्वाददोष इति चेत्, न, एकस्यानेकस्वभावत्वानुप-पत्तेः। अथ सत्तैव बोधः बोध एव च सत्ता नानयोः परस्पर-व्यावृत्तिरस्ति इति यद्युच्येत तथापि किं सल्लक्षणं ब्रह्म उत बो-धलक्षणं उतोभयलक्षणमित्ययं विकल्पो निरालम्बन एव स्यात्, सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि। अपि च ब्रह्म-विषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्ना-स्वनाकारे ब्रह्मणि परिगृहीते अवश्यंवक्तव्येतरासां श्रुतीनां

---

यदि तावदिति। न हि द्वितीय इत्याह। न चेति। ब्रह्मणो बोध-रूपत्वनिरासे जडत्वाज्जीवाभेदश्रुतिबाधश्च स्यादित्याह। कथं वेति। न तृतीय इत्याह। नापीति। सत्तानिरासे बोधस्य तुच्छत्वं च स्या-दित्याह। कथमिति। न च बोधस्य सत्तानतिरेकान्न तुच्छतेति वाच्यं। सद्बोधपदयोर्वाच्यानतिरेके पर्यायत्वप्रसङ्गात्। एवं सिद्धान्तं फलाभावेन दूषयित्वा पूर्वपक्षं दूषयति। नापीति। प्रसङ्गमेवाह। सत्तेति। व्यावृत्तत्वं भिन्नत्वं। निष्प्रपञ्चैकरूपत्वसिद्धान्तविरोधात् भिन्नोभयरूपत्वपूर्वपक्षानुत्थानमित्यर्थः। उभयश्रुतिबलादुत्थानमिति शङ्कते। श्रुतत्वादिति। मेरुविन्ध्यवत् परस्परं भिन्नसत्ताबोधयोरेक-ब्रह्माभेदशङ्का श्रुतिशतेनापि न युक्तेत्याह। नेति। सद्बोधयोर्भेदो-ऽस्ति न वा आद्ये श्रुतेरपि विरुद्धार्थत्वानुपपत्तेर्न पूर्वपक्षोत्थानमित्युक्तं। सम्प्रति द्वितीयं शङ्कते। अथ सत्तैवेति। सद्बोधपदयोर्वाच्यभेदेऽपि

गतिः, तादर्थ्येन प्रकाशवच्चेत्यादीनि सूत्राणि अर्थवन्तराणि सम्पद्यन्ते। यदप्याहुः आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेनानाकारप्रतिपत्त्यर्था एव न पृथगर्था इति तदपि न समीचीनमिव लक्ष्यते। कथं ये हि परविद्याधिकारे केचित् प्रपञ्चा उच्यन्ते 'यथा युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' इत्येवमादयः ते भवन्तु प्रविलयार्थाः, 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यं' इत्युपसंहारात्। ये पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते 'यथा मनोमयः प्राणशरीरो भारूपः' इत्येवमादयो न तेषां प्रविलयार्थत्वं न्याय्यं, स क्रतुं कुर्वीतेत्येवजातीयकेन प्रकृतेने-

---

रूप्यैक्योपपत्तिरखण्डार्थस्वीकारादित्यर्थः। अखण्डार्थस्य पूर्वपक्षत्वं न स्यात् सिद्धान्तत्वात्। किञ्चान्ये उभयेऽप्ययुक्ता इत्याह। तथापीति। एकाधिकरणपक्षे सूत्राणि कथं नेयानीत्यत आह। सूत्राणीति। स्वपक्षे सूत्रसामञ्जस्यं चेत्याह। अर्थवदिति। अवश्यापेक्षितगत्यर्थत्वेनोत्तरसूत्राणां पूर्वैकवाक्यत्वान्नाधिकरणभेद इति भावः। आकारश्रुतीनां कल्पिताकारो गतिरिति स्वमतमुक्तं, प्रपञ्चविलयवादिनस्तु 'मनोमयः प्राणशरीरः सत्यकामः' इत्याद्याकारश्रुतीनां तदितराकारप्रविलयो गतिरित्याहुः। मनोमय इति कोऽर्थः, मनोऽतिरिक्तोपाधिशून्य इत्यर्थः। एवं प्राणशरीरपदेन प्राणातिरिक्तोपाधिनिषेधान्मनसोऽप्यभावसिद्धिः एवं सर्वे शब्दा अनाकारब्रह्मपरा एवेति तन्मतमनूद्य दूषयति। यदपीत्यादिना। किं ज्ञेयब्रह्मप्रकरणस्थानामाकारशब्दानां निषेधपरत्वं उतोपासनाप्रकरणस्थानामपि तत्राद्यमङ्गीकरोति। ये हीति। अस्य जीवभावं प्राप्तस्येश्वरस्य दश हरयो विषया हरणा-दशेन्द्रियाणि प्राणिभेदापेक्षया शतानि सहस्राणि च तेषामीश्वरा-ऽभेदमाह। अयमिति। ईश्वर एव हरय इत्यर्थः। द्वितीयं

वोपासनविधिना तेषां सम्बन्धात्। श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्प्यमाने न लक्षणया प्रविलयार्थत्वम-कल्प्यते। सर्वेषाञ्च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' इति विनिगमनकारणवचनमनवकाशं स्यात्। फलमप्येषां यथोपदेशं क्वचित् दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः क्वचित् क्रममुक्तिरित्यवगम्यत एवेति। अतः पार्थगर्थ्यमेवोपास-नावाक्यानां ब्रह्मवाक्यानाञ्च न्याय्यं नैकवाक्यत्वं। कथञ्चैषामेक-वाक्यतोत्प्रेक्ष्यत इति वक्तव्यं। एकनियोगप्रतीतेः प्रयाजदर्शपूर्ण-मासवाक्यवदिति चेत्, न, ब्रह्मवाक्येषु नियोगाभावात्। वस्तु-मात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनीति एत-द्विस्तरेण प्रतिपादितं 'तत्तु समन्वयात्' [वेदा०अ०१।पा०१।सू०४] इत्यत्र। किंविषयकश्चात्र नियोगोऽभिप्रेत इति वक्तव्यं, पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चित् नियुज्यते। ननु

---

दूषयति। ये पुनरिति। मनोमयादिशब्दानां मुख्यवृत्त्या गुणपरत्व-सम्भवे निषेधलक्षणापि न युक्तेत्याह। श्रुत्या चेति। किञ्चाकारा-नाकारश्रुतिद्वैविध्ये सति ब्रह्म नाकारमेवेत्यत्र किं विनिगमकमिति शङ्कोत्थानादस्थूलादिश्रुतीनां निराकारतात्पर्यनियामकमिति कथना-र्थमिदं सूत्रमर्थवत् भवति। सर्वश्रुतीनां निषेधार्थत्वे तु शङ्कानुत्था-नात् नियामकसूत्रं व्यर्थं स्यादित्याह। सर्वेषाञ्चेति। ननूपासनार्थ-वाक्यानां स्वार्थे फलाभावात् सफलनिषेधवाक्यशेषत्वमित्याशङ्क्य तस्य श्रुतत्वान्नान्यशेषतेत्याह। फलमपीति। अर्थैक्याभावाच्च नैकवाक्यते-त्याह। कथञ्चेति। अर्थैक्यं शङ्कते। एकेति। यथा फलवत् परमा-पूर्वाख्यनियोगैक्यादङ्गप्रधानवाक्यानामेकवाक्यता तथा तत्त्वावबो-

द्वैतप्रपञ्चप्रविलयो नियोगविषयो भविष्यति, अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवतीत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्य. यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्चप्रविलय', यथा च तमसि व्यवस्थितं घटादितत्त्वं अवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यते, एव ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवति इति। अत्र वयं पृच्छामः कोऽयं प्रपञ्चप्रविलयो नाम, किमग्निप्रतापसम्पर्कात् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः आहोस्विदेकस्मिन् चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति। तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्य. प्रविलापयि-

---

र्गकामस्य प्रपञ्चप्रविलयविषयक एको नियोगरूपोऽर्थोऽस्तीत्याकाराकरव्याख्यानां सर्वेषामेकवाक्यतेत्यर्थः। नियोगासिद्ध्या दूषयति। नेति। विषयं शङ्कते। ननु द्वैतेति। प्रत्यनीकं प्रतिबन्धकं। ननु प्रपञ्चविलये ब्रह्मक्षयं स्यादभेदादित्यत आह। ब्रह्मस्वभावो हि प्रपञ्च इति। कारणं हि कार्यस्य स्वरूपं अत कार्यनाशेऽपि कारणस्य न क्षय घटनाशेऽपि मृद्दर्शनादित्यर्थः। प्रपञ्चस्य सत्यस्य कल्पितस्य वा लयो विधिरिति विकल्प्याद्यं दूषयति। तत्र यदि तावदिति। सत्यस्य मानादध्वंसो मुसलादिना च कृत्स्नद्वैतध्वंसायोगात् नभोग्रसनवि-

तुमिति तल्लयोपदेशोऽशक्यविषय एव स्यात्, एकेन चादिमुक्तेन पृथिव्यादिप्रविलयः कृतः इदानीं पृथिव्यादिशून्यं जगदभविष्यत्। अथाविद्याध्यस्तो ब्रह्मण्येकस्मिन्नयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यं 'एकमेवाद्वितीयं ब्रह्म तत्सत्यं स आत्मा तत्त्वमसि' इति। तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते तया चाविद्या बाध्यते ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत् प्रविलीयते। अनावेदिते तु ब्रह्मणि ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयञ्चेति शतकृत्वोऽप्युक्ते न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायेत। नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविलयविषयो वा नियोगः स्यात्, न, निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैवोभयसिद्धेः, रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानमविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति, न च कृतमेव पुनः क्रियते। नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम स प्रपञ्चपक्षस्यैव वा स्यात् ब्रह्मपक्षस्यैव

---

धिवदशक्यविषयोऽयं विधिः, किञ्च शुकादिमुक्त्या सर्वमुक्तिः स्यादित्यर्थः। द्वितीयमनूद्य दूषयति। अथेत्यादिना। उपदेशजन्यज्ञानादेवाविद्यातज्जन्यप्रपञ्चलयसिद्धेर्नियोगो व्यर्थ इत्यर्थः। किञ्च ब्रह्मज्ञानादौ विधिः किं ब्रह्मण्यज्ञाते ज्ञाते वा, नाद्य अशक्यत्वादित्याह। अनावेदिते त्विति। द्वितीयं शङ्कते। नन्विति। उपदेशादेव ज्ञाते ब्रह्मणि साक्षात्काराद्वैतबाधयोः सिद्धेर्विधिवैयर्थ्यमसिद्धस्य विधिना कर्तुमयोगादित्याह। नेति। एवं विषयाभावात् नियोगाभावमुक्त्वा नियोज्याभावात् तदभावमाह। नियोज्योऽपि चेति। प्रपञ्चान्तर्भूतो ब्रह्म

वा। प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिव-
ज्जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्चप्रविलये नियोग
उच्येत कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत। द्वितो-
येऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपं जीवत्वं त्वविद्या-
कृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावात् नियोगाभाव
एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वा-
भिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधानाः भवन्ति,
लोकेऽपीदं पश्येदमाकर्णयेति चैवंजातीयकेषु निर्देशेषु प्रणि-
धानमात्रं कुर्वित्युच्यते न साक्षात् ज्ञानमेव कुर्विति। ज्ञेया-
भिमुखस्यापि ज्ञानं कदाचिज्ज्ञायते कदाचित् न जायते,
तस्मात्तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन,
तस्मिन् दर्शिते स्वयमेव यथाविषयं यथाप्रमाणञ्च ज्ञानमुत्प-
द्यते। न च प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं नियु-
क्तस्याप्युपपद्यते। यदि पुनर्नियुक्तोऽहमित्यन्यथा ज्ञानं कुर्यात्

---

चेत्यर्थः, आद्ये जीवनाशादिप्रयोग द्वितीये नियोज्यादिसिद्धि।
तर्हि ध्याने विधिप्रत्ययानां का गतिरित्यत आह। द्रष्टव्यादिशब्दा
इति। ननु श्रुतं ध्यानं त्यक्त्वा तत्साधनव्यापारविधिं किमिति कल्प्यत
इत्याशङ्क्य ध्यानस्य पुरुषकृत्यसाध्यत्वादित्याह। ज्ञेयाभिमुखस्या-
पीति। किञ्च ध्यानविधिवादिना ज्ञेय ब्रह्मावश्यं वेदान्तैर्ज्ञापनीयं
विषयानवबोधे विधिबोधायोगात्। तथा च वेदान्तैरेव ज्ञानोत्पत्ते-
र्विध्यानर्थक्यमित्याह। तस्मादिति। स ज्ञानार्थिनं प्रतीत्यर्थः। ननु-
त्पन्नं ज्ञानमन्यथाकर्तुं विधिरर्थवानिति नेत्याह। न चेति। नन्वनग्नि-
र्ग्निरिति प्रत्यक्षप्रमाणादुत्पन्नमपि ज्ञानं तमग्निं ध्यायेदिति विधि-
नान्यथा क्रियते इत्यत आह। यदीति। अन्यथाधी क्रतिसाध्या

न तु तज्ज्ञानं किं तर्हि मानसी सा क्रिया स्वयमेव चेद्न्यथो-त्पद्येत भ्रान्तिरेव स्यात्, ज्ञानन्तु प्रमाणजन्यं यथाभूतविषयं च न तन्नियोगशतेनापि कारयितुं शक्यते, न च प्रतिषेधशते-नापि वारयितुं शक्यते, न हि तत्पुरुषतन्त्रं वस्तुतन्त्रमेव हि तत्, अतोऽपि नियोगाभावः, किञ्चान्यत् नियोगनिष्ठ-तयैव पर्यवस्यति आम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जी-वस्य तदप्रमाणकमेव स्यात्। अथ शास्त्रमेवानियोज्यब्रह्मात्म-त्वमव्याचक्षीत तदवबोधे च पुरुषं नियुञ्जीत, ततो ब्रह्मशा-स्त्रस्यैकस्य *द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयातां नियोग-परतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षफलस्यादृष्ट-

---

चेत् क्रियैव, कृतिं विनैव चेत् भ्रान्तिरेवातो मानं विना विधितो माना-सिद्धेर्मानवस्तुतन्त्रे ज्ञाने विधिर्न्नेत्यर्थः। वेदान्तेषु विधिवादिनोऽन्यच्च दूषणमस्तीत्याह। किञ्चान्यदिति। ब्रह्मात्मैक्ये नियोगे च वेदान्तवा-क्यस्य प्रामाण्यमाशङ्क्यार्थभेदाद्वाक्यभेदो विरुद्धार्थत्वादप्रामाण्यं चेति दूषयति। अथेत्यादिना। किञ्च श्रुतं ब्रह्म न श्रुतो विधिर्वेदान्तेषु त-त्कल्पने च कर्मजन्यत्वान्मोक्षस्यानित्यत्वसातिशयत्वादिप्रसङ्ग इत्याह। नियोगपरतायां चेति। फलितमाह। अतश्चेति। इदानीं प्रौढवादेन नियोगमङ्गीकृत्य तदेकत्वं खण्डयति। अभ्युपगम्यमानेऽपीति। भिन्नक्रि-यावाचिशब्दः शब्दान्तरं यथा यजति ददातीति, तथेहापि वेदो-पासीतेति शब्दभेदः। निर्गुणसगुणरूपभेदः प्रकरणभेदः मुक्त्यभ्युदय-फलभेद इत्येतैः प्रमाणैर्निर्गुणज्ञानसगुणोपासनाविषयकनियोगभेद इत्यर्थः। कथं तर्ह्यङ्गाङ्गिवाक्येषु नियोगैक्यं तत्राह। प्रयाजेति। एक-स्यैव स्वर्गकामस्य साङ्गप्रधानाधिकारात् तद्वाध्यफलापूर्वैक्यादेकवाक्य-

---

* द्व्यर्थता वस्तुपरता विधिरूपार्थेत्यादि मु०।

फलत्वमनित्यत्वं चेत्येवमादयो दोषाः नापि केनचित् परिहर्तुं शक्याः, तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि न नियोगनिष्ठानि, अतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तं। अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु वाऽसिद्धं, न हि शब्दान्तरादिभिः प्रमाणैः नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुं। प्रयाजदर्शपूर्णमासवाक्येषु तु अधिकारांशेनाभेदाद्युक्तमेकत्वं न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाकारांशोऽस्ति। न हि भारूपत्वादयो गुणाः प्रपञ्चविलयोपकारिणो भवन्ति नापि प्रपञ्चविलयादयो गुणा भारूपत्वादिगुणोपकारिणः परस्परविरोधित्वात्। न हि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणञ्च एकस्मिन् धर्मिणि युक्तं समावेशयितुं। तस्मादस्मदुक्त एव विभाग आकारवदनाकारोपदेशानां युक्ततर इति॥

---

तेत्यर्थः। इहापि निर्गुणसगुणविद्ययोरेकाधिकारात् नियोगैक्यमस्तु नेत्याह। न त्विहेति। मुक्त्यभ्युदयार्थिभेदान्मिथो विरुद्धार्थविद्ययोरङ्गाङ्गित्वायोगाच्च न नियोगैक्यं। न च निर्गुणविद्यानियोग एकपूर्वसगुणविद्यानङ्गीकारादिति वाच्य। यद्वा विपरीतं पाण्डित्यमायुष्मत, विध्ययोग्याविद्याया विधियोग्यायामविधिरिति, तस्मात् साकारवाक्यानामाकारलयद्वारा निर्गुणवाक्यैकवाक्यतागतिरसङ्गतिरेव, किन्तु तेषां फलिताकारो गतिस्तदुपासनयाभ्युदयसिद्धेः, निर्गुणवाक्यानान्तु परमार्थात्मस्वतत्त्वमित्यन्यत्तदुक्त एव विभागः साधीयानित्युपसंहरति। तस्मादिति॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ *

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च' इत्युपक्रम्य पञ्च महाभूतानि द्वैराश्येन प्रविभज्यामूर्तरसस्य च पुरुषशब्दोदितस्य माहारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते, 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति। तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे, न ह्यत्रेदं तदिति विशेषितं किञ्चित् प्रतिषेध्यमुपलभ्यते, इतिशब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते नेति नेतीति, इतिशब्दपरत्वान्नञ्प्रयोगस्य। इतिशब्दश्चायं सन्निहितालम्बनः एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते 'इति ह स्मोपाध्यायः कथयति' इत्येवमा-

---

* ब्रह्मणो निर्विशेषचिन्मात्रत्वमुक्त्वा सर्वनिषेधावधित्वेन सद्रूपत्वमाह। प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति। पृथिव्यप्तेजोभूतत्रयं मूर्तं वाय्वाकाशद्वयममूर्तमिति राशिद्वयमुक्त्वा भूतद्वयस्यामूर्तस्य सारः 'करणात्मा हिरण्यगर्भो य एष एतस्मिन् सूर्यमण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् पुरुष' इत्युक्त्वा, तस्य वासनामयानि स्वप्नरूपाणि 'तद्यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपः' इत्युपमाभिरुक्तानि विचित्राणि, तत्र महारजनं हरिद्रा तयाक्तं वस्त्रं माहारजनं, पाण्ड्वाविकमतिधवलं कम्बलादि। केचित् तु श्रुतिमुपलक्षणं कृत्वा सूक्ष्मपञ्चभूतान्यमूर्तानि पञ्चीकृतानि मूर्तानि ततश्चामूर्तरसत्वोक्त्या करणात्मनः पाञ्चभौतिकत्वसिद्धिरिति व्याचक्षते। अथ सतादात्मकप्रपञ्चोक्त्यनन्तरं, अत उक्तारोपस्य निषेधार्थत्वान्नेति नेतीति निषेधेनोपदेशः क्रियत इत्यर्थः। नेतिशब्दार्थमाह। न हीति। एतस्मादात्मनोऽन्यन्नास्तीति नेतीत्युच्यत इत्यर्थः। शून्यतानिरासार्थं परं

दिषु। सन्निहितञ्चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणः तच्च ब्रह्म यस्य ते द्वे रूपे, तत्र नः संशय उपजायते किमयं प्रतिषेधो रूपे रूपवच्चोभयमपि प्रतिषेधति आहोस्विदेकतरं, यदाप्येकतरं तदापि किं ब्रह्म प्रतिषेधति रूपे परिशिनष्टि आहोस्विद्रूपे प्रतिषेधति ब्रह्म परिशिनष्टि इति। तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे। द्वौ हि प्रतिषेधौ द्विर्नेतिशब्दप्रयोगात्, तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यतेऽपरेण रूपवद्ब्रह्मेति भवति मतिः। अथवा ब्रह्मैव रूपवत् प्रतिषिध्यते, तद्धि वाङ्मनसातीतत्वादसम्भाव्यमानसद्भावं प्रतिषेधार्हं नतु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः, अभ्यासस्त्वादरार्थ इत्येवं प्राप्ते ब्रूमः, न तावदुभयप्रतिषेध उपपद्यते, शून्यवादप्रसङ्गात्। किञ्चिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते यथा रज्ज्वादिषु सर्पादयः। तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्पते। उभय-

---

ब्रह्मास्ति इति सिद्धान्तरीत्या अन्वयः। अत्र निषेध्यविशेषानुपलम्भात् संशयमाह। तत्र कोऽस्येत्यादिना। तत्र प्रयोगस्य नकारस्येतिशब्दोपस्थापितवस्तुनिषेधकत्वादित्यर्थः। इतिशब्दात् निषेध्यसामान्यसमर्पणे विशेषाकाङ्क्षायां प्रकरणाद्रूपद्वयस्वरूपिब्रह्मणश्च निषेध्यत्वभानात् संशयमुक्त्वा पूर्वोक्त निर्विशेष ब्रह्म नास्ति इत्याक्षेपसङ्गत्या पूर्वपक्षयति। तत्र प्रकृतत्वेति। पूर्वपक्षे तत्पदार्थाभावाद्वाक्यार्थाभेदासिद्धि, सिद्धान्ते तत्सिद्धिरिति फल, निरधिष्ठाननिषेधादर्शनात् सर्वनिषेधो न युक्त इत्यरुच्या प्रपञ्चे ब्रह्मनिषेध इत्याह। अथ वेति। एकब्रह्मण एव निषेधे न कारद्वयस्य पौनरुक्त्यमित्यत आह। अभ्यासस्त्विति। उक्तमूलमेव तावत् सिद्धान्तमुपक्रमते। एवमिति।

प्रतिषेधे हि कोऽन्यो भावः परिशिष्येत, अपरिशिष्यमाणे चान्यस्मिन् य इतरः प्रतिषेद्धुमारभ्यते तस्य प्रतिषेद्धुमशक्यत्वात् तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः। नापि ब्रह्मप्रतिषेध उपपद्यते, 'ब्रह्म ते ब्रवाणि' इत्युपक्रमविरोधात्, 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्यः' इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च। वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते, न हि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परं' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत, प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति* न्यायात्। †अतः प्रतिपादनप्रक्रिया त्वेषा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति। एतदुक्तं भवति वाङ्मनसातीतमविषयान्तःपातिप्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति। तस्मात् ब्रह्मणो रूपप्रपञ्चं

---

शून्यप्रसङ्ग इष्ट इति वदन्तं प्रत्याह। कस्चिद्धीति। तच्चेति प्रतिषेधनमित्यर्थः। अधिष्ठानानवशेषे तत्प्रमारूपहेत्वभावात् निषेधवाक्यार्थप्रमाणं स्यात् इदमत्र नास्ति इति लोके निषेधस्य साधिष्ठानस्यैव प्रमितिदर्शनादित्यर्थः। किञ्च यद्भाति तत्सदित्युत्सर्गस्य भानार्थाभावाधिष्ठानप्रमितिस्तदपवादः पूर्वभानस्य भ्रमत्वनिश्चयेनार्थसत्त्वापलापात् अपवादानङ्गीकारे तूत्सर्गतः प्रपञ्चस्य सत्यत्वापत्तेः निषेधानुपपत्तिरित्याह। अपरिशिष्यमाणे चेति। अधिष्ठानसत्त्वं विना भ्रान्तिनिषेधयोरयोगात् शून्यवादो न युक्त इत्युक्त्वा पूर्वादिनः पक्षान्तरं दूषयति। नापीति। देहात्माभिमानवल्लौकिकमानप्राप्तद्वैतस्य निषेधो युक्तो न

---

* हि न्याय इति वर्ध० का०। † अत इति वर्ध० का० नास्ति।

प्रतिषेधति परिशिनष्टि ब्रह्मेत्यवगन्तव्यं। तदेतदुच्यते। प्रकृतैतावत्त्वं हि प्रतिषेधति इति। प्रकृतं यदेतावत्त्वं परिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति। तद्धि प्रकृतं प्रपञ्चितञ्च पूर्वस्मिन् ग्रन्थेऽधिदैवतमध्यात्मं च तज्जनितमेव च वासनालक्षणमपरं रूपममूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं माहारजनाद्युपमाभिर्दर्शितं, अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः। तदेतत् सप्रपञ्चं ब्रह्मणो रूपं सन्निहितालम्बनेनेति करणेन प्रतिषेधकनञ्‌ प्रत्युपनीयत इति गम्यते। ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन् ग्रन्थे न स्वप्रधानत्वेन। प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तं 'अथात आदेशो नेति नेति' इति। तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदमिति निर्णीयते, तदास्पदं हीदं समस्तं

---

वेदान्तप्रमितब्रह्मण इति भावः। यदुक्तं वाङ्मनसातीतत्वात् निषेधादह ब्रह्मेति तत्राह। वाङ्मनसेति। ब्रह्मणो वागाद्यतीतत्वात् निषेधार्थं न चेत् किमर्थं तदुक्तिरित्यत आह। प्रतिपादनेति। उक्तार्थे सूत्रं योजयति। तदेतदित्यादिना। 'द्वेधा च ब्रह्मणो रूपे' इति रूपद्वयस्यैव प्राधान्येन प्रकृतत्वान्नेतीति निषेध इत्यर्थः। नन्वादित्यमण्डले पुरुष इति ब्रह्माप्यत्र प्राधान्येनोक्तमित्याशङ्क्य पुरुषो लिङ्गात्मा अमूर्तरसत्वश्रुत्या भूतजनितत्वभानात् स्वप्नरूपवत्त्वश्रुतेश्चेत्याह। तज्जनितमेवेति। रूपरूपिणोरभेद उक्तः। ननु वासनामयरूपमेव किमित्युपनीयते प्रसिद्धरूपमेव किं न स्यादित्यत आह। अमूर्तरसस्येति। रूपद्वयस्यैव प्राधान्येन प्रकृतत्वे फलितमाह। तदिति। प्रतियोगित्वेन समर्प्यत इत्यर्थः। न चार्थतः प्राधान्यात् ब्रह्मणो निषेधः शङ्क्यो भृत्यो नास्तीत्यत्र

कार्यं नेति नेतीति प्रतिषिद्धं। युक्तञ्च कार्यस्य वाचारम्भण-शब्दादिभ्योऽसत्त्वमिति नेति नेतीति प्रतिषेधनं न तु ब्रह्मणः सर्वकल्पनामूलत्वात्। न चात्रेयमाशङ्का कर्तव्या कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरं' इति, यतो नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धन्त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्म-स्वरूपप्रतिपादनाय चेति निरवद्यं. द्वौ चैतौ प्रतिषेधौ यथा-सङ्ख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः। यद्वा पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति 'उत्तरो वासनाराशिं। अथवा 'नेति नेति' इति वीप्सेयमितीति यावत् किञ्चिदुत्प्रेक्ष्यते तत्सर्वं न भवति इत्यर्थः। परिगणितप्रतिषेधे हि क्रियमाणे यदि नैतत् ब्रह्म किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात् वीप्सायान्तु सर्वां समस्तस्य विषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते। तस्मात् प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति

---

राजनिषेधप्रसङ्गादिति भावः। किञ्चात्र ब्रह्मणः प्रतिपाद्यत्वात् न निषेध इत्याह। प्रपञ्चित्ते चेति। ननु ब्रह्मणि निषिद्धस्याप्यन्यत्र स्थिति-सम्भवात् कथं कल्पितत्वमित्यत आह। तदास्पदमिति। उपादाने निषिद्धस्यान्यत्र न स्थितिरित्यर्थः। यत् तु द्वैतनिषेधे प्रत्यक्षादिविरोध इति तत्राह। युक्तञ्चेति। स्थापितं हि आरम्भणाधिकरणे प्रत्यक्षादे-र्व्यावहारिकं प्रामाण्यं न तत्त्वावेदकमिति अतस्तत्त्वतो निषेधान्न विरोध इति भावः। ननु वस्तुत्वात् द्वैतवत् ब्रह्मणोऽपि निषेधोऽस्तु, नेत्याह। न त्विति। द्वैतभावाभावसाक्षित्वादशक्यो निषेध इत्यर्थः। न चेत्यादि

परिशिनष्टि ब्रह्मेति निर्णयः। इतश्चैष एव निर्णयः यतस्ततः प्रतिषेधाद्भूयो ब्रवीति 'अन्यत् परमस्ति' इति अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत् परमस्ति इति ब्रूयात्। तत्रैषाऽक्षरयोजना नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति, नेति नेतीत्यस्य कोऽर्थः, न ह्येतस्मात् ब्रह्मणो व्यतिरिक्तमस्तीति अतो नेति नेतीत्युच्यते न पुनः स्वयमेव नास्ति इत्यर्थः। तच्च दर्शयति 'अन्यतः परमप्रतिषिद्धं ब्रह्मास्ति' इति। यदा पुनरेवमक्षराणि योज्यन्ते न ह्येतस्मादिति नेति नेति प्रपञ्चप्रतिषेधरूपादादेशनादन्यत् परमादेशनं न ब्रह्मणोऽस्ति इति तदा ततो ब्रवीति च भूय इत्येतन्नामधेयविषयं योजयितव्यं। अथ नामधेयं 'सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं इति हि ब्रवीति' इति, तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसमभवति अभावावसाने तु प्रतिषेधे किं सत्यस्य सत्यमित्युच्येत तस्मात् ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसान इत्यध्यवस्यामः॥

---

स्पष्टार्थं। यच्चोक्तं निषेधाभ्यां रूपं रूपि ब्रह्म च निषिध्यते इति तत्राह। द्वौ चैताविति। उद्देश्यविधेयार्थानां सङ्ख्यासाम्ये यथाक्रमं सम्बन्ध इति न्यायः 'यथासङ्ख्यमनुदेशः समानाम्' [पा०१।३।१०] इति पाणिनिसूत्रसिद्धः तेनात्र रूपद्वयोद्देशे न निषेधद्वयविधिरित्यर्थः। वीप्सापक्षे सर्वदृश्यनिषेधाज्जिज्ञासाशान्तिरिति विशेषमाह। परिगणितेति। मूर्तं नामूर्तं नेत्येवं विशिष्यनिषेधे जिज्ञासा न शाम्यति इत्यर्थः। सूत्रशेषं व्याचष्टे। इतश्चेति। प्रतिषेधानुपपत्त्या ब्रह्मास्तीत्यवगते, भूयः पुनः, परमस्तीति श्रुतिः साक्षादपि ब्रवीतीत्यर्थः। तच्चेति। एवं शेषं ब्रह्मेत्यर्थः। स्पष्टमन्यत्॥

## तदव्यक्तमाह हि ॥ २३ ॥

यत्तत्प्रतिषिद्धात् प्रपञ्चजातादन्यत् परं ब्रह्म तदस्ति चेत् कस्मात् न गृह्यत इति। उच्यते। तदव्यक्तमनिन्द्रियग्राह्यं सर्वदृश्यसाक्षित्वात् आह ह्येवं श्रुतिः 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा, स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते, यत्तदद्रेश्यमग्राह्यं यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' इत्याद्या। स्मृतिरपि 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' इत्येवमाद्या॥

## *अपि संराधने प्रत्यक्षानुमानाभ्यां॥ २४॥

अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः। संराधनं भक्तिध्यानप्रणिधानाद्यनुष्ठानं। कथं पुनरवगम्यते संराधनकाले पश्यन्ति इति, प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः-

'पराञ्चि खानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन्।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन्' ॥ इति।

---

नन्वग्राह्यत्वात् ब्रह्म नास्तीति शङ्कानिरासार्थं सूत्रं व्याचष्टे। यत् तत्प्रतिषिद्धादिति। रूपाद्यभावादव्यक्तमिन्द्रियाग्राह्यं न त्वसत्त्वादित्यर्थः। अन्यैर्देवैरिन्द्रियान्तरैर्न गृह्यत इत्यन्वयः॥

तर्हि कदा ग्राह्यमिति शङ्कोत्तरं सूत्रं व्याख्याति। अपि चैनमिति। वस्त्वर्थः इन्द्रियैर्न गृह्यते अपि तु संराधनेन शास्त्रसंस्कृतमनसेत्यर्थः। भक्तिध्यानाभ्यां प्रत्यगात्मनश्चित्ते प्रकर्षेण निधानं स्थापनं प्रणिधानं

* अपि चेति मर्ष० का०।

'ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति चैवमाद्या। स्मृतिरपि-

"यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं"। इति-

चैवमाद्या। ननु संराध्यसंराधकभावाभ्युपगमात् परापरात्मनोरन्यत्वं स्यादिति नेत्युच्यते॥

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्॥ २५॥**

यथा प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते न च स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवायमात्मभेदः स्वतस्त्वैकात्म्यमेव, तथा हि वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः *प्रतिपाद्यते॥

---

जपनमस्कारादिरादिशब्दार्थः। स्वयम्भूरीश्वरः। खानीन्द्रियाणि। पराञ्चि नात्मग्राहकाणि कृत्वा व्यहनत् नाशितवान्। स हि तेषां नाशो यद-समर्थग्राहितया सर्जनं तस्मात् तेषां तथा सृष्टत्वात् सर्वो लोकः पराक्पर्थमेव पश्यति नान्तरात्मानं। कश्चित्तु धीरो धीमानावृत्तचक्षु-र्निरुद्धेन्द्रियः शुद्धे चेतसि प्रत्यगात्मानं शास्त्रेण पश्यति मोक्षार्थी-त्यर्थः। ततः कर्मणा विशुद्धचित्तो ज्ञानाख्यसत्त्वोत्कर्षेण ध्यायंस्तं निष्कलं पश्यतीत्यर्थः। विनिद्राः वितमस्काः, तत्र हेतुर्जितश्वासत्वं प्राणायामनिष्ठत्वं, युञ्जानाः ध्यायिनः, योगलभ्य आत्मा योगात्मा॥

यथा प्रकाशादय उपाधिषु भिद्यन्ते न स्वत एव प्रकाशस्थिरात्मापि ध्यानादिकर्मण्युपाधौ भिद्यते स्वतस्तस्यावैशेष्यमेकरसत्वमेव तत्त्वमसीत्यभ्यासादिति सूत्रयोजना॥

---

* प्रतिपद्यत इति वर्ध० का०।

## अतोऽनन्तेन तथा हि लिङ्गं ॥ २६ ॥

अतश्च स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मनैकतां गच्छति। तथा हि लिङ्गं 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति ब्रह्मैव सन् ब्रह्माप्येति' इत्यादि ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये। क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च 'परात्परं पुरुषमुपैति दिव्यं' इति गन्तृगन्तव्यत्वेन 'यः सर्वाणि भूतान्यन्तरो यमयति' इति नियन्तृनियन्तव्यत्वेन च। क्वचित् तु तयोरेवाभेदो व्यपदिश्यते, 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'एष त आत्मा सर्वान्तरः एष त आत्माऽन्तर्याम्यमृतः' इति। तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्तः परिगृह्येत भेदव्यपदेशो

---

जीवस्य ब्रह्मात्मत्वफलश्रुतिरूपलिङ्गादपि भेद औपाधिक एवेत्याह सूत्रकारः। अतोऽनन्तेनेति॥

भेदाभेदपूर्वपक्षसूत्रद्वयस्य सङ्गतिमाह। तस्मिन्नेवेति। यथाहित्वेनाभेद, कुण्डलाद्यस्य सर्वावस्थाविशेषस्य कुण्डलत्वेन भेद, तथा जीवस्य ब्रह्मत्वेनाभेदो जीवत्वेन भेद, यद्वा सूर्यप्रकाशयोरेकतेजस्त्वधर्मावच्छेदेन भेदाभेदवज्जीवपरयोरपि एकेनैवात्मत्वधर्मेण भेदाभेदौ श्रुतिबलात् स्वीकार्याविति सूत्रद्वयार्थः। कुण्डलत्व वलयाकारत्व व्या-

निरालम्बन एव स्यात्, अत उभयव्यपदेशदर्शनादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति यथाहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादीनि च भेदः एवमिहापीति ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥*

अथवा प्रकाशाश्रयवदेतत् प्रतिपत्तव्यं, यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नावुभावपि तेजस्त्वाविशेषात् अथ च भेदव्यपदेशभाजौ भवतः एवमिहापीति ॥*

## पूर्ववद्वा ॥ २९ ॥

यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैव तद्भवितुमर्हति । तथा ह्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते यदि पुनः परमार्थत एव बद्धः कश्चिदात्माऽहिकुण्डलन्यायेन वा परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेनैवैकदेशभूतोऽभ्युपगम्येत ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत । न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति,

---

भोगत्वं चक्राकारत्वं, प्रांशुत्वं दीर्घदण्डाकारत्वं उद्धृतमुखत्वं चादिशब्दार्थः ॥

सिद्धान्तसूत्रं । पूर्ववदेति । धर्मभेदेनैकधर्मैश्च वा भेदाभेदस्वीकारे भेदस्य सत्यत्वादभेदवदस्यानिवृत्तिः स्यात् । एकत्रैव भेदाभेदस्वीकारे

---

* ॥ २८ ॥ सूत्रभाष्यस्य पूर्वपक्षसूत्रान्तर्भूतत्वेन स्पष्टत्वान्न टीका कृतेति प्रतीयते ॥

भेदन्तु पूर्वप्रसिद्धमेवानुवदति अर्थान्तरविवक्षया। तस्मात् प्रकाशवच्चाविशेष्यमित्येष एव सिद्धान्तः॥

प्रतिषेधाच्च॥ ३०॥

इतश्चैष एव सिद्धान्तः यत्कारणं परस्मादात्मनोऽन्यत् चेतनं प्रतिषेधति शास्त्रं 'नान्योऽतोऽस्ति द्रष्टा' इत्येवमादि 'अथात आदेशो नेति नेति तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यं' इति च। ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणात् ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते॥

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥ ३१॥

यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितं अस्मात् परमन्यत् तत्त्वमस्ति नास्ति इति श्रुतिविप्रतिपत्तेः संशयः, कानिचिद्वाक्यान्यापातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत् तत्त्वं प्रतिपादयन्तीव तेषां परिहारमभिधातुमयमुपक्रमः क्रियते, परमतो ब्रह्मणोऽन्यत् तत्त्वं भवितुमर्हति। कुतः, सेतुव्यपदेशात्, उन्मानव्यपदेशात्, सम्बन्धव्यपदेशात्, भेदव्यपदेशाच्च। सेतुव्यपदेशस्तावत् 'अथ य आत्मा स सेतुर्वि-

---

लोके विरोधकथोच्छेद इत्यपि द्रष्टव्यं, तस्मात् निष्प्रपञ्चं चिदेकरसं ब्रह्म तत्पदलक्ष्यमस्ति इति सिद्धं॥

यदुक्तं नेति नेत्यादिश्रुतिभिः ब्रह्मातिरिक्तं वस्तु निषिध्यत इति तदयुक्तं। सेत्वादिश्रुतिभिर्वस्त्वन्तरास्तित्वं भानादित्याक्षिपति। परमत इति। यद्यपि द्युभ्वाद्यधिकरणे सेतुशब्दो विधारकत्वेन गौणो व्याख्यातः तथाप्युन्मानादिश्रुतीनां गतिमजानतोऽयं पूर्वपक्षः, तत्रो-

धृतिः' इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं सङ्कीर्तयति। सेतुशब्दश्च हि लोके जलसन्तानविच्छेदकारके मृद्दार्वादिप्रचये प्रसिद्धः, इह च सेतुशब्दः आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति 'सेतुं तीर्त्वा' इति च तरतिशब्दप्रयोगात्, यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं प्राप्नोति इति गम्यते, एवमात्मानं सेतुं तीर्त्वा अनात्मानमसेतुं प्राप्नोति इति गम्यते। उन्मानव्यपदेशश्च भवति 'तदेतत् ब्रह्म चतुष्पादष्टाशफं षोडशकलं' इति। यच्च लोके उन्मितमेतावदिदमिति परिच्छिन्नं कार्षापणादि ततोऽन्यद्वस्त्विति प्रसिद्धं तथा ब्रह्मणोऽप्युन्मानात् ततोऽन्येन वस्तुना भवितव्यमिति गम्यते। तथा सम्बन्धव्यपदेशो भवति 'सता सोम्य तदा सम्पन्नो भवति' इति 'शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तः' इति च, अमितानां च मितेन सम्बन्धो दृष्टः यथा नराणां नगरेण। जीवानां च ब्रह्मणा सम्बन्धं व्यपदिशति सुषुप्तौ। अतस्ततः परमन्यदमितमस्ति इति गम्यते। भेदव्यपदेशश्चैनमर्थं

---

ध्यानादिश्रुतीनां मुख्यत्वात् सदयं ब्रह्मेति फलं सिद्धान्ते तूक्ताद्वितीयतत्पदलक्ष्यसिद्धिरिति विवेकः। ब्रह्म सदयं सेतुत्वात् लौकिकसेतुवत् तीर्यत्वश्रुतेश्चेत्याह। सेतु तीर्त्वेति। जाङ्गलं वातभूयिष्ठमिति वैद्योक्तिः वातप्रचुरो देशो जाङ्गलं, इह तु देशमात्रं ग्राह्यं। दिशश्चतस्रः कलाः प्रकाशवान्नाम पादः, पृथिव्यन्तरीक्षं द्यौः समुद्र इत्यनन्तवान्नाम पादः, अग्नि सूर्यश्चन्द्रो विद्युदिति ज्योतिष्मान्नाम पादः, चक्षुः श्रोत्रं वाङ्मन इत्यायतनवान्नाम पाद इति चतुष्पाद्ब्रह्म, पादानामङ्गानि अष्टौ शफा यस्येत्यष्टाशफं, पादेषु चतुर्षु प्रत्येकं चतस्रः कला इति षोडशकलमित्यर्थः। षोडशपणपरिमितं ताम्रं कार्षापणसंज्ञं भवति तद्वत् सदयं

गमयति, तथाहि 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादित्याधारमीश्वरं व्यपदिश्य ततो भेदेनाक्ष्याधारमीश्वरं व्यपदिशति 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति। अतिदेशं चास्यामुना रूपादिषु करोति 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' इति। सावधिकत्वञ्चेश्वरत्वमुभयोर्व्यपदिशति 'ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामनाञ्चेत्यधिकस्य ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामनां चेत्यधिकस्य यथेदं मागधस्य राज्यमिदं वैदेहस्येति। एवमेतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्ति इत्येवं प्राप्ते प्रतिपद्यते॥

## सामान्यात् तु॥ ३२।

तुशब्देन प्रदर्शितां प्राप्तिं निरुणद्धि। न ब्रह्मणोऽन्यत् किञ्चिद्भवितुमर्हति, प्रमाणाभावात्, न ह्यन्यस्यास्तित्वे किञ्चित् प्रमाणमुपलभामहे, सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवति इति निर्धारितं, अनन्यत्वं च कारणात्

---

ब्रह्म परिमितत्वादित्यर्थः। सम्बन्धित्वाच्च नगरवदित्याह। तथा सम्बन्धेति। अन्यदमितमिति असङ्ख्यातमित्यर्थः। अन्यस्पर्शे अल्पत्वेन मितत्वनियमादिति मन्तव्यं, भेदेनाल्पत्वाच्च घटवदित्याह। भेदव्यपदेशश्चेति। अक्षाधित्यस्यामुनादित्यस्थेन सहेति यावत्। आधारतोऽतिदेशतश्च भेदमुक्त्वाऽवधितोऽपि तमाह। सावधिकत्वेति।

सिद्धान्तसूत्रं व्याचष्टे। तुशब्देनेत्यादिना। यदन्यत् तत् किं साधनादिमत् असाधनादिमत् वा, नाद्यः मानाभावात्, कार्यस्य ब्रह्मानन्यत्वनिर्णयाच्चेत्युक्त्वा न द्वितीयः प्रागुत्पत्तेरद्वयत्वावधारणादित्याह।

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

यदप्युक्तमुन्मानव्यपदेशादस्ति परमिति तत्राभिधीयते। उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः, किमर्थस्तर्हि बुद्ध्यर्थः उपासनार्थ इति यावत्। चतुष्पादष्टाशफं *षोडशकलमित्येवंरूपा बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते न ह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुं, मन्दमध्योत्तमबुद्धित्वात् पुंसामिति पादवत्। यथा मनआकाशयोरध्यात्ममधिदैवतञ्च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वागादयो मनःसम्बन्धिनः पादाः कल्प्यन्ते, चत्वारश्चाग्न्यादय आकाशसम्बन्धिनः आध्यानाय तद्वत्। अथवा पादवदिति, यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते, न हि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते क्रयविक्रयपरिमाणानियमात् तद्वदित्यर्थः ॥

---

परिमितत्वमप्यसिद्धमित्याह। बुद्ध्यर्थ इति। वाक्प्राणचक्षुःश्रोत्राणि मनसः पादाः अग्निवाय्वादित्यदिश आकाशस्य पादाः ध्यानार्थं कल्पिताः तद्वत् ब्रह्मण उन्मानमित्यर्थः। लौकिकं दृष्टान्तमाह। अथ वेति। पादकल्पना विनापि व्यवहारः किं न स्यादित्यत आह। नहीति। कार्षापणस्य व्यवहाराय पादकल्पनावत् मन्दधियां ध्यानव्यवहाराय ब्रह्मण उन्मानकल्पनेत्यर्थः ॥

---

* षोडशपत्नमिति वर्ध० का०।

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

इह सूत्रे द्वयोरपि व्यपदेशयोः परिहारोऽभिधीयते। यदप्युक्तं सम्बन्धव्यपदेशाद्भेदव्यपदेशाच्च परमतः स्यादिति। तदप्यसत्। यत एकस्याऽपि स्थानविशेषापेक्षया एतौ व्यपदेशावुपपद्येते। सम्बन्धव्यपदेशे तावदयमर्थः बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः स परमात्मना सम्बन्ध इत्युपाध्यपेक्षयोपचर्यते न परिमितत्वापेक्षया। तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैवोपचर्यते न स्वरूपभेदापेक्षया प्रकाशादिवदित्युपमोपादानं। यथैकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वोपाधियोगादुपजातविशेषस्योपाध्युपशमात् सम्बन्धव्यपदेशो भवति उपाधिभेदाच्च भेदव्यपदेशः। यथा वा *सूच्याकाशाकाशादिषूपाध्यपेक्षयैवैतौ भेदव्यपदेशौ भवतस्तद्वत्॥

## उपपत्तेश्च ॥ ३५ ॥

उपपद्यते चात्रेदृश एव सम्बन्धो नान्यादृशः। यथा 'स्वमपीतो भवति' इति हि स्वरूपसम्बन्धमेनमामनन्ति। स्वरूपस्य

सम्बन्धभेदौ कल्पितौ न सत्यद्वितीयसाधकौ इत्याह। स्थानेति। स्थानमुपाधिबुद्ध्यादिः एकस्यैवोपाधिना भिन्नस्योपाधिशान्तौ सत्या सम्बन्ध उपचर्यते। यथा सौरालोकादेरङ्गुल्याद्युपाधिना भिन्नस्योपाधिवियोगे महालोकाद्यात्मना सम्बन्धोपचारस्तद्वत् तथा द्वीत्यचक्षुषोः स्थानयोर्भेदाद्विरूपपुरुषभेदकल्पनेत्यर्थः॥

मुख्यावेव सम्बन्धभेदौ किं न स्यातामित्यत्र सूत्रं। उपपत्तेश्चेति॥

* सूची पाशाकाशेति सर्व का॰।

चानपायित्वात् न नरनगरन्यायेन सम्बन्धो घटते, उपाधिकृतस्वरूपतिरोभावात् तु 'स्वमपीतो भवति' इत्युपपद्यते। तथा भेदोऽपि नान्यादृशः सम्भवति, बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात्। तथा च श्रुतिः एकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति 'योऽयं बहिर्द्धा पुरुषादाकाशो योऽयमन्तःपुरुष आकाशो योऽयमन्तर्हृदय आकाशः' इति च॥

तथान्यप्रतिषेधात् ॥ ३६ ॥

एवं सेत्वादिव्यपदेशान् परपक्षहेतूनुन्मथ्य सम्प्रति स्वपक्षं हेत्वन्तरेणोपसंहरति। तथा अन्यप्रतिषेधात् अपि न ब्रह्मणः परं वस्त्वन्तरमस्ति इति गम्यते। तथा हि 'स एवाधस्तादहमेवाधस्तादात्मैवाधस्तात् सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ब्रह्मेदं सर्वमात्मैवेदं सर्वं नेह नानास्ति किञ्चन यस्मात् परं नापरमस्ति किञ्चित् तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इत्येवमादिवाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति। सर्वान्तरश्रुतेश्च न परमात्मनोऽन्तरोऽन्य आत्मास्तीत्यवगम्यते।

---

स्वरूपेण ब्रह्मणा जीवस्य सम्बन्धो भेदनिवृत्तिरूपो युज्यते न मुख्यः संयोगादिः वस्तुद्वयासत्त्वात्, तथा भेदोऽपि न स्वत एकत्वश्रुतेरित्यर्थः॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति, अन्यथा हि तन्न सिध्येत्। सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्। तथान्यप्रतिषेधेऽप्यसति वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत। सर्वगतत्वञ्चास्यायामशब्दादिभ्योऽवगम्यते। आयामशब्दो व्याप्तिवचनः शब्दः 'यावान् वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः', 'आकाशवत् सर्वगतश्च नित्यः' 'ज्यायान् दिवो ज्यायानाकाशात्, नित्यः सर्वगतः स्थाणुरचलोऽयम्' इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति ॥

## फलमत उपपत्तेः ॥ ३८ ॥

तस्यैव हि ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते, यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनां, किमेतत् कर्मणो

---

ननु द्वितीयाभावे सर्वगतत्वश्रुतिविरोध इत्यत आह । अनेन सर्वगतत्वमिति । द्वितीयं सत्यञ्चेत् सेत्वादिवत् ब्रह्मणोऽल्पता स्यात् यत्रान्यत्पश्यति तदल्पमिति श्रुतेः । किञ्च निरवयवासङ्गब्रह्मणः सत्यप्रपञ्चसम्बन्धयोगात् तथैव सर्वगतत्वश्रुतिविरोध इति भावः । अधिष्ठानेनाध्यस्तजगद्व्याप्तिमत्त्वात् रज्ज्वा व्याप्तसर्पवदिति न्यायः ॥

एवं तत्पदलक्ष्यं संशोध्य वाक्यार्थमाह । फलमत उपपत्तेः । निर्विशेषत्वादन्यः स्वभावः फलहेतुत्वादिः । इष्टं सुखं देवादीनाम्, अनिष्ट

भवति आहोस्विदीश्वरादिति भवति विचारणा। तत्र तावत् प्रतिपद्यते। फलमतः ईश्वराद्भवितुमर्हतीति। कुतः उपपत्तेः। स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान् विचित्रान् विदधद्देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं सम्पादयतीत्युपपद्यते कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नं, अभावात् भावानुत्पत्तेः। स्यादेतत् कर्म विनश्यत् स्वकाल एव स्वानुरूपं फलं जनयित्वा विनश्यति, तत्फलं कालान्तरितं कर्त्ता भोक्ष्यत इति। तदपि न परिशुध्यति, प्राक् भोक्तृसम्बन्धात् फलत्वानुपपत्तेः। यत्कालं हि यत्सुखं दुःखं वात्मना भुज्यते तस्यैव लोके फलत्वं प्रसिद्धं। न ह्यसम्बद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः

---

दुःखं नारकीणां, व्यामिश्रं मनुष्याणां, अनादो जन्ममृतिप्रवाहः संसारः गोचर आश्रयो यस्य तत्संसारगोचरं। अत्र कर्मेश्वरयोः फलहेतुत्वश्रुतेः संशयमाह। किमिति। अत्र पूर्वपक्षे फलदातुरीश्वरस्य तत्पदवाच्यस्यासिद्धेर्लक्ष्यासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलभेदः। पूर्वोक्तनिर्विशेषत्वमुपजीव्य फलदातृत्वमपीश्वरस्य नास्ति, इति पूर्वपक्षोत्थानात् सङ्गतिः। यद्यपि सर्वगतत्ववत् फलदातृत्वं व्यवहारदशायां सिध्यति तथापि कर्मण एव फलदातृत्वमिति शङ्कानिरासेनोक्तलक्ष्यार्थनिर्वाहकवाच्यार्थनिर्णयार्थमस्याधिकरणस्यारम्भ इति मत्वा सिद्धान्तं तावदाह। तत्र तावदिति। स्वर्गादिकं विशिष्टदेशकालकर्माभिज्ञदातृकं कर्मफलत्वात् सेवाफलवत् इत्युपपत्तिः। यागादिक्रियाख्यं कर्म तावत् क्षणिकं तत् किं स्वनाशात् फलं जनयति उत फलं उत्पाद्य नश्यति आहोस्विदपूर्वात् फलसिद्धिः, नाद्य इत्याह। अभावादिति। द्वितीयं शङ्कते। स्यादिति। कर्मनाशक्षणमारभ्यानभिव्यक्तस्वर्गसुखादिसत्त्वे मानं नास्ति इति दूषयति। तदपीत्यादिना। तृतीयं

शेच्येत कर्मकार्यादपूर्वात् फलमुत्पद्यत इति, तदपि नो-
पद्यते, अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य
वृत्त्यनुपपत्तेः। तदस्तित्वे एव प्रमाणाभावात्। अर्थापत्तिः
माणमिति चेत्, न, ईश्वरसिद्धेरर्थापत्तिक्षयात्॥

श्रुतत्वाच्च ॥ ३९ ॥

न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः किं तर्हि श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे। तथा हि श्रुतिर्भवति 'स वा एष महानज आत्मान्नादो वसुदानः' इत्येवंजातीयका॥

धर्मं जैमिनिरत एव ॥ ४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते। अत एव हेतोः श्रुतेरुपपत्तेश्च श्रूयते तावदयमर्थः 'स्वर्गकामो यजेत'

---

प्रकृते। अथेति। अपूर्वं किं स्वतन्त्रमेव फलदानाय प्रवर्तते चेतनाधिष्ठितं वा, नाद्य इत्याह। तदपीति। द्वितीये लब्धस्थानभिज्ञजीवस्याधिष्ठातृत्वायोगात् ईश्वरस्याधिष्ठातृत्वसिद्धिरिति भावः। प्रौढवादेनापूर्वं नास्ति इत्याह। तदस्तित्व इति। क्षणिकयागादेः श्रुतस्वर्गादिहेतुत्वानुपपत्त्या स्थाय्यपूर्वसिद्धिरिति चेन्न, कर्मभिराराधितादीश्वरादेव स्थायिनः फलसिद्धेरित्यर्थः। केवलतर्केणापूर्वं न सिध्यतीति भावः।

'कृतात्ययेऽनुशयवान्' इत्यत्रोदाहृताभिः 'य इह रमणीयचरणाः' इत्यादिश्रुतिस्मृतिभिरपूर्वसिद्धिश्चेत्ताभिरीश्वरस्यापि फलदातृत्वं स्वीकार्यमित्याह। श्रुतत्वाच्चेति सूत्रकारः। अन्नमासमन्तात् प्राणिभ्यो ददातीत्यन्नादः। वसुदानो धनदाता, कर्मणोऽपूर्वस्य वा जडत्वेनोपकरणमात्रत्वात् स्वतन्त्र ईश्वर एव फलदातेति सिद्धान्तो दर्शितः॥

इदानीं पूर्वपक्षयति। धर्ममिति। विधिश्रुतिर्विध्यर्थः। तस्य लिङ-

इत्येवमादिषु वाक्येषु, तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते, अन्यथा ह्यननुष्ठातृको याग आपद्येत तत्रास्योपदेशवैयर्थ्यं स्यात्। नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः, नैष दोषः। श्रुतिप्रामाण्यात्। श्रुतिश्चेत् प्रमाणं यथाऽयं कर्मफलसम्बन्धः श्रुत उपपद्यते तथा कल्पयितव्यः, न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति, अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामास्ति इति तर्क्यते उपपद्यते चायमर्थः उक्तेन प्रकारेण, ईश्वरस्तु फलं ददाति इत्यनुपपन्नं, अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गात् तदनुष्ठानवैयर्थ्यापत्तेश्च, तस्माद्धर्मादेव फलमिति ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते केव-

र्थस्य प्रेरणात्मनो यागो विषयस्तद्भावावगमाद्यागः स्वर्गसाधनमिति गम्यते। यागस्येष्टसाधनत्वाभावे प्रेरणानुपपत्तेरित्यर्थः। अपूर्वद्वारा कर्मणः फलमुपपद्यत इत्युक्ता सिद्धान्तं दूषयति। ईश्वरस्त्विति। ईश्वरः किं कर्मानपेक्षः फलं ददाति तत्सापेक्षो वा, आद्य आह। अविचित्रस्येत्यादिना। द्वितीये संवेष्टनसंस्कारमात्रात् कटादौ वेष्टनवत् कर्मापूर्वादेव फलसिद्धेः किमीश्वरेणेति भावः। अत्र वयं वदामः चन्दनकण्टकादिदृष्टसम्पत्त्यैव सुखादिसम्भवे ज्ञातं धर्माधर्माभ्यामिति स्मृतिबलात् तदपेक्षायां ईश्वरेण किमपराद्धं। अतः ईश्वरानपेक्षात् केवलात् कर्मणः फलमित्ययुक्तमिति॥

सिद्धान्तयति। पूर्वन्त्विति। अचेतनस्य कर्मणः स्वतः स्वातन्त्र्ययोगात्

लात् कर्मणोऽपूर्वाद्वा केवलात् फलमित्ययं पक्षस्तु शब्देन व्यावर्त्यते। कर्मापेक्षादपूर्वापेक्षाद्वा यथास्तु तथास्तु ईश्वरात्फलमिति सिद्धान्तः। कुतः, हेतुव्यपदेशात्। धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते। फलस्य च दातृत्वेन 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति। स्मर्यते चायमर्थो भगवद्गीतासु-

"यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हितान्" ॥ इति।

सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत् स्वकर्मानुरूपाः प्रजाः सृजति, विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते।

इतिश्रीमच्छारीरकमीमांसाभाष्ये श्रीशङ्करभगवत्पादकृतौ तृतीयाध्यायस्य द्वितीयः पादः ॥ ० ॥

---

सवादिदृष्टान्तानुसारिश्रुतेर्बलीयस्त्वात् सर्ववेदान्तेष्वीश्वरस्य जगद्धेतुत्वश्रुतेश्चेश्वराधिष्ठितात् कर्मणो जगदन्तःपातिफलसिद्धिरिति समुदायार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकव्याख्यायां भाष्यरत्नप्रभायां तृतीयस्याध्यायस्य द्वितीयः पादः ॥ * ॥

ॐ परमात्मने नमः।

---

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥ १॥

व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वमिदानीन्तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते। ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितं एकमेकरसं सैन्धवघनवदवधारितं, तत्र कुतो विज्ञानभेदाभेदचिन्तावतारः। न हि कर्मबहुत्ववत् ब्रह्मणो बहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुं, ब्रह्मण एकत्वात् एकरूपत्वाच्च। न चैकरूपे ब्रह्मण्यनेकरूपाणि

---

ॐ विघ्नविनाशाय नमः।

मार्तण्डं ध्वान्तनाशाय त्रिलोकस्वामिनं मुदे।
विघ्नेशं विघ्नविध्वस्त्यै प्रणमामि मुहुर्मुहुः॥

ब्रह्मस्वरूपं निर्धार्य तद्ज्ञानसाधनोपासनास्वरूपमाह। सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादिति। पादसङ्गतिमाह। व्याख्यातमिति। पूर्वपादे तत्त्वंपदार्थविवेकः कृतः इह तत्फलवाक्यार्थज्ञानमानन्दादयः प्रधानस्येति सूत्रेणापुनरुक्तोपेक्षितपदतदाच्यार्थोपसंहारेण निर्धार्यत इति फलफलिभावः सङ्गतिः। सगुणवाक्यार्थविद्याचिन्ता तु तद्विद्यानां चित्तैकाग्र्यद्वारा निर्गुणज्ञानसाधनत्वात् क्रियत इति मन्तव्यं सम्प्रति निर्गुणज्ञानं भेदाभेदविचारविषयत्वेनोक्तमिति मन्वान आक्षिपति। नन्विति। वेद्यभेदविद्याभेदचिन्ता स्यात् ब्रह्मणस्तु वेद्यस्यैक्यात् न चिन्तावसर इत्यर्थः। ब्रह्मैक्येऽपि धर्मभेदाच्चिन्ता इत्यत आह। एकरूपत्वाच्चेति। निर्धर्मत्वादित्यर्थः। एकरूपेऽपि ब्रह्मण्यनेकप्रकारस-

विज्ञानानि सम्भवन्ति, न ह्यन्यथार्थोऽन्यथाज्ञानमित्यभ्रान्तं भवति। यदि पुनरेकस्मिन् ब्रह्मणि बहूनि विज्ञानानि वेदान्तान्तरेषु प्रतिपिपादयिषितानि तेषामेकमभ्रान्तं भ्रान्तानीतराणीत्यनाश्वासप्रसङ्गो वेदान्तेषु, तस्मात् न तावत् प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते, नाप्यस्य चोदनाद्यविशेषादभेद उच्यते, ब्रह्मविज्ञानस्याचोदनालक्षणत्वात्। अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः 'तत्तु समन्वयात्' [वे०अ०१।पा०१।सू०४] इत्यत्र। तत्कथमिमां भेदाभेदचिन्तामारभत इति, तदुच्यते। सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञान-

---

स्यवाभेदशङ्का इत्यत आह। न चेत्यादिना। पूर्वपक्षे ज्ञानभेदशङ्कानुपपत्तिमुक्त्वा चोदनाद्यभेदाज्ज्ञानाभेद इति सिद्धान्तोऽप्ययुक्त इत्याह। नाप्यस्येति। एवं पादारम्भमाक्षिप्य समाधत्ते। तदुच्यत इति। सगुणविद्यास्वेव भेदाभेदचिन्ता क्रियते निर्गुणविद्यायास्त्वैक्यं सिद्धमिति वाच्यार्थरूपगुणोपसंहारमात्रं क्रियते वाक्यार्थनिर्णयायेति भावः। पञ्चाग्निप्राण इह शाण्डिल्यवैश्वानरादिविद्या मिथोभिन्ना इति 'नानाशब्दादिभेदात्' इत्यत्र वक्ष्यते। अत्र तु मिथोभिन्नास्ताः किं प्रतिशाखं भिद्यन्ते न वेति नामादिभेदाच्चोदनाविशेषाच्च संशयः। पूर्वपक्षे विद्याभेदाद्गुणानुपसंहारः सिद्धान्ते त्वभेदादुपसंहार इति फलभेदः। पूर्वतन्त्रे शाखान्तराधिकरणपूर्वपक्षसूत्रं नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे कर्मभेदः स्यादिति। तत्रोक्ता हेतवो नामादयो विद्याभेदार्थमिहोच्यन्ते अथैष ज्योतिरथैष ज्योतिरेतेन सहस्रदक्षिणेन सर्वं यजेतेत्यत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणाख्यगुणविधिमाशङ्क्य ज्योतिरितिपदस्य कर्मान्तरनामत्वसम्भवे ज्योतिष्टोमलक्षकत्वायोगात् प्रकरणविच्छेदाच्च

भेदाभेदचिन्तेत्यदोषः। अत्र हि कर्मवदुपासनानां भेदाभेदौ सम्भवतः, कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते क्रममुक्तिफलानि च कानिचित् सम्यग्ज्ञानोत्पत्तिद्वारेण। तेष्वेषा चिन्ता सम्भवति किं प्रतिवेदान्तं विज्ञानभेद आहोस्वित् नेति। तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते, नाम्नस्तावद्भेदप्रतिपत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु, अस्ति चात्र वेदान्तान्तरविहितेषु विज्ञानेषु अन्यदन्यन्नाम तैत्तिरी-

---

ज्योतिष्टोमात् कर्मान्तरं विशिष्टदक्षिणाकं विधीयत इति नाम्नः कर्मभेदकत्वमुक्तं। ज्योतिरादिष्वित्यादिपदेनाथर्वणं होत्रमिति संज्ञाभेदात् ज्योतिष्टोमात् कर्मभेदो ग्राह्यः। तप्ते क्षीरे दध्ना कठिनमामिक्षा, तत्र द्रव जलरूपं वाजिनमिति भेदः, 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र वैश्वदेवे आमिक्षायागे वाजिनाख्यगुणविधिः वाजिभ्य इति, वैश्वदेवानुवादादित्यत्र वैश्वदेवे, आमिक्षायागे वाजिनाख्यगुणविधिः वाजिभ्य इति, वैश्वदेवानुवादादित्याशङ्क्यामिक्षा प्रत्युपसर्जनीभूतविश्वेदेवानां वाजिभ्य इत्यनुवादायोगादुत्पत्तिशिष्टामिक्षावरुद्धे कर्मणि वाजिद्रव्यस्यानाकाङ्क्षितस्य विध्ययोगाद्वाजिदेवताको वाजिनयागः कर्मान्तरमिति द्रव्यदेवतास्वरूपभेदात् कर्मभेदः सिद्धान्तितः। आदिपदात् 'ऐन्द्रं दध्यैन्द्रं पयः' इति द्रव्यभेदात् यागभेदो ग्राह्यः, एवमिहापि पञ्चाग्निषडग्निरूपभेदात् विद्याभेदो वाजिच्छन्दोगयोः तथा रेतोन्यूना वा ग्राह्याः छान्दोग्ये तत्सहिता वाजिनामिति प्राणविद्याभेदः, कारीरिवाक्याध्ययने तैत्तिरीयकाणां भूमौ भोजनं धर्मविशेषो नान्येषां, अग्न्यध्ययने केषाञ्चिदुपाध्यायार्थमुदकाहरणं धर्मो नान्येषां, अश्वमेधाध्ययनेऽश्वानयनं केषाञ्चिदेव नान्येषां, न च तान्येव कारीर्यादीनि कर्माणि धर्मविशेषमपेक्षन्ते नापेक्षन्ते चेति युक्तं, अतो धर्मविशेषाच्छाखान्तरे कर्मभेदः प्रसिद्धस्तथापि मुण्डकाध्ययने केषाञ्चिदेव शिरस्-

यकं वाजसनेयकं कौथुमकं कौशीतकं शाट्यायनकमित्येवमादि, तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धः 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्येवमादिषु, अस्ति चात्र रूपभेदः, तद्यथा केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति, अपरे पुनः पञ्चैव पठन्ति, तथा प्राणसंवादादिषु केचिदूनान् वागादीनामनन्ति केचिदधिकान्, तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक आशङ्कितः कार्या-

---

ङ्गारपात्रधारणरूपं व्रतं नान्येषामिति विद्याभेदः स्यात्, पुनरुक्तिरभ्यासः। 'समिधो यजति तनूनपातं यजति' इति यजत्यभ्यासात् प्रयाजानां भेद उक्तस्तथा शाखान्तरेऽभ्यासाद्विद्याभेदः, चादिपदान्निन्दादिग्रहः, 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्यनुदितहोमस्य यदुदिते सूर्ये प्रातर्जुहुयात् 'यथातिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति तादृगेव तत्' इत्युदितहोमस्य च निन्दाश्रुतेर्भेदः, एकस्यैवोदितेऽनुदिते वानुष्ठानायोगात्, तथोदितानुदितहोमातिक्रमकृतप्रायश्चित्तादप्यग्निहोत्रभेदः शङ्कितः, एते निन्दाप्रायश्चित्ते वेदान्तविद्यासु न विद्येते इति नोदाहृियेते, यथा सर्वशाखाविहितस्य कर्मणो ज्ञातुं कर्तुं वाऽशक्तेर्भेदस्तथा सर्ववेदान्ताध्ययनज्ञानाद्यशक्तेस्तद्वेदान्तविद्याभेदः स्यात्, तथा शाखानां सर्वासामेकरूपा समाप्तिर्नोच्यते किन्तु कस्याश्चित् क्वचित् कर्मणि समाप्तिरतः समाप्तिवचनभेदात् प्रतिशाखं कर्मभेदः शङ्कितः, तथा कस्यचिद्वेदान्तस्योद्गारसार्वात्म्ये समाप्तिः कस्यचिदन्यत्रेति विद्याभेदः, अन्यार्थदर्शनमर्थवादस्तद्भेदात् कर्मभेदवद्विद्याभेद इति पूर्वपक्षसूत्रोक्ता हेतवो दर्शितास्ते केचित् सिद्धान्ते पूर्वपक्षे चात्रोपयुज्यन्त इति तथाशब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानि कर्मभेदकानि, तत्र नामधेयं गुणो रूपमभ्यासश्चेति त्रयं व्याख्यातं, यजेद्दद्यात् जुहुयादिति प्रकृतिशब्दभेदेन धात्वर्थभेदात् तदवच्छिन्नभावनाख्यकर्मभेद उक्तस्तथाऽत्र

दिषु, अस्ति चात्र धर्मविशेषः यथाऽऽथर्वणिकानां शिरोव्रतम् इति, एवं पुनरुक्तादयो भेदहेतवो यथासम्भवं वेदान्तान्तरेषु योजयितव्याः, तस्मात् प्रतिवेदान्तं विज्ञानभेद इति। एवं प्राप्ते ब्रूमः सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिन् तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति। कुतश्चोदनाद्यविशेषात्। आदिग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाक्रियन्ते, संयोगरूपचोदनाख्याविशेषादित्यर्थः। यथैकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नः तादृश एव चोद्यते जुहुयादिति। एवं 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद' इति वाजसनेयिनां, छन्दोगानाञ्च तादृश्येव चोदना, प्रयोजनसंयोगोऽप्यविशिष्ट एव 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' इति। रूपमप्युभयत्र

---

वेदोपास्तइत्यादिशब्दभेदात् विद्याभेदः, 'तिस्र आहुतीर्जुहोति' इति संख्याया कर्मभेदवद्वायुप्राणौ द्वौ संवर्गाविति द्वित्वसंख्याया संवर्गविद्याभेदः स्यात्, नित्याग्निहोत्रप्रकरणात्, प्रकरणान्तरे कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इति श्रुतमग्निहोत्रं प्रकरणान्तरस्थत्वात् कर्मान्तरमिति सिद्धान्तितं। तथा च वेदान्तभेदे प्रकरणभेदादुपास्तिभेद इति पूर्वपक्षः। सिद्धान्तयति। एवमिति। सर्ववेदान्तैः प्रतीयन्त इति सर्ववेदान्तप्रत्ययानि तैर्विहितानीत्यर्थः। उक्तनामादिभिरग्निहोत्रादिकर्मणां प्रतिशाखं भेदे प्राप्ते शाखान्तराधिकरणसिद्धान्तसूत्रं 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इति। तत्र चोदनाविधायकः शब्दस्तेोदितः प्रयत्नो वा, तस्याः अविशेषमाह। यथैकस्मिन्निति। एकधात्वर्थहोमावच्छिन्नप्रयत्नैक्यवदुपास्तिप्रयत्नैक्यमित्यर्थः। यथा ज्येष्ठत्वादिगुणकप्राणविद्या सर्वशाखास्वेका तथा पञ्चाग्निविद्याप्येका फलसंयोगाद्यविशेषात्, तथान्यापि विद्या भिन्नेत्याह। एवं पञ्चाग्नीति। पूर्व-

तदेव विज्ञानस्य यदुत ज्येष्ठश्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वं, यथा च द्रव्यदेवते यागस्य रूपं एवं विज्ञेयं रूपं विज्ञानस्य तेन हि तद्रूप्यते समाख्यापि सैव प्राणविद्येति, तस्मात् सर्ववेदान्तप्रत्ययत्वं विज्ञानानां। एवं पञ्चाग्निविद्यावैश्वानरविद्याशाण्डिल्यविद्येत्येवमादिषु योजयितव्यं। ये तु नामरूपादयो भेदहेत्वाभासास्ते प्रथम एव काण्डे 'न नाम्ना स्यादचोदनाभिधानत्वात्' इत्यारभ्य परिहृताः, इहापि कश्चिद्विशेषमाशङ्क्य परिहरति॥

भेदान्नेति चेन्नैकस्यामपि॥ २॥

स्यादेतत् सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदान्नोपपद्यते। तथा हि वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपर-

---

भेदहेतून्निराचष्टे। ये त्विति। काठकमित्यादिनाम्ना कर्मभेदो न युक्तः, कुतः अचोदनाभिधानत्वात् काठकादिशब्दानां ग्रन्थनामतया कर्मवाचित्वाभावादतो भिन्ननामकशाखाग्रन्थभेदेऽपि तद्विहितं कर्मैकमेव, अल्परूपभेदोऽपि न कर्मैक्यविरोधी, धर्मविशेषस्त्वध्ययनाङ्गं न कर्माङ्गमतो न कर्म भेदकं शाखाभेदे पुनरुक्तिरसिद्धा, निन्दान्यार्थदर्शनयोरपि न भेदकत्वं तत्तद्विधिस्तुतिमात्रत्वात् बहुशाखाध्ययनाशक्तावपि स्वशाखानुक्तविशेषस्यापेक्षितस्यान्यतो ग्रहसम्भवादशक्तिरभेदिका एकस्मिन्नपि कर्मण्यङ्गलोपादिना प्रायश्चित्तं सम्भवति एवं समाप्तिवचनभेदोऽप्यप्रयोजक इत्येवं कर्माभेदप्रमाणप्राबल्ये भेदहेतवः परिहृता इत्यर्थः। तर्हि शाखान्तरन्यायेनैव कर्मैक्यवद्विद्यैक्यसिद्धेः पुनरुक्तिरित्यत आह। इहापीति॥

रूपस्योत्पत्तिशिष्टत्वं विशेषः पञ्चाग्नीन् वेदेत्याद्युपासनोत्पत्तिविधिस्थपञ्चाग्न्यादिरूपभेदादुपासनाभेदः स्यादामिक्षावाजिनरूपभे-

अग्निमामनन्ति 'तस्याग्निरेवाग्निर्भवति' इत्यादिना। छन्दोगास्तु तं नामनन्ति पञ्चसङ्ख्यैव च उपसंहरन्ति 'अथ ह य एतानेवं पञ्चाग्नीन् वेद' इति। येषाञ्च सगुणोऽस्ति येषाञ्च नास्ति तेषां कथमुभयेषामेका विद्योपपद्येत, न चात्र गुणोपसंहारः शक्यते प्रत्येतुं पञ्चसङ्ख्याविरोधात्। तथा प्राणसंवादे श्रेष्ठादन्यांश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति। वाजसनेयिनस्तु पञ्चममप्यामनन्ति 'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद' इति। आवापोद्वापभेदाच्च वेद्यभेदो भवति वेद्यभेदाच्च विद्याभेदो द्रव्यदेवताभेदादिव यागस्येति चेत्, नैष दोषः, यत एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते। यद्यपि षष्ठस्याग्नेरुपसंहारो न सम्भवति तथापि द्युप्रभृतीनां पञ्चानामग्नीनां उभयत्र प्रत्यभिज्ञायमानत्वात् न विद्याभेदो भवितुमर्हति, न हि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते। पठ्यतेऽपि च षष्ठोऽग्निश्छन्दोगैः 'तं प्रेतं दिष्टमितोऽ-

---

दात् कर्मभेदवदित्यधिकाशङ्कानिरासार्थत्वात् न पौनरुक्त्यमस्याधि-
करणस्येति मत्वाशङ्कां व्याचष्टे। स्यादित्यादिना। अस्य पृथक्शास्त्र-
त्वात् कर्मन्यायानां मानसविद्यासु विना सूत्रं दुर्योगत्वाच्च पुनरुक्ति-
गन्धोऽपि नास्तीति मन्तव्यं। ननु तस्य स्तस्य दार्ढ्यार्थमग्निरन्त्येष्टि-
गतः षष्ठो यः प्रसिद्धवद्वाजिभिरुक्तः स छान्दोग्ये उपसंहार्य इति न
रूपभेदस्तत्राह। न चात्रेति। अस्तु प्रजननगुणवतो रेतसो वाजि-
नामावापश्छन्दोगानाञ्च तस्योद्वापस्ततः किमित्यत आह। आवापेति।
छान्दोग्ये षष्ठाग्न्यभावमङ्गीकृत्याल्परूपभेदो न विद्यैक्यविरोधीति परि-
हरति। नैष इत्यादिना। अङ्गीकारं त्यजति। पठ्यतेऽपीति। इतोऽस्मा-
ल्लोकाद्दिष्टं लोकान्तरं प्रेतं गतं आतयोऽग्नये हरन्तीत्यर्थः। ननु छा

ग्नय एव हरन्ति' इति । वाजसनेयिनस्तु षाष्ठ्यादिकेषु पञ्चस्वग्निष्वनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित् समित्' इत्यादि समामनन्ति स नित्यानुवादः । अथाप्युपासनार्थ एष वादस्तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुं । न चात्र पञ्चसङ्ख्याविरोध आशङ्क्यः, षाष्ठ्यादिकाग्न्यभिप्राया ह्येषा पञ्चसङ्ख्या नित्यानुवादभूता न विधिसमवायिनीत्यदोषः । एवं प्राणसंवादादिष्वप्यधिकस्य गुणस्येतरत्रोपसंहारो न विरुध्यते । न चावापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाशङ्क्यः, कस्यचिद्वेद्यांशस्यावापोद्वापयोरपि भूयसो वेद्यस्योभयत्र प्रत्यभिज्ञायमानत्वाद् विद्यैकत्वोपपत्तेः ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

यदप्युक्तमाथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणाद-

---

न्दोग्येऽमिमात्रं श्रुतं वाजिभिस्तु समिदादिविशेषः पठ्यते इति रूपभेदस्तदवस्थस्तत्राह । वाजसनेयिनस्त्विति । षष्ठाग्नेस्तद्विरोधस्य चानुवादमात्रत्वेनानुपास्यत्वात् पञ्चाग्नय एवोपास्या उभयत्रेति न रूपभेद इत्यर्थः । सविशेषस्य षष्ठाग्नेरुपास्यत्वेन रूपभेद इत्याह । अथापीति । द्युलोकादीनां पञ्चानामग्नीनां अग्नित्वसम्पत्तिविधिनैवार्थात् षष्ठत्व सम्पत्तिकल्पितानां सिद्धमनूद्यते न ध्येयत्वेन विधीयत इत्यर्थः । छन्दोगैर्वाजिशाखास्थ एतदुपसंहर्तव्यमित्युक्तोऽनुपसंहारेऽपि न विद्याभेद इत्याह । न चावापेति ॥

एवं रूपभेदो न विद्याभेदक इत्युक्ता धर्मविशेषोऽपि न भेदक

न्येषां च तदनपेक्षणाद्विद्याभेद इति, तत्प्रत्युच्यते। स्वाध्यायस्यैष धर्मो न विद्यायाः, कथमिदमवगम्यते यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे आथर्वणिका इदमपि वेदव्रतत्वेन समाख्यातमिति समामनन्ति। नैतदचीर्णव्रतोऽधीते इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते। ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति ब्रह्मविद्यासंयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति सङ्कीर्त्यतैष धर्मः, न, तत्राप्येतामिति प्रकृतपरामर्शात् प्रकृतत्वञ्च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येवैष धर्मः। सववच्च तन्नियम इति निदर्शननिर्देशः। यथा च सवाः होमाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसम्बन्धादाथर्वणोदितैकाग्न्यभिसम्बन्धाच्चाथर्वणिकानामेव नियम्यन्ते, तथायमपि धर्मः स्वाध्यायविशेषसम्बन्धात् तत्रैव नियम्येत, तस्मादप्यनवद्यं विद्यैकत्वं॥

---

इत्याह। स्वाध्यायस्येति। गोदानवदध्ययनाङ्गत्वेन शिरोव्रतमाथर्वणिकानां सूत्रे विहितं न विद्याङ्गमित्यर्थः। अधिकाराच्चेति व्याचष्टे। नैतदिति। 'एतत्प्रकृतं मुण्डकमननुष्ठितशिरोव्रतो नरो नाधीत इति श्रुतेर्मुण्डकाध्ययनाङ्गमेव शिरोव्रतमित्यर्थः। ननु विद्याङ्गत्वेनापि इदं व्रतं श्रुतमिति शङ्कते। नन्विति। सर्वशाखासु ब्रह्मविद्यैकैव चेद्विद्यासंयुक्तं व्रतमपि सर्वत्र सम्बध्येत। न च सम्बध्यत इति विद्याभेद इत्यर्थः। प्रकृतग्रन्थवाच्यैतच्छब्दबलाद्ब्रह्मप्रकाशकग्रन्थपरो ब्रह्मविद्याशब्द इति परिहरति। नेति। तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र सववदिति दर्शननिर्देशः। सवाः होमाः आथर्वणैः स्वसूत्रे उदित एकोऽग्निरेकर्षिसञ्ज्ञया प्रसिद्धस्तस्मिन्नमी कार्या इति यथा नियम्यन्ते तथेत्यर्थः॥

## दर्शयति च ॥ ४ ॥

दर्शयति च वेदोऽपि विद्यैकत्वं, सर्ववेदान्तेषु वेद्यैकत्वोपदेशात् 'सर्वे वेदा यत्पदमामनन्ति' इति, तथैतमेव बह्वृचा महत्युक्थे मीमांसन्त 'एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इति। तथा महद्भयं वज्रमुद्यतम्' इति काठके। उक्तस्येश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दायै परामर्शो दृश्यते 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति तत्त्वेव भयं विदुषोऽमन्वानस्य' इति। तथा वाजसनेयके प्रादेशमात्रसम्पादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति, तथा सर्ववेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानायोपादानात् प्रायदर्शनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥

---

किञ्च वेद्यैक्येन निर्गुणब्रह्मविद्यैक्यं तावच्छ्रुतिर्दर्शयति, तत्सन्निधिपाठात् सगुणविद्यानामपि सर्वशाखास्वैक्यसिद्धिरित्याह सूत्रकारः। दर्शयति चेति। सगुणमप्येकं वेदत्रयवेद्यं दर्शयतीत्याह। तथेति। किञ्च शाखान्तरोक्तपदार्थस्य शाखान्तरे सिद्धवत्परामर्शो विद्यैक्यं दर्शयतीत्याह। तथा महद्भयमित्यादिना। एष नर एतस्मिन्नद्वयेऽल्पमप्यन्तरं भेदं यदा यदा पश्यत्यथ तदा तस्य संसारभयं भवति, एवं तस्माद्विदुषो नरस्य भेददर्शिनस्तदेव ब्रह्म भयङ्करं भवति, ब्रह्मैवाहमित्यमन्वानस्येत्यर्थः। प्रादेशमात्रमुपास्त इति सिद्धवदुपादानं वैश्वानरविद्यैक्यं दर्शयतीत्याह। तथेति। किञ्च सर्वेषु वेदान्तेषूक्थादीनां प्रतीयमानत्वेन हेतुनैतदवगम्यते—अन्यत्रोक्तानां तेषामन्यत्रोपास्त्यर्थमुपादानमिति, ततस्तदुपास्तीनामपि सर्ववेदान्तप्रमाणकत्वेनैक्यं बाहुल्येन सिध्यतीत्याह। तथेति। ब्रह्मविद्यैक्यवदुक्थादिविद्यैक्यमित्यर्थः।

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

इदं प्रयोजनसूत्रम् ॥

स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे विज्ञानानामन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञाने उपसंहारो भवति, अर्थाभेदात् । य एव हि तेषां गुणानामेकत्रार्थो विशिष्टविज्ञानोपकारः स एवान्यत्रापि, उभयत्रापि हि तदेवैकं विज्ञानं तस्मादुपसंहारः विधिशेषवत्, यथा विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहार एवमिहापि । यदि हि विज्ञानभेदो भवेत् ततो विज्ञानान्तरनिबद्धत्वाद्गुणानां प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः, विज्ञानैकत्वे तु नैवमिति । अस्यैव च प्रयोजनसूत्रस्य प्रपञ्चः सर्वाभेदादित्यारभ्य भविष्यति ॥

---

सर्वशाखासु विद्यैक्यचिन्तायाः फलमाह । उपसंहार इति । शाखाभेदे समानविद्यायां श्रुता गुणा यथाश्रुति व्यवस्थिता उत एकत्रा-श्रुता इतरशाखासु उपसंहर्तव्या इति सन्देहे विद्यैक्येऽपि तत्र तत्रोक्तैरेव गुणैर्विद्योपकारसिद्धेः शाखाभेदेन गुणा व्यवस्थिता इति प्राप्ते, तत्र विद्यैक्यचिन्तानैष्फल्यमिति फलसिद्धान्तत्वेन सूत्रं व्याचष्टे । स्थिते चेत्यादिना । गुणानां गुण्यविनाभावादेतच्छाखास्था विद्या शाखान्तरोक्त-तद्विद्यागुणवती तदभिन्नत्वात् तद्विद्यावदित्यनुमानाद्विद्यैक्ये गुणोपसं-हारसिद्धिरित्यर्थः । प्रधानैक्ये तदुपकारकाणामङ्गानामुपसंहारे दृष्टा-न्तमाह । विधिशेषवदिति । उक्तमेव व्यतिरेकमुखेनाह । यदि हीति । न चाग्नेययागावरुद्धानां गुणानां ततोऽभिन्ने सौर्ये प्राप्तिवद्विद्यान्तरस्थ-गुणानां विद्यान्तरप्राप्तिः किं न स्यादित्यत आह । प्रकृतीति । प्रकृति-गुणानां विकारे प्राप्तिर्युक्ता विद्यानां तु प्रकृतिविकृतिभावासिद्धेर्न त-त्प्राप्तिरित्यर्थः । नैवमिति गुणानुपसंहारो नेत्यर्थः । उत्तरसूत्रव्याख्या-नेन सूत्रस्य पौनरुक्त्यं वारयति । अस्यैवेति ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्य-
यामेति ते ह वाचमूचुस्त्वं न उद्गायेति तथा' इति, प्रक्रम्य वागा-
दीन् प्राणानासुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः
पठ्यते 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष
प्राण उदगायत्' इति। तथा छान्दोग्येऽपि 'तद्ध देवा उद्गीथमा-
जह्रुरनेनैनानभिभविष्यामः' इति प्रक्रम्येतरान् प्राणानासुरपा-
प्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते 'अथ ह य
एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इति। उभयत्रापि
च *प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते। तत्र संशयः कि-

---

पूर्वं चोदनाद्यविशेषादुत्सर्गतो विद्यैक्यमुक्तं तस्यापवादं वक्तुमाह।
अन्यथात्वमिति। अत्र वाजिनामुद्गीथब्राह्मणं छन्दोगानामुद्गीथाध्या-
यं विषयमाह। वाजेत्यादिना। 'ते ह देवाः सात्त्विकवृत्तयः प्राणा
अन्योन्यमूचुर्हन्तेदानीमस्मिन् यज्ञे उद्गीथेनोद्गात्रेण कर्मणा रजस्तमो-
वृत्तिरूपान् गुणानतीत्य देवत्वं गच्छामः' इति ते चैवं निर्दोषमुद्गीथ-
कर्तारमुपास्यं निर्धारयितुं कृतसंवादाः प्रथमं वाचं परीक्ष्यास्ये भवं
आसन्यं मुखमध्यस्थं प्राणमुपास्यं निर्धारितवन्त इत्यर्थः। तत्रान्योन्याभि-
भवात्मकयुद्धे प्रवृत्तवन्तस्त्वमौद्गात्रं नो स्वीकुर्विति तथा त्वयाहृतं कृतं
तथा घ्राणचक्षुःश्रोत्रमनांस्यपि कामेनासुरपाप्मना ग्रस्तानीति निन्दित्वा
आसन्यमास्यं देवाः पूर्ववदुद्गीथमाहृतवन्तः, अनेनोद्गीथेनैतानसुरान्
अयेमेत्यर्थः। भेदाभेदभानाभ्यां संशयमाह। तत्रेति। अत्र पूर्वाधिकरण-
सिद्धान्तन्यायेनोद्गीथविद्येति संज्ञैक्येन विद्यैक्यमिति पूर्वपक्षे मिथो
गुणोपसंहारः फलं, सिद्धान्ते संज्ञैक्येऽपि विद्यैक्यापवादादनुपसंहार
इति,एवं यत्र पूर्वन्यायेन पूर्वपक्षः तत्रापवादिकी सङ्गतिरिति मन्तव्यं,

---

* प्राणेति प्रतीक वर्ध० पु० नास्ति।

अत्र विद्याभेदः स्यादाहोस्वित् विद्यैकत्वमिति, किन्तावत् प्राप्तं पूर्वेण न्यायेन विद्यैकत्वमिति। ननु न युक्तं विद्यैकत्वं प्रक्रमभेदात्, अन्यथा हि प्रक्रमन्ते वाजसनेयिनः अन्यथा छन्दोगाः 'त्वं न उद्गाय' इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति, छन्दोगा उद्गीथत्वेन तमुद्गीथमुपासाञ्चक्रिरे इति तत्कथं विद्यैकत्वं स्यादिति चेत्। नैष दोषः, न ह्येतावता विशेषेण विद्यैकत्वमपगच्छति अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात्। तथा हि देवासुरसङ्ग्रामोपक्रमत्वं असुरात्ययाभिप्राय उद्गीथोपन्यासवागादिसङ्कीर्तनं तन्निन्दया मुख्यप्राणव्यपाश्रय', तद्वीर्याच्चासुरविध्वंसनमश्माखलोष्टनिदर्शनेनेत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते। वाजसनेयकेऽपि चोद्गीथसामानाधिकरण्यं प्राणस्य श्रुतं 'एष उ वा उद्गीथः' इति। तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यं, तस्माच्च विद्यैकत्वमिति॥

---

सूत्रस्थसिद्धान्तिशङ्काभागं व्याचष्टे। ननु न युक्तमिति। सम्पूर्णोद्गीथकर्मकर्ता प्राणो वाजिनामुपास्यः, उद्गीथेति कर्तृशब्दात् छन्दोगानान्तूद्गीथावयव ॐकारः प्राणदृष्ट्योपास्य, ॐमित्येतदक्षरमुद्गीथमित्युपक्रम्य प्राणमुद्गीथमिति कर्मरूपत्वशब्दात्, तथा कर्तृकर्मणोरुपास्ययोर्भेदाद्धि ययोरन्यथात्वं भेद इति शङ्कार्थः, उद्गीथत्वेनेति ॐकारत्वेनेत्यर्थः। अल्परूपभेदो न विद्यैक्यविरोधीत्युक्तन्यायेन मर्वपक्षं परिहरति। नैष इति। असुरजयाभिप्राय असुरजयार्थसंवादः, यथा स्थानं प्राप्य लोष्टो विध्वंसते तथा प्राणं हन्तुमागता असुरास्तस्य वीर्येण स्वयमेव ध्वस्ता इति श्रुतमुभयत्रेत्यर्थः। अल्परूपभेदमङ्गीकृत्यापि विद्यैक्यमुक्तं सोऽपि नास्तीत्याह। वाजेति। उद्गीथरूपत्वेन प्राणस्योभयत्र श्रुतत्वादेकत्र श्रुतं कर्तृत्वमप्युभयत्र द्रष्टव्यमित्यर्थः॥

## नवा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

न वा विद्यैकत्वमत्र न्याय्यं, विद्याभेद एवात्र न्याय्यः, कस्मात् प्रकरणभेदात्, प्रक्रमभेदादित्यर्थः । तथा हि इह प्रक्रमभेदो दृश्यते छान्दोग्ये तावत् 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति, एवमुद्गीथावयवस्योङ्कारस्य उपास्यत्वं प्रस्तुत्य रसतमादिगुणोपव्याख्यानञ्च तत्र कृत्वा 'अथ खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति, पुनरपि तमेवोद्गीथावयवमोङ्कारमनुवर्त्य देवासुराख्यायिकाद्वारेण तं प्राणमुद्गीथमुपासाञ्चक्रिरे इत्याह । तत्र यद्युद्गीथशब्देन सकला भक्तिरभिप्रेयेत तस्याश्च कर्त्तोद्गातर्त्विक् तत उपक्रमश्चोपरुध्येत, लक्षणा च प्रसज्येत, उपक्रमतन्त्रेण चैकस्मिन् वाक्ये उपसंहारेण भवितव्यं, तस्मादत्र तावदुद्गीथावयवे ॐकारे प्राणदृष्टिरुपदिश्यते । वाजसनेयके तु

---

वक्ष्यविरुद्धरूपभेदात् न विद्यैक्यमिति सिद्धान्तयति । न वेति । अक्षरं विशिनष्टि । उद्गीथमिति । तदवयवमित्यर्थः । पृथिव्यादिरसानां रसतम ॐकारः, आप्तिः समृद्धिरिति गुणानुक्त्वा गुणवत्योङ्कारे प्राणदृष्टिविधानायाख्यायिका प्रस्तुतेत्याह । रसतमेति । ननु वाजिवाक्यैकवाक्यत्वार्थं छान्दोग्योपक्रमस्थमुद्गीथपदं सम्पूर्णसामभक्तिपरमस्तु, प्राणमुद्गीथमित्यत्राप्युद्गीथकर्ता प्राण उपास्य इति व्याख्यायतामित्यत आह । तत्र यद्युद्गीथेति । ॐकारोपास्त्युपक्रमभङ्ग उद्गीथपदे कर्तृलक्षणा चेति दोषद्वयं स्यादित्यर्थः । ननु सिद्धान्तेऽपि तत्पदेऽवयवलक्षणा स्वीकार्या ततो वरं कर्तृत्वलक्षणा श्रुत्यन्तरानुग्रहात् तथा चोपसंहारे कर्तृप्राणोपास्तिनिश्चयादुपक्रमेऽपि तन्निश्चय इत्यत आह । उपक्रमेति । सन्दिग्धोपक्रमो हि वाक्यशेषात् निर्णीयते । यथोक्ताः शर्करा इत्यत्राञ्जन-

उद्गीथशब्देनावयवग्रहणकारणाभावात् सकलैव भक्तिरावेद्यते त्वं न उद्गायेत्यपि तस्याः कर्तोद्गातर्त्विक् प्राणत्वेन निरूप्यत इति प्रस्थानान्तरं। यदपि तत्रोद्गीथसामानाधिकरण्यं प्राणस्य तदप्युद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति, सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यं। न च प्राणस्योद्गातृत्वमसम्भवेन हेतुना परित्यज्येत उद्गीथभाववदुद्गातृभावस्योपासनार्थत्वेनोपदिश्यमा-

---

द्व्यसन्देहे तेजो घृतमिति प्रायाग्निश्चय, इह तूपक्रमेऽक्षरस्योपास्यत्वं निश्चितं, तत्समानाधिकरणोद्गीथपदस्यावयवलक्षणा विनिश्चितेति प्राणमुद्गीथमित्युपसंहारस्तदेकार्थतया नेय इत्यर्थः। एवं छान्दोग्ये ओंकार उपास्य उक्तः इतरत्र तु प्राण इत्युपास्यभेदाद्विद्याभेद इत्याह। वाजेति। यदुक्तं वाजिश्रुतावपि प्राणस्योद्गीथरूपत्वश्रुतेरुपास्यैक्यमिति तद्दूषयति। यदपीत्यादिना। तत्रोद्गीथ उपास्यतया नोक्तः किन्तूद्गातृत्व, किन्तूद्गीथत्वमेव वाजिभिरपि ग्राह्यमित्यैक्यमाशङ्क्याह। न चेति। स उद्गाता प्राणस्योपास्य इति यदुक्तं बहुतरार्थाविशेषाद्धि विद्यैक्यमिति तत्राह। न चेति। एकत्रोद्गाता प्राण उपास्योऽन्यत्रोङ्कार इत्यन्तरङ्गोपास्यरूपभेदे स्पष्टे सति बहिरङ्गार्थवादसाम्यमात्रेण नोपासनैक्यं युक्तमित्यर्थः। वाक्यसाम्यमात्रेणार्थैक्यं नास्तीत्यत्र दृष्टान्तमाह। तथाहीति। 'वि वा एतं प्रजया पशुभिर्वर्द्धयति वार्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं प्राणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इत्यभ्युदयवाक्यं। अस्यार्थः यस्य यजमानस्य चतुर्दश्यामेवामावास्याभ्रान्त्या दर्शकर्मार्थं प्रवृत्तस्य पुरस्तात् पूर्वं हविस्तण्डुलदधिपयोरूपं निरुप्तं दर्शदेवताभ्योऽग्न्यादिभ्य सङ्कल्पितं चन्द्रमाश्च पश्चादभ्युदेति तमेतं यजमानं कालव्यत्ययापराधात् तदेव निरुप्तं हविः प्रयाजादिनर्द्धं

मत्वात् प्राणवीर्येणैव चोद्गातोद्गात्रं कर्म करोति इति नास्त्यम-
म्भवः । तथा च तत्रैव श्रावितं 'वाचा च ह्येव स प्राणेन चोद-
गायत्' इति । न च विवक्षितार्थभेदे गम्यमाने वाक्यच्छायानु-
सारमात्रेण समानार्थत्वमध्यवसातुं युक्तं, तथा ह्यभ्युदयवाक्ये
पशुकामवाक्ये च 'त्रेधा तण्डुलान् विभजेत्, पशुकामवाक्ये च 'ये
मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्' इत्या-
दिनिर्देशसाम्येऽप्युपक्रमभेदादभ्युदयवाक्ये देवतापनयोऽध्यवसि-
तः, पशुकामवाक्ये तु यागविधिः तथेहाप्युपक्रमभेदाद् विद्या-
भेदः, परोवरीयस्त्वादिवत् । यथा परमात्मदृष्ट्यध्याससाम्येऽपि
'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयान्

---

यति वियोजयति शत्रुं चास्य वर्द्धयति यस्मात् कालभ्रान्तिमान् यज-
मानः, ये मध्यमादिभावेन त्रेधा भूतास्तण्डुला दध्यादिसहिता निरु-
प्तास्तान् विभजेदग्न्यादिभ्यो वियोजयेद्वियोज्य च दातृत्वादिगुणका-
ग्न्यादिभ्यो दर्शदेवभिन्नेभ्यो निर्वपेदिति दधन् दधनि स्थविष्ठतण्डुल-
चरुं श्रुते दुग्धनिष्ठचरुमित्यर्थः । अत्र कालापराधे देवान्तरयुक्तं प्रा-
यश्चित्तरूप दर्शाद्भिन्नं कर्म विधीयत इति प्राप्ते तण्डुलत्रेधात्वाद्यनु-
वादेन विभजेदिति हविषः प्रकृतदेववियोगेन तस्मिन्नेव दर्शकर्मणि
देवतान्तरसम्बन्धमात्रविधानं न कर्मान्तरमिति सिद्धान्तितं, एवम-
भ्युदयवाक्ये कालापराधेनोपक्रमाद्दर्शकर्मण्येव हविषः पूर्वदेवताभ्यो-
ऽपनयो वियोगोऽध्यवसित, पशुकामवाक्ये तु यद्यपि ये स्थविष्ठास्तान-
ग्नये प्रणयतेऽष्टाकपालं निर्वपेद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय
श्रुते चरुं ये चोदिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति निर्देशोऽभ्युदय
वाक्ये समोऽस्ति, तथापि यः पशुकामः स्यात् सोऽमावस्यामिष्ट्वा वत्सा-
नपाकुर्यादिति नित्यं दर्शकर्म समाप्य पुनर्दोहार्थं वत्सापाकरणविध्यु-
पक्रमात् पशुकामस्य यागान्तरविधिरेव नाभ्युदयवाक्येनार्थैक्यमिति

उद्गीथः स एषोऽनन्तः' इति परोवरीयस्त्वादिगुणविशिष्टमुद्गीथोपासनं अक्ष्यादित्यगतहिरण्मश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिन्नं, न चेतरेतरगुणोपसंहार एकस्यामपि शाखायां, तद्वच्छाखान्तरस्थेष्वप्येवंजातीयकेषूपासनेष्विति ॥

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

अथोच्येत संज्ञैकत्वाद्विद्यैकत्वमत्र न्याय्यं उद्गीथविद्येत्युभयत्राप्येका संज्ञेति, तदपि नोपपद्यते, उक्तं ह्येतत् नवा प्रकरणभेदात् परोवरीयस्त्वादिवदिति, तदेव चात्र न्याय्यतरं, श्रुत्यक्षरानुगतं हि तत्, संज्ञैकत्वं तु श्रुत्यक्षरबाह्यमुद्गीथशब्दमात्रप्रयोगात् लौकिकैर्व्यवहर्तृभिरुपचर्यते। अस्ति चैतत् संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषूद्गीथविद्येति। तथा प्रसिद्धभेदानामपि अग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां *काठकसंज्ञैकत्वं दृश्यते तथेहापि भविष्यति। यत्र तु नास्ति कश्चि-

---

तथा प्रकृतेऽपि निर्देशसाम्य न विद्यैक्यप्रयोजकमित्यर्थः। वत्सानपाकुर्यान्मात्रदेशात् देशान्तरं नयेदित्यर्थः। सूत्रोक्तं दृष्टान्तं व्याचष्टे। परोवरीयस्त्वादिवदिति। पर इति सकारान्तं परस्तात् परश्चासौ वरोऽन्न वरतर इति परोवरीयानित्येकं पदं। अनन्तश्च आकाशाख्यः परमात्मा न दृष्टालम्बनत्वादुद्गीथस्तथोक्त इत्यर्थः। आकाशात्मना हिरण्मश्मश्रुपुरुषात्मना चोद्गीथोपास्तिसाम्येऽपि विद्याभेदवदिहापि भेद इत्यर्थः॥
संज्ञैक्यं पूर्वपक्षबीजमुद्धाय दूषयति। संज्ञात इति। उपास्यरूपभेदाद्विद्यानानात्वं यदुक्तं तच्छ्रुत्यक्षरानुगतं बलवत्, संज्ञा तु पौरुषेयी दुर्बलेत्यर्थः। संज्ञैक्यं कर्मैक्यव्यभिचारि चेत्याह। अस्ति चेति। किं

देवजातीयको भेदहेतुस्तत्र भवतु सन्नैकत्वादिविद्यैकत्वं यथा संवर्गविद्यादिषु ॥

## व्याप्तेश्च समञ्जसं ॥ ९ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभानात् कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः। तत्राध्यासो नाम द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धावन्यतरबुद्धिरध्यस्यते, यस्मिन्नितरबुद्धिरध्यस्यते अनुवर्तत एव तस्मिंस्तद्बुद्धिरध्यस्ता, इतरबुद्धावपि यथा नाम्नि ब्रह्मबुद्धौ *अध्यस्तायामप्यनुवर्तत एव नामबुद्धिर्न ब्रह्मबुद्ध्या निवर्त्यते। यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यास एवमिहाप्यक्षरे उद्गीथबुद्धिरध्यस्या उत उद्गीथे वाऽक्षरबुद्धिरिति। अपवादो नाम यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेर्निवर्तिका भवति, यथा देहेन्द्रियसङ्घाते आत्मबुद्धिरात्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या 'तत्त्व-

---

सन्नैक्यं सर्वत्राप्रमाणमेव नेयाह। यत्र त्विति। असति बाधके सन्नैक्यमपि मानं यथा संवर्गविद्येति सन्नैक्यात् सर्वशाखासु तद्विद्यैक्यं, तथा पञ्चाग्न्यादिविद्यैक्यमित्याद्यसूत्रे दर्शितमित्यर्थः ॥

व्याप्तेश्च समञ्जसं सामानाधिकरण्यं विषयीकृत्य संशयमाह। ओमित्येतदिति। अध्यासादिपदार्थान् व्याचष्टे। तत्राध्यास इत्यादिना। बुद्धिपूर्वकाभेदारोपोऽध्यासः, बाधोऽपवादः, एकत्वं वास्तवाभेदः, विशेषणं व्यावर्तकमिति विवेकः। पूर्वमुद्गाटकर्मात्मकोद्गीथावयवत्वमोङ्कारस्य

---

* अध्यस्यमानायामिति पर्ध०।

मस्मि' इत्यनया यथार्थबुद्ध्या निवर्त्यते, यथा वा दिग्भ्रान्तिबुद्धिर्दिग्याथार्थ्यबुद्ध्या निवर्त्यते एवमिहाप्यक्षरबुद्ध्योद्गीथबुद्धिर्निवर्त्येत उद्गीथबुद्ध्या वाऽक्षरबुद्धिः, एकत्वन्तु अक्षरोद्गीथशब्दयोरनतिरिक्तार्थवृत्तित्वं, यथा द्विजोत्तमो ब्राह्मणो भूमिदेव इति। विशेषणं पुनः सर्ववेदव्यापिनः ॐमित्येतस्याक्षरस्य ग्रहणप्रसङ्गे औद्गात्रविषयस्य समर्पणं, यथा नीलं यदुत्पलं तदानयेति, एवमिहाप्युद्गीथो य ॐकारस्तमुपासीतेति, एवमेतस्मिन् सामानाधिकरण्यवाक्ये विमृश्यमाणे एते पक्षाः प्रतिभान्ति, तत्रान्यतमनिर्धारणे कारणाभावादनिर्धारणप्राप्ताविदमुच्यते। व्याप्तेश्च समञ्जसमिति। चशब्दोऽयं तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः। तदिह त्रयः पक्षाः सावद्या इति पर्युदस्यन्ते विशेषणपक्ष एवैको निरवद्य इत्युपादीयते, तत्राध्यासे तावत् या बुद्धिरितरत्राध्यस्यते तच्छब्दस्य लक्षणावृत्तित्वं प्रसज्येत फलञ्च कल्प्येत। श्रूयत एव फलं 'आपयिता ह वै कामानां भवतीत्यादि' इति चेत्, न, तस्यान्यफलत्वात्। *आप्त्यादि-

---

ध्येयस्य विशेषणं सिद्धवत्कृत्य ध्येयभेदाद्विद्याभेदः सिद्धान्तितः स न युक्त इत्याक्षेपसङ्गत्या पूर्वपक्षयति। तत्रेति। अत्र पूर्वपक्षे पूर्वोक्तसिद्धान्तासिद्धिः फलं सिद्धान्ते तत्सिद्धिरिति मत्वा सिद्धान्तसूत्रं व्याचष्टे। च शब्द इत्यादिना। पक्षत्रयस्य दुष्टत्वं प्रतिज्ञायाध्यासपक्षे दोषमाह। तत्राध्यास इति। यत्रोद्गीथस्य बुद्धिरोङ्कारेऽध्यस्यते तद्वाचकोद्गीथशब्दस्योङ्कारे लक्षणा स्यात् तद्बुद्धिविषयत्वगुणपरत्वात् तथा सम्बन्धोऽप्रसिद्धः कल्पनीयः, प्रतीकोपास्तेः फलञ्च कल्प्यमिति गौरवं स्यादित्यर्थः। फलं न कल्प्यमिति शङ्कते। श्रूयत इति। आपयादीति ॐकार

---

* आप्तमादीति वर्ध०।

दृष्टिफलं हि तत्, नोद्गीथाध्यासफलं। अपवादेऽपि समानः फलाभावः। मिथ्याज्ञाननिवृत्तिः फलमिति चेत्, न, पुरुषार्थोपयोगानवगमात्। न च कदाचिदप्योङ्कारादोङ्कारबुद्धिर्निवर्तते उद्गीथादोद्गीथबुद्धिः। न चेदं वाक्यं वस्तुतत्त्वप्रतिपादनपरं उपासनविधिपरत्वात्। नाप्येकत्वपक्षः सङ्गच्छते, निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात्, एकेनैव विवक्षितार्थसमर्पणात्, न च होत्रविषये वाऽऽध्वर्यवविषये वाऽक्षरे ॐकारशब्दवाच्ये उद्गीथप्रसिद्धिरस्ति, नापि सकलायां साम्नो द्वितीयायां भक्तावुद्गीथशब्दवाच्यायामोङ्कारशब्दप्रसिद्धिः, येनानतिरिक्तार्थता स्यात्। परिशेषाद्विशेषणपक्षः परिगृह्यते, व्याप्तेः सर्ववेदसाधारण्यात्। सर्वव्याप्यक्षरमिह मा प्रसञ्जीत्यत उद्गीथशब्देनाक्षरं विशिष्यते, कथं नामोद्गीथावयवभूत ॐकारो गृह्येत इति। नन्वस्मिन्नपि पक्षे समाना लक्षणा उद्गीथशब्दस्यावयव*लक्षणार्थ-

---

व्याप्तिः सम्रद्धिरिति, 'य उपास्ते स कामानाप्नोति' इति श्रुतं फलं नाध्यासस्येत्यर्थः। उद्गीथोङ्कारयोरन्यतरबुद्ध्यान्यतरबुद्ध्यपवादमङ्गीकृत्यान्यतरमिथ्याबुद्धिनिवृत्तिर्वैफल्यमुक्तं सम्प्रत्यन्यतरबुद्धेरभ्रान्तित्वान्नापवाद इत्याह। न च कदाचिदपीति। भ्रान्तिश्चेत् निवर्तेत न तु निवर्तते इत्यभ्रान्तिरित्यर्थः। किञ्च तत्त्वबोधकाद्वाक्याद्भ्रान्त्यपवादो भवति नेह वाक्य तत्त्वपरत्वमित्याह। न चेति। घटकुम्भशब्दयोरिवोङ्कारोद्गीथशब्दयोः पर्यायत्वपक्षं दूषयति। नापीति। पर्यायत्वमपि नास्ति इत्याह। न चेति। परिशिष्टविशेषणपक्षे सूत्रं योजयति। व्याप्तेरिति। ॐमित्यक्षरमुपासीत इत्युक्ते सर्ववेदव्याप्योङ्कार इहोपास्तौ प्रसज्येत तन्निरासार्थमुद्गीथावयवत्व विशेषणं समञ्जसमित्यर्थः।

---

* लक्षणात्वादिति पर्भ० का०।

त्वात्। सत्यमेवमेतत्, लक्षणायामपि तु सन्निकर्षविप्रकर्षौ भवत एव, अध्यासपक्षे ह्यर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा, विशेषणपक्षे त्ववयविवचनेन शब्देनावयवः समर्प्यत इति सन्निकृष्टा लक्षणा। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तमाना दृष्टाः पटग्रामादिषु। अतश्च व्याप्तेश्चैतारो*मित्येतस्योद्गीथमित्येतद्विशेषणमिति समञ्जसमेतन्निरवद्यमित्यर्थः॥

## सर्वाभेदादन्यत्रेमे॥ १०॥

वाजसनेयिनां छन्दोगानाञ्च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तं वागादयोऽपि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः, ते च गुणाः प्राणे पुनः प्रत्यर्पिताः 'यद्वा अहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि' इत्यादिना। अन्येषामपि तु शाखिनां

---

अध्यासपक्षे तद्बुद्धिविषयत्वगुणयोगरूपः सम्बन्धः कल्प्य इति विप्रकृष्टा लक्षणा, अवयवलक्षणा तु सन्निकृष्टा अवयवावयविसम्बन्धस्य क्लृप्तत्वात्, पटावयवे दग्धे पटो दग्ध इति लोके प्रयोगाच्च। नामादौ ब्रह्मशब्दस्य त्वगत्या ब्रह्मबुद्धियाह्यत्वगुणलक्षणाऽऽश्रिता तत्र प्रतीकोपास्तेर्विवक्षितत्वात्, इह तु प्रतीकोपास्तिविधिकल्पने व्याप्त्यादिगुणकोङ्कारे प्राणदृष्टिविधाने च वाक्यभेदः स्यात्, अतः सर्ववेदव्याप्योङ्कारनिरासेनोङ्कारे प्राणदृष्टिविधानार्थं विशेषणमेव समञ्जसं कल्पनालाघवादिति सिद्धं॥

सर्वाभेदादन्यत्रेमे। विषयं वक्तुं सम्मतमर्थमाह। वाजसनेयिनामिति। वाचो वसिष्ठत्वं गुणः, वाग्मिनः सुखवासदर्शनात्, चक्षुषः प्रतिष्ठा गुणः चक्षुष्मतः पादप्रतिष्ठादर्शनात्। श्रोत्रं सम्पद्गुणकं श्रवणात् सर्वार्थसम्पत्तेः। मनश्चायतनत्वं गुणं तस्य वृत्तिद्वारा सर्वभोग्याश्रयत्वात्। ते

---

* व्याप्तेश्चैतदक्षरमित्येतस्योद्गीथमित्येतद्विशेषणमिति सर्व०।

कौषीतकिप्रभृतीनां प्राणसंवादेषु 'अथातो निःश्रेयसादानमेता ह वै देवता अहंश्रेयसे विवदमानाः' इत्येवञ्जातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तं नत्विमे वसिष्ठत्वादयो गुणा उक्ताः। तत्र संशयः किमेते वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्रापि स्युरुत न स्युरिति। तत्र प्राप्तं तावन्न स्युरिति। कुतः, एवंशब्द-प्रयोगात्। *"तथा एवं विद्वान् प्राणे निःश्रेयसं विदित्वा' इति हि तत्र तत्रैवंशब्देन वेद्यं वस्तु निवेद्यते, एवंशब्दश्च सन्निहितावलम्बनो न शाखान्तरपरिपठितमेवञ्जातीयकं गुण-जातं शक्नोति निवेदयितुं, तस्मात् स्वप्रकरणस्थैरेव गुणैर्नि-राकाङ्क्षत्वमित्येवं प्राप्ते प्रत्याह, स्युरेवमिमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि, कुतः सर्वाभेदात्। सर्वत्रैव हि तदेवैकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते प्राणसंवादादिसारूप्यात्,

---

ष गुणाः प्राणस्य श्रैष्ठ्यं निश्चित्य वागादिभिस्तस्मिन्नपि ता इति शा-खाद्वयसम्मतोऽर्थः। विषयमाह। अन्येषामित्यादिना। निःश्रेयसस्य श्रैष्ठ्यस्यादानं निर्धारणं प्रस्तूयत इत्यर्थः। देवता वागादयोऽहंश्रेयसे स्वश्रैष्ठ्यायेत्यर्थः। एवशब्दाच्छ्रैष्ठ्यगुणकप्राणप्रत्यभिज्ञानाच्च संशयमाह। तत्रेति। गुणानामनुपसंहारोपसंहारावेव पूर्वोत्तरपक्षयोः फलं उद्गी-थत्वविशेषणादोङ्कारस्य सर्ववेदव्याप्त्यादिवत् प्रकृतगुणमात्रग्राह-कैवंशब्दाच्छाखान्तरगुणव्यावृत्तिरिति दृष्टान्तेन पूर्वपक्षयति। तत्र प्राप्तमिति। यथा वागादिभ्यः प्राणश्रैष्ठ्यं सिद्धमथो तथा य एवं श्रैष्ठ्यगुणं विद्वानुपास्ते स प्राणे श्रैष्ठ्यं विदित्वा ध्यात्वा श्रेष्ठो भवति इति श्रुत्यर्थः। एवंजातीयकविधैक्यात् प्राप्तमार्थिकं वसिष्ठत्वादिगुणजातमेवंशब्दो न रुणद्धि श्रुतावलम्बित्वादिति प्राप्ते सिद्धान्तयति। स्युरेवमिति।

---

* तथा हि अथो य एवं इति मु॰ पु॰। अथो तथा य एवमिति तु टीकासम्मतं।

अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन्। नन्वेवंशब्दस्तत्र तत्र भेदेनैवस्त्रातीयकं गुणजातं वेद्यत्वाय समर्पयति इत्युक्तं, अत्रोच्यते। यद्यपि कौषीतकिब्राह्मणगतेनैवंशब्देन वाजसनेयिब्राह्मणगतं गुणजातमसंशब्दितमसन्निहितत्वात्, तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेनैवंशब्देन तत्संशब्दितमिति न परशाखागतमप्यभिन्नविज्ञानावबद्धं गुणजातं स्वशाखागतादिशिष्यते। न चैवं सति श्रुतहानिरश्रुतकल्पना वा भवति। एकस्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति गुणवतो भेदाभावात्। न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरगतस्तद्देशस्यैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति, यथा च तत्र परिचयविशेषाद्देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते, एवमभियोगविशेषाच्छाखान्तरेऽणुपास्या गुणाः शाखान्तरेऽप्यस्येरन्। तस्मादेकप्रधानसम्बद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैवोपसंहर्तव्या इति॥

---

वाजसनेयिब्राह्मणे तावदेवंशब्देन वसिष्ठत्वादिगुणजातस्य प्राणविद्यासम्बन्धः सिद्धः सैव विद्या कौषीतकिश्रुतौ प्रत्यभिज्ञायते, तथा च गुणानां गुण्यविनाभावेनार्थतः प्राप्तानामपि श्रुतगुणैरविरोधात् सहैव श्रुतमार्थञ्च गुणजातं श्रुत्यर्थाभ्यां सन्निहितत्वाविशेषात् कौषीतकिगतेनैवंशब्देन परामृश्यन्त इत्याह। तथापीति। कौषीतकिश्रुतिस्थः प्राणो वसिष्ठत्वादिगुणकः श्रेष्ठप्राणत्वात्। वाजिश्रुतिस्थप्राणवदित्यश्रुतगुणानुमाने सति श्रुतहानिर्नास्ति अविरोधादित्युक्तं स्मारयति। न चैवं सति इति। अपरिगणिता अपि गुणा श्रुता एवेत्यत्र दृष्टान्तमाह। न हीति। फलितमाह। तस्मादिति॥

## आनन्दादयः प्रधानस्य ॥ ११ ॥

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिष्वानन्दरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मकत्वमित्येवंजातीयका ब्रह्मणो धर्माः क्वचित् केचित् श्रूयन्ते। तेषु संशयः किमानन्दादयो ब्रह्मधर्मा यावन्तो यत्र श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः किं वा सर्वे सर्वत्रेति। तत्र यथा श्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायामिदमुच्यते, आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः, कस्मात् सर्वाभेदादेव। सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यते। तस्मात् सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन। नन्वेवं

---

आनन्दादयः प्रधानस्य। ब्रह्मणो ज्ञेयस्यैक्यात् निर्विशेषत्वाच्च संशयमाह। तेषु संशय इति। पूर्वपक्षे सत्यादिपदानुपसंहारादर्थानवधारणं, सिद्धान्ते त्ववधारणमिति फलं। प्राणस्य सविशेषत्वाद्युक्तः शाखान्तरीयवसिष्ठत्वाद्युपसंहारः, ब्रह्मणस्तु निर्विशेषत्वात् स्वशाखागतपदैरेव प्रमितिसिद्धेर्व्यर्थः पदान्तरोपसंहार इति प्रत्युदाहरणेन पूर्वपक्षः। सिद्धान्तमाह। इदमिति। आनन्दत्वसत्यत्वज्ञानत्वादिसामान्यानि ब्रह्मणि कल्पिता धर्मास्तेषां सर्वशाखासूपसंहारो नाम तद्वाचकानन्दादिपदानामेकवाक्यतयोच्चारणं आनन्दः सत्यं ज्ञानमनन्तं ब्रह्म शुद्धमद्वयमात्मेति तानि च समानाधिकरणानि पदानि विरुद्धधर्मत्यागेन सर्वाधिष्ठानभूतामेकामखण्डव्यक्तिं लक्षयन्ति। न चैकेनैव पदेन लक्ष्यसिद्धेः पदान्तरं व्यर्थमिति वाच्यं, एकस्मिन् पदे विरोधाभावेन लक्षणानवतारात्। यद्यपि पदद्वयेऽपि लक्षणाऽवतरति तथाप्यानन्दो ब्रह्मेत्युक्ते दुःखत्वाल्पत्वभ्रान्तिनिरासेऽप्यसत्त्वजडत्वादिभ्रमो भवेत् अतस्तन्निरासार्थं सत्यज्ञानादिपदानि प्रयोक्तव्यानि। न च भ्रमस्यानव-

सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र सङ्कीर्येरन्, तथा हि तैत्तिरीयके आनन्दमयमात्मानं प्रकृत्याम्नायते 'तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा' इति, अत उत्तरं पठति ॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयके आम्नातानां नास्त्यन्यत्र प्राप्तिः यत्कारणं प्रियं मोदः प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्त्रन्तरापेक्षया *चोपचितापचितरूपा उपलभ्यन्ते, उपचयापचयौ च सति भेदे सम्भवतः, निर्भेदन्तु ब्रह्म 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभ्यः। न चैते प्रियशिरस्त्वादयो ब्रह्मधर्माः कोशधर्मास्त्वेते इत्युपदिष्टमस्माभिः 'आनन्दमयोऽभ्यासात्' इत्यत्र [वे०सू०१।१।१२]। अपि च परस्मिन् ब्रह्मणि चित्तावतारोपायमात्रत्वेनैते परिकल्प्यन्ते न द्रष्टव्यत्वेन, एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनां। ब्रह्मधर्मास्त्वेतान् कृत्वा

---

धित्वाद्वाक्यमयं पर्यवसितं स्यादिति वाच्यं, सच्चिदानन्दात्मकं सर्वधर्मशून्यमद्वयमविकल्पं ब्रह्माहमिति विशेषदर्शने सर्वभ्रमनिरासात्। तच्च विशेषदर्शनं यावद्भिः पदैर्भवति तावन्ति पदान्युपसंहर्तव्यानीति भावः॥

ब्रह्मैक्याच्चिदानन्दत्वादिधर्माणां सर्वत्र प्राप्तिस्तर्हि सगुणब्रह्मविद्यागतधर्मप्राप्तिरपि स्यादिति शङ्कानिरासार्थं सूत्रं व्याचष्टे। प्रियेति। पुत्रदर्शनसुखं प्रियं तद्वार्तादिना मोदस्तस्य विद्याद्यतिशये प्रमोद इत्येवं तारतम्यवन्तो धर्मास्त्वद्वये ज्ञेये न प्राप्नुवन्ति तेषामब्रह्मस्वरूपाणां ब्रह्मज्ञानानुपयोगादिति भावः। तेषां ब्रह्मधर्मत्वं चासिद्धमित्याह। न

---

* चोपेति वर्ध०।

न्यायमात्रमिदमाचार्येण दर्शितं प्रियशिरस्त्वाद्यप्राप्तिरिति, स च न्यायोऽन्येषु निश्चितेषु ब्रह्मधर्मेषूपासनायोपदिश्यमानेषु नेतव्यः संयद्वामत्वादिषु सत्यकामत्वादिषु च। तेषु हि सत्यप्युपास्यब्रह्मण एकत्वे प्रक्रमभेदादुपासनभेदे सति नान्योन्यधर्माणामन्योन्यत्र प्राप्तिः, यथा च द्वे भार्ये एकं नृपतिमुपासाते चामरेणान्या छत्रेणान्या, तत्र चोपास्यैकत्वेऽप्युपासनभेदे धर्मव्यवस्था च भवति एवमिहापीति। उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते न निर्गुणे परस्मिन् ब्रह्मणि, अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः॥

## इतरे त्वर्थसामान्यात्॥ १३॥

इतरे त्वानन्दादयो धर्माः ब्रह्मस्वरूपप्रतिपादनायैवोच्यमाना अर्थसामान्यात् प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात् सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यं, प्रतिपत्तिमात्रप्रयोजना हि त इति॥

---

चेत इति। ब्रह्मणि चिन्तावतारोपायत्वेऽपि तेषां प्राप्तिः स्यादित्याशङ्क्याह। एवमपीति। अध्येयत्वादेषां न ज्ञेये ब्रह्मणि प्राप्तिरित्यर्थः। किमर्थं तर्हि सूत्रमित्यत आह। ब्रह्मधर्मास्विति। ब्रह्मधर्मानिति कृत्वा चिन्तापत्तावाह। स चेति। ज्ञेये ध्येयधर्माणामनुपयोगादप्राप्तिरिति न्यायात् सम्पद्वामत्वादीनामप्राप्तिरिति सूत्रं व्याख्येयमित्यर्थः। ज्ञानानुपयोगेऽपि ध्याने तेषां धर्माणामुपयोगादित्याशङ्क्याह। तेषु हीति। ध्यानविधिपरतन्त्राणां धर्माणां यथाविधि व्यवस्थेत्यर्थः॥

सम्पद्वामत्वादिधर्मेभ्य आनन्दादीनां वैषम्यं ज्ञानोपयोगित्वादित्याह। इतरे त्विति॥

## आध्यानाय प्रयोजनाभावात्॥ १४ ॥

काठके पठ्यते 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यारभ्य 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति। तत्र संशयः किमिमे सर्वे एवार्थादयस्ततस्ततः परत्वेन प्रतिपाद्यन्ते उत पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति। तत्र तावत् सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः। तथा हि श्रूयते 'इदमस्मात् परमिदमस्मात् परम्' इति। ननु बहुष्वर्थेषु परत्वेन प्रतिपिपादयिषितेषु वाक्यभेदः स्यात्। नैष दोषः, वाक्यबहुत्वोपपत्तेः। बहून्येव ह्येतानि वाक्यानि प्रभवन्ति बहूनर्थान् परत्वोपेतान् प्रतिपादयितुं, तस्मात् प्रत्येकमेषां परत्वप्रतिपादनमित्येवं प्राप्ते ब्रूमः, पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तं न प्रत्येकमेषां परत्वप्रतिपादनं, कस्मात् प्रयोजनाभावात्। न ह्यितरेषु परत्वेन प्रतिपन्नेषु किञ्चित् प्रयोजनं दृश्यते श्रूयते वा, पुरुषे त्विन्द्रियादिभ्यः परस्मिन् सर्वानर्थ-

---

सत्यज्ञानानन्दात्मब्रह्मशब्दाः पञ्च सर्वत्रोपसंहर्तव्या इति सिद्धे-श्चाध्यानाय वाक्यभेदाभेदानवधारणात् संशयमाह। तत्रेति। पूर्वपक्षे वाक्यभेदाद्विद्याभेदः सिद्धान्ते वाक्यैक्याद्विद्यैक्यमिति फलं। पूर्वत्र ब्रह्मस्वभावानामानन्दादीनामुपसंहार्याणां ब्रह्मज्ञानफलोपायत्वमुक्तं अत्र त्वब्रह्मभावस्यार्थादिपरत्वस्यानुपसंहार्यं स्यादपायत्वमुच्यत इत्येकफलकत्वं सङ्गतिः। तत्तत्परत्वविशिष्टत्वेनार्थादीनामपूर्वतया प्रतिपाद्यानां भेदात् वाक्यभेदो न दोष इति पूर्वपक्षः। 'उत' सूत्रसिद्धान्तं प्रतिज्ञाय। सोऽत्र हेतुं व्याचष्टे। पुरुष एवेति। फलवत्त्वे सत्यपूर्वत्वात् मुख्यस्यैव प्राधान्येन प्रतिपाद्यत्वं अफलार्थादीनां परत्वं तु तच्छेषत्वेनोच्यत इत्यर्थः।

आत्मातीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः । तथा च श्रुतिः 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति । अपि च पर-प्रतिषेधेन काष्ठादिशब्देन च पुरुषविषयमादरं दर्शयन् पुरुष-प्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति । आध्यानायेति । आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः । सम्यग्दर्शनार्थमेव ह्योहा-ध्यानमुपदिश्यते न त्वाध्यानमेव स्वप्रधानं ॥

## आत्मशब्दाच्च ॥ १५ ॥

इतश्च पुरुषप्रतिपत्त्यर्थैवेयमिन्द्रियादिप्रवाहोक्तिः, यत्कारणं-

'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' ॥ इति-

प्रकृतं पुरुषमात्मेत्याह । अतश्चानात्मत्वमितरेषां विवक्षित-मिति गम्यते, तस्यैव च दुर्विज्ञानतां सुसंस्कृतमतिगम्यतां च दर्शयति, तद्विज्ञानायैव च 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्याध्यानं विदधाति । तद्व्याख्यातं आनुमानिकमप्येकेषामित्यत्र [वे० सू० १।४।१] । एवमनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते

---

किञ्च 'पुरुषान्न परं किञ्चित् सा काष्ठा' इति वेदः परनिषेधलिङ्गेन सर्वबाधावधित्वलिङ्गेन च पुरुषे तात्पर्यं दर्शयन् पूर्वस्मात् पूर्वस्मादपर-स्यापरस्य परत्वोक्तिस्तदर्थेति दर्शयति इत्याह । अपि चेति । अर्था-दीनामध्योक्तिराध्यानाय तत्तत्परत्वध्यानपूर्वकं पुरुषदर्शनायैव । अतः प्रयोजनाभावादिति सूत्रं योजयति । आध्यानायेति ॥

आत्मत्वादिलिङ्गैश्च पुरुष एव प्रतिपाद्य इत्याह । आत्मशब्दाच्चेति। किञ्च 'तद्विष्णोः परमं पदं' 'पुरुषान्न परं किञ्चित्' इत्युपक्रमोपसंहार-

नेतरेषु। अपि च 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्युक्ते किन्तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकाङ्क्षायामिन्द्रियाद्यनुक्रमणात् परमपदप्रतिपत्त्यर्थ एवायमायास इत्यवसीयते॥

## आत्मगृहीतिरितरवदुत्तरात्॥ १६॥

ऐतरेयके श्रूयते 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजताम्भो मरीचीर्मर आपः' इत्यादि। तत्र संशयः किं पर एवात्मा इहात्मशब्देनाभिलप्यते उतान्यः कश्चिदिति। किं तावत् प्राप्तं न परमात्मेहात्मशब्दाभिलप्यो भवितुमर्हतीति। कस्मात्, वाक्यान्वयदर्शनात्। ननु वाक्यान्वयः सुतरां परमात्मविषयो दृश्यते प्रागुत्पत्तेरात्मैकत्वावधारणात् ईक्षणपूर्वकस्रष्टृत्ववचनाच्च। नेत्यु-

---

योरैकरूप्यात् कृत्स्नत्ववदेकपुरुषपरत्वेनैकवाक्यत्वनिश्चये सति वाक्यभेदफलभेदकल्पना न युक्ता गौरवादित्याह। अपि चेति॥

आत्मगृहीतिः। मिषत् चलत्। लोकानाह। अम्भ इति। अम्भः स्वर्गः, मरीचयोऽन्तरिक्षलोकः, मरो मर्त्यलोकः, आपः पाताललोक इत्यर्थः। आत्मशब्दस्य ब्रह्मणि सूत्रात्मनि च प्रयोगात् संशयमाह। तत्रेति। अत्र पूर्वपक्षे वाक्यस्य सूत्रोपास्तिपरत्वात् परब्रह्मधर्माणामानन्दादीनामैतरेयकेऽनुपसंहारः, सिद्धान्ते ब्रह्मपरत्वादुपसंहार इति फलं, पुरुषवाक्याङ्गेदप्रसङ्गादर्थादिवाक्यानां नार्थादिप्रतिपादकत्वमित्युक्तं तद्वदिहापि प्रजायते रेतो देवा इति पूर्वस्मात् प्रजापतिवाक्याङ्गेदप्रसङ्गादात्मा वा इत्यादिवाक्यस्य न ब्रह्मपरत्वमिति दृष्टान्तेन पूर्वपक्षयति। न परमात्मेत्यादिना। वाक्यस्य प्रजापतौ तात्पर्यदर्शनादित्यर्थः। पूर्वपक्षमाक्षिप्य लोकस्रष्टृत्वलिङ्गात् प्रजापतौ वाक्यान्वय इत्याह।

च्यते लोकसृष्टिवचनात्, परमात्मनि हि स्रष्टरि परिगृह्यमाणे महाभूतसृष्टिरादौ वक्तव्या लोकसृष्टिस्त्विहादावुच्यते, लोकाश्च महाभूतसन्निवेशविशेषाः। तथा चाम्भःप्रभृतीन् लोकत्वेनैव निर्वक्ति 'अदोऽम्भः परेण दिवम्' इत्यादिना। लोकसृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुपलभ्यते। तथा हि श्रुतिर्भवति 'आत्मैवेदमग्र आसीत् पुरुषविधः' इत्याद्या। स्मृतिरपि-

> 'स वै शरीरी प्रथमः स वै पुरुष उच्यते।
> आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' ॥ इति।

ऐतरेयिणोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः' इत्यत्र पूर्वस्मिन् प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति। आत्मशब्दोऽपि तस्मिन् प्रयुज्यमानो दृश्यते 'आत्मैवेदमग्र आसीत् पुरुषविधः' इत्यत्र। एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते। ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुप-

---

नन्वित्यादिना। लोका एव महाभूतानीत्यत आह। लोकाश्चेति। लोकशब्दस्य महाभूतेष्वरूढत्वात् भौतिका एव लोकाः। निर्वचनाच्चेत्याह। तथा चेति। अम्भो मरीचीर्मरमाप इति सूत्रयित्वा स्वयमेव श्रुतिर्व्याचष्टे। परेण दिवं, दिव' परस्तादिति। प्रतिष्ठितपन्नोऽम्भसा व्याप्तो यो लोकः तदम्भः अन्तरिक्षं, मरीचय. पृथिवी, मरो आप अधस्तात्ता आप इति। ननु लोकसृष्टिरपीश्वरादेवास्तु नेत्याह। लोकेति। पुरुषविधो नराकारः। आत्मा हिरण्यगर्भं, अपिपीलिकाभ्यः सर्वमसृजतेत्यर्थः। भूतानां लोकानामित्यर्थः। प्रकरणादपि लोकस्रष्टा प्रजापतिरित्याह। ऐतरेयिणोऽपीति। रेतः कार्यमिति यावत्। ब्रह्मलिङ्गानि प्रजापतौ योजयति। आत्मशब्दोऽपीत्यादिना। किञ्च प्रजाः सृष्ट्वा ताः प्रति भोगार्थं

पन्नं। अपि च ताभ्यो गामानयत् ताभ्योऽश्वमानयत् ताभ्यः पुरुषमानयत् ता अब्रुवन् इत्येवंजातीयको भूयान् व्यपारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्ध इहानुगम्यते। तस्मात् विशेषवानेव कश्चिदिहात्मा स्यादित्येवं प्राप्ते ब्रूमः, पर एवात्मेहात्मशब्देन गृह्यते इतरवत्, यथेतरेषु सृष्टिश्रवणेषु 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्येवमादिषु परस्यात्मनो ग्रहणं, यथा चेतरस्मिन् लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति। यत्र तु 'आत्मैवेदमग्र आसीत्' इत्येवमादौ पुरुषविध इत्येवमादि विशेषणान्तरं श्रूयते भवेत् तत्र विशेषवत आत्मनो ग्रहणं, अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते 'स ईक्षत लोकान्नु सृजै' इति 'स इमाँल्लोकानसृजत' इत्येवमादि। तस्मात् तस्यैव ग्रहणमिति न्याय्यं॥

अन्वयादिति चेत् स्यादवधारणात्॥ १७॥

वाक्यान्वयदर्शनात् न परमात्मग्रहणमिति पुनर्यदुक्तं तत्परिहर्तव्यमिति, अत्रोच्यते। स्यादवधारणादिति। भवेदुपपन्नं पर-

---

गामानयल्लोकस्रष्टा तथाऽश्वमानयत् तास्तु गवाश्वप्राया न क्षमास्ततः पुरुषशरीरे आनीते ता अब्रुवन् क्षमा' स्म इति। अयञ्च व्यवहारो लोकस्रष्टुः प्रजापतित्वे लिङ्गमित्याह। अपि चेति। आत्मशब्दस्य चिदात्मनि मुख्यग्राहबाधकाभावादुत्तरस्येक्षणादेरनुकूलत्वात् परमात्मग्रहणमिति सिद्धान्तयति। एवं प्राप्त इति। महाभूतसृष्टिपूर्वकं लोकान्सृजतेति श्रुतिर्व्याख्येयेति भावः॥

पूर्वपक्षबीजमनूद्य दूषयति। अन्वयादिति। 'आत्मा वा इदमेक

मात्मन इह ग्रहणं, कस्मादवधारणात्। परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते, अन्यथा ह्यनाञ्जसं तत् परिकल्प्येत। लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि, यथा 'तत्तेजोऽसृजत' इत्येतच्छ्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमित्ययूयुजं एवमिहापि। श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषूपसंहर्तव्यो भवति। योऽप्ययं व्यापारविशेषानुगमस्ताभ्यो गामानयदित्यादिः सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः, न ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुं, तत्प्रतिपत्तौ पुरुषार्थाभावात्, ब्रह्मात्मत्वं त्विह विवक्षितं। तथा ह्यम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि करणायतनञ्च शरीरं उपदिश्य स एव स्रष्टा कथं न्विदं मदृते स्यादिति वीक्ष्य इदं शरीरं प्रविवेशेति दर्शयति 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' इति। पुनश्च 'यदि

---

एवाग्र आसीत्' इति 'प्रज्ञानं ब्रह्म' इति चोपक्रमोपसंहारस्थात्मब्रह्मश्रुतिभ्यामेकत्वावधारणात्, प्रवेशादिलिङ्गैश्च लोकसृष्ट्यादिलिङ्गबाधेन प्रत्यग्ब्रह्म ग्राह्यमिति भावः। स परमेश्वरः। एतमेव सीमानं विदार्य छिद्रं कृत्वा। एतया ब्रह्मरन्ध्राख्यद्वारा। लिङ्गविशिष्टः प्रविष्टवानित्यर्थः। मां विना यदि वागादिभिः स्वस्वव्यापारः कृत, अथ तदा त्वं क इति त्वंपदार्थं विचार्य स्वयमेतमेव शोधितमात्मानं ब्रह्म ततमं व्याप्ततममपश्यत्। तकारलोपः छान्दसः। प्रज्ञा चिदात्मा। नेत्रं नीयतेऽनेनेति नियामकं यस्य तत् प्रज्ञानेत्रं चिदात्मनियम्यमित्यर्थः। उक्तव्याख्याने गुणोपसंहारस्यास्फुटत्वात् न वादसङ्गतिरिति मत्वैव व्याख्यान्तरमाह।

वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितम्' इत्येवमादिना करण-व्यापारविवेचनपूर्वकं 'अथ कोऽहम्' इति वीक्ष्य 'स एतमेव पुरुषं ब्रह्मततममपश्यत्' इति ब्रह्मात्मत्वदर्शनमवधारयति। तथोपरिष्टादपि 'एष ब्रह्मैष इन्द्रः' इत्यादिना समस्तं भेदजातं सह महाभूतैरनुक्रम्य 'सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति ब्रह्मात्मत्वदर्शनमेवावधारयति, तस्मादिहात्मगृहीतिरित्यनपवादं। अपरा योजना, आत्मगृहीतिरितरवदुत्तरात्। वाजसनेयके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसङ्गविमुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति, तथा ह्युपसंहरति 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' इति। छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यन्तरेणैवात्मशब्दमुप-क्रम्य 'उदर्के स आत्मा तत्त्वमसि' इति तादात्म्यमुपदिशति। तत्र संशयः, तुल्यार्थत्वं किमनयोराम्नानयोः स्यात् अतुल्यार्थत्वं वेति। अतुल्यार्थत्वमिति तावत् प्राप्तं अतुल्यत्वादाम्नानयोः, न

---

अपरेति। उदर्क उपसंहारः। सच्छब्दस्यात्मानात्मसाधारण्यात् संशय-माह। तत्रेति। पूर्वपक्षे सत्तासामान्ये ब्रह्मात्मत्वसम्पदुपास्तिः छान्दोग्ये वाजिश्रुतौ निर्गुणविद्येति भेदान्मिथोगुणानुपसंहारः सिद्धान्ते तू-भयत्र निर्गुणविद्यैक्यादुपसंहार इति फलभेदः। पदानां जातौ शक्ति-ग्रहात् सच्छब्दोऽपि सत्त्वजातिवाचीत्युपक्रमस्य निश्चितार्थत्वादसंजात-विरोध्युपक्रमबलेन तादात्म्योपदेशः सम्पत्तिपरतया नेय इति पूर्व-पक्षनिष्कर्षः। पूर्वत्र वाक्यैक्यादर्थादिपरत्वं त्यक्त्वा विद्यैक्यमुक्तं इह तु सदात्मशब्दाभ्यां जात्यात्मवाचिभ्या उपक्रमभेदाद्वाक्यभेदे सति विद्या-

ह्याम्नानवैषम्ये सत्यर्थसाम्यं युक्तं प्रतिपत्तुं आम्नानतन्त्रत्वादर्थपरिग्रहस्य। वाजसनेयके चात्मशब्दोपक्रमादात्मत्वोपदेश इति गम्यते, छान्दोग्ये तूपक्रमविपर्ययादुपदेशविपर्ययः। ननु च छन्दोगानामप्यस्ति उदर्के तादात्म्योपदेश इत्युक्तं, सत्यमुक्तमुपक्रमतन्त्रत्वादुपसंहारस्य न तादात्म्यसम्पत्तिः सेति मन्यते, तथा प्राप्तेऽभिधीयते। आत्मगृहीतिः 'सदेव सोम्येदमग्र आसीत्' इत्यत्र। छन्दोगानामपि भवितुमर्हति इतरवत्, यथा 'कतम आत्मा' इत्यत्र। वाजसनेयिनामात्मगृहीतिस्तथैव। कस्मात्, उत्तरात् तादात्म्योपदेशात्। अन्वयादिति चेत्, स्यादवधारणात्। यदुक्तं उपक्रमान्वयात् उपक्रमे चात्मशब्दश्रवणाभावात् नात्मगृहीतिरिति तस्य कः परिहार इति चेत, सोऽभिधीयते स्यादवधारणादिति। भवेदुपपन्नेहात्मगृहीतिः अवधारणात्, तथा हि 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' इति एकविज्ञानेन सर्वविज्ञानमवधार्य तत्सम्पिपादयिषया सदेवेत्याह, तच्चात्मगृहीतौ सत्यां सम्पद्यते, अन्यथा हि योऽयं मुख्य आत्मा स न

---

भेद इति प्रत्युदाहरणसङ्गतिः। न ह्यात्मशब्दो जातिवाचकः आत्मव्यक्तेरैक्याज्जात्यभावात् किन्तु सर्वान्तरवस्तुवाचकः कल्पितजातिवाचित्वेऽप्युपक्रमभेदः स्फुट एव सदात्मत्वयोर्भेदादिति मन्तव्यं। सिद्धान्तयति। तथेत्यादिना। उपक्रमान्वयादिति उपक्रमाधीनत्वादुपसंहारस्येत्यर्थः। तथावधारणं सत्पदेनात्मगृहीतौ सत्यां युज्यत इत्याह। तथेति। सदेकमेवेत्यवधारणं, अनेन जीवेनात्मन इति सद्देवताकर्तृको जीवस्यात्मशब्देन परामर्शः, सुप्तौ जीवः सता सम्पन्नो भवति, इति कथनं भूय एव मा भगवान् विज्ञापयत्विति परिचोदना। सदितिपदेन

*विज्ञायत इति नैव सर्वविज्ञानं सम्पद्येत। तथा प्रागुत्पत्तेरेकत्वावधारणं जीवस्य चात्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसम्पत्तिकथनं परिचोदनापूर्वकस्य पुनः पुनः 'तत्त्वमसि' इत्यवधारणमिति च सर्वमेतत् तादात्म्यप्रतिपादनायामेवावकल्पते न तादात्म्यसम्पादनायां। न चात्रोपक्रमतन्त्रतोपन्यासो न्याय्यः, न ह्युपक्रमे आत्मत्वसङ्कीर्तनमनात्मत्वसङ्कीर्तनं वास्ति, सामान्योपक्रमस्य न वाक्यशेषगतेन विशेषेण विरुध्यते विशेषाकाङ्क्षित्वात् सामान्यस्य, सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः सम्भवति, अतोऽन्यस्य वस्तुजातस्यारम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति, आहर पात्रं पात्रमाहरेत्यादिष्वर्थसाम्येऽपि तद्दर्शनात्। तस्मादेवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धं॥

---

सत्ताश्रय उच्यते न जातिमात्रं, कर्तृवाचिशतृप्रत्ययान्तत्वात्। तथा चोपक्रमे सत्ताश्रयसामान्योक्तौ कस्ताश्रय इत्याकाङ्क्षायां वाक्यशेषादात्मेति निश्चीयत इत्याह। न चेति। सच्छब्दस्यात्मसाधारण्यमुपेत्यात्र तदपि नास्ति आत्मपदवत् सत्पदस्य व्यक्तिवाचित्वात् व्यक्तिश्च बाधायोग्या चिदात्मैवेति न वाजिच्छन्दोगयोरुपक्रमवैषम्यमित्याह। सच्छब्देति। वैषम्यमुपेत्याप्याह। आम्नानेति। वाजिवाक्ये त्वमर्थस्य तदर्थपर्यन्तस्य लक्ष्यस्य प्रतिपादनं छान्दोग्यवाक्ये तु तदर्थस्य त्वमर्थपर्यन्तस्य प्रतिपादनमिति प्रकारभेदेऽपि वाक्यार्थैक्याद्विद्यैक्यमिति फलितमाह। तस्मादिति॥

---

* विज्ञात इति वर्ध० का० सो०।

## कार्याख्यानादपूर्वं ॥ १८ ॥

छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नं आम्नाय तस्यैवापो वास आमनन्ति। अनन्तरं च छन्दोगा आमनन्ति 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टादद्भिः परिदधति' इति। वाजसनेयिनस्त्वामनन्ति 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति। तत्राचमनमनग्नताचिन्तनं च प्राणस्य प्रतीयते। तत् किमुभयमपि विधीयते उताचमनमेवोतानग्न-

---

कार्याख्यानादपूर्वं। 'मे किमन्नं किं वासः' इति प्राणेन पृष्टा वागादय ऊचुः 'यदिदं किं चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वासः' इति सर्वं प्राणिभिर्भुज्यमानं यदिदं प्रसिद्धं श्वादिपर्यन्तमन्नं तत् प्राणस्य तवान्नं आप आच्छादनमित्युपासकेन चिन्तनीयमित्यर्थः। शाखाद्वयेऽप्यविशेषश्रुतिमुक्त्वा विशेषश्रुतिभेदमाह। अनन्तरं चेति। तस्माद्यतः प्राणवस्त्रत्वादशिष्यन्तोऽशनं कुर्वन्तः श्रोत्रिया एतत् कुर्वन्ति। किं तत्, भोजनात् पूर्वं ऊर्ध्वं चाचामन्ति इति यत् तदद्भिः प्राणं परिदधत्याच्छादयन्तीत्यर्थः। पूर्वोत्तराशनसम्बन्धिनीष्वप्सु प्राणवासस्त्वचिन्तनरूपमनग्नताध्यानं कार्यमिति भावः। तत् तस्मात्, इति उक्तार्थं यथा पूर्वं विद्वांसोऽशनात् प्राक् ऊर्ध्वं चाचामन्त एतमेवान्नं प्राणं तत्तेनाचमनेनानग्नमाच्छादितं कुर्वन्तो मन्यन्ते चिन्तयन्ति, तस्मादेवंविदिदानीन्तनोऽप्युपासक एवं कुर्यादिति वाजिश्रुत्यर्थः। अत्रोभयोरप्यपूर्वत्वात् संशयमाह। तत्किमिति। सन्दिग्धतदुपक्रमस्य वाक्यशेषात् निर्णयवदाचामन्ति इति पदस्य विधित्वसन्देहे आचामेदिति वाक्यशेषाद्विधित्वनिर्णय इति दृष्टान्तसंगत्या पूर्वपक्षमाह। किं तावदिति। ज्ञानसाधनोपासनाङ्गविधिविचारात् पादसङ्गतिर्बोध्या। पूर्वपक्षे प्राणवि-

तश्चिन्तनमेवेति विचार्यते। किं तावत् प्राप्तमुभयमपि विधीयते इति। कुतः उभयस्याप्यवगम्यमानत्वात्। उभयमपि चैतदपूर्वत्वादिध्यर्हं, अथ वाचमनमेव विधीयते, विस्पष्टा हि तस्मिन् विधिविभक्तिः, तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदिति तस्यैव स्तुत्यर्थमनग्नतासङ्कीर्तनमित्येवं प्राप्ते ब्रूमः। नाचमनस्य विधेयत्वमुपपद्यते, कार्याख्यानात्, प्राप्तमेव ह्येदं कार्यत्वेनाचमनं प्रायत्यार्थं स्मृतिप्रसिद्धमन्वाख्यायते। नन्वियं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात्, नेत्युच्यते विषयनानात्वात्। सामान्यविषया हि स्मृतिः पुरुषमात्रसम्बद्धं प्रायत्यार्थमाचमनं प्रापयति, श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाचमनं विदधती विदध्यात्। न च भिन्नविषययोः श्रुतिस्मृत्योर्मूलमूलिभावोऽवकल्पते, नचेयं श्रुतिः प्राणविद्यासंयोग्यपूर्वमाचमनं विधास्यति इति शक्यमाश्रयितुं, पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्येह प्रत्यभिज्ञायमानत्वात्, अत एव च नोभयविधानं, उभयविधाने च वाक्यं भिद्येत। तस्मात् प्राप्तमेवाशिशिषतामशितवताञ्च

---

घाङ्गत्वेनापूर्वाचमनं विहितमन्यत्रोपसंहर्तव्यमिति फलं सिद्धान्ते तस्याविधेयत्वात् नाङ्गत्वेनोपसंहार इति विवेकः। उभयविधाने वाक्यभेदः स्यादित्यरुच्या पक्षान्तरमाह। अथ वेति। प्रशस्तं ह्येदमाचमनं यस्मादनेन प्राणमनग्नं मन्यन्त इति स्तुतिः। प्रसिद्धानुवादेनाप्रसिद्धं विधेयमिति न्यायेन सिद्धान्तयति। एवमिति। प्रयतस्य प्रयत्नवतो भावः प्रायत्यं शुद्धिस्तदर्थमित्यर्थः। स्मृत्या शुद्ध्यर्थं कार्यत्वेन विहिते सकलकर्माङ्गतया प्राप्ताचमनानुवादे नापूर्वमनग्नताध्यानमेव विधीयत इति सूत्रार्थः। स्मार्तमाचमनं श्रुत्या नानूद्यते किं त्वनया

उभयत आचमनमनूद्य 'एतमेव तदनग्नं कुर्वन्तो मन्यन्ते' इति प्राणस्यानग्नताकरणसङ्कल्पोऽनेन वाक्येनाचमनीयास्वप्सु प्राणविद्यासम्बन्धित्वेनापूर्व उपदिश्यते। न चायमनग्नतावाद आचमनस्तुत्यर्थ इति न्याय्यं आचमनस्याविधेयत्वात्, स्वयञ्चानग्नताषङ्कल्पस्य विधेयत्वप्रतीतेः। न चैवं सत्येकस्याचमनस्योभयार्थताभ्युपगता भवति, प्रायत्यार्थता परिधानार्थता चेति क्रियान्तरत्वाभ्युपगमात्, क्रियान्तरमेव ह्याचमनं नाम प्रायत्यार्थं पुरुषस्याभ्युपगम्यते, तदीयास्त्वप्सु वासःसङ्कल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्याभ्युपगम्यत इत्यनवद्यं। अपि च 'यदिदं किं चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमिति' अत्र तावन्न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यते वक्तुं, अशब्दत्वादशक्यत्वाच्च, सर्वन्तु प्राणस्यान्नमितीयमन्नदृष्टिश्चोद्यते। तत्साहचर्याचापो वास इत्यत्रापि नापामाचमनं चोद्यते, प्रसिद्धास्वेवाचमनीयास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तं।

---

श्रुत्या विहितं स्मृत्यानूद्यत इति शङ्कते। नन्विति। श्रुतिस्मृत्योरनयोर्न मूलमूलिभावः भिन्नविषयत्वादिति परिहरति। नेति। 'द्विजो नित्यमुपस्पृशेत्' इत्याद्या स्मृतिः। आचमनान्तरविधिमुपेत्य मूलमूलित्वं निरस्तं सम्प्रति विधिरसिद्ध इत्याह। न चेयं श्रुतिरिति। अत एवेति आचमनविध्यभावादेवेत्यर्थः। अप्सु प्राणवासस्त्वध्यानाख्यः सङ्कल्पः प्राणविद्याङ्गत्वेन विधीयत इत्याह। तस्मादिति। स्वयञ्चेति अपूर्वत्वादित्यर्थः। शुद्ध्यर्थं विनियुक्तस्याचमनस्य प्राणाच्छादनार्थत्वं विरुद्धमित्याशङ्क्याह। न चैवं सतीति। आचमनस्याच्छादनार्थत्वमसिद्धमित्यर्थः। किञ्च यथा पूर्ववाक्ये प्राणस्यान्नध्यानमङ्गं विहितं तथात्र वासोध्यानं विधीयते, अन्यथाचमनविधौ पूर्वत्र ध्यानविधि-

न ह्यर्धवैशसं सम्भवति। अपि चाचामन्तीति वर्तमानापदेशित्वा-न्नायं शब्दो विधिक्षमः। ननु मन्यन्त इत्यत्रापि समानं वर्तमाना-पदेशत्वं, सत्यमेव तत्, अवश्यंविधेयत्वमन्यतरस्मिन् वासःकार्या-ख्यानात् अपां वासःसङ्कल्पनमेवापूर्वं विधीयते नाचमनं पूर्व-वद्धि तदित्युपपादितं। यदप्युक्तं विस्पष्टा चाचमने विधिविभक्ति-रिति, तदपि पूर्ववत्त्वेनैवाचमनस्य प्रत्युक्तं, अतएवाचमनस्याविवि-धित्सितत्वादेतमेव तदनमनर्थं कुर्वन्तो मन्यन्त इत्यत्रैव काण्वाः पर्यवस्यन्ति नामनन्ति तस्मादेवंविदित्यादि। तस्मात् माध्य-न्दिनानामपि पाठे आचमनानुवादेन*एवविदामेव प्रकृतप्राण-वासोविधित्वं विधीयत इति प्रतिपत्तव्यं। योऽप्ययमभ्युपगमः क्वचिदाचमनं †विधीयते क्वचिद्वासोविज्ञानमिति सोऽपि न

---

रुत्तरत्र क्रियाविधिरित्यर्द्धवैशसं स्यादित्याह। अपि चेति। भक्षये-दिति शब्दाभावात् श्वाद्यन्नस्य सर्वस्य मनुष्येणोपासकेन भोक्तुमशक्य-त्वाच्च न पूर्ववाक्ये क्रियाविधिरित्यर्थं। इतश्चाचमनमत्र न विधिरि-त्याह। अपि चेति। अनग्नं मन्यन्त इत्यत्र वासस्त्वध्यानमपि न विधेयं दोषसाम्यादिति शङ्कते। नन्विति। उभयोरप्यनुवादत्वे वैफल्या-दवश्यमेकानुवादेनैकं विधेय तच्च विधेय वासोध्यानमेव वासःकार्य-स्यानतत्स्याख्यानादपूर्वत्वाच्च इति समाधानार्थं। पूर्ववदिति स्मृत्या प्राप्तमित्यर्थं। आचामेदिति न विधि किन्तु विप्राश्चयाश्च यष्टव्य इति वदनुवाद इत्यत्र लिङ्गमाह। अत एवेति। तस्मादेवंविदशिष्य-न्नाचामेदशित्वा चाचामेदिति वाक्यस्याविधित्वे काण्वैरपठनं लिङ्ग-मित्यर्थं। तर्हि पाठबलान्माध्यन्दिने आचमनविधिरिति कस्यचि-न्मतं निराकरोति। योऽपीति॥

---

* एवंवित्त्वमेवेति वर्ध० का० सो०।　　† विधीयतामिति का० वर्ध०।

साधु', आपो वास इत्यादिकाया वाक्यप्रवृत्तेः सर्वत्रैवैकरूप्यात्। तस्मादाचामविज्ञानमेवेह विधीयते नाचमनमिति न्याय्यं ॥

## समान एवञ्चाभेदात्॥ १९ ॥

वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या विज्ञाता, तत्र गुणाः श्रूयन्ते 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्येवमादयः। तस्यामेव शाखायां वृहदारण्यके पुनः पठ्यते 'मनोमयोऽयं पुरुषो भा. सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च' इति। तत्र संशयः, किमियमेका विद्याऽग्निरहस्यवृहदारण्यकयोर्गुणोपसंहारश्च उत द्वे इमे विद्ये गुणानुपसंहारश्चेति। किं तावत् प्राप्तं विद्याऽभेदो गुणव्यवस्था चेति,कुतः पौनरुक्त्यप्रसङ्गात्। भिन्नासु हि शाखास्वध्येतृवेदितृभेदात् पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसाय एकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिष्वित्युक्तं। एकस्यां पुनः शाखायामध्येतृवेदितृभेदाभावादशक्यपरिहारे पौन-

---

समान । एवञ्चाभेदात् शाण्डिल्येन दृष्टा तन्नाम्नाऽङ्किता, अन्तर्हृदये व्रीह्यादिवत् सूक्ष्मः तिष्ठतीत्यर्थः। अभ्यासप्रत्यभिज्ञानाभ्यां संशयमाह। तत्रेति। गुणानुपसंहारोपसंहारौ पूर्वोत्तरपक्षयोः फलं, पूर्वत्र प्राणाचमनानुवादेनानग्नताध्यानविधिरुक्तः' इह त्वेकशाखायां विप्रकृष्टदेशस्थवाक्ययोरेकस्य विधित्वमन्यस्यानुवादत्वमित्यनिश्चयात् द्वयोरपि विद्याविधित्वमिति प्रत्युदाहरणेन पूर्वपक्षयति। किं तावदिति। यत्पुनरुक्तं

शाखैन विप्रकृष्टदेशस्यैका विद्या भवितुमर्हति। न चानैकमाम्नानं विद्याविधानार्थं अपरं गुणविधानार्थमिति विभागः सम्भवति। तदा ह्यतिरिक्ता एव गुणा इतरत्रेतरत्र चाम्नायेरन्, असमानाः समाना अपि तु उभयत्राम्नायन्ते मनोमयत्वादयः, तस्मान्नान्योन्यगुणोपसंहार इत्येवं प्राप्ते ब्रूमहे, यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति एवमेकस्यामपि शाखायां भवितुमर्हति उपास्याभेदात्, तदेव हि ब्रह्म मनोमयत्वादिगुणकमुभयत्राप्युपास्यमभिन्नं प्रत्यभिजानीमहे, उपास्यञ्च रूपं विद्यायाः नच विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः, नापि विद्याऽभेदे गुणव्यवस्थानं। ननु पौनरुक्त्यप्रसङ्गात् विद्याभेदोऽध्यवसितः, नेत्युच्यते अर्थविभागोपपत्तेः, एकं ह्याम्नान विद्याविधानार्थं अपरं गुणविधानार्थं इति न किञ्चिन्नोपपद्यते। नन्वेवं सति यदपठितमग्निरहस्ये तदेव वृहदारण्यके पठितव्यं 'स एष सर्वस्येशानः' इत्यादि। यत्तु पठितमेव मनोमयत्वादि तन्न पठितव्यं, नैष दोषः। तद्बलेनैव प्रदेशान्तरपठितविद्या-

---

त्वद्विद्यान्तरमिति न व्याप्तिः प्राणपञ्चाग्न्यादिविद्यासु व्यभिचारादित्याशङ्क्य शाखाभेदे पुनरुक्तिरसिद्धेत्युक्तमित्याह। यथा भिन्नास्विति। यथाऽग्निहोत्रवाक्ये कर्मणि विधिः, 'दध्ना जुहोति' इति वाक्ये गुणविधिस्तथात्राप्यस्तु न विद्याभेद इत्याशङ्क्याह। न चानैकमिति। उक्तगुणानां पुनरुक्तिर्वृथा स्यात् अतोऽभ्यासाद्विद्याभेदः प्रयाजभेदवदिति भावः, उक्तगुणोक्तिर्न वृथा कतिपयगुणविशिष्टोपास्याभेदप्रत्यभिज्ञानार्थत्वादत उपास्यरूपाभेदात् भिन्नशाखास्विव समानशाखायामपि विद्यैक्यमिति

प्रत्यभिज्ञानात् । समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां प्रत्यभिज्ञाय तस्यामीशानत्वाद्युपदिश्यते, अन्यथा हि कथं तस्यामयं गुणविधिरभिधीयते । अपि चाप्राप्तांशोपदेशेनार्थवति वाक्ये सञ्जाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाप्युपपद्यमानत्वात्, न तद्बलेन प्रत्यभिज्ञोपेक्षितुं शक्यते । तस्मादत्र समानायामपि शाखायां विद्यैकत्वं गुणोपसंहारश्चेत्युपपन्नं ॥

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

बृहदारण्यके 'सत्यं ब्रह्म' इत्युपक्रम्य 'तद्यत्तत् सत्यमसौ स आदित्यो य एष तस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' इति तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मञ्चायतनविशेषमुपदिश्य व्याहृतिशरीरत्वं च सम्पाद्य द्वे उपनिषदावुपदिश्येते, तस्योपनिषदहरित्यधिदैवतं, तस्योपनिषदहमित्यध्यात्म । तत्र संशयः किमविभागेनैवोभे अप्युपनिषदावुभयत्रानुसन्धातव्ये

---

सिद्धान्तसूत्रं योजयति । यथेति । सोऽनवकाशोऽप्यर्थो व्याख्यातः । यत्र बहवो गुणाः श्रुतास्तत्र प्रधानविधिरन्यत्र तदनुवादेन गुणविधिरिति निश्चयाद्गिरहस्ये प्रधानविधिवदुत्तरत्र गुणविधिरिति भावः ॥

सम्बन्धादेवमन्यत्रापि । सद्भूतत्रय त्यदाख्याकाशात्मकं, सत्य परोक्षभूतात्मक हिरण्यगर्भाख्यं ब्रह्मोपक्रम्य, तदुक्तं यत्सत् त्यं तत् स योऽसावादित्यः किं मण्डलं न तत्र स्थाने पुरुषः करणात्मकः स एवाध्यात्ममक्षिस्थानस्थ इत्युपदिश्य तस्य भूरिति शिरो भुव इति बाहू स्वरिति पादाविति व्याहृतिरूप शारीरकमुक्त्वा द्वे उपनिषदौ रहस्यदेवतानामनी उपदिश्येते तत्रादित्यमण्डलस्थस्याहरिति नाम प्रकाशकत्वात्

एव विभागेनैकाधिदैवतमेकाध्यात्ममिति। तत्र सूत्रेणैवोपक्रमते यथा शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार उक्तः एवमन्यत्राप्येवंजातीयके विषये भवितुमर्हति एकविद्याभिसम्बन्धात्, एका ह्रीयं सत्यविद्याऽधिदैवमाध्यात्मं चाधीता उपक्रमाभेदात् व्यतिषक्तपाठाच्च, कथं तस्यामुदितो धर्मस्तस्यामेव न स्यात्, यो ह्याचार्ये कश्चिदनुगमादिराचारश्चोदितः सग्रामगते अरण्यगते च तुल्यवदेव भवति। तस्मादुभयोरप्युपनिषदोरुभयत्र प्राप्तिरिति, एवं प्राप्ते प्रतिविधत्ते॥

## न वा विशेषात्॥ २१॥

नैवोभयोरुभयत्र प्राप्तिः, कस्माद्विशेषात्, उपासनस्थानविशेषोपनिबन्धादित्यर्थः। कथं स्थानविशेषोपनिबन्ध इति, उच्यते

---

तस्यादित्यस्याहमिति नाम सत्यत्वादिति इदं नामद्वयं विषयस्तत्र नामिन सत्याख्यस्य ब्रह्मण एकत्वात् स्थानभेदोक्तेश्च संशयमाह। तत्रेति। पूर्वपक्षे प्रतिस्थानं नामद्वयानुष्ठानं सिद्धान्ते यथा श्रुत्येकैकनामानुष्ठानमिति फलं। दृष्टान्तसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे। यथेति। यथा विद्यैक्यादुपसंहार उक्तः एवमन्यत्राप्येकविद्यायामुपसंहारो भवितुमर्हति इत्यर्थः। सत्यं ब्रह्मेत्युपक्रमाभेदस्तावेतावद्यादित्यपुरुषावन्योन्यस्मिन् प्रतिष्ठितौ, आदित्यरश्मिनाश्चक्षुषि चक्षुषश्चादित्ये प्रतिष्ठानादिति व्यतिषक्तपाठो मिथः संश्लेषपाठस्ताभ्यां विद्यैक्यसिद्धिः, विद्यैक्येऽपि किं स्यात् तत्राह। कथमिति। विद्यैक्येऽपि स्थानभेदादुपनिषदोरसङ्करः स्यादित्याशङ्कां दृष्टान्तेन परिहरति। यो हीति।

नामैक्यात् नामसङ्करो युक्तः, तथा चादित्योऽहरिति नामवान् सत्यब्रह्मत्वादादित्यस्याहरितिनामवदिति प्राप्ते सिद्धान्तसूत्रं योजयति।

'य एष एतस्मिन्मण्डले पुरुषः' इति आधिदैविकं पुरुषं प्रकृत्य तस्योपनिषदहरिति श्रावयति 'योऽयं दक्षिणेऽक्षन् पुरुषः' इति चाध्यात्मिकं पुरुषं प्रकृत्य तस्योपनिषदहमिति तस्येति चैतत् सन्निहितालम्बनं सर्वनाम तस्मादायतनविशेषव्यपाश्रयेणैवैते उपनिषदावुपदिश्येते कुत उभयोरुभयत्र प्राप्तिः। नन्वेक एवायमधिदैवतमध्यात्मञ्च पुरुषः, एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्। सत्यमेवमेतत्, एकस्याऽपि त्ववस्थाविशेषोपादानेनैवोपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति। अस्ति चायं दृष्टान्तः सत्यप्याचार्यस्वरूपानपाये यदाचार्यस्यासीनस्यानुवर्तनमुक्तं न तत्तिष्ठतो भवति, यच्च तिष्ठत उक्तं न तदासीनस्येति। ग्रामारण्ययोस्त्वाचार्यस्वरूपानपायात् तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावादुभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः। तस्माद्व्यवस्थाऽनयोरुपनिषदोः॥

## दर्शयति च॥२२॥

अपि चैवंजातीयकानां धर्माणां व्यवस्थितिलिङ्गदर्शनं

---

न वेति। नाम्नोरपासनस्थानविशिष्टसम्बन्धित्वादित्यर्थः। तस्योपनिषदहरहमिति च वाक्यद्वयेन तच्छब्दपरामृष्टयोः सन्निहितस्थानविशिष्टयोः पुरुषयोर्नामसम्बन्धपरेणोपसंहारानुमानं बाध्यमिति भावः। विशेष्यैक्यान्नामसङ्कर इत्याशङ्क्य स्थानभेदेन विशिष्टपुरुषभेदात् नामव्यवस्थामाह। नन्वित्यादिना। विशिष्टसम्बन्धे दृष्टान्तमाह। अस्तीति। प्रतिदृष्टान्तस्य स्वरूपसम्बन्धित्वात् विशिष्टे ध्येये प्रकृते दृष्टान्तत्वं नास्ति इत्याह। ग्रामेति॥

भवति 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' इति। तस्यैतस्य तदेव रूपं यदमुष्य रूपं कथमस्य लिङ्गत्वं तदुच्यते, अक्ष्यादित्यस्थानभेदभिन्नान् धर्मानन्योन्यस्मिन्ननुपसंहार्यान् पश्यन्निहातिदेशेनादित्यपुरुषगतान् रूपादीनक्षिपुरुष उपसंहरति 'तस्यैतस्य तदेव रूपम्' इत्यादिना। तस्माद्व्यवस्थिते एवैते उपनिषदाविति निर्णयः॥

## सम्भृतिद्युव्याप्त्यपि चातः॥ २३॥

'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसम्भृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते। तेषामेव चोपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते, तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन् न वेति विचारणायां ब्रह्मसम्बन्धादुपसंहारप्राप्तौ पठति, सम्भृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः, अत एव चायतनविशेषयोगात्। तथा हि

---

उक्तानामव्यवस्थायामतिदेशो लिङ्गमित्याह। दर्शयति चेति। विद्यैक्यादेवोपसंहारसिद्धावतिदेशो वृथा स्यात् तस्मादेकविद्यायामपि स्थानभेदेनोक्तगुणानां विनातिदेशमनुपसंहार इति सिद्धं॥

सम्भृतिद्युव्याप्त्यपि चातः। ब्रह्मैव ज्येष्ठं कारणं येषां तानि ब्रह्मज्येष्ठानि, निलोपश्छान्दसः, वीर्याणि पराक्रमविशेषा आकाशोत्पादनादयः, तानि च वीर्याणि सम्भृतानि निर्विघ्नं सम्बद्धानि, सर्वनियन्तुः कार्ये विघ्नकर्तुरसत्त्वात्। तच्च ज्येष्ठं ब्रह्माग्रे देवाद्युत्पत्तेः प्रागेव दिवं स्वर्गमाततान व्याप्तवत् सदा सर्वव्यापकमित्यर्थः। सर्वप्राधम्यं स्पर्धा-

शाण्डिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तं 'एष आत्मान्तर्हृदयः' इति तद्वदेव दहरविद्यायामपि 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इति। उपकोशलविद्यायान्तु अक्ष्यायतनत्वं 'य एषोऽक्षिणि पुरुषो दृश्यते' इति। एवं तत्र तत्र तत्तदाध्यात्मिकमायतनमेतासु विद्यासु प्रतीयते, आधिदैविक्यस्त्वेता विभूतयः सम्भृतिद्युव्याप्तिप्रभृतयः, तासां कुत एतासु प्राप्तिः। नन्वेतास्वप्याधिदैविक्यो विभूतयः श्रूयन्ते 'ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य एष उ एव भामनीरेष हि सर्वेषु भूतेषु भाति यावान् वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्येवमाद्याः। सन्ति चान्या आयतनविशेषहीना अपि ब्रह्मविद्याः षोडशकलाद्याः, सत्यमेवैतत् तथाप्यत्र विद्यते विशेषः सम्भृत्याद्यनुपसंहारहेतुः,

---

नर्हत्वमिति वाक्यशेषस्था गुणाः प्रभवतिपदग्राह्याः। खिलेष्विति विधिनिषेधशून्यवाक्येष्वित्यर्थः। ब्रह्मसम्बन्धाद्विद्याभेदभानाच्च संशयमाह। तास्विति। अनारभ्याधीतब्रह्मविभूतीनां ब्रह्मसम्बन्धेन सर्वब्रह्मविद्यासु प्रत्यभिज्ञानादुपसंहार इति पूर्वपक्षः। सिद्धान्तमाह। सम्भृतीति। सम्भृतिश्च द्युव्याप्तिश्च सम्भृतिद्युव्याप्ति तदपि सर्वत्र नोपसंहर्तव्यमुपनिषदोरिव व्यवस्थापकविशेषयोगादिति सूत्रयोजना। आध्यात्मिकायतनविशेषयुक्तविद्यास्वाधिदैविकविभूतीनां प्रत्यभिज्ञाने हेत्वभावात् न प्राप्तिरित्युक्तो हेतुं शङ्कते। नन्वेतास्विति। आधिदैविकत्वसाम्यादाध्यात्मिकायतनहीनत्वसाम्याद्वा तत्तद्विद्यासु सम्भृत्यादीनां प्राप्तिरिति शङ्कार्थः। उक्तहेतुद्वयं न गुणप्रापकमधिदैविकविद्यानां शाण्डिल्यदहरादीनां आयतनहीनविद्यानाञ्च मिथो गुणसाम्येऽप्युपसंहारात्, तस्मात् कतिपयसमानगुणविशिष्टोपास्यरूपैक्यं विद्यैक्य-

समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्रकृष्टदेशगुणा उपसंह्रियेरन्निति युक्तं, सम्भृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च गुणाः परस्परव्यावृत्तस्वरूपत्वात् न प्रदेशान्तरवर्त्तिविद्याप्रत्युपस्थापनक्षमाः। न च ब्रह्मसम्बन्धमात्रेण प्रदेशान्तरवर्त्तिविद्याप्रत्युपस्थापनमुच्यते, विद्याभेदेऽपि तदुपपत्तेः, एकमपि ब्रह्म विभूतिभेदैरनेकैरनेकधोपास्यत इति स्थितिः, परोवरीयस्त्वादिवद्भेददर्शनात्। तस्मात् वीर्यसम्भृत्यादीनां शाण्डिल्यविद्यादिष्वनुपसंहार इति॥

## पुरुषविद्यायामिव चेतरेषामनाम्नानात्॥ २४॥

अस्ति ताण्डिनां पैङ्गिनाञ्च रहस्यब्राह्मणे पुरुषविद्या, तत्र पुरुषो यज्ञः कल्पितः, तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितं, अशिशिषादीनि च दीक्षादिभावेन कल्पितानि, अन्ये

---

मावद्द्रुग्यप्राप्तिहेतुस्तदभावात् न प्राप्तिरिति परिहरति। सत्यमित्यादिना। स्थानविशिष्टभेदात् नामोर्ध्वस्थावत् सम्भृत्यादिगुणविशिष्टस्य ब्रह्मणः शाण्डिल्यादिविद्योक्तगुणविशिष्टब्रह्मणश्च मिथो भेदेन रूपभेदात् सम्भृत्यादीनां नोपसंहार इत्युक्तन्यायातिदेशत्वादस्य न संगत्याद्यपेक्षा यथैकस्मिन्नुद्गीथे परोवरीयस्त्वादिगुणोपास्तेर्हिरण्यश्मश्रुत्वाद्युपास्तिर्भिद्यते तथैकस्मिन्नपि ब्रह्मणि विद्याभेदोपपत्तेः ब्रह्मप्रत्यभिज्ञा न गुणप्राप्तिकेत्याह। परोवरीयस्त्वादिवदिति। तस्मात् सम्भृत्यादिगुणविशिष्टविद्यान्तरविधिरिति सिद्धं॥

पुरुषविद्यायां छान्दोग्यस्थां विद्यामाह। अस्तीति। 'पुरुषो वा यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत्प्रातःसवनमथ यानि चतुश्चत्वारिं-

च धर्मास्तत्र समधिगताश्चाशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कञ्चित् पुरुषयज्ञं कल्पयन्ति 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्येतेनानुवाकेन। तत्र संशयः किमितरत्रोक्ताः पुरुषयज्ञस्य धर्मास्ते तैत्तिरीयकेषूपसंहर्तव्याः किं वा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषादुपसंहारप्राप्तावाचक्ष्महे नोपसंहर्तव्या इति, कस्मात् तद्रूपप्रत्यभिज्ञानाभावात्। तदाहाचार्यः पुरुषविद्यायामिवेति। यथैकेषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामाम्नानं नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति, तेषां हीतरविलक्षणमेव यज्ञसम्पादनं दृश्यते, पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपशूत्विगाद्यनुक्रमणात्। यदपि सवनसम्पादनं तदपीतरविलक्षणमेव 'यत्प्रातर्मध्यन्दिनञ्च तानि सवनानि' इति। यदपि किञ्चिन्मरणावभृथत्वादिसामान्यं तदप्यल्पीयस्त्वाद्भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापनक्षमं। न च तैत्तिरीयके पुरुषस्य

---

शद्वर्षाणि तन्माध्यन्दिनं सवनमथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयं सवनम्' इति यज्ञसाम्यार्थं सवनत्रयं कल्पितं,'स यदशिशिषति यत्पिपासति यत् न रमते ता दीक्षा अथ यदश्नाति यत्पिबति यद्रमते ता उपसदः अथ यद्धसति यज्जक्षति यन्मैथुनं चरति तानि स्तुतशस्त्राणि अथ यत्तपोदानादि सा दक्षिणा मरणमेवावभृथः वस्वादिरूपा मे प्राणा इदं सवनत्रयं यावदायुरनुसन्तनुते' इत्याशीः, 'अक्षितमस्यच्युतमसि प्राणसंशितमसि' इति मन्त्रत्रयप्रयोगः। षोडशाधिकशतवर्षजीवित्वं फलमिति दर्शितं। संशयार्थं शाखान्तरीयपुरुषविद्यामाह। तैत्तिरीयका इति। अत्र विदुषो यज्ञस्येति षष्ठ्याः समानाधिकरण-

यज्ञत्वं श्रूयते विदुषो यज्ञस्येति हि न चैते समानाधिकरणे षष्ठ्यौ विद्वानेव यो यज्ञस्तस्येति। न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति व्यधिकरणे त्वेते षष्ठ्यौ विदुषो यो यज्ञस्तस्येति। भवति हि पुरुषस्य मुख्यो यज्ञसम्बन्धः, सत्याञ्च गतौ मुख्य एवार्थ आश्रयितव्यो न भाक्तः। आत्मा यजमान इति च यजमानत्वं पुरुषस्य निर्ब्रुवन् वैयधिकरण्येनैवास्य यज्ञसम्बन्धं दर्शयति। अपि च तस्यैवंविदुष इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावमात्मादीनाञ्च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात्। अपि च ससंन्यासामात्मविद्यां पुरस्तादुपदिश्यानन्तरं तस्यैवंविदुष इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायो न स्वतन्त्र इति प्रतीमः। तथा चैकमेव फलं उभयोरप्यनुवाक-

---

वैयधिकरण्यानिश्चयात् संशयमाह। तत्रेति। उपसंहारानुपसंहारावेव फलं। पूर्वत्रासाधारणगुणप्रत्यभिज्ञानाभावात् सम्भृत्यादौ विद्याभेद उक्तः इह त्वसाधारणावभृथगुणविशिष्टपुरुषयज्ञरूपैक्यप्रत्यभिज्ञानात् विद्यैक्यमिति प्रत्युदाहरणेन प्राप्ते सिद्धान्तयति। नोपसंहर्तव्या इति। 'तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः कामः आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा' इति बहुतरधर्मवैलक्षण्यात् न रूपैक्यप्रत्यभिज्ञेत्यर्थः। वेदः कुशमुष्टिः शमयिता दमो दक्षिणेत्यन्वयः। किञ्च छान्दोग्ये त्रिधाविभक्तायुषि सवनत्वकल्पना अत्र तु सायङ्कालादाविति वैरूप्यमाह। यदपीति। यन्मरणं तदवभृथो यदश्नते तदुपसद इति तित्तिरिश्रुतौ साम्यमपि भातीत्यत आह। यदपि किञ्चिदिति। गतास्वयोस्तुष्यात्त्वसाम्यादिदं साम्यं नैक्यप्रयोजकमित्यर्थः। किञ्च छान्दोग्ये

योरुपलभामहे 'ब्रह्मणो महिमानमाप्नोति' इति। इतरेषा-न्त्वनन्यशेषः पुरुषविद्याम्नायः। आयुरभिवृद्धिफलो ह्यसौ 'एष ह षोडशवर्षशतं जीवतीति य एवं वेद' इति समभिव्या-हारात्। तस्माच्छाखान्तराधीतानां पुरुषविद्याधर्माणामाशी-र्मन्त्रादीनामप्राप्तिस्तैत्तिरीयके॥

## वेधाद्यर्थभेदात्॥ २५॥

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः 'सर्वं प्र-विध्य हृदयं प्रविध्य धमनीः *प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृ-क्तः' इत्यादिः। स ताण्डिनां 'देव सवितः प्रसुव यज्ञम्' इत्यादिः।

---

पुरुषयज्ञयोरैक्यं श्रुतं अत्र तु भेद इति वैरूप्यान्तरमाह। न चेति। यद्यपि निषादस्थपतिन्यायेन सामानाधिकरण्यं षष्ठ्यायुक्तं तथाप्य-प्रसिद्धैक्यकल्पनागौरवाद्यज्ञस्यात्मेति भेदोक्तेरेकस्यैव यज्ञत्वयजमा-नत्वविरोधादात्मविदो यो यज्ञः प्रसिद्धस्तस्येति वैयधिकरण्यमेव युक्तं। किञ्च विद्वत्सम्बन्धियज्ञरूपविशेष्यानुवादेन विद्वदङ्गैरङ्गसम्प-द्विधावेकवाक्यता प्रतीयते तस्यां सत्यां विशेष्यस्याङ्गानां च पृथग्वि-धिवादिनस्तव वाक्यभेददोषः स्यादित्यर्थः। किञ्च सत्यादिभ्यो न्यास एवापरे च यदिति संन्यासमुक्त्वा सर्वैः सर्वमिदं जगदित्येवं समात्मानं ज्ञात्वा भूयोऽवभृथमुपयाति विद्वानिति संन्यासाध्यायात्मविद्या पुरस्तात् प्राजापत्यानुवाके उपदिश्यानन्तरानुवाके तस्यैवंविदुष इत्युक्तात्म-विद्यानुवादेन प्रशंसार्थत्वेन तच्छेषतया यज्ञसम्पत्तिः क्रियते फलै-क्यश्रुतेः, छन्दोगानां तु स्वतन्त्रविद्याविधिरित्याह। अपि च ससं-न्यासामिति। चिन्ताफलमाह। तस्मादिति॥

वेधाद्यर्थभेदात्। देवतामभिचारकर्ता प्रार्थयते। सर्वमिति। हे देव-ते मद्रिपोः सर्वमङ्गं प्रविध्य विदारय विशेषतस्य हृदयं भिन्धि धमनीः

---

* प्रवृश्येति वर्ध० का०।

शाट्यायनिनां 'श्वेताश्वो हरितनीलोऽसि' इत्यादिः। कठानां तै-
त्तिरीयकाणां च 'शन्नो मित्रः शं वरुणः' इत्यादिः। वाजसनेयि-
नान्तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते 'देवा ह वै सत्त्रं निषेदुः'
इत्यादिः। कौषीतकिनामप्यग्निष्टोमब्राह्मणं 'ब्रह्म वा अग्नि-
ष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति
य एतदहरुपसंयन्तीति किमिमे सर्वे प्रविध्य' इत्यादयो मन्त्राः
प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन् किं वा नोप-
संह्रियेरन्निति मीमांसामहे। किं तावत् नः प्रतिभाति उप-
संहार एवैषां विद्यास्विति। कुतः, विद्याप्रधानानामुपनिष-
द्ग्रन्थानां समीपे पाठात्। नन्वेषां विद्यार्थतया विधानं नोप-
लभामहे। बाढं, *अनुपलभ्यमाना अपि त्वनुमास्यामहे सन्नि-
धिसामर्थ्यात्, न हि सन्निधेरर्थवत्त्वे सम्भवत्यकस्मादसावना-

शिरः प्रवर्ग्य चोटय शिरश्चाभितो नाथय, एवं त्रिधा विष्टो वि-
श्लिष्टो भवतु मे प्रभुरित्यर्थः। हे देव सवितः यज्ञ तत्पतिञ्च प्रसुव
निर्वर्तयेत्यर्थः। उच्चैःश्रवाः श्वेतोऽश्वो यस्येन्द्रस्य स त्वं हरितद्युतवन्नीलो-
ऽसीत्यर्थः। नोऽस्माकं शं सुखकरो भवत्वित्यर्थः। अग्निष्टोमो ब्रह्मैव
स यस्मिन्नहनि क्रियते तदपि ब्रह्म तस्माद्यत्र तदहःसाध्यं कर्मोपय-
न्त्यनुतिष्ठन्ति ते ब्रह्मणैव साधनेन ब्रह्मोपयन्ति ते च क्रमेणामृतत्वमा-
प्नुवन्तीति योजना। मन्त्रादिषु तत्तदुपनिषद्विद्याशेषत्वे प्रमाणभावा-
भावाभ्यां संशयमाह। किमिति। फलं पूर्ववत्। ननु तेषां शेषत्वे
मानाभावान्नोपसंहार इति प्राप्ते। नन्वेषामिति। मन्त्रादयस्त-
त्तद्विद्याशेषाः फलवद्विद्यासन्निहितत्वात्तैत्तिरीयकगतपुरुषयज्ञवदिति
सिद्धान्तिपक्षे। स-
संमाधत्ते। बाढमिति। तथा च दृष्टान्तसङ्गतिः
न्निधिवैयर्थ्यबाधकमाह। न हीति। अफलमन्त्रादीनां फलवच्छेषत्व-

* अनुपलभमाना इति वर्ध० का०

श्रयितुं युक्तः। ननु नैषां मन्त्राणां विद्याविषयं किञ्चित् सामर्थ्यं पश्यामः, कथं च प्रवर्ग्यादीनि कर्माणि अन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहि इति। नैष दोषः, सामर्थ्यं तावन्मन्त्राणां विद्याविषयमपि किञ्चित् शक्यं कल्पयितुं, हृदयादिसङ्कीर्तनात्। हृदयादीनि हि प्रायेणोपासनेष्वायतनादिभावेनोपदिष्टानि तद्द्वारेण च हृदयं प्रविध्येत्येवंजातीयकानां मन्त्राणां उपपन्नमुपासनाङ्गत्वं। दृष्टश्चोपासनेष्वपि मन्त्रविनियोगः 'भूः प्रपद्येऽमुनामुनामुना' इत्येवमादिः। तथा प्रवर्ग्यादीनां कर्मणामन्यत्रापि विनियुक्तानां सतामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पतिसवस्येत्येवं प्राप्ते ब्रूमः, नैषामुपसंहारो विद्यास्विति। कस्मात्, वेधाद्यर्थभेदात्। हृदयं प्रविध्येत्येवंजातीयकानां हि मन्त्राणां

---

बोधनं सन्निधेरर्थवत्त्वं तत्सम्भवे सत्यकस्मादर्थशून्यत्वेनासौ सन्निधिराश्रयितु नहि युक्त इत्यर्थः। नञ्पाठे त्वकस्माद्धेतुं विनाऽसावर्थानाश्रयितुं नहि युक्त इत्यर्थः। ननु मन्त्राणां विद्यासमवेतार्थप्रकाशनसामर्थ्याभावान्न विद्याशेषत्वमिति शङ्कते। नन्विति। पुरस्तादुपसदां प्रवर्ग्येणाप्रचरन्तीति वाक्येन प्रवर्ग्यस्य क्रतुशेषत्वं श्रुतं, चाग्निष्टोमादेश्च तत्तद्वाक्येन स्वर्गाद्यर्थत्वमतो न विद्यार्थत्वमित्याह। कथं चेति। मन्त्राणां विद्यासमवेतहृदयनाड्यादिप्रकाशकत्वमस्तीत्याह। नैष इति। उपास्तिषु मन्त्रप्रयोगः क्वापि न दृष्ट इत्यत आह। दृष्टश्चेति। पुत्रस्य दीर्घायुष्यार्थं छान्दोग्ये त्रैलोक्यस्य कोशत्वेनोपास्तिरुक्ता तत्र पितुरयं प्रार्थनामन्त्रः। तत्रामुनेति पुत्रस्य त्रिर्नाम गृह्णाति अमुना पुत्रेण सह भूरितीममहं प्रपद्ये न मे पुत्रवियोगः स्यादित्यर्थः। तत्तद्वाक्येनान्यत्र विनियुक्तानामपि कर्मणां सन्निधिना विद्यासु विनियोगो न विरुध्यत

येऽर्थाः हृदयवेधादयो भिन्नाः, अनभिसम्बद्धास्त उपनिषदुदिताभिर्विद्याभिः न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति। ननु हृदयस्योपासनेऽप्युपयोगात् तद्द्वारक उपासनसम्बन्ध उपन्यस्तः। नेत्युच्यते, हृदयनामसङ्कीर्तनस्यैवमुपयोगः कथञ्चिदुत्प्रेक्ष्येत, न च हृदयमात्रमत्र मन्त्रार्थः। हृदयं प्रविध्य धमनीः *प्रवृज्येत्येवंजातीयको हि न सकलो मन्त्रार्थो विद्याभिरभिसम्बध्यते आभिचारिकविषयो ह्येषोऽर्थः। तस्मादाभिचारिकेण कर्मणा सर्वं प्रविध्येत्यस्य मन्त्रस्याभिसम्बन्धः। तथा 'देव सवितः प्रसुव यज्ञं'

---

इत्यत्र दृष्टान्तमाह। वाजपेय इति। ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेतेति वाक्येन ब्रह्मवर्चसफले विनियुक्तस्यापि बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयप्रकरणस्थवाक्येन वाजपेयोत्तराङ्गतया विनियोगवदविरोध इत्यर्थः। यद्येकेन वाक्येन प्रकरणान्तरस्थबृहस्पतिसवस्य प्रत्यभिज्ञानमङ्गत्वविधानञ्च कर्तुमयुक्तं वाक्यभेदप्रसङ्गादतो मासाग्निहोत्रवत् कर्मान्तरमेव बृहस्पतिसवाख्यमङ्गतया विधीयत इति विनियुक्तस्य विनियोग इति भट्टगुरुतन्त्रद्वयसिद्धं, तथापि यथा नित्याग्निहोत्रस्याश्वमेधप्रकरणे मासमेतां रात्रिमग्निहोत्रं जुहोतीति नाम्ना प्रत्यभिज्ञा, यथा वा दर्शपूर्णमासविकृतीष्टावाज्यभागौ यजतीत्येकस्मिन् वाक्ये प्रकृतिस्थाज्यभागयोः पदेन प्रत्यभिज्ञाने वाक्येन विधानं तथात्रापि बृहस्पतिसवपदेन प्रत्यभिज्ञानं वाक्येनाङ्गताविधानं किं न स्यात्, न च साध्यभावार्थविधायकाख्यातपरतन्त्रं नाम पदं न सिद्धकर्मप्रत्यभिज्ञापकमिति वाच्यं, सिद्धस्याप्यङ्गतया पुनः साध्यत्वसम्भवेऽन्यथासिद्धाख्यातस्यैव प्रसिद्धार्थकानामपारतन्त्र्योपपत्तेः। न चैवं सति कुण्डपायिसत्रेऽप्यङ्गत्वेन नित्याग्निहोत्रस्यैव विधिः स्यादिति वाच्यं, इष्टत्वात्। न च पूर्वतन्त्रविरोधः उत्तरतन्त्रस्य बलीयस्त्वात्। पूर्वतन्त्रस्य स्वतन्त्रपरतन्त्रभावना-

---

* प्रहृत्येति वर्ध० पा०।

इत्यस्य यज्ञप्रसवलिङ्गत्वात् यज्ञेन कर्मणाभिसम्बन्धः, तद्विशेषसम्बन्धस्तु प्रमाणान्तरादनुसर्तव्यः । एवमन्येषामपि मन्त्राणां केषाञ्चिल्लिङ्गेन केषाञ्चिद्वचनेन केषाञ्चित् प्रमाणान्तरेणेत्येवमर्थान्तरेषु विनियुक्तानां रहस्यपठितानामपि सतां न सन्निधिमात्रेण विद्याशेषत्वोपपत्तिः, दुर्बलो हि सन्निधिः

---

भेदे तात्पर्याच्च, तस्मादेकस्यैव वृहस्पतिनामकस्य धात्वर्थस्य ब्रह्मवर्चसे विनियुक्तस्यापि वाजपेयाङ्गतया विनियोग इति भगवत्या-दतात्पर्यमस्ति । विनियुक्तस्य विनियोगे सर्वसम्मतमुदाहरणं खादित्वादिकं तस्य क्रतौ विनियुक्तस्य वीर्यादिफलेऽपि विनियोगात् । तथा मन्त्रकर्मणामन्यत्र विनियुक्तानां विद्याशेषत्वमिति प्राप्ते सिद्धान्तयति । नैषामित्यादिना । विद्यासु हृदयादिसम्बन्धेऽपि वेधाद्यर्थानामसम्बन्धोऽस्त्यमन्त्रार्थानामभिचारादिसम्बन्धलिङ्गेन सन्निधेर्बलीयसा अभिचारादावेव मन्त्राणां विनियोग इत्यर्थः । 'देव सवितः प्रसव' इति 'प्रदक्षिणतोऽग्निं पर्युक्षेदिति वाक्यादग्निपर्युक्षणे 'सावित्रं जुहोति कर्मणः पुरस्तात् सवने जुहोति' इति वाक्याद्वाजपेये कर्मविशेषसम्बन्धोऽस्य मन्त्रस्येत्याह । तद्विशेषेति । उक्तन्यायं श्वेताश्व इत्यादिष्वतिदिशति । एवमन्येषामिति । प्रमाणान्तरं प्रकरणादिकं । ननु लिङ्गादिभिरन्यत्र विनियुक्तानामपि सन्निधिना विद्यास्वपि विनियोगस्त्वविरोधादित्युक्तं तत्राह । दुर्बलो हीति । समवाये समानविषयत्वेन द्वयोर्विरोधे, परस्य दौर्बल्य, कुतः अर्थविप्रकर्षात्, स्वार्थबोधने परस्य पूर्वव्यवधानेन प्रवृत्तेरित्यर्थः । अयमाशयः एकत्र विनियुक्तस्य निराकाङ्क्षत्वादन्यत्र विनियोगाविरुद्ध एव परन्तु विनियोजकप्रमाणयोः समबलत्वेऽन्यतरविनियोगत्वायोगादगत्याकाङ्क्षोत्पादनेन विनियुक्तविनियोगः स्वीक्रियते 'यथा खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्यात्' इति वाक्याभ्यां क्रतौ विनियुक्तस्य खादिरत्वस्य वीर्यफले विनियोगः । यत्र प्रमाणयोरतुल्यत्वं तत्र न स्वीक्रियते प्रबलप्रमाणेन दुर्बलविनियोगबाधात् । यथा 'कदाचनस्तरीरसि नेन्द्रस्य अस्ति' इत्यस्याः

श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यत्र। तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः, न ह्येषां विद्यादिभिः सहैककार्य्यं किञ्चिदस्ति। वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्येपि चैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा

---

ऋचः ऐन्द्रगार्हपत्यमुपतिष्ठत इति तृतीयाविभक्तिः श्रुत्यान्यनिरपेक्षया गार्हपत्योपस्थानशेषत्वबोधिका ऐन्द्रप्रकाशनसामर्थ्यरूपलिङ्गप्राप्तमिन्द्रशेषत्वं बाध्यते लिङ्गादिह न साक्षाच्छेषत्वं बोधयति किन्त्विन्द्रः प्रकाशमात्रं करोति तेन च लिङ्गेनानेन मन्त्रेण इन्द्र उपस्थापयितव्य इति श्रुतिः कल्पनीया, तथा शेषत्वविरोध इति श्रुतिव्यवधानेन शेषत्वबोधकं लिङ्गं झटिति स्वार्थबोधकश्रुत्या बाध्यं, तथा लिङ्गेन वाक्यं बाध्यं यथा स्योऽनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति मन्त्रभागयोः प्रत्येकं सदनकरणे पुरोडाशासादने च तत्प्रकाशनसामर्थ्यलिङ्गेन श्रुतिद्वारा विनियोगे सति प्रतीतमेकवाक्यत्वं बाध्यते, तस्य ह्येकस्येऽपि मन्त्रे सदनकरणप्रकाशनसामर्थ्यं पुरोडाशासादनप्रकाशनसामर्थ्यं च लिङ्गं कल्पयित्वा श्रुतिकल्पनयोभयत्र कृत्स्नमन्त्रविनियोगबोधने द्वाभ्यां लिङ्गश्रुतिभ्यां व्यवधानेन श्रुत्येकव्यवहितलिङ्गात् दुर्बलत्वात्। न च सामर्थ्यं न कल्प्यमिति वाच्यं, असमर्थस्य विनियोगायोगात्, अत एव गङ्गापदस्य तीरबोधविनियोगे लक्षणारूपं सामर्थ्यं कल्प्यते तथा वाक्येन प्रकरणं बाध्यं यथा साङ्गप्रकरणाम्नातद्वादशोपसदा द्वादशाहीनस्येति वाक्येनाहीनाङ्गत्वबोधकेन प्रकरणप्राप्तमच्याङ्गत्वबाधादुत्कर्षः प्रधानस्याङ्गकाङ्क्षारूपं प्रकरणं तस्याङ्गप्रधानवाक्यैकवाक्यतासामर्थ्यश्रुतिभिः कल्प्यमानाभिः स्वार्थविनियोगप्रमितौ व्यवधानेनाङ्गसामर्थ्यश्रुत्योर्द्वयोः कल्पकवाक्याद्दुर्बलत्वात्।

प्रमाणेनान्यत्र विनियुक्तो न दुर्बलप्रमाणेनान्यत्रापि विनियोगमर्हति, अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यात्, न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता सम्भवति, बलवदबलवत्त्वविशेषादेव। तस्मादेवंजातीयकानां मन्त्राणां कर्मणां वा न सन्निधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यं, अरण्यानुवचनत्वादिधर्मसामान्यात् तु सन्निधिपाठ इति सन्तोष्टव्यं ॥

---

तथा प्रकरणेन सन्निधिर्बाध्य । यथा राजसूयप्रकरणे तदन्तर्गताभिषेचनीयाख्यसोमयागविशेषसन्निधिपाठे प्राप्तं शुनःशेपाख्यानादेरभिषेचनीयशेषत्वं बाधित्वा कृत्स्नराजसूयशेषत्वमापादितं सन्निधेः प्रकरणादिकल्पकत्वेन सूक्ष्मप्रकरणात् दुर्बलत्वात् तथा सन्निधिना समाख्या बाध्यते । तथा हि पौरोडाशिकसमाख्याके काण्डे आग्नेयपुरोडाशादिकर्मणां क्रमेण मन्त्रा आम्नातास्तत्र दधिपयोरूपसान्नाय्यसन्निधौ 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्र आम्नातस्तत्र समाख्याबलेनास्य मन्त्रस्य पुरोडाशपात्रशुन्धनशेषत्वं प्राप्तं सन्निधिना बाधित्वा सान्नाय्यपात्रशुन्धनशेषत्वमापाद्यते । पुरोडाशसम्बन्धिकाण्डं पौरोडाशिकमिति पौरुषसमाख्यायाः काण्डान्तर्गतमन्त्रस्य पुरोडाशसम्बन्धसामान्यबोधकत्वेऽपि शेषशेषिभावरूपविनियोगबोधकत्वे सन्निध्याद्यपेक्षत्वेन दुर्बलत्वादिति एवं विरोधे सति श्रुतिर्बाधिकैव समाख्या बाध्यैव मध्यस्थानान्तु चतुर्णां पूर्वबाध्यत्वं परबाधकत्वं परबाध्यत्वञ्चेति श्रुतिलिङ्गसूत्रार्थः । तस्माल्लिङ्गादिनान्यत्र विनियुक्तानां मन्त्राणां दुर्बलसन्निधिना न विद्यासु विनियोग इति सिद्धं । तथा कर्मणामिति कर्मणा मिथोपकारत्वे ताभिः सहैकफलत्वे मानं किञ्चित् नास्ति इत्यर्थः । अपि चेत्युक्तार्थं । ननु तर्हि वेदादिवाक्यानामुपनिषद्भिः सह पाठस्य का गतिस्तत्राह । अरण्येति । तस्माद्वेधादिमन्त्रकर्मणां विद्यास्वनुपकारं इति सिद्धं ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तं ॥ २६ ॥

अस्ति ताण्डिनां श्रुतिः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् तु प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इति। तथाथर्वणिकानां 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति। तथा शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। तथैव कौषीतकिनः 'तत् सुकृतदुष्कृते विधुनुते तस्य प्रियाः ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' इति। तदिह क्वचित् सुकृतदुष्कृतयोर्हानं श्रूयते क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं क्वचित्तूभयमपि हानमुपायनञ्च। तद्यत्रोभयं श्रूयते तत्र तावत् न किञ्चिद्वक्तव्यमस्ति यत्राप्युपायनमेव श्रूयते न हानं तत्रार्थादेव हानं सन्निपतत्यन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात् तद्धानस्य।

---

हानौ तूक्तं। यथाऽश्वो रजोयुक्तानि जीर्णरोमाणि त्यक्त्वा निर्मलो भवति तथाहमपि पापं विधूय कृतात्मा निर्मलीकृतचित्तः सन् यथा राहुग्रस्तश्चन्द्रो राहुमुखात् प्रमुच्य स्वच्छो भवति तथा शरीरं धूत्वा त्यक्त्वा देहाभिमानान्मुक्तः सन्नकृतं कूटस्थं ब्रह्मात्मकं लोकं अभि प्रत्यक्त्वेन सम्भवामीत्यर्थः। यथा नद्यः समुद्रं प्राप्य नामरूपे त्यजन्ति तथा विद्वानित्यर्थः। निरञ्जनः शुद्धः, साम्यं ब्रह्म, तस्य एतस्य विदुषः, दायं धनं, तत्तेन विद्याबलेन सुकृतदुष्कृते त्यजतीत्यर्थः। उपायनं ग्रहणं तस्य त्यागपूर्वकत्वात्, त्यक्तयोर्ग्रहणायोगात्त्यागोऽर्थादायाति। यत्र तु

यत्र तु हानमेव श्रूयते न तूपायनं तत्रोपायनं सन्निपतेद्वा न वेति विचिकित्सायामश्रवणात् असन्निपातः विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य। अपि चात्मकर्तृकं सुकृतदुष्कृतयोर्हानं परकर्तृकं तूपायनं तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत, तस्मादसन्निपातो हानावुपायनस्येत्यस्यां प्राप्तौ पठति। हानाविति। हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं सन्निपतितुमर्हति तच्छेषत्वात्, हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये। तस्मादन्यत्र केवलहानशब्दश्रवणेऽप्युपायनानुवृत्तिः। यदुक्तमश्रवणात् विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासन्निपात इति। तदुच्यते, भवेदेषा व्यवस्थोक्तिर्यद्यनुष्ठेयं किञ्चिदन्यत्र श्रुतमन्यत्र निनीष्येत, न त्विह हानमुपादनं वाऽनुष्ठेयत्वेन सङ्कीर्त्यते, विद्यास्तुत्यर्थं

---

त्याग एव श्रुतः। तत्र हानोपायनयोः सहभावस्यावश्यकत्वानावश्यकत्वाभ्यां संशयमाह। यत्र त्विति। अत्र पूर्वपक्षे श्रुतिप्रकर्षासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलं। यद्यपि आथर्वणश्रुत्योर्निर्गुणविद्यार्थयोः कर्महानमेव श्रुतं नोपायनं तथापि कौषीतकिश्रुतौ पर्य्यङ्कस्थसगुणब्रह्मविद्यायामुपायनं श्रुतमत्रापसर्त्तव्यमित्याशङ्क्य विद्याभेदान्नोपसंहार इत्याह। विद्यान्तरेति। किञ्च यथा मन्त्रकर्मणामनावश्यकत्वाद्विद्यास्वनुपसंहार उक्तः तथा परैरुपादानं विनापि हानसम्भवेनोपादानस्यावश्यकत्वान्न प्राप्तिरिति दृष्टान्तसङ्गत्या प्राप्ते सिद्धान्तयति। हानौ त्वित्यादिना। उपायनशब्दस्य शेषत्वात् हानशब्देनापेक्षितत्वादिति सूत्रार्थः। अश्वरोमदृष्टान्तेन विधूतयोः पुण्यपापयोः परत्रावस्थानसापेक्षत्वात् परैरुपादानं वाच्यमिति भावः। विद्याभेदे गुणानुपसंहार इति व्यवस्थाऽनुष्ठानविषया न स्तुतिविषयेत्याह। तदुच्यत इति, मन्यते

त्वनयोः सङ्कीर्तनं इत्थं महाभागा विद्या यत्तत्सामर्थ्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते चास्य सुहृद्द्विषत्सु निविशेते इति। स्तुत्यर्थे चास्मिन् सङ्कीर्तने हानानन्तरभावितत्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय। प्रसिद्धा चार्थवादान्तरापेक्षा अर्थवादान्तरप्रवृत्तिः 'एकविंशो वा इतोऽसावादित्यः' इत्येवमादिषु। कथं ह्येकविंशताऽऽदित्यस्याभिधीयेत अनपेक्ष्यमाणेऽर्थवादान्तरे 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्येतस्मिन्। तथा 'त्रिष्टुभौ भवतः

---

सूत्रकार इत्यर्थः। ननु श्रुतहानार्थवादेनापि स्तुतिसिद्धान्तौ किमर्थमुपायनवाद आनीयते तत्राह। स्तुतिप्रकर्षलाभायेति। नन्वर्थवादस्य विधिना सम्बन्ध प्रसिद्धो नार्थवादान्तरेणेत्यत आह। प्रसिद्धा चेति। इतो भूलोकादित्यर्थः। हेमन्तशिशिरयोरैक्यात् पञ्चर्त्तव। यज्ञस्य पुरुषरूपकल्पनया सेन्द्रियत्वाय त्रिष्टुभौ भवत इत्युक्त बह्वृचब्राह्मणे, तत्र त्रिष्टुभश्छन्दोमात्रत्वात् कथमिन्द्रियत्वकल्पनेत्याकाङ्क्षाया यजुर्वाक्य सवाद्यत इत्यर्थ। नन्वमूर्तयो पुण्यपापयोः उपादानस्यासम्भवादनुपसंहार इत्यत आह। विद्य स्तुत्यर्थाचेति। विद्वन्निष्ठयोरेव तयो फलं परे प्राप्नुवन्ति विद्यासामर्थ्यादित्युपयन्तिपदेनोच्यत इत्यर्थ। नन्वन्यनिष्ठकर्मणोरन्यत्र फलसञ्चार' कथ। ननु वचनबलादिति चेत्, न, फलमुपयन्तीति श्रुते। न च यथा पुत्त्रकृतश्राद्धस्य पितृषु फलं तथात्रेति वाच्य, यस्य फलमुद्दिश्य यत कर्म विहित तस्य न फलमिति न्यायेन पितृणा ह्यामुद्देशेन कृतकर्मणो व्यधिकरणफलत्वेऽपि विदुष कर्मकालेऽनुद्दिष्टव्यधिकरणफलायोगात्। किञ्च विदुषो देहपाते कर्मणोऽसत्त्वात् यावज्जीव विद्वत्सेवकस्य तद्द्वेषिणो वा फलं स्यादित्यत आह। नातीवाभिनिवेष्टव्यमिति। विद्वत्सेवाद्वेषाभ्या विद्वन्निष्ठपुण्यपापे तुल्ये

मेन्द्रियत्वाय' इत्येवमादिषु वादेष्वपि 'इन्द्रियं वै त्रिष्टुभम्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते। विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदीये सुकृतदुष्कृते अन्यैरभ्युपेयेते इति नातीवाभिनिवेष्टव्यं। उपायनशब्दशेषत्वादिति च शब्दशब्दं समुच्चारयन् स्तुत्यर्थमेव हानावुपायनानुवृत्तिं सूचयति, गुणोपसंहारविवक्षायां ह्युपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्। तस्मात् गुणोपसंहारविचारप्रसङ्गेन स्तुत्युपसंहारप्रकारदर्शनार्थमिदं सूत्रं। कुशाच्छन्दःस्तुत्युपगानवदित्युपमोपादानं। तद्यथा भाल्लविनां 'कुशा वानस्पत्याः स्थ ता मा पात' इत्यस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वश्रवणे शाट्यायनिनां 'औदु-

---

पुष्पयामे सेवकद्वेषिणोर्जायेते जातयोः फलतः स्वीकारः। उपायनमिति परिहारस्य सुलभत्वादनपेक्ष इत्यर्थः। उपायनादेः स्तुतित्वे लिङ्गमाह। उपायनेति। उपायनविवक्षाया उपायनस्यैवोपसंहारं सूत्रकारो ब्रूयादतः शब्दस्य वदन् स्तुतिं सूचयति इत्यर्थः। विद्याविचारात्मकपादे स्तुतिविचारस्य का सङ्गतिरित्यत आह। तस्मादिति। शाखान्तरस्थो विशेषः शाखान्तरेऽपि ग्राह्य इत्यत्र दृष्टान्तमाह। कुशेति। कुशा उद्गातृणा स्तोत्रगणनार्थाः शलाका दारुमय्यः, भो कुशा यूयं वानस्पत्याः वनस्पतिमहावृक्षो वनस्पतिः तत्प्रभावा स्थ ता इत्थम्भूता यूयं मा पात मा रक्षतेति यजमानप्रार्थना। अत्र ता इति स्त्रीलिङ्गनिर्देशादौडुम्बर्य इति भाष्याच्च शलाकासु कुशाशब्दस्य स्त्रीत्वं मन्तव्यं दर्भविषयस्य न स्त्रीत्वं, अस्त्री कुशमित्यनुशासनात्। छन्दोदृष्टान्तं व्याचष्टे। यथा चेति। न चाक्षराणि छन्दांसि चासुराण्यन्यानि दैवानि तेषां क्वचिच्छन्दोभिस्तुवत इत्यत्राविशेषप्राप्तौ पैङ्गिवाक्याद्विशेषमाह इत्यर्थः। स्तुतिं विवृणोति। यथेति। अतिरात्रे षोडशिनो ग्रहस्याङ्गभूतं स्तोत्रं कदेति छन्दोगादीनामाकाङ्क्षायामुदयसमयाविष्टे सूर्ये षोडशिनः स्तोत्रमि-

स्वराः कुशाः' इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते। यथा च क्वचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्याम्नायात् प्रतीयते। यथा च षोडशिस्तोत्रे केषाञ्चित् कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चाभिश्रुतेः कालविशेषप्रतीतिः। यथैव चाविशेषेणोपगानं केचित् समामनन्ति विशेषेण भाल्लविनो यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः एवं हानावप्युपायनान्वय इत्यर्थः। श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् स चान्याय्यः सत्यां गतौ। तदुक्तं द्वादशलक्षण्यां 'अपि

---

त्यार्चश्रुतेः कालविशेषग्रह इत्यर्थः। ऋचोऽधीयत इत्यार्चाः। उपगानं विभजते। यथेति। 'ऋत्विज उपगायन्ति' इत्यविशेषश्रुतेः 'नाध्वर्युरुपगायति' इति श्रुत्यन्तरादध्वर्युभिन्ना ऋत्विज उपगायन्ति इत्यर्थः। ननु कुशादिवाक्यानामपि किमिति विशेषश्रुत्यन्तरैकवाक्यताऽभ्युपगम्यते तत्राह। श्रुत्यन्तरकृतं हीति। सामान्यविशेषयोरेकवाक्यत्वोपाया गतौ सत्यां वाक्यभेदं कृत्वा नाध्वर्युरिति निषेधादविशेषश्रुतेश्चाध्वर्युरुपनयति चेत्येवं सर्वत्र विकल्पो न युक्तः व्रीहियवस्वगत्या विकल्पो ह्याश्रित इत्यर्थः। विकल्पस्यान्याय्यत्वमष्टदोषदुष्टत्वात्। तथा हि यदि व्रीहिवाक्यमाश्रीयते तदा यववाक्यस्येष्टप्रामाण्यत्यागः, अनिष्टप्रामाण्यस्वीकारः, कदाचित् यववाक्याश्रयणेऽस्तप्रामाण्यस्वीकारः, स्वीकृतप्रामाण्यत्यागश्चेत्येकस्मिन् यववाक्ये चत्वारो दोषा भवन्ति, एवं व्रीहिवाक्येऽपि चत्वारो दोषाः इति, एवं दुष्टविकल्पपरिहाराय भिन्नशाखाश्रुत्योरपि एकवाक्यता जैमिनिसम्मतेत्याह। तदुक्तमिति। ज्योतिष्टोमप्रकरणे 'दीक्षितो न जुहोति' इति श्रुतं 'यावज्जीवमग्निहोत्रं जुहुयात्' इति चान्यत्र श्रुतं, तत्र यदि न दीक्षितवाक्यं होमप्रतिषेधकं स्यात् तदा कामर्थत्वात् निषेधोऽन-

तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' इति। अथवैतास्वेव विधूननश्रुतिष्वेतेनैव सूत्रेणैतच्चिन्तयितव्यं किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते किं वाऽर्थान्तरमिति। तत्रैवं प्रापयितव्यं न हानं विधूननमभिधीयते, धूञ् कम्पन इति स्मरणात्, दोधूयन्ते ध्वजाग्राणीति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्। तस्माच्चालनं विधूननमभिधीयते। चालनन्तु सुकृतदुष्कृतयोः कञ्चित्कालं फलप्रतिबन्धनादित्येवं प्रापय्य प्रतिवक्तव्यं, हा-

---

ष्ठेयः, यावज्जीवविधिना होमो वानुष्ठेय इति विकल्पः स्यात्, स चान्याय्यः। अपि तु यावज्जीववाक्यं प्रति न दीक्षितवाक्यस्य शेषत्वान्नकार इतरपर्युदासार्थकः स्याद्दीक्षितान्यलक्षकः स्यात् न होमप्रतिषेधकः, तस्माददीक्षितो यावज्जीवं जुहुयादित्येकवाक्यतेति न दीक्षिताधिकरणसिद्धान्तसूत्रार्थः। अत्र भगवत्पादैः सूत्रमेव पठितं, मिश्रैस्तु पर्युदासाधिकरणसिद्धान्तसूत्रं 'अपि तु वाक्यशेषस्यान्याय्यत्वाद्विकल्पविधानमेकदेशः स्यात्' इति स्थितं। अत्रार्थतः पठितमित्युक्तं तच्चिन्त्य, सूत्रार्थस्तु यज्ञमात्रे ये यजामहे इति प्रयोक्तव्यमिति श्रुत, नानूयाजेषु ये यजामहे इत्यपि श्रुतं, तत्र नकारस्य निषेधकत्वेऽप्यतिरात्रे षोडशिग्रहणाग्रहणयोरिवानूयाजेषु यज्ञत्वाविशेषात् प्रयोक्तव्यं निषेधात् न प्रयोक्तव्यमिति विकल्पः स्यात्, तस्मात् न्याय्यत्वात् ये यजामहेविधेरेव नानूयाजवाक्यमेकदेशः स्यात्, पर्युदासवृत्त्या विधिवाक्यशेषः स्यादिति यावत्। तथा चानूयाजभिन्नेषु यागेषु ये यजामहे इति प्रयोक्तव्यमित्येकवाक्यतेति वर्णकान्तरमाह। अथ वा इति। पूर्वत्र विधूननकर्महानिरिति सिद्धवत्कृत्य उपायनोपसंहार उक्तः अत्र सैव साध्यत इति भेदः। उभयत्र लक्षणासाम्यात् सङ्गतिमाह। किमिति। विधूननस्य हि फलदयमश्वरोमादिषु दृष्टं पूर्वस्वभावात् च्युतिरन्यत्र

नावेवेष विधूननशब्दोऽनुवर्तितुमर्हति उपायनशब्दशेषत्वात्, न हि परपरिग्रहभूतयोरप्रहीणयोः सुकृतदुष्कृतयोः परैरुपायनं सम्भवति। यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं सम्भाव्यते तथापि तत्सङ्कीर्तनात् तावत् तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते। क्वचिदपि चेदं विधूननसन्निधावुपायनं श्रूयमाणं कुशाच्छन्दः-स्तुत्युपगानवद्विधूननश्रुत्या सर्वत्राप्यपेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं सम्पद्यते। न च चालनं ध्वजाग्रवत् सुकृतदुष्कृत-

---

संक्रान्तिश्चेति तत्र संक्रान्तिरूपहानिर्लक्षणीया किञ्चाच्युतिरिति संशयार्थः। तत्र विधूननशब्दस्य कम्पन मुख्यार्थं इति तावत्सर्वसम्मतं। यद्यामूर्तयोः पुण्यपापयोर्न सम्भवति अतस्तयोर्य· स्वभावः फलदातृत्वशक्तिस्तत्चालनं विद्यया प्रतिबन्धात् च्युति· सा लक्षणीया न हानिरमूर्तयोरन्यत्र सङ्क्रान्त्ययोगादन्यसापेक्षत्वाच्चेति पूर्वपक्षार्थं। सिद्धान्तयति। हानावेवेति। यदि च्युतिमात्रं लक्ष्य तदोपयन्ति इत्यनन्वितं स्यात्। न च यत्र धुनोतेरुपायनशब्दसान्निध्यं तत्र हानिर्लक्ष्यते न केवलधुनोतेर्हानिश्चान्यत्र विद्युष· सेवकादौ तुल्यकर्मसङ्क्रान्तिरिति नासम्भव इति वाच्यं, केवलधुनोतेरपि मुख्यार्थासम्भवेनान्यत्र लक्ष्यतया बुद्धिस्थहानिलक्षणाया एव युक्तत्वादिति भाव। उपायनस्यामुख्यत्वान्न कापि हानिर्लक्षणावीजत्वमिति शङ्कित्वा पुण्यपापयोः फलतः स्वीकारात्मकमुपायनं हानिं विनानुपपन्नं सल्लक्षणानिर्णायकमिति परिहरति। यद्यपीत्यादिना। यथान्यत्र श्रुतं औदुम्बरत्वादिकं कुशादिनिर्णायकं तथेदमुपायनं विधूननस्य हानत्वनिश्चायकमित्याह। क्वचिदपीति। विधूनन मुख्यं किमिति नोच्यते तत्राह। न चेति। तथापि हानं कथं लक्ष्यत इत्याशङ्क्य मुख्यसम्बन्धादित्याह। अश्वस्येति। अनुपपत्तिः सम्बन्धलक्षणावीजरूपा रूढा लक्षकं पदं निर्दिशति। अश्व इवेति। विधूयेति पदं दृष्टान्ते हानपर्यन्तं न दार्ष्टा-

योर्मुख्यं सम्भवति अद्रव्यत्वात्। अश्वश्च रोमाणि विधून्वानः त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति। 'अश्व इव रोमाणि विधूय पापम्' इति च ब्राह्मणं। अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः। तदुक्तमिति व्याख्यात॥

साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतवियोग कौषीतकिनः पर्यङ्कविद्यायामामनन्ति 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत् सुकृतदुष्कृते विधुनुते' इति। तत् किं यथा श्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यं आहोस्विदादावेव देहादपसर्पणे' इति विचारणायां श्रुतिप्रामाण्यात् यथाश्रुतप्रतिपत्तिप्रसक्तौ पठति। साम्पराये' इति। साम्पराये गमन एव देहादपसर्पण इदं-विद्यासामर्थ्यात् सुकृतदुष्कृतहानं भवति इति प्रतिजानीते।

---

न्तिकेऽपि हानलक्षकमित्यर्थः। यद्वा हानवाचकमेवास्तु न च धूञ् कम्पन इति धातुपाठविरोधस्तस्योपलक्षणत्वार्थत्वादित्याह। अनेकेति। शाखान्तरमुपाधन विधूननस्य हानत्वनिश्चायकमित्यत्र जैमिनिसूत्रं तदुक्तमिति गृहीतपूर्वं व्याख्यातमित्यर्थः। एवं विधूननस्य हानित्वसिद्धे केवलहानावुपायनोपसंहार इति सिद्धम्॥

साम्पराये। अतो व्यध्वनि अर्धमार्गे पूर्वोक्तं विधूननस्य हानत्वमुपजीव्य हानस्य नदीतरणानन्तर्यश्रुतेरश्व इव रोमाणि इत्यादौ देहत्यागात् प्राक्कालश्रुतेश्च संशयमाह। तत्किमिति। ब्रह्मलोकमार्गमध्ये विर-

हेतुं व्याचष्टे, तर्तव्याभावादिति। न हि विदुषः सम्परेतस्य विद्यया ब्रह्म प्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किञ्चित् प्राप्तव्यमस्ति यदर्थं कतिचित् क्षणानक्षीणे ते कल्प्येयातां, विद्याविरुद्धफलत्वात् तु विद्यासामर्थ्येन तयोः क्षयः, स च यदैव विद्याफलाभिमुखो तदैव भवितुमर्हति। तस्मात् प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात् पठ्यते। तथा ह्यन्येऽपि शाखिनः ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानिमामनन्ति 'अश्व इव रोमाणि विधूय पापम्' इति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च॥

## छन्दत उभयाविरोधात्॥ २८॥

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्द्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत ततः पतिते देहे यमनियमविद्या-

---

जाख्यनदीमत्येति 'तत् सुकृतदुष्कृते विधुनुतः' इत्यत्र तदिति सर्वनामश्रुत्या तेनेत्यर्थतया सन्निहितनदीतरणस्य कर्महानिहेतुत्वोक्तेरर्धपथे कर्मक्षय इति पूर्वपक्षः। तत्र विद्यायाः कर्मक्षयहेतुत्वासिद्धिः पूर्वपक्षे, सिद्धान्ते तत्सिद्धिरिति मत्वा सिद्धान्तयति। साम्पराय इति। मरणात् प्रागित्यर्थः। सम्परेतस्य मृतस्य कश्चित्कालं कर्मसत्त्वे फलाभावाद्देवयानमार्गप्रवेशायोगाच्चादावेव क्षय इत्यर्थः। क्षयहेतोर्विद्याया मध्ये मार्गसत्त्वाच्चेत्याह। विद्याविरुद्धेति। नदीतरणानन्तरपाठस्तु बाध्यः अर्थविरोधादित्याह। तस्मादिति। तदिति सर्वनाम्नापि प्रकृतविद्यैवोच्यत इति भावः॥

किञ्च मृतस्य छन्दतो यथाकामं विद्यानुष्ठानानुपपत्तेरुभयोर्विद्याकर्मक्षययोः श्रुतौ हेतुफलभावो विरुध्यते। किञ्च सति युक्तत्वे हेतौ

भ्यामात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठा-
नानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात्,
तस्मात् पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्,
तत्पूर्वकञ्च सुकृतदुष्कृतहानमिति द्रष्टव्यं, एवं निमित्तनै-
मित्तिकयोरुपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च सङ्गतिरिति ॥

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

क्वचित् पुण्यपापहानसन्निधौ देवयानः पन्थाः श्रूयते क्वचित्
न। तत्र संशयः किं हानावविशेषेणैव देवयानः पन्थाः
सन्निपतेत् उत विभागेन क्वचित् सन्निपतेत् क्वचिन्नेति, यथा ता-
वद्धानावविशेषेणैवोपायनानुवृत्तिरुक्ता एवं देवयानानुवृत्ति-
रपि भवितुमर्हतीत्यस्यां प्राप्तावाचक्ष्महे। गतेः देवयानस्य पथो-
ऽर्थवत्त्वं उभयथाविभागेन भवितुमर्हति, क्वचिदर्थवती गतिः
क्वचिन्नेति नाविशेषेण, अन्यथा ह्यविशेषेणैवतस्याङ्गतावङ्गीक्रि-
यमाणायां विरोधः स्यात् 'पुण्यपापे विधूय निरञ्जनः परमं

---

न कार्यविलम्ब इति न्यायोपेततारछ्यादिश्रुतिविरोधस्तव स्यादस्मत्-
पक्षे त्वविरोध इत्याह। छन्दत इति। तस्मात् कर्महानस्य विद्या-
फलत्वात् केवलहानावुपायनोपसंहारो विद्यासु इति सिद्धं ॥

गतेरर्थवत्त्वं। क्वचित् सगुणविद्याया मार्गं श्रूयते निर्गुणविद्याया
न श्रूयते। तत्र हानसन्निधौ मार्गस्य श्रुतत्वादनपेक्षितत्वाच्च सप्र-
पहष्टान्तसमत्या पूर्वपक्षमाह। यथा तावदिति। उपायनवत् मार्ग-
स्यापि क्वचित् श्रुतत्वात् सर्वत्रोपसंहार इत्यर्थः। अत्र निर्गुणवि-
दोऽपि मुक्त्यर्थं मार्गापेक्षा पूर्वपक्षे, सिद्धान्ते त्वनपेक्षेति फलं। देशा-

साम्यमुपैति' इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत, कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत् गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः क्वचिन्नेति, तल्लक्षणार्थोपलब्धेः। गतेः कारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते, तत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा सह संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहुदेशान्तरप्राप्त्यायत्तं फलं श्रूयते, तत्रार्थवती गतिः न तु सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति। न ह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किञ्चिदस्ति तत्रानर्थिका गतिः, लोकवच्चैष विभागो द्रष्टव्यः, यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते नारोग्यप्राप्तावेवमिहापीति। भूयश्चैतं विभागं चतुर्थेऽध्याये निपुणतरमुपपादयिष्यामः ॥

---

दिव्यवहितवस्तुप्राप्तौ मार्गस्यापेक्षेतिन्यायानुगृहीतश्रुतिविरोधात् नोपसंहार इति सिद्धान्त'। निरञ्जनोऽसङ्गः, साम्यं ब्रह्म ॥

ननु तर्हि सगुणविद्यायामपि मार्गो व्यर्थ इत्यत आह। उपपन्न इति। सा गतिर्लक्षणं कारणं यस्यार्थस्य स तल्लक्षणार्थः ॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्यां ॥ ३१ ॥

सगुणासु विद्यासु गतिरर्थवती न निर्गुणायां परमात्मविद्यायामित्युक्तं। सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते 'यथा पर्यङ्कविद्यायां पञ्चाग्निविद्यायामुपकोशलविद्यायां दहरविद्यायां' इति नान्यासु 'यथा मधुविद्याया शाण्डिल्यविद्याया षोडशकलविद्याया वैश्वानरविद्यायां' इति, तत्र संशयः किं यास्वेवैषा गतिः श्रूयते तास्वेव नियम्येतोतानियमेन सर्वाभिरेवैवंजातीयकाभिर्विद्याभिः सम्बध्येतेति। किं तावत् प्राप्तं नियम इति। यत्रैव श्रूयते तत्रैव भवितुमर्हति प्रकरणस्य नियामकत्वात्। यद्यन्यत्र श्रूयमाणापि गतिर्विद्यान्तरं गच्छेत् श्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात्। अपि

---

अनियम सर्वासा। अत्राप्यर्चिरादिमार्ग एव विषयस्तत्र विद्याविशेषप्रकरणादविशेषश्रुतेश्च संशये पूर्वपक्षमाह। किं तावदिति। सगुणनिर्गुणविद्यासु मार्गस्य भावाभावव्यवस्थावत् सगुणास्वपि व्यवस्थेति दृष्टान्तेन प्राप्तौ सिद्धान्ते व्यवस्थापवादात् सङ्गतिर्नियमोऽनियम उभयत्र फलं। नियमे प्रकरणमुक्त्वा पुनरुक्तिं लिङ्गमाह। अपि चेति। एकत्रोक्तगतेरन्यत्र प्राप्तौ पुनरुक्तिर्वृथा स्यादित्यर्थः। सिद्धान्तयति। सर्वासामिति। अभ्युदयो ब्रह्मलोकः। अविशेषश्रुत्यादिना प्रकरणबाधो न दोष इत्याह। नैष इति। तत्र अधिकृतानां मध्ये य इत्थं पञ्चाग्निविदो ये चामी अरण्ये श्रद्धातप इत्युपासते श्रद्धातपउपलक्षितं ब्रह्म ध्यायन्ति तेऽर्चिषमभिसम्भवन्तीत्यन्वयः। ननु श्रद्धातपोमात्रश्रुतेस्ताभ्यामेव अर्चिरादिगमनं स्यात् न वैश्वानरादिविद्याशीलानामिति शङ्कते। कथं पुनरिति। अविदुषां गतिनिषेधाच्छ्रद्धातपःशब्दाभ्यां सत्याख्यब्रह्मविद्यालक्षणेति परिहरति। नैष दोष इति। ततः ब्रह्म-

र्चिरादिकैव गतिरुपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत् पठ्यते, तत्सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात्। तस्मात् नियम इत्येवं प्राप्ते पठति। अनियम इति। सर्वासामेवाभ्युदय-प्राप्तिफलानां सगुणानां विद्यानामविशेषेणैव देवयानाख्या गति-र्भवितुमर्हति। नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः, नै-षोऽस्ति विरोधः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः 'तद्य इत्थं विदुः' इति पञ्चाग्निविद्यावतां देवयानं *पन्थानमवतारयन्ती 'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते'* इति विद्यान्तरशीलानामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति, कथं पुनरवगम्यते विद्यान्तरशीलानामियं गतिश्रुति-रिति। ननु श्रद्धातपःपरायणानामेव स्यात् तन्मात्रश्रवणात्। नैष दोषः, न हि केवलाभ्यां श्रद्धातपोभ्यामन्तरेण विद्याबल-मेषा गतिर्लभ्यते-

'विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः'॥ इति-

श्रुत्यन्तरात्। तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणं।

---

लोकस्थानं, परागताः परावृत्ताः, कामक्रोधदोषा न सन्तीति यावत्। दक्षिणाः केवलकर्मिणस्तपस्विनोऽप्यविद्वांसो न गच्छन्तीत्यर्थः। लक्ष-णादोषहीनं वाक्यमाह। वाजसनेयिनस्त्विति। किञ्च विद्याकर्मल-क्षणमार्गद्वयभ्रष्टानामधोगतिश्रुतेः वैश्वानराद्युपासकानामर्चिरादि-मार्गप्राप्तिरित्याह। अथ य एताविति। दन्दशूकः सर्पः। किञ्च 'अग्नि-र्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्म-विदो जनाः' इत्यविशेषेणोपासकानामर्चिरादिगतिमुक्त्वोपसंहारस्मृतेश्च

वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति, तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयं, सत्यशब्दस्य ब्रह्मण्यसकृत् प्रयुक्तत्वात्। पञ्चाग्निविद्याविदां चेत्थंवित्तयैवोपात्तत्वात् विद्यान्तरपरायणानामेवेदमुपादानं न्याय्यं । 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं' इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती देवयानपितृयाणयोरेवैतामन्तर्भावयति तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः। स्मृतिरपि-

'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः' ॥ इति ।

यत्पुनर्देवयानस्य पथोऽर्चिरादेर्द्विराम्नानं उपकोसलविद्यायां पञ्चाग्निविद्यायाञ्च तदुभयत्राप्यनुचिन्तनार्थं, तस्मादनियमः ॥

---

तेषां तत्प्राप्तिरित्याह । स्मृतिरिति । शुक्ला गतिरर्चिरादिका, कृष्णा धूमादिका, जगतो विद्याकर्माधिकृतस्य, शाश्वते ध्रुवे सम्मते, तत्रैकया शुक्लया पुनरावृत्तिवर्जनार्थं ब्रह्म गच्छति, अन्यया स्वर्गं गत्वा पुनरायाति इत्यर्थः। पुनरुक्तिदोषं दूषयति । यत्पुनरिति । तत्र तत्र मार्गश्रुतिरन्वहं मार्गचिन्तनार्थं, प्रकरणेन मार्गध्यानस्य विद्याङ्गत्वावगमात्। तथा च वक्ष्यति सूत्रकारः 'तच्छेषगत्यनुस्मृतियोगाच्च' इति । येषां न श्रुतो मार्गस्ते मार्गध्यानं विनापि विद्यासामर्थ्यात् मार्गं लभन्त इति ज्ञापनार्था पुनरुक्तिरित्यर्थः। तस्मात् सर्वोपासनासु प्रतीकभिन्नास्वर्चिरादिप्राप्तिरिति सिद्धं ॥

## यावदधिकारमवस्थितिराधिकारिकाणां ॥ ३२ ॥

विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः सम्पत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते। न हि पाकसाधनसम्पत्तावोदनो भवेत् न वेति चिन्ता सम्भवति, नापि भुञ्जानस्तृप्येत् न वेति चिन्त्यते। उपपन्ना त्वियं चिन्ता, ब्रह्मविदामपि केषाञ्चित् इतिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात्। तथा ह्यपान्तरतमाः नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूवेति स्मरणं। वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशात् मित्रावरुणाभ्यां सम्बभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसानां पुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्यते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव। एवमेव दक्षनारदप्रभृतीनामपि भूयसी देहान्तरोत्पत्तिकथा तेन तेन निमित्तेन भवति

---

यावदधिकारं। निर्गुणविद्याया गतिर्व्यर्था मुक्तिफलत्वात्, सगुणविद्यासु सर्वत्रार्थवती ब्रह्मलोकफलत्वादिति व्यवस्था कृता, सा न युक्ता, तत्त्वज्ञानिनामपि इतिहासादौ पुनर्जन्मदर्शनेन ज्ञानस्य मुक्तिफलत्वाभावादित्याक्षेपात् सङ्गतिः, ज्ञानिनां पुनर्जन्मदर्शनं संशयबीजं भाष्ये दर्शितं। पूर्वपक्षे ज्ञानान्मुक्तिश्रुतीनां ज्ञानस्तुतिमात्रत्वेन ज्ञानस्य मुक्तिफलत्वाभावे सति ब्रह्मलोकफलत्वाविशेषादर्चिरादिमार्गोपसंहारः फलं, सिद्धान्ते तूक्तव्यवस्थासिद्धिरिति विवेकः। श्रुतावपीति, मेधा-

स्मृतौ । श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते । ते च केचित् पतिते पूर्वदेहे देहान्तरमाददते केचित्तु स्थित एव तस्मिन् योगैश्वर्यवशादनेकदेहादानन्यायेन, सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते । तदेतेषां देहान्तरोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेत्यत उत्तरमुच्यते । न, तेषामपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानां अधिकारतन्त्रत्वात् स्थितेः । यथासौ भगवान् सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति, 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' इति श्रुतेः । यथा च वर्तमाना ब्रह्मविदः प्रारब्धभोगक्षये कैवल्यमनुभवन्ति 'तस्य तावदेव चिरं यावत् न विमोक्ष्येऽथ सम्पत्स्ये' इति श्रुतेः । एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधि-

---

तिर्यङ्मध्येति मन्त्रे इन्द्रस्य मेषजन्मोपलभ्यते । वसिष्ठ उर्वशीपुत्रो जात इत्येवमर्थो बह्वृचार्थवाद इत्यर्थः । ज्ञानस्य मुक्तिहेतुत्वं नेति सिद्धान्तयति । ते चेति । पाक्षिकमित्यापाततः अहेतुत्वमेवेति पूर्वपक्षः । लोकव्यवस्थासु स्वामित्वमधिकारः, तत्प्रापकं प्रारब्धं यावदस्ति तावत् कालं जीवन्मुक्तत्वेनाधिकारिकाणामवस्थितिः, प्रारब्धक्षये प्रतिबन्धकाभावात् विदेहकैवल्यमित्यत्र मानमाह । अथेति । अथ प्रारब्धक्षयानन्तरं । ततः ऊर्ध्वं विलक्षणं केवलं ब्रह्मस्वरूपः सन् उदेत्योद्गम्य देहं त्यक्त्वेति यावत् । एकल एव अद्वितीयः, मध्ये उदासीनात्मस्वरूपे तिष्ठतीत्यर्थः । ननु ज्ञानिनामपि जन्मान्तरञ्चेत् कथं मुक्तिरित्यत आह । सकृत्प्रवृत्तमिति । यदि ज्ञानिनां प्रारब्धातिरिक्त-

कारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीण-
कर्माणो यावदधिकारमवतिष्ठन्ते तदवसाने चापवृज्यन्त इत्य-
विरुद्धं। सकृत्प्रवृत्तमेव हि ते ऽधिकारफलदानाय कर्माशय-
मतिवाहयन्तः स्वातन्त्र्येण गृहादिव गृहान्तरमन्यमन्यं देहं
सञ्चरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहे-
न्द्रियप्रकृतिवशित्वात् निर्माय देहान् युगपत्क्रमेण वाधिति-
ष्ठन्ति। न चैते जातिस्मरा इत्युच्यते, 'त एव ते' इति स्मृतिप्र-
सिद्धेः। यथा 'सुलभा ब्रह्मवादिनी जनकेन विवदितुकामा
व्युदस्य स्वं देहं जानकं देहमाविश्य व्युद्य तेन पश्चात् स्वमावि-
वेश' इति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं
देहान्तरारम्भकारणमाविर्भवेत् ततोऽन्यदप्यदग्धबीजं कर्मा-
न्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वम-
हेतुत्वं वा शङ्क्येत, न त्वियमाशङ्का युक्ता, ज्ञानात् कर्मबीजदा-
हस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथा हि श्रुतिः—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'॥ इति—
'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति चैवमाद्या। स्मृतिरपि-

---

कर्माधीनं जन्मान्तरं स्यात् तदा ज्ञानान्मुक्त्यभावः स्यात् नैतदस्ति
किन्तु बहुजन्मफलाय सकृदुद्भूतं प्रारब्धं ते क्षपयन्ति, जन्मग्रहणेऽपि
ज्ञानयोगबलान्न मोहन्ति प्रारब्धसमाप्तौ मुच्यन्त इत्यर्थः। ज्ञानिनां
जन्मान्तरस्य पूर्वजन्महेतुप्रारब्धाधीनतायामलुप्तस्मृतित्वं, यो ह्यजा-
तिस्मरत्वे सति कर्मान्तराधीनजन्मान्तरवान् स लुप्तस्मृतेरिति व्याप्तेः
ज्ञानिषु व्यापकाभावात् विशिष्टव्याप्याभावसिद्धिः। ननु तेषां

'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' ॥ इति-
'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः' ॥ इति—

चैवमाद्या । नचाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते, न ह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते । प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयात् निवृत्तिः 'तस्य तावदेव चिरम्' इति शरीरपातावधिकरणात् । तस्मादुपपन्ना यावदधिकारमाधिकारिकाणामवस्थितिः, न च ज्ञानफलस्यानैकान्तिकता । तथा च श्रुतिरविशेषेण सर्वेषां ज्ञानान्मोक्षं दर्शयति 'तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति । ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं प्रापुरित्युपपद्यते ।

---

जातिस्मरत्वादलुप्तस्मृतित्वमन्यथासिद्धमित्यत आह । न चैत इति । तथा च तेषामजातिस्मरत्वरूपविशेषणे सति विशेष्याभावादेव विशिष्टाभावसिद्धिरित्यर्थः । पूर्वदेहनामप्रत्यभिज्ञानहीनाः परतन्त्राः साभिमाना जातिस्मराः, आधिकारिकास्तु पूर्वनामानः स्वतन्त्रा निरभिमाना इति वैधर्म्यं । तेन अनकेन सह, बुद्ध्वा विवादं ज्ञात्वेत्यर्थः । विदुषः प्रारब्धातिरिक्तकर्माभावान्नवत्वमिति समर्थमुपपादयति । यदि ह्युपयुक्त इत्यादिना । श्रुतिस्मृत्युक्तार्थे युक्तिमप्याह । न चाविद्या इति । विद्यया क्लेशदाहात् तत्कार्यकर्मक्षयश्चेत् तर्हि प्रारब्धस्य कथं स्थितिस्त-

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्'॥ इति-
स्मरणात्। प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः। कर्मफले हि स्वर्गादावनुभवानारूढे स्यादपि कदाचिदाशङ्का भवेद्वा नवेति, अनुभवारूढन्तु ज्ञानफलं 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः, 'तत्त्वमसि' इति च सिद्धवदुपदेशात्। न हि 'तत्त्वमसि' इत्यस्य वाक्यस्यार्थः तत्त्वं मृतो भविष्यसि इत्येवं शक्यः परिणेतुं। 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति। तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्॥ ३३॥

वाजसनेयके श्रूयते 'तद्धैतदक्षरं गार्गि ब्राह्मणा अभिव-

---

माह। प्रवृत्तफलस्येति। विदुषो देहपातावधिश्रुतेरनुभवाच्च ज्ञानस्यावरकाज्ञानांशनिवर्तकस्य प्रारब्धविक्षेपस्थित्यनुकूलाज्ञानांशनिवर्तनसामर्थ्याभावसिद्धेर्भोगेनैव प्रारब्धक्षय इति भावः। ज्ञानिनामधिकारित्वं कथमित्याशङ्क्य ज्ञानात् प्राक्कृतोपासनादिवशादित्याह। ज्ञानान्तरेषु चेति। प्रतिसञ्चरो महाप्रलयः, परस्य हिरण्यगर्भस्य, अधिकारान्ते साक्षात् कृतात्मानो मुच्यन्त इत्यर्थः। ब्रह्मभावफलस्याऽपि भावित्वमाशङ्क्य तत्त्वमसीति श्रुतिबाधमाह। न हीति। तस्मात् निर्गुणविद्यायां मार्गानुपसंहार इति सिद्धम्॥

अक्षरधियां। अत्राक्षरब्रह्मप्रमापका निषेधशब्दा विषयाः, तेषु

दन्यस्थूलमनण्वह्रस्वमदीर्घं' इत्यादि । तथाथर्वणे श्रूयते 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' इत्यादि। तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते, तत्र क्वचित् केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते, तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये श्रुतिविभागात् व्यवस्थाप्राप्तावुच्यते, अक्षरधियस्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः, सामान्यतद्भावाभ्यां। समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः, तदेव च हि सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते, तत्र किमित्यन्यत्र कृता बुद्धयोऽन्यत्र न स्युः। तथा च

---

यत्र यावन्तः श्रुतास्तत्र तावतामशेषद्वैतनिषेधकत्वं सम्भवासम्भवाभ्यां संशयमाह । तासामिति । यथा निर्गुणविद्यायां मार्गस्यानपेक्षितत्वादनुपसंहारस्तथा श्रुतनिषेधानामुपलक्षणतया सर्वाद्वैतनिषेधसम्भवाच्छाखान्तरीयनिषेधशब्दानामनपेक्षितत्वादनुपसंहार इति दृष्टान्तेन पूर्वपक्षः, तत्र लाघवं फलं सिद्धान्ते तु दोषद्वयाभावः फलं। तथा हि यदि श्रुतशब्दैरश्रुतनिषेधा लक्ष्यन्ते तदा लक्षणादोषः, यदि न लक्ष्यन्ते तदा सर्वद्वैतनिषेधासिद्धेर्विशेषप्रमित्यभावदोष इति विवेकः। अक्षरे धर्मिणि द्वैतनिषेधधियोऽक्षरधियस्तद्धेतवः शब्दा इति यावत्, तासामवरोध उपसंहार इति सूत्रयोजना। शेषिप्रत्यक्षः सर्वशाखासु भावात् तत्प्रमिते समानत्वाच्छेयाणामुपसंहार इति चेत् तर्हि न्यायसाम्यात् पुनरुक्तितादवस्थ्यमित्यत आह। विशेषप्रपञ्चार्थं इति। आनन्दादीनां स्वरूपत्वादस्तूपसंहारः निषेधानामनात्मत्वादानन्त्याच्चानुपसंहार इत्यधिकाराशङ्कायां तेषामनात्मत्वेऽपि निर्विशेषप्रमाप्रसिद्ध्यर्थत्वादविद्यातत्कार्यनिषेधत्वेन संग्रहसिद्धेश्च निरपेक्षा

आनन्दादयः प्रधानस्य' इत्यत्र [वे० सू०३।३।११] व्याख्यातं। तत्र विधिरूपाणि विशेषणानि चिन्तितानि इह प्रतिषेधरूपाणि इति विशेषप्रपञ्चार्थश्चायं चिन्ताभेदः। औपसदवदिति निदर्शनं। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणां 'अग्नेर्वेर्होत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसम्बन्धो भवति, अध्वर्युकर्तृकत्वात् पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानां, एवमिहाप्यक्षरतन्त्रत्वात् तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसम्बन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' [जै० सू०] इत्यत्र॥

---

स्थूला न वाक्यस्था श्रुता निषेधशब्दानामन्यत्र श्रुतनिषेधवाक्यैकवाक्यतयोपसंहार इति चिन्ता युक्तेत्यर्थः। अन्यत्र श्रुतधर्माणामन्यस्य धर्मिसम्बन्धे दृष्टान्तं व्याचष्टे। यथेति। तम इति पुष्टिकामश्चतूरात्रेण यजत इत्युपक्रम्य विहिता जमदग्निना दृष्टा जामदग्निः, अहीनश्चतूरात्रः क्रतुस्तस्मिन् पुरोडाशिन्य उपसदो भवन्ति इति पुरोडाशसाध्या इष्टयः तैत्तिरीयके विहिता, तासामध्वर्युकर्तृकत्वात् सामवेदोत्पन्नमन्त्राणां तासु विनियोगादध्वर्युणैव प्रयोगो नोद्गात्रेत्यर्थः। वेर्देवगणस्य होत्रं अध्वरं च कर्माभिलक्षत एवेत्यग्न्यामन्त्रणमन्त्रार्थः। उत्पत्तिविधिर्गुणः फलापेक्षत्वादुत्पन्नस्य फले विनियोगविधिर्मुख्यः सफलत्वात्। तथा च मन्त्राणामुद्गातृत्वे वेदोत्पन्नत्वादुद्गात्रा प्रयोग विनियोगविधिनाध्वर्युणा प्रयोग इति गुणमुख्ययोर्व्यतिक्रमे विरोधे सति मुख्येन बलीयसा मन्त्रात्मकवेदस्याध्वर्युणा संयोगः उत्पत्तेर्विनियोगार्थत्वादिति जैमिनिसूत्रार्थः॥

## इयदामननात् ॥ ३४ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ॥

इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति। तथा कठाः—

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः'॥

इति। किमत्र विद्यैकत्वमुत विद्यानानात्वमिति संशयः। किं तावत् प्राप्तं विद्यानानात्वमिति। कुतः, विशेषदर्शनात्। द्वा सुपर्णेत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते, एकस्य चाभोक्तृत्वं। ऋतं पिबन्तावित्यत्र उभयोरपि भोक्तृत्व दृश्यते तदेवं रूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति, विद्यैकत्वमिति। कुतः, यतः उभयोरप्येतयोर्मन्त्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्य-

---

यद्यपि शवरभाष्ये वारवन्तीयादिसाम्नामुच्चैः स्वरकसामवेदोत्पन्नत्वादाधानाङ्गत्वेनोच्चैः स्वरप्रयोगः 'यत्र वै विद्वान्वारवन्तीयं गायति यज्ञायज्ञीयं गायति वामदेव्यं गायति' इत्याधाने तेषां विनियोगविधिना यातुषेण यातुषस्योपांशुस्वरस्य प्रयोग इति गुणमुख्ययोर्विरोधे सत्युत्पत्तिर्विनियोगार्थत्वान्मुख्यविनियोगबलेन साम्नां यजुर्वेदस्वरसंयोग इति सूत्र व्याख्यातं, तथापि न्यायसाम्यादीपसदमन्त्राः सूत्रविषयत्वेनोदाहृता इत्यविरोध ॥

इयदामननात्। मन्त्रद्वयेऽपि प्रतिपादनप्रकारभेदात् जिज्ञास्यैक्यभानाच्च संशयमाह। किमत्रेति। ऋतपानवाक्ये 'यदक्षरं ब्रह्म यत्परम्' इति गुणाः श्रुताः, सुपर्णवाक्ये न ऋतत्वादयस्तेषां मिथोऽनुप-

रूपमभिन्नमामनन्ति। ननु दर्शितो रूपभेदः, नेत्युच्यते 'उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतो नार्थान्तरं, 'द्वा सुपर्णा' इत्यत्र तावत्'अनश्नन्नन्योऽभिचाकशीति' इत्यशनायातीतः परमात्मा प्रतिपाद्यते, वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते 'जुष्टं यदा पश्यत्यन्यमीशम्' इति। 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबत्यशनायाद्यतीतः परमात्मापि तत्साहचर्यात् छत्रिन्यायेन पिबति इत्युपचर्यते। परमात्मप्रकरणं ह्येतत्, 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्युपक्रमात् तद्विषय एवात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' इति 'गुहां प्रविष्टावात्मानौ हि' इत्यत्र चैतत् प्रपञ्चितं। तस्मात् नास्ति वेद्यभेदः तस्माच्च विद्यैकत्वं। अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया, न च परमात्मविद्यायां भेदाभेदविचारावतारोऽस्ति इत्युक्तं। तस्मात् प्रपञ्चार्थ एवैष प्रयोगः, तस्माच्चाधिकधर्मोपसंहार इति॥

---

संहार इति पूर्वपक्षफलं, सिद्धान्ते तूपसंहारे ब्रह्मस्वरूपवाक्यार्थैक्यादुपसंहार इति विवेकः। अस्तु वेद्ये विद्यैक्यात् अक्षरधियामुपसंहारः इह तु वेद्यभेदान्नोपसंहार इति प्रत्युदाहरणेन पूर्वपक्षः। नन्वेवं गुहाधिकरणे निरस्त इति चेत्, सत्यं, किन्तु पिबेत्पदस्य मुख्यार्थत्वाय स्वतः कल्पनया च पानकर्त्राश्रययोरङ्गिजीवौ पिबन्तौ ग्राह्यौ, सुपर्णौ तु जीवेश्वरावित्यधिकाशङ्कायां मन्त्रद्वयेऽपि द्विवचनशब्दसाम्यादौत्पत्तिकद्वित्वविशिष्टतया तुल्यवस्तुद्वयं प्रत्यभिज्ञानस्य बाधकाभावात् प्रकरणानुग्रहाच्च जीवानुवादेनासंसारिब्रह्मणि मन्त्रद्वयं तात्पर्यमिति प्रपञ्चार्थमिदं सूत्रमिति भावः॥

अन्तराभूतग्रामवत् स्वात्मनः ॥ ३५ ॥

'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इत्येवं द्विः उषस्तिकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति। तत्र संशयः, विद्यैकत्वं वा स्याद्विद्यानानात्वं वेति। किं तावत् प्राप्तं विद्यानानात्वमिति, कुतः, अभ्याससामर्थ्यात्। अन्यथा ह्यन्यूनातिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात्। तस्मात् यथाभ्यासात् कर्मभेदः एवमभ्यासात् विद्याभेद इत्येवं प्राप्ते प्रत्याह, अन्तराम्नानाविशेषात् स्वात्मनो विद्यैकत्वमिति। सर्वान्तरो हि स्वात्मोभयत्राप्यविशिष्टः पृच्छ्यते प्रत्युच्यते च। न हि द्वावात्मानावेकस्मिन् देहे सर्वान्तरौ सम्भवतः, तदा ह्येकस्याञ्जसं सर्वान्तरत्वं कल्प्येत, एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्वं स्यात्, यथा पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तराः अद्भ्यश्च तेजोऽन्तरमिति सत्यप्यापेक्षिके सर्वान्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति तथेहापि इत्यर्थः। अथवा भूतग्रामवदिति श्रुत्यन्तरं

---

अन्तराभूतग्रामवत् स्वात्मनः। घटादिकं चिद्विषयत्वेनापरोक्षं, ब्रह्म तु साक्षादविषयत्वेनापरोक्षमिति, प्रथमार्थे पञ्चमी। अत्र श्रुतात्मधर्मोऽपरोक्षत्वं ब्रह्मण्युक्तं, ब्रह्मधर्मं सर्वान्तरत्वमात्मन्युक्तं, तेन रोक्ष्य दृढीकृत मन्तव्य, तन्मे व्याचक्ष्वेत्युषस्तिप्रश्ने याज्ञवल्कीयेन प्राणादेः प्रेरकोऽदृष्ट्यादिसाक्षी प्रतिपादितः। तथैव 'यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व' इति कहोलप्रश्नेऽशनायाद्यतीतः प्रतिपादितः। तत्र ब्राह्मणद्वयेऽपि प्रश्नाद्यभ्यासात् सर्वान्तरत्वप्रत्यभिज्ञानाच्च संशये मन्त्रयोर्वेद्यैक्यादस्तु विद्यैक्य, इह तु ब्राह्मणयोर्वेद्यैक्येऽपि अभ्यासाद्विद्याभेदः, यजत्यभ्यासात् प्रयाजभेदवदिति प्रत्युदाहरणेन

निदर्शयति यथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यस्मिन् मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्मा आम्नायते, एवमनयोरपि ब्राह्मणयोरित्यर्थः। तस्माद्वेद्यैकत्वाद्विद्यैकत्वं ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अथ यदुक्तमनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति तत्परिहर्तव्यं, अत्रोच्यते नायं दोषः, उपदेशान्तरवदुपपत्तेः। यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके 'स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्वोऽप्युपदेशेन विद्याभेदो भवति एवमिहापि भविष्यति। कथञ्च नवकृत्व उपदेशे विद्याभेदो भवति, उपक्रमोपसंहाराभ्यामेकार्थावगमात्, *'भूय एव मा भगवान् विज्ञापयतु'* इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितत्वेनोपक्षेपादाशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः, एवमिहापि प्रश्नरूपाभेदात्। 'अतोऽन्यदार्तम्' इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते। यदेव 'साक्षादपरोक्षाद्ब्रह्म' इति द्वितीयेऽपि प्रश्ने एवकारं

---

पूर्वपक्षः, तत्र मिथो धर्मानुपसंहारः फलं, सिद्धान्ते तूपसंहार इति विवेकः। द्वयोः सर्वान्तरत्वानुपपत्त्या तावद्ब्राह्मणयोरेकवस्तुपरत्वं सिद्धं। तथा च वेद्यैक्यात् निर्गुणविद्यैक्येन विवादः॥

अन्यथा। ननु विद्यैक्याङ्गीकारे अभ्यासानुपपत्तिरिति चेत्। उच्यते, स एवाभ्यासः कर्मभेदको यो निरर्थकः, इह तूषस्तिब्राह्मणोक्तात्मन

प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरब्राह्मणमाणं दर्शयति। पूर्वस्मिंश्च ब्राह्मणे कार्यकारणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते, उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं विशेषः कथ्यते इत्येकार्थतोपपत्तिः। तस्मादेका विद्येति॥

## व्यतिहारो विशिंषन्ति हीतरवत्॥ ३७॥

'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यैतरेयिणः आदित्यपुरुषं प्रकृत्य समामनन्ति, तथा जाबालाः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति। तत्र संशयः,किमिह व्यतिहारेणोभयरूपा मतिः उत कर्तव्या एकरूपा वेति। एकरूपैवेति तावदाह, न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वाऽन्यत् किञ्चित् चिन्तयितव्यमस्ति, यदि चैवं चिन्तयितव्यमविशेषः परिकल्प्येत, संसारिणश्चेश्वरात्मत्वमीश्वरस्य च संसार्यात्मत्वमिति तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्, ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात्, तस्मादेकरूप्यमेव मतेः, व्यतिहाराम्नायस्तावदेकत्वदृढी-

---

एवाशनायाद्युत्पन्नरूपविशेषकथनार्थत्वादभ्यासोऽन्यथासिद्धो न विद्याभेदक इति समुदायार्थः॥

व्यतिहारः। जीवेशयोर्मिथो विशेषणविशेष्यभावो व्यतिहारः, तस्य श्रुतत्वात्, उत्कृष्टदृष्टिर्निकृष्टे कृता फलवतीति न्यायाच्च संशये जीवे ईश्वरत्वमतिरेव कार्या उक्तन्यायात्, व्यतिहारश्रुतिस्तु तस्या एव दृढीकरणार्थत्वेनाभ्यासवदन्यथासिद्धेति दृष्टान्तेन पूर्वपक्षः। तत्र लाघवं फलं सिद्धान्ते तु श्रुत्यर्थवत्त्वमिति विवेकः। एकेनैव त्वमहमस्मीत्युपास्त्येनैकमतेः कृतत्वादहं त्वमसि इति वृथा स्यादित्यर्थः।

करणार्थ इत्येवं प्राप्ते प्रत्याह, व्यतिहारः। अयमाध्यानायाम्नायते इतरवत्, यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते तद्वत्। तथा हि विशिंषन्ति समाम्नातार उभयोच्चारणेन 'त्वमहमस्म्यहञ्च त्वमसि' इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति, अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्, एकेनैव कृतत्वात्। ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तं। नैष दोषः, ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। नन्वेवं सति स एवैकत्वदृढीकार आपद्येत, न वयमेकत्वदृढीकारं वारयामः किं तर्हि व्यतिहारेणेव द्विरूपा मतिः कर्तव्या वचनप्रामाण्यात्, नैकरूपेत्येतावदुपपादयामः, फलतस्त्वेकत्वमपि दृढीभवति। यथा ध्यानार्थेऽपि सत्यकामत्वादिगुणोपदेशे तद्गुणक ईश्वरः प्रसिध्यति तद्वत्। तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषये उपसंहर्तव्य इति॥

---

उक्तदोषं स्मारयति। नन्विति। सन्दिग्धेऽर्थन्यायः सावकाशः, इह तु श्रुतत्वादन्योन्यात्मत्वं ध्येयं, ब्रह्मणि मनोमयत्वादिवत् जीवात्मत्वस्य ध्यानार्थं चारोपेऽपि निकर्षप्रसक्त्यभावादिति परिहरति। नैष दोष इति। ब्रह्मणि निकर्षं हात्वा जीवतादात्म्यध्याने मदुक्तमेवागतमिति शङ्कते। नन्वेवमिति। मतेर्द्विरूपत्वं त्वदनुक्तमस्माभिरुच्यते ध्यानपरं वाक्यमिदमेकत्वन्तु मानान्तराविरोधात् सिध्यति। समाधत्ते। न वयमिति। अहंग्रहोपास्तिष्वयं व्यतिहार उपसंहर्तव्य इत्याह। तस्मादिति॥

## सैव हि सत्यादयः ॥ ३८ ॥

'स यो हैतत् महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायानन्तरमाम्नायते 'तद्यत् तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' इत्यादि । तत्र संशयः, किं द्वे एते सत्यविद्ये किं वैकैवेति । द्वे इति तावत् प्राप्तं, भेदेन हि फलसम्बन्धो भवति 'जयतीमाँल्लोकान्' इति पुरस्तात्, 'हन्ति पाप्मानं जहाति च' इत्युपरिष्टात्, प्रकृताकर्षणं तूपास्यैकत्वादित्येवं प्राप्ते ब्रूमः। एकैवेयं सत्यविद्येति। कुतः, 'तद्यत् तत्सत्यम्' इति प्रकृताकर्षणात्। ननु विद्याभेदेऽपि प्रकृताकर्षणमुपास्यैकत्वादुप-

---

सैव हि सत्यादय. । स य कश्चिदधिकारी महद्यापकं यक्षं पूज्यं भौतिकेषु प्रथमजमेतत् सच्च तच्चेति सत्यं ब्रह्म हिरण्यगर्भाख्यं वेदोपास्ते तस्य लोकजयः फलमित्यर्थः। सत्यमिति नामाक्षरं सत्यमिति, तत्र प्रथमोत्तममक्षरं सत्यं, मध्यस्थमक्षरमनृतं, उभयतः सत्येन संपुटितत्वात् सत्यप्रायमेव भवतीति नामाक्षरोपासना सत्यविद्याङ्गत्वेनोक्ता । यत् पूर्वप्रकृतं हृदयाख्यं तत् संप्रत्युक्तयक्षेत्यादिगुणक, सो,ऽसावादित्यमण्डलेऽक्षिणि च पुरुषस्तस्याहरित्यहमिति च नामद्वयज्ञानात् पापक्षयः फलमित्यर्थः। अत्र पूर्वोत्तरवाक्ययोः फलभेदश्रुतेः प्रकृताकर्षणाच्च संशयमाह । तत्रेति। पूर्वपक्षे गुणाना व्यवस्थयानुष्ठानं, सिद्धान्ते त्वनुष्ठानैक्यमिति फलं। यथा जीविप्रयोरन्योऽन्यात्मत्वं प्रतिश्रुतिभेदात् वैरूप्यमुक्तं, तथात्र फलश्रुतिभेदात् विद्याभेद इति दृष्टान्तेन पूर्वपक्षयति। द्वे इति। विशिष्यब्रह्मणानाकर्षणमयुक्तं, तद्यत्तदिति सर्वनामभि' पूर्वोक्तगुणविशिष्टं ब्रह्म आकृष्यादित्याक्षिस्थानादिगुणविधानात्, तथा च वाक्यादेव विद्यैक्यसिद्धिरिति सिद्धान्तयति। एकैवेति। यथा दहर-

पद्यत इत्युक्तं, नैतदेवं यत्र हि विस्पष्टात् कारणान्तरादि-
द्याभेदः प्रतीयते तत्रैतदेवं स्यात्, अत्र तूभयथासम्भवे तद्यत्
तत्सत्यमिति प्रकृताकर्षणात् पूर्वविद्यासम्बद्धमेव सत्यमुत्तरत्रा-
कृष्यत इत्येकविद्यात्वनिश्चयः। यत्पुनरुक्तं फलान्तरश्रवणात्
विद्यान्तरमिति। अत्रोच्यते, तस्योपनिषदहरहमिति चाङ्गा-
न्तरोपदेशस्य स्तावकत्वमिदं फलान्तरश्रवणमित्यदोषः। अपि
चार्थवादादेव फले कल्पयितव्ये सति विद्येकत्वे चावयवेषु श्रूय-
माणानि बहून्यपि फलान्यवयविन्यामेव विद्यायामुपसंहर्त-
व्यानि भवन्ति, तस्मात् सैवेयमेका सत्यविद्या तेन तेन विशेषेणो-
पेताऽऽम्नायत इत्यतः सर्व एव सत्यादयो गुणा एकस्मिन् प्रयोगे
उपसंहर्तव्याः। केचित् पुनरस्मिन् सूत्रे इदं वाजसनेयकमक्ष्या-
दित्यपुरुषविषयं वाक्यं, छान्दोग्ये च 'अथ य एषोऽन्तरादित्ये
हिरण्मयः पुरुषो दृश्यतेऽथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते'

---

शाण्डिल्यविद्ययोर्ब्रह्मैक्यप्रत्यभिज्ञानमात्र तथात्र नेत्याह। नैतदिति।
कारणान्तरं प्रकरणभेदादिकं। एवं विद्याभेदेऽप्येतदुपासकज्ञानं स्यात्,
अत्र तूभयथासम्भवे विद्यैक्यनानात्वसंशये सत्यमित्युपास्यरूपैक्यज्ञानात्
विद्यैक्यनिश्चय इत्यक्षरार्थः। असत्यपवादकारणे रूपैक्यात् विद्यैक्यात्
सर्गसिद्धिर्न च फलभेदापवादः। अङ्गे फलश्रुतेः श्रुतिमात्रतया फल-
भेदासिद्धिरित्याह। यत्पुनरित्यादिना। किञ्च यत्र प्रधानविधावेवं-
काम इति फलं श्रुतं, तत्र प्रधानफलेनैवाङ्गानां फलाकाङ्क्षानिवृत्तेरङ्गे
फलश्रुतेः स्तुतिमात्रत्वं, इह तु प्रथमजं सत्यं ब्रह्मेति वेदेति प्रधान-
विद्याविधिस्थत्वं लोकजयफलस्याभ्युपेत्यास्माभिर्नामरूपाङ्गस्य फलश्रुतेः
स्तुतित्वमुक्तं। वस्तुतस्तु प्रधानविधावप्येवंकामपदाभावाद्वा त्रिसत्र-
न्यायेन फले कल्पनीये सति प्रधाने तदङ्गे वा यत्किञ्चित् फलं श्रुतं

इत्युदाहृत्य सैवेयमक्ष्यादित्यपुरुषविषया विद्योभयत्रैकेति कृत्वा सत्यादिगुणान् वाजसनेयिभ्यः छन्दोगानामुपसंहार्यान्मन्यन्ते, तन्न साधु लक्ष्यते । छान्दोग्ये हि कर्मसम्बन्धिनीयमुद्गीथव्यपाश्रया विद्या विज्ञायते, तत्र ह्यादिमध्यावसानेषु कर्मसम्बन्धिचिह्नानि भवन्ति 'इयमेवर्गग्निः साम' इत्युपक्रमे 'तस्य ऋक् च साम च गेष्णौ तस्मात् उद्गीथः' इति मध्ये 'य एवं विद्वान् साम गायति' इत्युपसंहारे, नैवं वाजसनेयके किञ्चित् कर्मसम्बन्धि चिह्नमस्ति,तत्र प्रक्रमभेदात् विद्याभेदे सति गुणव्यवस्थैव युक्तेति॥

## कामादीतरत्र तत्र चायतनादिभ्यः॥ ३९॥

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरो ऽस्मिन्नन्तराकाशः' इति प्रस्तुत्य छन्दोगा अधीयते 'एष आत्मा-ऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इत्यादि, तथा वाजसनेयिनः 'स वा एष

---

तस्य सर्वस्यापि श्रुतत्वाविशेषाज्जातेष्टिफलन्यायेन समुचित्यैकप्रधानफलत्वकल्पनात् फलभेदोऽसिद्ध इत्याह । अपि चेति । सूत्रं योजयति । तस्मादिति । एकदेशिव्याख्यामुद्भाव्य दूषयति । केचिदित्यादिना । छान्दोग्ये कर्माङ्गोद्गीथे हिरण्यपुरुषदृष्टिरित्यत्र लिङ्गमाह । तत्रेति । पृथिव्यग्न्यात्मना दृष्टे ऋक्सामे गेष्णौ, तस्मादृक्सामगेष्णत्वात्, पुरुष उद्गीथ इत्येवंविद्वानुद्गाता कर्मफलसमृद्धिसमर्थ इति श्रुत्यर्थः । सत्यविद्या तु न कर्माङ्गाश्रितेत्याह । नैवमिति । अङ्गविद्यान्तः स्वतन्त्र-हिरण्यगर्भविद्यायामभेदोऽत्र गुणोपसंहार इत्यर्थः ॥

कामादीतरत्र। सगुणनिर्गुणविद्ययोः श्रुताः सत्यकामादयो वशित्वादयश्च गुणा मिथ उपसंहर्तव्या न वेत्युपसंहारस्य फलभावाभावाभ्यां सन्देहे

महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' इत्यादि, तत्र विद्यैकत्वं परस्पर-गुणोपयोगस्य किं वा नेति संशये विद्यैकत्वमिति, तत्रेदमुच्यते। कामादीति। सत्यकामादीत्यर्थः। यथा देवदत्तो दत्तः सत्यभामा भामेति। यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते तदितरत्र वाजसनेयके 'स वा एष महानज आत्मा' इत्यत्र सम्बध्येत। यच्च वाजसनेयके वशित्वाद्युपलभ्यते तदपीतरत्र छान्दोग्ये 'एष आत्माऽपहतपाप्मा' इत्यत्र सम्बध्येत, कुतः, आयतनादिसामान्यात्। समानं ह्युभयत्राऽपि हृदयमायतनं समानश्च वेद्य ईश्वरः समानञ्च तस्य सेतुत्वं लोकासम्भेदप्रयोजनमित्येवमादि बहुतरं सामान्यं दृश्यते। ननु विशेषोऽपि दृश्यते छान्दोग्ये हृदयाकाशस्य गुणयोगो वाजसनेयके त्वाकाशस्थस्य ब्रह्मणः, इति। न, 'दहर उत्तरेभ्यः' इत्यत्र [वे०सू०१।३।१४] छान्दोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात्। अयन्त्वत्र विद्यते विशेषः, सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इत्यात्मवत्

---

सत्यविद्याया एकत्वाद्गुणसाङ्कर्येऽप्यत्र विद्ययोः सगुणनिर्गुणरूपभेदेन भेदात् निर्गुणविद्यायां गुणोपसंहारस्य फलाभावाच्चानुपसंहार इति वह्निरेव प्राप्ते सिद्धान्तयति। तत्रेदमित्यादिना। एवं विद्याभेदे स्फुटे कथं गुणोपसंहारस्तत्राह। गुणवत्स्त्विति। भिन्नविद्यास्थानामपि गुणानामायतनादिसाम्येन निर्गुणस्थले बुद्धिस्थाना स्तुत्यर्थमुपसंहारो युक्त', ध्यानस्तुतिप्रकर्षणस्याकाङ्क्षितत्वात्, यत्र क्वचित् दृष्टगुणैः स्तुतेः कर्तुं

कामानामपि वेद्यत्वश्रवणात्, वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमानं दृश्यते 'अत ऊर्द्धं विमोक्षायैव ब्रूह्यसङ्गो ह्ययं पुरुषः' इत्यादिप्रश्नप्रतिवचनसमन्वयात्, वशित्वादि तु तत्तत्-स्तुत्यर्थमेव गुणजातं वाजसनेयके सङ्कीर्त्यते। तथा चोपरिष्टात् 'स एष नेति नेत्यात्मा' इत्यादिना निर्गुणमेव ब्रह्मोपसंहरति। गुणवतस्तु ब्रह्मण एकत्वादिभूतिप्रदर्शनायायं गुणोपसंहारः सूचितो नोपासनायेति द्रष्टव्यम्॥

## आदरादलोपः॥ ४०॥

छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा' इति। तत्र पञ्च प्राणाहुतयो विहिताः, तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं विद्वानग्निहोत्रं जुहोति' इति,

'यथेह क्षुधिता बाला मातरं पर्युपासते।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासते'॥ इति च।

तत्रेदं विचार्यते किं भोजनलोपे लोपः प्राणाग्निहोत्रस्यो-

---

योग्यत्वात्। यद्यपि सगुणस्य सत्यकामादिषु निर्गुणस्य गुणा अन्तर्भूता एव तथापि नोपसंहारोक्तेर्वैयर्थ्यं निर्गुणज्ञापकत्वेन श्रुतगुणानामन्यत्राध्येयत्वमिति शङ्कानिरासेनान्तर्भाववदार्थ्यर्थत्वादित्यनवद्यम्॥

आदरादलोपः। अत्र पञ्चाग्निहोत्रशब्दाभ्यां संशयमाह। तत्रेदं विचार्यत इति। वैश्वानरोपासकेनातिथिभोजनात् प्राक् कार्यत्वेन विद्याभिप्रायाग्निहोत्रविधानात् पादसङ्गतिः। पूर्वपक्षे भोजनलोपेऽपि

तल्लोपः इति, 'तद्यद्भक्तं' इति भक्तागमनसंयोगात्, भक्तागमनस्य च भोजनार्थत्वात् भोजनलोपे लोपः प्राणाग्निहोत्रस्येति, एवं प्राप्ते न लुप्येत इति तावदाह, कस्मात् आदरात्। तथा हि वैश्वानरविद्यायामेव जाबालानां श्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात् यथा वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तत्' इत्य-तिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति। या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते। ननु भोजनार्थभक्तागमनसंयोगात् भोजनलोपे लोपः प्रापितः। न, तस्य द्रव्यविशेषविधानार्थत्वात्। प्राकृतेऽग्निहोत्रे पयः-प्रभृतीनां द्रव्याणां नियतत्वादिहाप्यग्निहोत्रशब्दात् कौण्ड-पायिनामयनवत् तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यकतागुणविशेष-विधानार्थमिदं वाक्यं तद्यद्भक्तमिति, अतो गुणलोपे च न मुख्य-स्येत्येवं प्राप्ते भोजनलोपेऽप्यद्भिरन्येन वा द्रव्येणाविरुद्धेन प्रति-निधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमित्यत उत्तरं पठति॥

---

द्रव्यान्तरेण प्राणाग्निहोत्रानुष्ठानं, सिद्धान्ते तल्लोप इति भेदः। ननु यद्भक्तमिति यच्छब्देन भोजनाक्षिप्तभक्तमनूद्य तद्धोमीयमिति होम-संयोगविधानादाक्षिप्तभोजनलोपे तदा भक्ताश्रितहोमलोप इति सि-द्धान्तो युज्यते। तद्वदिति। निर्गुणस्योपास्तिलोपेऽपि स्तुत्यर्थगुणस्थै-र्यात् भोजनलोपेऽपि प्राणाग्निहोत्रस्यादरेण स्तुतिनिर्वाहार्थमलोप इति दृष्टान्तेन पूर्वपक्षसूत्रेण परिहरति। एवं प्राप्त इति। एवं तद्दिति स्वयं प्राणाग्निहोत्रमकृत्वातिथीनां तत्करणमित्यर्थः॥

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

उपस्थिते भोजने अतस्तस्मादेव भोजनद्रव्यात् प्रथमोपनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यं, कस्मात् तद्वचनात्। तथा हि 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्' इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति, ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः। न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति, कुण्डपायिनामयने हि 'मासमग्निहोत्रं जुहोति' इति विस्पष्टेऽग्रगतोऽग्निहोत्रशब्दस्तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः, इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भाव विधापयितुमर्हति। तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धर-

---

उक्तं स्मारयित्वा परिहरति। न चेत्यादिना। यथा कुण्डपायिसत्त्रगते मासाग्निहोत्रे अग्निहोत्रशब्दाद्धौणमित्यग्निहोत्रधर्माणां पयोद्रव्यादीनां प्राप्तिस्तथेहापि प्राणाहुतीष्वग्निहोत्रशब्दात् पयोद्रव्यादीनामुत्सर्गत प्राप्तौ सत्यां भोजनार्थभक्तद्रव्यविधिनापवाद' कृत', अतो भक्तविधेरपवादार्थत्वात् भोजनलोपे भक्ताख्यगुणस्याङ्गस्य लोपेऽपि मुख्यस्याग्निहोत्रस्य लोप, अपवादाभावे उत्सर्गप्राप्तपयआदिना तस्य निष्पत्तिसम्भवादिति प्राप्तमित्यर्थः। 'गुणलोपे न मुख्यस्य' इति जैमिनिसूत्र। आधाने सन्ति पवमानेष्टयस्तत्राग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदिति निर्वापः श्रुतस्तदङ्गत्वेनाग्निहोत्रहवन्या हवींषि निर्वपेदिति दर्शपूर्णमासाख्यप्रकृतौ विहिताग्निहोत्रहवन्यतिदेशेन प्राप्ता आधानकाले चाग्निहोत्राभावात् तस्या गुणभूताया लोपेऽपि मुख्यस्य निर्वापस्य न लोप इत्यर्थ। आरब्धनित्यादिकर्मणोऽवश्यानुष्ठेयत्वाच्छ्रुतद्रव्यालाभे प्रतिनिहितद्रव्येणापि कर्म कर्तव्यमिति।

णादयोऽपि प्राप्येरन्, न चास्ति सम्भवः अग्न्युद्धरणं ताव-द्धोमाधिकरणभावाय, न चायमग्नौ होमः भोजनार्थताव्याघातप्रसङ्गात्, भोजनार्थोपनीतद्रव्यसम्बन्धाच्चास्य एवैष होमः। तथा च जाबालश्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात्' इति अत्राधारामेवेमां होमनिर्वृत्तिं दर्शयति। अत एव चेहापि सम्पादिकान्येवाग्निहोत्राङ्गानि दर्शयति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति। वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, मुख्याग्निहोत्रे वेद्यभावात् तदङ्गानाञ्चेह सम्पिपादयिषितत्वात्। भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसम्भवः, एवमन्येऽप्युपस्थानादयो धर्माः केचित् कथञ्चिद्विरुध्यन्ते।

---

प्रतिनिधिन्यायः। सिद्धान्तयति। उपस्थित इति। तद्वचनादिति, तद्धोमीयमिति तच्छब्देन भोजनार्थं सिद्धभक्तमाश्रित्य होमविधानादित्यर्थः। सिद्धवद्भक्तोपनिपातः प्रकृतभक्तागमनं, तस्य तच्छब्देन परामर्शो नेत्यर्थः। आश्रित्य विहिताहुतीनामाश्रयलोपे लोप एव न द्रव्यान्तराक्षेपकत्वं, यथा क्रतुप्रयुक्ताप्रणयनाश्रितस्य गोदोहनस्य क्रतुलोपे लोपो न त्वाश्रयान्तरप्रयोजकत्वं तथेति फलितमाह। ता इति। यदुक्तमग्निहोत्रशब्दात् द्रव्यान्तरप्राप्तिरिति तत्राह। न चात्रेति। तद्भावो नित्याग्निहोत्रसादृश्यं अर्थवादस्थशब्दस्य स्तुतित्वेनोपपत्तेरित्यर्थः। धर्मप्रापकत्वे दोषमाह। तद्धर्मप्राप्तौ चेति। अत एवेति तद्धर्मप्राप्त्यभावादेवेत्यर्थः। प्राप्तौ सम्पादनं वृथा स्यादिति भावः। मुख्याग्निहोत्राङ्गानि सम्पाद्यन्ते चेत् कथं तदनङ्गं वेदिरत्र सम्पाद्यते तत्राह। वेदिश्रुतिश्चेति। मुख्याग्निहोत्रस्याग्न्युद्धरणवत् सायंप्रातःकालद्वयस्यापि न प्राप्तिरित्याह। भोजनेनेति। उपस्थानपरिस्तरणादयोऽप्यग्न्य-

तस्मात् भोजनपच एवैते मन्त्रद्रव्यदेवतासंयोगात् पञ्च होमा निर्वर्तयितव्याः। यत्त्वादरदर्शनवचनं तत्तु भोजनपक्षे प्राथम्यविधानार्थं, न ह्यस्ति वचनस्यातिभारः। न त्वनेनास्य नित्यता शक्यते दर्शयितुं, तस्मात् भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं ॥ ४२ ॥

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्येवमादीनि, किन्तानि नित्यान्येव स्युः कर्मसु पर्णमयीत्वादिवत् उतानित्यानि गोदोहनादिवदिति विचारयामः। किं तावत् प्राप्तं नित्यानीति। कुतः प्रयोगवचनपरिग्रहात्, अनारभ्याधीतान्यपि ह्येतान्युद्गीथादिद्वारेण क्रतु-

---

भावात् न प्राप्नुवन्ति इत्याह। एवमिति। यस्मात् तद्धर्मप्राप्त्यभावस्तस्मात् भोजनद्रव्येणैव होम इत्युपसंहारे प्राणाय स्वाहा इत्यादयो मता। ननु स्वामिभोजनस्योत्तरकालत्वं श्रुत्यादिविहितं कथं पूर्वोऽतिथिभ्योऽश्नीयादिति वचनेन बाध्यते तत्राह। न ह्यस्तीति। उपासकान्यस्वामिविषयमुत्तरकालत्वविधानमित्यर्थः। न त्विति प्राथम्यमात्रेणेत्यर्थः। प्राणोपासकस्य प्राप्तभोजनप्राथम्यार्थतयादरस्यान्यथासिद्धौ फलितमाह। तस्मादिति॥

तन्निर्धारणा। उभयथा दृष्टान्तदर्शनात् संशयमाह। किन्तानीति। यथाऽनारभ्याधीतपर्णमयीत्वं जुहूद्वारा क्रत्वङ्गतया कर्मसु नित्यं प्रयुज्यते, तथाङ्गाश्रितोपासनान्युद्गीथादिद्वाराऽङ्गतया नित्यानि उत क्रत्वङ्गतया प्रणयनाश्रयो गोदोहनसंयोग पशुफलार्थत्वादनित्यत्वेन यथा प्रयुज्यते यथा वा पञ्चकृयूपाश्रयं वैल्वत्वमन्नाद्यफलत्वादनित्य तथा

सम्बन्धात् क्रतुप्रयोगवचनेनाङ्गान्तरवत् संस्पृश्यन्ते। यत्त्वेषां स्ववाक्येषु फलश्रवणं 'आपयिता ह वै कामानां भवति' इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रं अपापश्लोकश्रवणादिवत् न फलप्रधानं, तस्मात् 'यथा यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात् स्वप्रकरणपठितवन्नित्यता, एवमुद्गीथाद्युपासनानामपीत्येवं प्राप्ते ब्रूमः। तन्निर्धारणानियम इति। यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि 'रसतम आप्तिः समृद्धिर्मुख्यः प्राण आदित्यः' इत्येवमादीनि नैतानि नित्यवत् कर्मसु नियम्येरन्, कुतः, तद्दृष्टेः। तथा ह्यनियतत्वमेवैवंजातीयकानां

---

कर्मसमृद्ध्यादिफलकत्वादुपासनान्यनङ्गत्वेनानित्यानीति संशयार्थः, पूर्वपक्षे उपासनानां प्रयोगनित्यत्वं, सिद्धान्ते त्वनित्यत्वमिति फलभेदः। अनित्यभोजनाश्रयप्राणाग्निहोत्रस्यानित्यत्वं निरूप्य कर्माङ्गोपास्तीनां नित्यत्वमिति प्रत्युदाहरणदृष्टान्तेन पूर्वपक्षमाह। किं तावदिति। उपासनानि कर्माङ्गानि अफलत्वे सति कर्माङ्गाश्रितत्वात् पर्णत्वादिवत्, तथा चाङ्गतया प्रयोगविधिना नित्येन प्रयुज्येत इति प्राप्ते सिद्धान्तसूत्रं व्याचष्टे। यानीत्यादिना। उद्गीथादयः कर्मणां गुणाः अङ्गानि तेषां याथात्म्यं रसतमत्वादिकं तन्निर्धारयन्त्युपासनानि यानि तानि कर्मसु नित्यपर्णमयीत्वादिवन्न नियम्येरन्नित्यर्थः। एषां कर्माङ्गत्वे तद्धीनस्याविदुषः कर्म न स्यादङ्गलोपात्, तस्मादविदुषोऽपि कर्मकर्तृत्वश्रुतिलिङ्गैरङ्गत्वानुमानबाध इत्याह। तद्दृष्टेरिति। तस्यानियमस्य दर्शनादित्यर्थः। तां चेदविद्वान् प्रस्तोष्यति मूर्धा ते व्यपतिष्यतीति चाक्रायणेनर्त्विजामाक्षिप्तत्वादनुपासकानामपि कर्मप्रयोगोऽस्तीत्याह। प्रस्तावादीति। उपास्तीनां कर्मफलात् पृथक् फलश्रुतेर्न कर्माङ्गत्वमित्याह। अपि चेति। तेनोभावित्यक्षरेण यश्चैतदक्षरमेवं रसतमत्वादि-

दर्शयति श्रुतिः 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात् प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात् 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि तां चेदविद्वानुद्गास्यसि तां चेदविद्वान् प्रतिहरिष्यसि' इति। अपि चैवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते, कर्मफलसिद्धिप्रतिबन्धः तत्समृद्धिः रतिशयविशेषः कश्चित् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति। तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणात् वीर्यवत्तरमिति च तरप्प्रत्ययप्रयोगात्

---

रूपेण वेदोपास्ते यश्च न वेद तावुभौ कर्म कुरुत एव यद्यपि तथापि तु विद्याविद्ययोर्नानात्वं भिन्नफलत्वं। दृष्टं हि मणिविक्रये ज्ञानाज्ञानाभ्यां वणिग्व्याधयोः फलवैषम्यं, तस्माद्यदेव कर्म विद्ययोद्गीथाद्युपास्त्या श्रद्धयास्तिक्यबुद्ध्योपनिषदा रहस्यदेवताध्यानेन करोति तदेव कर्म फलातिशयवदित्यर्थः। कर्मणो वीर्यवत्त्वं नाम फलवत्त्वं विद्याहीनस्यापि गम्यमानं विद्याया अनङ्गत्वे लिङ्गमिति भावः। नास्ति लोकादिदृष्ट्युपासनेषु कर्मसमृद्ध्यतिरिक्तलोकादिफलश्रुतेश्च नाङ्गत्वमित्याह। तथेति। अस्मै विदुषे कल्पन्ते भोगाय समर्था भवन्ति भूमेरूर्ध्वा लोका आवृत्ता अधस्तनाश्चेत्यर्थः। तथा हि गुणवाद इति फलश्रुतेरर्थवादमात्रत्वे स्तुतिलक्षणा स्यात्, सा न युक्ता, मुख्यवृत्त्या फलपरत्वसम्भवात्। प्रयाजानुयाजकर्मणान्तु प्रकरणाद्दर्शाद्यङ्गत्वफलालाभात् आढ्याभिभूतिफलश्रुतेरगत्या स्तुतिलक्षकत्वं, यद्यपि पर्णमयीत्वादीनामङ्गत्वबोधकं प्रकरणं नास्ति तथापि तेषु फलश्रुतेः स्तुतित्वं,

विद्याविहीनमपि कर्म वीर्यवदिति गम्यते, तथानित्यत्वे विद्याया उपपद्यते, नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदभ्यनुज्ञायेत, सर्वाङ्गोपसंहारे हि वीर्यवत् कर्मेति स्थितिः। तथा लोकसामान्यादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' इत्येवमादीनि। न चेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुं, तथा हि गुणवाद आपद्येत, फलोपदेशे तु मुख्यवादोपपत्तिः, प्रयाजादिषु त्वितिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात्तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वं, तथाऽनारभ्याधीतेष्वपि पर्णमयीत्वादिषु, न हि पर्णमयीत्वादीनामक्रियात्मकानामाश्रयमन्तरेण फलसम्बन्धोऽवकल्पते, गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः। तथा वैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः,

---

तेषामक्रियात्वे क्रियासम्बन्धं विना फलहेतुत्वानुपपत्तेरतस्तेषां फलार्थक्रियापेक्षितत्वात् क्रतोश्च जुह्वप्रकृतिद्रव्याकाङ्क्षितत्वात् पर्णमयी जुहूरित्यादिवाक्येनैव प्रकृतिद्रव्यापेक्षया जुहूद्वारा सन्निहितक्रत्वङ्गत्वसिद्धेर्युक्तं फलश्रुतेरर्थवादत्वमिति भावः। अक्रियात्मकगोदोहनादेरपि फलश्रुतिरर्थवादः स्यादत आह। गोदोहनादीनां हीति। यदाऽपःप्रणयनेन पशुकामस्य सतो गोदोहनेन ब्रह्मवर्चसकामस्य कांस्येनेति फलार्थविधिरेव नार्थवादः, गोदोहनादेः क्रत्वनाकाङ्क्षितत्वेनाङ्गत्वाभावात्, चमसेन निराकाङ्क्षक्रियासम्बन्धितया स्वफलबाधकत्वसम्भवात्। तथा खादिरत्वेन निराकाङ्क्षक्रत्वङ्गयूपमाश्रित्य वैल्वमन्नाद्यकामस्य खादिरं वीर्यकामस्येति फलार्थविधिरेवार्थः। पर्णमयीत्वादिषु फलविधिः किं न स्यादत आह। न त्विति। एवंविधो यूपादिस्तन्निराकाङ्क्ष इत्यर्थः। जुह्वैवाश्रय इत्यत आह। वाक्येनेति। जुह्वाः प्रकृतिः इत्या-

न तु पर्णमय्यादिष्वेवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति, वाक्येनैव तु जुह्वाद्याश्रयतां विदधता फले च विधिं विदधतो वाक्यभेदः स्यात्, उपासनानां तु क्रियात्मकत्वात् विशिष्टविधानोपपत्तेरुद्गीथाद्याश्रयाणां फलविधानं न विरुध्यते, तस्मात् यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यान्येवमुद्गीथाद्युपासनान्यपि इति द्रष्टव्यम्। अत एव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः ॥

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

वाजसनेयके 'वदिष्याम्येवाहमिति वाग्दध्रे' इत्यत्राध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितोऽधिदैवमग्न्यादीनां वायुः । तथा छान्दोग्ये 'वायुर्वाव संवर्गः' इत्यत्राधिदैवमग्न्यादीनां वायुः संवर्गोऽवधारितः 'प्राणो वाव संवर्गः' इत्यत्राध्यात्मं वागादीनां प्राणः । तत्र संशयः, किं पृथगिमौ वायुप्राणावुपगन्तव्यौ स्या-

---

पेक्षितत्वादनेनैव वाक्येन क्रत्वङ्गतया जुहूप्रकृतिद्रव्यसम्बन्धो विधेयः पश्चान्निराकाङ्क्षं जुहूमाश्रित्य तस्यैव प्रकृतेः इत्यस्य फलसंयोगो विधेय इति वाक्यभेद इत्यर्थः । पर्णतादिवैलक्षण्यमुपासनानामाह । उपासनानां त्विति । स्वयं नित्यादिकविशिष्टत्वेन विधानोपपत्तिरित्यर्थः । तस्मादिति अङ्गत्वावेदकमानाभावादित्यर्थः । अत एवेति अनङ्गत्वादेवेत्यर्थः । तस्मादङ्गोपास्त्यभावेऽपि कर्माधिकार इति सिद्धम् ॥

प्रदानवदेव तदुक्तम् । वायुप्राणयोर्भेदाभेदवाक्याभ्यां संशयमाह । तत्रेति । यत्तु कर्माङ्गानां तत्सम्बन्धोपास्तीनां च फलभेदान्नित्यत्वानित्यत्वरूपः प्रयोगभेदः, इह तु वायुप्राणयोः स्वरूपभेदात् तत्सस्वरूप-

तामुतापृथक्त्वमेवेति। अपृथगिति तावत् प्राप्तं, तत्त्वाभेदात्, न ह्यभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यं। दर्शयति च श्रुतिरध्यात्ममधिदैवतञ्च तत्त्वाभेदं 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यारभ्य। तथा 'अत एते सर्व एव समाः सर्वेऽनन्ताः' इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति। तथान्यत्रापि तत्र तत्राध्यात्ममधिदैवञ्च बहुधा तत्त्वाभेददर्शनं भवति। क्वचिच्च 'यः प्राणः स वायुः' इति विस्पष्टमेव वायुं प्राणञ्चैकीकरोति। तथोदाहृतेऽपि वाजसनेयिब्राह्मणे 'यतश्चोदेति सूर्यः' इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति। 'तस्मादेकमेव व्रतञ्चरेत् प्राण्याच्चैवापान्याच्च' इति च प्राणव्रतेनैवैकेनोपसंहरन्नेतदेव द्रढयति।

---

प्राप्तिसत्त्वफलैक्याच्च ध्यानप्रयोगैक्यमिति पूर्वपक्षयति। अपृथगिति। 'अग्निर्वाक् भूत्वा' इत्यारभ्य 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्यभेदं दर्शयतीत्यर्थः। 'यतश्चोदेति सूर्यस्तं वद' इति प्रश्ने सूत्रात्मकवायुर्वाच्यः वायुस्थाने प्राणः। वदेत्येकत्वं तयोर्दर्शयतीत्याह। तथेति। किञ्च यदि वायुप्राणयोः पृथक् विधानं स्यात् तर्हि ध्यानाङ्गव्रतभेदोऽपि स्यात् इह तु प्राणापाननिरोधात्मकव्रतैक्यश्रुतेर्ध्यानैक्यमित्याह। तस्मादिति, व्रतैक्यस्य प्रशस्तत्वादित्यर्थः। किञ्च वायुप्राणौ संवर्गौ भेदेनोपक्रम्य परस्ताद्वाक्यशेषे संवर्गभेदैक्यश्रुतेः प्रयोगैक्यमित्याह। तथेति। महात्मनः इति द्वितीयाबहुवचनं। चतुरश्चतुःसङ्ख्याकान् अग्निसूर्योदकचन्द्रात्मपरांश्च वाक्चक्षुःश्रोत्रमनोरूपानेकः देवः, कः प्रजापतिः, जगार जीर्णवानुपसंहृतवानित्यर्थः। न ब्रवीति भेदमिति शेषः। यथा 'अग्निहोत्रं जुहोति' इत्युत्पन्नाग्निहोत्रस्यैकस्यैव दधितण्डुलादिगुणभेदेन सायंप्रातःकालभेदेन प्रयोगभेदस्तथा 'अन्नादो भवति य एवं वेद' इत्य-

तथा छान्दोग्येऽपि 'परस्तान्महात्मनश्चतुरो देव एकः कः सो जगार' इत्येकमेव संवर्गं गमयति न ब्रवीत्येक एकेषाञ्चतुर्णां संवर्गोऽपरोऽपरेषां, तस्मादपृथक्त्वमुपगमनस्येत्येवं प्राप्ते ब्रूमः। पृथगेव वायुप्राणावुपगन्तव्याविति, कस्मात् पृथगुपदेशात्। आध्यानार्थो ह्ययमध्यात्माधिदैवविभागोपदेशः सोऽसत्याध्यानपृथक्त्वेऽनर्थक एव स्यात्। ननूक्तमपृथगनुचिन्तनं तत्त्वाभेदादिति, नैष दोषः, तत्त्वाभेदेऽप्यवस्थाभेदादुपदेशभेदवशेनानुचिन्तनभेदोपपत्तेः। श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात्। 'स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः' इति चोपमानोपमेयकरणात्। एतेन व्रतोपन्यासो व्याख्यातः। एकमेव व्रतमिति चैवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः, भग्नव्रतानि हि वागादीन्युक्तानि 'तानि मृत्युः श्रमो भूत्वोपयेमे' इति श्रुतेः न वायुव्रतनिवृत्त्यर्थः। 'अथातो व्रतमी-

---

त्मनायाः संवर्गविद्याया एकत्वेऽप्युत्पन्नभिन्नवायुप्राणाख्यगुणभेदात् प्रयोगभेद इत्युत्सूत्रं सिद्धान्तयति। पृथगेवेति। 'तौ वा एतौ द्वौ संवर्गौ' इत्युपास्यभेदवाक्यस्य प्रयोगभेदपरत्वाद्वाक्यादेव भेदसिद्धिरित्यर्थः। पूर्वपक्षयुक्तमनूद्य प्रत्याह। ननूक्तमित्यादिना। उपास्यतया प्रधानभूतसंवर्गगुणविशिष्टोपास्यभेदवाक्यविरोधादनुपास्यवायुतत्त्वैक्यवचनं न प्रयोगैक्यप्रापकमिति भावः। सूर्योदयास्तमययोर्वाय्वधीनत्वात्तदभेदाभिप्रायेण प्राणावुक्तौ। ततोऽध्यात्माधिदैवावस्थाभेदेनोक्तस्य ध्येयभेदस्य निरासे 'यतश्चोदेति' इति श्लोकस्य न शक्तिरित्याह। श्लोकेति। असामर्थ्ये लिङ्गमाह। सामर्थ्येति। श्लोकोपन्यासवद्व्रतैक्योपन्यासोऽपि तत्त्वाभेदाभिप्रायेणेत्याह। एतेनेति। नन्वेवकाराद्वायुव्रतनिवृत्तेः प्राप्य

मांसा' इति प्रस्तुत्य तुल्यवद्वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात्। 'एकमेव व्रतञ्चरेत्' इति चोक्त्वा 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति वायुप्राप्तिं फलं ब्रुवन् वायुव्रतमनिवर्तितं दर्शयति, *देवता ह्यत्र वायुः स्यात् अपरिच्छिन्नात्मत्वस्य प्रेप्सितत्वात्, पुरस्तात् प्रयोगाच्च, 'सैषानस्तमिता देवता यद्वायुः' इति। तथा 'तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति भेदेन व्यपदिशति 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' इति च भेदेनैवोपसंहरति, तस्मात् पृथगेवोपगमनं, प्रदानवत् यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रियाधिराजायेन्द्राय स्वराज्ञे' इत्यस्यां त्रिपुरोडाशिन्या-

---

एवैको ध्येयो भातीत्यत आह। एकमेवेति। वदनदर्शनादीनि वाक्चक्षुरादीनां व्रतानि श्रमरूपमृत्युना भग्नानीत्युक्त्वा प्राणस्याभग्नव्रतत्वं निर्धारितं, तथा ज्वलनतापादीन्यग्न्यादित्यादीनां व्रतानि भग्नानीत्युक्त्वा वायोरभग्नव्रतत्वं निर्धारितं, 'स यथैषां प्राणानां मध्यमः प्राणः स्थिरव्रत एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः' इति श्रुतेः, अतो भग्नव्रतनिरासार्थ एवकारो न वायुव्रतनिरुत्त्यर्थ इत्यर्थः। अत्रैवार्थे लिङ्गमाह। एकमिति। उकारश्चार्थे, तेन व्रतेन वायोः सायुज्यं समानदेहत्वं सलोकताञ्च जयतीत्यर्थः। नन्वत्र वायुप्राप्तिर्न श्रुतेत्यत आह। देवतेति। तस्मात् तत्त्वाभेददृष्ट्या व्रतैक्यमिति स्थितं, सम्प्रति पूर्वोक्तं पृथगुपदेशं विवृणोति। तथा तौ वा इति। सोत्रं दृष्टान्तं व्याचष्टे। प्रदानवदिति। त्रयः पुरोडाशाः अस्याः सन्तीति त्रिपुरोडाशिनीष्टिस्तस्यां किं सह प्रदानमुत भेदेनेति सन्देहे पूर्वपक्षमाह। सर्वेषामिति। सर्वेषां देवानामाभिमुख्येन प्रापयन् हविरवद्यति गृह्णाति, अच्छं वषट्कारं वषट्काराख्यदेवभागमित्यर्थः। यद्वा सर्वदेवार्थे युगपदवदानं कार्यमित्यत्र हेतुश्चं वषट्कारमिति। अव्यर्थत्वायेत्यर्थे हि एकार्थमवदाते

---

* देवतेत्यंशेति वर्ध० का०।

मिष्टौ 'सर्वेषामभिगमयन्नवद्यत्यच्छं वट्कारम्' इत्यतो वचना-
दिन्द्राभेदाच्च सहप्रदानाशङ्कायां राजादिगुणभेदात् याज्या-
नुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात् प्रदान-
पृथक्त्वं भवति, एवं तत्त्वाभेदेऽपि आध्येयांशपृथक्त्वादाध्यान-
पृथक्त्वमित्यर्थः । तदुक्तं सङ्कर्षे 'नाना वा देवता पृथग्ज्ञानात्'
इति [जै०सू०] । तत्र तु द्रव्यदेवताभेदात् यागभेदोऽपि
विद्यते नैवमिह विद्याभेदोऽस्ति उपक्रमोपसंहाराभ्यामध्या-
त्माधिदैवोपदेशेष्वेकविद्याविधानप्रतीतेः, विद्यैक्येऽपि त्वध्या-
त्माधिदैवभेदात् प्रवृत्तिभेदो भवति, अग्निहोत्र इव सायंप्रातः-
कालभेदादित्यभिप्रेत्य प्रदानवदित्युक्तम् ॥

---

हविषि प्रक्षेपो योगानर्हतया वृथा स्यादिति भावः । एवं सहावदन-
श्रुतेर्देवैक्याच्च पुरोडाशानां सहप्रक्षेपे प्राप्ते पृथक्प्रक्षेप इति सि-
द्धान्तमाह । राजेति । राजाधिराजस्वराजगुणभेदेन विभिन्नदेवता-
भेदादित्यर्थः । किञ्चाध्वर्युणा यजेति प्रैषकृते होत्रीयो मन्त्रः पठ्यते
सा याज्या, अनुब्रूहि इति प्रैषानन्तरमन्त्र. पुरोऽनुवाक्येति भेदोऽस्ति,
तत्रास्यामिष्टौ प्रथमपुरोडाशप्रदाने या कृता याज्या सा द्वितीयप्रदाने
पुरोऽनुवाक्या, या च पूर्वमनुवाक्या सा पश्चात् याज्येति व्यत्यासमन्वा-
हेति श्रुत्या विधानात्, यथाश्रुति प्रक्षेपपृथक्त्वमित्याह । याज्येति ।
सङ्कर्षो देवताकाण्डं । वाशब्दोऽवधारणे, नानैव देवता राजादिगुणभेदेन
भेदागमादिति सूत्रार्थः । दृष्टान्ते देवताभेदात् कर्मभेदवत् विद्याभेदः
स्यात् इत्यत आह । तत्र त्विति । कर्मोत्पत्तिवाक्यस्थदेवताभेदः
कर्मभेदे हेतुः, इह त्वन्नादौ भवति य एवं वेदेत्युत्पत्तावेकत्वेन ध्यान-
विद्यायाः पश्चात् कृतवायुप्राणभेदो न भेदकः, अग्निहोत्रस्येव दध्या-
दिद्रव्यभेद इत्यर्थः । तर्हि केनांशेन प्रदानस्य दृष्टान्तत्वमित्यत आह ।
विद्यैक्येऽपीति । अवस्थाभेदो देवताभेदः प्रयोगभेदस्तेत्यंशेनायं दृष्टान्त
इत्यर्थः ॥

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥

वाजसनेयिनोऽग्निरहस्ये 'नैव वा इदमग्रे सदासीत्' इत्यस्मिन् ब्राह्मणे मनोऽधिकृत्याधीयते 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान्मनश्चितः' इत्यादि, तथैव 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति पृथगग्नीनामनन्ति साम्पादिकान्, तेषु संशयः किमेते मनश्चिदादयः क्रियानुप्रवेशिनः तच्छेषभूता उत स्वतन्त्राः केवलविद्यात्मका इति। तत्र प्रकरणात् क्रियानुप्रवेशे प्राप्ते स्वातन्त्र्यं तावत् प्रतिजानीते, लिङ्गभूयस्त्वादिति। भूयांसि हि लिङ्गान्यस्मिन् ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते

---

लिङ्गभूयस्त्वात्। उत्पत्तेः प्राक् 'इदं सर्वं नैव सदासीन्नाप्यसदित्युपक्रम्य मनःसृष्टिमुक्त्वा 'मन आत्मानमैक्षत तीक्ष्णपूर्वकमग्नीनपश्यत्' इति मनोऽधिकृत्य पठन्ति इत्यर्थः। पुरुषायुषः शतसम्वत्सरान्तर्गतैः षट्त्रिंशत्सहस्रैरहोरात्रैरवच्छिन्नतया मनोवृत्तीनामसङ्ख्यानामपि षट्त्रिंशत्सहस्रत्वं। ताभिरिष्टकात्वेन कल्पिताभिर्मनसैव सम्पादिता अग्नयो मनश्चितस्तानर्कान् पूज्यान्मनोमयान्मनोवृत्तिषु सम्पादितात्मनः स्वस्य सम्बन्धित्वेन मनोऽपश्यत्, तथा वाक्प्राणादयोऽपि स्वस्ववृत्तिरूपानग्नीनपश्यन्नित्याह। तथेति। प्राणो घ्राणं, कर्मेन्द्रियैर्हस्तादिना चितः कर्मचितः, अग्निचितस्तृणपूर्वकाश्चापि चयनप्रकरणाः शृताः तेऽग्नयः क्रत्वर्था उत प्राधान्यज्ञापकलिङ्गादिभूयस्त्वात् पुरुषार्थां वेति संशयमाह। तेष्विति। केवलविद्यात्मकाः क्रियादिकं विना भावनामया इत्यर्थः। एकप्रयोगासम्भवाद्वायुप्राणयोरपि प्रयोगभेदोऽस्तु, इह तु मनश्चिदाद्यग्नीनां प्रकरणात् कर्माङ्गत्वेनैकप्रयोगत्वमिति प्राप्य सिद्धान्तमुपक्रमते। तत्रेत्यादिना। पूर्वपक्षे भावनाग्नीनां क्रत्वङ्गत्वमिष्टन्तेषां

'तद्यत् किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति चैवंजातीयकानि। तद्धि लिङ्गं प्रकरणाद्बलीयः, तदप्युक्तं पूर्वस्मिन् काण्डे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'इति [जै० सू०]॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥

नैतद्युक्तं स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति पूर्वस्य क्रियामयस्याग्नेः प्रकरणात् तद्विषय एवायं विकल्पविशेषोपदेशः स्यान्न स्वतन्त्रः। ननु प्रकरणाल्लिङ्गं बलीयः, सत्यमेव तत्, लिङ्गमपि त्वेवंजातीयकं न प्रकरणात् बलीयो भवति, अन्यार्थ-

---

क्रियाग्निना विकल्पः समुच्चयो वास्तु सिद्धान्ते पुरुषार्थत्वमिति फलं, तत्र सर्वप्राणिमनोवृत्तिभिर्मया सदाग्नयः श्रीयन्त इति ध्यानदार्ढ्ये सति सर्वभूतानि यत्किञ्चित् मनसा सङ्कल्पयन्ति तेषामेवाग्नीना सा कृतिः करणमित्येकं लिङ्गं, क्रियाङ्गस्य यत्किञ्चित्करणेन सिद्ध्यदर्शनादित्याह। तद्यदिति। एवंविदे स्वपते जाग्रतेऽपि तदीयाग्नीन् भूतानि सर्वदा चिन्वन्ति इति लिङ्गान्तरं, क्रियाङ्गस्य चोदितकालानुष्ठेयस्य सदा सर्वैरनुष्ठीयमानत्वायोगादित्यर्थः। षट्त्रिंशत्सहस्रत्वसङ्ख्याप्यनङ्गत्वे लिङ्गं एवंजातीयकपदेनोक्तं॥

एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति। पूर्वेति। पूर्वस्येष्टकाभिरग्निं चिनुत इत्युक्तस्य स एव लिष्टकाभिरिति सन्निहितस्यायं विकल्पविशेषोपदेशः सङ्कल्पमयत्वाख्यप्रकारभेदोपदेशः क्रियाग्निवत् साङ्कल्पिकाग्नयोऽप्यङ्गमिति यावत्, किं विधिवाक्यस्थं लिङ्गं प्रकरणाद्बलीयः

दर्शनं ह्येतत् साम्पादिकाग्निप्रशंसारूपत्वात्। अन्यार्थदर्शनञ्चासत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते। तस्मात् साम्पादिका अप्येतेऽग्नयः प्रकरणात् क्रियानुप्रवेशिन एव स्युः, मानसवत्, यथा द्वादशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येव आम्नायन्ते, स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात् क्रियाशेष एव भवति, एवमयमप्यग्निकल्प इत्यर्थः॥

---

अर्थवादस्थं वाऽऽद्यमङ्गीकरोति। सत्यमिति। न द्वितीय इत्याह। लिङ्गमिति। मानसाग्निविध्यर्थार्थवादस्थलिङ्गानां स्वार्थप्रापकानामभावात् दौर्बल्यमित्यर्थः। सूत्रस्थक्रियापदं व्याचष्टे। तस्मादिति। ननु अक्रियारूपाग्नीनां ध्यानमयानां कथं क्रियाङ्गत्वं तत्राह। मानसवदिति। द्वादशाहस्यान्त्याहर्द्वयं त्यक्त्वा मध्यस्थदशरात्रस्यैव रात्रादिषु प्रकृतित्वं, तद्धर्माणामेव तेष्वतिदेशात्तस्य मध्यदिनानुष्ठेयस्य सदोर्ध्वैरनुष्ठीयमानत्वात्, दशरात्रस्य दशमेऽहन्यर्थादेकादशेऽहनि मानसग्रहः श्रूयते, अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाति इति अनया रसया पृथिव्या पात्रेण समुद्रं त्वा प्रजापतिदेवताकं मनोग्रहं गृह्णते इति ग्रहः सोमरसः, मनसा रसत्वेन भावितमध्वर्युर्गृह्णाति इत्यर्थः। अत ऋत्विजां ध्यायितया विविधवाक्योच्चारणाभावादविवाक्यसंज्ञा। अङ्गः प्राप्या ग्रहणं नाम सोमपात्रस्योपादानं, गृहीतस्य स्वस्थाने स्थापनमासादनं, सोमस्य होमो हवनं कृतशेषादानं, आहरणं शेषभक्षणायर्त्विजां मिथोऽनुज्ञाकरणमुपह्वानं, ततो भक्षणमित्येतानि मानसान्येवेत्यर्थः। स च मानसो ग्रहो द्वादशाहादहरन्तरे स्वतन्त्रमित्याशङ्क्य द्वादशाहसंज्ञाविरोधात् नाहरन्तरं किन्तु प्रकरणादविवाक्यस्याङ्गमिति सिद्धान्तमाह। स चेति। कल्पः कल्पनाप्रकारः॥

## अतिदेशाच्च ॥ ४६ ॥

अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति 'षट्त्रिंशत् सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान् यावानसौ पूर्व.' इति। सति हि सामान्येऽतिदेशः प्रवर्तते ततश्च पूर्वेणेष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना साम्यादिकानग्नीनतिदिशन् क्रियानुप्रवेशमेवैषां द्योतयति ॥

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पक्षं व्यावर्तयति। विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नय. स्यु न क्रियाशेषभूता., तथा हि निर्धारयति 'ते हैते विद्याचित एव' इति 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति च ॥

## दर्शनाच्च ॥ ४८ ॥

दृश्यते चैषां स्वातन्त्र्ये लिङ्ग तत्पुरस्ताद्दर्शितं 'लिङ्गभूयस्त्वात्' इत्यत्र [वे० सू० ३।३।४४]। ननु लिङ्गमप्यसत्यामन्यस्यां प्राप्तावसाधक कस्यचिदर्थस्येत्यपास्य तत्प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसितमिति, अत उत्तर पठति ॥

---

केचित्त्वत्र भाष्ये दशरात्रशब्दो विकृतिपर, तत्रापि दशमेऽहन्यविवाक्यसंज्ञके मानसग्रहस्यातिदेशप्राप्ततयाङ्गत्वादित्याहु । मनश्चिदादीना क्रियाङ्गत्वे प्रकरणमुक्त्वा लिङ्गमाह। अतिदेशश्चेति। क्रियाङ्गत्वादग्न्यादतिदेश इत्यर्थ. ॥

सिद्धान्तमाह। विद्येति ॥

श्रुतिलिङ्गवाक्यै प्रकरण बाध्यमिति सूत्रत्रयार्थ ॥

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

नैवं प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः, श्रुत्यादिबलीयस्त्वात्। बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे, तानि चेह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते, कथ, श्रुतिस्तावत् 'ते हैते विद्याचित एव' इति, तथा लिङ्गं 'सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति, तथा वाक्यमपि 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति, 'विद्याचित एव' इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने बाधिता स्यात्। नन्वबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति। नेत्युच्यते, तदभिप्रायतायां हि विद्याचित इतीयता विद्यास्वरूपसङ्कीर्तनेनैव कृतत्वादनर्थकमिदमवधारणं भवेत्, स्वरूपमेव ह्येषामबाह्यसाधनत्वमिति। अबाह्यसाधनत्वेऽपि मानसग्रहवत् क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलमवधारणमर्थवत् भविष्यति। तथा 'स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नीन् चिन्वन्ति' इति सातत्यदर्शनमेतेषां स्वातन्त्र्येऽेव कल्पते। यथा साम्पादिके वाक्प्राणमये अग्निहोत्रे 'प्राणं तदा वाचि जुहोति वाचं तदा प्राणे जुहोति'

---

तत्रावधारणश्रुतेरन्यथासिद्धिं शङ्कते। नन्वबाह्येति। विद्याचित इतिपदेनैवाबाह्यसाधनत्वस्य लब्धत्वादवधारणं व्यर्थमित्याह। नेति। तर्हि कथमस्यार्थवत्त्वं तत्राह। अबाह्येति। लिङ्गं व्यनक्ति। तथेति। अमीनां सर्वकालव्यापित्वेनानङ्गत्वे दृष्टान्तमाह। यथेति। तदा ध्यानकाल इत्यर्थः। होमे यथा सातत्यमुच्यते तद्वदमीनां सातत्यदर्शनमित्यन्वयः। यदुक्तमर्थवादस्थत्वाल्लिङ्गं दुर्बलमिति तत्र सर्वदा

इत्युक्त्वा उच्यते 'एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति' इति । तद्वत् क्रियानुप्रवेशे तु क्रियाप्रयोगस्याऽल्पकालत्वात् न सातत्येनैषां प्रयोगः कल्पेत । न चेदमर्थवादमात्रमिति न्याय्यं, यत्र हि विस्पष्टो विधायको लिङ्गादिरुपलभ्यते युक्तं तत्र सङ्कीर्तनमात्रस्यार्थवादत्वं, इह तु विस्पष्टविध्यन्तरानुपलब्धेः सङ्कीर्तनादेवैषां विज्ञानानां विधानं कल्पनीयं, तच्च यथासङ्कीर्तनमेव कल्पयितुं शक्यत इति सातत्यदर्शनात् तथाभूतमेव कल्प्यते, ततश्च सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः । एतेन 'तद्यत् किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिः' इत्यादि व्याख्यातं । तथा वाक्यमपि 'एवंविदे' इति पुरुषविशेषसम्बन्धमेवैषामाचचाणं न क्रतुसम्बन्धं मृष्यते । तस्मात् स्वातन्त्र्यपच एव ज्यायानिति ॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तं ॥ ५० ॥

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यं यत्क्रियावयवान्मनआदिव्यापारेष्वनुबध्नाति 'ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्

---

सर्वभूतानि यदर्थममीन् चिन्वन्ति इति ध्यायेदित्यपूर्वार्थतया विधिकल्पनात्, तथा विधिवाक्यस्थत्वाल्लिङ्गं प्रकरणाद्बलवदित्याह । न चेदमित्यादिना । एतेनेति विधित्वेनेत्यर्थः । वाक्यं विद्यायोगीति । तथेति ॥

सम्पदुपास्त्यै मनोवृत्तिषु क्रियाङ्गानां योजनमनुबन्धः श्रुत्या क्रियते तदन्यथानुपपत्त्याप्यमीनां पुरुषार्थत्वं क्रत्वर्थत्वेऽङ्गानां सिद्धत्वेन सम्पा-

मनसाऽशंसन् *यत्किञ्चित् यज्ञे कर्म क्रियते यत्किञ्चित् यज्ञीयं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इत्यादिना। सम्पत्फलो ह्ययमनुबन्धः, न च प्रत्यक्षाः क्रियावयवाः सन्तः सम्पदा लिप्सितव्याः। न चाग्नेोहोत्राद्युपासनवत् क्रियाङ्गसम्बन्धात् तदनुप्रवेशित्वमाशङ्कितव्यं श्रुतिवैरूप्यात्, न ह्यत्र क्रियाङ्गं किञ्चिदादाय तस्मिन्नदो नामाध्यसितव्यमिति वदति, षट्त्रिंशतन्तु सहस्राणि मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत्। सङ्ख्या चेयं पुरुषायुषस्याहःसु दृष्टा सती तत्सम्बन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यं, एवमनुबन्धात् स्वातन्त्र्यं मनश्चिदादीनां। आदिशब्दादतिदेशाद्यपि यथासम्भवं योजयितव्यं, तथा हि 'तेषामेकैक एव

---

दनानुपपत्तेरित्याह। इतश्चेत्यादिना। ते अमय', आधीयन्त तेषामाधानं मनसैव कुर्यादित्यर्थः। कालस्यावच्छेदस्य नियमादचीयन्त इष्टकास्तेतथा इत्यर्थः। ग्रहाः पात्राणि, अस्तुवन् उद्गातारः स्तुवन्ति अशंसन् होतारः शंसन्ति, किं बहुना यत्किञ्चित् यज्ञे कर्मारादुपकारकं यज्ञीयं यज्ञस्वरूपोत्पादकञ्च तत्सर्वं मनोमयं कुर्यादिति श्रुत्यर्थः। वृत्तिष्वभिध्यानस्य क्रियानङ्गत्वेऽप्युद्गीथध्यानक्रियाङ्गाश्रितत्वं स्यान्नेत्याह। न चाग्नेोहोत्रेति। अङ्गावबद्धश्रुतितोऽस्या श्रुतेर्वैरूप्यं स्फुटयति। न हीति। अनङ्गवृत्तिषु साङ्गक्रतुसम्पादनं पुरुषस्य यज्ञत्वध्यानवत्त्वं स्वतन्त्रमित्यर्थः। अनादरार्थोऽतिदेशो न भवति किन्तु विकल्पार्थ इत्यत आह। न चेति। एकस्मिन् आत्मनि परोक्षसाधनयोर्विकल्पो भवति यथा व्रीहियवयोरत्र तु क्रियामेध्यानामीना साध्यभेदात् न विकल्प इत्यर्थः। अत एव समुच्चयोऽपि निरस्तः। यदुक्तं क्रियाङ्गत्वसामान्येनातिदेश इति तन्नेत्याह। यत्तु इति। सूत्रे बहुवचनार्थमाह। श्रुत्यादीनि चेति।

---

* यत्किञ्चित् यज्ञे कर्म क्रियत इति सर्व० पु० नास्ति।

तावान् यावानसौ पूर्वः’ इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन् क्रियायामनादरं दर्शयति। न च सत्येव क्रियासम्बन्धे विकल्पः पूर्वेणोत्तरेषामिति शक्यते वक्तुं। न हि येन व्यापारेणाहवनीयधारणादिना पूर्वः क्रियाया उपकरोति तेनोत्तरे उपकर्त्तुं शक्नुवन्ति। यत्तु पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्तं सति हि सामान्येऽतिदेशः प्रवर्तत इति, तदस्मत्पक्षेऽप्यग्निलसामान्येनातिदेशसम्भवात् सत्युक्तं। अस्ति हि साम्पादिकानामप्यग्नीनामग्निलमिति। श्रुत्यादीनि च कारणानि दर्शितानि। एवमनुबन्धादिभ्यः *कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनां प्रज्ञान्तरपृथक्त्ववत्, यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेनानुबन्धेनानुबध्यमानानि पृथ-

अनुबन्धातिदेशश्रुतिलिङ्गवाक्येभ्य इत्यर्थः। एवमित्यर्थ इति शेष। मनश्चिदादीनां स्वातन्त्र्ये क्रियाप्रकरणादुत्कर्षः स्यादित्याशङ्क्य स इष्ट इत्याह। दृष्टश्चेति। एकादशे चिन्तितं [माध० जै० न्यायमाला० ११।४।२] ‘राजा स्वाराज्यकामो राजसूयेन यजेत’ इति प्रकृत्यावेष्टिर्नाम काचिदिष्टिराम्नाता। ‘आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा, बार्हस्पत्यश्चरुरिति पृष्ठी दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा’ इति, तस्यां वर्णभेदेन प्रयोगभेद श्रूयते ‘यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेत् यदि वैश्यो वैश्वदेव चरुं मध्ये निदध्यात् यदि राजन्यस्तदैन्द्रमित्याग्नेयैन्द्रं पुरो भयोर्मध्ये बार्हस्पत्य चरु निर्वपेदित्यर्थः। अत्राग्नेयादिचरुषु अङ्गाना तन्त्रेण प्रयोगो भाति मध्ये निधानलिङ्गात प्रयोगभेदमध्ये निधानयोगादेतयान्नाद्यकाम याजयेदित्येकवचनाच्च, स च तन्त्रप्रयोगो राजसूयक्रतुबाह्यायामन्नाद्यकामवर्णत्रयकर्तृकायामेवावेष्टौ ज्ञेय न तु क्रत्वन्तर्गतायां। ननु किमत्र नियामक क्रत्वर्थाया-

* कारणेभ्य इति वर्ध० पु० नास्ति।

गेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्त्येवमिति। दृष्टस्त्ववेष्टेः राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षः, वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राजसूयस्य। तदुक्तं प्रथमे काण्डे 'क्रत्वर्थायामिति चेत् न वर्णत्रयसंयोगात्' इति [जै०सू०]॥

**न सामान्यादप्युपलब्धेर्मृत्युवत् न हि**
**लोकापत्तिः॥ ५२॥**

यदुक्तं मानसवदिति तत्प्रत्युच्यते, न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यं, पूर्वोक्तेभ्यः श्रुत्यादिभ्यो हेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः, न हि किञ्चित् कस्यचित् केनचित् सामान्यं न सम्भवति, न च तावता यथा स्वं वैधर्म्यं निवर्तते मृत्युवत्, यथा 'स वा एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' इति 'अग्निर्वै मृत्युः' इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः, यथा च 'असौ

---

मप्यवेष्टौ तत्र प्रयोगः किं न स्यादिति चेत्। न, वर्णत्रयसंयुक्तायां काम्यायामेव अङ्गतन्त्रैक्यसाधकस्य मध्ये निधानादिलिङ्गस्य सत्त्वादतो लिङ्गैकवचनाभ्यां तन्त्रैक्ये सति हिरण्यादिका मिलितैकैव दक्षिणा देया, अन्यथा प्रयोगैक्यायोगात्। राजमात्रकर्तृकक्रत्वन्तर्गतेष्टौ तु वर्णत्रयसंयोगाभावात् मध्ये निधानादिलिङ्गं नास्ति, ततश्च तन्त्रैक्यसाधकाभावाद्दक्षिणाभेदेन तन्त्रभेद इत्यङ्गानामावृत्तिरेव बह्वीष्विति सूत्रार्थः॥

अत्र चैकप्रयोगलिङ्गस्य क्रत्वर्थेष्टावसम्भवं काम्येष्टौ च सम्भवं वदताऽनेन सूत्रेण काम्येष्टेः क्रत्वर्थेष्टिविलक्षणत्वात् क्रतुप्रकरणादुत्कर्ष इति सूचितं। स चोत्कर्षो युक्त एव, राजमात्रकर्तृकराजसूयक्रतौ वर्णत्रयकर्तृकेष्टेरन्तर्भावायोगादिति स्थितं, तथा मनश्चिदादीनामत्कर्ष इति भावः। एवं दृष्टान्तं विघटयति। न सामान्यादिति।

वाव लोकोऽग्निर्गौतमासावादित्य एव समित्' इत्यत्र न समिदादिसामान्याल्लोकस्याऽग्निभावापत्तिस्तद्वत् ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

परस्तादपि 'अयं वाव लोक एषोऽग्निश्चितः' इत्येतस्मिन्ननन्तरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लभ्यते न शुद्धकर्माङ्गविधित्वं, तत्र हि—

'विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' ॥

इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्याञ्च प्रशंसन्नेतद्दर्शयति, तथा पुरस्तादपि 'यदेतन्मण्डलं *नयति' इत्यस्मिन् ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते 'सोऽमृतो भवति मृत्युर्यस्यात्मा भवति' इति विद्याफलेनैवोपसंहारात् न कर्मप्रधानता, तत्सामान्यादिहापि तथात्वं। भूयांसस्त्वग्न्यवयवाः सम्पादयितव्या विद्यायामित्येतस्मात् च कारणादग्निनानुबध्यते विद्या न कर्माङ्गत्वात्। तस्मात् मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥

---

क्रत्वर्थत्वपुरुषार्थत्ववैषम्येऽपि मानसत्वसामान्यं न विरुध्यते विषमयोरपि साम्यदर्शनादित्यर्थः ।

किञ्च पूर्वोत्तरब्राह्मणयोः स्वतन्त्रविद्याविधानात् तन्मध्यस्थस्याऽपि ब्राह्मणस्य स्वतन्त्रविद्याविधिपरत्वमित्याह । परेण चेति । चितेऽग्नौ लोकदृष्टिविधानं स्वतन्त्रमुत्तरत्र गम्यते पूर्वत्र मण्डलपुरुषोपास्तिस्तस्मादग्निमध्येऽपि मानसाग्नयः स्वतन्त्रा इत्यर्थः । तर्हि क्रियाग्निना सह पाठः किमर्थमित्यत आह । भूयांसस्त्विति ॥

---

* नयतीत्यस्य स्थाने तपतीति वर्ध० पु० पाठः ।

## एक आत्मनः शरीरे भावात् ॥५३॥

इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बन्धमोक्षाधिकारसिद्धये। न ह्यसति देहव्यतिरिक्ते आत्मनि परलोकफलाश्चोदना उपपद्येरन् कस्य वा ब्रह्मात्मत्वमुपदिश्येत। ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तं। सत्यमुक्तं भाष्यकृता न तु तत्रात्माऽस्तित्वे सूत्रमस्ति इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितं। इत एवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्। अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः। इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय। अपि च पूर्वस्मिन्नधि-

---

मनश्चिदादीनां पुरुषार्थत्वमुक्तं तदयुक्तं देहातिरिक्तपुरुषाभावादित्याक्षिपति। एक आत्मनः शरीरे भावात्। सिद्धान्तफलमाह। बन्धेति। पूर्वपक्षे तु परलोकार्थकर्मसु मोक्षार्थविद्यायां च अप्रवृत्तिरिति व्यतिरेकमुखेन फलमाह। न ह्यसति इति। व्यतिरिक्तात्मविचारस्य पूर्वतन्त्रे कृतत्वात् पौनरुक्त्यमित्याशङ्क्य तत्रत्यविचारस्याऽपि इदमेव सूत्रं मूलं जैमिनिसूत्राभावादतः क्व पुनरुक्तिरित्याह। ननु शास्त्रेत्यादिना। 'यज्ञायुधी यजमानः स्वर्गं लोकमेति' इत्यादिवाक्यस्य भोक्तुरभावादप्रामाण्यप्राप्तावित एवाकृष्य भोक्तुर्विचारः कृत इत्यत्र वृत्तिकारवचनं लिङ्गमाह। अत एवेति। तत्र सूत्राभावादेवेत्यर्थः। उद्धार उपरमः। अस्याधिकरणस्यास्मिन् पादे प्रसङ्गसङ्गतिरित्याह। इह चेति। आमुष्मिकफलोपासनानिर्णयप्रसङ्गेन तदपेक्षितात्मास्तित्वमुच्यते इत्यर्थः। एतत् सिद्धवत्कृत्य प्रथमसूत्रेऽथशब्देनाधि-

करणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितं, कोऽसौ पुरुषो यदर्था एते मनश्चिदादय इत्यस्यां प्रसक्ताविदं देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुच्यते तदस्तित्वाक्षेपार्थमिदमाद्यं सूत्रं, आक्षेपपूर्विका हि परिहारोक्तिर्विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति। अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्यात्मनोऽभावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति सम्भावयन्तः तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं चैतन्यविशिष्टः कायः पुरुष इति चाहुः, न स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्माऽस्ति यत्कृतं चैतन्यं देहे स्यात् देह एव तु चेतनश्चात्मा चेति प्रतिजानते हेतुञ्चाचक्षते, शरीरे भावादिति। यद्धि यस्मिन् सति भवत्यसति च न भवति तद्धर्मत्वेनाध्यवसीयते यथाग्निधर्मावौष्ण्यप्रकाशौ, प्राणचेष्टाचैतन्यस्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनां, तेऽप्यन्तरेव देह उपलभ्यमाना बहिश्चा-

---

कारी चिन्तितस्तस्मादिदमधिकरणं सर्वशास्त्राङ्गमिति शास्त्रसङ्गतिमाह। इहेति। आक्षेपलक्षणामवान्तरसङ्गतिमाह। अपि चेति। देहातिरिक्त आत्मास्ति न वेति वादिविप्रतिपत्तेः संशये पूर्वपक्षमाह। अत्रैक इति। यद्यपि समस्तेषु मिलितेषु भूतेषु चैतन्यं न दृष्टं तथोदकुम्भस्य ज्ञानाभावाद्व्यस्तेषु तु नास्त्येव इत्यर्थः। विदेहात्मकभूतेषु स्यादिति तेभ्यो भूतेभ्यश्चैतन्यं सम्भावयन्तो मदशक्तिवद्विज्ञानं सङ्घातजं तद्विशिष्टसङ्घात आत्मेत्याहुरित्यन्वयः। यथा मादकद्रव्येषु ताम्बूलपत्रादिषु प्रत्येकमदृष्टापि मदशक्तिस्तत्सङ्घाताज्जायते तद्वदित्यर्थः। ननु देहः स्वयं न चेतनः घटवद्भौतिकत्वात् किन्तु

नुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्मादव्यतिरेको देहादात्मन इत्येवं प्राप्ते ब्रूमः॥

## *व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

न त्वेतदस्ति यदुक्तमव्यतिरेको देहादात्मन इति व्यतिरेक एवास्य देहाद्भवितुमर्हति तद्भावाभावित्वात्, यदि हि देहभावे भावात् देहधर्मत्वमात्मधर्माणां मन्येत ततो देहभावेऽप्यभावाद्-*तद्धर्मत्वमेषां किं न मन्येत देहधर्मवैलक्षण्यात्, ये हि देहधर्मा* रूपादयस्ते यावद्देहं भवन्तु प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति, देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते न त्वात्मधर्माश्चैतन्यस्मृत्यादयः। अपि च सति तावद्देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुं न त्वसत्यभावः, पतितेऽपि कदाचिदस्मिन् देहे देहान्तरसञ्चारेणात्मधर्मा अनुवर्तेरन्,संश-

---

चेतनः कश्चित् स्वर्गादिभोक्ताऽस्ति तस्मान्मिथ्यात् देहस्य चैतन्यविभ्रम इत्यत आह। न स्वर्गेति॥

मनुष्योऽहं जानामीति देहस्य ज्ञातृतायाः प्रत्यक्षत्वादात्मधर्मत्वेन प्रसिद्धानां धर्माणां देहान्वयव्यतिरेकानुभवात् तदन्यात्मनि प्रत्यक्षाभावादप्रत्यक्षस्य अप्रामाणिकत्वाद्देह एवात्मेति प्राप्ते सूत्रस्य-नत्विति-पदेन सिद्धान्तं प्रतिजानीते। न त्वेतदिति। अनुमानस्य तावत् प्रामाण्यमनिच्छताप्यास्थेयमन्यथा व्यवहारासिद्धेः। न ह्यनागतपाकादाविष्टसाधनत्वानुमितिं विना न प्रवृत्तिः सम्भवति। तथा च ज्ञानादयो देहव्यतिरिक्ताश्रयाः देहसत्त्वेऽप्यसत्त्वात् व्यतिरेकेण देहरूपादिवदित्याह। व्यतिरेक एवास्येति। न चादौ श्यामदेहस्य पश्चात् रूपान्तरे व्यभिचारः, गुणत्वसाम्याव्याप्यजात्यवच्छेदेन असत्त्वस्य विवक्षितत्वात्,

---

* व्यतिरिक्त इति वर्ध०।

यमात्रेणापि परपक्षः प्रतिषिध्यते। किमात्मकञ्च पुनरिदं चैतन्यं मन्यते यस्य भूतेभ्य उत्पत्तिमिच्छन्ति इति परः पर्यनुयोक्तव्यः, न हि भूतचतुष्टयव्यतिरेकेण लोकायतिकाः किञ्चित् तत्त्वं *प्रतियन्ति। यदनुभवनं भूतभौतिकानां तच्चैतन्यमिति चेत्, तर्हि विषयत्वात् तेषां न †तद्धर्मत्वमश्नुवीत स्वात्मनि क्रियाविरोधात्, न ह्यग्निरुष्णः सन् स्वात्मानं दहति, न हि नटः शिक्षितः सन् स्वस्कन्धमधिरोक्ष्यति, न हि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्, न हि रूपादिभिः स्वं रूपं पररूपं वा विषयीक्रियते, विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैवास्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते एवं

देहेऽवस्थिते सदा रूपत्वावच्छिन्नमस्त्येव, ज्ञानत्वावच्छिन्नन्तु नास्तीति न ज्ञानं देहधर्म। किञ्च एतेन देहगुणाः परैरदृश्यत्वादित्याह। देहधर्मास्चेति। किञ्च देहव्यतिरेके तेषामभावस्य सन्दिग्धत्वात् न देहधर्मत्वनिश्चय इत्याह। अपि चेति। न चानुपलम्भात् तेषामभावनिश्चयस्तत्रानुपलब्धेरमानत्वात्, तद्धर्मात्मनो देहान्तरप्राप्त्याप्यनुपलम्भोपपत्तेश्चेति भावः। उपलब्धिवदिति सूत्रस्य पद व्याख्यातुमुपक्रमते। किमात्मकमिति। तत् किं भूतातिरिक्तं तत्त्वमुत रूपादिवत् भूतधर्मः, नाद्य, अपसिद्धान्तादित्युक्त्वा द्वितीयमाशङ्क्य निषेधयति। यदनुभवनमित्यादिना। देहात्मकभूतानां चैतन्यं प्रति विषयत्वात् कर्तृकर्मविरोधेन विषयस्य कर्तृत्वायोगात् न भूतकर्तृकत्वं चैतन्यस्येत्यर्थः। किञ्च ज्ञानस्य भूतधर्मत्वे रूपादिवज्जाड्यापत्तेर्न तद्धर्मत्वमित्याह। न हीति। फलितं सूत्रपदार्थमाह। अतश्चेति। या देहातिरिक्ता सद्रूपोपलब्धिः स एवात्मा चेदनित्यः स्यादुपलब्धेरनित्यत्वादित्यत आह। नित्यत्वं चेति। घटः स्फुरति पटः स्फुरतीति सर्वत्र स्फूर्तेरभेदात् नित्यत्वं

* प्रतिपादयन्तीति वर्ध०। † तद्धर्मत्वमिति वर्ध०।

व्यतिरेकोऽप्यस्यास्तेभ्योऽभ्युपगन्तव्यः, 'उपलब्धिस्वरूप एव च नः आत्मा' इत्यात्मनो देहव्यतिरिक्तत्वं नित्यत्वञ्च उपलब्धेरैकरूप्यात्, 'अहमिदमद्राक्षम्' इति चावस्थान्तरयोगेऽपि *उपलब्धृत्वेन प्रत्यभिज्ञानात् स्मृत्याद्युपपत्तेश्च। यत्तूक्तं शरीरे भावाच्छरीरधर्म उपलब्धिरिति तद्वर्णितेन प्रकारेण प्रत्युक्तं। अपि च सत्सु प्रदीपादिषूपकरणेषूपलब्धिर्भवति असत्सु न भवति, न चैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति, एवञ्च सति† देहभावे उपलब्धिर्भवति असति च न भवति इति न देहधर्मो भवितुमर्हति, उपकरणत्वमात्रेणापि प्रदीपादिवत् देहोपयोगोपपत्तेः। न चात्यन्तं देहस्योपलब्धावुपयोगो दृश्यते, निश्चेष्टेऽपि ह्यस्मिन् देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वं॥

---

विषयोपरागनाशे तु नाशभ्रम इत्यर्थः। एवमात्मा देहाद्भिन्न उपलब्धिरूपत्वादुपलब्धिवदित्युक्तं, किञ्च जाग्रत्स्वप्नयोर्देहभेदेऽप्यात्मैकत्वप्रत्यभिज्ञानादात्मभेदे च अन्यानुभूते अन्यस्य स्मृतीच्छाद्यनुपपत्तेः। स्वप्नस्मृत्यादिमानात्मा देहाद्भिन्न इत्याह। अहमिति। निरस्तमप्यधिकाभिधित्सयानुवदति। यत्तूक्तमिति। उपलब्धेर्देहान्वयव्यतिरेकौ न देहधर्मत्वसाधकौ तन्निमित्तत्वेन अन्यथासिद्धेरित्यधिकमाह। अपि चेति। उपलब्धिमात्रे देहस्य निमित्तत्वमप्यसिद्धमित्याह। न चात्यन्तमिति। स्वप्नोपलब्धिर्न देहजन्या देहव्यापारं विनापि भावादृत्वदत एव तदभावेऽपि स्वप्नवद्योगिना भोगं सूचयद्दत्यति। जाग्रदुपलब्धेर्देहजत्वमस्तीत्यन्तमित्युक्तं, तस्मादुक्तानुमानानुगृहीतान्मम शरीरमिति भेदानुभवादहं मनुष्य इत्यभेदज्ञानं भ्रम इत्युपसंहरति। तस्मादिति॥

---

* उपलब्धित्वेनेति मु०। † सति देहे इति का० वर्ध०।

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

समाप्ता प्रासङ्गिकीयं कथा, सम्प्रति प्रकृतामेवानुवर्तामहे । 'ओमित्येतदक्षरमुद्गीथमुपासीत लोकेषु पञ्चविधं सामोपासीत उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वाव लोक एषोऽग्निश्चितः' इत्येवमाद्या ये उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः ते तच्छाखागतेष्वेवोद्गीथादिषु भवेयुः अथवा सर्वशाखागतेष्विति विशय. प्रतिशाखञ्च स्वरादिभेदादुद्गीथादिभेदमादायायमुपन्यासः। किं तावत् प्राप्तं स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति। कुतः, सन्निधानात्। 'उद्गीथमुपासीत' इति हि सामान्यविहितानां विशेषाकाङ्क्षायां सन्निकृष्टेनैव स्वशाखागतेन विशेषेणाकाङ्क्षानिवृत्तेः तदतिलङ्घनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति, तस्मात् प्रतिशाखं व्यव-

---

अङ्गावबद्धा'। उद्गीथावयवोङ्कारे प्राणदृष्टि 'पृथिवी हिङ्कारोऽग्नि' प्रस्तावोऽन्तरिक्षमुद्गीथं आदित्य प्रतिहारो द्यौर्निधनम्' इति हिङ्कारादिपञ्चविधे साम्नि पृथिव्यादिलोकदृष्टि उक्थाख्यशास्त्रे पृथिवीदृष्टि इष्टकाचितानौ लोकदृष्टिरित्येवं कर्माङ्गाश्रितोपास्तयस्ताति, तासूद्गीथादिसाधारणश्रुत्या विशेषसन्निधिना च संशय । ननूद्गीथादीनां सर्वशाखास्थिकत्वादुपास्तय सर्वत्रेति विद्यैक्यान्निश्चये कथं संशय· इत्यत आह । प्रतिशाखञ्चेति । यथा देहात्मनोर्भेदादात्मधर्मा देहे न सम्भवन्ति तथा प्रतिवेदमुद्गीथादीनां भिन्नत्वादेकस्मिन् वेदे विहितोद्गीथाद्युपास्तयो वेदान्तरस्थोद्गीथादिषु न सम्भवन्ति इति दृष्टान्तेन पूर्वपक्षयति । स्वशाखेति । उद्गीथमुपासीतेति विधिवा-

स्येति, एवं प्राप्ते ब्रवीति 'अङ्गावबद्धास्तु' इति। तुशब्दः परपक्षं व्यावर्तयति, नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन् अपि तु सर्वशाखास्वनुवर्तेरन्, कुतः, उद्गीथादिश्रुत्यविशेषात्, स्वशाखाव्यवस्थायां ह्युद्गीथमुपासीतेति सामान्यश्रुतिरविशेषप्रवृत्ता सती सन्निधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात्, न चैतत् न्याय्यं, सन्निधानाद्धि श्रुतिर्बलीयसी, न च सामान्याश्रयः प्रत्ययो नोपपद्यते। तस्मात् स्वरादिभेदे सत्यप्युद्गीथत्वाद्यविशेषात् सर्वशाखागतेष्वेवोद्गीथादिष्वेवंजातीयकाः प्रत्ययाः स्युः॥

## मन्त्रादिवद्वाऽविरोधः॥ ५६॥

अथवा नैवात्र विरोध आशङ्कितव्यः कथमन्यशाखागतेषूद्गीथादिष्वन्यशाखाविहिताः प्रत्यया भवेयुरिति, मन्त्रादिवदविरोधोपपत्तेः। तथा हि मन्त्राणां कर्मणां गुणानाञ्च शाखान्तरोत्पन्नानामपि शाखान्तर उपसङ्ग्रहो दृश्यते, येषामपि हि शाखिनां 'कुटरुरसि' इत्यश्मादानमन्त्रो नाम्नातः, तेषामप्यसौ

---

कस्योद्गीथत्वसामान्यस्य व्यक्त्यपेक्षत्वात् स्वशाखासन्निहितव्यक्तिग्रह इत्यर्थः। सामान्यश्रुतेः सन्निहितव्यक्तिग्रहाख्यसङ्कोचस्तत्र कर्तव्यः यत्र व्यक्तिमात्रग्रहो नोपपद्यते, यथा शुक्लां गामानयेत्यत्र गोश्रुतेः सन्निहितशुक्लव्यक्तिपरतया सङ्कोचः, अत्र चानुपपत्त्यभावात् व्यक्तिमात्रसम्बन्धसामान्यमुपास्यमिति सिद्धान्तयति। एवमित्यादिना॥

पूर्वं शाखान्तरविहितोपास्तीनां शाखान्तरस्थाङ्गसम्बन्धे यः प्रतीतो विरोधस्तमङ्गीकृत्य सम्बन्ध उक्तः सम्प्रति विरोध एव नास्ति, शाखान्तरविहिताङ्गानां शाखान्तरस्थाङ्गिसम्बन्धवदुक्तसम्बन्धोपपत्तेः। यद्यपि यजुर्वेदिनां कुक्कुटोऽसीति मन्त्रोऽस्ति, कुटरुरसीति नास्ति, तथापि तद्गुणपे-

विनियोगो दृश्यते 'कुक्कुटोऽसि' इत्यश्मानमादत्ते 'कुटरुरसि' इति वेति। येषामपि च समिदादयः प्रयाजा नामाम्नातास्तेषामपि तेषु गुणविधिराम्नायते *'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति। तथा येषामपि 'अजोऽग्नीषोमीयः' इति जातिविशेषोपदेशो नास्ति तेषामपि तद्विशेषविषयो मन्त्रवर्ण उपलभ्यते 'छागस्य वपाया मेदसोऽनुब्रूहि' इति। तथा वेदान्तरोत्पन्नानामपि 'अग्नेर्वेर्होत्रं वेरध्वरम्' इत्यादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः। तथा बह्वृचपठितस्य सूक्तस्य 'यो जात एव प्रथमो मनस्वान्' इत्यस्य 'अध्वर्यवे सजनीयं शस्यम्' इत्यत्र परिग्रहो दृष्टः। तस्मात् यथाश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिरेवमाश्रितानामपि प्रत्ययानामित्यविरोधः॥

---

यथार्थाश्मादाने मन्त्रद्वयस्य विकल्पेन विनियोगात् सोऽपि प्राप्नोतीत्यर्थः। सूत्रस्थादिपदोपात्तकर्मणामुदाहरणमाह। येषामिति। मैत्रायणीयानामित्यर्थः। हेमन्तशिशिरयोरैक्यादृतवः पञ्च तद्वत् पञ्चसङ्ख्याकाः प्रयाजाः, समानत्र तुल्यकर्मस्थले, होतव्या इति पञ्चत्वगुणविधानात् गुणिनः शाखान्तरविहिताः सम्बध्यन्त इति भावः। गुणमुदाहरति। तथा येषामिति। यजुर्वेदिनामग्नीषोमीयः पशुः श्रुतो नाज इति जातिविशेषस्तथापि प्रैषमन्त्रलिङ्गाज्जातिविशेषसङ्ग्रह इत्यर्थः। मन्त्राणामुदाहरणान्तरमाह। तथेति। सामवेदस्थाना यजुर्वेदे परिग्रह इत्यर्थः। तथेति 'स जनास इन्द्र' इत्यनेनोपलक्षितं सूक्तं सजनीयं तस्य यजुषाध्वर्युकर्तृकप्रयोगे शंसनं दृष्टमित्यर्थः। यो जातो मात्र एव प्रथमो गुणैः श्रेष्ठो मनस्वान् विवेकवान् स इन्द्र एवंविधो हे जनासो जना इति श्रुत्यर्थः॥

---

* ऋतवो वै प्रयाजाः समानत्र होतव्या इति मु०।

## भूम्नः क्रतुवत् ज्यायस्त्वं *तथा हि दर्शयति ॥ ५७ ॥

'प्राचीनशाल औपमन्यवः' इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च वैश्वानरस्योपासनं श्रूयते। व्यस्तोपासनं तावत् 'औपमन्यवकं त्वमात्मानमुपास्से' इति, 'दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से' इत्यादि, तथा समस्तोपासनमपि 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ' इत्यादि, तत्र संशयः किमिहोभयथाप्युपासनं स्यात् व्यस्तस्य समस्तस्य चोत समस्तस्यैवेति, किं तावत् प्राप्तं प्रत्यवयवं, सुतेजःप्रभृतिषु उपास्स इति क्रियापदश्रवणात्, तस्मात् 'तव सुत प्रसुतमासुतं कुले दृश्यते' इत्यादिफलभेदश्रवणाच्च व्यस्तान्यप्युपासनानि स्युरिति प्राप्तं, ततोऽभिधीयते, भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्येन अस्मिन् वाक्ये †विवक्षितं भवि-

---

भूम्नः क्रतुवत्। द्युलोकादिषु प्रत्येकं वैश्वानरस्य व्यस्तोपास्तिः इह यजुरुपास्तिः समस्तोपास्तिरिति भेदः, व्याख्यायिका पूर्वमेव व्याख्याता। यत्रोभयत्र विधिफलयोः श्रवणादेकवाक्यत्वोपपत्तेश्च संशयमाह। तत्रेति। 'सैव हि सत्यादय' इत्यत्र [वे०सू०३।३।३८] तद्यत् सत्यमिति प्रकृताकर्षाद् विद्यैक्यमुक्तं तद्वदत्रैक्यहेत्वभावाद्भूतार्थत्व मत्वा पूर्वत्रोद्गीथादिश्रुत्या सन्निधिबाधेनोद्गीथाद्युपास्तीनां सर्वशाखासूपसंहारवद्व्यस्तोपास्तीनां विधिश्रुतेः फलश्रवणस्य च समस्तोपास्तिसन्निधिप्राप्तं स्तुत्यर्थत्वं

---

* तथा चेति बध० का०।  † विवक्षितत्वमिति वर्ध०।

तुमर्हति न प्रत्येकमवयवोपासनानामपि, क्रतुवत्, यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते न व्यस्तानामपि प्रयोगः प्रयाजादीनां नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य तद्वत्। कुत एतद्भूमैव ज्यायानिति, तथा हि श्रुतिर्भूम्नो ज्यायस्त्वं दर्शयति एकवाक्यत्वावगमात्, एकं ह्येतद् वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात् प्रतीयते, तथा हि प्राचीनशालप्रभृतय उद्दालकावसानाः षड् ऋषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना 'अश्वपतिं कैकेयं राजानमभ्याजग्मुः' इत्युपक्रम्यैकैकस्यर्षेरुपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा 'मूर्द्धा त्वेष आत्मन इति होवाच' इत्यादिना मूर्द्धादिभावं तेषां विदधाति। 'मूर्द्धा ते व्यपतिष्यत् यन्मां नागमिष्यः' इत्यादिना च व्यस्तोपासनमपवदति। पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तोपासनमेवानुवर्त्य 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति भूमाश्रयमेव फलं दर्शयति। यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणं, तदेवं सत्यङ्गफलानि प्रधान एवाभ्युच्चिनोति इति द्रष्टव्यम्। *तथोपास्य

बाधित्वा तद्विधेयत्वमिति पूर्वपक्षमाह। प्रत्यवयवमिति। फलानुक्तौ पूर्वोत्तरपक्षसिद्धिरेव फलं मन्तव्यं। सुतं खण्डितं, सोमद्रव्यस्यैव प्रस्तुतत्वमासमन्तात् सुतत्वमवस्थाभेदः सोमयागसम्पत्तिस्तव कुले दृश्यत इति यावत्, आत्मनो वैश्वानरस्य मूर्धैव सुतेजा इति वाक्यप्रकरणाभ्यां व्यस्तोपास्तीनां समस्तोपास्त्यन्तर्भावेन प्रयाजदर्शवदेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानामर्थवादगतानामेकप्रधानफलतयोपसंहारात् वाक्यभेदो न युक्त इति सिद्धान्ताशयः। एकदेशिव्याख्यामनूद्य

* तथोपास्य इति मु०।

इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थं न व्यस्तोपासनविधानार्थं, तस्मात् समस्तोपासनपक्ष एव श्रेयानिति। केचित्त्वत्र समस्तोपासनपक्षं ज्यायांसम्प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति कल्पयन्ति, तदयुक्तं, एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात्, 'मूर्द्धा ते व्यपतिष्यत्' इति चैवमादिनिन्दावचनविरोधात्, स्पष्टे चोपसंहारे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणाप्युपपद्यमानत्वात्॥

## नाना शब्दादिभेदात्॥ ५८॥

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तं, अतः प्राप्ता बुद्धिरन्यान्यपि च भिन्नश्रुतीन्युपासनानि समस्योपास्यन्त इति। अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते, वेद्यं हि रूपं विद्यायाः द्रव्यदैवतमिव यागस्य, वेद्यश्चैक एवेश्वरः श्रुतिनानात्वेऽप्यवगम्यते

---

दूषयति। केचिदिति। यद्युभयथोपासनं सिद्धान्तस्तर्हि व्यस्तोपासनमेवेति पूर्वपक्षो वक्तव्यः, स च न सम्भवतीत्याह। स्पष्टे चेति। कथं तर्हि सूत्रे ज्यायस्त्वोक्तिस्तत्राह। सौत्रस्येति। व्यस्तोपास्तीनामप्रामाणिकत्वद्योतनार्थं तदुक्तिरिति भावः॥

नानाशब्दादिभेदात्। शाण्डिल्यादिवस्तुविद्यैका नाना च, तथा संवर्गादिप्राणविद्यैका नाना चेति रूपैक्यभावाभावाभ्यां संशये दृष्टान्तसङ्गत्या पूर्वपक्षमाह। पूर्वस्मिन्निति। रूपैक्याच्च विद्यैक्यमित्याह।

'मनोमयः प्राणशरीरः कं ब्रह्म खं ब्रह्म सत्यकामः सत्यसङ्कल्पः' इत्येवमादिषु, तथा 'एक एव प्राणः प्राणो वाव संवर्गः प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च प्राणो ह पिता प्राणो माता' इत्येवमादिषु वेद्यैकत्वाच्च विद्यैकत्वं श्रुतं, श्रुतिनानात्वमप्यस्मिन् पक्षे गुणान्तरपरत्वात् नानर्थकं, तस्मात् स्वपरशाखाविहितमेकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यं विद्याकार्त्स्न्यायेत्येवं प्राप्ते प्रतिपद्यते, नानेति। वेद्याभेदेऽप्येवंजातीयिका विद्या भिन्ना भवितुमर्हन्ति, कुतः शब्दादिभेदात्, भवति हि शब्दभेदो 'वेदोपासीत स क्रतुं कुर्वीत' इत्येवमादिः, शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्तात् शब्दान्तरे कर्मभेदः कृतानुबन्धत्वादिति। आदि-

---

ष्वपि चेति। विद्यैक्यं चेदेकश्रुत्युक्तविद्यायाः श्रुत्यन्तरेऽप्युक्तिर्व्यर्थेत्यत आह। श्रुतिनानात्वमपीति। पूर्वपक्षफलमाह। तस्मादिति। सिद्धान्ते तु गुणानुपसंहार इति मत्वा सूत्रं योजयति। वेद्याभेदेऽपीति। ननु भिन्नभावार्थवाचकशब्दः शब्दान्तरं यथा यजति ददाति जुहोति इति तस्मिन् शब्दभेदे कर्मशब्दितविध्यर्थभावनाया भेदो युक्तस्तस्याः कृतानुबन्धत्वाद्भेदेन स्वीकृतविषयत्वाद्भावार्थभेदादिति यावत्। प्रकृते तु वेदोपासीतेत्यादिशब्दार्थोपास्तेर्यागदानहोमवत् स्वतो भेदाभावात् सिद्धगुणकब्रह्मण एकत्वेन विषयतोऽपि भेदाभावात् कथमुपास्तिभेद इति शङ्कते। नन्विति। अत्र सूत्रे शब्दभेदोऽभ्युच्चयमात्रतयोक्तः, विद्यानानात्वे सम्यक् हेतवस्त्वादिपदोपात्तगुणादय एव, तथा हि सिद्धस्यापि गुणस्य कार्यान्वयितया कार्यत्वमस्ति। यथा तारुण्यादिगुणानां क्रयणभावनान्वयितया कार्यत्वं तथोपास्यतत्प्रकरणेषूत्पत्तिशिष्टैरुपास्तिभावनान्वयितया साध्यैस्तत्र गुणैर्विशिष्टतयोपास्यरूपभेदादुपासनाभेदः। यथा छत्रचामरादिगुणभेदेन राजोपास्तिभेदः यथावाऽऽमिक्षावाजिनगुणभेदेन याग

ग्रहणात् गुणादयोऽपि यथासम्भवं भेदहेतवो योजयितव्याः। ननु वेदेत्यादिषु शब्दभेद एवावगम्यते न यजति इत्यादिवदर्थभेदः सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदादर्थान्तरासम्भवाच्च तत्कथं शब्दभेदात् विद्याभेद इति। नैष दोषः, मनोवृत्त्यर्थत्वाभेदेऽप्यनुबन्धभेदात् विद्याभेदोपपत्तेः। एकस्याऽपि ह्योश्वरस्योपास्यस्य प्रति प्रकरणं व्यावृत्ता गुणाः शिष्यन्ते तथैकस्याऽपि प्राणस्य तत्र तत्रोपास्यस्याभेदेऽप्यन्यादृक् गुणोऽन्यत्रोपासितव्योऽन्यादृक् गुणस्त्वन्यत्रेत्येवमनुबन्धभेदात् *विधिभेदे सति विद्याभेदो विज्ञायते। न चात्रैको विद्याविधिरितरे गुणविधय इति शक्यं वक्तुं, विनिगमनहेत्वभावात् अनेकत्वाच्च प्रति प्रकरणं गुणानां प्राप्तविद्यानुवादेन गुणविधानानुपपत्तेः। न चास्मिन् पक्षे समानाः सन्तः सत्यकामत्वादयो गुणा असकृच्छ्रावयितव्याः। प्रतिप्रकरणं चेदङ्कामेनेदमुपासितव्यमिदङ्कामेन चेदमिति नैराकाङ्क्ष्यावगमात् नैकवाक्यतापत्तिः। न चात्र वैश्वानरविद्यायामिव समस्तचोदनाऽपरास्ति यद्बलेन

---

भेदस्तद्वत्, तथा प्रतिविद्यं फलं संयोगभेदाद्दहरशाण्डिल्यादिसमाख्याभेदाद्भेद इति समाधत्ते। नैष दोष इत्यादिना। यदुक्तं श्रुतिनानात्वं गुणान्तरविध्यर्थमिति तन्नेत्याह। न चात्रैक इति। किञ्च प्राप्तविद्यानुवादेनाप्राप्तानेकगुणविधाने वाक्यभेदः स्यादित्याह। अनेकत्वाच्चेति। किञ्च विद्यैक्यपक्षे गुणानां पुनरुक्तिर्वृथा न च प्रत्यभिज्ञानार्था ब्रह्मैक्यादेव तत्सिद्धेः, विद्यानानात्वपक्षे तु गुणानामप्राप्तेः सा प्राप्यर्थेत्याह। न चास्मिन् पक्ष इति। फलभेदाच्चोदनैक्याभावात्

---

* वेद्यभेदे इति मु०।

प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूमैकवाक्यतां ययुः । वेद्यै-
कत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने समस्त-
गुणोपसंहारोऽशक्यः प्रतिज्ञायेत, तस्मात् सुष्ठूच्यते, नानाश-
ब्दादिभेदादिति । स्थिते चैतस्मिन्नधिकरणे सर्ववेदान्तप्रत्यय-
मित्यादि द्रष्टव्यम् ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

स्थिते विद्याभेदे विचार्यते, किमासामिच्छया समुच्चयो विक-
ल्पो वा स्यादथवा विकल्प एव नियमेनेति, तत्र स्थितत्वात् तावत्
विद्याभेदस्य न समुच्चयनियमे किञ्चित् कारणमस्ति । ननु
भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्य-
ते । नैष दोषः, नित्यताश्रुतिर्हि तत्र कारणं, नैवं विद्यानां
काचित् नित्यताश्रुतिरस्ति, तस्मात् न समुच्चयनियमः, नापि

---

सर्वगुणाध्यानस्याशक्यत्वाच्च विद्या नानेत्याह । प्रतिप्रकरणेत्यादिना ।
दहरध्यातुः सर्वेषु लोकेषु कामचारो भवति वैश्वानरध्याता सर्वत्रान्न-
भक्षीत्यादिफलभेद इत्यर्थः । ननु विद्यानानात्वे सिद्धे पश्चाद्दहरा-
दिविद्या प्रतिवेदान्तमेकाऽनेका वेति चिन्तोचिता तत्कथमादौ सा
कृतेत्यत आह । स्थिते चेति । विद्यानानात्वाधिकरणं पादादावेव
सङ्गतं यत्र प्रासङ्गिकमिति भावः ॥

विकल्पः । विद्यानां स्वरूपमुक्त्वाऽनुष्ठानप्रकारोऽत्र निरूप्यत इत्युप-
जीव्यत्वसङ्गतिमाह । स्थित इति । विद्यास्त्रिविधाः अहंग्रहास्तटस्था
अङ्गाश्रिताश्चेति । तत्राहंग्रहविद्यासु यथाकाम्यविकल्पयोर्विद्यानाना-
त्वसाम्यात् संशयमाह । किमिति । पूर्वपक्षे यथेच्छमनुष्ठानमित्यनि-
यमः सिद्धान्ते विकल्पेनानुष्ठानमिति नियम इति फलभेदः । तत्रानि-

विकल्पनियमः विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात्। पारिशेष्यात् *याथाकाम्यमापद्यते। नन्वविशिष्टफलत्वादासां विकल्पो न्याय्यः, तथा हि 'मनोमयः प्राणशरीरः कं ब्रह्म खं ब्रह्म सत्यकामः सत्यसङ्कल्पः' इत्येवमाद्यास्तुल्यवदीश्वरत्वप्राप्तिफला लक्ष्यन्ते। नैष दोषः, समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात्। तस्मात् याथाकाम्यप्राप्तावुच्यते विकल्प एवासां भवितुमर्हति न समुच्चयः। कस्मात् अविशिष्टफलत्वात्। अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणमेकेन चोपासनेन साक्षात्कृते उपास्यविषये ईश्वरादौ द्वितीयमनर्थकं। अपि चासम्भव एव साक्षात्करणस्य, समुच्चयपक्षे चित्तविक्षेपहेतुत्वात्। साक्षात्करणसाध्यञ्च विद्याफलं दर्शयन्ति श्रुतयः 'यस्य स्यादद्धा न विचिकित्सास्ति' इति 'देवो भूत्वा देवानप्येति' इत्येवमाद्याः। स्मृतयश्च 'सदा तद्भावभाविताः' इत्येवमाद्याः। तस्मादविशिष्टफलानां विद्यानामन्य-

---

यमं साधयति। तत्र स्थितत्वादित्यादिना। एकपुरोडाशफलत्वाद्यथा व्रीहियवयोर्विकल्पस्तथा विकल्पनियम एवासां विद्यानां न्याय्य, तुल्यफलत्वात्। न च फलभूयस्त्वार्थिन. काम्यकर्मसमुच्चयोऽपि दृष्ट इति वाच्य, ईश्वरसाक्षात्कारात् परं फलभेदेऽप्यासामहंग्रहोपास्तीनां साक्षात्कारात्मकफलस्य तुल्यत्वात्, तस्य चैकप्राप्तत्वे चान्यस्याः कृत्यभावाच्चित्तविक्षेपकतया तदविद्याकृतत्वाच्चेति सिद्धान्तभाष्यार्थं। सा तु साक्षात्कार इत्यत आह। साक्षात्करणसाध्यञ्चेति। यस्य पुंसः, अद्धा ईश्वरोऽहमिति साक्षात्कारः स्याद्विचिकित्सा च नास्ति अहमीश्वरो न वेति तस्यैवेश्वरप्राप्तिरित्यर्थः। जीवन्नेव भावनया देवत्वं

तमामादाय तत्परः स्यात् यावदुपास्यविषयसाक्षात्करणेन *तत्फलप्राप्तिरिति ॥

काम्यास्तु यथाकामं समुच्चियेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

'अविशिष्टफलत्वात्' इत्यस्य प्रत्युदाहरणं, यासु पुनः काम्यासु विद्यासु 'स य एतमेव वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य †कामचारो भवति' इति चैवमाद्यासु क्रियावददृष्टेनात्मनात्मीयं तत्तत् फलं साधयन्तीषु साक्षात्करणापेक्षा नास्ति ता यथाकामं समुच्चीयेरन्न वा समुच्चीयेरन् पूर्वहेत्वभावात्, पूर्वस्याविशिष्टफलत्वात् इत्यस्य विकल्पहेतोरभावात् ॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

कर्माङ्गेषु उद्गीथादिषु ये आश्रिताः प्रत्ययाः वेदत्रयविहिताः किं ते समुच्चीयेरन् किं वा यथाकामं स्युरिति

---

साक्षात्कृत्य देहपातोत्तरकालं देवत्वं प्राप्नोति इति श्रुत्यन्तरार्थः। अहंग्रहाणामनुष्ठानप्रकारमुपसंहरति। तस्मादिति॥

काम्यास्तु। तटस्थोपास्तयोऽत्र विषयस्तासु किं विकल्प उत यथाकामं अनुष्ठानमिति, पूर्ववत् सत्यपास्तित्वाविशेषादहंग्रहवद्विकल्प इति प्राप्ते अवयवार्थं सिद्धान्तयति। अविशिष्टेति। स य कश्चिदेतं वायुमेवाङ्कत्वेन कल्पितानां दिशां वत्सं वेदोपास्ते नासौ पुत्रमरणनिमित्तं रोदनं रोदिति लभते नित्यमेव जीवत्पुत्रो भवतीत्यर्थः। अहंग्रहदृष्टान्ते साक्षात्कारद्वारत्वमुपाधिरिति भावः॥

सम्प्रत्यङ्गावबद्धोपास्तीनामनुष्ठानक्रमं वक्तुं पूर्वपक्षयति। अङ्गेष्विति।

---

* तत्फलप्राप्तिमिति वर्ध०। † यथा कामचार इति मु०।

संशये यथाश्रयभाव इत्याह। यथैषामाश्रयाः स्तोत्रादयः सम्भूय भवन्त्येवं प्रत्यया अपि, आश्रयतन्त्रत्वात् प्रत्ययानां॥

## शिष्टेश्च॥ ६२॥

यथा चाश्रयाः स्तोत्रादयस्त्रिषु वेदेषु शिष्यन्ते एवमाश्रिता अपि प्रत्ययाः नोपदेशकृतोऽपि कश्चिद्विशेषोऽङ्गानां तदाश्रयाणाञ्च प्रत्ययानामित्यर्थः॥

## समाहारात्॥ ६३॥

'होतृषदनाद्धैवापि *दुरुद्गीतमनुसमाहरति' इति च प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युत्पन्नं क्षतं होत्रात् कर्मणः प्रतिसमादधाति इति ब्रुवन् वेदान्तरोदितस्य प्रत्य-

---

थङ्गाश्रितत्वात् सफलत्वाच्च संशयमाह। किमिति। यथा क्रत्वनुष्ठाने तदाश्रिताङ्गानां समुच्चित्यानुष्ठाननियमस्तथाङ्गानुष्ठाने तदाश्रितोपास्तीनां तन्नियम इति सूत्रार्थः। ननु तन्निर्धारणानियम इत्यनाङ्गाश्रितानां गोदोहनवदनङ्गत्वमुक्तं तत् कथमनङ्गानामङ्गत्वसमुच्चयं शङ्क्यत इत्युच्यते। अङ्गान्यनुष्ठापयन् प्रयोगविधिर्यद्युपासनानि नानुष्ठापयेत् तर्हि तेषां तदाश्रितत्वं व्यर्थमिति मन्वानस्य शङ्केति भावः॥

तर्हि गोदोहनस्यापि समुच्चयः स्यादित्यत आह। शिष्टेश्चेति। शिष्टिः शासनं विधानमिति यावत्। विहितत्वाविशेषात् समुच्चयोऽङ्गवदित्यर्थः। गोदोहनस्य तु नानुष्ठाननियमः, चमसस्थाने विहितत्वात् तन्नियमे चमसविधिवैयर्थ्यात्, उपासनानां तु न कस्य चिदङ्गस्य स्थाने विहितत्वमिति समुच्चयनियमेन विरुध्यत इति भावः॥

समुच्चये लिङ्गं, समाहारादिति। 'ऋग्वेदिनां यः प्रणवः स सामवेदिनामुद्गीथः' इति छान्दोग्ये प्रणवोद्गीथयोरेकत्वध्यानविधिरस्ति, तस्य

यस्य वेदान्तरोदितपदार्थसम्बन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहारं सूचयतीति लिङ्गदर्शनम्॥

## गुणसाधारण्यश्रुतेश्च॥ ६४॥

विद्यागुणश्च विद्याश्रयं सन्तमोङ्कारं वेदत्रयसाधारणं श्रावयति, तेनेयं त्रयीविद्या वर्तते 'ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' इति। ततश्चाश्रयसाधारण्यादाश्रितसाधारण्यमिति लिङ्गदर्शनमेव। अथ वा गुणसाधारण्यश्रुतेश्चेति। यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युर्न स्यात् ततस्तदाश्रयाणां प्रत्ययानां सहभावः, ते तूद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते, ततश्चाश्रयसहभावात् प्रत्ययसहभाव इति॥

---

फलार्थवादो होतृषदनादित्यादि'। होतुः शंसनस्खलवादिना होतृषदनशब्देन शंसनं लक्ष्यते, उद्गाता स्वरादिप्रमादात् भ्रष्टमप्युद्गीथं सम्यक्कृतात् होतृशंसनादनुसमाहरत्येव निर्दोषं करोत्येव किल, शस्यमानप्रणवेन स्वीयोद्गीथस्यैक्यध्यानबलादित्यर्थः। ततः किं तत्राह। इति ब्रुवन्निति। सामवेदस्योद्गीथध्यानस्य ऋग्वेदोक्तप्रणवसम्बन्धो योदृष्टः स एवाङ्गानां सर्ववेदान्तविहितोपास्तिसमुच्चये लिङ्गं प्रणवरूपपदार्थस्योपास्तीनाञ्च वेदान्तरोक्तत्वसादृश्यात् वेदान्तरोक्ताङ्गसम्बन्धस्यापि समानत्वादित्यर्थः॥

ॐकारस्य ध्येयस्य साधारण्यादपि तदाश्रितध्यानानां समुच्चित्यानुष्ठानं गम्यत इति लिङ्गान्तरमाह। गुणेति। तेनोङ्कारेण, वेदत्रयोक्तं कर्म प्रवर्तत इत्यर्थः। अन्वयमुखेनोक्तमेवार्थं व्यतिरेकतोऽपि व्याचष्टे। अथ वेति॥

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

न वेति पक्षव्यावर्तनम्। न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति। कुतः, तत्सहभावाश्रुतेः। यथा हि त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तुतमनुशंसति प्रस्तोतः सामगाय होतरेतत् यज' इत्यादिना, नैवमुपासनानां सहभावश्रुतिरस्ति। ननु प्रयोगवचन *एषां सहभावं प्रापयति। नेति ब्रूमः, पुरुषार्थत्वादुपासनानां, प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयति, उद्गीथाद्युपासनानि तु क्रत्वङ्गाश्रयाण्यपि गोदोहनादिवत् पुरुषार्थानीत्यवोचाम 'पृथग्ध्यप्रतिबन्धः फलम्' इत्यत्र [वि॰सूत्रांशः ३।३।४२]। अयमेव चोपदेशाश्रयो विशेषोऽङ्गानां तदालम्बनानां चोपासनानां यदेकेषां क्रत्वर्थत्वमेकेषां पुरुषार्थत्वमिति। परस्तु लिङ्गद्वयमकारणमुपासनसहभावस्य श्रुतिन्यायाभावात्। न च प्रतिप्रयोगमाश्रयकार्त्स्न्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं शक्यते, अतत्प्रयुक्तत्वा-

फलेच्छाया अनियमादुपास्त्यनियम एवमुक्त:, अङ्गवत् समुच्चयनियमे मानाभावादिति सिद्धान्तयति। न वेति। प्रयोगविधिः खलु साङ्गप्रधानानुष्ठाननियामकः न त्वनङ्गानां संग्राहक इत्याह। नेति ब्रूम इति। विमतोपास्त्यः क्रतौ न समुच्चित्यानुष्ठेया भिन्नफलत्वाद्गोदोहनवदिति भावः। शिष्टेश्चेत्युक्तं निरस्यति। अयमेवेति। समाहारादूगुणसाधारण्यश्रुतेश्चेत्युक्तं लिङ्गद्वयमपि मानान्तराप्राप्तस्य द्योतकं न स्वयं साधकं अर्थवादस्थत्वादित्याह। परस्त्विति। गुणसाधारण्य

* एवैषां इति सो॰।

दुपासनानां, आश्रयतन्त्राण्यपि ह्युपासनानि कामम् आश्रयाभावे माभूवन् नाश्रयसद्भावे सद्भावनियमम् अर्हन्ति तत्सद्भावाश्रुतेरेव । तस्मात् यथाकाममेवोपासनान्यनुष्ठीयेरन् ॥

दर्शनाच्च ॥ ६६ ॥

दर्शयति च श्रुतिरसद्भावं प्रत्ययानां 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति' इति । सर्वप्रत्ययोपसंहारे हि 'सर्वे सर्वविदः' इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां सङ्कीर्त्येत । तस्मात् यथाकाममुपासनानां समुच्चयो विकल्पो वेति ॥ ० ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ तृतीयस्याध्यायस्य तृतीयः पादः ॥ * ॥

---

सूत्रस्य द्वितीया व्याख्या दूषयति । न चेति । तत्प्रयुक्तत्वाभावे तदाश्रितत्वं कथमित्यत आह । आश्रयेति । इदमेव तेषां अङ्गाश्रितत्वं यदङ्गाभावे सत्यसत्त्वं न त्वङ्गव्यापकत्वमिति ॥

किञ्च विदुषा ब्रह्मणेषामृत्विजां पाल्यत्ववचनान्न सर्वोपास्तीनां सहप्रयोग इत्याह । दर्शनाच्चेति । ऋग्वेदादिविहिताङ्गलोपे व्याहृतिहोमप्रायश्चित्तादिविज्ञानवत्त्वमेवं वित्त्वं ब्रह्मण इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकव्याख्यायां भाष्यरत्नप्रभायां तृतीयाध्यायस्य तृतीयः पादः ॥ ० ॥

ॐ परमात्मने नमः।



## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

अथेदानीमौपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानुप्रविशति आहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांसमानः सिद्धान्तेनैव तावदुपक्रमते 'पुरुषार्थोऽतः' इति। अतः अस्मात् वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात्

---

आदर्शपुस्तकेऽयं तृतीयाध्यायस्यान्तिमः पादोऽरत्नप्रभाभासितो वर्तते, केवलटीकापुस्तकान्तरेऽप्येतदंशो नास्ति, सुतरामेतत्पादविशदीकरणार्थमानन्दगिरिकृतटीकैव परिगृहीता तत्स्थाननिवेशिता च ॥

---

ॐ सरस्वत्यै नमः।

कर्माङ्गसङ्गिविद्योक्तिप्रसङ्गात् ब्रह्मज्ञानस्य कर्माङ्गत्वमाशङ्क्य परिहरति। पुरुषार्थ इति। परापरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधार्य तासां कर्मानपेक्षाणामेव पुरुषार्थसाधनत्वमवसरप्राप्तौ निरूप्यते, तत्र कर्मानपेक्षाणाममूषां का नामेतिकर्तव्यता, नहि तां विना कारणतेत्याशङ्क्य यज्ञादयः श्रवणादयः शमादयश्च विद्योत्पत्त्युपयोगित्वेन इतिकर्तव्यता निरूप्यन्ते, इत्यभिप्रेत्याह। अथेति। फलभेदाभेदौ विना न विद्याभेदाभेदौ, न च तौ विना गुणोपसंहारानुपसंहारौ, तेन प्रागेव विद्यानां पुमर्थहेतुत्वे स्थिते प्रथममौपनिषदं चात्मज्ञानमधिकृत्य वादिविप्रतिपत्त्या संशयमाह। औपनिषदमिति। अनेन चात्मज्ञानविशेषणेन शास्त्रश्रुतिसङ्गतिरुच्यते, सिद्धे फलवत्त्वे स्वतन्त्रमेवेदं फलवदिति साधनाद्ध्यायपादसङ्गतिः। पूर्वपक्षे समुच्चयपक्षसिद्धिः, सिद्धान्ते केवलस्य ज्ञानस्य कैवल्यस्य साधनतेति मत्वा पूर्वपक्षमग्रे दर्शयन् आदौ सिद्धान्तमाह। सिद्धान्तेनेति। सूत्रस्था

पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते, कुत एतदवगम्यते, शब्दादित्याह। तथा हि 'तरति शोकमात्मवित् स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति ब्रह्मविदाप्नोति परं आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति 'य आत्माऽपहतपाप्मा' इत्युपक्रम्य 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति आत्मा वा अरे द्रष्टव्य.' इति चोपक्रम्य 'एतावदरे खल्वमृतत्वं' इत्येवंजातीयका श्रुतिर्विद्यायाः केवलायाः पुरुषार्थहेतुत्वं श्रावयति। अथात्र परः प्रत्यवतिष्ठते॥

शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः॥२॥

कर्तृत्वेनात्मनः कर्मशेषत्वात् तद्विज्ञानमपि व्रीहिप्रोक्षणादिवत् विषयद्वारेण कर्मसम्बन्ध्येवेत्यतस्तस्मिन्नवगतप्रयोजने

---

प्रतिज्ञां योजयति। अस्मादिति। तत्र प्रमाणं पृच्छति। कुत इति। सूत्रावयवेनोत्तरमाह। शब्दादित्याहेति। प्रमाणं विवृणोति। तथा हीत्यादिना। सगुणब्रह्मज्ञानस्यापि स्वातन्त्र्येण पुमर्थहेतुतेति वक्तुं तद्विषयां श्रुतिमाह। य आत्मेति। निर्गुणविषयं वाक्यान्तरमाह। आत्मेति। उक्तश्रुतिषु विद्याफलयोः साध्यसाधनत्वं न भातीत्याशङ्क्य तयोरेकपुरुषसम्बन्धसामर्थ्यादेव तद्धीरित्याशयेनाह। केवलाया इति। पूर्वपक्षमवतारयति। अथेति। सिद्धान्तोक्त्यनन्तरमात्मज्ञाने विषये फलश्रुतिमधिकृत्य मीमांसकश्चोदयतीत्यर्थः॥

पुरुषार्थवाद इत्यत्रार्थग्रहणं तन्त्रेणावृत्त्य, तेन पुरुषार्थवादोऽर्थवाद इति मन्तव्य। तत्त्वज्ञान कर्माङ्गकर्तृद्वारा प्रयोगविधिना देय-

आत्मज्ञाने या फलश्रुतिः साऽर्थवाद इति जैमिनिराचार्यो मन्यते। यथान्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतत् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इत्येवंजातीयका फलश्रुतिरर्थवादस्तद्वत्। कथं पुनरस्यानारभ्याधीतस्यात्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते। कर्तृद्वारेण तद्विज्ञानस्य वाक्यात् क्रतुसम्बन्धः इति चेत्, न, वाक्यविनियोगानुपपत्तेः। अव्यभिचारिणा हि केनचित् द्वारेणानारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसम्बन्धोऽवकल्पते

---

मादीयमानकर्माङ्गकर्त्राश्रयत्वशास्त्रसिद्धत्वात् यजमानसंस्काराञ्जनादिवदिति मत्वा शेषत्वादित्येतद्व्याचष्टे। कर्तृत्वेनेति। तत्त्वज्ञानं प्रयोगविधिनाऽऽदेयं साध्यफलोक्तिशून्यत्वे सति कर्माङ्गाश्रयत्वात् पर्णमयीत्वादिवदिति प्रयोगः। स्वतन्त्रफलस्य कथ प्रोक्षणादिवत कर्माङ्गतेत्याशङ्क्य पुरुषार्थवाद इत्यस्यार्थमाह। इत्यत इति। वेदार्थजिज्ञासाया तत्त्वनिर्णयार्थं संशयादिप्रतिभासो गुरोरग्रे शिष्येण दर्शनीय, गुरुणा च तन्निरासेन तत्त्वमाविष्करणीयमिति शिष्टाचारं दर्शयितुं जैमिनिग्रहणं न प्रतिपन्नतया शिष्यस्य तद्योगात्। फलश्रुतेरर्थवादत्वे सूचितं दृष्टान्तं व्याचष्टे। यथेति। पर्णमयीद्रव्ये यजमानस्याञ्जनादिसंस्कारे प्रयाजादिकर्मसु च क्रमेण फलश्रुतीराह। यस्येत्यादिना। सा च फलश्रुतिर्न फलपरा फलवत्क्रत्वर्थत्वात् पर्णतादेः फलशेषत्वायोगादतः सार्थवाद एवेति पर्णमयीत्वाधिकरणे समर्थितं, तथात्मज्ञानेऽपि फलश्रुतिरर्थवाद एव स्यादित्याह। तद्वदिति। विनियोजकमानाभावात् धात्मधियोऽनङ्गत्वात् तत्र फलश्रुतिर्नार्थवाद इति शङ्कते। कथमिति। प्रकरणादिना क्रतुसम्बन्धेऽपि जुहूद्वारा पर्ण-

कर्ता तु व्यभिचारि द्वारं लौकिकवैदिककर्मसाधारण्यात्, तस्मान्न तद्द्वारेणात्मज्ञानस्य क्रतुसम्बन्धसिद्धिरिति। न, व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात्, न हि देहव्यतिरिक्तात्मविज्ञानं लौकिकेषु कर्मसूपयुज्यते, सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः, वैदिकेषु तु देहपातोत्तरकालफलेषु देहव्यतिरिक्तात्मविज्ञानमन्तरेण प्रवृत्तिर्नोपपद्यत इत्युपयुज्यते व्यतिरेकविज्ञानं। नन्वपहतपाप्मत्वादिविशेषणादसंसार्यात्मविषयमौपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्। न, प्रियादिसंसू-

---

मयीत्वस्य वाक्यात् क्रतुसम्बन्धवदात्मधियोऽपि कर्तृद्वारा वेदान्तवाक्यात् क्रतुसङ्गतिरिति पूर्ववाद्याह। कर्त्रेति। सिद्धान्ती दूषयति। नेति। तदेव विवृणोति। अव्यभिचारिणेति। जुह्ववदात्मज्ञाने कर्त्रैवाव्यभिचारि द्वारमित्याशङ्क्याह। कर्तेति। तस्य व्यभिचारित्वे फलमाह। तस्मादिति। किं देहातिरिक्तात्मज्ञानस्य कर्माङ्गत्व विनियोजकाभावात् निरस्यते किंवापहतपाप्मत्वादिविशेषिता संसार्यात्मविषयोपनिषदज्ञानस्येति विकल्प्याद्यं पूर्ववादी दूषयति। नेति। तस्य विषयद्वारा तेष्वनुप्रवेशात् न कर्माङ्गत्वं निषेद्धुं शक्यमित्यर्थः। लौकिककर्मणोऽपि कर्मत्वात् वैदिककर्मवत् कर्तृद्वारेणातिरिक्तज्ञानापेक्षेति कर्तुः साधारण्यमित्याशङ्क्याह। न हीति। सर्वथेति व्यतिरेकज्ञानाज्ञानयोरित्यर्थः। तर्हि वैदिकान्यपि कर्माणि कर्मत्वादितरवन्न व्यतिरेकज्ञानमपेक्षन्त इत्याशङ्क्याह। वैदिकेष्विति। कारीर्यादिनिरासार्थं देहपातेत्यादि विशेषणं। द्वितीयमालम्बते। नन्विति। अनुपयोगित्वात् विरोधित्वाच्च तस्य न क्रत्वङ्गतेति भाव। क्रत्वपेक्षितं रूप हित्वान्यद्विवक्षितमित्याह। नेत्यादिना। जायादीनामात्मार्थत्वेन प्रियत्वमुक्त्वा आत्मा द्रष्टव्य इति वदता जायादिना भोग्येन सूचितस्य संसारिणो भोक्तुरेव द्रष्टव्यत्वमिष्टं, भोक्तृज्ञानस्य कर्मसूपयुक्तमतो भोक्त्रतिरिक्तमात्मरूपं न श्रौतमित्यर्थः। अपहतपाप्मत्वादिविशेषणस्य भोक्तर्य

चितस्य संसारिण एवात्मनो द्रष्टव्यत्वोपदेशात्, अपहतपाप्मत्वादिविशेषणन्तु स्तुत्यर्थं भविष्यति। ननु तत्र तत्र प्रसाधितमेतदधिकमसंसारि ब्रह्म जगत्कारणं, तदेव संसारिण आत्मनः पारमार्थिकं स्वरूपमुपनिषत्सूपदिश्यत इति। सत्यं प्रसाधितं तस्यैव तु स्थूणानिखननवत् फलद्वारेणाक्षेपप्रतिसमाधाने क्रियेते दार्ढ्याय॥

## आचारदर्शनात्॥ ३॥

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्येवमादीनि ब्रह्मविदामपि अन्यपरेषु वाक्येषु कर्मसम्बन्धदर्शनानि भवन्ति। तथोद्दालकादीनामपि पुत्रानु-

---

युक्तत्वादतिरिक्तमात्मरूपमेष्टव्यमित्याशङ्क्याह। अपहतेति। जन्मादिसूत्रमारभ्य तत्र तत्राप्रपञ्चब्रह्मात्मपरता वेदान्तानामुक्ता तत् कथमपहतपाप्मत्वादिकीर्तनस्य स्तुत्यर्थतेति शङ्कते। नन्विति। अधिकमिति विशेषणादाशङ्कितं द्वैतं वारयति। तदेवेति। संसारिणोऽसंसारीश्वररूपमिति व्याहतिं प्रत्याह। पारमार्थिकमिति। ऐक्ये प्रमाणं पूर्वोक्तं सूचयति। उपनिषत्स्विति। पूर्वपक्षाक्षेपं समाधत्ते। सत्यमित्यादिना। फलद्वारेणेत्यात्मज्ञानं वेदान्तानां तत् क्रत्वर्थं वेति विचारेणेत्यर्थः। साधितस्यैवाक्षेपसमाधिभ्यां साधनस्य फलमाह। दार्ढ्यायेति॥

किञ्च जनकादीनां विद्यया सह कर्माचरणदर्शनान्न केवलैव विद्या मोक्षहेतुरतः सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गमित्याह। आचारेति। सूत्रं व्याचष्टे। जनको हेति। विदेहानामधिपतिर्जनको नाम राजा बहुदक्षिणसंज्ञेन यज्ञेनाश्वमेधेन वा बहुदक्षिणायुक्तेन पुरा कदाचिदीजे यागं कृतवान्। कैकेयस्य राज्ञो

शासनादिदर्शनात् गार्हस्थ्यसम्बन्धोऽवगम्यते। केवलात् चेत् ज्ञानात् पुरुषार्थसिद्धिः स्यात् किमर्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः, अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् इति न्यायात्॥

## तच्छ्रुतेः॥४॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति च कर्मशेषत्वश्रवणात् विद्यायाः न केवलाया. पुरुषार्थहेतुत्वं॥

## समन्वारम्भणात्॥५॥

'तं विद्याकर्मणी समन्वारभेते' इति च विद्याकर्मणोः फलारम्भे साहित्यदर्शनात् न स्वातन्त्र्यं विद्यायाः॥

---

ब्रह्मविदो वाक्यमाह। यक्ष्यमाण इति। विद्यार्थिनः समागतान् प्राचीनशालादीन् भगवन्त इति सम्बोध्याहं यक्ष्यमाणोऽस्मि ततश्च कतिचित् दिनान्यासध्वमिति राजोक्तवानित्यर्थः। उक्तवाक्यानि विद्यार्थानि न कर्मार्थानीत्याशङ्क्याह। अन्येति। इतश्च ब्रह्मविदामस्ति कर्मसङ्गतिरित्याह। तथेति। आदिपदेन व्यासयाज्ञवल्क्यादिसंग्रहः, द्वितीयेन भार्यानुशासनादयो गृह्यन्ते। कर्म कृतं विद्वद्भिरेव कैश्चिदित्येतावता विद्याशक्तेरपह्नवायोगात् केवलैव सा मुक्तेर्हेतुरित्याशङ्क्याह। केवलादिति। अल्पायासमुपायं हित्वा न कोऽपि महायासं समाद्रियेत इत्यत्र लौकिकन्यायमाह। अर्के चेदिति। समीपवचनोऽर्कशब्दः॥

न केवलं विद्याया लिङ्गादेव कर्माङ्गत्वं, किन्तु तृतीयाश्रुतेरपीत्याह। तदिति। सूत्रार्थं विवृणोति। यदेवेति॥

इतो न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह। समन्वारम्भणादिति।

## तद्वतो विधानात्॥ ६॥

'आचार्यकुलात् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति। तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वं। नन्वत्राधीत्येत्यध्ययनमात्रं वेदस्य श्रूयते नार्थविज्ञानं। नैष दोषः, दृष्टार्थत्वात्। वेदाध्ययनमर्थावबोधपर्यन्तमिति स्थितं॥

## नियमाच्च॥ ७॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'॥ इति-

---

सूत्रं विवृणोति। तमित्यादिना। तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इति यावत्॥

तदस्वातन्त्र्ये लिङ्गान्तरमाह। तद्वत इति। तद्व्याकरोति। आचार्येति। तस्य कुले गृहमुपनयनं कृत्वा तत् प्राप्यनन्तरं गुरोः शुश्रूषारूपं कर्म विधायातिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमनतिक्रम्य वेदमधीत्यानन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा दारानाहृत्य कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन् कर्मान्तराणि च विहितानि च यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसम्पद्यत इत्यर्थः। अध्ययनशब्दस्य यथाश्रुतमर्थं गृहीत्वा शङ्कते। नन्विति। अध्ययनविधेरवघातादिविधिवद्दृष्टार्थत्वादर्थावबोधान्तो व्यापारोऽस्तीति प्रथमे तन्त्रे समर्थितमित्याह। नेत्यादिना॥

इतश्च न स्वतन्त्रा विद्या पुमर्थहेतुरित्याह। नियमाच्चेति। नियमं विभजते। कुर्वन्निति। इह देहे शतं समाः शतसङ्ख्याकान् संवत्सरान्

तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मात् मुच्यते मृत्युना वा' इत्येवंजातीयकान्नियमादपि कर्मशेषत्वमेव विद्याया इत्येवं प्राप्ते प्रतिविधत्ते ॥

### अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दात् पक्षो विपरिवर्तते। यदुक्तं 'शेषत्वात् पुरुषार्थवादः' इति [ब्र०सू०३।४।२] तन्नोपपद्यते। कस्मात्, अधिकोपदेशात्। यदि संसार्येवात्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टः स्यात् ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं, अधिकस्तु शारीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वे-

---

जिजीविषेत् तत्कर्माणि कुर्वन्नेवेति नियमविधिः, एवन्त्वयि नरे वर्तमाने सत्यशुभं कर्म न लिप्यते, तेन त्वं न लिप्यसे इति यावत्। इतश्च प्रकारादन्यथा प्रकारान्तरं नास्ति यतो न कर्मलेपः स्यादित्यर्थः। नियमान्तरमाह। तथेति। जरामर्यं जरामरणावधिकं। तदेव विशदयति। जरयेति। श्रुत्यादिभिरात्मधियः सिद्धे कर्माङ्गत्वे तत्फलेनैव फलवत्त्वमित्युपसंहर्तुमितीत्युक्तं। पूर्वपक्षमनूद्य सिद्धान्तयति। एवमिति॥

सूत्रं योजयति। तुशब्दादिति। पक्षविपरिवर्तमानमेव पक्षमनूद्य दर्शयति। यदीति। अनुपपत्तिहेतुं प्रश्नपूर्वकमाह। कस्मादिति। अधिकोपदेशं व्यतिरेकतो दर्शयति। यदीति। यः कर्ता कर्माङ्गं नासौ वेदान्तवेद्यो यश्च ब्रह्म तद्वेद्यं न तत्कर्माङ्गमतस्तज्ज्ञानस्य कुतः शेषता फलश्रुतेरर्थवादत्वमित्यर्थः। ब्रह्मात्मधीर्न क्रतुप्रयोगविधिनोपादेया तद्विरोधित्वादादीयमानोदितहोमविरोध्यनुदितहोमवदिति

नोपदिश्यते वेदान्तेषु । न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति प्रत्युत तत्कर्माण्युच्छिनत्तीति वक्ष्यति 'उपमर्दं च' इत्यत्र [वे०सू०३।४।१६]। तस्मात् 'पुरुषार्थोऽतः शब्दात्' इति [वे०सू०३।४।१]। यन्मतं भगवतो बादरायणस्य तत्तथैव तिष्ठति न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथा हि तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः 'यः सर्वज्ञः सर्ववित्' 'भीषास्माद्वातः पवते भीषोदेति सूर्यः' 'महद्भयं वज्रमुद्यतं' 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इत्येवमाद्याः। यत्तु प्रियादिसंसूचितस्य संसारिण एवात्मनो वेद्यतयानुकर्षणं 'आत्मनस्तु कामाय सर्वं प्रियं भवति' 'आत्मा वा अरे द्रष्टव्यः' 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो य एषोऽक्षिणि पुरुषो दृश्यते' इत्युपक्रम्य 'एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि' इति चैवमादि, तदपि 'अस्य महतो भूतस्य निः-

---

मत्वाह । प्रत्युतेति । बादरायणस्येत्यादि व्याचष्टे । तस्मादिति । उक्तात्मज्ञानस्य क्रतुशेषत्वायोगस्तच्छब्दार्थः । अधिकोपदेशासिद्धिमाशङ्क्य तद्दर्शनादित्यनेन प्रत्याह । तथा हीति । कल्पितं रूपं हित्वा-न्यदात्मरूपमनिष्टमित्युक्तं तत्राह । यत्त्विति । आत्मनस्तु कामायेत्युपक्रम्यात्मा वा अरे द्रष्टव्य इति वाक्यं ब्रह्मोपदिदिक्षाया सत्यामेव ब्रह्मात्मैक्याभिप्रायमित्यत्र वाक्यशेषमाह । अस्येति । यः प्राणेनेत्यादिवाक्यमप्यैक्यपरं इत्यत्र वाक्यशेषं दर्शयति । योऽशनायेति । य एषोऽक्षिणीत्यादिवाक्यमपि तथेत्यस्मिन्नर्थे शेषानुगुण्यमाह । परमिति । उक्तैः शेषैः संसारिणो यदधिकं ब्रह्म तस्योपदिदिक्षाया सत्यामेव ब्रह्मणो जीवस्यात्यन्तभेदाभावधिया द्रष्टव्यादिवाक्यमिति कल्पनपेक्षित-

श्वसितमेतत् यदृग्वेदो यजुर्वेदः' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायां नात्यन्तभेदाभिप्रायमित्यविरोधः, पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपमुपाधिकृतन्तु शारीरत्वं 'तत्त्वमसि' 'नान्योऽतोऽस्ति द्रष्टा' इत्येवमादिश्रुतिभ्यः । सर्वञ्चैतत् विस्तरेणास्माभिः पुरस्तात् तत्र तत्र निर्णीतं ॥

## तुल्यन्तु दर्शनं ॥ ९ ॥

यदुक्तमाचारदर्शनात् कर्मशेषो विद्येत्यत्र ब्रूमः, तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः। तथा हि श्रुतिर्भवति 'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत् पूर्वे वि-

---

मात्मरूपं वेदान्तेषु विवक्षितमित्युपगमे न कश्चित् विरोधोऽस्तीति योजना । कुतो जीवब्रह्मैक्यं मिथो विरोधादित्याशङ्क्य तात्त्विको विरोधो नास्तीत्याह । पारमेश्वरमिति । प्रातिभासिकस्तु विरोधस्तात्त्विकाभेदाविरोधीति मत्वाह । उपाधीति । जीवस्य तात्त्विकं रूपं ब्रह्मैवेत्यत्र श्रुतिसंवादमाह । तत्त्वमिति । सम्पदादिविषयं तत्त्वमादिवाक्यं न वस्तुविषयमित्याशङ्क्याह । सर्वञ्चेति ॥

परोक्तं लिङ्गदर्शनं प्रत्याह । तुल्यन्त्विति । उक्तमनूद्य सूत्रमुत्तरत्वेन योजयति । यदित्यादिना । इतश्च विद्यायाः न शेषतेत्याह । याज्ञवल्क्येति । आदिशब्देन शुकादयो गृह्यन्ते । कथं तेषामकर्मनिष्ठत्वं तदाह । एतावदिति । उभयथा लिङ्गदर्शने संशयमाशङ्क्य परकीयसिद्धान्तामन्यथासिद्धिं वक्तुमारभते । अपि चेति । तत्र यक्ष्यमाया

दांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते 'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज' इत्येवमादिश्रुतिभ्यः। अपि च 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयं, सम्भवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनं न त्वत्रापि कर्माङ्गत्वमस्ति प्रकरणाद्यभावात्। यत् पुनरुक्तं 'तच्छ्रुतेः' इत्यत्र ब्रूमः॥

## असार्वत्रिकी॥१०॥

'यदेव विद्यया करोति' इत्येषा श्रुतिर्न सर्वविद्याविषया प्रकृतविद्याभिसम्बन्धात्, प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यत्र [छा०]॥

---

इत्यादिलिङ्गदर्शनस्यान्यथासिद्धिमाह। यक्ष्यमाण इति। तत्रापि विद्यात्वाद्ब्रह्म कर्मसाहित्यमन्यथा ब्रह्मविद्यायामपि तत्प्रसङ्गादित्याशङ्क्याह। सम्भवतीति। तर्हि वैश्वानरविद्याया न स्वातन्त्र्येण फलवत्त्वं कर्माङ्गत्वाङ्गीकारात्तत्राह। न त्विति। येषाञ्च ब्रह्मविदामपि कर्म दृश्यते, न तत्तेषां कर्म तद्धि चोदनालक्षणं तेषाञ्चाहंममाभिमानाभावे च चोदनाभावात् कथञ्चिदनुवर्त्तमानमपि तदाभासमात्रमिति भावः। परोक्तां श्रुतिमनूद्य तदुत्तरत्वेन सूत्रमवतारयति। यदिति॥

तद्विभजते। यदेवेति। विद्याशब्दस्य सामान्यविषयस्य विशेषाकाङ्क्षस्य प्राकरणिकविशेषेण चरितार्थत्वादिति हेतुमाह। प्रकृतेति। व्याप्तधियस्तयात्वशङ्कां प्रत्याह। प्रकृता चेति॥

## विभागः शतवत् ॥ ११ ॥

यदप्युक्तं 'तं विद्याकर्मणी समन्वारभेते' इत्येतत् समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति तत् प्रत्युच्यते, विभागोऽत्र द्रष्टव्यः विद्या अन्यं पुरुषं समन्वारभते कर्मान्यमिति शतवत्, यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत्। न चेदं समन्वारम्भवचनं मुमुक्षुविषयं 'इति नु कामयमानः' इति संसारिविषयत्वोपसंहारात्, 'अथ अकामयमानः' इति च मुमुक्षोः पृथगुपक्रमात्। तत्र संसारिविषया विद्या विहिता प्रतिषिद्धा च परिगृह्यते विशेषाभावात्, कर्मापि विहितं प्रतिषिद्धञ्च यथाप्राप्तानुवादित्वात्। एवं सत्यविभागेनापीदं समन्वारम्भवचनमवकल्पते। यच्चोक्तं 'तद्वतो विधानात्' इत्यत उत्तरं पठति ॥

---

परकीयं लिङ्गान्तरं दूषयति। विभाग इति। चोद्यमनूद्योत्तरत्वेन सूत्रं व्याचष्टे। यदपीत्यादिना। सामान्यश्रुतौ कथं विभागः स्यात्तत्र सदृष्टान्तमाह। शतवदिति। समन्वारम्भवचनस्य मुमुक्षुविषयत्वं उपेत्य कर्मसाहित्येन तल्लिङ्गं विभागादित्युक्तं, इदानीममुमुक्षुविषयत्वादविभागोऽपि न दूषणमित्याह। न चेति। तस्या मुमुक्षुविषयत्वे हेत्वन्तरमाह। अथेति। संसारिविषये तं विद्येत्यादेवाक्ये विद्याशब्दार्थमाह। तत्रेति। उद्गीथादिविषया विहिता विद्या प्रतिषिद्धा च नग्नस्त्रीदर्शनादिरूपा। तथाभूतकर्मसाहचर्यादपि तथाविधैव विद्येत्याह। कर्मापीति। प्रकृते वाक्येऽपि विद्याकर्मणोरविशेषोपादाने हेतुमाह। यथेति। उक्तार्थवाक्यस्य संसारिविषयत्वे फलितमाह। एवमिति। लिङ्गान्तरमनूद्य सूत्रमादत्ते। यच्चेति। यच्चैतदुक्तमित्यर्थः ॥

## अध्ययनमात्रवतः ॥ १२ ॥

'आचार्यकुलात् वेदमधीत्य' इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः। नन्वेवं सत्यविद्वत्त्वादनधिकारः कर्मसु प्रसज्येत। नैष दोषः, न वयमध्ययनप्रभवं कर्मावबोधनमधिकारकारणं वारयामः किं तर्ह्यौपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इत्येतावत् प्रतिपादयामः, यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारिणापेक्ष्यते एवमेतदपि द्रष्टव्यमिति। यदप्युक्तं 'नियमाच्च' इति अत्राभिधीयते ॥

## नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति अविशेषेण नियमविधानात् ॥

---

सूत्रं विवृणोति। आचार्येति। मात्रग्रहणेनार्थज्ञानमात्रं व्यवच्छिन्नमिति मन्वानः शङ्कते। नन्विति। अविद्वत्त्वात् विद्याहीनत्वादिति यावत्। मात्रग्रहणमात्मज्ञानापेक्षं न कर्मावबोधापेक्षं इत्याह। नैषेत्यादिना। वेदार्थत्वादात्मनः तज्ज्ञानमपि कर्मावबोधवदधिकारेऽपेक्षितव्यमित्याशङ्क्याह। यथेति। पूर्वसूत्रव्याख्यासमाप्ताविति शब्दः। सिद्धान्तरमनूद्य सूत्रान्तरमादत्ते। यदपीति ॥

अविद्वद्विषयं नियमविधानमिति व्याचष्टे। कुर्वन्निति ॥

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

'कुर्वन्नेवेह कर्माणि' इत्यत्रापरो विशेष आख्यायते, यद्यप्यत्र प्रकरणसामर्थ्यात् विद्वानेव कुर्वन्निति सम्बध्यते, तथापि विद्यास्तुतये कर्मानुज्ञानमेतत् द्रष्टव्यं, 'न कर्म लिप्यते नरे' इति हि वक्ष्यति। एतदुक्तं भवति यावज्जीवं कर्म कुर्वत्यपि पुरुषे विदुषि न कर्म लेपाय भवति विद्यासामर्थ्यादिति। तदेवं विद्या स्तूयते ॥

## कामकारेण चैके ॥ १५ ॥

अपि चैके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात् फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति, कामकारेणेति। श्रुतिर्भवति वाजसनेयिनां 'एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां

---

विद्वद्विषयत्वमुपेत्य परिहारान्तरमाह। स्तुतय इति। एवं तर्हि प्रकरणमभग्नमिति मत्वा सूत्रं विभजते। कुर्वन्नेवेति। विशेषमेव विशदयति। यद्यपीति। स्तुत्यर्थं कर्मानुज्ञानमित्यत्र वाक्यशेषमनुकूलयति। नेति। तथापि कथं स्तुतिस्तत्राह। एतदिति। एवं कर्म कुर्वत्यपि त्वयि नेतो ब्रह्मभावात् विद्यागम्यादन्यथा संसारापत्तिरस्ति यतो न कर्म लिप्यते इति योजना गृहीत्वोपसंहरति। तदेवमिति ॥

पूर्वपक्षे हेतूनेवमुन्मथ्य स्वपक्षे हेत्वन्तरमाह। कामेति। इतश्च विद्याया न कर्माङ्गतेति चकारार्थमाह। अपि चेति। स्वेच्छातः कर्मसाधनप्रजादित्यागलिङ्गादपि विद्यायाः स्वातन्त्र्यमिति हेत्वन्तरमेव स्फारयति। एक इति। येषां नोऽस्माकमयमपरोक्ष आत्माऽयं

नोऽयमात्माऽयं लोकः’ इति। अनुभवारूढमेव च विद्याफलं न क्रियाफलवत् कालान्तरभावीत्यसकृदावेदितं, अतोऽपि न विद्यायाः कर्मशेषत्वं नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुं॥

## उपमर्द्दञ्च॥१६॥

अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति ‘यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत्’ इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विकान्तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत, तस्मादपि स्वातन्त्र्यं विद्यायाः॥

---

लोकः प्रत्यक्षं फलन्ते वयं किं प्रजया करिष्याम इति निश्चित्याग्निहोत्रादि न कृतवन्त इत्यर्थः। मोक्षस्यादृष्टफलत्वात् कथं मुक्तत्वनिश्चयात् प्रजादित्यागसिद्धिस्तत्राह। अनुभवेति। ब्रह्मधीर्न क्रतुप्रयोगविधिना देया क्रत्वङ्गसम्बन्धित्वेऽपि फलान्तरयोगित्वात् गोदोहनवदिति मत्वाह। अतोऽपीति॥

अधिकोपदेशादित्यत्रात्मनोऽश्नायाद्यत्ययात् तद्धीर्न कर्माङ्गमित्युक्तमिदानीमशेषक्रियादिविभागोपमर्दकत्वादपि न कर्माङ्गमित्याह। उपमर्दञ्चेति। इतश्चात्मधीर्न कर्माङ्गमिति चकारार्थमाह। अपि चेति। हेत्वन्तरं स्फोरयति। कर्मेति। विद्यासामर्थ्यात् प्रपञ्चोपमर्दे फलितमाह। वेदान्तेति। आत्मज्ञानस्यादीयमानक्रत्वङ्गविरोधित्वे फलितं निगमयति। तस्मादिति॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतःसु चाश्रमेषु विद्या श्रूयते, न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते कर्माभावात्, न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति। स्यादेतत् ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति तदपि नास्ति तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते त्रयो धर्मस्कन्धा. 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'तप श्रद्धे ये ह्युपवसन्त्यरण्ये,'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति,'ब्रह्मचर्यादेव प्रव्रजेत्' इत्येवमादिषु। प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानामप्राकृतानपाकृतर्णानाञ्चोर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धं तस्मादपि स्वातन्त्र्यं विद्याया इति ॥

---

विद्यास्वातन्त्र्ये हेत्वन्तरमाह। उर्द्ध्वरेतस्स्विति। विद्याकर्मणी नाङ्गाङ्गिभूते मिथो व्यतिरेकित्वाद्दतुगमननैष्ठिकव्रतवदिति मत्वा योजयति। ऊर्द्ध्वेत्यादिना। तथापि कथं कर्माङ्गत्वं विद्याया व्यासेध्यते तत्राह। न चेति। तेषामपि स्नानादिकर्मास्तीत्याशङ्क्याह। न हीति। बाधितानुवृत्त्या तत्सद्भावेऽपि वैदिकाग्निहोत्राद्यभावात् क्रत्वङ्गता ज्ञानस्येत्यर्थः। शब्दे हीति सूत्रावयवव्यावृत्त्यामाशङ्कामाह। स्यादिति। सूत्रावयवेनोत्तरमाह। तदपीति। कर्मानधिकृतान्धादिविषयं पारिव्राज्यमित्याशङ्क्याह। प्रतिपन्नेति। ऋणापाकरणे श्रुतिस्मृतिभ्यां गृहस्थस्यैवापाकृतर्णत्रयस्यैवोर्द्ध्वरेतः शब्दितमैथुनासमाचारोपलक्षितं पारिव्राज्यमित्याशङ्क्याह। अपाकृतेति। साक्षाद्विधिश्रुतिविरोधेऽर्थवादश्रुतिस्मृत्योर्बाध्यतेत्यभिप्रेत्योक्तं। श्रुतीति। श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याद्या दर्शिता, स्मृतिस्तु यस्याश्रमविकल्पमेके ब्रुवते यमिच्छेत " तमावशेदित्याद्योदाहार्या। ऊर्द्ध्वरेतस्स्वाश्रमेषु विद्याया सिद्धौ फलितमाह। तस्मादिति। तस्या स्वातन्त्र्ये केवलाया सिद्धा मुक्तिः फलितेति वक्तुमितीत्युक्तं ॥

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

'त्रयो धर्मस्कन्धाः' इत्यादयो ये शब्दा ऊर्द्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः न ते तत्प्रतिपादनाय प्रभवन्ति, यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्य्यो मन्यते न विधिं, कुतः, न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति। अर्थान्तरपरत्वञ्चैतेषां प्रत्येकमुपलभ्यते, त्रयो धर्मस्कन्धा इत्यत्र तावद्यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्तीति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं सङ्कीर्त्यात्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते 'ब्रह्मसंस्थोऽमृतत्वमेति' इति। ननु परामर्शेऽप्या-

---

पूर्वाधिकरणावान्तरसूत्रेणाक्षेपलक्षणां सङ्गतिं विवक्षन्नाक्षिपति। परामर्शमिति। ऊर्द्ध्वरेतःशब्दितं पारिव्राज्यं नानुष्ठेयमनुष्ठेयं वेति भ्रान्तिप्रमाणमूलत्वाभ्यां सन्देहे पूर्वपक्षयति। त्रय इति। अत्र शास्त्रीयसम्यग्ज्ञानस्यान्तरङ्गसाधनप्रसङ्गादनुष्ठेयमुच्यत इति स्फुटा पादादिसङ्गतिः। पूर्वपक्षे पारिव्राजके विद्याप्रसिद्धेर्विभ्रमत्वात्तस्याः न स्वातन्त्र्यसिद्धिः, सिद्धान्ते तस्यास्तत्र प्रामाणिकत्वात् तत्सिद्धिरिति स्वीकृत्य परामर्शं जैमिनिरिति व्याख्याय हेत्वाकाङ्क्षायामचोदनेति हेतुत्वेन व्याचष्टे। कुत इति। पूषा प्रपिष्टभाग इतिवत् कल्प्यतां विधिरित्याशङ्क्य ब्रह्मसंस्थतादिविधिपरत्वात् वाक्यजातस्य नैवमिति चशब्दार्थमाह। अर्थान्तरेति। तत्र ब्रह्मसंस्थतादिविधिपरत्वं त्रय इत्यादिवाक्यस्य साधयति। त्रय इत्यादिना। अन्यत्र विहितस्यान्यत्र परामर्शादन्यत्र विधिकल्पनादिहैव कल्पना लघ्वीत्याशङ्कते। नन्विति। परामर्शस्यानुवादाख्यस्य पुरावादार्थेवत्वात् तदर्थादाश्रमप्रती-

श्रमा गम्यन्ते एव, सत्यं गम्यन्ते, स्तुत्याचाराभ्यान्तु तेषां प्रसिद्धिर्न प्रत्यक्षायाः श्रुतेः, अतश्च प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्त्यनधिकृतविषया वा। ननु गार्हस्थ्यमपि सहैवोर्द्ध्वरेतोभिः परामृष्टं यज्ञोऽध्ययनं दानमिति प्रथम इति, सत्यमेवं तथापि यो गृहस्थ प्रत्येवाग्निहोत्रादीनां कर्मणां विधानात् श्रुतिप्रसिद्धमेव तदस्तित्व, तस्मात् स्तुत्यर्थ एवायं परामर्शो न चोदनार्थ.। अपि चापवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरं 'वीरहा वा एष देवानां योऽग्निमुद्वासयते आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीर्नापुत्रस्य लोकोऽस्तीति तत् सर्वे पशवो विदु' रित्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते तप श्रद्धे ये चाप्युपवसन्त्यरण्ये'

---

तिमङ्गीकरोति। सत्यमिति। तर्हि तद्विषयश्रुतेरन्यत्राश्रितत्वात् गौरवमित्याशङ्क्याह। स्मृतीति। तयोरपि श्रुतिमूलत्वात् विधियुक्त श्रुतिकल्पनादिहैव तत्कल्पने लाघवमित्याशङ्क्याह। अतश्चेति। प्रत्यक्षश्रुतिर्यावज्जीवादिश्रुति। निरालम्बनत्वात् कथमपि सालम्बनत्वं युक्तमिति कल्पनान्तरमाह। अनधिकृतेति। येऽन्धादयो नित्यादिकर्मस्वनधिकृतास्तद्विषया आश्रमान्तरस्मृतयस्तदाचाराश्चेत्यर्थ। आश्रमान्तराणां परामर्शेऽपि गार्हस्थ्यवत प्रामाणिकत्वसिद्धेरनुष्ठेयतेति शङ्कते। नन्विति। परामर्शसाम्यमङ्गीकरोति। सत्यमिति। तर्हि प्रामाणिकत्वे नानुष्ठेयत्वमपि तुल्य स्यादित्याशङ्क्य न परामर्शमात्रात् गार्हस्थ्यसिद्धिरपि तु प्रत्यक्षश्रुतिविधानादिति विशेषमाह। तथापीति। गार्हस्थ्यमेकमेव श्रौतमिति स्थिते ब्रह्मसंस्थतास्तुत्यर्थमेव त्रय इत्याद्याश्रमान्तरवचनमित्युपसंहरति। तस्मादिति। निन्द्यमानत्वात् आश्रमान्तरमननुष्ठेयमित्याह। अपि चेति। तत्र सूत्रावयव योज-

इति च देवयानोपदेशो नाश्रमान्तरोपदेशः। सन्दिग्धञ्चा-श्रमान्तराभिधानं 'तप एव द्वितीयः' इत्येवमादिषु। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति लोकसंस्तवोऽयं न पारिव्राज्यविधिः। ननु ब्रह्मचर्य्यादेव प्रव्रजेदिति वि-स्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जावालानां। सत्यमेवमेतत् अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यं॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

अनुष्ठेयमाश्रमान्तरं बादरायण आचार्य्यो मन्यते, वेदेषु श्रवणादग्निहोत्रादीनाञ्चावश्यानुष्ठेयत्वात्तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमिति होमां मतिं निराकरोति गार्हस्थ्य-

---

यति। अपवदतीति। तत्र त्रय इत्यादिवाक्यस्यान्यार्थत्वमुक्त्वा वाक्यान्तरस्यापि तद्देवार्थान्तरपरत्वमाह। तथेति। ते विरजामभिसम्भवन्ति सूर्य्यद्वारेण ते विरजाः प्रयान्तीति वाक्यशेषाद्देवयानोक्तिपरं तदित्यर्थः। आश्रमवाचकशब्दाभावाच्चार्थान्तरपरत्वमित्याह। सन्दिग्धं चेति। प्रव्रजन्तीत्याश्रमवाचिशब्ददृष्टेरनुष्ठेयं पारिव्राज्यं इत्याशङ्क्याह। तथेति। एव विशिष्टोऽयमात्मलोको येनेदं साक्षात् कर्तुमिच्छन्तो दुरनुष्ठेयामपि प्रव्रज्यां कुर्वन्तीति श्रुतिर्न तद्विषयो विधिर्वर्त्तमानोपदेशादित्यर्थः। पूर्वपक्षमाक्षिपति। नन्विति। प्रत्यक्षविधानमङ्गीकरोति। सत्यमिति। तर्हि पूर्वपक्षासिद्धिरित्याशङ्क्य नास्तीद विधानमिति कृत्वा चिन्तेयमित्याह। अनपेक्ष्येति॥

सिद्धान्तसूत्रमवतार्य्य व्याकरोति। अनुष्ठेयमिति। पूर्वपक्षमनुभाष्य तन्निरासप्रतिज्ञा विरुणोति। वेद इति। तत्र प्रश्नपूर्वकं हेतुमाह। कुत इति। तस्याक्षरार्थमाह। समाना हीति। तस्यैव ता-

यदेवाश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः। कुत, साम्यश्रुतेः, समाना हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते 'त्रयो धर्मस्कन्धाः' इत्याद्या, यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टमेवमाश्रमान्तरमपीति प्रतिपत्तव्यं, यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये, तस्मात् तुल्यमनुष्ठेयत्व गार्हस्थ्येनाश्रमान्तरस्य। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यस्य वेदानुवचनादिभिः समभिव्याहारः 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इत्यस्य च पञ्चाग्निविद्यया। यत्तूक्तं 'तप एव द्वितीयः' इत्यादिष्वाश्रमान्तराभिधान सन्दिग्धमिति।

---

त्पर्य्यार्थमाह। यथेति। त्रयो धर्मस्कन्धा इत्यत्रोर्द्धरेतस आश्रमाः श्रुत्यन्तरसिद्धा एव परामृश्यन्ते एतद्वाक्यपरामृष्टत्वात् गार्हस्थ्यवदित्यर्थः। परामर्शस्य विधिपूर्वकत्वे दृष्टान्तमाह। यथेति। निवीतं मनुष्याणां प्राचीनावीत पितृणामुपवीत देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुत इत्यत्रोपवीतविधिपरे वाक्ये विध्यन्तरसिद्धयोरेव निवीत प्राचीनावीतयोर्यथा परामर्शः तथात्रापीत्यक्षरार्थः। निवीत मनुष्याणामित्यादिदर्शपूर्णमासयोः श्रुतं, तत्रोपवीतं विधीयत एवेतरयोस्तु विधिरर्थवादो वेति संशये सत्यपूर्वार्थलाभात् मनुष्यशब्दस्य च मनुष्यप्राधान्यवादित्वादातिथ्ये कर्मणि निवीतं पित्र्ये च प्राचीनावीतमिति प्राप्ते मनुष्याणां क्रियासु सौकर्य्याय कण्ठलम्बिवस्त्रधारणस्य वा देहार्द्धबन्धनस्य वा निवीतस्य प्राप्तत्वात् प्राचीनावीतस्य च पितृयज्ञे वाक्यान्तरेण प्राप्तेस्तदनुवादेन निवीतमित्यादि उपवीतं स्तोतुमर्थवाद इति षष्ठ्या मीमांसाया स्थितं, तथैव परामर्शश्रुतावपि त्रय इत्याद्यायां गार्हस्थ्यवदाश्रमान्तरमपि विहितमेवान्यत्र परामृश्यते तस्य विध्यपेक्षत्वादित्यर्थः। साम्यश्रुतिफलमाह। तस्मादिति। त्रय इत्यत्राश्रमा-

नैष दोषः, निश्चयकारणसद्भावात्। त्रयो धर्मस्कन्धा इति हि स्कन्धत्रित्वं प्रतिज्ञातं न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राश्रमसम्बन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते। तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः, ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत 'ये चेमेऽरण्ये' इति चारण्यलिङ्गात् श्रद्धातपोभ्यामाश्रमगृहीतिः। तस्मात् परामर्शेऽप्यनुष्ठेयमाश्रमान्तरं॥

## विधिर्वा धारणवत्॥ २०॥

विधिर्वायमाश्रमान्तरस्य न परामर्शमात्रं। ननु विधित्वा-

---

न्तरस्य गार्हस्थ्येन साम्यश्रुतिरुक्ता सम्प्रति पारिव्राज्यवाक्ये साम्यश्रुतिमाह। तयेति। अस्येति पारिव्राज्योक्तिः विधेयसाहित्यादस्यापि विधेयतेत्यर्थः। वाक्यान्तरेऽपि साम्यश्रुतिमाह। ये चेति। अस्येति वानप्रस्थोक्तिः। विधेयपञ्चाग्निविद्यया तस्य सहोक्तिरस्ति तेन तद्वदेव वानप्रस्थमनुष्ठेयमित्यर्थः। परोक्तिमुद्भाव्य प्रत्याह। यत्त्वित्यादिना। किं तन्निश्चयकारणं तदाह। त्रय इति। स्कन्धशब्दस्य समूहवाचित्वेऽपि त्रित्वप्रतिज्ञा स्यादित्याशङ्क्याह। न चेति। यज्ञेत दद्यादित्याद्युत्पत्तिविधिभिन्नाः सन्तो बहवो धर्मा नाश्रमसम्बन्धमन्तरेण त्रित्वेऽन्तर्भावयितुं शक्यन्ते। यद्याश्रमपरः स्कन्धशब्दो न स्यान्न स्यात्तदा यज्ञादीनां त्रित्वं तेषां बहुत्वादतः स्कन्धशब्दस्य समूहार्थयोगात् त्रित्वमेव स्कन्धानामाश्रमत्वनिश्चायकमित्यर्थः। कथं तर्हि तेषामाश्रमाणां विभागस्तत्राह। तत्रेति। वाक्यान्तरेऽपि निश्चायकं दर्शयति। ये चेति। परोक्तं निरस्य स्वमतमुपसंहरति। तस्मादिति॥

परामर्शमुपेत्यानुष्ठेयत्वमुक्तमिदानीं विधिरेवायमित्याह। विधि-

भ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत प्रतीयते चात्रैकवाक्यता पुण्यलोकफलास्त्रयो धर्मस्कन्धाः ब्रह्मसंस्थता त्वमृतत्वफलेति। सत्यमेतत्, सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वाद्विध्यन्तरस्यादर्शनात् विस्पष्टाच्चाश्रमान्तरप्रत्ययात् गुणवादकल्पनयैकवाक्यत्वप्रयोजनानुपपत्तेः धारणवत्, यथा 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणमपूर्वत्वात्। तथा चोक्तं शेषलक्षणे 'वि-

---

वेति। प्रतिज्ञां विभजते। विधिरिति। स्मृत्याचारयोराश्रमचतुष्टयनिविष्टयोर्भ्रान्तित्वायोगात् मूलकल्पनाया विधियुक्तवाक्यकल्पनात् लघीय॰ त्रय इत्यादिष्वाश्रमविधिकल्पनमिति भाव। अल्पफलत्वेनाश्रमत्रयनिन्दया ब्रह्मसंस्थतास्तुतेरेकवाक्यत्वनिश्चयात् तद्भङ्गेनाश्रमविधिकल्पनमयुक्तमिति शङ्कते। नन्विति। एकवाक्यताधीरेव कथं तत्राह। प्रतीयते चेति। एकवाक्यत्वसम्भवे तद्भेदो न युक्तिमानित्यङ्गीकरोति। सत्यमिति। आश्रमाणां पूर्वसिद्धेरभावात् तत्परामर्शेन स्तुतेरयोगादेकवाक्यतैवात्रायुक्तेत्याह। सतीमपीति। किञ्च विधियुक्तवाक्यान्तरकल्पनायामाश्रमान्तराणां विहितत्वोपगमाप्रसक्त्या स्वपक्षहानात् तत्कल्पनादिहैवाभीष्टे वाक्ये विधिमात्रकल्पना युक्तेत्याह। विध्यन्तरस्येति। किञ्च मुख्यमाश्रमान्तरप्रत्ययं त्यक्त्वा स्तुतिलक्षणैकवाक्यत्वकल्पनायोगात् वाक्यभेदेन विधिरेवायमित्याह। विस्पष्टाच्चेति। एकवाक्यताभानेऽपि तत्त्यागेनापूर्वार्थविधौ दृष्टान्तमाह। धारणवदिति। महापितृयज्ञे दिग्गताग्निहोत्रे च श्रुतं वाक्यमुदाहरति। अधस्तादिति। उदाहरणव्याख्योपयोगित्वेन वाक्यस्याभीष्टमर्थमाह। अत्रेति। प्रकृते कर्मविशेषे स्रुचि प्रक्षिप्तं हविराहवनीयं प्रतिपदा नीयते तदा पित्र्ये होमे तस्य हविषोऽधस्तात् समिधं धारयन्ननुद्रवेदित्यत्राधोधारणस्य विहितत्वादुपरि हीति तच्छेषानु-

धिस्तु धारणेऽपूर्वत्वात्' इति, तद्वदिहाप्याश्रमपरामर्शश्रुतिर्वि-
धिरेवेति कल्प्यते। यदापि परामर्श एवायमाश्रमान्तराणां
तदापि ब्रह्मसंस्थता तावत्संस्तवसामर्थ्यादवश्यविधेयाऽभ्युपगन्तव्या।
सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचिदाहोस्वित् परिव्राजक-
स्यैवेति विवेक्तव्यं, यदि च ब्रह्मचार्यान्तेष्वाश्रमेषु परामृश्यमा-
नेषु परिव्राजकोऽपि परामृष्टस्ततश्चतुर्णामप्याश्रमाणां परा-
मृष्टत्वाविशेषादनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्र-

---

वादतया तदेकवाक्यत्वसिद्धावप्युपरिष्टात् समिद्धारणस्यापूर्वत्वात् दैवे
होमे वाक्यभेदं कृत्वा तद्विधीयत इत्यर्थः। उक्तेऽर्थे तार्त्तीयं सूत्र-
मुदाहरति। तथेति। उपरि हि देवेभ्यो धारयतीत्यत्रोपरि धारणं
विधीयते न वेति सन्देहे धारयतीति वर्त्तमानोपदेशादुपरि हीति
हिशब्दश्रुतेश्चोपरि समिधः प्राप्तेर्हविषश्चाभ्यर्हितद्रव्यत्वेन येन केना-
च्छादनप्राप्तौ स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीति वाक्यान्तरप्राप्त-
सन्निन्नियमनात् अनुवादो न विधिरिति प्राप्ते स्रुग्दण्डे समिधमुप-
संगृह्येति हविषः प्राग्देशसमिद्धारणस्य प्राप्तत्वेऽपि तस्मादुपरि
तद्धारणस्य अप्राप्तेर्भंक्त्वा हिशब्दं पञ्चमलकारेण विधिरेवायमित्याह।
विधिस्त्विति। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। तद्वदिति। परामर्श-
पक्षमेवावलम्ब्याश्रमाणां परामर्शेऽपि पारिव्राज्यस्य विधिरेष्टव्यो-
ऽन्यथा स्तुत्ययोगादित्याह। यदेति। ब्रह्मसंस्थता यावत् स्तूयते तद्वि-
धीयत इति न्यायात् विधेयत्वेऽपि पारिव्राज्यस्य किं स्यादित्याशङ्क्य
तदर्थं विचारमवतारयति। सा चेति। पक्षद्वयस्य निर्बीजत्वात्
नेदं विचार्यमित्याशङ्क्य विचार्यश्रुतौ परिव्राजकोऽपि परामृष्टो न
वेति विकल्प्याद्यमनूद्य प्रथमपक्षव्याप्तिमाह। यदीति। परामृष्ट-
त्वाविशेषाच्च चतुर्ष्वाश्रमेषु यः कश्चित् ब्रह्मसंस्थो भविष्यतीति सम्ब-
न्धः। ब्रह्मसंस्थोऽनाश्रमी कस्मात् न स्यादित्याशङ्क्यानाश्रमित्वस्य नि-
न्द्यमानत्वादित्याह। अनाश्रमित्वेति। द्वितीयमनूद्य तत्पक्षव्याप्ति-

ह्मसंस्थो भविष्यति अथ न परामृष्टस्ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति, तत्र तपःशब्देन वैखानसभाक्षिणा परामृष्टः परिव्राडपीति केचित्, तदयुक्तं, न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति यथात्र ब्रह्मचारिगृहमेधिनावसाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितावेवं भिक्षुवैखानसावपीति युक्तं। तपश्चासाधारणो धर्मो वानप्रस्थानां कायक्लेशप्रधानत्वात्तपःशब्दस्य तत्र रूढेः, भिक्षोस्तु धर्म इन्द्रियसंयमादिलक्षणो नैव तपःशब्देनाभिलप्येत, चतुष्ट्वेन च प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यं। अपि च भेदव्यपदेशोऽत्र भवति 'त्रय एते पुण्यलोकभाजः एकोऽमृतत्वभाक्' इति। पृथक्त्वे च व्यपदेशोऽवकल्पते,

---

माह। त्रयेति। पक्षयोः सम्भावनया विचारारम्भमुक्त्वा पूर्वपक्षमाह। तत्रेति। परिव्राजकस्यापि यमनियमादितपःसम्भवादित्यर्थः। आश्रमाणामेकैकशोऽसाधारणधर्मरूपदर्शनायोपक्रमस्तदनुसारेणोपसंहारस्य युक्तत्वात्तपःशब्देन नोभयग्रहणमिति दूषयति। तदिति। किं तर्हि युक्तं तदाह। यथेति। कस्तर्हि तपःशब्दार्थः तत्राह। तपश्चेति। तेषां तत्प्रधानत्वेऽपि तपःशब्दस्य साधारण्यं किन्न स्यात्तत्राह। तपःशब्दस्येति। तस्य कृच्छ्रादौ रूढेरन्यत्र तदभावात्तेन वानप्रस्थ एव परामृश्यत इत्यर्थः। कथं तर्हि परिव्राजकधर्मेऽपि तपःशब्दप्रयोगस्तत्राह। भिक्षोस्त्विति। इतश्च पूर्वं परिव्राजको नोक्त इत्याह। चतुष्ट्वेनेति। न हि प्रसिद्धसंख्याभेदेषु संख्यान्तरोक्तिर्युक्तेत्यर्थः। पृथगुक्तिसामर्थ्यादपि प्रकृताश्रमत्रयातिरिक्तो ब्रह्मसंस्थ इत्याह। अपि चेति। भेदव्यपदेशेऽपि कथं पृथक्त्वं तत्राह। पृथक्त्वे चेति। सर्वे एते पुण्यलोका इत्यत्र भिक्षुरपि परामृष्टश्चेत्तस्य ब्रह्मसंस्थत्वाभावात् अमृतत्वमेवेति न पुण्यलोकत्वं

न ह्येवम्भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञावन्यतरस्तुतयोर्महा-
प्रज्ञ इति, भवति त्वेवं देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ विष्णुमि-
त्रस्तु महाप्रज्ञ इति। तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोक-
भाजः परिशिष्यमाणः परिव्राडमृतत्वभाक्। कथं पुनर्ब्रह्म-
संस्थशब्दो योगात् प्रवर्त्तमानः सर्वत्र सम्भवन् परिव्राजक
एवावतिष्ठेत, रूढ्यभ्युपगमे वाश्रममात्रादमृतत्वप्राप्तेर्ज्ञानान-
र्थक्यप्रसङ्ग इति। अत्रोच्यते। ब्रह्मसंस्थ इति हि ब्रह्मणि परि-
समाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते, तच्च त्रयाणा-
माश्रमाणां न सम्भवति स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवाय-
श्रवणात्, परिव्राजकस्य तु सर्वकर्मसन्न्यासात् प्रत्यवायो न सम्भ-
वति अननुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्म-
संस्थताया उपोद्बलको न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य

---

विरोधान्न च तपःशब्देन भिक्षोरपि ग्रहे तद्वर्जनं युक्तमेव इति
प्रकृतानां कार्त्स्न्येन परामर्शात् तस्मात् भेदोक्त्या पृथक्त्वमेवेत्यर्थः।
अपृथक्त्वे भेदोक्तिरयुक्तेत्यत्र दृष्टान्तमाह। न हीति। पृथक्त्वे तु
तदुक्तिर्युक्तेत्याह। भवतीति। न चावस्थाभेदापेक्षया दृष्टान्तदार्ष्टा-
न्तिकयोः सिद्धिः अपृथक्त्वेऽपि वाच्यं, सति कर्मित्वे मन्दप्रज्ञत्वे च
ब्रह्मसंस्थताया महाप्रज्ञत्वस्य चायोगात् पृथक्त्वध्रौव्यादिति मत्वोप-
संहरति। तस्मादिति। किमेष ब्रह्मसंस्थशब्दो यौगिको रूढो वेति
विकल्पाद्येन परिव्राजकमात्रविषयतेति शङ्कते। कथमिति। द्वि-
तीयं निराह। रूढीति। यौगिकत्वमुपेत्य परिहरति। अत्रेति।
यथोक्तं ब्रह्मसंस्थत्वमन्येषां अपि सिध्यतीत्याशङ्क्याह। तच्चेति। तुल्यं
सन्न्यासिनोऽपि तस्याश्रमकर्माननुष्ठाने प्रत्यवायित्वं तत् कुतोऽस्य ब्रह्म-
संस्थत्वं तत्राह। परिव्राजकस्येति। तस्यापि शमदमाद्यनुष्ठेयमिति.

शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म, यज्ञादि चेतरेषां तद्व्यतिक्रमे च तस्य प्रत्यवायः। तथा च 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा' 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्याद्याः श्रुतयः, स्मृतयश्च 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' इत्याद्या ब्रह्मसंस्थस्य

---

कुतो ब्रह्मसंस्थतेत्याशङ्क्याह। शमेति। तत्र हेतुः, ब्रह्मेति। शमादेर्ब्रह्मसंस्थताङ्गत्वान्न तद्विरोधितेत्यर्थः। गृहस्थादीनामपि ब्रह्मसंस्थत्वाविरोध्येव स्वाश्रमविहितं कर्मेत्याशङ्क्याह। यज्ञेति। तानि हि रागाद्याक्षिप्तानि, न च रागादिमता ब्रह्मसंस्थतेति भावः। शमदमाद्युपेतं ब्रह्मनिष्ठत्वमेव सन्न्यासिन स्वाश्रमकर्मेत्युक्तं, तदकरणे तस्य प्रत्यवायित्वं त्वम्पदार्थविवेकायैवेति स्मृतेरित्याह। तदिति। चकारादितरेषामपि तत्तदाश्रमकर्मातिक्रमे प्रत्यवायित्वमकुर्वन् विहितं कर्मेत्यादिस्मृतिरपि सूच्यते। सन्न्यासिनः सर्वकर्मत्यागेन ब्रह्मसंस्थत्वमेव स्वाश्रमकर्मेत्यत्र मानमाह। तथा चेति। न्यासः सन्न्यासो ब्रह्मेति स्तूयते। तत्र हेतुमाह। ब्रह्मा हीति। हिरण्यगर्भो हि श्रुतिस्मृतिषु परोऽभीष्टः, तथापि कथं सन्न्यासस्तदात्मकस्तदाह। परो हीति। तस्य परत्वे हेतुः, ब्रह्मेति। तद्धीहेतुत्वात् परो यस्मात् एष सन्न्यासस्तस्मात् ब्रह्मेत्यर्थः। तस्य परत्वं स्फोरयति। तानीति। पूर्वोक्तानि सत्यादीनि प्रसिद्धानि तानि ज्ञानहीनान्यवराण्येतानि तपांसि निष्फलत्वहेतुत्वात् न्यास एवैभ्योऽतिरिक्तः श्रेष्ठो ब्रह्मसंस्थताद्वारामृतत्वहेतुत्वादित्यर्थः। तस्य कर्मान्तराभावे वाक्यान्तरमाह। वेदान्तेति। शुद्धबुद्धयो विरक्ताः सन्न्यासयोगात् वेदान्तविज्ञानेन सुनिश्चितार्थाः। मुच्यन्त इति वचनात् कर्मान्तराभावः सन्न्यासिना भातीत्यर्थः। 'न कर्मणा न प्रजया' इत्याद्या भूयस्यः श्रुतयोऽत्र सन्तीति वक्तुमादिपदं। तस्मिन् ब्रह्मणि बुद्धिर्मनो येषां ते तथा। तदेव ब्रह्मात्मा स्वरूपं येषां ते तदात्मानः। तत्रैव निश्चयेन स्थितिमाह। तन्निष्ठा इति।

कर्माभावं दर्शयन्ति। तस्मात् परिव्राजकस्याश्रमभावादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति। तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्यत एव। अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्य्येण विचारः प्रवर्त्तितः, विद्यते एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' इति। न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुं, अविशेषश्रवणात् पृथग्विधानाच्चानधि-

---

विषयान्तरपरामर्शं व्यावर्त्तयति। तदिति। 'यथोक्तान्यपि कर्माणि परिहाय' इत्यादिस्मृतिसंग्रहार्थमादिपदं, उक्तश्रुतिस्मृतितात्पर्यमाह। ब्रह्मेति। ब्रह्मसंस्थशब्दस्य परिव्राजके रूढिमुपेत्योपसंहरति। तस्मादिति। यथा गृहस्थशब्दस्य यौगिकत्वे सत्यतिप्रसङ्गपरिहाराया-श्रमविशेषे रूढत्वेऽपि न गार्हस्थ्यमात्रात् पुण्यलोकप्राप्तिः किन्तु यथोक्ताग्निहोत्रादिकरणात् तथा परिव्राजकस्यापि ब्रह्मसंस्थस्य वाक्यार्थसाक्षात्कारद्वारेणैव मुख्यममृतत्वमिति कुतो ज्ञानानर्थक्यमित्यर्थः। एवमेकदेशिमतं प्रत्याख्याय ब्रह्मसंस्थशब्दस्य परिव्राजकविषयत्वे स्थिते संन्यासामर्थ्यात् ब्रह्मसंस्थत्वं पारिव्राज्यमितरपरामर्शेऽपि विधेयमिति परमप्रकृतमुपसंहरति। तदेवमिति। शिष्यबुद्धिविकाशार्थं परामर्शश्रुतिमाश्रित्य कृत्वा चिन्तया। विचारं कृत्वा चिन्तामुद्घाटयति। अनपेक्ष्येति। यदि वेतरथेति ब्रह्मचर्ये स्थितस्यैव पारिव्राज्येच्छा गार्हस्थ्ये वैराग्य दैवयोगात् यदि स्यादित्यर्थः। यत्त्वनधिकृतान्धादिविषयः सन्न्यासः स्यादिति तन्नाह। न चेति। अविशेषश्रुतिरसति बाधके न विशेषसङ्कोचमर्हतीत्यर्थः। इतश्चेदं वाक्यं नानधिकृतविषयमित्याह। पृथगिति। अनधिकृतानां सन्न्यासस्येति

श्रुतानां। 'अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' इत्यादिना ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वं, तच्च दर्शयति 'अथ परिव्राट् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' इति। तस्मात् सिद्धा ऊर्द्ध्वरेतस आश्रमाः, सिद्धश्चोर्द्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति॥

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्॥ २१॥

'स एष रसानां रसतमः परमः परार्द्ध्योऽष्टमो यदुद्गीथः इयमेवर्गग्निः साम अयं वाव लोक एषोऽग्निश्चितः तदिद-

---

श्रुष। व्रती गोदानादिवेदव्रतवान्, अव्रती तद्विपरीतः। स्नातको गुरुकुलनिवृत्तिरूपः स्नानानन्तरमपि गुरुशुश्रूषापरः, तद्विपरीतोऽस्नातकः। उत्सन्नाग्निर्मृतभार्यः पूर्वमेवाग्निपरिग्रहरहितो वा परिव्रजेदिति कर्माधिकारप्रतिपत्तिहीनानामपि सन्न्यासस्य पृथगुक्तेर्न वाक्यमनधिकृतविषयमित्यर्थः। सन्न्यासविधेरनधिकृताविषयत्वे हेत्वन्तरमाह। ब्रह्मेति। श्रवणादिद्वारा सन्न्यासस्य ब्रह्मज्ञानदार्ढ्यार्थत्वं प्रकरणादिसिद्ध तेन समर्थस्यैवाधिकारस्तस्मिन्नित्यर्थः। पारिव्राज्यस्य ब्रह्मधीदार्ढ्यार्थत्वे श्रुतिं प्रमाणयति। तच्चेति। ब्रह्मभूयाय तत्साक्षात्काराय‍ेत्यर्थः। अन्तर्गर्भिताधिकरणार्थमुपसंहरति। तस्मादिति। प्रामाणिकत्वं तच्छब्दार्थः। तेषां प्रमितत्वेऽपि प्रकृते किं जातमित्याशङ्क्य प्रथमाधिकरणार्थं निगमयति। सिद्धश्चेति॥

अनुष्ठेयसाम्यश्रुतेराश्रमान्तरमनुष्ठेयतया विधेयमित्युक्तं, सम्प्रति रसतमत्वादीनामङ्गाश्रितत्वेनेयमेव जुहूरित्यादिस्तुतितुल्यतया स्तुत्यर्थत्वमित्याशङ्क्य प्रत्याह। स्तुतीति। अधिकरणस्य विषयं वदन् वाक्यानि पठति। स इति। 'एषां भूतानां पृथिवी रसः पृथिव्या आपो-

मेवोक्थमियमेव पृथिवी' [छा०उ०] इत्येवंजातीयकाः श्रुतयः किमुद्गीथादिस्तुत्यर्था आहोस्विदुपासनविध्यर्था इत्यस्मिन् संशये स्तुत्यर्था इति युक्तं, उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्, यथा 'इयमेव पृथिवी जूहूरादित्यः कूर्मः स्वर्लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थास्तद्वदिति चेन्नेत्याह। न स्तुति-मात्रमासां श्रुतीनां प्रयोजनं युक्तं, अपूर्वत्वात्, विध्यर्थतायां

---

ऽपामोषधय ओषधीनां पुरुषः पुरुषस्य वाग् वाच ऋगृचः साम साम उद्गीथो रसः' इत्युपक्रम्य श्रूयते 'स एष रसानां पृथिव्यादीनां सा-मान्यानां भूतेषूत्तरोत्तरसारत्वेनोक्तानामतिशयत्वेन सारो रसतमः परमः परमात्मप्रतीकत्वात् परस्य ब्रह्मणोऽर्द्धं स्थानं तदर्हतीति परार्द्ध्यं परब्रह्मवदुपास्य इत्यर्थः। पृथिव्याद्यपेक्षयाऽष्टमः कोऽसौ यदुद्गीथो य उद्गीथ ॐकार इत्यर्थः। उद्गीथाद्यङ्गावबद्धश्रुतीरधिकृत्य पर्णमयी-त्वादावङ्गसम्बन्धे विध्युपलब्धेस्तथाविधेऽपि स्वर्गो लोक इत्यादौ स्तुत्यु-पलब्धेश्च संशयमाह। किमिति। अङ्गावबद्धानामपि बुद्धीनां श्रुति-त्वाभावात् विधेयतया स्वातन्त्र्येण पुरुषार्थहेतुत्वे सत्यमनङ्गात्मधियः स्वतन्त्रतया फलवत्त्वमुपनिषदुत्पन्नायाः किं वक्तव्यमित्युक्तेरत्र पादादि-संगतिः। पूर्वपक्षे स्तुतित्वादङ्गधीष्वनुष्ठानासिद्धिः सिद्धान्ते तासां विधेयत्वात् तत्सिद्धिरित्यङ्गीकृत्य संशयमनूद्य पूर्वपक्षयति। इत्यस्मि-न्निति। विमताः प्रत्ययाः स्तुतयः कर्माङ्गेषु उत्कृष्टपदार्थाध्यासप्र-त्ययरूपत्वात् स्वर्गो लोक आहवनीय इत्यादिप्रत्ययवदित्यर्थः। जुहू-रियमेव पृथिवीति स्तूयते कूर्मश्च नयनगतः सन्नादित्य इति आहव-नीयोऽग्निः स्वर्गलोक इतिवत् स्तुतिरेवेत्यर्थः। स्तुतिकल्पनात् विधि-कल्पनमेव युक्तमनुष्ठानफलाभावादिति परिहरति। नेत्यादिना। विमताः प्रत्ययाः न कर्माङ्गस्तुतयोऽपूर्वार्थत्वात् क्रत्वन्तरवदित्याह। नेति। विमता धियो न कर्माङ्गस्तुतयो विशिष्टफलसम्बन्धित्वात् सम्म-तवदित्याह। विधीति। 'वायुर्वै क्षेपिष्ठा' इत्यादिवदुद्गीथादिश्रुतीनां

ह्यपूर्वार्थो विहितो भवति, स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात्, विधायकस्य हि शब्दस्य वाक्यशेषभाव प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तं, 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरित्यत्र [मीमांसा]। प्रदेशान्तरविहितानां तूद्गीथादीनामिय प्रदेशान्तरपठिता स्तुतिर्वाक्यशेषभावमप्रतिपद्यमानाऽनर्थिकैव स्यात्, इयमेव जुहूरित्यादि तु विधिसन्निधावेवाम्नातमिति वैषम्य। तस्माद्विध्यर्था एवञ्जातीयकाः श्रुतय ॥

## भावशब्दाच्च ॥ २२ ॥

'उद्गीथमुपासीत सामोपासीताहमुक्थमस्मि' इति [छा॰उ॰] विद्यादित्यादयश्च विस्पष्टा विधिशब्दा. श्रूयन्ते, ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन्। तथा च न्यायविदां स्मरण,

---

स्तुत्यर्थत्वेऽपि कस्मादर्थवत्त्व न स्यादित्याशङ्क्याह। विधायकस्येति। अस्तु तर्हि विधायकशब्दशेषत्वेनैवोद्गीथादिश्रुतीनामपि स्तावकतयाऽर्थवादत्व तत्र वाच्य, किमुद्गीथादिप्रत्ययैरुद्गीथादिविधि स्तूयते किं वा तदुपास्तिविधिरिति विकल्प्याद्य दूषयति। प्रदेशान्तरेति। उद्गीथादिविधे कर्मप्रकरणस्थत्वेन व्यवधानान्न तेनोद्गीथादिश्रुतीनामेकवाक्यता। विमता धियो न कर्माङ्गस्तुतयोऽतत्प्रकरणस्थत्वात् क्रत्वन्तरवदिति भाव। परोक्त दृष्टान्त विघटयति। इयमेवेति। अनुमानत्रयफल निगमयति। तस्मादिति ॥

न द्वितीय, उपास्यविषयार्पकत्वेन विध्यन्वययोगे लक्षणया स्तुत्यर्थत्वायोगादित्याह। भावेति। सन्निहितविधेर्विषयार्पकत्वेनार्थवत्त्वे स्वत-

'कुर्यात् क्रियेत कर्त्तव्यं भवेत् स्यादिति पञ्चमं।
एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्' ॥ इति।
लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति। प्रति-प्रकरणञ्च फलानि श्राव्यन्ते 'आपयिता ह वै कामानां भवति एष ह्येव कामागानस्येष्टे' 'कल्पन्ते हास्मै लोका ऊर्द्ध्वाश्चावृत्ताश्च' इत्येवमादीनि। तस्मादप्युपासनविधानार्था उद्गीथादि-श्रुतयः ॥

---

मादिवादानां सम्भवति तदीयस्तुतिपरत्वमपि तत्रायुक्तं स्तुत्यपेक्षया विषयार्पणस्यान्तरङ्गत्वात् तत्र कर्माङ्गस्तुतिपरत्वं नेति किमु वक्तव्यमिति मन्वानो व्याचष्टे। उद्गीथमिति। निमन्त्रणादिष्वपि लिङादिस्मरणात् कथमुपासीतेत्यादिशब्दस्य विधिपरतेत्याशङ्क्याह। तथा चेति। धातूनामनेकत्वेऽपि डु कृञ् करणे भू सत्तायां अस भुवीति त्रीनेव धातून् भावनासामान्यवाचिनः सर्वव्याप्यर्थमुदाहरति। कुर्यादिति। व्याप्तिसकर्तृका भावना कुर्यादित्युक्ता सैवाप्तिसकर्मिका क्रियेतेत्युदाहृता सैव कर्त्तव्यमिति धात्वर्थोपसर्जनभूताऽभिहितेति भावः। भवेदित्यत्रापि भूयेत भवितव्यमित्युदाहार्य्यं, भवतेरस्तेश्चैकार्थ्येऽपि प्रायःपाठार्थं भवतिं दृष्ट्वा पृथगस्तिमुदाहरति। स्यादिति। यथापूर्वमुदाहरणमिहापि द्रष्टव्यं। पाठक्रममनुसृत्य पञ्चममित्युक्तं। एतद्धात्वनुगतप्रत्ययैः सर्वभावनानुगतः श्रेयःसाधनत्वरूपो विधिरुच्यते न तु प्रति धातुं प्रति प्रत्ययं च भावनाभेदोऽस्तीति मत्वाह। एतदिति। कथं तर्हि निमन्त्रणादिष्व लिङादिस्मरणं मिथोविरोधादित्याशङ्क्योत्सर्गतो वेदे विधिपरा लिङादयोऽपवादादन्यथात्वमित्यभिप्रेत्याह। लिङादीति। उद्गीथादिश्रुतीनां स्तुत्यर्थत्वाभावे हेत्वन्तरचकारसूचितमाह। प्रतीति। फलभेदश्रवणमुपसंहरति। तस्मादिति। पूर्वोक्तापूर्ववत्त्वादिसमुच्चयार्थमपीत्युक्तं ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः किमिमानि पारिप्लवप्रयोगार्थान्याहोस्वित् सन्निहितविद्याप्रतिपत्त्यर्थानीति। पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामा-

---

उद्गीथादिश्रुतेरुपास्तिविषयार्पकत्वं न्याय्यं रसतमत्वादेरित्युक्तं, अधुनाऽऽख्यानानामपि विद्यास्तुतेः सकाशात् पारिप्लवशेषत्वं न्याय्योऽनुष्ठानावसानयोगादित्याशङ्क्य परिहरति। पारिप्लवेति। विषयोक्तिपूर्वकमाख्यानत्वसाम्यात् विद्यासन्निधेश्च संशयमाह। अथेत्यादि। पारिप्लवप्रयोगो नामाश्वमेधे पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीतेत्यादि नानाविधाख्यानकथनं विहितं, अत्र चोपनिषद्गताख्यानानां तादर्थ्यनिरासेन तत्र तत्र सन्निहितस्वतन्त्रपुरुषार्थहेतुविद्यार्थत्वसमर्थनात् पादादिसङ्गतिः। पूर्वपक्षे प्रयोगशेषत्वात् आख्यानानां वेदान्तगतानामपि तद्भावात् विद्याप्राधान्यासिद्धिः सिद्धान्ते विशेषणात् उपनिषदाख्यानानां व्यवच्छेदात् तेषामप्रयोगशेषत्वात् विद्याप्रधानत्वसिद्धिरिति स्वीकृते पूर्वपक्षयति। पारिप्लवेति। गुरुशिष्यसमाचारप्रदर्शनेन बुद्धिसौकर्यद्वारा च विद्याशेषत्वं सामर्थ्यलिङ्गादौ संसिद्धमित्याशङ्क्य पारिप्लवश्रुतिविरोधे लिङ्गमप्रयोजकमित्याह। आख्यानेति। 'यस्मिन्नेव शस्यमाने सूर्योऽभ्युदियादपि सर्वा दाशतयीरनुब्रूयात्' इति सर्वासामृचामस्मिन् शंसने पूर्वश्रुत्या विनियुक्तानामपि प्रातिस्विकविनियोगवदाख्यानानां पारिप्लवे पारिप्लवमाचक्षीतेति चोदितानामेतेन लिङ्गेन सन्निधेर्वा विद्याया विनियोगः स्यात् इत्याशङ्क्य प्रातिस्विकविनियोगस्य समुदायविनियोगस्य च श्रौतत्वेन

न्यादाख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात्, ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत्प्रयोगशेषत्वादिति चेत् तन्न, कस्मात् विशेषितत्वात्। *तथा हि 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेवाख्यानानि तत्र विशेष्यन्ते आख्यानसामान्यात् चेत् सर्वग्रहणेति: स्यादनर्थकमेवेदं विशेषणं भवेत्, तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः॥

---

तुल्यत्वात् प्रकृते च तदभावात् नैवमित्याह। ततश्चेति। आख्यानानां प्रयोगसिद्धत्वेऽपि सर्वेषां वेदान्तानां च तच्छेषत्वात् युक्तं विद्याप्रधानत्वमित्याशङ्क्याह। मन्त्रवदिति। 'देवस्य त्वा' इत्यादिमन्त्रे कस्यचिद्देवपदस्य समवेतार्थतया प्रयोगशेषत्वे सिद्धे तदेकवाक्यतया पदान्तराणामपि तच्छेषत्वमिष्टं तथाख्यानानां प्रयोगशेषत्वे तदेकवाक्यत्वेन सर्वोपनिषदां तच्छेषत्वान्न विद्याप्रधानतेत्यर्थः। सामान्यश्रुतेर्विशेषेणोक्त्या तत्परत्वान्न तया लिङ्गादिबाधोऽस्तीति सिद्धान्तयति। तन्नेत्यादिना। अश्वमेधे प्रथमेऽहनि 'मनुर्वैवस्वतो राजा' इत्याह, द्वितीयेऽहनि 'यमो वैवस्वतः' इति, तृतीयेऽहनि 'वरुण आदित्यः' इत्याद्याख्यानविशेषा वाक्यशेषे श्रुतास्तद्बलात् उपक्रमस्य सङ्कोचो युक्तः। न चोपक्रमस्थसर्वशब्दादुपसंहारस्थविशेषोक्तिरुपलक्षणार्थेति वाच्यं, आदौ सर्वाण्याख्यानानि पारिप्लवे शंसतीत्युक्त्वा पारिप्लवमाचक्षीतेति च विधाय मनुर्वैवस्वत इत्यादि पठ्यते तत्र पुनर्विधानं वाक्यशेषस्थाख्यानमध्यस्थ कतिपयप्रयोगमात्रेणोपरमं व्यावर्त्तयितुमित्यर्थवानिति मत्वा सिद्धान्तं विवृणोति। पारिप्लवमिति। यत्त्वाख्यानसामान्यात् पारिप्लवार्था इमा श्रुतय इति तत्राह। आख्यानेति। विशेषणफलं निगमयति। तस्मादिति॥

---

* तथा होति वर्ध० नास्ति।

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

असति च पारिप्लवार्थत्वे आख्यानानां सन्निहितविद्याप्रतिपादनोपयोगितैव न्याय्या एकवाक्यतोपबन्धनात्, तथा हि च तत्र सन्निहिताभिर्विद्याभिरेकवाक्यता दृश्यते, प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्च, *मैत्रेयीब्राह्मणे तावत् 'आत्मा वा अरे द्रष्टव्यः' इत्याद्यया विद्ययैकवाक्यता दृश्यते, प्रातर्दनेऽपि 'प्राणोऽस्मि प्रज्ञात्मा' इत्याद्यया, 'जानश्रुतिः' इत्यत्रापि 'वायुर्वाव संवर्गः' इत्याद्यया यथा च 'स आत्मनो वपामुदखिदत्' इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां सन्निहितविधिस्तुत्यर्थता तद्वत्, तस्मान्न पारिप्लवार्थत्वम् ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

'पुरुषार्थोऽतः शब्दात्' [वि० सू०३।४।१] इत्येतद्व्यवहितमपि

---

तर्हि कुत्राख्यानान्युपयुक्तानीत्याशङ्क्य विशेषणश्रुत्या सर्वश्रुतौ भ-मायां निर्बाधं सन्निधिविद्यास्वेवोपनिषदाख्यानानि विनियुज्यन्ते-त्याह । तथा चेति । सूत्रार्थं विवृणोति । असतीति । एकवाक्यतोप-सम्बन्धं विभजते । तथा हीति । प्ररोचनमनुरागजननं । सन्निहि-ताभिर्विद्याभिराख्यानानामेकवाक्यताप्रतीतिमुदाहरति । मैत्रेयीति । आख्यानत्वेऽपि पारिप्लवार्थत्वादर्शनाच्च न तादर्थ्यं प्रकृताख्यानानामि-त्याह । यथेति । उदखिदुद्धृतवान् होमायेति यावत् । श्रुतिलिङ्ग-सन्निधिभिर्विद्यार्थत्वे सिद्धे फलितमुपसंहरति । तस्मादिति ॥

कथानां विद्याशेषत्वे दर्शिते कर्मणामपि तर्हि तच्छेषत्वं तच्छेषत्वा-भावेऽपि स्यादित्याशङ्क्य प्रसङ्गागतं विचारं परिसमाप्य पुरुषार्था-धिकरणस्य फलमाह । अत इति । ब्रह्मविद्या मोक्षे कर्माणीति

---

* मैत्रेयीब्राह्मण इति वध० ।

सम्भवादत इति परामृश्यते, अत एव च विद्यायाः पुरुषार्थहेतुत्वादग्नीन्धनादीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीत्याद्यस्यैवाधिकरणस्य फलमुपसंहरत्यधिकविवक्षया॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्॥ २६॥

इदमिदानीं चिन्त्यते किं विद्याया अत्यन्तमेवानपेक्षाश्रमकर्मणामुतास्ति काचिदपेक्षेति, तत्रात एवाग्नीन्धनादीन्या-

---

कर्त्तव्यत्वेनापेक्ष्यते न वेति वादिविप्रतिपत्तेः सन्देहे 'यज्ञेन' इति विविदिषायां विनियुक्तयज्ञादीनां विषयसौन्दर्य्यलभ्यायां तस्यामनन्वयात् तद्विषयज्ञानसाध्यमोक्षान्वयस्य युक्तत्वादपेक्ष्यतेति पूर्वपक्षे 'काष्ठैः पचति' इत्यत्र पाकसाधनज्वालाजनककाष्ठानां पाकहेतुत्वदर्शनात् ज्ञानेच्छाजनकान्तःकरणशुद्धिहेतुत्वेन यज्ञादीनां ज्ञानेच्छाहेतुत्वसिद्धेः साक्षादेव मोक्षान्वये च यज्ञेनेत्यादिकरणविभक्तिभङ्गात् पारम्पर्य्यस्यैवापेयत्वात् नापेक्ष्य इति सिद्धान्तः। एतदभिप्रेत्य सन्निहितस्यातःशब्दपरामर्शयोग्यस्याभावादतःपदानुपपत्तिमाशङ्क्य सूत्राक्षराणि योजयति। पुरुषार्थ इति। आद्याधिकरणे यथा विद्यायाः स्वातन्त्र्येण पुमर्थहेतुत्वमुक्तं तच्च तथैवानूद्यते, तथा चाग्नेयादिष्वदर्शनात् न पुरुषार्थहेतुत्वं कर्मापेक्षाविरोधीति निरस्तं। न चात्र पादादिसङ्गतिर्वक्तव्या, प्रथमाधिकरणस्यैव तत्फलविषयस्य तस्याः सुगमत्वात्, फलमपि पूर्वोत्तरपक्षयोस्तद्वदेवेत्यभिप्रेत्याह। आद्यस्येति। स्वार्थसिद्धावेवानपेक्षा न तु स्वसिद्धौ तत्र तदपेक्षास्तीत्यनन्तराधिकरणे निर्द्दिष्टमुपसंहार इति तत् फलमाह। अधिकेति॥

ब्रह्मविद्या स्वफले न कर्मापेक्षा प्रमात्वात् सम्मतवदित्युक्तं, तर्हि तस्योत्पत्तावपि तदपेक्षा प्रमात्वात् तद्वदेवेत्याशङ्क्याह। सर्वेति। अधिकविवक्षयेत्युक्तं व्यक्तीकुर्वन् ब्रह्मविद्यामधिकृत्य पूर्वाधिकरणन्यायात् विविदिषाश्रुतेश्च संशयमाह। इदमिति। अत्र च स्वतन्त्रपुरुषार्थ-

आश्रमकर्माणि विद्यायाः स्वार्थसिद्धौ नापेक्ष्यन्ते इत्येवमत्यन्तमे-
वानपेक्षायां प्राप्तायामिदमुच्यते, सर्वापेक्षा चेति। अपेक्षते च
विद्या सर्वाण्याश्रमकर्माणि नात्यन्तमनपेक्षैव। ननु विरुद्ध-
मिदं वचनमपेक्षते चाश्रमकर्माणि विद्या नापेक्षते चेति। नेति
ब्रूमः। उत्पन्ना हि विद्या फलसिद्धिं प्रति न किञ्चिदन्यदपे-
क्षते उत्पत्तिं प्रति त्वपेक्षते, कुतः यज्ञादिश्रुतेः। तथा हि
श्रुतिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन
दानेन तपसाऽनाशकेन' इति यज्ञादीनां विद्यासाधनभावं
दर्शयति, विविदिषासंयोगाच्चैषामुत्पत्तिसाधनभावोऽवसीयते।
'अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्य्यमेव तत्' इत्यत्र च

---

हेत्वौपनिषदात्मज्ञानोत्पत्तौ यज्ञादीनां शमादीनाञ्च विविदिषावा-
क्याय विनियोगोक्तेरस्ति पादादिसङ्गतिः। पूर्वपक्षे यज्ञादीनां
विद्यान्वये तत्फलेऽपि तत्प्रसक्त्या समुच्चयसिद्धिः, सिद्धान्ते परम्प-
रया तेषां ज्ञानान्वयेऽपि तत्फलान्वये हेत्वभावात् तदसिद्धौ ज्ञान-
स्यैव तत्तद्धेतुतासिद्धिरित्यङ्गीकृत्य पूर्वपक्षयति। तच्चेति। अपरोक्ष-
धियो मानमात्राधीनत्वात् प्रामाणिकज्ञानस्य मानहेतुषु सत्सु कर्मा-
द्यभावेनानुदयादर्शनात् केवलव्यतिरेकाभावे च यज्ञादीनां हेतुत्व-
कल्पनायोगात् विविदिषाश्रुतेश्च वर्त्तमानापदेशित्वात् विनियोजक-
त्वायोगात् ज्ञानस्य फलवदुत्पत्तावपि नान्वयस्तेषामिति भावः। वि-
विदिषावाक्ये वर्त्तमानापदेशेऽपि 'यस्य पर्णमयी' इत्यादाविवापूर्वत्वात्
पञ्चमलकारेण ब्रह्मानुभवकामो यज्ञादीनि कुर्य्यादिति विध्युपगमा-
दागमस्य केवलव्यतिरेकानपेक्षत्वात् विषयसौन्दर्य्यलभ्यायामिच्छायां
साक्षादन्वयायोगात् तत्फले ज्ञाने यज्ञान्वयसिद्धेर्यज्ञेनेत्यादिकरण-
श्रुत्या च तेषामिष्यमाणापरोक्षधीसाधनत्वदृष्टेर्ज्ञानस्य च मानायत्त-
तया साक्षात् यज्ञाद्यसाध्यत्वेऽपि तेषां चित्तशुद्ध्या प्रत्यक्प्रवणतामु-

विद्यासाधनभूतस्य ब्रह्मचर्य्यस्य यज्ञादिभिः संस्तवाद्यज्ञादीनामपि साधनभावः सूच्यते, 'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योम्' इत्येवमाद्या च श्रुतिराश्रमकर्मणां विद्यासाधनभावं सूचयति। स्मृतिरपि,

'कषायपक्तिः कर्माणि ज्ञानन्तु परमा गतिः।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते'॥

इत्येवमाद्या। अश्ववदिति योग्यतानिदर्शनं, यथा योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते रथचर्य्यायान्तु युज्यते

---

त्याद्यापरोक्षज्ञाने पर्य्यवसानात् पारम्पर्य्येऽपि 'पचति काष्ठैः' इतिवत् करणविभक्तिसम्भवात् उत्पत्तौ ज्ञानस्य कर्मापेक्षास्तीति सिद्धान्तयति। इदमिति। आपातेन पूर्वापरविरोधप्रतीतिं शङ्कते। नन्विति। विभागोक्त्या प्रत्याह। नेतीति। उक्तव्यवस्थाया प्रश्नपूर्वकं हेतुमाह। कुत इति। हेतु विवृणोति। तथा हीति। नन्वत्र विविदिषासंयोगो यज्ञादीना ज्ञायते, यदि तस्या विषयसौन्दर्य्यलभ्याया तेषामन्वयायोगात् इष्यमाणे ज्ञानेऽन्वयोऽभ्युपगम्यते तर्हि ज्ञानस्य मानाधीनत्वात् कर्मणा तत्रान्वयासिद्धेः श्रुतत्यागेन तत्फले मोक्षे किमन्वयो नेष्यते तत्राह। विविदिषेति। मोक्षहेतुत्वकल्पनाया 'नास्त्यकृतः कृतेन' इत्यादिविरोधात् परम्परयापि हेतुत्वे बाधाभावात् बुद्धिशुद्ध्या तदुत्पत्तावेवान्वयो यज्ञादीनामित्यर्थः। यज्ञादिश्रुतेरिति वाक्यान्तरमपि ग्रहीतव्यमित्याह। अपीति। तत्र यज्ञादीना ज्ञानसाधनत्वे विज्ञानं लिङ्गमाह। अचेति। तत्रैव लिङ्गान्तरमाह। सर्वं इति। परम्परया कर्मणां धीहेतुत्वे स्मृतिमपि दर्शयति। स्मृतिरिति। उत्पत्ताविव फलेऽपि ज्ञानस्य कर्मापेक्षा किं न स्यादित्याशङ्क्य दृष्टान्तमादाय व्याकरोति। अश्ववदित्यादिना॥

एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते उत्पत्तौ त्वपेक्ष्यन्ते इति॥

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥ २७॥**

यदि कश्चिन्मन्येत न यज्ञादीनां विद्यासाधनभावो न्याय्यः विध्यभावात्, 'यज्ञेन विविदिषन्ति' *इत्येवमादिका हि श्रुतिरनुवादस्वरूपा विद्यास्तुतिपरा न यज्ञादिविधिपरा, इत्थं महाभागा विद्या यत् यज्ञादिभिरेवैतामवाप्तुमिच्छन्तीति, तथापि तु शमदमाद्युपेतः स्याद्विद्यार्थी 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति'

---

द्यानोत्पत्तौ बहिरङ्गमुक्त्वा तत्रैवान्तरङ्गमुपदिशति। शमादीति। तत्र व्यावर्त्त्याशङ्कामाह। यदीति। विद्यास्तावकत्वेनापि सम्भवत्यर्थवत्त्वे वर्त्तमानताभङ्गेन विधिकल्पनमयुक्तं वाक्यभेदप्रसङ्गादत. शब्दमात्रलभ्या विद्येति भावः। एव तवाभिप्रायेऽपि हेत्वन्तरमवश्यमनुष्ठेयं न शब्दमात्रलभ्या विद्येति सूत्रयोजनया परिहरति। तथ.पीति। विविदिषावाक्यतुल्यतया शमादिवाक्यस्य नास्ति विधिपरतेति शङ्कते। नन्विति। यस्मादेवमात्मान विदित्वा पापेन कर्मणा न लिप्यते तस्मादेवं विद्यार्थी शमाद्युपेतो भूत्वा विचरेदिति गम्यते विधिरित्याह। नेतीति। विध्यभावे तत्प्रशंसावैयर्थ्यादुक्तविधिसिद्धिरित्यर्थः। काण्वपाठे विधिमुक्त्वा माध्यन्दिनपाठे विध्यभावशङ्कापि नास्तीत्याह। पश्येदिति चेति। विधिफलमाह। तस्मादिति। यज्ञादीनामसाधनत्वशङ्कामापाततोऽभ्युपेत्य साधनान्तरापेक्षोक्त्येदानीं तदसाधनत्वशङ्कापि न युक्तेत्याह। यज्ञादीनीति। उक्तं स्मारयित्वा परिहरति। नन्वि-

---

* इत्येवज्ञातीयका हि श्रुतिरर्थवादस्वरूपेति वर्ध० का०।

इति विद्यासाधनत्वेन शमदमादीनां विधानात्, विहितानामवश्यानुष्ठेयत्वात्। नन्वत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्त्तमानापदेशः उपलभ्यते न विधिः। नेति ब्रूमः, तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः, पश्येदिति च माध्यन्दिना विस्पष्टमेव विधिमधीयते। तस्माद्यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि। *यज्ञादीन्यपि त्वपेक्षितव्यानि यज्ञादिश्रुतेरेव। ननूक्तं 'यज्ञादिभिर्विविदिषन्ति' इत्यत्र न विधिरुपलभ्यत इति। सत्यमुक्तं, तथापि त्वपूर्वत्वात् संयोगस्य विधिः परिकल्प्यते, न ह्ययं यज्ञादीनां† विविदिषासम्बन्धः पूर्वं प्राप्तो येनानूद्येत। 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हीति' एवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्विधिं परिकल्प्य पौष्णं पेषणं विकृतौ प्रतीयेतेत्यादिविचारः प्रथमे तन्त्रे प्रवर्त्तितः। तथा चोक्तं 'विधिर्वा धारणवत्' इति [जै०सू०]। स्मृतिष्वपि

---

त्यादिना। संयोगस्यापूर्वत्वमेव स्पष्टयति। न हीति। इत्यपि महावाक्यैरनुष्ठानयोग्यापूर्वार्थविधिरवान्तरवाक्येन क्रियते न तत्र वाक्यभेदो दोषः इत्यत्र पूर्वतन्त्रसम्मतिमाह। तस्मादिति। दर्शपूर्णमासयोः श्रुतं 'तस्मात् पूषा' इत्यादि। तत्र पूष्णः प्रपिष्टद्रव्यसम्बन्धः सामासिकः। न च पूषा देवता पिष्टभागो द्रव्यं दर्शपूर्णमासयोरस्ति तेन तदेकवाक्यतायोगात् कालत्रयास्पृष्टद्रव्यदेवतासम्बन्धस्याविनाभावेन यागविध्युपस्थापकत्वात् व्यवहारसिद्धये विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः कर्त्तव्य इति विकृतौ सम्बन्धः 'पौष्णं पेषणं विकृतौ प्रतीयेताचोदना प्रकृतौ' [जै०सू०] इत्यत्र विचारित इत्यर्थः। अवान्तरवाक्यभेदेन सूत्रकृतापि स्वीकृतो विधिरित्याह। तथा

---

* तथा यज्ञेति वर्ध० का०। † विविदिषासंयोग इति वर्ध०।

भगवद्गीतासु अनभिसन्धाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितं, तस्माद्यज्ञादीनि शमादीनि च यथाश्रमं सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि। तत्राप्येवंविदिति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि विविदिषासंयोगात्तु बाह्यानीतराणि यज्ञादीनीति विवेक्तव्यं ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणसंवादे श्रूयते छन्दोगानां 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति, तथा वाजसनेयिनां 'न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं' इति सर्वमस्यादनीयमेव भवतीत्यर्थः। किमिदं सर्वान्नानुज्ञानं शमादिवद्विद्याङ्गं विधीयते उत

---

चेति। स्मृत्यनुसारेणाप्यवान्तरवाक्यस्य विधायकत्वं वाच्यमित्याह। स्मृतिष्वपीति। कर्मणा ज्ञानोत्पत्तिहेतुत्वे श्रुतिस्मृतिन्यायसिद्धे फलितमाह। तस्मादिति। यज्ञादीनामपि श्रुतिस्मृतिन्यायेभ्योऽनुष्ठेयत्वे शमादीनां तेभ्योऽविशेषाभावात् यावद्विद्योदयमविशेषेणानुष्ठानं स्यादित्याशङ्क्याह। तत्रापीति ॥

यज्ञादीनां शमादीनाञ्च विद्यासन्निहितानां तच्छेषतोक्ता तत्प्रसङ्गात् विद्यासन्निध्युक्तसर्वान्नाभ्यनुज्ञानस्यापि विद्याशेषतामाशङ्क्य प्रत्याह। सर्वान्नेति। प्राणविदः सर्वान्नानुज्ञानं विषयं वक्तुं शाखाद्वयस्था श्रुतिमाह। प्राणेति। जग्धं भक्षितं। विषयवाक्यार्थं संगृह्णाति। सर्वमिति। अपूर्वत्वाद्विधिश्रुतेश्च संशयमाह। किमिति। तत्र प्राणविद्यायाः स्वतन्त्रपुरुषार्थज्ञानोपयुक्तायाः स्तुत्यर्थं सर्वान्नानुज्ञानकीर्त्तनमिति कथनात् पादादिसङ्गतिः। पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागासिद्धिः, सिद्धान्ते विदुषोऽविदुषश्चानापदि तत्सिद्धिरिति

स्तुत्यर्थं सङ्कीर्त्यत इति संशये विधिरिति तावत् प्राप्तं, तथा-हि प्रवृत्तिविशेषकर उपदेशो भवति, अतः प्राणविद्यासन्निधानात्तदङ्गत्वेनेयं नियमनिवृत्तिरुपदिश्यते। नन्वेवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्। नैष दोषः, सामान्यविशेषभावाद्बाधोपपत्तेः। यथा प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च 'न काञ्चन परिहरेत्तद्व्रतम्' इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते, एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेत्येवं प्राप्ते ब्रूमः, नेदं सर्वान्नानुज्ञानं विधीयत इति, न ह्यत्र विधायकः शब्द उपलभ्यते 'न ह वा एवंविदि किञ्चनानन्नं

---

न्वानः संशयमनूद्य पूर्वपक्षयति। इतीति। विधिपक्षेऽनुष्ठानविशेषलाभं हेतुमाह। तथा हीति। सर्वान्नानुज्ञानं स्वतन्त्रमेव विधीयतामित्याशङ्क्य सन्निधिविरोधान्नैवमित्याह। अत इति। सर्वान्नात्त्वं प्राणविद्याङ्गं चेत् तर्हि 'न कलञ्जं भक्षयेत्' इत्यादि शास्त्रं विरुध्येतेति शङ्कते। नन्विति। प्राणविदतिरिक्तविषयं तदिति विरोधं परिहरति। नैत्यादिना। उपपत्तिमेव कर्मविषयदृष्टान्तेनोदाहरति। यथेति। तत्रैव विद्याविषयं दृष्टान्तमाह। यथा चेति। 'यदुपमन्त्रयते स हिङ्कारः' इत्यादिना ग्राम्यव्यापारगतचेष्टासु हिङ्कारादिदृष्टिर्विहिता, सा वामदेव्यविद्या तत्रोपमन्त्रणं सङ्केतकरणं दृष्टान्तयोरर्थं दार्ष्टान्तिके योजयति। एवमिति। विविदिषावाक्ये वर्त्तमानापदेशेऽप्यपूर्वत्वात् पञ्चमलकाराङ्गीकारेण विधिकल्पनावत् न हेत्यादौ वर्त्तमानापूर्वत्वात् विधिरिति मतमनूद्य सूत्राद्बहिरेव सिद्धान्तमाह। एवमिति। तत्र हेतुमाह। न हीति। 'यस्य पर्णमयी' इत्यादाविव वर्त्त-

भवति' इति वर्तमानापदेशात्, न चामत्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्वलाभेनैव विधिरभ्युपगन्तुं शक्यते। अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्तेदमुच्यते 'नैवंविदि किञ्चिदनन्नं भवति' इति, न च श्वादिमर्यादमन्नं मनुष्यदेहेनोपभोक्तुं शक्यते, शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुं, तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादो न सर्वान्नानुज्ञानविधिः। तद्दर्शयति 'सर्वान्नानुमतिश्च प्राणात्यये' इति। एतदुक्तं भवति प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते तद्दर्शनात्, तथा हि श्रुतिश्चाक्रायणस्य ऋषेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं दर्शयति 'मटचीहतेषु कुरुषु' इत्यस्मिन् ब्राह्मणे 'चाक्रायणः किल ऋषिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखादानुपानन्तु

---

मानापदेशोऽपि कल्प्यो विधिरित्याशङ्क्याह। न चेति। सामान्यविधिबाधकत्वं श्रुतविशेषविधेरिष्टं विशेषकल्पना सामान्यविधिना बाध्या कल्पनाया विरोधाभावापेक्षत्वादित्यर्थः। इतश्च स्तुत्यर्थमेवेदं वचो न विधिरित्याह। अपि चेति। 'आश्वभ्यः आशकुनिभ्यः आकीटपतङ्गेभ्यस्तत्तेऽन्नम्' इति अवणादशक्यविषयो विधिर्न सम्भवतीत्याह। न चेति। तर्हि वचनवैयर्थ्यमित्याशङ्क्य सर्वं प्राणस्यान्नमिति धीस्तुत्यर्थत्वान्नैवमित्याह। शक्यते त्विति। उक्तार्थे सूत्रमादत्ते। तदिति। तदक्षराणि व्याकरोति। एतदिति। मटच्योऽशनयः पाषाणवृष्टयो रक्तवर्णा क्षुद्रपक्षिविशेषा वा तैर्हतेषु कुरुषु तद्देशस्थसस्येष्विति यावत्। आख्यायिकार्थमाह। चाक्रायण इति। स हि दुर्भिक्षे जाते जाययाऽनुपजातपयोधरादिस्त्रीव्यञ्जनया सह देशान्तरं प्रतिचक्रमे स कदाचित् इभ्यग्रामे निवसन् इभ्येन हस्त्यारोहेण सामिभोजितानर्द्धभक्षितान

तदीयमुच्छिष्टदोषात् प्रत्याचचक्षे, कारणञ्चात्रोवाच 'न वा अजीविष्यमिमानखादन्' इति 'कामो म उदपानम्' इति च पुनश्चोत्तरेद्युस्तानेव स्वपरोच्छिष्टपर्युषितान् कुल्माषान् भक्षयाम्बभूव' इति। तदेतदुच्छिष्टोच्छिष्टपर्युषितभक्षणं दर्शयन्त्याः श्रुतेराशयातिशयो लक्ष्यते प्राणात्ययप्रसङ्गे प्राणसन्धारणायाभक्ष्यमपि भक्षयितव्यमिति, स्वस्थावस्थायान्तु तन्न कर्त्तव्यं विद्यावतापीत्यनुपानप्रत्याख्यानाद्गम्यते, तस्मादर्थवादो 'न ह वा एवंविदि' इत्येवमादिः॥

## अबाधाच्च॥२९॥

एवञ्च सत्याहारशुद्धौ सत्त्वशुद्धिरित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रमबाधितं भविष्यति॥

---

कुल्माषान् कुत्सितान् माषान् भक्षितवानित्यर्थः। अनुपानं गृहाणेत्युक्ते सत्युच्छिष्टं मे पीतं स्यादिति प्रतिषिध्य किमेतेऽप्युच्छिष्टा नेति परेणोक्ते कारणञ्चानुपाननिषेधे कथितवान् इत्याह। अनुपानन्त्विति। कुल्माषास्तेन्न भक्ष्यन्ते जीवनमेव मे न स्यात् कामः स्वेच्छातो मे तडागादिषु उदकपानं भविष्यतीत्यर्थः। स्वयं खादित्वा शिष्टान् जायायैमाजहार तया च भर्तृस्वभावज्ञया निहितानुत्तरदिने प्रातरेव भक्षितवानित्याह। पुनश्चेति। कुल्माषभक्षणश्रुतेरभिप्रायमाह। तदिति। अनुपाननिषेधश्रुतेस्तात्पर्य्यमाह। स्वस्थेति। सर्वान्नभक्षणस्य निरङ्कुशत्वाभावे फलितमाह। तस्मादिति॥

तस्यार्थवादत्वे हेत्वन्तरमाह। अबाधाच्चेति। सामान्यशास्त्रविरोधात् न कल्प्यो विशेषविधिरित्युक्तं, अधुना सामान्यशास्त्रं दर्शयन् सूत्रं योजयति। एवञ्चेति। स्वस्थावस्थायां भक्ष्याभक्ष्यभेदे सतीति यावत्॥

अपि च स्मर्यते ॥ ३० ॥

अपि च आपदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्चाविशेषेण ।

'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति ।

तथा 'मद्यं नित्यं ब्राह्मणः सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरापास्ते सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्' इति च स्मर्यते वर्जनमन्नस्य ॥

शब्दश्चातोऽकामकारे ॥ ३१ ॥

शब्दश्चानन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः कठानां संहितायां श्रूयते 'तस्माद्ब्राह्मणः सुरां न पिबेत्' इति, सोऽपि 'न ह वा एवंविदि' इत्यस्यार्थवादत्वादुपपन्नतरो भवति, तस्मादेवंजातीयका अर्थवादा न विधय इति ॥

---

आपदवस्थायामभक्ष्यभक्षणानुज्ञाने स्मृतिं संवादयति । अपीति । स्मृतिरपि विद्वद्विषयेत्याशङ्क्याह । अपि चेति । सुरापानमवस्थाद्वयेऽपि न कार्यमित्याह । तथेति । ब्राह्मणो वर्जयेदिति शेषः । जीवितात्ययस्मृत्या सुरापि तदत्यये पातव्येत्याशङ्क्याह । सुरापस्येति । उष्णां सुरामिति शेषः । उष्णामग्नितप्तामिति यावत् । मरणान्तिकप्रायश्चित्तदर्शनात्प्रसङ्गेऽपि सा न पातव्येत्यर्थः । इतश्च सा सदा न पेयेत्याह । सुरापा इति । तत्र हेतुरभक्ष्येति । मद्यमित्यादिस्मृतेस्तात्पर्यमाह । वर्जनमिति ॥

स्मृतिप्रामाण्यार्थं तन्मूलश्रुतिमाह । शब्दश्चेति । तस्मात् ब्राह्मणस्य सुरापस्य मरणान्तिकप्रायश्चित्तदर्शनादिति यावत् । श्रौतनिषेधस्य प्रकृतोपयोगमाह । सोऽपीति । श्रुतिस्मृतिसिद्धमर्थमुपसंहरन् अतःशब्दं व्याचष्टे । तस्मादिति ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

'सर्वापेक्षा च' [वे०सू०३।४।२६] इत्यत्राश्रमकर्मणां विद्यासाधनत्वमवधारितं, इदानीन्तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयान्युताहो नेति चिन्त्यते, तत्र 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिनाऽऽश्रमकर्मणां विद्यासाधनत्वेन विहितत्वाद्विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि, अथ तस्याप्यनुष्ठेयानि न तर्ह्येषां विद्यासाधनत्वं नित्यानित्यसंयोगविरोधादित्यस्यां प्राप्तौ पठति आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्त्तव्यान्येव नित्यानि कर्माणि 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात्। न हि वचनस्यातिभारो नाम

---

सर्वान्नत्वोक्तिः शास्त्रान्तरविरोधे स्तुतिरित्युक्तं, एवं विद्यार्थत्वोक्तिर्यज्ञादीनां स्तुतिर्नित्यत्वश्रुतिविरोधादित्याशङ्क्याह। विहितत्वाच्चेति। व्यवहितेन सम्बन्धमाह। सर्वापेक्षेति। अग्निहोत्रादिकर्माण्यधिकृत्य विहितत्वाद्विनियुक्तविनियोगायोगाच्च संशयमाह। इदानीन्त्विति। तत्राग्निहोत्रादीनामुभयथात्वोक्त्या स्वतन्त्रपुमर्थहेतुशास्त्रोक्त्यात्मविद्योपायोपवर्णनात् पादादिसङ्गतिः। पूर्वपक्षे विद्याहेतुत्वोक्तेः स्तुतित्वात् विविदिषावाक्यस्य विवक्षितार्थत्वासिद्धिः, सिद्धान्ते योगपृथक्त्वन्यायात् कर्मणामुभयत्वसम्भवात् तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह। तत्रेति। यावज्जीवश्रुतेरमुमुक्षोरपि तान्यनुष्ठेयानीत्याशङ्क्याह। अथेति। विविदिषाश्रुतेर्विद्यासंयोगोऽपि तेषामवश्यम्भावीत्याशङ्क्याह। नित्येति। आवश्यकत्वाभावात् विद्याकामनायाः काम्यतया कर्मणामनावश्यकत्वं नित्यतया चावश्यकत्वमित्येकत्रैवावश्यकत्वानावश्यकत्वे विरुद्धे स्यातामतो विद्योपायत्वोक्तिः श्रुतिरेवेत्यर्थः। सिद्धान्तसूत्रमवतार्य व्याकरोति। अस्यामिति। नित्यतया विहितानां विद्यार्थतया

कश्चिदस्ति। अथ यदुक्तं नैवं सति विद्यासाधनत्वमेषां स्यादित्यत उत्तरं पठति॥

## सहकारित्वेन च॥ ३३॥

विद्यासहकारीणि चैतानि स्युः विहितत्वादेव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना। तदुक्तं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति [वे० सू० ३।४।२६]। न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवत् विद्याफलविषयं मन्तव्यं अविधिलक्षणत्वाद्विद्यायाः असाध्यत्वाच्च विद्याफलस्य। विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलसिषाधयिषया सहकारिसाधनान्तरमाकाङ्क्षते नैवं विद्या। तथा चोक्तं 'अत एव चाग्नीन्धनाद्यनपेक्षा' इति [वे० सू० ३।४।२५]। तस्मादुत्पत्ति-

---

विधानं गौरवादयुक्तमित्याशङ्क्याह। न हीति। उक्तमनूद्योत्तरत्वेन सूत्रमवतारयति। अथेत्यादिना॥

नित्यत्वेऽपि विद्यासंयुक्तत्वमग्निहोत्रादीनां विधिवशादेष्टव्यमिति व्याचष्टे। विद्येति। विविदिषासंयोगमात्रमत्र श्रुतं कुतो विद्यासंयुक्तत्वं तत्राह। तदुक्तमिति। सहकारित्वोक्त्या फलं प्रत्येवोपकारित्वमारादुपकारकत्वं न चात्रोभयमस्तीत्याह। असाध्यत्वादिति। अविधिलक्षणत्वं व्यतिरेकोदाहरणेन प्रपञ्चयति। विधीति। अङ्गभावस्य ग्राहकग्रहणपूर्वकत्वाद्विधेर्ग्राहकत्वात् विहितं दर्शपूर्णमासादि प्रयाजादिभिर्ग्राहकग्रहीतैरङ्गैर्युज्यते नाविहिता विद्येत्यर्थः, तथापि कथमसाध्यफलत्वेन विद्याया कर्मणामन्वयराहित्यं तदाह। तथा चेति। कथं तर्हि सहकारित्ववचनं तदाह। तस्मादिति। सह पुत्रैर्भारं वहति गर्दभीतिवत् कर्मसु सत्स्वेव विद्या स्वकार्याय व्याप्रियत इत्यभिप्रेत्य सह-

साधनत्व एवैषां सहकारित्ववाचो युक्तिः। न चात्र नित्यानित्यसंयोगविरोध आशङ्क्यः, कर्माभेदेऽपि संयोगभेदात्। नित्यो ह्येकः संयोगो यावज्जीवादिवाक्यकल्पितो न तस्य विद्याफलत्वं, अनित्यस्त्वपरः संयोगः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिवाक्यकल्पितः, तस्य विद्याफलत्वं यथा एकस्यापि खादिरस्य नित्येन संयोगेन क्रत्वर्थता अनित्येन संयोगेन पुरुषार्थता च तद्वत्॥

## सर्वथापि त एवोभयलिङ्गात्॥ ३४॥

सर्वथाप्याश्रमधर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः, त एवेत्यवधारयन्नाचार्यः किं निवर्तयति, कर्मभेदाशङ्कामिति ब्रूमः। यथा कुण्डपा-

---

कारित्वोक्तिरित्यर्थः। परोक्तमुद्भाव्य प्रत्याह। न चेति। संयोगभेदं विशदयति। नित्यो हीति। तुल्यबलश्रुतिद्वयेन पृथगेव सम्बन्धविधिः संयोगभेदः तस्मादुभयथात्वमविरुद्धमित्यर्थः। एकस्य तूभयत्वे संयोगपृथक्त्वमित्यत्रैतच्चिन्तितमित्युदाहरणेन दर्शयति। यथेति। वैल्वो वा खादिरो वा पालाशो वा इत्येको नित्यः संयोगस्तेन क्रत्वर्थस्य खादिरत्वस्य खादिरं वीर्य्यकामस्येत्यपरः संयोगोऽनित्यस्तेन पुरुषार्थतेत्येकस्य खादिरत्वस्योभयार्थत्वे संयोगपृथक्त्वं हेतुस्तथा कर्मस्वभेदेऽपि संयोगभेदादुभयथात्वमित्यर्थः॥

ननु प्रकरणान्तरस्थेभ्यो नित्यकर्मभ्यो भिन्नान्येव कर्माणि विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते प्रकरणभेदस्य भेदकत्वात् तत् कथं तस्योभयत्वं तत्राह। सर्वथेति। प्रतिज्ञां व्याचष्टे। सर्वथापीति। एवकारव्यावर्त्यं शङ्कया दर्शयति। त एवेतीति। भेदशङ्कानिवृत्तिं व्यतिरेकदृष्टान्तेन स्पष्टयति। यथेति। कुण्डपायिनामयनगताग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववत् विविदिषन्तीति

यिनामयने 'मासमग्निहोत्रं जुह्वति' इत्यत्र नित्यादग्निहोत्रात् कर्मान्तरमुपदिश्यते नैवमिह कर्मभेदोऽस्तीत्यर्थः। कुतः उभयलिङ्गात् श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। श्रुतिलिङ्गं तावत् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते न जुह्वति इत्यादिवदपूर्वमेषां रूपमुत्पादयतीति। स्मृतिलिङ्गमपि 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इति विज्ञातकर्त्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति। यस्यैते अष्टाचत्वारिंशत्संस्कारा इत्याद्या च संस्कारप्रसिद्धिर्वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति, तस्मात् साध्विदमभेदावधारणं॥

---

विद्यासंयुक्ततया विहितानामपि कर्मणां प्रकरणाभेदादेव कर्मान्तरत्वशङ्काया दृष्टान्ते जुह्वतीति होमविधिश्रुतेर्मासाख्यकालस्य चानुपादेयत्वेनाविधेयत्वादग्निहोत्रशब्दस्य चाख्यातपारतन्त्र्यादाख्यातस्य च जुहोतेः सन्निहितरूपवत् कर्म हित्वा व्यवहितनैयमिकाग्निहोत्रंपरामर्शित्वायोगादाख्यातार्थवाचिनोऽग्निहोत्रशब्दस्यापि कर्मान्तरविषयत्वमेवेति युक्तं। विविदिषायामेव विधिश्रवणात् प्रसिद्धानामेव यज्ञादीनां यज्ञादिशब्दैरनुवादात् विद्यासंयोगमात्रं विधीयते तेषामिति न कर्मान्तरत्वमित्यर्थः। उक्तमेवार्थं प्रश्नद्वारा हेतुमवतार्य स्फोरयति। कुत इत्यादिना। प्रसिद्धकर्मसु संस्कारत्वप्रसिद्धिरपि तेषां चित्तमलनिरासेन ज्ञानोत्पत्तावुपकारकत्वमावेदयन्ती कर्माभेदं सूचयतीत्याह। यस्येति। गर्भाधानादयः सहधर्मचारिणीसंयोगान्ताः चतुर्दश, पञ्च महायज्ञाः, सप्त सोमसंस्थाः, सप्त हविःसंस्थाः, सप्त पाकसंस्थाः, चत्वारि वेदव्रतानि, संहिताध्ययनं, प्रायणं कर्म, जपः, उत्क्रमणं, दैहिकं, भस्मसमूहनं, अस्थिसञ्चयनं, श्राद्धानीत्येवमष्टाचत्वारिंशत्संस्काराः। कर्मभेदाभावे फलितमाह। तस्मादिति॥

## अनभिभवञ्च दर्शयति ॥ ३५ ॥

सहकारित्वस्यैवैतदुपोद्वलकं लिङ्गदर्शनं अनभिभवञ्च दर्शयति श्रुतिर्ब्रह्मचर्य्यादिसाधनसम्पन्नस्य रागादिभिः क्लेशैः 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दते' इत्यादिना, तस्मा-यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति स्थितं ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

विधुरादीनां द्रव्यादिसम्पद्रहितानाञ्चान्यतमाश्रमप्रतिपत्तिहीनानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति किं वा नास्तीति संशये नास्तीति तावत् प्राप्तं, आश्रमकर्मणां विद्याहेतुत्वावधारणात् आश्रमकर्मासम्भवाच्चैतेषामित्येवं प्राप्ते

---

नित्यानि कर्माणि स्वतः पुण्यलोकावाप्तिफलान्यपि ज्ञानकामेनानुष्ठितानि ज्ञानार्थानीत्युक्तं इदानीं ब्रह्मचर्य्यादीनामाश्रमकर्मणां क्लेशतनूकरणेन विद्योदये हेतुतेत्यत्र लिङ्गमाह। अनभिभवञ्चेति। सूत्रस्य तात्पर्य्योक्तिपूर्वकमक्षरार्थं कथयति। सहकारित्वस्येति। उभयविध्यधीनमर्थमुपसंहरति। तस्मादिति ॥

आश्रमकर्मणां विद्योपायत्वे सत्यनाश्रमकर्मणां नैवमिति मन्वानं प्रत्याह। अन्तरेति। अनाश्रमिणो विधुरादीन् विषयीकृत्य तेषां कर्मित्वप्रसिद्धेर्निन्दाप्रसिद्धेश्च संशयमाह। विधुरेति। अत्रानाश्रमकर्मणामुक्तविद्याहेतुत्वोक्त्या पादादिसङ्गतिः। पूर्वपक्षे यथा विधुरकर्मणां विद्याहेतुत्वासिद्धिः तथैवाश्रमकर्मणामपि विद्याहेतुत्वासिद्धिः। सिद्धान्ते त्वाश्रमित्वस्य ज्यायस्त्वात् कर्मणां तत्सिद्धिरिति मन्वानः संशयमनूद्य पूर्वपक्षमाह। नास्तीत्यादिना। विविदिषावाक्ये यज्ञा-

इदमाह, अन्तरा चापि तु, अनाश्रमित्वेनान्तराले वर्तमानोऽपि विद्यायामधिक्रियते, कुतः तद्दृष्टेः, *रैक्ववाचक्नवीप्रभृतीनामेवम्भूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः ॥

अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनाञ्च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यते इतिहासे। ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तं का नु खलु प्राप्तिरिति साऽभिधीयते ॥

विशेषानुग्रहश्च ॥ ३८ ॥

तेषामपि विधुरादीनामविरुद्धैः पुरुषमात्रसम्बन्धिभिर्ज-

दिषु प्रत्येकं करणविभक्तिश्रुतेराश्रमकर्माभावेऽपि वर्णमात्रधर्माणां दानादीनां सम्भवात् विधुरादीनामपि विद्याधिकारः स्यादित्याशङ्क्य केवलवर्णधर्माणां विद्यासाधनत्वे सत्याश्रमकर्मणां वैयर्थ्यादनाश्रमिणामनधिकारो विद्यायामित्याह। आश्रमेति। अनाश्रमकर्मणा न विद्याहेतुतेति पूर्वपक्षमनूद्य सिद्धान्तयति। एवमिति। प्रतिज्ञां व्याकरोति। अनाश्रमित्वेनेति। तद्दृष्टेरिति व्याचष्टे। रैक्वेति ॥

श्रौतीं दृष्टिं शिष्ट्वा स्मार्तीमपि दर्शयति। अपीति। श्रुतिस्मृतिभ्यां सिद्धे सिद्धान्तेऽनन्तरसूत्रनिरस्यचोद्यमाह। नन्विति। जन्मान्तरकृतादपि कर्मणो रैक्वादीनां विद्यासम्भवात् वर्णाद्याधावुक्तात् कर्मणो विद्येत्यत्र श्रुतिस्मृत्योरनियामकत्वात् नियामकान्तरं वक्तव्यमित्यर्थः। आश्रमधर्माभावेऽपि वर्णधर्मविशेषैरनुगृहीता विद्योदेष्यतीति सूत्रेण समाधत्ते। तेति ॥

अविरुद्धैरनाश्रमित्वाविरोधिभिरिति यावत्। अत एव पुरुषमात्रसम्बन्धिभिरित्युक्तं। आश्रमधर्मशून्यानां जपादिष्वपि शूद्रादिवन्नाधि-

* रैक्वेति वर्ध०।

पवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः सम्भ-
ते। तथा च स्मृतिः—

'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते'॥

न्यसम्भवादाश्रमकर्मणोऽपि जपेऽधिकारं दर्शयति। जन्मान्त-
ानुष्ठितैरपि चाश्रमकर्मभिः सम्भवत्येव विद्याया अनुग्रहः।
था च स्मृतिः—

'अनेकजन्मसंसिद्धस्ततो याति परां गतिं'।

ति जन्मान्तरसञ्चितानपि संस्कारविशेषानुग्रहीतॄन् विद्याया
र्शयति। दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधि-
रोति श्रवणादिषु, तस्माद्विधुरादीनामप्यधिकारो न विरु-
ध्यते॥

---

ारोऽस्तीत्याशङ्क्याह। तथा चेति। मैत्रो मित्रे भवः सर्वभूताहिंसको
दयावानित्यर्थः। किञ्च नैयोगिकफलेषु कर्मस्वानन्तर्यस्याचोदितत्वाद-
नियतकालत्वे नैयोगिककर्माभावेऽप्यामुष्मिकैरेव कर्मभिर्विद्या भविष्य-
तीति सूत्रस्य व्याख्यान्तरमाह। जन्मान्तरेति। जन्मान्तरे सञ्चित-
कर्मणां विद्यानुग्राहकत्वे मानमाह। तथा चेति। अनेकेषु जन्मसु
सञ्चितसंस्कारैः सिद्धः सम्यग्धीपरिपाकवानित्यर्थः। यथाऽस्मिन्
जन्मन्यधीतवेदो धर्मजिज्ञासाधिकारी, तथास्मिन्नेव जन्मन्याश्रम-
धर्मरत्यादितविविदिषो विद्याधिकारी स्यादित्याशङ्क्याह। दृष्टार्थेति।
च्यविद्यानिवृत्तेर्दृष्टफलत्वात् नियमापेक्षाभावात् विघातकनिषेधस्या-
भावमात्रेण तत्र पुरुषस्य प्रवृत्तिरित्यर्थः। श्रुतिस्मृतिन्यायसिद्धमर्थ-
मुपसंहरति। तस्मादिति॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अतस्त्वनाश्रमवर्तित्वादितरदाश्रमवर्तित्वं ज्यायो विद्यासाधनं श्रुतिस्मृतिसंदृष्टत्वात् श्रुतिलिङ्गाच्च 'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च' इति। 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्' इति च स्मृतिलिङ्गात्॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

सन्त्यूर्द्ध्वरेतस आश्रमाः इति स्थापितं, तांस्तु प्राप्तस्य कथञ्चित्ततः प्रच्युतिरस्ति नास्ति वेति संशयः, पूर्वधर्मेष्वनुष्ठानचिकीर्षया रागादिवशेन वा प्रच्युतोऽपि स्यात् विशेषाभावादित्येवं

---

वर्णाश्रमधर्मानाचरतामपि विद्योत्पद्यते चेदाश्रमित्वमनर्थकमित्याशङ्क्याह । अतस्त्विति । विद्यायाश्चिराचिरव्यक्तिहेतुतयाश्रमित्वानाश्रमित्वयोर्विशेषान्न वैयर्थ्यमिति मत्वा व्याचष्टे। अत इति। साधनोपचयादचिरेण विद्याहेतुत्वं ज्यायस्त्वं। आश्रमित्वस्य ज्यायस्त्वे श्रुतिस्मृत्यनुगृहीतत्वं हेतुमाह। श्रुतीति। श्रुतौ पुण्यकृत्त्वविशेषणलिङ्गाच्च श्रेष्ठमाश्रमित्वमित्याह। श्रुतीति । तेन ज्ञानमार्गेण ब्रह्मविदेति गच्छति ब्रह्म प्राप्नोति, स च पुण्यं स्वाश्रमोक्तं कर्म करोतीति पुण्यकृदुच्यते। तेजसि परमात्मन्यात्मत्वेन वर्तत इति तैजसस्तत्र पुण्यकृत्त्वविशेषणादाश्रमित्वं ब्रह्मप्राप्तिहेतुतया श्रेष्ठं सिद्धमित्यर्थः। आश्रमित्वस्य श्रेष्ठत्वे स्मार्तमपि लिङ्गमनुकूलयति । अनाश्रमीति॥

अनाश्रमिणां कर्मापि विद्याहेतुश्चेदास्त्ढयति, तस्य पूर्वाश्रमप्राप्तस्य धीपूर्वकं प्रच्युतस्य कर्म किम् वार्यमित्याशङ्क्याह। तद्भूतस्येति। वृत्तानुवादेन विषयं सूचयति। सन्तीति। तानाश्रमान् प्राप्तस्य धीपूर्वं

प्राप्ते उच्यते। तद्भूतस्य तु प्रतिपन्नोर्द्ध्वरेतोभावस्य न कथञ्चिदप्यतद्भावो न तत. प्रच्युतिः स्यात्, कुतः, नियमातद्रूपाभावेभ्यः। तथा हि अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति अरण्यमियादिति पदन्ततो न पुनरेयादित्युपनिषदिति—

'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं।
आविमोचात् शरीरस्य सोऽनुतिष्ठेद्यथाविधि'॥

इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति। यथा च 'ब्रह्मचर्यं समाप्य गृही भवेत् ब्रह्मचर्यादेव प्रव्रजेत्' इति चैवमादीन्यारोहरूपाणि वचांस्युपलभ्यन्ते नैव प्रत्यवरोहरूपाणि, न चैवमाचाराः शिष्टा विद्यन्ते। यत्तु पूर्वधर्मस्यानुष्ठानचिकीर्षया प्रत्यवरोहणमिति, तदसत्, 'श्रेयान्

---

प्रच्युतस्य कर्मविषयस्तत् किं विद्याहेतुर्न वेति संशय सिद्धवत्कृत्य तद्धेतुमाह। तास्त्विति। कथञ्चिद्रागादुद्रेकादित्यर्थं। सा मानवती न वेति विमर्शार्थं। ऊर्द्ध्वरेतसां बुद्धिपूर्वप्रच्युतानां कर्म यथोक्तविद्याहेतुर्नेत्युक्त्या पादादिसङ्गति। पूर्वपक्षे पूर्वोक्ताश्रमित्वश्रैष्ठ्यासिद्धि,सिद्धान्ते प्रच्युतेरप्रामाणिकत्वात् तत्सिद्धिरिति स्वीकृत्य पूर्वपक्षयति। पूर्वेति। पूर्वाश्रमोक्तयागादिधर्मं सुखेन शक्योऽनुष्ठातुमिति तच्चिकीर्षया रागद्वेषवशेन च प्रत्यवरोहोऽपि प्रामाणिक स्यात्, तथा चानाश्रमि कर्म निन्दितमपि यथा विद्यासाधनमुक्तं, तथा प्रत्यवरूढस्यापि कर्म विद्याहेतुराश्रमावरोहोऽनुष्ठेयस्तदारोहावरोहयोरन्यतरत्वात् तदारोहवदित्यवरोहस्य प्रामाणिकत्वादित्यर्थं। सिद्धान्तसूत्रमवतार्य व्याकरोति। एवमिति। उत्तराश्रम प्राप्तस्य पूर्वाश्रमप्राप्तिरप्रामाणिकीत्यत्र प्रश्नपूर्वकं हेतुत्रयमाह। कुत इति। तत्र नियम व्याचष्टे। तथा हीति। अरण्यमित्येकान्तोपलक्षितमूर्द्ध्वरेतस्त्व तदियात् गच्छेदिति, यद शास्त्रमार्गस्ततस्तस्मात् अरण्यान्न पुनरियात् पुनर्नागच्छेत् न प्रत्यवरोहेदित्युपनिषद्रहस्यमित्यर्थं। स्मार्तमपि नि-

स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' इति स्मरणात्, न्यायाच्च यो हि यं प्रति विधीयते स तस्य धर्मो न तु यो येन स्वनुष्ठातुं शक्यते, चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशात् प्रच्युतिः, नियमशास्त्रस्य बलीयस्त्वात्। जैमिनेरपीत्यपिशब्देन जैमिनिबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय ॥

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत किं तस्य 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्येतत् प्रायश्चित्तं स्यादुत नेति। नेत्युच्यते, यदप्यधिकारलक्षणे निर्णीतं प्रायश्चित्तं

---

यमं कथयति। आचार्येणेति। उक्तनियमतात्पर्यमाह। एवमिति। अतद्रूपमप्रत्यवरोहं व्याकरोति। यथा चेति। अभावं शिष्टाचाराभावं व्याचष्टे। न चेति। परोक्तमनुमानमनूद्य स्मृतिविरोधेन दूषयति। यत्त्विति। इतश्चानुमानमयुक्तमित्याह। न्यायाच्चेति। यत्तु रागादिवशात् प्रत्यवरोहणमिति तत्राह। न चेति। ततो न पुनरित्यादि नियमशास्त्रं। अवशिष्टं सूत्रावयवं व्याचष्टे। जैमिनेरिति। अत्रेति प्रामाणिकप्रच्युत्यभावोक्तिः। उभयसम्प्रतिपत्तिफलमाह। प्रतिपत्तीति ॥

प्रत्यवरोहणमशास्त्रीयमित्युक्तं, सम्प्रति प्रमादात् प्रत्यवरोहे प्रायश्चित्तमस्तीति वक्तुं पूर्वपक्षमाह। न चेति। ऊर्द्ध्वरेतसो धीपूर्वच्युतब्रह्मचर्यं विषयस्तेषां किं नास्ति प्रायश्चित्तं उतास्तीति प्रायश्चित्ताभावस्मृतेर्महापातकेष्वनुक्तेश्च संशयमाह। यदीति। प्रमादादित्यधीपूर्वच्युतब्रह्मचर्याणामेवोर्द्ध्वरेतसां प्रायश्चित्तचिन्तेयमिति द्योतयति। अवकीर्येत योनौ रेतः सिञ्चेदवकीर्णी योनौ छिन्नं रेतो यस्यास्तीत्यवकीर्णी। प्रमादाच्च्युतब्रह्मचर्याणामूर्द्ध्वरेतसां कृतप्रायश्चित्तानां कर्म वि-

अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वादिति तदपि न नैष्ठिकस्य भवितुमर्हति। किं कारणं,

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः।

प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' ॥

इत्यप्रतिसमाधेयपतनस्मरणात् छिन्नशिरस इव प्रतिक्रियानुपपत्तेः। उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत् प्रायश्चित्तं ॥

---

द्याहेतुरित्युक्त्या पादादिसङ्गतिः। पूर्वपक्षे प्रमादिनामूर्द्ध्वरेतसामात्यन्तिकादधःपातात् पुमर्थासिद्धिः, सिद्धान्ते तेषामपि प्रायश्चित्तेन पतनसमाधानात् तत्सिद्धिरित्युपेत्य पूर्वपक्षसूत्रमवतार्य योजयति। उच्यत इति। तदेव षष्ठाध्याये निर्धारितं प्रायश्चित्तमुदाहरति। अवकीर्णीति। ब्रह्मचार्यवकीर्णीत्यत्र पशुहोमार्थमाधानं कर्तव्यं, किं वा लौकिकेष्वेवाग्निषु तत्कर्मेति सन्देहे पूर्वाधिकरणे यदाहवनीये जुहोति तेन सूर्योऽस्याभीष्टः प्रीतो भवतीत्याहवनीयस्य सर्वहोमार्थत्वादाहवनीये तावदुपनयनहोमा कार्या इति प्रापय्य जातपुत्रोऽग्नीनादधीतेति कृतदारस्याग्न्याधानविधानादुपनयनकाले दाराभावादाधानस्याप्राप्तकालत्वात् आहवनीयाभावात् लौकिकाग्निषु उपनयनहोमा इति राद्धान्तिते, ब्रह्मचारी ययाऽवकीर्णी सैव तस्य भार्या स्यात् ततोऽग्न्याधानमित्यधिकशङ्कां निराकर्तुमतिदेशाधिकरणमवकीर्णिपशुश्चेति। यथोपनयनकाले लौकिकाग्नौ होमस्तथावकीर्णिपशुश्च तत्रैव होतव्यः। आधानस्य पत्नीपरिग्रहोत्तरकालत्वया पूर्वप्राप्त्यभावादितरस्याश्च परपरिग्रहभूताया भार्यात्वकल्पनयाऽऽधाने मानाभावादित्यर्थः। यदधिकारलक्षणे निर्णीतमधिकारिकं प्रायश्चित्तं तदपि नैष्ठिकस्य भवितुं नार्हतीति सम्बन्धः। प्रश्नपूर्वकं हेतुमाह। किमित्यादिना। किंविषयं तर्हि प्रायश्चित्तवचनं ब्रह्मचारित्वाविशेषादुपकुर्वाणस्यापि तद्योगात् तत्राह। उपेति। तादृगित्यप्रतिसमाधेयत्वोक्तिः॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तं ॥ ४२ ॥

अपि त्वेके आचार्या उपपातकमेवैतदिति मन्यन्ते यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्यते न तन्महापातकं भवति गुरुतल्पादिषु महापातकेष्वपरिगणनात्। तस्मादुपकुर्वाणवन्नैष्ठिकस्यापि प्रायश्चित्तभावमिच्छन्ति ब्रह्मचारित्वाविशेषादवकीर्णित्वाविशेषाच्च अशनवत्, यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनः संस्कारश्चैवमिति। ये हि प्रायश्चित्ताभावमिच्छन्ति न तेषां मूलमुपलभ्यते, ये तु भावमिच्छन्ति तेषां ब्रह्मचार्यवकीर्णीत्येतदविशेषश्रवणं मूलं। तस्माद्भावो युक्ततरः। तदुक्तं प्रमाणलक्षणे, 'समा विप्रतिपत्तिः स्यात् शास्त्रस्था वा तन्निमित्तत्वात्' इति। प्रायश्चित्ताभावस्मरणन्त्वेवं

---

सिद्धान्तयति। उपपूर्वमिति। उपपदं पूर्वं यस्य पतनस्य तदुपपूर्वमिति व्याकरोति। अपि त्विति। प्रायश्चित्ताभावं व्यावर्त्तयितुमपीति प्रयुक्तः। एवकारार्थमाह। नेति। नैष्ठिकव्रतलोपस्योपपातकत्वेऽपि प्रायश्चित्तसत्त्वे किञ्जातमित्याशङ्क्य उपपातकसामान्यप्रायश्चित्तं स्यादिति सूत्रावयवं व्याकुर्वन्नाह। तस्मादिति। उक्तमर्थं दृष्टान्तमवतार्य साधयति। अशनवदिति। प्रायश्चित्तं न पश्यामीति श्रवणात् कथं तद्भावधीरित्याशङ्क्याह। ये हीति। प्रायश्चित्तं नास्तीति स्मरणाभावात् न पश्यामीति दर्शनाभावमात्रस्मरणादित्यर्थः। भाववादिनामपि तुल्या मूलानुपलब्धिरित्याशङ्क्याह। ये त्विति। ननु न पश्यामीति स्मरणस्य प्रायश्चित्तनिषेधार्थत्वमनुमाय तदर्थश्रुतिकल्पनात् तद्विरोधे सामान्यश्रुत्या प्रायश्चित्तसत्ता नाभ्युपगम्यते तत्राह। तस्मादिति। यावद्दर्शनाभावस्मरणस्य प्रायश्चित्तनिषेधार्थत्वकल्पनया तदर्थश्रुतिरनुमीयते तावदतिशीघ्रवृत्त्या प्रायश्चित्तं श्रुतिर्गमयतीति न स्मृत्या

सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यं। एवं भिक्षुवै-खानसयोरपि वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रञ्चरित्वा

---

प्रायश्चित्ताभावधीरिति भावः। उक्तेऽर्थे यववराहाधिकरणसम्मति-माह। तदुक्तमिति। यवमयश्चरुर्वाराही उपानहाविति यववराह-शब्दाभ्यां प्रियङ्गुकृष्णशकुनिग्रहो वा दीर्घशूकशूकरग्रहो वेति सन्दे-हे पूर्वपक्षमाह। समेति। केचिद्दीर्घशूके यवशब्दं प्रयुञ्जते, प्रियङ्गुषु चापरे, वराहशब्दमपि शूकरे केचिदाहुः, कृष्णशकुनौ चान्ये, तेन प्रयोगसाम्यात् समा तुल्या विकल्पेन प्रतिपत्तिः स्यादित्यर्थः। सिद्धा-न्तमाह। शास्त्रस्था वेति। वाशब्दः पक्षव्यावृत्त्यर्थः। या शास्त्रमूला धीः सैव ग्राह्या शास्त्रनिमित्तत्वात् तद्धर्मादिज्ञानस्य, शास्त्रञ्च 'यदा च अन्या ओषधयो म्लायन्ति अथैते मोदमानास्तिष्ठन्ति वराहं गावो-ऽनुधावन्ति' इति च यववराहशब्दयोर्दीर्घशूकशूकरविषयत्वं, तस्मात् धीसाम्याभावात् विकल्पासिद्धेर्या शास्त्रमूला प्रसिद्धिः सैव ग्राह्येति प्रथमेऽध्याये सिद्धं, तथात्रापि शास्त्रमूलत्वात् प्रायश्चित्ताभावसिद्धे-स्तत्सत्त्वं युक्तमित्यर्थः, प्रायश्चित्तं न पश्यामि इति स्मृतेः, तर्हि का गतिस्तत्राह। प्रायश्चित्तेति। एवं सति सामान्यश्रुत्या प्रायश्चित्तसत्त्वे निश्चिते सतीत्यर्थः। यदि कथञ्चिन्नैष्ठिकस्य ब्रह्मचर्यं लुप्येत तदा न प्रायश्चित्तं दृश्यते, तेन नैष्ठिकेन ब्रह्मचर्ये यत्नवता भाव्यमिति तद्वि-षयस्य यत्नस्याप्रमादेन सदा कार्यताख्यं गौरवमुत्पादयितुं प्रायश्चित्ता-भावस्मरणमित्यर्थः। नैष्ठिके हि दर्शितन्यायमितरयोरतिदिशति। एवमिति। विशेषतोऽपि प्रायश्चित्तविधेस्तयोरस्ति प्रामादिके व्रतलोपे प्रायश्चित्तमित्याह। वानप्रस्थ इति। दीक्षाभेदे व्रतलोपे प्रमादतो ब्रह्मचर्यभङ्गे कृच्छ्रं चरित्वा महाकक्षं बहुलकण्टकाढ्यं देशं वर्द्धयेदिति सम्बन्धः। कृच्छ्रं विशिनष्टि। द्वादशेति। दिनत्रयमेकवारभोजनं, दिनत्रयं रात्रिभोजनं, दिनत्रयमयाचितं, दिनत्रयमुपवासकरणमित्येवं-रूपमित्यर्थः। पारिव्राजकेऽपि प्रमादतो व्रतलोपे तुल्यं कृच्छ्रानुष्ठान-मित्याह। भिक्षुरिति। सोमस्य यज्ञाङ्गत्वात् तदभिवृद्धिमनादृत्य महाकक्षं वर्द्धयेदित्याह। सोमेति।

महाकष्टं वर्द्धयेत्, भिक्षुर्वानप्रस्थवत् सोमवृद्धिवर्णं स्वशास्त्र-संस्कारश्चेत्येवमादिप्रायश्चित्तप्रकरणमनुसर्तव्यं॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

यदूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं, यदि वोपपातकमुभयथापि शिष्टैस्ते बहिः कर्तव्याः।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा'॥ इति

---

'सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतं।
पुनः स पूतो भवति पङ्क्तिपावन एव च॥
मनोवाक्कायजान् दोषान् ज्ञानोत्थांश्च प्रमादजान्।
सर्वान् दहति योगाग्निस्तूलराशिमिवानलः॥
उपपातेषु सर्वेषु पातकेषु महत्सु च।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत्॥
नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः'॥

इत्यादि परिव्राजकविषयं शास्त्रं। तेनाभिहितः संस्कारो ध्यानादिः स च कर्तव्यो भिक्षुणेत्याह। स्वशास्त्रेति। ऊर्ध्वरेतसां प्रमादच्युतब्रह्मचर्याणां कृतप्रायश्चित्तानां अधिकारोऽस्ति विद्यायामिति भावः॥

कृतप्रायश्चित्तानामपि तेषां शिष्टाव्यवहार्यत्वमाह। बहिस्त्विति। कृतप्रायश्चित्ते सह शिष्टाचाररूपं कर्म विषयस्तत् किं विद्याङ्गं किं वा नेति संशये प्रागुक्तप्रायश्चित्तैरेव तेषां व्यवहार्यतासिद्धेरङ्गमिति प्राप्ते सिद्धान्तमाह। यदीति। प्रतिज्ञार्थमुक्त्वा हेतुद्वयं व्याकरोति। आरूढ इत्यादिना। दुश्चरिताचरणकृतमेनो लोकद्वयेऽपि कर्तुरशुद्धिमादधाति, तत्र प्रायश्चित्तेन लोकद्वयेऽपि कस्यचिदशुद्धिरपनीयते कस्यचित्तु पारलौकिकाशुद्धिरपाक्रियते ऐहिकाशुद्धिरनुवर्तते। उक्तं हि

'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतं।
उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत्'॥ इति

चैवमादिनिन्दातिशयस्मृतिभ्यः शिष्टाचाराच्च। न हि यज्ञाध्ययनविवाहादीनि तैः सहाचरन्ति शिष्टाः॥

## स्वामिनः फलश्रुतेरित्यात्रेयः॥ ४४॥

अङ्गेषूपासनेषु संशयः किन्तानि यजमानकर्माणि आहोस्विदृत्विक्कर्माणि, किन्तावत् प्राप्तं यजमानकर्माणीति, कुतः

---

'बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवदेत्'॥ इति।

तथेहाप्यारूढो नैष्ठिकमित्यादिस्मृतिलिङ्गादाचाराच्च परलोकासुद्धेरपनीतत्वेऽपि व्यवहार्यत्वावगमान्न तैर्व्यवहाररूपाचारस्य विद्याङ्गत्वं, तदेवमुक्ताचारस्योक्तविद्यानङ्गत्वाभिधानात् प्रासङ्गिकी पादादिसङ्गतिः। पूर्वपक्षे बालघ्नानित्यादिस्मृतिविरोधः, सिद्धान्ते तदानुगुण्यमिति भावः॥

अन्यस्मिन् मापकारिणि तेन व्यवहारादन्यस्य त्वपकारवदन्यस्मिन् उपास्तिकर्तरि तेन व्यवहारात् फललक्षणोपकारमन्ययजमानस्य दर्शयन् पूर्वपक्षयति। स्वामिन इति। कर्माङ्गसङ्गान्युपासनानि विषयास्तेषूभयकर्तृत्वधिया संशयमाह। अङ्गेष्विति। शास्त्रीयाङ्गाश्रितोपास्तीनां स्वतन्त्रफलानामृत्विक्कर्तृकत्वेऽपि यजमानगामिफलत्वोक्तेरस्ति पादादिसङ्गतिः। पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरेकाधिकरण्यसिद्धि, सिद्धान्ते प्रकृतस्य कर्तुरस्वातन्त्र्यात् तस्य यजमानाधीनत्वात्तत्कर्तृत्वमपि तदधीनमित्यैकाधिकरण्यस्याविरुद्धतेति सिद्धवत्कृत्य प्रश्नपूर्वकं पूर्वपक्षमाह। किमिति। तत्र हेतुं प्रश्नद्वारा दर्श-

फलश्रुतेः। फलं हि श्रूयते 'वर्षति हास्मै वर्षयति ह एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते' इत्यादि [छा०उ०]। तच्च स्वामिगामि न्याय्यं तस्य साङ्गे प्रयोगे, अधिकृतत्वादधिकृताधिकारत्वाच्चैवंजातीयकस्य। फलञ्च कर्तर्युपासनानां श्रूयते 'वर्षत्यस्मै य उपास्ते' इत्यादि [छा०उ०]। ननु ऋत्विजोऽपि फलं दृष्टं आत्मने वा यजमानाय वाऽयं कामं कामयते तमागायतीति। न, तस्य वाचनिकत्वात्। तस्मात् स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्याचेय आचार्यो मन्यते॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥ ४५॥

नैतदस्ति स्वामिकर्माण्युपासनानीति, ऋत्विक्कर्माण्येतानि

---

यति। कुत इति। फलश्रुतिमेव विशदयति। फलं हीति। श्रुतमपि फलमृत्विग्गतं किन्न स्यात्तत्राह। तच्चेति। तत्र हेतुः। तस्येति। उद्गीथाद्युपास्तिविधीनां प्राप्तोद्देशत्वात् क्रत्वधिकारिण एव प्राप्तेस्तस्यैवोद्देश्यत्वयोगात् तदाश्रितोपास्तीनां गोदोहनवदधिकृताधिकारित्वात् क्रत्वधिकारिण एव गोदोहनफलवतः विद्याफलेन सङ्गतिरित्याह। अधिकृतेति। तथापि कथं उपास्तीनां याजमानत्वं तत्राह। फलञ्चेति। अकर्तृत्वे फलित्वमपि यजमानस्य न स्यात् कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यादित्यर्थः। यजमानगामि फलमित्यत्र व्यभिचारं शङ्कते। नन्विति। उत्सर्गतो याजमानं फलं वचनात् क्वचिदपवादः स्यादित्याह। न, तस्येति। वाचनिकापवादाभावे तूत्सर्गस्थितिरित्युपसंहरति। तस्मादिति॥

अङ्गोपास्तीनां याजमानत्वात् न स्वसन्वफलतेति प्राप्ते सिद्धान्तयति। आर्त्विज्यमिति। तत्र प्रतिज्ञां विभजते। नैतदिति। अन्य-

विज्ञानस्य यजमानगामि फलं दर्शयति, तस्मादङ्गोपासनाना-मृत्विक्कर्तृत्वसिद्धिः ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः' इति बृहदारण्यके श्रूयते, तत्र संशयः मौनं विधीयते न वेति। न विधीयत इति तावत् प्राप्तं, बाल्येन तिष्ठासेदित्यत्रैव

---

सिद्धे चोपास्तीनां ऋत्विक्कर्तृत्वे तन्निर्धारणानियमन्यायेन स्वतन्त्रफलत्वसिद्धिरिति भावः ॥

विदुरप्रभृतीनां मन्दाधिकारिणां धीसाधनोक्तिप्रसङ्गेनाङ्गोपासनमधमधीसाधनमेवं निर्धार्य पुनरुत्तममध्यमधीसाधनं वक्तुमारभते। सहकार्यन्तरेति। विषयवाक्यमुदाहरति। तस्मादिति। यस्मात् पूर्वे ब्राह्मणा विदित्वाऽऽत्मानमेव एषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति स्म तस्मात् अधुनातनोऽपि ब्राह्मणः पाण्डित्यं पण्डाऽध्ययनजा ब्रह्मबुद्धिस्तद्वान् पण्डितः, तस्य कृत्यं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन युक्तितोऽसम्भावनानिरासरूपमननेन शुद्धधीत्वेन वा तिष्ठासेत् स्थातुमिच्छेत्। उक्तदार्ढ्यार्थं बाल्यं चेत्यादिरनुवादः, श्रवणमननानन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यान्मौनात् अन्यद्बाल्यं पाण्डित्यं चामौनं च निदिध्यासनं निश्चयेन लब्ध्वा उक्तहेतुत्रयस्य ब्रह्मधीहेतुत्वात् ब्रह्माहमित्यवगच्छतीति ब्राह्मणः साक्षात्कृतब्रह्म भवतीत्यर्थः। तत्र श्रुतं मौनं विषयीकृत्य मौनशब्दस्य सिद्धे पारिव्राज्ये साध्ये च ज्ञानाभ्यासे प्रयोगसिद्धेः संशयमाह। तत्रेति। निरुपाधिविद्यान्तरङ्गसाधनमौनविधिसाधनात् पादादिसङ्गतिः। पूर्व-

विधेरवसितत्वात्। न ह्यत्र मुनिरित्यत्र विधायिका विभक्तिरुपलभ्यते, तस्मादयमनुवादो युक्तः। कुतः प्राप्तिरिति चेत् मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात्, पाण्डित्यं निर्विद्येत्येव प्राप्तं मौनं। अपि च अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मण इत्यत्र तावद् ब्राह्मणत्वं न विधीयते, प्रागेव प्राप्तत्वात्, तस्मादथ ब्राह्मण इति प्रशंसावादः, तथैवाथ मुनिरित्यपि भवितुमर्हतीति समाननिर्देशत्वादित्येवं प्राप्ते ब्रूमः, सहकार्यन्तरविधिरिति। विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः अपूर्व-

---

पक्षे मौनस्यानुष्ठेयत्वासिद्धिः, सिद्धान्ते तस्यानुष्ठेयत्वसिद्धिरिति मत्वा तं चेत्यादिवाक्यशेषादग्नीषोमासनम्दात्विक्कर्मेतिवत् अथ ब्राह्मण इति विधिहीनवाक्यशेषादथ मुनिरित्येषोऽपि न विधिरिति पूर्वपक्षयति। नेत्यादिना। ननु बाल्येनेत्युपक्रमे विधिश्रुतेर्मौनेऽपि विधिरस्तु नेत्याह। बाल्येनेति। तदेवोपपादयति। न हीति। यद्यत्रापि विधेयत्वं तर्हि विधिः श्रूयेत बाल्यवन्न च श्रूयते अतः श्रोतव्यत्वे सत्यश्रवणाद्विध्यभावसिद्धिरित्यर्थः। तर्हि मौनवाक्यस्य का गतिरस्ति तत्राह। तस्मादिति। अनधिगतस्यानुवादायोगादन्यत्र विध्यनुपलब्धेर्विधिरेवायमिति शङ्कते। कुत इति। पाण्डित्यविधानादेव मौनमपि सिद्धं तस्यैव मौनत्वादित्याह। मुनीति। मुनिशब्दस्य भिक्षुवचनत्वेऽपि तस्यान्यत्र विधानादत्रानुवाद एवेति मत्वा मौनस्य चाविधेयत्वे हेत्वन्तरमाह। अपि चेति। एकवाक्यतानुरोधात् मौनवाक्येऽपि न विधिरित्यर्थः। यदा पाण्डित्येन मौनस्य प्राप्तिस्तदा विधीयमानबाल्यस्येयं प्रशंसा, न हि पाण्डित्यं स्वरूपेण ज्ञानं किन्तु बाल्येऽनुष्ठितेऽनन्तरं मननापरपर्यायं पाण्डित्यं कृतं स्यात्, तस्मात् बाल्यं प्रशस्तं, यदा मौनस्योत्तमाश्रमस्य विध्यन्तरप्राप्तस्य अनुवादस्तदा बाल्यमात्रानुष्ठानवानुत्तमाश्रमित्वेन स्तूयत इति व्यक्ता स्तुतिरिति मत्वाह। तस्मादिति। बाल्यपाण्डित्यातिरिक्तस्य मौनस्याविधेयत्वात् न तत् मुमुक्षोरनुष्ठेयमिति प्राप्तं पक्षमनूद्य

विधेरवसितत्वात्। न ह्यत्र मुनिरित्यत्र विधायिका विभक्तिरुप-
लभ्यते, तस्मादयमनुवादो युक्तः। कुतः प्राप्तिरिति चेत् मुनि-
पण्डितशब्दयोर्ज्ञानार्थत्वात्, पाण्डित्यं निर्विद्येत्येव प्राप्तं मौनं।
अपि च अमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मण इत्यत्र तावद् ब्रा-
ह्मणत्वं न विधीयते, प्रागेव प्राप्तत्वात्, तस्मादथ ब्राह्मण इति
प्रशंसावादः, तथैवाथ मुनिरित्यपि भवितुमर्हति समाननिर्दे-
शत्वादित्येवं प्राप्ते ब्रूमः, सहकार्यन्तरविधिरिति। विद्यासह-
कारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः अपूर्व-

---

पक्षे मौनस्यानुष्ठेयत्वासिद्धिः, सिद्धान्ते तस्यानुष्ठेयत्वसिद्धिरिति मत्वा
तं हेत्यादिवाक्यशेषादङ्गोपासनम्ऋत्विक्कर्मेतिवत् अथ ब्राह्मण इति
विधिहीनवाक्यशेषादथ मुनिरित्येषोऽपि न विधिरिति पूर्वपक्षय-
ति। नेत्यादिना। ननु बाल्येनेत्युपक्रमे विधिश्रुतेर्मौनेऽपि विधिरस्तु
नेत्याह। बाल्येनेति। तदेवोपपादयति। न हीति। यद्यत्रापि विधे-
यत्वं तर्हि विधिः श्रूयेत बाल्यवन्न च श्रूयते अतः श्रोतव्यत्वे सत्यश्रवणा-
द्विध्यभावसिद्धिरित्यर्थः। तर्हि मौनवाक्यस्य का गतिरस्ति तत्राह।
तस्मादिति। अनधिगतस्यानुवादायोगादन्यत्र विध्यनुपलब्धेर्विधिरे-
वायमिति शङ्कते। कुत इति। पाण्डित्यविधानादेव मौनमपि सिद्धं
तस्यैव मौनत्वादित्याह। मुनीति। मुनिशब्दस्य भिक्षुवचनत्वेऽपि तस्या-
न्यत्र विधानादत्रानुवाद एवेति मत्वा मौनस्य अविधेयत्वे हेत्वन्तरमा-
ह। अपि चेति। एकवाक्यतानुरोधात् मौनवाक्येऽपि न विधिरित्यर्थः।
यदा पाण्डित्येन मौनस्य प्राप्तिस्तदा विधीयमानबाल्यस्येत्थं प्रशंसा, न हि
पाण्डित्यं स्वरूपेण ज्ञानं किन्तु बाल्येऽनुष्ठितेऽनन्तरं मननापरपर्यायं
पाण्डित्यं कृतं स्यात्, तस्मात् बाल्यं प्रशस्तं, यदा मौनस्योत्तमाश्रमस्य वि-
ध्यन्तरप्राप्तस्य अनुवादस्तदा बाल्यमात्रानुष्ठानवानुत्तमाश्रमित्वेन स्तूय-
त इति व्यक्ता स्तुतिरिति मत्वाह। तस्मादिति। बाल्यपाण्डित्यातिरि-
क्तस्य मौनस्याविधेयत्वात् न तत् मुमुक्षोरनुष्ठेयमिति प्राप्तं पक्षमनूद्य

त्वात्। ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तं, नैष दोषः, मुनिशब्दस्य ज्ञानातिशयार्थत्वान्मननान्मुनिरिति च व्युत्पत्तिसम्भवात् 'मुनीनामप्यहं व्यासः' इति च प्रयोगदर्शनात्। ननु मुनिशब्द उत्तमाश्रमवचनोऽपि दृश्यते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यम्' इत्यत्र। न, 'वाल्मीकिर्मुनिपुङ्गवः' इत्यादिषु व्यभिचारदर्शनात्, इतराश्रमसन्निधानाच्च, पारिशेष्यात् तत्रोत्तमाश्रमोपादानं, ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्माद्बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधेः पर्यवसानमिति, तथाप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते, मुनिः स्यादिति निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणं, तद्वतो विद्यावतः सन्न्या-

---

सिद्धान्तमाह। एवमिति। अपूर्वत्वमसिद्धमिति शङ्कते। नन्विति। पण्डितशब्दस्य ज्ञानमात्रार्थत्वात् मुनिशब्दस्य तदतिशयगामित्वात् अर्थभेदान्न पाण्डित्यशब्देन मुनिशब्दस्य प्राप्त्यर्थतेत्याह। नेत्यादिना। वृद्धप्रयोगाभावे कथं तदर्थत्वं तत्राह। मुनीनामिति। आश्रमेऽपि योगदर्शनात् अनियतज्ञानातिशयवाचित्वं, तस्य चात्राविधानादनुवादत्वमेवेति शङ्कते। नन्विति। उत्तमाश्रमे मुनिशब्दोऽसाधारणः साधारणो वेति विकल्प्याद्यं प्रत्याह। नेति। असाधारणत्वं त्वेकस्यानेकार्थत्वयोगात् अयुक्तमित्यभिप्रेत्य प्रयोगस्य अन्यथासिद्धिमाह। इतरेति। मौनस्यापूर्वत्वमुपपाद्य तृतीयमिति पदं व्याकुर्वन् फलितमाह। तस्मादिति। वाक्यभेदप्रसङ्गात् एकत्रैव विधिरित्युक्तं तत्राह। यत्त्विति। उपरिधारणवत् मौनं वाक्यभेदेन विधेयमित्यत्रैव हेत्वन्तरमाह। निर्वेदनीये त्विति। कस्मेदं मौनं विद्यासहकारितया विधीयते तत्राह। तद्वत इति। विशेषणप्रापकं एच्छति। कथमिति।

मिनः। कथं विद्यावतः सन्न्यासिन इत्यवगम्यते तदधिकारात् 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति। ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्र विद्यातिशयः किं मौनविधिना इत्यत आह। पक्षेणेति। एतदुक्तं भवति यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिरिति। विध्यादिवत् यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवंजातीयके विध्यादौ सहकारित्वेना*ऽग्न्याधानादिकमङ्गजातं विधीयते एवमविधिप्रधानेऽप्यस्मिन् विद्यावाक्ये मौनविधिरित्यर्थः। एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिसिद्धे विद्यमाने कस्मा-

---

प्रकरणं तथेत्याह। तदिति। पक्षेणेति पदं शङ्कोत्तरत्वेनावतारयति। नन्वित्यादिना। अत्रैव प्रत्यगद्वयं वस्तु द्वैतं सर्वमविद्यामयमिति शास्त्रयुक्तिभ्यां सिद्धे तत्साक्षात्कारसाधनाभ्यासे स्वयं एव पुरुषस्यौन्मुख्यादनर्थको विधिरिति चोदिते सन्न्यासप्रकरणात् तद्धर्मस्य श्रवणादेः साक्षात्कारहेतुभावस्यापूर्वत्वादिष्टव्यस्तद्विधिरिति समाधिः। विद्यावन्तमधिकारिविशेषं प्रति विधेरानर्थक्यमयुक्तमित्याशङ्क्य विद्यावत इति विद्यातिशययुक्तो नोच्यते किन्तु विद्योदयाय तदुपायाभ्यासे प्रवृत्तः, तेनास्य पक्षे कदाचिद्भेददर्शनं प्राप्नोत्यतो विधेरर्थवत्तेति सूत्रपदार्थं विवृणोति। एतदिति। अतन्निष्ठवाक्यस्य तद्विधायकत्वे दृष्टान्तमाह। विध्यादिवदिति। तदेव व्याचष्टे। यथेति। आदिमुख्यं प्रधानं, विधेरादिर्विध्यादिर्दर्शपूर्णमासविधिः, समिदादिस्तु विध्यन्तस्तत्राश्रुतविधिकेऽपि विधिरास्थीयते इत्यर्थः। दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति। एवमिति। बाल्यादिप्रधानसन्न्यासो यद्यनुष्ठेयस्तर्हि कस्मात् गार्हस्थ्येनोपसंहरति। श्रुतिरिति। अनन्तरसूत्रव्यावर्त्यमाह। एवमिति। गृहिणोपसंहारेऽपि कैवल्याश्रमस्य सिद्धमित्याशङ्क्याना-

---

* अग्न्याधानेति वर्ध॰ का॰।

छान्दोग्ये गृहिणोपसंहारः 'अभिसमावृत्य कुटुम्बे' इत्यत्र, तेन ह्युपसंहरन् तद्विषयमादरं दर्शयतीत्यत उत्तरं पठति ॥

**कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४८ ॥**

तुशब्दो विशेषणार्थः, कृत्स्नभावोऽस्य विशिष्यते, बहुलायासानि हि बह्न्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि आश्रमान्तरकर्माणि च यथासम्भवमहिंसेन्द्रियसंयमादीनि तस्याऽपि विद्यन्ते, तस्मात् गृहमेधिनोपसंहारो न विरुध्यते ॥

**मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

यथा मौनं गार्हस्थ्यञ्चैतावाश्रमौ श्रुतिसम्मतावेवमितरावपि वानप्रस्थगुरुकुलवासौ । दर्शिता हि पुरस्तात् श्रुतिः 'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' इत्याद्या ।

---

स्वाविषयत्वं प्राप्तमित्याह । तेनेति । बहुलायाससाध्यकर्मबाहुल्यात् तेनोपसंहारो न तेनैव समापनादित्याह । अत इति ॥

सूत्रं व्याचष्टे । तुशब्द इति । ननु यथा गृहिणो यज्ञादीनि कर्तव्यत्वेन उक्तानि तथाऽऽश्रमान्तराणामपि करणसंयमादीनि कर्माण्युक्तानि, तथा च कोऽस्य विशेषस्तत्राह । आश्रमान्तरेति । गृहमेधिनि विशेषे सिद्धे फलितमाह । तस्मादिति ॥

मौनं गार्हस्थ्यमित्याश्रमद्वयोक्तेरितराश्रमाभावशङ्का कस्यचिद्भवेत् तन्निरासार्थमाह । मौनवदिति । कथं तयोः श्रुतिमत्त्वं तत्राह । दर्शितेति । श्रुतिमत्त्वाविशेषे फलितमाह । तस्मादिति । इतरेषामिति बहुत्वा गार्हस्थ्यस्यापि परामर्शो न तु सिद्धवत् उपन्यास इत्याशयेनाह । इतरेषामिति । गायत्रः, ब्राह्म, प्राजापत्य, बृहन् इति ब्रह्मचारी चतुर्विध । गृहस्थोऽपि वार्तावृत्ति, शालीनवृत्ति, यायावर,

तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात् तुल्यवत् विकल्प-समुच्चयाभ्यां प्रतिपत्तिः, इतरेषामिति द्वयोराश्रमयोर्बहुव-चनं वृत्तिभेदापेक्षयानुष्ठानभेदापेक्षया वेति द्रष्टव्यम्॥

अनाविष्कुर्वन्नन्वयात्॥ ५०॥

'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यमनुष्ठेयतया श्रूयते। तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति बालभावस्य वयोविशेषस्येच्छया सम्पादयितु-मशक्यत्वात् यथोपपादमूत्रपुरीषत्वादिबालचरितमन्तर्गता वा

---

घोरसन्न्यासी इति चतुर्विधः। वानप्रस्थस्य वैखानसोदुम्बरबालखिल्य-फेनपप्रभेदैश्चतुर्विधः। तथा परिव्राडपि कुटीचकबहूदकहंसपरम-हंसप्रभेदैश्चतुर्विध इति षोडश प्रभेदास्तावदाश्रमास्तत्तद्धर्मविशेषयुक्ताः श्रुतिस्मृतिप्रसिद्धास्ततो ब्रह्मचारिणि वानप्रस्थे चानुष्ठानभेदमनु-ष्ठानभेदं वाऽपेक्ष्य बहूक्तिर्न गार्हस्थ्यमपेक्ष्य, तस्य प्रागेवासन्दिग्धत्वे-नोक्तत्वादित्यर्थः॥

बाल्यस्य विधेयत्वमुपेत्यावान्तरवाक्यभेदेन मौनमपि विधेयत्वात् मुमुक्षुणा कार्यमित्युक्तमिदानीं किन्तत् बाल्यमिति वीक्षायामाह। अनाविष्कुर्वन्निति। अनुष्ठेयत्वेन श्रुतं बाल्य विषयत्वेनोदाहरति। तस्मादिति। तत्र बाल्ये विषये संशय इति सम्बन्धः। संशयकारणमाह। बालस्येति। तर्हि बालभावो वयोविशेषोऽपि कल्प्यतामित्या-शङ्क्य तदयहे हेतुमाह। बालेति। तद्धितश्रुत्या परिशिष्ट बाल्यमा-श्रित्य संशयमभिनयति। यथेति। बाल्यशब्दार्थविवेचनेन स्वतन्त्र-गुमर्थहेतुविद्यान्तरगतस्यैवात्रापि निरूपणात् पादादिसङ्गतिः। पूर्व-पक्षे तिष्ठन्मूत्रत्वाद्यपि विदुषोऽनुष्ठेयं सिध्यति, सिद्धान्ते बाल्यस्या-प्ररूढेन्द्रियत्वादिरूपभावशुद्धेरनुष्ठेयत्वात् न विदुषो यथेष्टचेष्टा-सिद्धिरिति मत्वा प्रश्नपूर्वकं पूर्वपक्षमाह। किन्तावदिति। चरणं

भावविशुद्धिर्दम्भदर्पप्रच्छेन्द्रियमादिरहितता वा बाल्यं स्यादिति संशयः, किं तावत् प्राप्तं कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वश्च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तं। ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याचरणं न विद्यावतः सन्न्यासिनो वचनसामर्थ्याद्दोषनिवृत्तेः पशुहिंसादिष्विवेत्येवं प्राप्तेऽभिधीयते। न, वचनस्य गत्यन्तरसम्भवात्। अविरुद्धे ह्यन्यस्मिन् बाल्यशब्दाभिलप्ये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता। प्रधानोपकाराय चाङ्गं विधीयते ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयं, न च सकलायां बाल-

---

चारो वदनं वादो भक्ष्यं भक्ष्यते कामतो यस्य स तथा तस्य भावस्तत्ता। यथोपपादं यथासम्भवं, यत्र क्वापि मूत्रं पुरीषं चास्येति यथोक्तस्तस्य भावस्तत्त्वं। तत्र लोकप्रसिद्धिं हेतुमाह। प्रसिद्धेति। शास्त्रान्तरविरोधादयुक्तमुक्तविधबाल्यस्य विधेयत्वमिति शङ्कते। नन्विति। आदिशब्देन शिष्टगर्हा गृह्यते। सामान्यशास्त्रसङ्कोचो विशेषविधेः स्यादित्याह। नेत्यादिना। समानविधेर्विशेषविधिना सङ्कोचे दृष्टान्तमाह। पश्विति। विदुषो यथेष्टचेष्टायामपि न दोषोऽस्तीति प्राप्तमनूद्य सिद्धान्तमाह। एवमिति। विदुषो यथेष्टचेष्टा न विधेया शास्त्रान्तरविरोधादिति प्रतिजानीते। नेति। सामान्यशास्त्रस्योक्तः सङ्कोचो बलेन तिष्ठासेदिति वचनादित्याशङ्क्याह। वचनस्येति। सामान्यप्रवृत्तविधिशास्त्राविरुद्धेऽर्थे सम्भवति तद्विरुद्धार्थकल्पनायोगात् न कामचारादि विधेयमित्युक्तमेव व्यनक्ति। अविरुद्धे हीति। इतश्च कामचारादि न विधेयमित्याह। प्रधानेति। किन्तत् प्रधानं यदङ्गत्वेन बाल्यादि विधीयते तदाह। ज्ञानेति। उक्तप्रधानोपकारित्वाभावात् न कामचारादि विधेयमित्युक्तं तद्विरोधित्वाच्च तदविधेयमित्याह। न चेति। किन्तर्हि विधेयं बाल्यं तदाह। तस्मादिति।

चर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः सम्भाव्यते, तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह बाल्यमाश्रीयते। तदाह अनाविष्कुर्वन्निति। ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन् दम्भदर्पादिरहितो भवेत् यथा बालोऽप्ररूढेन्द्रियतया न परेष्वात्मानमाविष्कर्तुमीहते तद्वत्। एवं ह्यस्य वाक्यस्य *प्रधानोपकारार्थानुगम उपपद्यते। तथा चोक्तं स्मृतिकारैः।

'यन्न सन्तं नचासन्तं नाश्रुतं न बहुश्रुतं।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः॥
गूढधर्माश्रितो विद्वान्, अज्ञातचरितं चरेत्।
अन्धवत् जडवच्चाऽपि मूकवच्च महीं चरेत्'॥

'अव्यक्तलिङ्गोऽव्यक्तचरः' इति चैवमादि॥

---

इहेति प्रकृतवाक्योक्तिः। उक्तेऽर्थे सूत्रमादाय योजयति। तदाहेति। कथं यथोक्तेऽर्थे बाल्यशब्दः प्रयुज्यते तत्राह। यथेति। अन्वयादिति पदं व्याकरोति। एवं हीति। अप्ररूढेन्द्रियत्वादिरूपभावशुद्धिलक्षणबाल्यस्य प्रधानोपकारित्वे मानमाह। तथा चेति। कुलीनत्वप्रकटनं सत्त्वं, तद्वैपरीत्यमसत्त्वं, शास्त्रार्थज्ञानराहित्यमश्रुतत्वं, तद्वैपरीत्यं बहुश्रुतत्वं, सदाचारनिरतत्वं सुवृत्तत्वं, दुराचारनिष्ठत्वं दुर्वृत्तत्वम् इति भेदः। तत्किमिदानीं ब्रह्मयोग्यस्य मुमुक्षोर्नास्त्येव किञ्चित् अनुष्ठेयं तत्राह। गूढेति। चक्षुरिन्द्रियपारवश्यं निरसितुं अन्धवदित्युक्तं। रसनादिपारवश्यं निरस्यति। जडवदिति। ज्ञानेन्द्रियपारवश्यं परिहृत्य कर्मेन्द्रियपारवश्यं परिहरति। मूकवदिति। धर्मध्वजित्वाप्रकटनमव्यक्तलिङ्गत्वं, तदेवं मुमुक्षोरुपरतसर्वेन्द्रियस्य श्रवणादिपरस्य मोक्षसाधनं तत्त्वज्ञानं अवश्यम्भावीति भावः॥

---

* प्रधानोपकारार्थत्वानुगम इति वर्ध० का०।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदित्यत आरभ्योर्ध्वरेतःसु चावचं विद्यासाधनमवधारितं तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि सिध्यति उत कदाचिदमुत्रापीति चिन्त्यते, किं तावत् प्राप्तं इहैवेति। किं कारणं, श्रवणादिपूर्विका हि विद्या न च कश्चिदमुत्र विद्या मे जायतामित्यभिसन्धाय श्रवणादिषु प्रवर्तते, समान एव तु जन्मनि विद्याजन्माभिसन्धाय तेषु प्रवर्तमानो दृश्यते। यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति प्रमाणजन्य-

---

बाह्यान्तमूच्चावचं विद्याहेतुमुक्त्वा तत्फलं विद्याजन्मकालं निरूपयति। ऐहिकमिति। उक्तहेत्वधीनधीजन्मविषये कारीर्यादिफले चित्रादिफले चोभयोपलब्धेर्वृत्तानुवादपूर्वकं संशयमाह। सर्वेति। श्रवणादिसामग्रीप्रतिबन्धशून्या विशिष्टधीप्रसवभूमिरित्युक्तेरत्र पादादिसङ्गतिः। पूर्वपक्षे श्रवणादीनां विद्योपायत्वनियमासिद्धिः, सिद्धान्ते प्रतिबन्धाभावापेक्षया तेषां तन्नियमसिद्धिरित्युपेत्य प्रश्नपूर्वकमैहिकत्वनियमं पूर्वपक्षमाह। किमिति। फलत्वैविध्योपलब्धौ तन्नियमे नास्ति हेतुरिति शङ्कते। किमिति। तत्र कारणमाह। श्रवणादीति। चित्रादिवदमुत्रापि धीहेतुत्वं श्रवणादेः स्यादित्याशङ्क्याह। न चेति। कथं तर्हि तेषु प्रवृत्तिरित्याशङ्क्य तेषां कारीर्यादितुल्यत्वमाह। समान इति। श्रवणादीनां चक्षुरादिवत्तद्धीसाधनत्वात् कालान्तरीयकुम्भोपलम्भाय चक्षुरुन्मीलनाभाववत् जन्मान्तरीयविद्यायै श्रवणादिषु प्रवृत्त्ययोगात् उपलभ्यमानसंसारदुःखनिवृत्तये च विद्यासाधनत्वात कारीर्यादिवत्तुल्यजन्मन्येव विद्याजन्मेत्यर्थः। यज्ञादीनां जन्मान्तरीयफलानां धीहेतुत्वस्य विविदिषावाक्यीयत्वाज्जन्मान्तरे धीजन्मेत्याशङ्क्याह। यज्ञेति। तेषां धीशुद्धाः श्रवणादिघटकत्वात्

त्वाद्विद्यायाः। तस्मादैहिकमेव विद्याजन्मेत्येवं प्राप्ते वदामः, ऐहिकं विद्याजन्म भवति असति प्रस्तुतप्रतिबन्धे इति। एतदुक्तं भवति यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित् प्रतिबन्धो न क्रियते उपस्थितविपाकेन कर्मान्तरेण तदेहैव विद्या *उपपद्यते, यदा तु खलु प्रतिबन्धः क्रियते तदाऽमुत्रेति। उपस्थितविपाकत्वञ्च कर्मणो देशकालनिमित्तोपनिपाताद्भवति। यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि न तान्येवान्यस्यापीति नियन्तुं शक्यते यतो विरुद्धफलान्यपि कर्माणि भवन्ति, शास्त्रमप्यस्य कर्मण इदं फलमित्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि सङ्कीर्तयति। साध-

---

घटितेषु धियावश्यम्भाव्यमित्यैहिकत्वनियम इत्यर्थः। श्रवणादीनां कारीर्यादितुल्यत्वे फलितमाह। तस्मादिति। श्रवणादिषु कृतेष्वपि न चेदत्र धीः स्यात् तेषामतदुपायतैवेति प्राप्तमनूद्य चित्रावदनियतफलधीसाधनमिति सिद्धान्तमाह। एवमिति। कृतेष्वपि श्रवणादिषु कदाचिद्विद्या नोत्पद्यते चेत्तर्हि तेषां तदुपायत्वमनियतं स्यादित्याशङ्क्याह। एतदिति। कृतेष्वपि श्रवणादिषु अत्र विद्यानुदये कारीर्यादाविव प्रतिबन्धो वा पौष्कल्याभावो वा तेषां कल्पनीयः, प्रतिबन्धहीना हि सामग्री कार्ये हेतुर्न चैतावता तद्धेतुत्वहतिरित्यर्थः। उपस्थितविपाकश्रवणादिविरोधात् कर्मण एव प्रतिबन्धमाशङ्क्याह। उपस्थितेति। तैरेव देशादिभिर्विद्यार्थमेव श्रवणादिकर्म किमिति न विपच्यते तत्राह। यानीति। भोगार्थस्य कर्मणो ज्ञानार्थस्य च श्रवणादेर्देशकालनिमित्तैकरूप्याभावे हेतुमाह। यत इति। कर्मणा श्रवणादीनां प्रतिबन्धे तेभ्यो विद्योत्पत्तेरादिशास्त्रं व्याहन्येतेत्याशङ्क्याह। शास्त्रमिति। तथापि कर्मण एव प्रतिबन्धकत्वं न श्रवणादीनामिति कुतो नियमस्तत्राह। साधनेति। यत्त्विह विद्याभावे कारीर्यादिवत्

---

* विपच्यत इति का० वर्ध०।

नवीर्यविशेषात्वतीन्द्रिया हि कस्यचित् शक्तिराविर्भवतीति तत्-
प्रतिबद्धा परस्य तिष्ठति। न चाविशेषेण विद्यायामभिसन्धि-
र्नोत्पद्येत इहामुत्र वा मे विद्या जायतामित्यभिसन्धेर्निरङ्कुश-
त्वात्। श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापे-
क्षैवोत्पद्यते। तथा च श्रुतिः दुर्बोधत्वमात्मनो दर्शयति—

'श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यन्न विदुः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा
आश्चर्यो ज्ञाता कुशलानुशिष्टः' ॥ इति।

गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती

---

प्रतिबन्धादिसत्त्वकल्पनेन धिय आमुष्मिकत्वकल्पनमयुक्तमिहैव मे विद्या स्यादित्यभिसन्धिदृष्टेरिति तत्राह। न चेति। दृश्यमानसंसार-दुःखस्यानेकजन्मगामित्वं जानतो यदा कदाचिदनर्थनिवृत्तिः स्यादित्यभिसन्धेः साधनसामर्थ्यानुसारेण सम्भावितत्वादित्याह। अभिस-न्धेरिति। यत्तु श्रवणादीनां चक्षुरादिवद्दृष्टफलत्वमिति तत्राह। श्रव-णादीति। तेषां विधानाददृष्टद्वारापि साधनत्वमवघातवदवगतं यज्ञा-दीनामनियतफलानां न साधनत्वविधेश्च विद्योत्पत्तेरनियतत्वमित्यर्थः। यत्तु ध्यानादीनां घटकत्वात् घटितेषु श्रवणादिषु विद्याऽवश्यम्भाविनीति, तन्न प्रतिबन्धसत्त्वस्य श्रौतलिङ्गसिद्धत्वान्नैवमित्याह। तथा चेति। आत्मनः श्रवणमपि दुष्करं बहूनामित्याह। श्रवणायेति। कथञ्चन श्रवणेऽपि तत्फलज्ञानं दुर्लभमित्याह। शृण्वन्त इति। तत्र हेतुः। आश्चर्य इति। यथावदस्यात्मनो वक्ताऽऽश्चर्योऽद्भुतवत् कश्चिदेव सम्भवति सम्यगाचार्यसिद्धावपि तच्छ्रुत्वा लब्धा साक्षात्कर्ताऽप्याश्चर्य-स्थितस्तु साक्षात्कारं कुशलेनाचार्येणानुशिष्टोऽपि शास्त्रात् परोक्षतो ज्ञाताऽप्याश्चर्य एवेत्यर्थः। सम्मत्यामुष्मिकत्वे धियो लिङ्गमाह। गर्भस्थ

जन्मान्तरसञ्चितात् साधनादपि जन्मान्तरे विद्योत्पत्तिं दर्शयति। न हि गर्भस्थस्यैवैहिकं किञ्चित् साधनं सम्भाव्यते। स्मृतावपि 'अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति' इत्यर्जुनेन पृष्टो भगवान् वासुदेवः 'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' इत्युक्त्वा पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले सम्भूतिञ्चाभिधाय, अनन्तरं 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' इत्यादिना 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इत्यन्तेनैतदेव दर्शयति। तस्मादैहिकमामुष्मिकं वाविद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितं॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः॥ ५२॥

यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषात् विद्यालक्षणे फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनि-

---

इति। कयानुपपत्त्या श्रुतिरिममर्थं दर्शयति तत्राह। न हीति। जन्मान्तरसञ्चितं साधनं जन्मान्तरेऽपि धियं साधयतीत्यत्र स्मृतिमाह। स्मृताविति। श्रवणादीनां वैफल्येऽपि श्रुतिस्मृतिलिङ्गात् पश्वादिफलचित्रादिवदनियतकालत्वसिद्धेर्नानैकान्तिकफलत्वं तेषामित्युपसंहरति। तस्मादिति॥

विद्यारूपे फले कालोत्कर्षापकर्षकृतो विशेषनियमो दर्शित, सम्प्रति विद्याफलमोक्षे कस्यचिदपि विशेषनियमस्याभाव दर्शयति। एवमिति। विद्याफल मुक्तिर्विषय, सा किं विद्यावदुत्कर्षापकर्षकृतविशेषवती

यमः स्यादित्याशङ्क्याह। एवं मुक्तिफलानियम इति। न खलु मुक्तिफले कश्चिदेवम्भूतो विशेषप्रतिनियम आशङ्कितव्यः, कुतः, तदवस्थावधृतेः। मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते, ब्रह्मैव हि मुक्त्यवस्था, न च ब्रह्मणोऽनेकाकारयोगोऽस्ति एकलिङ्गत्वावधारणात् 'अस्थूलमनणु' 'स एष नेति नेत्यात्मा' 'यत्र नान्यत् पश्यति ब्रह्मैवेदममृतं पुरस्तात् इदं सर्वं यदयमात्मा' 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कम्पश्येत्' इत्यादि

---

किं वा नेति फलस्योभयथादृष्टेः संशये प्रकृतविद्याफलस्य प्रसङ्गतो निरतिशयतोक्त्या पादादिसङ्गतिः। पूर्वपक्षे मोक्षस्य कर्मसाध्यतया पुरुषार्थाधिकरणासिद्धिः, सिद्धान्ते तस्य ज्ञानैकसाध्यत्वात् तत्सिद्धिरित्यभिप्रेत्य पूर्वपक्षमाह। यथेति। मुक्तिरुपचयापचयवती फलत्वात् विद्यावदित्यनुमानात् तस्याः कर्मसाध्यत्वाधिगमात् पुरुषार्थाधिकरणत्वमयुक्तमित्याशङ्क्य सिद्धान्तमवतार्य प्रतिज्ञां विभजते। न खल्विति। उक्तेऽनुमाने जाग्रति कथमाशङ्का निरवकाशेति शङ्कते। कुत इति। मुक्तिस्वरूपब्रह्मैकरूप्यावधारणशास्त्रविरोधात् नानुमेति मत्वा सूत्रावयवमादाय व्याचष्टे। तदवस्थेति। मुक्तिर्नाम काचिदवस्था विद्यते चेत् अद्वितीयत्वविरोधादवस्थात्वात् जाग्रदवस्थावत् असावपि निवृत्तिमती स्यादित्याशङ्क्याह। ब्रह्मैवेति। कथमेतावता मुक्तेरुत्कर्षकृतविशेषराहित्यमित्याशङ्क्याह। न चेति। न स्थानतोऽपीत्यधिकरणे निर्विशेषत्वमस्थूलादिश्रुत्या ब्रह्मणो निरूपितमिति स्मारयति। एकेति। इतश्च मुक्तेर्निरतिशयत्वमित्याह। अपि चेति। काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयदृष्टेरन्तरङ्गबहिरङ्गतदभ्यासादिसाधनोपचयापचयाभ्यां विद्योपचयापचयसम्भवात् तत्फले मुक्तावपि सौ स्यातामित्याशङ्क्य हेत्वन्तरं स्फोरयति। न विद्येति। विद्यैव सातिशया स्वसाध्येऽपि कथञ्चिदतिशयमादध्यादित्याशङ्क्याह। तद्धीति।

श्रुतिभ्यः। अपि च विद्यासाधनं स्ववीर्यविशेषात् स्वफल एव विद्यायां कञ्चिदतिशयमासञ्जयेत् न विद्याफले मुक्तौ तद्धि साध्यं नित्यसिद्धस्वभावभूतमेव विद्ययाधिगम्यत इत्यसकृद्वादिष्म। न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावात्, उत्कृष्टैव हि विद्या भवति, तस्मात् तस्याञ्चिराचिरोत्पत्तिरूपो विशेषो भवेत् न तु मुक्तौ कश्चिदतिशयसम्भवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः कर्मफलवत्, न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्ति। सगुणासु तु विद्यासु 'मनोमयः प्राणशरीरः' इत्याद्यासु गुणावापोद्वापवशात् भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत्। तथा च लिङ्गदर्शनं 'तं यथा यथोपासते तदेव भवति' इति नैवं निर्गुणायां

---

तर्हि मुमुक्षुणा विद्यार्थिना प्रयत्नानर्थक्यं तत्राह। विद्ययेति। तस्यामतिशयमाश्रित्य मुक्तौ नातिशयोऽस्तीत्युक्तमिदानीं विद्यापि मोक्षहेतुतत्त्वसाक्षात्कारलक्षणाऽतिशयवतीत्याह। न चेति। कथं तर्हि पूर्वाधिकरणे विद्याया विशेषो दर्शितस्तत्राह। तस्मादिति। मुक्तावपि तर्हि तादृशोऽतिशयो भविष्यति तत्राह। न त्विति। विद्योत्पत्तिनान्तरीयकत्वेनाविद्यानिवृत्तिरूपाया मुक्तेरावश्यकत्वादित्यर्थः। मुक्तेर्निर्विशेषत्वे हेत्वन्तरमाह। विद्येति। एकरूपत्वादात्मनस्तदाकारविद्यायां विशेषाभावादनेकरूपे फलोत्पादकत्वायोगात् तत्फले विशेषासिद्धिरित्यर्थः। विद्याया भेदाभावं प्रपञ्चयति। न हीति। सगुणविद्यावत् विद्यात्वादात्मविद्याया भेदः स्यादित्याशङ्क्य विषयभेदात् तत्र भेदेऽपि नात्र विषयभेदोऽस्तीत्याह। सगुणास्विति। तत्र फलभेदे मानमाह। तथा चेति। दार्ष्टान्तिके विशेषमाह। नैवमिति। तत्त्वविद्याविशेषे गुणाभावे स्मृतिमाह। तथा चेति। कस्यचित् निर्गुणवि-

विद्यायां, गुणाभावात्। तथा च स्मृतिः। 'न हि गतिरधिकास्ति कस्यचित् सति हि गुणे प्रवदन्त्यतुल्यताम्' इति। तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति॥

इति श्रीशारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ तृतीयाध्यायस्य चतुर्थः पादः।

तृतीयाध्यायः समाप्तः।

---

द्यावतः पुरुषस्य गतिः फलमिति यावत्। तत्र न्यूनाधिकभावाभावे हेतुमाह। सति हीति। पुनरुक्तेरर्थवत्त्वमाह। तदवस्थेति। तदेवं मुक्तेर्निरतिशयत्वात् न कर्मसाध्यतेति युक्तं पुरुषार्थाधिकरणमिति भावः॥

इति श्रीशुद्धानन्दशिष्यभगवदानन्दज्ञानकृतौ शारीरकभाष्यव्याख्याने तृतीयाध्यायस्य चतुर्थः पादः॥

अध्यायश्च समाप्तः।

## ॐ परमात्मने नमः।



### आवृत्तिरसकृदुपदेशात्॥ १॥

तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात्, अथेह चतुर्थेऽध्याये फलाश्रय आगमिष्यति, प्रसङ्गागतञ्चान्यदपि किञ्चित् चिन्तयिष्यते, प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रयविचारविशेषमेवानुसरामः। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत''सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'इति चैवमादिश्रवणेषु संशयः, किं सकृत्प्रत्ययः कर्तव्य आहोस्विदा-

---

ॐ रामचन्द्राय नमः।

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्तिगतिवर्ज्जिता।
लभ्यते तत्परं ब्रह्म रामनामास्मि निर्भयं॥ १॥

ॐ। आवृत्तिरसकृदुपदेशात्। साधनं निरूप्य फलं निरूप्यत इत्यध्याययोर्हेतुफलभावं सङ्गतिमाह। तृतीय इति। फलप्रसङ्गेनोत्क्रान्तिरर्चिरादिमार्गश्च विचारार्य इत्याह। प्रसङ्गेति। पूर्वं साक्षादेव श्रुत्युक्तं सन्न्यासादि साधनं चिन्तितं,सम्प्रति फलार्थापत्तिगम्यमावृत्त्यादिकं यथाश्रेयाधिकरणात् प्राक् चिन्त्यते, तदारभ्य जीवन्मुक्तिस्ततो वि-

ऽवृत्त्येति, किं तावत् प्राप्तं सकृत्प्रत्ययः स्यात् प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात्, अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत्। नन्वसकृदुपदेशा उदाहृताः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादयः। एवमपि यावच्छब्दमावर्तयेत् सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनञ्चेति नातिरिक्तं, सकृदुपदेशेषु तु वेद उपासीतेत्यादिष्वनावृत्तिरित्येव प्राप्ते ब्रूमः, प्रत्ययावृत्तिः कर्तव्या। कुतः, असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननूक्तं यावच्छब्दमे-

---

तीयपादे उत्क्रान्तिस्तृतीये अर्चिरादिमार्गस्य गन्तव्यस्य च निर्णयश्चतुर्थे ध्यानोपासनयोः फलनिर्णय इति पादार्थविवेकः। आद्याधिकरणस्य श्रवणादिसाधनं विषयमनूद्य द्वेधानुष्ठानदर्शनात् संशयमाह। आत्मा वा इति। श्रौतात्मधीसाधनफलविचारात्मकत्वात् सर्वाधिकरणानां श्रुतिशास्त्राध्यायसङ्गतयः उक्तास्तत्तत्पादार्थसम्बन्धात् तत्तत्पादसङ्गति, मोक्षे विशेषाभाववत् श्रवणादावावृत्तिविशेषो नास्तीति दृष्टान्तलक्षणावान्तरसङ्गत्या पूर्वपक्षमाह। किं तावदिति। अत्र पूर्वपक्षे श्रवणादे प्रयाजवददृष्टार्थत्वात् सकृदनुष्ठानफलं, सिद्धान्ते त्ववघातवत् दृष्टार्थत्वात् यावत्फलमावृत्तिरिति भेदः। असकृदुपदेशान्यथानुपपत्त्या साधनवृत्तौ शास्त्रस्य तात्पर्यमिति शङ्कते। नन्वसकृदिति। श्रवणादीनां समुच्चयसिद्धार्थत्वेनासकृदुक्तेरन्यार्थोपपत्तेर्नावृत्तौ तात्पर्यमित्याह। एवमपीति। सगुणसाक्षात्कारसाधनेष्वप्यनावृत्तिमाह। सकृदिति। यद्यप्यसकृदुपदेश आवृत्तिसमुच्चययोरन्यतरसूचकत्वेनान्यथासिद्धः, तथापि दृष्टे सम्भवत्यदृष्टमात्रकल्पनानुपपत्तेः श्रवणादेरावृत्तिद्वारा साक्षात्कारफलस्य षड्जादौ दृष्टत्वादसकृदुक्तिरावृत्तिं सूचयति। दृष्टार्थत्वादिति। न्यायानुग्रहादि-

वावर्तयेनाधिकमिति। न, दर्शनपर्यवसानत्वादेषां। दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत् अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते। तथा हि लोके गुरुमुपास्ते राजानमुपास्त इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते। तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते। विद्युपास्त्योश्च वेदान्तेषु व्यतिकरेण प्रयोगो दृश्यते, क्वचिद्विदिनोपक्रम्योपास्तिनोपसंहरति, यथा 'यस्तद्वेद यत् स वेद स मयैतदुक्तः' इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति। क्वचिच्चोपास्तिनोपक्रम्य विदिनोपसंहरति 'यथा मनो ब्रह्मेत्युपासीत' इत्यत्र 'भाति च तपति

त्याह। न दर्शनपर्यवसानत्वादिति। ध्यानस्य त्वावृत्तेर्वेदोपासीतेति शब्दे श्रुतत्वात् न केवलार्थिकत्वमित्याह। अपि चेति। यस्तूपास्तिशब्दस्यावृत्तिवाचित्व तथापि वेदेतिशब्दोक्तवेदनेऽस्य ह्यग्रहेषु कथमावृत्तिसिद्धिरित्यत आह। विद्युपास्त्योश्चेति। शब्दयोरेकार्थत्वमुदाहरति। क्वचिदिति। स रैक्वो यद्वेद तत् प्राणतत्त्वं रैक्वादन्योऽपि यः कश्चिद्वेद तत्फले सर्वोऽन्तर्भवतीत्येतदुक्तो इत्थं मयोत्कृष्टत्वेन स रैक्व उक्त. इति हंसं प्रति हंसान्तरवचनं, तच्छ्रुत्वा रैक्वं गत्वोवाच जानश्रुतिः, हे भगव एतां रैक्वविदितां देवतां मेऽनुशाधि मह्यमुपदिशेत्यर्थः। एवं सगुणनिर्गुणसाक्षात्कारसाधनस्यावृत्तिः श्रौती चार्थसिद्धा च दृष्टार्थत्वात्, श्रवणमननयोस्त्वसकृदुपदेशादर्थसिद्धैवावृत्तिरिति विशेषः। आदित्यस्यैकस्यैवोद्गीथे सम्याधोपासनात् मम त्वमेक एव पुत्रोऽसीति

च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' इति। तस्मात् सकृदुपदेशेष्वप्यावृत्तिसिद्धिः। असकृदुपदेशस्त्वावृत्तेः सूचकः॥

लिङ्गाच्च॥२॥

लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति। तथा हि उद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' [छा॰उ॰] इत्येतदेकपुत्त्रतादोषेणापोद्य 'रश्मींस्त्वं पर्यावर्तयात्' इति [छा॰उ॰] रश्मिबहुत्वविज्ञानं बहुपुत्त्रतायै विदधत् सिद्धवत् प्रत्ययावृत्तिं दर्शयति। तस्मात् तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धिः। अत्राह भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः तेष्वावृत्तिसाध्यस्यातिशयस्य सम्भवात्। यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म *समर्थयति तत्र किमर्थावृत्तिरिति। सकृच्छ्रुतौ ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत्, न

---

कौषीतकिः पुत्त्रमुवाच अतस्त्वं तथा माकृथाः किन्तु बहून् रश्मीनादित्यञ्च पर्यावर्तय तान् पृथगावर्तयस्वेत्यर्थः। तत्रोऽमश्छान्दसः॥

अत्र पर्यावृत्तिशब्दात् सिद्धवदुद्गीथध्यानस्यावृत्तिरुक्ता ततो ध्यानत्वसामान्यात् फलपर्यन्तत्वसामान्यात् वा लिङ्गात् सर्वत्र श्रवणमननध्यानेष्वावृत्तिसिद्धिरित्याह। लिङ्गाच्चेति। एवं तावत् गुणनिर्गुणसाक्षात्कारसाधनेष्वावृत्तिरुक्ता तत्र सगुणध्यानादेरावृत्तिमङ्गीकृत्य निर्गुणश्रवणादिष्वावृत्तिमाक्षिपति। अत्राहेत्यादिना। वाक्यं निर्गुणसाक्षात्कारजनने शक्तं न वा, आद्ये सकृत्श्रुतवाक्यात् साक्षात्कारसिद्धेरावृत्तिर्व्यर्थेत्युक्त्वा द्वितीयं शङ्कते। सकृदिति। अशक्तस्यावृत्तावपि फलानुपपत्तिरित्याह। नेति। तथापीति स्वतोऽशक्तस्य युक्तिसाहित्यात् शक्तावपीत्यर्थः। वाक्ययुक्तिभ्यां परोक्षज्ञाने जाते-

---

* समर्पयतीति वर्ध॰ का॰।

आवृत्तावपि तदनुपपत्तेः। यदि हि 'तत्त्वमसि' इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत् ततस्तदेव चावर्तमानमुत्पादयिष्यति इति का प्रत्याशा स्यात्। अथोच्येत न केवलं वाक्यं कञ्चिदर्थं साक्षात्कर्तुं शक्नोत्यतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति, तथाप्यावृत्त्यानर्थक्यमेव, साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्यात् युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते न विशेषविषयं, यथाऽस्ति मे हृदये शूलमित्यतो वाक्यात् गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते न विशेषमनुभवति, यथा स एव शूली विशेषानुभवस्याविद्याया निवर्तकः तदर्थावृत्तिरिति चेत्, न, असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसम्भवात्, न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते, तस्मात् यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्येत यदि वा सामान्यमेवोभयथापि

---

ऽप्यपरोक्षज्ञानार्थमावृत्तिरिति शङ्कते। अथापि स्यादिति। तयोः परोक्षज्ञानहेतुत्वस्वाभाव्यात् आवृत्तावपि न साक्षात्कारः स्यादिति परिहरति। नासकृदपीति। यदि तयोः साक्षात्कारसामर्थ्यं यदि वा परोक्षज्ञानसामर्थ्यं उभयथा आवृत्त्यनपेक्षेत्याह। तस्मादिति। प्रमातृवैचित्र्यादप्यावृत्त्यनियम इत्याह। न चेति। प्रमेयस्यानंशत्वाच्च तथेत्याह। अपि चेति। द्विविधो ह्यधिकारी स्यात् कश्चित् जन्मान्तराभ्यासात् निरस्तसमस्तासम्भावनादिप्रतिबन्धः कश्चित्तु प्रतिबन्धवानिति। तत्राद्यं

सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः। न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुं, विचित्रप्रज्ञत्वात् प्रतिपत्तॄणाम्। अपि चानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवति एकेनावधानेनैकमंशमवधारयत्यपरेणापरमिति *स्यादप्यभ्यासोपयोगो यथा दीर्घप्रपाठकग्रहणादिषु न तु निर्विशेषे ब्रह्मणि सामान्यरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति। अत्रोच्यते, भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसि इति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात् यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः, तथा हि छान्दोग्ये 'तत्त्वमसि श्वेतकेतो' इत्युपदिश्य 'भूय एव मा भगवान् विज्ञापयतु' इति पुनः पुनः परिचोद्यमानस्तत्तदाशङ्काकारणं निराकृत्य तत्त्वमसि इत्येवासकृदुपदिशति। तथा च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि दर्शितं। ननूक्तं सकृच्छ्रुतं चेत् तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति ततः आवर्त्यमानमपि नैव शक्ष्यतीति।

---

प्रत्यावृत्तेरानर्थक्यमिष्टं, द्वितीयस्य तु प्रतिबन्धनिरासाय तदपेक्षेति समाधत्ते। अत्रोच्यते इति। आवृत्तेः प्रतिबन्धनिरासार्थत्वे लिङ्गमाह। तथा हीति। यथा षड्जादिस्वरभेदसाक्षात्कारशक्तमपि श्रोत्रमभ्यासमपेक्षते तथा ब्रह्मात्मसाक्षात्कारशक्तं वाक्यं तदपेक्षमित्यनुभवमाश्रित्याह। न हि दृष्टेऽनुपपन्नं नामेति। तत्त्वंपदलक्ष्यार्थस्य दुर्बोधत्वादज्ञानप्रयुक्तसंशयादिप्रतिबन्धसम्भवात् तद्धसाय आवृत्तिरित्युक्त्वेति वाच्यलक्ष्यविवेकपूर्वकमाह। अपि चेत्यादिना।

---

* स्यादप्यावृत्त्युपयोग इति वर्ध०।

नैष दोषः, न हि दृष्टेऽनुपपन्नं नाम, दृश्यन्ते हि सकृच्छ्रुतात् वाक्यात् मन्दप्रतीतं वाक्यार्थमावर्तयन्तस्तत्तदाभासव्युदासेन सम्यक् प्रतिपद्यमानाः। अपि च तत्त्वमसीत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे, तत्पदेन च प्रकृतं सत् ब्रह्मेक्षितृ जगतो जन्मादिकारणमभिधीयते, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'अदृष्टं द्रष्टृ अविज्ञातं विज्ञातृ अजं अजरममरमस्थूलमनण्वह्रस्वमदीर्घम्' इत्यादिशास्त्रप्रसिद्धं। तत्राजादिशब्दैर्जन्मादयो भावविकाराः निवर्तिताः, अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः, विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तं, एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धस्तथा त्वंपदार्थोऽपि प्रत्यगात्मा द्रष्टा श्रोता देहादारभ्य प्रत्यगात्मतया सम्भाव्यमानश्चैतन्यपर्यन्तत्वेनावधारितः। तत्र येषामेतौ पदार्थावज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां तत्त्वमसीत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति पदार्थज्ञानपूर्वकत्वात् वाक्यार्थज्ञानस्येत्यतस्तान् प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। यद्यपि च प्रतिपत्तव्य आत्मा निरंशस्तथापि अध्या-

---

यदुक्तमनंशत्वात् प्रमेयस्यावृत्त्यानर्थक्यमिति तत्राह। यद्यपीति। आरोपितांशनिरासाय न मे देहो नेन्द्रियं इत्यभ्यासो युक्त इत्यर्थः। वाक्यार्थज्ञाने सति कथमभ्यासनियमः प्रमाणज्ञानस्याभ्यासायोगात् ज्ञानिनः श्रवणादिनियमायोगाच्च, इत्यत आह। तन्विति। ज्ञानात् प्रागेव श्रवणादिव्यापारनियमनं क्रियत इत्यर्थः। अधिकं शङ्कितुमुक्ता-

रोपितं तस्मिन् यच्छबलं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणं तच्चैकेनावधानेनैकमंशमपोहति अपरेणापरमिति युज्यते तत्र क्रमवती प्रतिपत्तिः, तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः। येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान् प्रत्यावृत्त्यानर्थक्यमिष्टमेव, सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयति इति नात्र कश्चिदपि क्रमोऽभ्युपगम्यते। स्यादेतत् युज्येत यदि कस्यचिदेव प्रतिपत्तिर्भवेत्, बलवती ह्यात्मनो दुःखित्वादिप्रतिपत्तिः, अतो न दुःखित्वाद्यभावं कश्चित् प्रतिपद्यत इति चेत्। न, देहाद्यभिमानवत् दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः। प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने चाऽहं छिद्ये दह्ये इति च मिथ्याभिमानो दृष्टः, तथा बाह्यतरेष्वपि पुत्रमित्रादिषु सन्तप्यमानेषु अहमेव सन्तप्ये इत्यध्यारोपो दृष्टः, तथा दुःखित्वाद्यभिमानोऽपि स्यात् देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वात् दुःखित्वादीनां,सुषुप्तादिषु चाननुवृत्तेः,चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्ति-

---

मनुवदति। येषामिति। अधिक प्रङ्कते। सत्यमिति। दुःखित्वप्रत्यक्षविरोधात् वाक्यादैक्यधीर्नेदेति इत्यर्थः। प्रत्यक्षस्य भ्रान्तित्वादविरोध इत्याह। नेत्यादिना। दुःखादयो नात्मधर्मा दृश्यत्वात् देहादिवत्, नाप्यात्मस्वरूपा आत्मनि सत्यप्यननुवृत्तित्वात् व्यतिरेकेण चैतन्यवदित्यर्थः। निर्दुःखचिदात्मनि दुःखादिधियो भ्रान्तित्वात् वाक्यार्थानुभवो न विरुध्यत इत्याह। तस्मादिति। अनुभवे जातेऽप्यावृत्त्याद्यनुष्ठानं किं न स्यादित्यत आह। न चैवमिति। इति. काम आत्मकाम-

मामनन्ति 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति' इत्यादिना। तस्मात् सर्वदुःखविमुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः। न चैवमात्मानमनुभवतः किञ्चिदन्यत् कृत्यमवशिष्यते। तथा च श्रुतिः 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इत्यात्मविदः कर्तव्याभावं दर्शयति। स्मृतिरपि—

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' ॥ इति।

यस्य तु नैषोऽनुभवो द्रागिव जायते तं प्रत्यनुभवार्थ एवावृत्त्यभ्युपगमः। तत्रापि न तत्त्वमसिवाक्यार्थात् प्रच्याव्यावृत्तौ प्रवर्तयेत्, न हि वरघाताय कन्यामुद्वाहयन्ति। नियुक्तस्य चास्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यमित्यवश्यं ब्रह्मप्रत्ययविपरीतप्रत्यय उत्पद्यते। यस्तु स्वयमेव मन्दमतिरप्रतिभानात् वाक्यार्थं जिहासेत् तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्याऽभ्युपेयते, तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः ॥

---

तथा तृप्तिर्विषयः तृष्णाक्षयः तेन सन्तोषे आत्मानन्दानुभवः इति भेदः। नन्वावृत्तौ नियोगात् प्रवृत्तिर्वाच्या तथा च नियुक्तत्वबुद्धेरकर्त्रात्मधीर्न स्यादित्यत आह। तत्रापीति। आवृत्त्यभ्युपगमेऽप्यकर्ताहमित्यनुभवात् प्रच्याव्य गुरुरन्यो वा नियोगात् न प्रवर्तयेदुक्तदोषादित्यर्थः। कथं तर्हि प्रवृत्तिरित्यत आह। यस्त्विति। अप्रतिभानादसम्भावनादिनेत्यर्थः। शिष्यबुद्ध्यनुसारेण श्रोतव्यादिवचोभिः प्रधानसिद्ध्यर्थमावृत्त्यादौ प्रवर्तयेदित्यर्थः॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च॥ ३॥

यः शास्त्रोक्तविशेषणः परमात्मा स किं अहमिति ग्रहीतव्यः किं वा मदन्य इति तावद्विचारयति। कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति। उच्यते, अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुं सति जीवेश्वरयोरभेदसम्भवे, इतरथा तु गौणोऽयमभ्युपगन्तव्य इति मन्यते। किं तावत् प्राप्तं नाहमिति ग्राह्यः, न ह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुं, विपरीतगुणो वाऽपहतपाप्मत्वादिगुणत्वेन, अपहतपाप्मत्वादिगुणश्च परमेश्वरः, तद्विपरीतगुणस्तु शारीरः, ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः, ततः शास्त्रानर्थक्यं। संसारिणोऽपीश्वरात्मत्वेऽधिकार्यभावात् शास्त्रानर्थक्यमेव प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात् कर्तव्यं, प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्, काममेवं भवतु न तु संसारिणो मुख्य *आत्मेश्वरभाव इत्येतावन्नः प्रापयितव्यमित्येवं प्राप्ते ब्रूमः। आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः, तथा

---

आत्मेति तूपगच्छन्ति ग्राहयन्ति च। पूर्वत्र ध्यानादेरावृत्तिरुक्ता तामुपजीव्य तत्त्वज्ञानार्थं ध्यानावृत्तिकाले किमहं ब्रह्मेति ध्यातव्यं उत मत्स्वामीश्वर इत्यैक्यभेदमानाभ्यां संशयमाह। य इति। शब्दादेरप्रमित इत्यादावयमात्मा ब्रह्मेत्यादिश्रुतिभिरैक्यनिर्णयात् संशयमाक्षिपति। कथमिति। भेदश्रुत्यनुग्रहात् भेदप्रत्यक्षादिप्राधान्यमालम्ब्य संशय इत्याह। उच्यत इति। अभेदश्रुतीनां गौणत्वमुख्यत्वे उभयत्र फलं, यद्यप्ययं प्रत्यक्षादिविरोधाद्भेदपरिहारो द्वितीयाध्यायसङ्गत-

---

* आत्मेश्वरं इतीति वर्ध० का०।

हि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैनमुपगच्छन्ति 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि देवते' इति। तथाऽन्येऽपि 'अहं ब्रह्मास्मि' इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष त आत्मा सर्वान्तरः एष त आत्मान्तर्याम्यमृतस्तत् सत्यं स आत्मा तत्त्वमसि' इत्येवमादीनि। यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यति इति। तदयुक्तं, गौणत्वप्रसङ्गात् वाक्यवैरूप्याच्च। यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति 'यथा मनो ब्रह्मेत्यादित्यो ब्रह्म' इत्यादि। इह पुनस्त्वमहमस्म्यहञ्च त्वमसीत्याह, अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिर्भेददृष्ट्यपवादाच्च। तथा हि 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि' इति 'न स वेद' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'सर्वन्तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति। यत्तूक्तं न विरुद्धगुणयोरन्योन्यात्मत्वसम्भव इति। नायं दोषः, विरुद्धगुण-

---

स्वयाप्यैक्यश्रुतेरविरुद्धत्वनिश्चयस्य समाधावन्तरङ्गत्वादिह सङ्गतिः। विरुद्धयोरैक्यदृष्टिरसिद्धेत्याह। नाहमिति। किञ्च किमीश्वरस्य जीवमात्रत्वमैक्यं जीवस्येश्वरमात्रत्वं वेति विकल्प्य क्रमेण दूषयति। ईश्वरस्य चेत्यादिना। एकत्वश्रुतिप्रामाण्यायैक्यध्यानं कार्यमिति शङ्कते। अन्यत्वेऽपीति। एकत्वध्यानमस्मन्मतेऽप्यस्त्येव। एकत्वन्तु नास्तीत्याह। बाढमिति। अभेदश्रुतीनां फलवदपूर्वार्थतात्पर्येण गौणत्वायोगाद् भेदश्रुतीनां कल्पितभेदानुवादित्वात् प्रत्यक्षादेरपि तद्विषयत्वात् बिम्बप्रतिबिम्बयोरिव विरुद्धधर्माणां मिथ्यात्वात् मुख्यमैक्यमिति सिद्धान्तयति। एवमित्यादिना। ईश्वरस्य जीवत्वं न प्रतिपाद्यं येनेश्वराभाव

तायां मिथ्यात्वोपपत्तेः। यत्पुनरुक्तम् ईश्वराभावप्रसङ्ग इति। तदसत्, शास्त्रप्रामाण्यादनभ्युपगमाच्च। न ह्यीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यते इत्यभ्युपगच्छामः किं तर्हि संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति, एवं च सत्यद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता, विपरीतगुणता त्वितरस्य मिथ्येति व्यवतिष्ठते। यदप्युक्तमधिकार्यभावः प्रत्यक्षादिविरोधश्चेति। तदप्यसत्, प्राक् प्रबोधात् संसारित्वाभ्युपगमात् तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य। यत्र त्वस्य 'सर्वमात्मैवाभूत् तत्केन कम्पश्येत्' इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति, प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत्, न, इष्टत्वात्, अत्र 'पिताऽपिता भवति' इति ह्युपक्रम्य 'वेदा अवेदाः' इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे। कस्य पुनरयमप्रबोध इति चेद्यस्त्वं पृच्छसि तस्य त इति वदामः। नन्वहमीश्वर एवोक्तः श्रुत्या यद्येवं प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोधः। योऽपि दोषश्चोद्यते

---

स्यात् किन्तु जीवेश्वरत्वं। न चैवमधिकार्यभाव एकत्वप्रबोधात् प्रागधिकारिभेदाङ्गीकारादित्याह। यत्पुनरुक्तमित्यादिना। वेदसत्यत्वमङ्गीकृत्य शङ्कते। प्रत्यक्षाद्यभाव इति। वर्णेषु क्रमस्वरयोरभावादुपलब्ध्यनिश्चययोरावापो वाच्यस्तथा चारोपितक्रमस्वरविशिष्टवर्णात्मकवेदस्य मिथ्यात्वं दुर्वारं, वादिना सत्यत्वाग्रहस्त्वविद्याविजृम्भित इति, वेदसत्यत्वाभावो न दोष इत्याह। नेति। अविद्यामाक्षिपति।—कस्येति। प्रश्नलिङ्गेन त्वय्येव तस्याः सिद्धत्वादाक्षेपानुपपत्तिरित्याह। यस्त्विति। अज्ञानमूलत्वात् प्रश्नादेरिति भावः। सर्वज्ञाभिन्ने मयि कथमज्ञानमिति शङ्कते। नन्विति। अभेदज्ञानात् प्राक् चिन्मात्रस्य तवैवा-

कैश्चिद्विद्यया किलात्मनः सद्वितीयत्वाद्द्वैतानुपपत्तिरिति सोऽप्येतेन प्रत्युक्तस्तस्मादात्मन्येवेश्वरे मनो दधीत ॥

न प्रतीकेन हि सः ॥ ४ ॥

'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्म' [छा०।३।१८] इति, तथा 'आदित्यो ब्रह्मेत्यादेशः' [छा०।३।१९] 'स यो नाम ब्रह्मेत्युपास्ते' [छा०।७।५] इत्येवमादिषु प्रतीकोपासनेषु संशयः, किन्तेष्वप्यात्मग्रहः कर्तव्यो न वेति। किं तावत् प्राप्तं तेष्वप्यात्मग्रह एव युक्तः, कस्मात्, ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात्। प्रतीकानामपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरित्येवं प्राप्ते ब्रूमः। न प्रतीकेष्वात्ममतिं बध्नीयात्, न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत्। यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्चात्म-

---

ज्ञानाश्रयत्वमनुभवसिद्धाज्ञानस्यापलापायोगात्। ज्ञाने त्वनिर्वाच्यस्य तस्य बाधान्नाश्रयापेक्षेत्याह। यद्येवमिति। अनिर्वाच्यत्वे दोषान्तरमपि निरस्तमित्याह। योऽपीति॥

न प्रतीकेन हि सः। उभयथा ज्ञानसम्भवात् संशयः, यथा ब्रह्मण्यभेदसत्त्वादहंग्रह उक्त एवं प्रतीकेष्वपि ब्रह्मविकारितया जीवाभिन्नब्रह्माभिन्नत्वात् जीवाभेदसत्त्वेनाहंग्राहः कार्य इति दृष्टान्तेन पूर्वपक्षः। अत्र प्रतीकोपास्तीनामहंग्रहोपास्तिभिरविशेषः। सिद्धान्ते तु विशेषसिद्धिरिति फलं। एतदारभ्याधिकरणत्रयस्य प्रासङ्गिकी पादसङ्गतिः। ब्रह्मैक्यध्यानप्रसङ्गागतत्वादिति विवेकः। किं प्रतीकेष्वात्मत्वानुभवबलादहंग्रह उत वस्तुतः, जीवाभेदसत्त्वात् नाद्य इत्याह। न हि स इति। नानुभवति इत्यर्थः। द्वितीयमप्यसिद्ध्या दूषयति। यत्पुनरित्यादिना। विकारस्य ब्रह्मणा स्वरूपैक्यायोगात् बाधेनैक्यं वाच्यं प्रतीकबाधे चोपास्तिविधिर्न स्यादित्यर्थः। किञ्च कर्तृत्वाद्यबाधेनो-

त्वमिति। तदसत्, प्रतीकाभावप्रसङ्गात्। विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति, स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा, न च ब्रह्मण आत्मत्वात् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात्, कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशस्तदनिराकरणेन चोपासनाविधानं, अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते, न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति, सुवर्णात्मनैव तु ब्रह्मात्मत्वेनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम। अतो न प्रतीकेष्वात्मदृष्टिः क्रियते॥

## ब्रह्मदृष्टिरुत्कर्षात्॥ ५॥

तेष्वेवोदाहरणेषु अन्यः संशयः, किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः किं वा ब्रह्मदृष्टिरादित्यादिष्विति। कुतः संशयः, सामानाधिकरण्ये कारणानवधारणात्। अत्र हि ब्रह्मशब्दस्या-

---

पास्तिविधिप्रवृत्तिर्वाक्यबाधे तदयोगात्। तथा च बाधमूलब्रह्मैक्यध्यानं हात्वोपास्त्य प्रतीकेष्वहंग्रहोपास्तिकल्पना न युक्ता, बाधविरोधादित्याह। न च ब्रह्मण इति। अतो जीवप्रतीकयोः स्वरूपभेदादहंग्रहे विध्यश्रवणाच्च नाहंग्रह इति फलितमाह। अतश्चेति। यथा रुचकस्वस्तिकयोः सुवर्णात्मनैक्येऽपि मिथोऽनैक्यं तथा जीवप्रतीकयोः ब्रह्मात्मनैक्येऽपि भेदः समः। यदि च धर्मिव्यतिरेकेण तयोरभावनिश्चयात् वस्त्वैक्यं तदोपासनोच्छेद उक्त इत्यर्थः॥

ब्रह्मदृष्टिरुत्कर्षात्। एकविषयत्वं सङ्गतिः। प्रश्नपूर्वकं संशयबीजमाह। कुत इत्यादिना। सामानाधिकरण्यं श्रुतं तत्र तावन्मुख्यं, ब्रह्मविकारयोर्गवाश्वयोरिवाभेदायोगात्, नापि प्रकृतिविकारभावनिब-

दित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते, 'आदित्यो ब्रह्म प्राणो ब्रह्म विद्युद्ब्रह्म' इत्यादिसमानविभक्तिनिर्देशात्। न चात्राञ्जसं सामानाधिकरण्यमवकल्पते, अर्थान्तरवचनत्वात् ब्रह्मादित्यादिशब्दानां, न हि भवति गौरश्व इति सामानाधिकरण्यं। ननु प्रकृतिविकारभावात् ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्, नेत्युच्यते, विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात्, ततश्च प्रतीकाभावप्रसङ्गमवोचाम, परमात्मवाक्यञ्चेदन्तदानीं स्यात्, ततश्चोपासनाधिकारो बाध्येत, परिमितविकारोपादानञ्च व्यर्थं। तस्मात् ब्राह्मणोऽग्निर्वैश्वानर इत्यादिवदन्यतरत्रान्यतरदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः, तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तं। अथवाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तं। एवं हि आदित्यादिदृष्टिभिर्ब्रह्मोपासनञ्च फलवदिति शास्त्रमर्यादा। तस्मात् न ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते ब्रूमः। ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति। कस्मात्, उत्कर्षात्, एवमुत्कर्षेणादित्यादयो दृष्टा भवन्त्युत्कृष्टदृष्टेस्तेष्वध्यासात्।

---

न्धनं, वाक्यस्य विकारबाधेन ब्रह्मपरत्वापातात्। न चेष्टापत्तिर्नाम ब्रह्मेत्युपासीतेति विधिश्रुतिविरोधात्, परिमितनामग्रहणार्थैक्यापाताच्च। ब्रह्मपरत्वे सर्वं ब्रह्मेति वक्तव्यत्वादत परिशेषादध्यास एव सामानाधिकरण्यकारणं, अध्यासे च नियामकाभावात् संशय इत्यर्थः। उत्कृष्टनिकृष्टयोर्निकृष्टमप्युपास्य फलवत्त्वादिति न्यायो नियामक इत्यरुचेराह। अथ वेति। अत्र विकारदृष्टिभिर्ब्रह्मोपास्तिसिद्धिः फलं, सिद्धान्ते तु विकारदृष्ट्या ब्रह्मण उपास्यत्वे निकर्षप्राप्तौ

तथा च लौकिको न्यायोऽनुगतो भवति, उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः। यथा राजदृष्टिः क्षत्तरि, स चानुगन्तव्यो विपर्यये प्रत्यवायप्रसङ्गात्। न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्। ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति। अत्रोच्यते, निर्द्धारिते शास्त्रार्थे एतदेव स्यात्, सन्दिग्धे तु तस्मिन् तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते, तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टिमध्यस्य प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधात् ग्रहीतव्यं। तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यवृत्त्या सामानाधिकरण्यासम्भवात् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते। *इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः। तथा हि ब्रह्मेत्यादेशः ब्रह्मेत्युपासीत ब्रह्मेत्युपास्त इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान्। ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्ति-

तथा फलवत्त्वासिद्धेर्विकारा एवोत्कृष्टब्रह्मदृष्ट्योपास्या इति फल। किञ्च लौकिकन्यायाविरुद्धार्थसम्भवे विरुद्धार्थो न ग्राह्य, प्रत्यवायप्रसङ्गात्, किञ्च प्रथमश्रुतानामादित्यादिपदानामसञ्जातविरोधितया मुख्यार्थत्वग्रहो न्याय्य, ब्रह्मशब्दे च दृष्टिलक्षणाग्रह, तथा चादित्यादयो ब्रह्मदृष्ट्योपास्या इत्येव वाक्यार्थ इत्याह। प्राथम्याच्चेति। ब्रह्मशब्दस्यैव दृष्ट्यर्थत्वे हेत्वन्तरमाह। इतिपरत्वादिति। इतिशब्दशिरस्क शब्द समभिव्याहृतक्रियालक्षक इति लोके प्रसिद्धमित्यर्थ।

* इतिशब्देति वर्ध०।

वचन एव शुक्तिकाशब्दः, रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः प्रत्येत्येव हि केवलं रजतमिति न तु तत्र रजतमस्ति, एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान् दर्शयति 'स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' [छा०।३।१९] 'यो वाचं ब्रह्मेत्युपास्ते' [छा०] 'यः सङ्कल्पं ब्रह्मेत्युपास्ते' [छा०] इति। यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति, तदयुक्तं, उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वावगमात्। फलन्त्वतिथ्याद्युपासन इवादित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात्। वर्णितञ्चैतत्, 'फलं अत उपपत्तेः' इत्यत्र [वे०सू०।३।२।३८]। ईदृशञ्चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्णादीनां॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः॥ ६॥

'य एवासौ तपति तमुद्गीथमुपासीत' [छा०।१।२] 'लोकेषु पञ्चविधं सामोपासीत' [छा०।२।२] 'वाचि सप्तविधं सामोपा-

---

द्वितीयाश्रुतेश्चादित्यादीनामेवोपास्तिकर्मत्वमित्याह। वाक्यशेषोऽपीति। उत्कृष्टमेवोपास्यमिति न्यायमुक्तमनुवदति। यत्तूक्तमिति। द्वितीयेति श्रुतिभ्यां लौकिकन्यायाच्चोक्तन्यायबाध इत्याह। तदिति। ब्रह्मणोऽनुपास्यत्वे कथं फलदातृत्वं तत्राह। फलन्त्विति। किञ्च यत् दृष्ट्या विकारस्योत्कर्षः तस्य ब्रह्मणोऽप्युपासनाविशेषणत्वेऽप्युपास्यत्वं चास्तीत्याह। ईदृशञ्चेति॥

आदित्यादि। पृथिव्यन्तरीक्षादित्यद्युसञ्ज्ञेषु लोकेषु हिंकारप्रस्तावोद्गीथप्रतीहारनिधनैरंशैः पञ्चांशं साम, तैरेवादिरिति उपद्रव

मीत' [छा०।२।८] 'इयमेवर्गग्निः साम' [छा०।६।१] इत्ये-
वमादिष्वङ्गावबद्धेषूपासनेषु संशयः, किमादित्यादिषु उद्गी-
थादिदृष्टयो विधीयन्ते किं वोद्गीथादिष्वादित्यादिदृष्टय
इति, तत्रानियमः नियमकारणाभावादिति प्राप्तं। न ह्यत्र
ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते। ब्रह्म हि समस्त-
जगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्चादित्यादिभ्य उत्कृ-
ष्टमिति शक्यतेऽवधारयितुं, न त्वादित्योद्गीथादीनां विकार-
त्वाविशेषात् किञ्चिदुत्कर्षविशेषावधारणमस्ति। अथवा निय-
मेनैवोद्गीथादिमतय आदित्यादिष्वध्यस्येरन्। कस्मात्, कर्मा-
त्मकत्वादुद्गीथादीनां, कर्मणश्च फलप्राप्तिप्रसिद्धेरुद्गीथादिम-
तिभिरुपास्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो
भविष्यन्ति। तथा च 'इयमेवर्गग्निः साम' इत्यत्र 'तदेतदतस्या-
मृच्यध्यूढं साम' [छा०।६।१] इत्यृक्शब्देन पृथिवीं निर्दिशति,
सामशब्देनाग्निं, तच्च पृथिव्यग्न्योर्ऋक्सामदृष्टिचिकीर्षायामवक-

---

इति च भक्तिद्वयाधिकैः सप्तभिः सामेति भेदः। अत्र विशेषाज्ञानात्
संशयः। पूर्ववदुत्कर्षानवधारणादनियम इति प्रत्युदाहरणेन पूर्वपक्ष-
माह। नत्वेति। सिद्धरूपादित्यादिभ्य कर्मरूपोद्गीथादीना फल-
सन्निकर्षेणोत्कर्षात् ब्रह्मवद्विशेषणत्वनियम इति दृष्टान्तेन मुख्यं
पूर्वपक्षमाह। अथ वेति। तत्तत्पक्षसिद्धिरेव पूर्वोत्तरपक्षफलं मन्तव्यं।
किञ्चानङ्गेष्ववाङ्गदृष्टिरित्यत्र तेष्वङ्गवाचिपदप्रयोगं लिङ्गमाह। तथा
चेयमेवेति। तदेतदग्न्याख्यं साम एतस्यां पृथिवीरूपायामृच्यध्यूढ-
मुपरिस्थितमित्यर्थं, ऋचि सामवत् पृथिव्यामग्निर्दृश्यते, अतः सा-
म्यात् पृथिव्येवर्गग्निः सामेति ध्यानं विहितं, तत्र यदि ऋक्सामा-
त्मकयोः कर्माङ्गयोः पृथिव्यग्निदृष्टिः स्यात्, तदा पृथिव्यग्न्यृक्सा-

ल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षायां। क्षत्तरि राजदृष्टिकरणाद्राजशब्दमुपचर्यते न राजनि क्षत्तृशब्दः। अपि च 'लोकेषु पञ्चविधं सामोपासीत' [छा०।२।२] इत्यधिकरणनिर्देशाल्लोकेषु सामाध्यसितव्यं इति प्रतीयते। 'एतद्गायत्रं प्राणेषु प्रोतम्' [छा०।२।७] इति चैतद्दर्शयति। प्रथमनिर्दिष्टेषु चादित्यादिषु चरमनिर्दिष्टं ब्रह्माध्यस्तं 'आदित्यो ब्रह्मेत्यादेशः' [छा०।२।१९] इत्यादिषु। प्रथमनिर्दिष्टाश्च पृथिव्यादयश्चरमनिर्दिष्टा हिंकारादयः 'पृथिवी हिंकारः' [छा०।२।२] इत्यादिश्रुतिषु। अतोऽनङ्गेष्वादित्यादिषु अङ्गमतिक्षेप इत्येवं प्राप्ते ब्रूमः। आदित्यादिमतय एवाङ्गेषूद्गीथादिषु प्रतिक्षिप्येरन्। कुतः, उपपत्तेः। उपपद्यते ह्येवमपूर्वसन्निकर्षादादित्यादिमतिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' [छा०उ०] इति च विद्यायाः कर्मसमृद्धि-

---

मपदप्रयोगो न स्यादित्यत्र दृष्टान्तमाह। क्षत्तरीति। अतः प्रयोगान्यथानुपपत्त्या पृथिव्यग्न्योः ऋक्सामदृष्टिरित्यर्थः। विषयसप्तम्या चैवमेवेत्याह। अपि चेति। गायत्रसञ्ज्ञं साम। किञ्च पूर्वाधिकरणसिद्धान्तन्यायेनाप्येवमित्याह। प्रथमेति। अनङ्गबुद्ध्याङ्गान्युपास्यानीति सिद्धान्तयति। एवमिति। उपास्तीना हि कर्मसमृद्धिः फलं श्रूयते, सा च ताभिरङ्गेषु संस्क्रियमाणेषु उपपद्यते, अङ्गानां समृद्ध्यनुकूलप्रकृतकर्मापूर्वजनकत्वादित्यर्थः। ननु यत्रोपास्तीनां प्रकृतकर्मापूर्वसन्निकृष्टाङ्गद्वारापेक्षं फलं श्रुतं, तत्र फलोपपत्तये अङ्गानामुपास्यत्वं भवतु तदनपेक्षलोकादिफलेषु तूपासनेषु कथमुपास्यविवेक इति शङ्कते। भवत्विति। यथा स्वतन्त्रपशुफलस्यापि गोदोहनस्य अङ्गद्वारापेक्षयैव

हेतुतां दर्शयति। भवतु कर्मसमृद्धिफलेष्वेवं, स्वतन्त्रफलेषु तु कथं 'य एतदेवं विद्वान् लोकेषु पञ्चविधं सामोपास्ते' [छा०उ०] इत्यादिषु, तेष्वप्यधिकृताधिकारात् प्रकृतापूर्वसन्निकर्षेणैव फलकल्पना युक्ता, गोदोहनादिनियमवत् फलात्मकत्वाच्चादित्यादीनामुद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः। आदित्यादिप्राप्तिलक्षणं कर्मफलं शिष्यते श्रुतिषु। अपि च 'ओमित्येतदक्षरमुद्गीथमुपासीत खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' [छा०१।१] इति चोद्गीथस्यैवोपास्यत्वेनोपक्रम्यादित्यादिमतीर्विदधाति। यन्तूक्तमुद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करिष्यन्तीति। तदयुक्तं, स्वयमेवोपासनस्य कर्मत्वात् फलवत्त्वोपपत्तेः, आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात्। 'तदेतदेतस्यामृच्यध्यूढं साम' इति तु लाक्षणिक एष पृथिव्यग्न्योर्ऋक्सामशब्दप्रयोगः। लक्षणा च यथा-

---

फलमिष्टं तद्वत् लौकिकादिफलेषूपासनेष्वपि कर्मापूर्वाङ्गद्वारैव फलकल्पना युक्ता। कर्माधिकृतस्यैवाङ्गाश्रितोपासनेष्वधिकारादतोऽङ्गानामेवोपास्यत्वमिति समाधत्ते। तेष्वपीति। उत्कर्षानवधारणादनियम इत्युक्तं निरस्यति। फलात्मेति। उपक्रमबलाच्चाङ्गमुपास्यमित्याह। अपि चेति। रसतमत्वादिगुणाद्युपसङ्ख्यानमित्यर्थः। द्वितीयं पूर्वपक्षं दूषयति। यत्तूक्तमित्यादिना। कर्मभूयं कर्मात्मकत्व प्राप्येत्यर्थः। सिद्धाऽऽदित्याद्यात्मना कर्मणां दृष्टौ कर्मत्वहानिः स्यादित्यत आह। आदित्यादिभावेनेति। प्रयोगानुपपत्तिमुक्ता निरस्यति। तदेतदिति। लक्षणाबीजं सम्बन्धमाह। लक्षणा चेति। गङ्गायां घोष इत्यत्र सन्निकृष्टसंयोगसम्बन्धेन तीरलक्षणा, अग्निर्माणवक इत्यत्र अग्निनिष्ठशुचित्वादिगुणवत्त्वरूपपरम्परासम्बन्धेन लक्षणा दृष्टा, तथा चात्र ऋक्सामयोः पृथिव्यग्निदृष्टिपक्षेऽपि ऋक्सामपदाभ्यां स्ववाच्यार्थे द्रष्टव्यत्वाख्यपरम्परा-

सम्भवं सन्निकृष्टेन विप्रकृष्टेन वा स्वार्थसम्बन्धेन प्रवर्तते। तत्र यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा तथापि प्रसिद्धयोर्ऋक्सामयोर्भेदेनानुकीर्तनात् पृथिव्यग्न्योश्च सन्निधानात् तयोरेवैष ऋक्सामशब्दप्रयोगः ऋक्सामसम्बन्धादिति निश्चीयते। क्षत्तृशब्दोऽपि हि कुतश्चित् कारणाद्राजानमुपसर्पन्न निवारयितुं पार्यते। 'इयमेवर्क्' इति च यथाक्षरन्यासमृच एव पृथिवीत्वमवधारयति। पृथिव्या हि ऋक्त्वेऽवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यात्। 'य एवं विद्वान् साम गायति' [छा०उ०]इति चाङ्गाश्रयमेव विज्ञानमुपसंहरति न पृथिव्याद्याश्रयं। तथा 'लोकेषु पञ्चविधं सामोपासीत'[छा०उ०]इति यद्यपि सप्तमीनिर्दिष्टा लोकास्तथापि साम्न्येव ते अध्यस्येरन्, द्वितीया-

---

सम्बन्धेन पृथिव्यग्निलक्षणा युक्ता इत्यर्थः। ननु प्रतीकवाचिपदस्य ध्येयेऽर्थे लक्षणा न युक्ता, क्षत्तृपदस्य राजन्यप्रयोगादिति शङ्कते। तत्र यद्यपीति। तथापि ऋक्सामसम्बन्धात् पृथिव्यग्न्योरेवैतस्यामध्यूढं सामेत्येष ऋक्सामपदप्रयोग इत्यन्वयः। ननु मुख्यार्थ एव न कुतो गृह्यते तत्राह। प्रसिद्धयोरिति। तस्मादृच्यध्यूढं सामेति मुख्ययोः पृथगुक्तेरेतस्यामित्यत्रापि तयोर्ग्रहे पुनरुक्तिः स्यात्, अत. प्रतीकाभेददृष्ट्या पृथिव्यग्न्योः प्रतीकसन्निधानात् तयोरेव प्रतीकपद प्रयोग. कुतस्तदभेददार्ढ्यायेत्यर्थ.। तर्हि क्षत्तृशब्दोऽपि राजनि स्यादित्यत आह। क्षत्त्विति। स्थितप्रयोगस्य निमित्तं किमपि वाच्यं न तु निमित्तमस्ति इति प्रयोग आपाद्य इति भाव.। क्षत्ता सूतः, तस्य कार्यं रथचर्यादि यदा राजेव करोति तदा क्षत्तृशब्दो राजन्यप्यस्ति इत्यक्षरार्थ। ऋगादावेव पृथिव्यादिदृष्टिः इत्यत्र हेत्वन्तरमाह। इयमिति। सप्तम्या लोकानामुपास्यत्वमुक्तं निरस्यति। तथा लोकेष्विति। सामात्मना लोकानुपासीतेति द्वितीयासप्तम्योर्भङ्गस्तया,कार्यस्ततो वरं लोकात्मना सामोपासीतेति सप्तमीभङ्गमात्र इत्यर्थः। एतेनेति एक-

निर्देशेन साम्न उपास्यत्वावगमात्। सामनि हि लोकेष्वध्यस्यमानेषु साम लोकात्मनोपासितं भवति, अन्यथा पुनर्लोकाः सामात्मनोपासिताः स्युः। एतेन 'एतद्गायत्रं प्राणेषु प्रोतम्' [छा०।२।११] इत्यादि व्याख्यातं। यत्रापि तुल्यो द्वितीयानिर्देशः 'अथ खल्वमुमादित्यं सप्तविधं सामोपासीत' [छा० ।२।९] इति तत्रापि समस्तस्य खलु साम्न उपासनं साधु, 'इति तु पञ्चविधस्य' 'अथ सप्तविधस्य' [छा०।२।७] इति च साम्न एवोपास्यत्वोपक्रमात् तस्मिन्नेवादित्याध्यासः। एतस्मादेव च साम्न उपास्यत्वावगमात् 'पृथिवी हिङ्कारः' [छा० २।७] इत्यादिनिर्देशविपर्ययेऽपि हिङ्कारादिष्वेव पृथिव्यादिदृष्टिः। तस्मादनङ्गाश्रया आदित्यादिमतयोऽङ्गेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम्॥

## आसीनः सम्भवात्॥७॥

कर्माङ्गसम्बन्धिषु तावदुपासनेषु कर्मतन्त्रत्वान्नासनादिचिन्ता नापि सम्यग्दर्शने, वस्तुतन्त्रत्वात् ज्ञानस्य। इतरेषु तूपासनेषु

---

विभक्तिभङ्गलाघवेन प्राणात्मना गायत्रं सामोपास्यमिति व्याख्यातमित्यर्थः। ननु विभक्तिसाम्ये कथं निर्णयस्तत्राह। यत्रापीति। साम्न उपासनं साध्विन्युपक्रम्य पृथिवी हिङ्कार इत्यादिना हिङ्कारादिपञ्चावयवस्य साम्न उपासनं उक्ता इति तु पञ्चविधस्योपासनमित्युपसंहृत्य, अथेति सप्तविधस्य साम्न उपासनं प्रक्रम्य प्रपञ्चितमतः साम्न एवोपास्यत्वमित्यर्थः। यदुक्तं प्राथम्यात् पृथिव्यादेरुपास्यत्वमिति तत्राह। एतस्मादेवेति। यद्यपि हिङ्कारोद्देशेन पृथिवीत्वविधेरुद्देश्यस्य प्रथमनिर्देशो वाच्यस्तथा न्यायबलात् प्रत्ययो ग्राह्य इत्यर्थः॥

कर्मण उत्थितेनोपविष्टेन वानेकधानुष्ठानदर्शनात् संशयः, कर्माङ्गा-

किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्त्तेतोत नियमेनासीन एवेति चिन्तयति। तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरित्येवं प्राप्ते ब्रवीति, आसीन एवोपासीतेति। कुतः, सम्भवात्। उपासनं नाम समानप्रत्ययप्रवाहकरणं, न च तद्गच्छतो धावतो वा सम्भवति, गत्यादीनां चित्तविक्षेपकरत्वात्। तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमम्भवति। शयानस्याप्यकस्मादेव निद्रयाऽभिभूयते, आसीनस्य त्वेवंजातीयको भूयान्दोषः सुपरिहर इति सम्भवति तस्योपासनम्॥

ध्यानाच्च॥ ८॥

अपि च ध्यायत्यर्थ एष यत् समानप्रत्ययप्रवाहकरणं, ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते, ध्यायति वको ध्यायति प्रोषितबन्धुरित्यासीनस्यानायासो भवति। *तस्माद्ध्यानादासीनकर्म उपासनम्॥

अचलत्वञ्चापेक्ष्य॥ ९॥

अपि च 'ध्यायतीव पृथिवी' इत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति, तच्च लिङ्गमुपासनस्यासीनकर्मत्वे॥

---

स्थितोपासनानामासननियमानपेक्षाणामनुष्ठानप्रकार उक्तस्तदङ्गानाश्रितोपासनेष्वप्यनियम इति पूर्वपक्षयति। तत्रेति। अत्रासनाभ्यासासिद्धिः, सिद्धान्ते तु मनोदेहयोर्भिन्नत्वेऽपि देहचाञ्चल्ये मनसोऽनवस्थानस्य अनुभवसिद्धत्वात् मनोव्यापारेषूपासनेषु देहस्थैर्यार्थमासननियमापेक्षेति फलभेदः। तिष्ठत उत्थितस्य॥

किञ्च ध्यातार आसीना एव स्युः ध्यायतिशब्दार्हत्वात् वकादिवदित्याह। ध्यानाच्चेति॥

---

* तस्माद्ध्यासीनेनेति मु०।

## स्मरन्ति च ॥ १० ॥

स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनं 'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' इत्यादिना । अत एव च पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

दिग्देशकालेषु संशयः, किमस्ति कश्चिन्नियमो नास्ति वेति । प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात् स्यादिहापि कश्चिन्नियम इति यस्य मतिस्तं प्रत्याह । दिग्देशकालेष्वर्थलक्षण एव नियमः, यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति तत्रैवोपासीत, प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवत् विशेषाश्रवणादेकाग्रतायाः इष्टायाः सर्वत्राविशेषात् । ननु विशेषमपि केचिदामनन्ति—

'समे शुचौ शर्करावह्निवालुका-
विवर्जिते शब्दजलाश्रयादिभिः ।

---

अत्रैव श्रौतं दृष्टान्तमाह । अचलत्वञ्चेति ॥

बाह्यस्य शारीरस्य वाऽऽसनस्य स्मरणात् नियम इत्याह । स्मरन्ति चेति ॥

यत्रैकाग्रता तत्र विशेषात् तेष्वेवाङ्गाश्रितोपासनेषु प्राच्यादिदिशि तीर्थादिदेशे प्रदोषादिकाले नियमोऽस्ति न वेत्युभयथासम्भवात् संशयः, एकविषयत्वं सङ्गतिरुपास्तीनां विहितत्वात् यागादिवदस्ति दिगादिनियम इति पूर्वपक्षः । अत्र दिगाद्यादरः फलं, सिद्धान्ते त्वनादरः । ध्येये चित्तैकाग्र्यस्य प्राधान्यात् प्रधानाच्चित्तदेशादिग्रहणस्योचितत्वादिविवेकः अर्थलक्षणः एवोक्त ऐकाग्र्यफललिङ्गक एवेत्यर्थः । प्राचीनप्रवणे प्राग्देशे निम्नस्थाने वैश्वदेवं कुर्यादितिवदत्र दिगादिविशेषो न श्रूयते अतोऽनुमानमप्रयोजकमिति भावः । विशे-

मनोऽनुकूले न तु चक्षुःपीडने
*'गुहानिवाताश्रयणे प्रयोजयेत्' इति।

†सत्यमस्त्येवंजातीयको नियमः, सति त्वेतस्मिंस्तद्गतेषु विशेषेषु अनियम इति सुहृद्भूत्वा आचार्य आचष्टे। 'मनोऽनुकूले' इति चैषा श्रुतिर्यत्रैकाग्रता ‡तत्रैवेत्येतदेव दर्शयति॥

## आप्रायणात् तत्रापि हि दृष्टम्॥ १२॥

आवृत्तिः सर्वोपासनेष्वादर्तव्येति स्थितमाद्येऽधिकरणे, तत्र यानि तावत् सम्यग्दर्शनार्थान्युपासनानि तान्यवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणं, न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किञ्चिच्छासितुं शक्यं, अनियोज्यब्रह्मात्मत्वप्रतीतेः शास्त्रस्याविषयत्वात्, यानि पुनरभ्युदयफलानि तेष्वेषा चिन्ता, किं कियन्तञ्चित्कालं प्रत्ययमावर्त्योपरमेदुत यावज्जीवमावर्तयेदिति। किं तावत् प्राप्तं कियन्तञ्चित्कालं प्रत्ययमभ्यस्योत्सृजेत्, आवृत्तिविशिष्टस्योपासन-

---

याश्रवणमसिद्धमिति शङ्कते। ननु विशेषमपीति। शर्कराः सूक्ष्मपाषाणाः। जलाश्रयवर्जनं शीतनिवृत्त्यर्थं। चक्षुःपीडनो मशकः। वाचनिकं समदेशादिनियममङ्गीकृत्य चित्तैकाग्र्यरुद्धेषु देशादिगतेषु प्राचीनप्रवणत्वादिष्वनादर इति सुहृद्भावेन सूत्रकृदुपदिशति॥

देशाद्याग्रहे चित्तविक्षेपात् समाधिभङ्गः स्यात् स माभूदिति आप्रायणात् व्यवहितेनास्य सम्बन्धमाह। आवृत्तिरिति। अनियोज्ये ब्रह्मण्यात्मत्वप्रतिपत्तिर्यस्य तस्य विदुष इत्यर्थः। अहंग्रहोपासनेष्वनुष्ठानस्योभयथादृष्टेः संशयमाह। यानि पुनरिति। यथा दिगादिनियमस्य विधेरनादरस्तद्वदामरणमुपास्त्यावृत्तेः अविधानाद-

---

* गुहानिवाताश्रयणेन योजयेदिति वर्ध०। † उच्यते सत्यमिति गु०।
‡ तत्रेत्येतावदेवेति वर्ध०।

शब्दार्थस्य कृतत्वादित्येवं प्राप्ते ब्रूमः। आप्रायणादेवावर्तयेत् प्रत्ययं, अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः। कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाले आक्षिपन्ति, 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति' इति चैवमादिश्रुतिभ्यः, तृणजलायूकानिदर्शनाच्च। प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत् प्रायणकाले भावनाविज्ञानमपेक्षेरन्। तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेष्वाप्रायणादावृत्तिः। तथा च श्रुतिः "*स यावत्क्रतुरस्माल्लोकात् प्रैति' इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति। स्मृतिरपि-

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः'॥ इति

---

नियम इति पूर्वपक्षः। मरणपर्यन्तमावृत्तिरिति सिद्धान्तयति। एवमिति। उपास्तीनां कर्मणाश्चान्त्यकाले प्राप्तव्यफलमूर्तिद्वारा फलहेतुत्वे मानमाह। सविज्ञान इति। भावनामयं विज्ञानं फलस्फुरणं तेन सहितः सविज्ञानो विज्ञानं स्फुरितफलं सविज्ञानमित्यर्थः। यस्मिन् लोके चित्तं सङ्कल्पोऽस्येति यच्चित्तस्तेन सङ्कल्पितेन सह फलस्फूर्त्यनन्तरं मनः प्राणे लीयते इति यावत्। तेज उपादानं, आत्मा जीवः। अस्माल्लोकाद्देहात्प्रयतेश्च भाविफलस्फूर्तिरस्ति इत्यर्थः। अस्त्विदमन्त्यफलविज्ञानं कर्मणामिवादृष्टद्वारोपास्तीनां ततः कुत आमरणमावृत्तिरित्यत आह। प्रत्ययास्त्विति। उपास्तिप्रत्ययानान्धारावाहिकतया स्वरूपानिवृत्तिरेवान्त्य विज्ञानं, नत्वदृष्टद्वारकमन्यदपेक्षितं सर्वभावानामेव स्वसमानजातीयद्वारानपेक्षतया प्रत्ययानां प्रत्यया-

---

* स यावत्क्रतुरयमस्मादिति म० :

'प्रयाणकाले मनसाऽचलेन' [भ॰गी॰] इति च। 'सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येत' इति च मरणवेलायां कर्तव्यशेषं श्रावयति॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ १३॥

गतस्तृतीयशेषः, अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रजायते, ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते न वा क्षीयत इति संशयः। किं तावत् प्राप्तं फलार्थत्वात् कर्मणः फलमदत्त्वा न सम्भाव्यते क्षयः। फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता। यदि तदन्तरेणैव फलोपभोगमुपक्षीयेत श्रुतिः कदर्थिता स्यात्। स्मरन्ति च 'न हि कर्माणि क्षीयन्ते' [म॰भा॰] इति। नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति। नैष दोषः, प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत्। अपि च प्रायश्चित्तानां दोषसंयोगेन विधानात् भवेदपि दोषक्षपणार्थता, नत्वेवं ब्रह्मविद्याया विधानमस्ति। नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात्। नेत्युच्यते, देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति। तस्मात् न

---

न्तरापेक्षायोगात्, कर्मणान्तु दृष्टद्वाराऽन्यथीफलत्वानुपपत्ते अदृष्टद्वारकल्पनेति भावः। क्रतुर्ध्यानं उपासक एतत्त्रय। अक्षितमसि, अच्युतमसि, प्राणसंशितमसि, इति मन्त्रत्रय मरणकालेऽपि स्मरेदित्यर्थः॥

यथोपासकाना यावज्जीवं कर्तव्यमस्ति न तथात्मविदामिति कर्मक्षयलक्षणा जीवन्मुक्तिमाह। तदधिगम इति। ज्ञानसाधनेषु फलाधिकार्थं फलाध्यायेऽपि साधनविचारः कृत', सम्प्रति फलाध्यायस्था

ब्रह्मविद्याधिगमे दुरितनिवृत्तिरित्येवं प्राप्ते ब्रूमः। तदधिगमे। ब्रह्माधिगमे सत्युत्तरपूर्वाघयोरश्लेषविनाशौ भवतः, उत्तरस्याश्लेषः, पूर्वस्य विनाशः। कस्मात्, तद्व्यपदेशात्। तथा हि ब्रह्मविद्याप्रक्रियायां सम्भाव्यमानसम्बन्धस्यागामिनो दुरितस्यानभिसम्बन्धं विदुषो व्यपदिशति 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति। तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति। अयमपरः कर्मक्षयव्यपदेशो भवति।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति।

यदुक्तमनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रकदर्थनं स्यादिति। नैष दोषः, न हि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे, विद्यत एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः। शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियेत, न प्रतिबन्धाप्रतिबन्धयोरपि। न हि कर्म क्षीयत इत्येतदपि

---

फलचिन्ता क्रियत इत्याह। गत इति। कर्मणां फलान्तत्वशास्त्रात् ज्ञाननाश्यत्वशास्त्राच्च संशयः, पूर्वपक्षे ज्ञानिनोऽपि सञ्चितपापभोगानन्तरं मुक्तिः, सिद्धान्ते तु ज्ञानसमकालं पापनाशाज्जीवन्मुक्तिरिति फलम्। न हि स्यादित्यादिनिषेधश्रुत्या दुरितादृष्टस्य दुःखदायिनी शक्तिरधिगता 'नाभुक्तं क्षीयते कर्म' इति च स्मरन्ति। फलान्तमेव पापं न मध्ये नश्यतीति पूर्वपक्षः। ननु तर्हि तन्नाशार्थं प्रायश्चित्तविधिर्न स्यादिति चेत्। न, यथा आहिताग्नेर्गृहदाहे निमित्ते सति 'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इति इष्टिविधिस्तद्दोषे नि-

स्मरणमौत्सर्गिकं न हि भोगादृते कर्म क्षीयते तदर्थत्वादिति, इष्यत एव प्रायश्चित्तादिना दुरितस्य क्षयः। 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इत्यादि श्रुतिस्मृतिभ्यः। यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्ति इति। तदसत्, दोषसंयोगेन चोद्यमानानामेषां दोष*निर्घातफलसम्भवे फलान्तरकल्पनानुपपत्तेः। यत्पुनरेतदुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति। अत्र ब्रूमः। सगुणासु तावद्विद्यासु विद्यत एव विधानं, तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते, तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते। निर्गुणायान्तु विद्यायां यद्यपि विधानं नास्ति तथाप्यकर्त्रात्मत्वबोधात् कर्मप्रदाहसिद्धिः। अश्लेष इति चागामिषु

मित्तमात्रे सति प्रायश्चित्तविधेर्दोषनाशार्थत्वासिद्धेः। ननु विषम उपन्यासः, युक्तं गृहदाहस्य सिद्धत्वादयोग्यत्वाच्च फलतया निमित्तमात्रत्वं दोषवान् प्रायश्चित्तं कुर्यादित्यत्र तु मलिनः स्नायादितिवद्दोषपदस्य निवृत्तिद्वारा फलकारत्वसम्भवात् 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति प्रायश्चित्तात् पापनिवृत्तिश्रुतेश्चायुक्तं प्रायश्चित्तस्य नैमित्तिकत्वमित्याह। अपि चेति। ज्ञानस्य दोषनाशार्थतया विधानं नास्ति 'क्षीयन्ते चास्य कर्माणि' इत्यादेर्ज्ञानस्तावकमात्रत्वादित्यर्थः। कर्मभोगानन्तरं देशकालान्तरे मोक्षो भविष्यति शास्त्रप्रामाण्यादित्याह। नेत्युच्यत इति। ज्ञानात् कर्मक्षयस्यापूर्वत्वान्मानान्तराविरुद्धत्वाच्च तत्परानेकवाक्यानां स्तावकत्वायोगात् तस्याक्षितत्वमिति सिद्धान्तयति। एवमित्यादिना। पापक्रियातो पूर्वानुत्पत्तिरश्लेषः। सगुणब्रह्मविद्यायां व्यपदेशमुक्त्वा निर्गुणायान्तमाह। अयमपर इति। पूर्वोक्तं दूषयति।

* दोषनिर्घातफलेति वर्ध० का०।

कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति। अति-क्रान्तेषु तु यद्यपि मिथ्याज्ञानात् कर्तृत्वं प्रतिपेद इव तथापि विद्यासामर्थ्यात् मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रलीयन्त इत्याह, विनाश इति। पूर्वप्रसिद्धकर्तृत्वभोक्तृत्वस्वरूपविपरीतं हि त्रिष्व-पि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासं नेदानीं नापि भविष्यति काले इति ब्रह्म-विदवगच्छति। एवमेव च मोक्ष उपपद्यते, अन्यथा ह्यनादि-कालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात्। न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवत् भवितुमर्हति, अनि-त्यत्वप्रसङ्गात् परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य। तस्मात् ब्रह्मा-धिगमे दुरितक्षय इति स्थितम्॥

## इतरस्याप्येवमसंश्लेषः पाते तु॥ १४॥

पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ

---

यदुक्तमित्यादिना। विधिनिषेधशास्त्रं 'नाभुक्तं क्षीयते' इत्यादि, स्मृतिश्च कर्मणः फलशक्तौ प्रमाणमत शक्तस्याऽपि कुतश्चित् नाशाङ्गीकारे शास्त्रविरोध इत्यर्थः। तत्त्वज्ञानमात्मन्यशेषदुरितनाशकं तन्मूलाध्या-सबाधकत्वात् स्वप्नदुरितमूलकर्तृत्वाध्यासबाधकजाग्रद्बोधवदित्याह। तथाप्यकर्त्रात्मबोधादिति। श्रुतार्थमेव युक्त्या द्रढयति। अश्लेष इति। मूलाध्यासानुत्पत्तेः पापस्याश्लेषः, तन्नाशात् तद्विनाश इत्यर्थः। अध्यासा-भावे विद्वदनुभवमाह। पूर्वेति। मोक्षशास्त्रबलाच्च ज्ञानात् कर्म-क्षयसिद्धिरित्याह। एवमेवेति। ज्ञानात कर्मक्षये सत्येवेत्यर्थः। मोक्षस्य कर्मफलसाम्यमुक्तं निरस्यति। न चेति॥

इतरस्याऽपि तु। अतिदेशत्वात् न सङ्गत्याद्यपेक्षा, ज्ञानात् पुण्यं

ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ, धर्मस्य पुनः शास्त्रीयत्वात् शास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते। इतरस्याऽपि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः। कुतः, तस्याऽपि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्। 'उभे उ हैवैष एतेन तरति' इत्यादिश्रुतिषु दुष्कृतवत् सुकृतस्याऽपि प्रणाशव्यपदेशात् अकर्त्रात्मबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् 'क्षीयन्ते चास्य कर्माणि' इति चाविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दः पठ्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यं, ज्ञानापेक्षया निकृष्टफलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैनं सेतुमहोरात्रे तरतः' इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यविशेषेणैव प्रकृतेषु पाप्मशब्दप्रयोगात्। पाते त्विति। तुशब्दोऽवधारणार्थः। एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यम्भाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति॥

---

क्षीयते न वेति पूर्ववत् सन्देहे ज्ञानं न पुण्यनाशकं शास्त्रीयत्वात् पुण्यवदित्यधिकाशङ्कामुक्तातिदेशं व्याचष्टे। धर्मस्येत्यादिना। ज्ञानं पुण्यनाशकं तन्मूलाविद्याघातित्वादिति न्यायोपेतागमबाधितं त्वनुमानमिति भावः। ननु क्षीयन्ते चेत्यविशेषश्रुतिः पापविषया सर्वपाप्मानं तरति इति विशेषश्रुतेरित्यत आह। यत्रापि केवल इति। पापपुण्यक्षयपराधिकरणद्वयस्य फलमाह। पाते त्विति॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥

पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारित, स किमविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च भवत्युत विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र 'उभे उ हैवैष एते तरति' इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इत्येवं प्राप्ते प्रत्याह। अनारब्धकार्ये एवेति। अप्रवृत्तफले एव पूर्वे जन्मान्तरसञ्चिते अस्मिन्नपि च जन्मनि प्राक् ज्ञानोत्पत्तेः सञ्चिते सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते न त्वारब्धकार्ये सामिभुक्तफले याभ्यामेतत् ब्रह्मज्ञानायतनं जन्म निर्मितं। कुत एतत्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति शरीरपातावधिकरणात् क्षेमप्राप्तेः, इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावात् ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत तत्र शरीरपातप्रतीक्षां नाचक्षीत। ननु वस्तुबलेनैवायमकर्त्रात्मबोधः कर्माणि क्षपयन् कथं कानिचित् क्षपयेत् कानिचिच्चोपेक्षेत, न हि समानेऽग्निबीजसम्पर्के केषाञ्चिद्बीजशक्तिः क्षीयते केषाञ्चिन्न क्षीयते इति शक्यमङ्गीकर्तुं-

---

अनारब्धकार्ये एव तु। उक्तकर्मक्षयं विषयीकृत्य क्षीयन्ते चेत्यविशेषश्रुतेस्तस्य तावदेव चिरमिति श्रुतेश्च संशयमाह। पूर्वयोरिति। जीवन्मुक्त्यसिद्धिस्तत्सिद्धिश्चेत्युभयत्र फलं, पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्राप्तौ उक्तोत्सर्गतः कर्मक्षतिं प्रारब्धान्यकर्मविषयेत्यपवादं सिद्धान्तयति। एवमिति। सामिशब्दोऽर्द्धवाचकः, प्रारब्धायावन्न विमुच्यते तावदेव विलम्बः, सम्मोक्षे ब्रह्म सम्पद्यत इति श्रुत्यर्थः। देहपातावधिलिङ्गात् तत्त्वविदां याज्ञवल्क्यादीनां देहधारण

मिति। उच्यते, न तावदनाश्रित्यारब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते, आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्याऽन्तराले प्रतिबन्धासम्भवाद्भवति वेगक्षयप्रतिपालनं, अकर्त्रात्मत्वबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति, बाधितमपि मिथ्याज्ञानं द्विचन्द्रादिज्ञानवत् संस्कारवशात् कञ्चित्कालमनुवर्तत एव। अपि च नैवात्र विवदितव्यं ब्रह्मविदः कञ्चित्कालं शरीरं ध्रियते न ध्रियत इति। कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणञ्चापरेण प्रतिक्षेप्तुं शक्येत। श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते। तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात् क्षय इति निर्णयः॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्॥ १६॥

पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः, सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति, अग्निहोत्रादि त्विति। तुशब्द आशङ्कामपनुदति। यन्नित्यं कर्म वैदिकमग्निहोत्रादि

---

श्रुतिस्मृतिलिङ्गाच्च प्रारब्धकर्मणस्तत्त्वज्ञानं प्रति हेतुत्वेनोपजीव्यत्वाच्च प्राबल्यसिद्धेस्तत्प्रतिबद्धं तत्त्वज्ञानं तत्सिद्ध्यर्थं ह्यविद्याशं विक्षेपशक्त्याख्यं विद्यायावरकाविद्यांशं नाशयतीत्याह। उच्यते न तावदिति। विक्षेपकाविद्यालेश एव तत्संस्कारः। श्रियान् प्रति जीवन्मुक्तौ स्वानुभवमाह। अपि च नैवेति॥

अग्निहोत्रादि तु। नित्यं नैमित्तिकं कर्म ज्ञानात् नश्यति न वेति सन्देहे उभे पुण्यपापे तरति इत्यविशेषश्रुतेर्नश्यतीत्याशङ्क्येतरस्याऽपीत्युक्तातिदेशस्य नित्याद्यतिरिक्तकाम्यपुण्यविषयत्वेनाऽत्रापवादं सि-

तत्तत्कार्यायैव भवति ज्ञानस्य यत्कार्यं तदेवास्य कार्यमित्यर्थः। कुतः, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिदर्शनात्। ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात् कार्यैकत्वानुपपत्तिः। नैष दोषः, ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्, तद्वत् कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्यत्वोपपत्तेः। नन्वनारभ्यो मोक्षः कथमस्य कर्मकार्यत्वमुच्यते। नैष दोषः, आरादुपकारकत्वात् कर्मणः। ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते। अत एव चातिक्रान्तविषयमेतत् कार्यैकत्वाभिधानं। न हि ब्रह्मविद आगाम्यग्निहोत्रादि सम्भवति, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः सम्भवत्यागाम्यप्यग्निहोत्रादि। तस्याऽपि निरभिसन्धिनः कार्यान्तराभावात् वेदविद्यासङ्गत्युपपत्तिः। किंविषयं पुनरिदमश्लेषविनाशवचनं किंविषयं वा वेदविनियोगवचनमेकेषां शाखिनां 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इत्यत उत्तरं पठति॥

---

द्भावयति। पुण्यस्येत्यादिना। अत्र पूर्वपक्षे ज्ञानार्थं नित्याद्यनुष्ठानासिद्धिः पशुप्रोक्षणन्यायात्, सिद्धान्ते तु ज्ञानोत्पत्त्यर्थत्वात् तत्सिद्धिरिति विवेकः। अत्र भाष्ये ज्ञानकर्मणोः साक्षादेककार्यत्वं परमतेनोक्तं साक्षात्पारम्पर्याभ्यां मोक्षहेतुत्वं स्वमतमुक्तमिति मन्तव्यम्। अत एवेति ज्ञानादूर्ध्वं कर्माभावात् पूर्वकर्मविषयमित्यर्थः। निर्गुणविद्यायाः कर्मसाहित्यं तृप्तिं प्रति भोजनस्य लाङ्गलेनेव दर्शितं, सम्प्रति सगुणविद्यापरत्वेन सूत्रस्याप्रत्यमाह। सगुणास्विति। उत्तरसूत्रार्थं शङ्कते। किमित्यादिना॥

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादेर्नित्यात् कर्मणोऽन्यापि ह्यस्ति साधुकृत्या या फलमभिसन्धाय क्रियते, तस्या एष विनियोग उक्त एकेषां शाखिनां 'सुहृदः साधुकृत्यामुपयन्ति' इति। तस्या एव चेदमघवदश्लेषविनाशनिरूपणम्, इतरस्याप्येवमसंश्लेषः इति। तथा एवंजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे सम्प्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥

## यदेव विद्ययेति हि ॥ १८ ॥

समधिगतमेतदनन्तराधिकरणे नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया सहैककार्यं भवति इति। तत्राऽग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलञ्चास्ति। 'य एवं विद्वान् यजति य एवं विद्वान् जुहोति य एवं विद्वाञ्छंसति य एवं विद्वानुद्गायति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद' [छा०] इत्यादिवचनेभ्यो विद्यासंयुक्तं केवलमप्यस्ति। तत्रेदं विचार्यते किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते न केवलं उत विद्यासंयुक्तं केवलञ्चाविशेषेणेति।

---

यत्प्रारब्धादन्यत् काम्यं पुण्यं पापञ्च तदेव विद्वत्सुहृद्द्विषतोः स्वसमानजातीयं कर्म जनयति स्वयञ्च ज्ञानान्नश्यति इति भावः॥

यदेव विद्ययेति हि। उक्तनित्यादिकं विषयमुपजीव्य सबीजं संशयमुक्त्वा पूर्वपक्षमाह। विद्यासंयुक्तमेवेति। अत्र पूर्वपक्षे कर्माङ्गोपास्ति-

कुतः संशयः, 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनामविशेषेणात्मवेदनाङ्गत्वेन श्रवणात्, विद्यासंयुक्तस्य चाग्निहोत्रादेर्विशिष्टत्वावगमात्। *किं तावत् प्राप्तं, विद्यासंयुक्तमेव कर्माग्निहोत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते न विद्याविहीनं विद्योपेतस्य विशिष्टत्वावगमात् विद्याविहीनात्, 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति एवंविद्वान्' इत्यादिश्रुतिभ्यः,

'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि।
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय'॥ [भ०गी०]

इत्यादिस्मृतिभ्यश्च। इत्येवं प्राप्ते प्रतिपद्यते। यदेव विद्ययेति हि सत्यमेतत् विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात् कर्मणोऽग्निहोत्रादेर्विशिष्टं विद्वानिव ब्राह्मणो विद्याविहीनात् ब्राह्मणात्, तथापि नात्यन्तमनपेक्षं विद्यारहितं कर्माऽग्निहोत्रादिकं, कस्मात् तमेतमात्मानं यज्ञेन विविदिषन्ति इत्यत्राविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात्। ननु विद्यासंयुक्तस्याऽग्निहोत्रादेर्विद्याविहीनात् विशिष्टत्वावगमात् विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तं। नैतदेवं, विद्यासहायस्याग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित् कारणत्वातिशयो भविष्यति न तथा

हीनकर्मणो ज्ञानार्थत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति भेदः। भवतु विद्याविशिष्टस्य कर्मणो ज्ञानं प्रति शीघ्रकारित्वाख्यः कश्चिदतिशयो विद्यासामर्थ्यात्। नैतावता केवलस्य वैयर्थ्यं विविदिषाश्रुतिविरोधात्।

* किं तावदित्यादि विशिष्टत्वावगमादित्यन्तं मुद्रितादर्शपुस्तकयोर्भ्रंशपतितम्।

विद्याविहीनस्येति युक्तं कल्पयितुं, न तु 'यज्ञेन विविदिषन्ति' इत्यविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुं । तथा हि श्रुतिः 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कञ्चिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति । कर्मणश्च वीर्यवत्त्वं तत् यत् स्वप्रयोजनसाधनप्रसहत्वं । तस्मात् विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनञ्चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेन इह जन्मनि जन्मान्तरे च प्राक् ज्ञानोत्पत्तेः कृतं यत् तत् यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धाध्यानतात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितं ॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः, इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्प-

---

न च तत्र श्रुतौ यज्ञादिशब्दानां विद्योपेतकर्मपरतया सङ्कोचो युक्तः । हि यतः । 'यदेव विद्यया' इति श्रुतिः केवलस्याऽपि वीर्यवत्त्वं गमयति इति सिद्धान्तग्रन्थार्थः ॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते । तत्त्वविदत्र विषयः, स किं प्रारब्धक्षयानन्तरं संसरत्युत नेति निमित्तभावाभावाभ्यां संशये सिद्धान्तमुपक्रमते । अनारब्धेति । अनारब्धकर्मणः क्षयोऽस्तु आरब्धस्य कथं क्षय

पते, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति 'ब्रह्मैव सन् ब्रह्माप्येति' इति चैवमादिश्रुतिभ्यः। ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्तेत। न, निमित्ताभावात्। उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तं, न च तादृशमत्र किञ्चिदस्ति। नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते। न, तस्य दग्धबीजत्वात्। मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपाते उपभोगान्तरमारभते, तच्च मिथ्याज्ञानं *सम्यग्ज्ञानेन दग्धमित्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यम्भवतीति॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ चतुर्थाध्यायस्य प्रथमः पादः॥ ॥

---

इत्याकाङ्क्षायामस्योत्थानात् सङ्गतिः। पूर्वपक्षे विदेहकैवल्यासिद्धिः सिद्धान्ते तत्सिद्धिरिति भेदः। देहपातोत्तरमपि तत्त्ववित् संसरति संसारयोग्यत्वात् यथा देहपातात् पूर्वमित्यनारब्धाधिकरणदृष्टान्तेन पूर्वपक्षमाह। नन्विति। भोगनिमित्तकर्माभावाद्वैतसिद्धिः। यत्तु सञ्चितं कर्मान्तरं तन्न निमित्तं फलस्य, दग्धमूलत्वात्। अविद्यादयो हि क्लेशाः कर्मणस्तत्फलस्य च मूलं। तदुक्तं योगशास्त्रे 'क्लेशमूलः कर्माशयः सति मूले तद्विपाकः' इति तच्च, मूलं ज्ञानाग्निना दग्धमिति कुतः पुनः संसारः तस्माद्देहपाते कैवल्यमिति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ भाष्यरत्नप्रभायां चतुर्थस्याध्यायस्य प्रथमः पादः॥ ॥

---

* सम्यग्दर्शनेनेति वर्ध० का०।

ॐ परमात्मने नमः।



## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन् प्रथमं तावत् यथाशास्त्रमुत्क्रान्तिक्रममाचष्टे, समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति। अस्ति प्रायणविषया श्रुतिः 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां' इति। किमिह वाच एव वृत्तिमत्या मनसि सम्पत्तिरुच्यते, उत वाग्वृत्तेरिति विषयः। तत्र वागेव तावन्मनसि सम्पद्यत इति प्राप्तं, तथा हि श्रुतिरनुगृहीता भवति, इतरथा लक्षणा स्यात्, श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा, तस्माद्वाच

---

ॐ ब्रह्मणे नमः।

वाङ्मनसि दर्शनात् शब्दाच्च। ज्ञानफलोक्त्यनन्तरमुपासनफलं ब्रह्मलोकस्थं वक्तव्यं तच्चार्चिरादिमार्गप्राप्यं, मार्गप्राप्तिश्चोत्क्रान्तिसाध्या, तस्मादुपास्तिफलाद्विप्तोत्क्रान्तिपादस्यास्याध्यायसङ्गतिः। युक्तं चास्य पूर्वपादानन्तर्यं ज्ञानफलोक्त्यनन्तरं वक्तव्योपास्तिफलेनाक्षिप्तत्वात् इत्याह। अथेति। ज्ञानिन इवोपासकस्याप्युत्क्रान्तिर्नेत्यत आह। समानेति। विद्वानुपासकः, तस्यानुपासकवदुत्क्रान्तिरस्ति, अज्ञत्वादिति वक्ष्यत इत्यर्थः। प्रयतो म्रियमाणस्येत्यर्थः। वाक्पदस्य करणभाव-

एवायं मनसि प्रविलय इत्येवं प्राप्ते ब्रूमः, वाग्वृत्तिर्मनसि सम्पद्यत इति। कथं वाग्वृत्तिरिति व्याख्यायते, यावता वाङ्मनसीत्येवमाचार्यः पठति। सत्यमेतत्, पठिष्यति तु परस्तात् 'अविभागो वचनात्' [ब्र०सू०४।२।१६] इति। तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते। तत्त्वप्रलयविवक्षायान्तु सर्वत्रैवाविभागसाम्यात् किं परत्रैव विशिंष्यादविभाग इति। तस्मादत्र वृत्त्युपसंहारविवक्षायां वाग्वृत्तिः पूर्वमुपसंह्रियते, मनोवृत्ताववस्थितायामित्यर्थः। कस्मात् दर्शनात्, दृश्यते हि वाग्वृत्तेः पूर्वमुपसंहारो मनोवृत्तौ विद्यमानायां न तु वाच एव वृत्तिमत्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते। ननु श्रुतिसामर्थ्याद्वाच एवाय मनस्यप्ययो युक्त इत्युक्तं। नेत्याह, अतत्प्रकृतित्वात्। यस्य हि यत उत्पत्तिस्तस्य तत्र लयो न्याय्यो मृदीव शरावस्य। न च मनसो वागुत्पद्यत इति किञ्चन प्रमाणमस्ति। वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते। पार्थिवेभ्यो हीन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवति अप्सु

---

व्युत्पत्तिभ्यां करणतद्वृत्त्योर्लयभानात् संशयः, पूर्वपक्षे करणानां स्वरूपलयात् मृतमात्रस्य मुक्तिः, सिद्धान्ते तु संसारसिद्धिः। अनुपादाने मनसि वाचस्तत्त्वलयायोगेन व्यापारमात्रोपशमादिति विवेकः। सूत्रेऽर्थसिपदाध्याहारः कथमिति शङ्कते। कथमिति। उत्तरत्र हि सूत्रकृत् तत्त्वविद इन्द्रियाणां स्वरूपलयं वक्ष्यति तद्वलादिहाध्याहार उचितः। अस्यास्यापि इन्द्रियलयसाम्ये वक्ष्यमाणविशेषोक्त्ययोगादिति समाधत्ते। पञ्चसावेव विकारलय इति न्यायविरुद्धार्थं श्रुतिरपि न ब्रूते इति सिद्धान्तयति। अतत्प्रकृतित्वादिति। न्यायस्य निरवकाशत्वा-

चोपशाम्यति। कथं तर्ह्यस्मिन् पक्षे शब्दो वाङ्मनसि सम्पद्यत इत्यत आह, शब्दाच्चेति। शब्दोऽप्यस्मिन् पक्षेऽवकल्पते, वृत्ति-वृत्तिमतोरभेदोपचारादित्यर्थः॥

## अत एव च सर्वाण्यनु॥२॥

'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः' इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि सम्पत्तिः श्रूयते, तत्राप्यत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् तत्त्वप्रलयासम्भवाच्छब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते। सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं वाङ्मनसि सम्पद्यत इत्युदाहरणानुरोधेन॥

## तन्मनः प्राण उत्तरात्॥३॥

समधिगतमेतत् 'वाङ्मनसि सम्पद्यते' इत्यत्र वृत्तिसम्पत्ति-विवक्षेति। अथ यदुत्तरं वाक्यं 'मनः प्राणः' इति किम-

---

इतीयत्त्वं शब्दस्य वृत्तिर्वागिति व्युत्पत्त्या लक्षणया वा वाक्शब्दत्वमिति द्योतयितुं शब्दाच्चेत्युक्तम्॥

वाच्युक्तं न्यायं चक्षुरादिष्वतिदिशति, अत एवेति। उपशान्तदेहोष्म-त्वस्मादुत्क्रमणादूर्ध्वं पुनर्भवं प्रतिपद्यत इति श्रुत्यर्थः। इन्द्रियशब्दस्य श्रुतिस्थस्य वृत्तिपरतयोपपत्तेः सर्वेन्द्रियवृत्तिलयश्चेदिष्टस्तर्हि वाङ्मनसि इति पृथक् सूत्रं किमर्थमित्यत आह। सर्वेषां करणाना-मिति॥

तन्मनः प्राण उत्तरात्। वाक्यक्रमादर्थक्रमाच्चाधिकरणक्रमः श्रुति-

त्रापि वृत्तिसम्पत्तिरेव विवक्षिता उत वृत्तिमत्सम्पत्तिरिति विचिकित्सायां वृत्तिमत्सम्पत्तिरेवेति प्राप्तं, श्रुत्यनुग्रहात् तत्प्रकृतित्वोपपत्तेश्च । तथा हि 'अन्नमयं हि सोम्य मन आपोमयः प्राण' इत्यन्नयोनि मन आमनन्ति अब्योनिञ्च प्राणमापश्चान्नमसृजन्त' इति श्रुतिः । अतश्च यन्मनः प्राणे प्रलीयते अन्नमेव तदप्सु प्रलीयते अन्नं हि मन आपश्च प्राणः प्रकृतिविकाराभेदादित्येवं प्राप्ते ब्रूमः । तदप्यात्मगृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इत्युत्तराद् वाक्यादवगन्तव्यं। तथा हि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते। न च मनसः स्वरूपाप्ययः प्राणे सम्भवति, अतत्प्रकृतित्वात्। ननु दर्शितं मनसः प्राणप्रकृतित्वं। नैतत् सारं, नहीदृशेन प्राणालिकेन तत्प्रकृतित्वेन मनः प्राणे सम्पत्तुमर्हति। एवमपि ह्यन्ने मनः सम्पद्येत अप्सु चान्नं अप्स्वेव च प्राणः। न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किञ्चन प्रमाणमस्ति । तस्मान्न मनसः प्राणे स्वरूपाप्ययः । वृ-

---

न्यायाभ्यां संशयपूर्वं प्रबलन्यायविरोधाद्दाग्निति श्रुतेर्बाधः कृतः, इह त्वबात्मकप्राणस्य घन्नात्मकमनःप्रकृतित्वेन प्रकृतौ विकारलय इति न्यायानुग्रहात् मननश्रुतिर्बाध्येति पूर्वपक्षफलं पूर्ववत्, सिद्धान्तस्त्वनयोः प्रकृतिविकृतिभावेऽपि न तद्विकारयोः प्राणमनसोस्तद्भावो हिमघटयोरपि तद्भावप्रसङ्गादतो न्यायविरोधात् पूर्ववत् श्रुतिर्बाध्येति विवेक । श्यात्मगृहीता बाह्येन्द्रियवृत्तयो येन तत्तया लीनेन्द्रियवृत्तिकं मनोऽपि वृत्तिलयेनैव प्राणे लीयत इत्यर्थः। एवमपीति। प्रा-

त्यप्ययेऽपि शब्दोऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितं ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स्थितमेतद्यस्य यतो नोत्पत्तिस्तस्य तस्मिन् वृत्तिलयो न स्वरूपलय इति, इदमिदानीं प्राणस्तेजसीत्यत्र चिन्त्यते, किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः किं वा देहेन्द्रियपञ्जराध्यक्षे जीवे इति। तत्र श्रुतेरनतिशङ्क्यत्वात् प्राणस्य तेजस्येव सम्पत्तिः स्यात् अश्रुतकल्पनाया अन्याय्यत्वादित्येवं प्राप्ते प्रतिपद्यते, सोऽध्यक्ष इति। स प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते तत्प्रधाना प्राणवृत्तिर्भवति इत्यर्थः। कुतः तदुपगमादिभ्य.। एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवति इति हि श्रुत्यन्तरमध्यक्षोपगामिनः सर्वान् प्राणानविशेषेण दर्शयति। विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति पञ्च-

---

णस्याविकारत्वपक्षेऽपि इत्यर्थं। तस्मादिति प्राणस्य साक्षान्मनःप्रकृतिकत्वाभावान्मनःशब्दो वृत्तिं लक्षयतीत्यर्थं॥

सोऽध्यक्षे तदुपगमादिभ्य। उक्तन्यायसिद्धं प्राणस्यापि वृत्तिलयमुपजीव्य 'प्राणस्तेजसि' इति श्रुतेरुपगमादिश्रुतेश्च सम्प्रयमुक्त्वा जीवे लयं विनापि उपगमादिसम्भव इति पूर्वपक्षयति। स्थितमित्यादिना। अत्र तेजःशब्दस्य मुख्यत्वं, सिद्धान्ते तु भूतोपहितजीवलक्षकत्वमिति मत्वा सूत्रं योजयति। स प्रकृत इत्यादिना। ज्ञानकर्मवासनोपाधिक इत्यर्थं। स जीवं प्रति प्राणानामुपगमनानुगमनावस्थानश्रुतिभ्य इति हेत्वर्थं। यथा यात्रेच्छावन्तं राजानं भृत्या उपगच्छन्त्येवमेव परलोकं जिग-

वृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां चेतरेषां प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति इति। 'सविज्ञानो भवति' इति चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति। ननु 'प्राणस्तेजसि' इति श्रूयते कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियते। नैष दोषः। अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात्। कथं तर्हि प्राणस्तेजसि इति श्रुतिरित्यत आह ॥

*भूतेष्वतः श्रुतेः ॥ ५ ॥

स प्राणसंपृक्तोऽध्यक्षः तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगन्तव्यं 'प्राणस्तेजसि' इत्यतः श्रुतेः। ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति न प्राणसंपृक्तस्या-

---

मिथु जीवं सर्वे प्राणा आभिमुख्येनायान्तीत्युपगमः श्रुतः, तमुत्क्रान्तमित्यनुगमनं श्रुतम्। जीवे प्राणावस्थानश्रुतिमाह। सविज्ञान इति। जीवस्य प्राणप्रयाणावगमाय हि विज्ञानसाहित्यश्रुत्या मुख्यप्राणसहितकरणानां जीवे स्थितिर्भातीत्यर्थः। यद्यपि प्राणस्य तेजस्यव्यवधानेन लयः श्रुतस्तथाप्युभयश्रुत्यनुग्रहाय प्राणो जीवे लीयते, जीवद्वारा च तदुपाधिषु तेजआदिभूतेषु इति श्रुत्यर्थः। स्फुटीकरणार्थं सूत्रं गृह्णाति। कथं तर्हि इति। न च लयं विनापि जीवं प्रत्युपगमादिसम्भवात् तेजःश्रुतिर्मुख्याऽस्त्विति वाच्यम्, जीवं प्रत्यागत्य प्राणस्य निर्व्यापारत्वेन स्थितेरेवात्र लयत्वादिति भावः॥

भूतेषु। जीवस्थितिः किमन्ताद्वाख्यायत इत्याशङ्क्य 'सोऽध्यक्षे' [वे० सू० ४।२।४] इति सूत्रोदाहृतश्रुतिबलादित्याह। नन्वित्यादिना।

---

* भूतेषु तच्छ्रुतेरिति मु०।

ध्यक्षस्य। नैष दोषः। सोऽध्यक्ष इत्यध्यक्षस्याप्यन्तराल उपसङ्ख्यानात्। योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति सोऽपि स्रुघ्नात् पाटलिपुत्रं यातीति शक्यते वदितुं। तस्मात् प्राणस्तेजसि इति प्राणसंयुक्तस्याऽध्यक्षस्यैवैतत्तेजःसहचरितेषु भूतेष्ववस्थानं। कथं तेजःसहचरितेषु भूतेष्वित्युच्यते। यावतैकमेव तेजः श्रूयते प्राणस्तेजसि इत्यत आह॥

## नैकस्मिन् दर्शयतो हि॥ ६॥

नैकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात्। दर्शयतश्चैतमर्थं प्रश्नप्रतिवचने 'आपः पुरुषवचसः' इति। तद्व्याख्यातं 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इत्यत्र[वे०सू०]। श्रुतिस्मृती चैतमर्थं दर्शयतः। श्रुतिः 'पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयः' इत्याद्या। स्मृतिरपि-

'अण्व्यो मात्रा विनाशिन्यो दशार्धानान्तु याः स्मृताः।
ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः'॥[मनु०१।२७]

इत्याद्या। ननु चोपसंहृतेषु वागादिषु करणेषु शरीरान्तर-

---

प्राणस्य जीवद्वारा भूतप्राप्तौ दृष्टान्तमाह। योऽपि हीति। स्थूलदेहारम्भाय पञ्चीकृतभूतान्यावश्यकानीति रंहत्यधिकरणे व्याख्यातं॥

अण्व्यः सूक्ष्माः, मीयन्त इति मात्राः परिच्छिन्नाः, प्राक्प्रलयाद्विनाशिन्यः, दशार्धानां पञ्चानां भूतानां सूक्ष्मभागा इति यावत्। जीवस्य भूताश्रयत्वं कर्माश्रयत्वश्रुतिविरुद्धमित्याशङ्क्य कर्मनिमित्तत्वेनाश्रयः, भूतानि तु देहोपादानत्वेनेत्युभयमविरुद्धमित्याह। ननु चेत्यादिना। तौ याज्ञवल्क्यार्तभागौ यज्जीवाधारमूचतुस्तत्कर्मेति

प्रेष्णावेलायां 'क्वायन्तदा पुरुषो भवति' इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति 'तौ ह यदूचतुः कर्म हैव तदूचतुः अथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः' इति। तत्रोच्यते। तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता, इह पुनर्भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम्। प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितं नत्वाश्रयान्तरं निवारितं तस्मादविरोधः॥

## समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य॥ ७॥

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना किं वा विशेषवति इति। विशयानानां विशेषवति इति तावत् प्राप्तं। भूताश्रयविशिष्टा, ह्येषा पुनर्भवाय च भूतान्याश्रीयन्ते, न च विदुषः पुनर्भवः सम्भवति, 'अमृतत्वं हि विद्वानश्नुते' इति श्रुतिः। तस्मादविदुष एवैषोत्क्रान्तिः। ननु विद्याप्रकरणे समाम्नानात् विदुष एवैषा भवेत्। न, स्वापादिवत् यथा-

---

श्रुतेर्वचनं, एवं बाह्येन्द्रियाणां मनसि प्रथमं वृत्तिलयलाभात् ततो मनोवृत्तेः प्राणे लयः प्राणवृत्तेर्भूतोपहितजीवे लयः इत्युत्क्रान्तिव्यवस्थोक्ता॥

सा च सर्वप्राणिषु तुल्येत्याह। समाना चानुपोष्य। पुरुषस्य प्रयतो वाङ्मनसि इत्यविशेषश्रुतेर्विद्ययाऽमृतमश्नुत इति श्रुतेश्च संशयमाह। सेयमिति। विशयानाना सन्दिहानानामित्यर्थः। पूर्वपक्षे सगुणब्रह्मविदसम्बन्धित्वमुत्क्रान्तेर्विशेषः साध्यते। ततोऽनुत्क्रान्त

प्राप्तानुकीर्तनात्। यथाहि 'यत्रैतत्पुरुषः स्वपिति नाम अशिशिषति नाम पिपासति नाम' इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते, विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते, एवमियमप्युत्क्रान्तिर्महाजनगतैवानुकीर्त्यते, यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः सम्पद्यते स आत्मा तत्त्वमसि इति प्रतिपादयितुं, प्रतिषिद्धा चैषा विदुषः। तस्मादविदुष एवैषेत्येवं प्राप्ते ब्रूमः। समाना चैषोत्क्रान्तिः वाङ्मनसि इत्याद्या विद्वदविदुषोरासृत्युपक्रमात् भवितुमर्हति, अविशेषश्रवणात्। अविद्वान् देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति, विद्वांस्तु ज्ञानप्रकाशितं मोक्षं नाडीद्वारमाश्रयते तदेतदासृत्युपक्रमादित्युक्तम्। नन्वमृतत्वं विदुषा प्राप्तव्यं न च तद्देशान्तरायत्तं तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति। अत्रोच्यते, अनुपोष्य चेदम्, अदग्ध्वाऽत्यन्तमविद्यादीन् क्लेशानपरविद्यासामर्थ्यादापेक्षिक-

---

उपासको मुक्तिमश्नुत इति फलं, सिद्धान्ते तूत्क्रान्तो ब्रह्मलोकभागीति फलभेदः। पूर्वपक्षमाक्षिप्य समाधत्ते। ननु विद्येत्यादिना। विद्ययाऽमृतमिति श्रुतिर्निर्गुणविषया यदा न तस्य प्राणा उत्क्रामन्तीति प्रतिषेधोऽपि तद्विषयः। अतः सगुणविदोऽप्यज्ञस्यैवोत्क्रान्तिरिति सिद्धान्तयति। एवमिति। सृतिर्मार्गस्तस्योपक्रमोऽर्चिःप्राप्तिस्ततः प्राक्तना उत्क्रान्तिस्तुल्या तत. उपासको मूर्द्धन्यनाडीद्वाराऽर्चिरादिमार्गं प्राप्नोति नान्य इति विशेषः। यत्तु दहरोपासकस्यामृतत्वं श्रुतं 'तयोर्द्ध्वमायन्नमृतत्वमेति' इति तदापेक्षिकमेव न मुख्यं 'यं कामं कामयते सोऽस्य

अमृतत्वं प्रेप्सते, सम्भवति तत्र सृत्युपक्रमो भूताश्रयत्वञ्च। न हि निराश्रयाणां प्राणानां गतिरुपपद्यते। तस्माददोषः॥

## तदापीतेः संसारव्यपदेशात्॥ ८॥

'तेजः परस्यां देवतायाम्' इत्यत्र प्रकरणसामर्थ्यात्,'तद्यथा प्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां सम्पद्यत' इत्येतदुक्तं भवति। कीदृशी पुनरियं सम्पत्तिः स्यादिति चिन्त्यते। तत्रात्यन्तिक एव तावत् स्वरूपप्रविलय इति प्राप्तं, तत्प्रकृतित्वोपपत्तेः। सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितं, तस्मादात्यन्तिकीयमविभागापत्तिरित्येवं प्राप्ते ब्रूमः। तत्तेज-आदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतमापीतेरासंसारमोक्षात् सम्यग्ज्ञाननिमित्तादवतिष्ठते।

'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतं'॥ [भग०]

इत्यादि संसारव्यपदेशात्। अन्यथा हि सर्वः प्रायणसमय एवो-पाधिप्रत्यस्तमयादत्यन्तं ब्रह्म सम्पद्येत, तत्र विधिशास्त्रं चान-

---

ब्रह्मत्वादेव समुत्तिष्ठति' इति भोगश्रवणादित्याह। अनुपोष्य चेद-मिति। उपदाध इति धातोरिदं रूपम्॥

तदापीति। पूर्वोदाहृतोत्क्रान्तिवाक्यशेषं व्याख्याय लिङ्गाश्रयपञ्च-भूतानां किमात्यन्तिको ब्रह्मणि लयः उतानात्यन्तिक इति, सयस्यो-ऽभया दर्शनात् संशयमाह। कीदृशी पुनरियमिति [illegible] चेत्किं मानमित्युक्तं तदयुक्तं [illegible]

र्थकं स्यात्, विद्याशास्त्रस्य। मिथ्याज्ञाननिमित्तस्य बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति। तस्मात् तत्प्रकृतिलयेऽपि सुषुप्तिप्रलयवत् बीजभावावशेषैवैषा सत्सम्पत्तिः॥

सूक्ष्मं *प्रमाणतश्च तथोपलब्धेः॥ ९॥

तच्चेतरभूतसहितं तेजो जीवस्यास्माच्छरीरात् प्रवसत आश्रयभूतं स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति। तथा हि नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते। तत्र तनुत्वात् सञ्चारोपपत्तिः स्वच्छत्वाच्चाप्रतीघातोपपत्तिः। अत एव च देहान्निर्गच्छन् पार्श्वस्थैर्नोपलभ्यते॥

नोपमर्देनातः॥ १०॥

अत एव च सूक्ष्मत्वान्नास्य स्थूलशरीरस्योपमर्देन दाहादिनिमित्तेनेतरत् सूक्ष्मशरीरमुपमृद्यते॥

अस्यैव चोपपत्तेरेष ऊष्मा॥ ११॥

अस्यैव च सूक्ष्मशरीरस्यैष ऊष्मा यमेतस्मिन् जीवच्छरीरे संस्पर्शेनोष्मिमाणं विजानन्ति। तथाहि मृतावस्थायामवस्थि-

---

मुक्तिसिद्धिः, सिद्धान्ते तु कर्मविद्याशास्त्रबलात् सावशेषलयसिद्धिरिति विवेकः॥

ननु लिङ्गात्मकस्य तैजसः कथं सूक्ष्मतमनाडीद्वारा गतिः कुतो वा केनचिन्मूर्त्तेन प्रतिघातो नास्ति कुतो वा न दृश्यत इत्यत आह। सूक्ष्ममिति।

प्रमाणसौक्ष्म्यादृतिरनुद्भूतस्पर्शरूपवत्त्वात्स्वच्छत्वात्स्थूलत्वादप्रतिघातानुपलब्धिरित्यर्थः॥

---

* प्रमाणतश्चेति वर्ध०।

तेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते जीवदवस्थायामेव तूपलभ्यते इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष उष्मेति। तथा च श्रुतिः 'उष्ण एव जीविष्यञ्छीतो मरिष्यन्' इति॥

## प्रतिषेधादिति चेन्न शारीरात्॥ १२॥

'अमृतत्वञ्चानुपोष्य' इत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः, तत्राऽपि केनचित्कारणेनोत्क्रान्तिमाशङ्क्य प्रतिषेधति 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति। अतः परविद्याविषयात् प्रतिषेधात् न परब्रह्मविदो देहात् प्राणानामुत्क्रान्तिरस्ति इति चेन्नेत्युच्यते। यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां न शरीरात्, कथमवगम्यते 'न तस्मात् प्राणा उत्क्रामन्ति' इति, शाखान्तरे पञ्चमीप्रयोगात्। सम्बन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या सम्बन्धविशेषे व्यवस्थाप्यते। तस्मा-

---

लिङ्गसद्भावे चोष्मलिङ्गकानुमानमाह। अस्यैव चेति॥

प्रतिषेधादिति चेन्न शारीरात्। पूर्वमनुपोष्येतिपदेन दग्धाशेषक्लेशस्य निर्गुणज्ञानिन उत्क्रान्त्याद्यभावः सूचितस्तस्यात्राक्षिप्य समाधानाद्यवहितेनास्य सङ्गतिरित्याह। अमृतत्वं चेति। सकामस्य संसारोक्त्यनन्तरं निष्कामस्य मुक्तिप्रकरणार्थोऽथशब्दः, आत्मकामत्वात्। पूर्णानन्दात्मविश्वादाप्तकामः प्राप्तपरमानन्दः अतो निष्कामः अनभिव्यक्ताभ्तरवासनात्मकामशून्यस्तस्मादकामः अभिव्यक्ताभ्तरवि-

दिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही सम्बध्यते न देहः। 'न तस्मादुच्चिक्रमिषोर्जीवात् प्राणा उत्क्रामन्ति सहैव तेन भवन्ति' इत्यर्थः। सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादित्येवं प्राप्ते प्रत्युच्यते॥

स्पष्टो ह्येकेषाम्॥१३॥

नैतदस्ति यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिः प्रतिषेधस्य देह्यपादानत्वादिति। यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते। तथा ह्यार्तभागप्रश्ने 'यत्रायं पुरुषो म्रियते तदस्मात् प्राणाः उत्क्रामन्त्याहोस्विन्नेति' इत्यत्र 'नेति होवाच याज्ञवल्क्य' इत्युत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृत इत्यस्यामाशङ्कायामत्रैव समवलीयन्त इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति। देहस्य

---

ईदृशो योऽकामयमानस्तस्येत्यन्वयः। ज्ञानिन उत्क्रान्तिरस्ति न वेति पञ्चमीषष्ठीश्रुतिभ्यां सन्देहे सिद्धान्तिशङ्कानिरासपूर्वकं पूर्वपक्षयति। नेत्यादिना॥

काण्वश्रुतौ तावत् तस्येति सर्वनाम्ना प्रकृतं ज्ञानिनं परामृश्य सम्बन्धसामान्यमुक्तं तच्च माध्यन्दिनशाखायां तस्मादित्यपादानत्वरूपविशेष उक्तो ग्राह्यस्तथा च जीवात् प्राणोत्क्रान्तिप्रतिषेधो भाति न देहात् तच्छब्देन देहस्यानुक्तेस्तस्मात् ज्ञानिनोऽप्युत्क्रान्तिरस्ति इति ज्ञानवैयर्थ्यमिति पूर्वपक्षफलं, सिद्धान्ते तत्सार्थकमाह। स्पष्टो हीति। अत्र पुरुषशब्दवाच्ये देह एवास्मादित्युत्क्रान्त्यवधिरुच्यते। सशब्दपरामृष्टस्य प्रकृतस्य पुरुषस्योच्छ्वयनादिधर्मकस्य जीवत्वायोगादि-

चैतानि स्युर्न देहिनः, तत्सामान्यात् 'न तस्मात् प्राणा उत्क्रा-न्त्यत्रैव समवलीयन्ते' इत्यत्राप्यभेदोपचारेण देहापादानस्यै-वोत्क्रमणस्य प्रतिषेधो यद्यपि प्राधान्यं देहिन इति व्याख्येयं येषां पञ्चमीपाठः। येषान्तु षष्ठीपाठस्तेषां विद्वत्सम्बन्धि-न्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति देहादुत्क्रान्तिः प्राप्ता न देहिनः। अपि च 'चक्षुष्टो वा मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्येवमविद्वद्विषयेषु सप्रपञ्चमुत्क्र-मणं संसारगमनञ्च दर्शयित्वा 'इति नु कामयमानः' इत्युपसं-हृत्याऽविद्वत्कथां 'अथाकामयमानः' इति व्यपदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमञ्जस एव व्यपदेशः स्यात्। तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रति-

---

त्यर्थः। उच्छ्रयति बाह्यवायुपूरणादर्द्धते, च्चाध्मायति चार्द्रभेरीवच्छब्दं करोतीत्यर्थः। येषां पञ्चमीपाठस्तेषां यद्यपि देहिनः प्राधान्यं तथापि देहदेहिनोरभेदात् तस्मादिति देहं परामृश्य तदपादान एवोत्क्रा-न्तिप्रतिषेध इति व्याख्येयं। तत्सामान्यादुक्तश्रुत्यास्य पाठस्यैकार्थत्वा-दिति योजना। इदानीं काण्वपाठस्यानुगुण्यमाह। येषान्तु षष्ठीपाठ इति सम्बन्धविशेषाकाङ्क्षायां भोक्तुः प्राणानां भोगोपकरणत्वविशेषोऽ-स्त्येव प्राणमयो मनोमय इति पूर्वश्रुत्युक्तो ग्राह्यः न शाखान्तरस्थ-मपादानत्वं ग्राह्यं जीवादुत्क्रान्तेरप्राप्तयोः प्रतिषेधायोगादतो वि-द्वत्सम्बन्धिप्राणानां उत्क्रान्त्यपादानापेक्षायां चक्षुष्टो वा मूर्द्ध्नो वेत्युक्तदे-हप्रदेशा एव ग्राह्याः तथा चायमर्थः तस्य विदुषो भोगोपकरणात्मकाः प्राणा देहप्रदेशेभ्यो नोत्क्रामन्ति इति, एवञ्च प्राप्ति[illegible]

षेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय। न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते निमित्ताभावात्। 'अत्र ब्रह्म समश्नुते' इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति॥

स्मर्यते च॥१४॥

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः।

'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः।

देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः'॥ इति।

ननु गतिरपि ब्रह्मविदः स्मर्यते 'शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव' इति। न, सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यं, सर्वभूतदृश्यत्वाद्युपन्यासात्, न ह्यशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः। तथा च तत्रैवोपसंहृतम्।

'शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः।

दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्'॥ इति।

---

वाक्यस्येति सर्वं चतुरस्रं। अपि चेति स्पष्टार्थं। सम्यगात्मभावेन भूतानि पश्यतः अपदस्य प्राप्यपदरहितस्य पदैषिणो देवा अपि मार्गे मुह्यन्ति मार्गं न जानन्ति तदभावादिति स्मृतियोजना। स्मृत्यन्तरविरोधं शङ्कते। ननु गतिरपीति। सगुणविद्याबलेनैषा गतिरिति परिहरति। सशरीरस्येति। ननु तर्हि 'तयोर्द्ध्वमायन्नमृतत्वमेति', 'स एवैनान् ब्रह्म गमयति' इत्यादिश्रुतीनां का गतिरत्नाह। गतीति॥

तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः। गतिश्रुतीनान्तु विषयमुपरिष्टाद्व्याख्यास्यामः॥

## तानि परे तथा ह्याह॥ १५॥

तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते। कस्मात्, तथा ह्याह श्रुतिः, 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ति' इति। ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्राऽपि कलानां प्रलयमाह स्म। न, सा खलु व्यवहारापेक्षा पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्ति इति। इतरा तु विद्वत्प्रतिपत्त्यपेक्षा कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव सम्पद्यत इति। तस्माददोषः॥

---

तानि परे तथा ह्याह। पूर्वंत्र गतिनिषेधेन विद्वत्कलानां प्राणादीनामत्रैव लय उक्तः तमुपजीव्य स किं तत्तत्कलाप्रकृतिषु पृथिव्यादिषु स्यादुत परमात्मनीति श्रुतिद्वयदर्शनात् संशयः कार्यः। तत्र साक्षात् प्रकृतौ विकारलय इति न्यायानुगृहीतया 'गताः कलाः' इति श्रुत्या पूर्वपक्षमप्राप्ते वदन्नादौ सिद्धान्तमाह। तानीति। यथा नद्यः समुद्रं प्राप्य लीयन्ते एवमेवास्य परितः सर्वत्र ब्रह्मद्रष्टुरिमाः प्राणश्रद्धाद्याः पुरुषायणाः पुरुषे कल्पिताः पुरुषमेव ज्ञेयं प्राप्य लयं गच्छन्ति इत्यर्थः। मनःप्राणयोरेकीकरणेन कलानां पञ्चदशत्वं। प्रतिष्ठा इति द्वितीयाबहुवचनं। स्वस्य प्रकृतीः पृथिव्याद्याः इत्यर्थः। वस्तुगत्या विद्वद्दृष्ट्या परमात्मनि कलालयेऽपि लोकदृष्ट्या प्रतिष्ठासु कार्यात्मिरविरुद्धा, तथा च कलास्वप्रकृतिषु विलाप्य ताभिः सह पुरुषे लीयन्ते इति श्रुतिद्वयतात्पर्यं।

## अविभागो वचनात्॥ १६॥

स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष इति। तत्र प्रलयसामान्याच्छक्त्यवशेषताप्रसक्तौ ब्रवीति अविभागापत्तिरेवेति। कुतः, वचनात्। तथा हि कलाप्रलयमुक्त्वा वक्ति 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इति। अविद्यानिमित्तानाञ्च कलानां न विद्यानिमित्ते प्रलये सावशेषतोपपत्तिः। तस्मादविभाग एवेति॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७॥

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता, सम्प्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति। समाना चासृत्युपक्रमादिद्वदविदुषोरुत्क्रान्तिरित्युक्तं तमिदानीं सृत्युपक्रमं दर्शयति।

---

अविभागो वचनात्। उक्तलयमुपजीव्य लयस्य दोषादर्शनात् संशयमाह। स पुनरिति। मुक्तिसिद्धिस्तत्सिद्धिश्चेत्युभयत्र फलं, अवशेषो मूलकारणे शक्त्यात्मना स्थितिः पुनर्जन्मयोग्यतेति यावत्। विमतः कलालयः सावशेषः कलालयत्वात् सुषुप्तिवदिति पूर्वपक्षः। विमतो निरवशेषः विद्याहतत्वात् रज्ज्वां विद्यया सर्पलयवदिति युक्त्युपेतश्रुत्या सिद्धान्तयति। ब्रवीतीति। नामरूपे शक्त्यात्मके अपि भिद्येते इत्यर्थः॥

तदोकोऽग्रज्वलनं। सृतेर्मार्गस्योपक्रमो नाडीप्रवेशनियमस्तं वक्तुं सूत्रभागव्याख्याद्वारा अधिकरणविषयमाह। तस्येति। स मुमुक्षु-

तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः। गतिश्रुतीनान्तु विषयमुपरिष्टाद्व्याख्यास्यामः॥

## तानि परे तथा ह्याह॥ १५॥

तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते। कस्मात्, तथा ह्याह श्रुतिः, 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्याऽस्तं गच्छन्ति' इति। ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्राऽपि कलानां प्रलयमाह स्म। न, सा खलु व्यवहारापेक्षा पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्ति इति। इतरा तु विद्वत्प्रतिपत्त्यपेक्षा कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव सम्पद्यत इति। तस्माददोषः॥

---

तानि परे तथा ह्याह। पूर्वत्र गतिनिषेधेन विद्वत्कलानां प्राणादीनामत्रैव लय उक्तः तमुपजीव्य स किं तत्तत्कलाप्रकृतिषु पृथिव्यादिषु स्यादुत परमात्मनीति श्रुतिद्वयदर्शनात् संशयः कार्यः। तत्र साक्षात् प्रकृतौ विकारलय इति न्यायानुगृहीतया 'गताः कलाः' इति श्रुत्या पूर्वपक्षमप्राप्ते वदन्नादौ सिद्धान्तमाह। तानीति। यथा नद्यः समुद्रं प्राप्य लीयन्ते एवमेवास्य परितः सर्वत्र ब्रह्मद्रष्टुरिमाः प्राणश्रद्धाद्याः पुरुषायणाः पुरुषे कल्पिताः पुरुषमेव क्षेयं प्राप्य लयं गच्छन्ति इत्यर्थः। मनःप्राणयोरेकीकरणेन कलानां पञ्चदशत्वं। प्रतिष्ठा इति द्वितीयाबहुवचनं। स्वस्य प्रकृतीः पृथिव्याद्याः इत्यर्थः। वस्तुगत्या विद्वद्दृष्ट्या परमात्मनि कलालयेऽपि लोकदृष्ट्या प्रतिष्ठासु लयोक्तिरविरुद्धा, तथा च कलास्वप्रकृतिषु विलाप्य ताभिः सह पुरुषे लीयन्ते इति श्रुतिद्वयतात्पर्यं।

## अविभागो वचनात्॥ १६ ॥

स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष इति। तत्र प्रलयसामान्याच्छक्त्यवशेषताप्रसक्तौ ब्रवीति अविभागापत्तिरेवेति। कुतः, वचनात्। तथा हि कलाप्रलयमुक्त्वा वक्ति 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इति। अविद्यानिमित्तानाञ्च कलानां न विद्यानिमित्ते प्रलये सावशेषतोपपत्तिः। तस्मादविभाग एवेति॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७ ॥

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता, सम्प्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति। समाना चासृत्युपक्रमाद्विद्वदविदुषोरुत्क्रान्तिरित्युक्तं तमिदानीं सृत्युपक्रमं दर्शयति।

---

अविभागो वचनात्। उक्तलयमुपजीव्य लयस्य द्वैधादर्शनात् संशयमाह। स पुनरिति। मुक्तिसिद्धिस्तत्सिद्धिश्चेत्युभयत्र फलं, अवशेषो मूलकारणे शक्त्यात्मना स्थितिः पुनर्जन्मयोग्यतेति यावत्। विमतः कलालयः सावशेषः कलालयत्वात् सुषुप्तिवदिति पूर्वपक्षः। विमतो निरवशेषः विद्याकृतत्वात् रज्ज्वां विद्यया सर्पलयवदिति युक्त्युपेतश्रुत्या सिद्धान्तयति। ब्रवीतीति। नामरूपे शक्त्यात्मके अपि भिद्येते इत्यर्थः॥

तदोकोऽग्रज्वलनं। सृतेर्मार्गस्योपक्रमो नाडीप्रवेशनियमस्तं वक्तुं सूत्रभागव्याख्याद्वारा अधिकरणविषयमाह। तस्येति। स मुमूर्षु-

'तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयं स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' [कौ०उ०] इति श्रुतेः। तदग्रज्वलनं, तत्पूर्विका चक्षुरादिस्थानापादाना चोत्क्रान्तिः श्रूयते 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' इति। सा किमनियमेनैव विद्वदविदुषोर्भवति अथास्ति कश्चिद्विदुषो विशेषनियम इति विचिकित्सायां श्रुत्यविशेषादनियमप्राप्तावाचष्टे। समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च मूर्धस्थानादेव विद्वान् निष्क्रामति स्थानान्तरेभ्यस्त्वितरे। कुतः विद्यासामर्थ्यात्। यदि विद्वानपीतरवद्यतः कुतश्चिद्देहदेशादुत्क्रामेन्नैवोत्कृष्टं लोकं लभेत तत्रानर्थिकैव विद्या स्यात्, तच्छेषगत्यनुस्मृतियोगाच्च। विद्याशेषभूता च मूर्धन्यनाडीसम्बद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता तामभ्यस्यंस्तयैव प्रतिष्ठत इति युक्तम्। तस्माद्धृदयालयेन ब्रह्मणा

---

तेजोमात्रा इन्द्रियाणि तस्य हृदयस्याग्रं नाडीमुखं तस्य ज्वलनं भाविफलस्फुरणं प्रद्योतनाख्यमुक्तं। वेत्यनियमश्रुतेस्तयोर्द्ध्वमायन्निति विशेषश्रुतेश्च संशयः, किमुपासकोऽप्यनुपासकवत् येन केनचिद्द्वारेण निर्गच्छति उत मूर्द्धन्यनाड्यैवेति, अत्र पूर्वपक्षे विद्याकृतातिशयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति विवेकः। वचनादविभागवदनियम इति प्राप्ते सिद्धान्तयति। आचष्ट इति। येन केनचिन्मार्गेण निर्गतस्यापि ब्रह्मलोकप्राप्तौ विद्याशेषत्वेन मार्गानुस्मृतिविधेः केवलादृष्टार्थत्वं स्यादतोऽन्यत्र स्मृतेनैव मार्गेण गमनं युक्तमिति भावः। शतं मध्ये विष्वङ् नानाविधा अन्या नाड्यो भवन्तीत्यर्थः। अप्रमा-

समुपासितेनानुगृहीतस्तद्भावमापन्नो विद्वान् मूर्द्धन्ययैव शताधिकया शतादतिरिक्तया एकशततमया नाड्या निष्क्रामति इतराभिरितरे। तथा हि हार्दविद्यां प्रकृत्य समामनन्ति,

'शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका।
तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति'॥ इति।

## रश्म्यनुसारी॥ १८॥

अस्ति *'दहरोऽस्मिन्नन्तराकाश' इति हार्दविद्या 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्युपक्रम्य विहिता। तत्प्रक्रियायां 'अथ या एता हृदयस्य नाड्यः' इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसम्बन्धमुक्त्वोक्तं 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमते' इति। पुनश्चोक्तं 'तयोर्द्ध्वमायन्नमृतत्वमेति' इति। तस्मात् शताधिकया नाड्या निष्क्रामन् रश्म्यनुसारी निष्क्रामतीति गम्यते, तत् किमविशेषेणैवाहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति

---

ख्या नाडी हृदयात् निर्गता दक्षिणतालुकण्ठाधस्तननासिकामध्यभित्तिद्वारा ब्रह्मरन्ध्रं प्राप्ता सूर्यरश्मिभिरेकीकृता ब्रह्मलोकमार्ग उपासकस्येति स्थितम्॥

रश्म्यनुसारी। प्रकरणशोधनपूर्वकमुपासकस्य रश्म्यनुसारित्वं विषयमाह। अस्तीत्यादिना। अथ प्रारब्धान्ते एतदुत्क्रमणं यथा स्यादथ तदा एतैरेव नाडीसम्बन्धैर्रश्मिभिरुत्क्रामतीत्यर्थः। अत्र सम्बन्धस्य कालविशेषाश्रवणाद्रात्रौ रश्म्यभावाच्च संशयमाह। तत्किमिति॥ पूर्वोक्तनाडीसम्बद्धरश्मीनामत्रोपजीव्यत्वात् सङ्गतिः। पूर्वपक्षे रात्रौ

---

* दहरोऽस्मिन्नन्तराकाशे इति वर्ध० नास्ति।

संशये श्रुत्यविशेषश्रवणादविशेषेणैव तावद्रश्म्यनुसारीति प्रतिज्ञायते ॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १९ ॥

अस्त्यहनि नाडीरश्मिसम्बन्ध इत्यहनि मृतस्य स्याद्रश्म्यनुसारित्वं रात्रौ तु प्रेतस्य न स्यात्, नाडीरश्मिसम्बन्धविच्छेदादिति चेत्, न, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात्, यावद्देहभावी हि शिराकिरणसम्पर्कः। दर्शयति चैतमर्थं श्रुतिः 'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' इति। निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते, प्रतापादिकार्यदर्शनात्। स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वमृतुन्तररजनीषु शैशिरेष्विव दुर्दिनेषु। 'अहरेवैतद्रात्रौ विदधाति' इति चैतदेव दर्शयति। यदि च रात्रौ प्रेतो विनैव रश्म्यनुसारेणोर्ध्वमा-

---

मृतस्य रश्मिप्राप्त्यर्थं सूर्योदयप्रतीक्षाऽस्ति, सिद्धान्ते नास्तीति मत्वा सिद्धान्तं प्रतिजानीते। अविशेषेणेति ॥

पूर्वपक्षबीजमुपन्यस्य दूषयति। निशीत्यादिना। शिरा नाड्यः प्रतायन्ते विस्तृता भवन्ति सृप्ताः सम्बद्धाः। श्रुतसम्बन्धस्य रात्रौ सत्त्वे युक्तिमाह। निदाघेति। तर्हि हेमन्तादिरात्रिष्वौष्ण्योपलब्धिः स्यादित्यत आह। स्तोकेति। सविता रात्रावप्यहर्दधातीति धारणाभिधानं स्तोकरश्म्यनुवृत्त्यभिप्रायमेवेत्यर्थः। किञ्च यदि रात्रौ मृतस्य रश्मियोगं विनैवोर्ध्वगतिः स्यात् तदा रश्मिश्रुतेर्दिवामृतविषयतया सङ्कोचः स्यादूर्ध्वगत्यभावे च विद्यायामप्रवृत्तिः स्यात्।

क्रमेत रश्म्यनुसारानर्थक्यं भवेत्। नह्येतद्विशिष्याधीयते यो दिवा प्रैति स रश्मीनपेक्ष्योर्द्ध्वमाक्रमते यस्तु रात्रौ सोऽनपेक्ष्यैवेति। अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्द्ध्वमाक्रमेत पाक्षिकफला विद्येति अप्रवृत्तिरेव तस्यां स्यात्, मृत्युकालानियमात्। अथापि रात्रावुपरतोऽहरागममुदीक्षेत। अहरागमेऽप्यस्य कदाचिदरश्मिसम्बन्धार्हं शरीरं स्यात्, पावकादिसम्पर्कात्। 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति' इति च श्रुतिरनुदीक्षां दर्शयति। तस्मादविशेषेणैवेदं रात्रिन्दिवं रश्म्यनुसारित्वं॥

अतश्चायनेऽपि दक्षिणे ॥ २० ॥

*अत एवोदीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च विद्याया* अनियतकालत्वाच्च मृत्योर्दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्। उत्तरायणमरणप्राशस्त्यप्रसिद्धेर्भीष्मस्य च प्रतीक्षादर्शनात् 'आपूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासांस्तान्' इति च श्रुतेरपेक्षितव्यमुत्तरायणमितीमामा-

---

न च प्रतीक्षयोर्द्ध्वगतिरिति वाच्यं, रश्म्युदयात् प्राग्देहदाहे प्रतीक्षावैयर्थ्यापातादप्रतीक्षाश्रुतिविरोधाच्च। तस्मात् यदा कदाचित् मृतस्य रश्मिप्राप्त्या झटिति ब्रह्मलोकप्राप्तिरिति सिद्धम्॥

एवं दक्षिणायने मृतो विद्वान् विद्याफलमाप्नोति न वेति विद्याया नित्यवत्फलश्रुतेरुत्तरायणप्राशस्त्यशास्त्राच्च सन्देहे पूर्वोक्तहेतूनतिदिशति। अतश्चायनेऽपि दक्षिणे। पूर्वपक्षमाशङ्क्यामनुदति।

---

* अत एव चापेक्षानुपेति वर्ध० का०।

शङ्कामनेन सूत्रेणापनुदति। प्राशस्त्यप्रसिद्धिरविद्वद्विषया। भीष्मस्य तूत्तरायणप्रतिपालनमाचारपरिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थञ्च। श्रुतेस्त्वर्थं वक्ष्यति 'आतिवाहिकास्तल्लिङ्गात्' इति। ननु च-

'यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः।

प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ' ॥ इति-

प्राधान्येनोपक्रम्याऽहरादिकालविशेषः स्मृतावनावृत्तये नियतः, कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायादिति। अत्रोच्यते॥

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥

योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते। स्मार्ते चैते योगसाङ्ख्ये न श्रौते। अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः। ननु-

---

उत्तरायणेत्यादिना। यद्यानामुत्तरायणे दैवान्मरणञ्चेत् प्रशस्तमित्यभिज्ञाभिवन्दनरूपाचारपरिपालनार्थं भीष्मस्य प्रतीक्षा न मरणासानिति श्रुतिस्तूत्तरायणदेवतापरेति वक्ष्यते। तथा च देवताया सदा सत्त्वात् विद्यया दक्षिणायनकालेऽपि तत्प्राप्तिरविरुद्धेति भाव। स्मृतिबलात् कालप्राधान्य प्राप्नते। ननु चेति॥

श्रौतदहराद्युपासकस्यास्माभि कालानपेक्षोक्ता, स्मार्तयोगिनान्तु कालापेक्षा स्मृता बुध्यत इत्यविरोधमाह। योगिन इति। योगा दहराद्युपासक एव स्मृत्यक्त कि न स्यादित्यत आह। स्मार्ते चेति। भगवदाराधनबुद्ध्याऽनुष्ठित कर्म योग 'अनाश्रित कर्मफल कार्यं कर्म करोति य। स सन्यासी च योगी च' इति स्मृतेर्धारणापूर्वकोऽकर्तृ-

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनं'॥[मनु॰] इति च
श्रौतावेव देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति।
उच्यते। 'तं कालं वक्ष्यामि' इति स्मृतौ कालप्रतिज्ञानात्
विरोधमाशङ्क्यायं परिहार उक्तः। यदा पुनः स्मृतावपि
अग्न्याद्या देवता एवातिवाहिको गृह्यन्ते तदा न कश्चिद्विरोध
इति॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्-
पादकृतौ चतुर्थाध्यायस्य द्वितीयः पादः॥

---

त्वानुभव साक्ष्यं,'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्' इति स्मृतेः।
ननु श्रुतिस्मृत्योर्भिन्नार्थत्वमयुक्तं प्रत्यभिज्ञाविरोधादिति शङ्कते।
नन्वग्निरिति। कालाग्रहियां प्रति भिन्नार्थत्वमुक्तं। यदि तु श्रौतार्थ-
प्रत्यभिज्ञया कालशब्दो देवतापरस्तर्ह्यैकार्थ्यमेवेति समाधत्ते। तस्मात्
विद्यासामर्थ्यात् सर्वदैव दिष्टंगतस्य उपासकस्य फलप्राप्तिरिति
सिद्धम्॥ * ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दकृतौ श्रीम-
च्छारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां चतुर्थाध्यायस्य द्वितीयः
पादः॥ ० ॥

ओम् परमात्मने नमः ।



## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

आसृत्युपक्रमात् समानोत्क्रान्तिरित्युक्तं । सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते । नाडी रश्मिसम्बन्धेनैका 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमते' इति । अर्चिरादिकैका *'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः' इति । 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्यन्या । 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति' इत्यपरा । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' इति चापरा । तत्र संशयः, किं परस्परं भिन्ना एताः सृतयः किंवैकैवानेकविशेषणेति । तत्र प्राप्तं तावद्भिन्ना एवैताः सृतय इति, भिन्नप्रकरणस्थत-

ॐ ब्रह्मणे नमः ।

एवं उत्क्रान्तिं निरूप्य तत्साध्यं मार्गं गन्तव्यञ्च निरूपयितुं पादमारभते । अर्चिरादिना तत्प्रथितेः । वृत्तानुवादपूर्वकमाद्याधिकरणस्य विषयं मार्गमाह । आसृतीति । विरजा विरजसः निष्पापा इत्यर्थः । श्रुतिविप्रतिपत्त्या संशयः । पूर्वं यदा कदाचिन्मृतस्याऽपि फलप्राप्तिरुक्ता तद्वत् येन केनचिन्मार्गेण गतिरिति पूर्वपक्षफलं विकल्पः, सिद्धान्ते मार्गैक्यमिति विवेकः । उपासनाभेदात् तच्छेषत्वेन ध्येयानां मार्गाणां भेदः, एवकाराच्च । किञ्च मार्गभेदे सत्यन्नोदयं मार्गान्तरया प्रापक

* तेऽर्चिरभीति वर्धं० का० ।

त्वाद्विद्योपासनशेषत्वाच्च। अपि च 'अथैतैरेव रश्मिभिः' इत्यवधारणमर्चिराद्यपेक्षायामुपरुध्येत, त्वरावचनञ्च पीड्येत 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति' इति। तस्मादन्योन्यभिन्ना एवैते पन्थान इत्येवं प्राप्तेऽभिदध्महे। अर्चिरादिनेति। सर्वो ब्रह्म प्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे। कुतः, तत्प्रथितेः। प्रथितो ह्येष मार्गः सर्वेषां विदुषां। तथाहि पञ्चाग्निविद्याप्रकरणे 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति विद्यान्तरशीलिनामप्यर्चिरादिका सृतिः श्राव्यते। स्यादेतत् यासु विद्यासु न काचिद्गतिरुच्यते तास्वेवमर्चिरादिकोपतिष्ठतां, यासु त्वन्या श्राव्यते तासु किमर्चिराद्याश्रयणमिति। अत्रोच्यते, भवेदेतदेवं यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः, एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रतिपादनी क्वचित् केनचिद्विशेषणेनोपलक्षितेति वदामः, सर्वत्रैकदेशप्रत्यभिज्ञानादितरेतरविशेषणविशेष्यभावोपपत्तेः। प्रकरणभेदेऽपि तु विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः।

---

इति युक्तं न मार्गैक्य इत्यर्थः। उपासनाभेदेऽप्युपास्यब्रह्मैक्यवत् मार्गैक्यं ह्यविरुद्धमिति सिद्धान्तयति। एवमिति। तस्य मार्गस्य प्रसिद्धत्वादिति हेत्वर्थः। ये चेत्यविशेषश्रुतिरश्रुतगतिविद्याविषयेति मार्गभेदं शङ्कते। स्यादेतदिति। एकस्यैव मार्गस्यानेकान्यग्न्यादीनि विशेषणानीत्युक्ते लाघवात् न मार्गभेदः प्रत्यभिज्ञानाच्चेति समाध्यर्थः। गन्तव्यैक्यं विवृणोति। तथाहीति। यदावतो दीर्घायुषो हिरण्यगर्भस्य, परा दीर्घाः समाः संवत्सरा 'वसन्ति' कार्ये ब्रह्मणो या जितिः सर्वत्र जयः व्याप्तिः ता लभत इत्यर्थः। एवं गन्तव्यैक्यवत् प्रत्यभिज्ञाया मार्गैक्य-

विद्याभेदेऽपि गत्येकदेशप्रत्यभिज्ञानादन्त्याभेदाच्च गत्यभेद एव। तथाहि 'ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तस्मिन् वसति शाश्वतीः समा, सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते, तद्य एवैत ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति'इति [कौ०उ०] च तत्र तत्र तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते। यत्त्वेतैरेवेत्यवधारणमर्चिराद्याश्रयणेन स्यादिति। नैष दोषः, रश्मिप्राप्तिपरत्वादस्य। न ह्येक एव शब्दो रश्मींश्च प्रापयितुमर्हति, अर्चिरादींश्च व्यावर्त्तयितुं। तस्माद्रश्मिसम्बन्ध एवायमवधार्यते इति द्रष्टव्यं। त्वरावचनं त्वर्चिराद्यपेक्षायामपि क्षैप्र्यार्थत्वान्नोपरुध्यते यथा निमिषमात्रेणात्रागम्यत इति। अपि च 'अथैतयोः पथोर्न कतरेण च नेति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा, पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति। भूयांसि चार्चिरादिश्रुतौ मार्गपर्वाणि, अल्पीयांसि त्वन्यत्र, भूयसां चानुगुणेनाल्पीयसां नयनं न्याय्यमित्यतोऽपि अर्चिरादिना तत्प्रथितेरित्युक्तं ॥

---

निश्चयात प्रकरणभेदोऽप्रयोजक इत्युक्त्वा सम्प्रत्येवकारे त्वरावचनयोर्गतिमाह । यत्त्वित्यादिना। रात्रौ सहस्ररश्म्यभावात् विदुषो रश्म्ययोगप्राप्तौ तन्निरासार्थ एवकारो नान्यव्यावृत्त्यर्थ । यथा लौकिकमार्गे विलम्बस्तथा, अर्चिरादौ नेति त्वरावचनोपपत्तिरित्यर्थः । मार्गैक्ये लिङ्गमाह । अपि चेति । शुभमार्गबाहुल्ये तृतीयस्थानोक्तिर्न स्यादिति भाव । उत्तरमार्गैक्येऽप्यर्चिरादिनेति विशेषणे को हेतुरित्यत आह । भूयांसीति ॥

## वायुमब्दादविशेषविशेषाभ्यां ॥ २ ॥

केन पुनः सन्निवेशविशेषेण गतिविशेषाणामितरेतरविशेषणविशेष्यभाव इति तदेतत् सुहृद्भूत्वाऽऽचार्यो ग्रथयति। 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं' इति [१।३] कौषितकिनां देवयानः पन्थाः पद्यते। तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र सन्निवेशक्रमः कश्चिदन्वेष्टव्यः, वायुस्त्वर्चिरादिवर्त्मन्यश्रुतः कतमस्मिन् स्थाने सन्निवेशयितव्य इति। उच्यते, 'तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम्'[कौ०उ०]इत्यत्र संवत्सरात् पराञ्चमादित्यादर्वाञ्चं वायुमभिसम्भवन्ति, कस्मात् अविशेषविशेषाभ्यां। तथाहि 'स वायुलोकम्' इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते 'यदा वै पुरुषोऽस्माल्लो-

---

उक्तां मार्गस्यैक्यमुपजीव्य पूर्वक्रममाह। वायुमब्दात्। अर्चिरादिव्वस्मादयमनन्तर इति क्रमेण विशेष्यभाव उच्यते इत्यधिकरणस्य तात्पर्यमुक्त्वा विशेषयमाह। स एतमिति। अत्राग्न्यनन्तरं पठितो वायुविषय। स किं अर्चिरात्मकाग्नेरनन्तर उत संवत्सरात् पर इति पाठादच्यमाणविशेषश्रुतेश्च संशये सिद्धान्तमेवोपक्रमते। उच्यत इति। पुरुषः उपासकोऽस्माल्लोकाद्देहात् प्रैति निर्गच्छति तस्मै प्रामाय पुरुषाय स वायुस्तत्र स्वात्मनि विजिहीते छिद्रं करोति, तेन वायुदत्तेन रथचक्रच्छिद्रतुल्येन द्वारेणोर्द्ध्वमादित्यं गच्छति इति श्रुत्यर्थः। इदानीं

कात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति' इति [कौ०उ०]। एतस्मादादित्याद्वायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः। कस्मात् पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते। नैषोऽस्ति विशेष इति वदामः। ननूदाहृता श्रुतिः 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्' इति। उच्यते, केवलोऽत्र पाठः पौर्वापर्येणावस्थितो नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति। पदार्थोपदर्शनमात्रं ह्यत्र क्रियते 'एतञ्चैतञ्च स गच्छति' इति। इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण छिद्रेणोर्ध्वमाक्रम्यादित्यमागच्छतीत्यवगम्यते क्रमः। तस्मात् सूक्तमविशेषविशेषाभ्यामिति। वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति समामनन्ति, तत्रादित्यानन्तर्याय देवलोकाद्वायुमभिसम्भवेयुः। वायुमब्दादिति तु छान्दोग्यश्रुत्यपेक्षयोक्तम्। छान्दोग्यवाजसनेयकयोस्त्वेकत्र देवलोको न विद्यते परत्र संवत्सरः,

---

पूर्वपक्षमाह। कस्मात् पुनरिति। पाठबलादर्चिषोऽनन्तरो वायुरित्यर्थः। कौषीतकिनां पाठमात्रं, न क्रमविशेषवाची कश्चिच्छब्दोऽस्ति। काण्वानान्तु तेनेत्यूर्ध्व इति च शब्दाभ्यां क्रमनिश्चयात् पाठबाध इति सिद्धान्तार्थः। अथवार्चिरादिमार्गे छान्दोग्यस्थे संवत्सरपाठयोरब्दात् परत्वं, वाजिश्रुतिस्थे तु संवत्सरस्याश्रुतेः कथमब्दात् परो वायुरित्यत आह। वाजेति। तर्हि देवलोकाद्वायुमिति सूत्रं स्यादित्यत आह। वायुमब्दादिति त्विति। संवत्सरस्य मासावयवित्वात् मासानन्तर्यं संवत्सरात् परो देवलोकस्ततः परो वायुर्वायोः पर आदित्य इति श्रुतिद्वये क्रमो

तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र ग्रथितव्यौ, तत्रापि माससम्बन्धात् संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यं ॥

## तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं' इत्यस्या विद्युत उपरिष्टात् वरुणलोकमित्ययं वरुणः सम्बध्यते। अस्ति हि सम्बन्धो विद्युद्वरुणयोः। 'यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषाः जीमूतोदरेषु प्रनृत्यन्ति अथापः प्रपतन्ति विद्योतते स्तनयति वर्षिष्यति वा' इति च ब्राह्मणं। अपाञ्चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः। वरुणाच्चाधीन्द्रप्रजापती स्थानान्तराभावात् पाठसामर्थ्याच्चागन्तुकत्वादपि वरुणादीनामन्त एव निवेशः। वैशेषिकस्थानाभावात् विद्युच्चान्त्याऽर्चिरादौ वर्त्मनि ॥

---

निष्पन्नः। तेनेति तृतीयाश्रुत्या वायोरादित्यपूर्वत्वावगमादिति, सूत्रे तु वायुपदं देवलोकपूर्वकवायुपरमिति स्थितं ॥

एवं कौषीतकिभिरग्न्यनन्तरं पठितस्य वायोः स्थानमुक्त्वा वाय्वनन्तरं पठितस्य वरुणस्यार्चिरादिमार्गे स्थानमाह। तडितोऽधिवरुण· सम्बन्धात्। पठितो वरुणादिमार्गपर्वत्वेन सम्बध्यते न वेति सन्देहेऽर्चिषोऽहरित्यादि पञ्चम्याऽर्चिरादीनां क्रमेण मार्गपर्वतया विरुद्धत्वाद्वायोरिव स्थानविशेषश्रुत्यभावादलब्धस्थानो वरुणादिर्न सम्बध्यत इति सिद्धान्तमाह। आदित्यादिति। अपां विद्युत्कार्यत्वेन सम्बन्धे मानमाह। विद्योतत इति। वरुणस्याब्द्वारा विद्युत्सम्बन्धादागन्तुकानामन्ते निवेश इति न्यायाच्च विद्युदानन्तर्ये सति यथापाठमिन्द्रप्रजापत्योः क्रम इत्यर्थ ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

तेष्वेवार्चिरादिषु संशयः, किमेतानि मार्गचिह्नान्युत भोगभूमयोऽथवा नेतारो गन्तृणामिति । तत्र मार्गलक्षणभूता अर्चिरादय इति तावत् प्राप्तं, तत्स्वरूपत्वादुपदेशस्य । यथा हि कश्चिल्लोके ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्यसि इति । एवमिहाप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमित्याह । अथ वा भोगभूमय एता इति प्राप्तं । तथा हि लोकशब्देनाग्न्यादीनुपबध्नाति 'अग्निलोकमागच्छति' इत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते 'मनुष्यलोकः पितृलोको देवलोकः' इति च । तथा च ब्राह्मणं 'अहोरात्रेषु तेषु लोकेषु सज्यन्ते' इत्यादि । तस्मान्नातिवाहिका अर्चिरादयः । अचेतनत्वादपि एतेषामातिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषाः दुर्गेषु मार्गेष्वतिवाह्याननतिवाहयन्ति इत्येव प्राप्ते ब्रूमः । आतिवाहिका एवैते भवि-

---

एवमर्चिरादीनां क्रमं निरूप्य स्वरूपं निरूपयति । आतिवाहिकास्तल्लिङ्गात् । चिह्ननिर्देशसाम्यात् लोकशब्दान्नेतृत्वलिङ्गाच्च संशयः । आद्यपक्षद्वयं पूर्वपक्षः अर्चिरादयो विद्युदन्ताश्चेतना नेतारस्तामानवपुरुषेण नेत्रा सह पठितत्वादिति सिद्धान्तयति । एवमित्यादिना । यथाश्रुतमानवस्यास्तु नेतृत्वं नार्चिरादीनामिति शङ्कते । तद्वचनमिति । पुरुषस्यामानवस्य नेतृत्वस्येत्युभयपरत्वे वाक्यभेदः स्यादतोऽर्चिरादिपदैर्नेतार एव मानवाः प्रकृताः प्रकरणबलात् विद्युदनन्तरं मानवस्य नेतृ-

तुमर्हन्ति। कुतः तल्लिङ्गात्। तथा हि 'चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः स एतान् ब्रह्म गमयति' इति सिद्धवद्गमयितृत्वं दर्शयति। *यावद्वचनं वाचनिकमिति न्यायात्, तद्वचनं तद्विषयमेवोपक्षीणमिति चेत्, न, प्राप्तमानवत्वनिवृत्तिमात्रपरत्वाद्विशेषणस्य। यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति। ननु लिङ्गमात्रमगमकं न्यायाभावात्। नैष दोषः॥

## उभयव्यामोहात् तत्सिद्धेः॥ ५॥

ये तावदर्चिरादिमार्गगास्ते देहवियोगात् संपिण्डितकरणग्रामा इत्यस्वतन्त्राः अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतनादेवताविशेषा अतियात्रायां नियुक्ता इति गम्यते। लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणग्रामाः परप्रयुक्तवर्त्मानो भवन्ति। अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः। न हि रात्रौ प्रेतस्याहःस्वरूपाभिसम्भव उपपद्यते। न च प्रतिपालनमस्ति इत्युक्तमधस्तात्। ध्रुवत्वात् देवतात्मनां नायं दोषो भवति।

---

प्राप्तौ प्रकरणाप्राप्तनेतृत्वानुवादेनामानवत्वमनेकमेव प्रतिपाद्यत इति वक्तव्यमित्याह। नेति। नेतृप्रकरणानङ्गीकारे मानवः पुरुषो गमयतीति वाक्यं भिद्येत ह्यमानवत्व नेतृत्वस्याप्यप्राप्तेरिति भावः। नेतृत्वानुवादलिङ्गस्यानुग्राहकन्यायपरं सूत्रं गृह्णाति। नन्विति॥

यद्यनेतारोऽचेतना एवार्चिरादयः तर्हि मार्गतद्गन्त्रोरुभयोरपि व्यामोहादज्ञत्वादूर्ध्वगतिर्न स्यादतः स्वयं प्रलयशून्यश्चेतनान्तरेण नेय

---

* यावदित्यादि न्यायादित्यन्त वर्ध० पु० नास्ति।

अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते। 'अर्चिषा-ऽहः' इत्यादिनिर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते। अर्चिषा हेतुनाऽहरभिसम्भवन्ति अह्ना हेतुनाऽऽपूर्यमाणपक्षमिति। तथा च लोकप्रसिद्धेष्वप्यातियात्रिकेष्वेवंजातीयक उपदेशो दृश्यते गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तं इति। अपि चोपक्रमे 'तेऽर्चिषमभिसम्भवन्ति' इति सम्बन्धमात्रमुक्तं न सम्बन्धविशेषः कश्चित्। उपसंहारे तु 'स एतान् ब्रह्म गमयति' इति सम्बन्धविशेषोऽतिवाह्यातिवाहकलक्षण उक्तः, तेन स एवोपक्रमेऽपीति निर्धार्यते। सम्पिण्डितकरणत्वादेव च गन्तॄणां न तत्र भोगसम्भवः। लोकशब्दस्तु अनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते अन्येषां तल्लोकवासिनां भोगभूमि-त्वात्। अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते वायु-स्वामिकं लोकं प्राप्तो वायुनेति योजयितव्यं। कथं पुनराति-वाहिकत्वपक्षे वरुणादिषु तत्सम्भवः, विद्युतो ह्यधिवरुणादय उपक्षिप्ताः। विद्युतस्त्वानन्तरमाब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमित्यत उत्तरं पठति॥

---

इति लौकिकन्यायानुग्रहानुसिद्धेर्नैष्ठत्वसिद्धेश्चक्तलिङ्गन्यायोपेतमिति सूत्रार्थः। पूर्वपक्षद्वयं दूषयति। अनवस्थितत्वादित्यादिना। अर्चिर-हरादीनामस्थिरत्वाद्रात्र्यादौ मृतस्य प्रतीक्षा नास्तीत्युक्तत्वाच्च न मार्ग-चिह्नत्वं भोग्यत्वं वा, देवतात्वे त्वस्थिरत्वदोषो नास्तीत्यर्थः। यत्तूप-देशस्वारस्याच्चिह्नत्वं भातीति तत्राह। अर्चिषेऽहरिति। चिह्नत्व-नेष्टत्वसंशयाच्च वाक्यशेषान्निर्णय इत्याह। अपि चेति। यदुक्तं लोक-शब्दाद्भोग्यत्वमिति तत्रेत्याह। सम्पिण्डितेति। सूत्राक्षरं गृह्णाति। कथं पुनरिति॥

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

ततो विद्युदभिसम्भवनादूर्ध्वं, विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्ति इत्यवगन्तव्यं, 'तान् वैद्युतान् पुरुषोऽमानवः' 'स एतान् ब्रह्म-लोकं गमयति' इति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्तु तस्यैवाप्रतिबन्धकरणेन साहाय्यानुष्ठानेन वा केनचिदनुग्राहकाः इत्यवगन्तव्यम्। तस्मात् सूक्तमातिवाहिका देवतात्मानोऽर्चि-रादयः इति॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

'स एतान् ब्रह्म गमयति' इत्यत्र विचिकित्स्यते, किं कार्य-मपरं ब्रह्म गमयति आहोस्वित् परमेवाविकृतं मुख्यं ब्रह्मेति। कुतः संशयः, ब्रह्मशब्दप्रयोगात् गतिश्रुतेश्च। तत्र कार्यमेव सगुणमपरं ब्रह्म नयत्येतानमानवः पुरुषः इति बादरिरा-चार्यो मन्यते। कुतः अस्य गत्युपपत्तेः। अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्वात्, न तु परस्मिन् ब्रह्मणि गन्तृत्वं

---

अमानवो विद्युल्लोकमागतो वैद्युतस्तेनेत्यर्थः। श्रुतौ तु वैद्युताल्लो-कादित्यर्थः। श्रुत्या वरुणादीनां नेतृत्वाभावेऽप्यनुग्राहकत्वेन मार्गान्त-र्भाव इति भावः॥

एवं मार्गं निरूप्य गन्तव्यं चिन्तयति। कार्यं बादरिरस्य गत्युपपत्तेः। परब्रह्म गन्तव्यमिति पूर्वपक्षे मार्गस्य मुक्त्यर्थता कार्यब्रह्मेति सिद्धान्ते भोगार्थतेति मत्वा प्रथमं सिद्धान्तमाह। तत्र कार्यमेवेति। सर्वगत-

गन्तव्यत्वं गतिर्वाऽवकल्पते सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तॄणां ॥

विशेषितत्वाच्च ॥ ८ ॥

'ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' इति श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव गतिरित्यवगम्यते। न हि बहुवचनेन विशेषणं परस्मिन् ब्रह्मण्यवकल्पते। कार्ये त्ववस्थाभेदोपपत्तेः सम्भवति बहुवचनं। लोकश्रुतिरपि विकारगोचरायामेव सन्निवेशविशिष्टायां भोगभूमावाञ्जसी, गौणी त्वन्यत्र 'ब्रह्मैव लोक एष सम्राट्' इत्यादिषु। अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन् ब्रह्मणि नाञ्जसः स्यात्, तस्मात् कार्यविषयमेवेदं नयनम्। ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते समस्तस्य हि जगतो जन्मादिकारणं ब्रह्मेति प्रतिष्ठापितमित्यत्रोच्यते ॥

* सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

---

स्थापि प्रदेशान्तरविशिष्टत्वेनाकाशस्य गन्तव्यत्वं दृष्टं, ब्रह्मणस्तु प्रत्यक्त्वान्न कथमपि गन्तव्यतेत्यर्थः ॥

ब्रह्मलोकेष्विति बहुवचनलोकशब्दाधारसप्तमीश्रुतिभिर्गन्तव्यस्य परस्माद्व्यावृत्तत्वाच्च न परं गन्तव्यमित्याह। विशेषितत्वाच्चेति। परब्रह्मणि भोग्यत्वोपचाराद्गौणी लोकश्रुतिरित्यर्थः। नपुंसकब्रह्मशब्देन कारणवाचिना कार्यं लक्ष्यते गन्तव्यत्वन्यायोपेतबहुवचनाद्यनेकश्रुत्यनुपपत्त्या न चानावृत्तिलिङ्गात् परस्य गन्तव्यता, क्रममुक्त्या लिङ्गस्यान्यथासिद्धेरिति भावः ॥

[* सामीप्यादिति, कार्यात्यय इति च सूत्रद्वयं ...

तुशब्द आशङ्काव्यावृत्त्यर्थः। परब्रह्मसामीप्यादपरस्य ब्रह्मणस्तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते। परमेव हि ब्रह्म विशुद्धोपाधिसम्बन्धात् क्वचित् कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः। ननु कार्यप्राप्तावनावृत्तिश्रवणं नोपपद्यते। न हि परस्मात् ब्रह्मणोऽन्यत्र क्वचित् नित्यता सम्भवति। दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिं 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति। 'तेषामिह न पुनरावृत्तिरस्ति तयोर्द्ध्वमायन्नमृतत्वमेतीति' चेति। अत्र ब्रूमः॥

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्॥ १०॥

कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परं पदं प्रतिपद्यन्त इति। इत्थं क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या। न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः सम्भवति इत्युपपादितम्॥

## स्मृतेश्च॥ ११॥

स्मृतिरप्येतमर्थमनुजानाति—

---

प्रतिसञ्चरो महाप्रलयः, तस्मिन् प्राप्ते परस्य हिरण्यगर्भस्यान्ते समष्टिलिङ्गशरीरस्वरूपविकारावसाने ब्रह्मलोकनिवासिनः कृतात्मानः

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं' ॥ इति।

तस्मात् कार्यब्रह्मविषया गतिः श्रूयत इति सिद्धान्तः। कः पुनः पूर्वपक्षमाशङ्क्यायं सिद्धान्तः प्रतिष्ठापितः 'कार्यं बादरिः' इत्यादिनेति, स इदानीं सूत्रैरेवोपप्रदर्श्यते।

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

जैमिनिस्त्वाचार्यः 'स एतान् ब्रह्म गमयति' इत्यत्र परमेव ब्रह्म प्रापयति इति मन्यते। कुतः मुख्यत्वात्। परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनं गौणमपरं। मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति ॥

## दर्शनाच्च ॥ १३ ॥

'तयोर्ध्वमायन्नमृतत्वमेति' इति च गतिपूर्वकं अमृतत्वं दर्शयति। अमृतत्वञ्च परस्मिन् ब्रह्मण्युपपद्यते न कार्ये, विनाशित्वात् कार्यस्य। 'अथ यत्रान्यत् पश्यति तदल्पं तन्मर्त्यम्' इति वचनात्। परविषयैव चैषा गतिः कठवल्लीषु पठ्यते, न हि

---

शुद्धधियस्तत्रोत्पन्नसम्यग्धियः सर्वे ब्रह्मणा मुच्यमानेन सह परं पदं प्रविशन्तीति योजना। एवं सिद्धान्तमुक्त्वा तेन निरस्तपूर्वपक्षमाह। कः पुनरित्यादिना ॥

दहरविद्यायां कठवल्लीषु परब्रह्मप्रकरणे च तयोर्ध्वमायन्निति गतिर्दर्शिता ॥

एवं ब्रह्मश्रुत्यमृतत्वलिङ्गाभ्यां प्रकरणाच्च परविषया गतिरित्युक्तं

तत्र विद्यान्तरप्रक्रमोऽस्ति 'अन्यत्र धर्मादन्यत्राधर्मात' इति परस्यैव ब्रह्मण प्रक्रान्तत्वात्॥

## न च कार्ये प्रतिपत्त्यभिसन्धि ॥ १४ ॥

अपि च 'प्रजापते सभा वेश्म प्रपद्ये' इति, नाय कार्यविषय प्रतिपत्त्यभिसन्धि । 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति कार्यविलक्षणस्य परस्यैव ब्रह्मण प्रकृतत्वात् 'यशोऽह भवामि ब्राह्मणानाम्' इति च सर्वात्मत्वेनोपक्रमात् 'न तस्य प्रतिमास्ति यस्य नाम महद्यश ' इति च परस्यैव ब्रह्मणो यशो-नामत्वप्रसिद्धे । सा चेय वेश्मप्रतिपत्तिर्गतिपूर्विका या हार्दवि-द्यायामुदिता 'तदपराजिता पूर्ब्रह्मण प्रभुविमित हिरण्मयम्' इत्यत्र। पदैरपि च गत्यर्थत्वान्मार्गापेक्षताऽवसीयते । तस्मात् परब्रह्मविषया गतिश्रुतय इति पक्षान्तर । तावेतौ द्वौ पक्षा-वाचार्येण सूचितौ । गत्युपपत्त्यादिभिरेक, मुख्यत्वादिभिर-पर । तत्र गत्युपपत्त्यादय प्रभवन्ति मुख्यत्वादीनाभासयितु

---

सप्रति प्रजापते सभा वेश्म प्राप्नुयामिति उपासकस्य मरणकाले कार्यप्राप्तिसङ्कल्पश्रुतेर्न पर गन्तव्यमिति शङ्का निरस्यति। न च कार्य इति। परस्य प्रकृतत्वात यश पदस्य परमात्मनामत्वप्रसिद्धा यश पदेनात्मोक्तिर्यश ख्यात्मा ब्राह्मणानामह भवामि, तथा राज्ञा यशो विशा यश इति सार्वात्म्यलिङ्गाच्च परप्राप्तिसङ्कल्प एवाय मित्यर्थ । अस्तु वेश्मप्रतिपत्तीच्छा परब्रह्मविषया तथापि सा कथ गतिपूर्विका स्यादित्यत आह। सा चेति। तत्र ब्रह्मलोके विद्याविहीनैव पराजिता पूरस्ति ब्रह्मणो हिरण्यगर्भस्य तेनैव प्रभुना विमित निर्मित हिरण्मय वेश्मास्ति तत प्रतिपद्यते ।

न तु मुख्यत्वादयो गत्युपपत्त्यादीन् इत्याद्य एव सिद्धान्तो व्याख्यातः, द्वितीयस्तु पूर्वः पक्षः। नह्यसत्यपि सम्भवे मुख्यस्यैवार्थस्य ग्रहणमिति कश्चिदाज्ञापयिता विद्यते। परविद्याप्रकरणेऽपि च तत्स्तुत्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते 'विस्वङ्ङन्या उत्क्रमणे भवन्ति' इतिवत्। 'प्रजापतेः सभां वेश्म प्रतिपद्ये' इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसन्धिर्न विरुध्यते। सगुणेऽपि ब्रह्मणि च सर्वात्मत्वकीर्तनं 'सर्वकर्मा सर्वकामः' इत्यादिवत् कल्पते। तस्मादपरविषया एव गतिश्रुतयः। केचित् पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति उत्तराणि सिद्धान्तसूत्राणीत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति। तदनुपपन्नं, गन्तव्यत्वानुपपत्तेर्ब्रह्मणः, 'यत् सर्वगतं सर्वान्तरं सर्वात्मकञ्च परं ब्रह्म' 'आकाशवत् सर्व-

---

विद्वानिति दहरविद्यायां गतिपूर्विका वेश्मप्राप्तिरुक्ता तेन परब्रह्मण्यपि वेश्मप्रतिपत्तिशब्दसामान्याद्गतिपूर्वकत्वं तस्याः सिध्यतीत्यर्थः। किञ्च पद गताविति धातुपाठात् वेश्म प्रपद्ये इत्यत्र मार्गापेक्षा भातीत्याह। पदेरपीति। पूर्वपक्षमुपसंहरति। तस्मादिति। आद्य एव सिद्धान्तपक्ष इति स्फुटीकर्तुमुपक्रमते। ताविति। ब्रह्मशब्दमुख्यत्वादिहेतूनामाभासत्वं स्फुटयति। न हीति। गन्तव्यत्वस्य ब्रह्मलोकेष्विति बहुवचनादेः सङ्कल्पादेव गन्धादिदिव्यभोगश्रुतेश्च परब्रह्मण्यसम्भवान्मुख्यार्थत्याग इत्यर्थः। यद्यप्येतद्वै सत्यकाम परञ्चापरञ्च ब्रह्मेत्यादिश्रुतिषु प्रयोगसाम्याद् ब्रह्मशब्द उभयत्र रूढतया मुख्य एव तथापि पूर्णे परस्मिन्नवयवार्थनिरतिशयमहत्त्वस्य लाभादपरब्रह्मण्यमुख्य इत्यङ्गीकृतमिति मन्तव्यं। यदुक्तं कठवल्लीषु प्रकरणबलादिति परविषयेति तत्राह। परेति। यथा विद्यासंस्तुत्यर्थ

गतस्य नित्यः’ ‘यत्साक्षादपरोक्षाद्ब्रह्म’ ‘य आत्मा सर्वान्तरः’ ‘आत्मैवेदं सर्वं ब्रह्मैवेदं विश्वं वरिष्ठम्’ इत्यादिश्रुतिनिर्धारितविशेषं, तस्य गन्तव्यता न कदाचिदप्युपपद्यते। न हि गतमेव गम्यते, अन्यो ह्यन्यद्गच्छति इति प्रसिद्धं लोके। ननु लोके गतस्याऽपि गन्तव्यता देशान्तरविशिष्टस्य दृष्टा, यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छति। तथाऽनन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्द्धक्यं स्वात्मभूतमेव गन्तव्यं दृष्टं, तद्वत् ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात् कथञ्चित् गन्तव्यता स्यादिति। न, प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः। ‘निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्’ ‘अस्थूलमनण्वह्रस्वमजमदीर्घं’ ‘स बाह्याभ्यन्तरो ह्यजः’ ‘स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म’ ‘स एष नेति नेति’ इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनः कल्पयितुं शक्यते, येन भूप्रदेशवयोऽवस्थान्यायेनास्य गन्तव्यता स्यात्। भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकाल-

---

[illegible] स्तुत्यर्थं तदसम्बन्धेनाप्यन्तरं कीर्तनं। तथा परविद्यास्तुत्यर्थं तत्प्रकरणेऽप्यपरविद्याश्रय इति कीर्तनं युज्यते, गतिं विनापि हि परविद्या निरतिशयफला तस्यास्त्वपरविद्याफलगतिसाध्यमन्तर्भवति इति स्तुतिलाभादित्यर्थः। यदप्युक्तं प्राप्तिसङ्कल्पोऽपि प्रकृतपरविषय इति तत्रेत्याह प्रजापतेरिति। प्रजापतिसभावेश्मश्रुतिभिस्तत्सन्निधानात्तत्कृतवाक्येन च प्रकरणं बाध्यं, यशोऽहमिति सार्वात्म्यं तूपासनार्थमपरब्रह्मण्यपि युज्यत इत्यर्थः। स्वपक्षमुक्त्वा परमतं दूषयति केचिदित्यादिना। सर्वगतस्य स्वात्मभूतस्यापि ब्रह्मणः संसारदेशात् देशा-

'विशिष्टा गन्तव्यता । जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत् । न, विशेषनिराकरणश्रुतीनामनन्यार्थत्वात् । उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत् । न, तासामेकत्वप्रतिपादनपरत्वात् । मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति । कस्मात् पुनरुत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वं न पुनरितरशेषत्वमितरासामिति । उच्यते, विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात् । न ह्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः कचिदाकाङ्क्षोपजायते पुरुषार्थसमाप्तिबुद्ध्युत्पत्तेः 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' 'अभयं वै जनक प्राप्तोऽसि' 'विद्वान् न बिभेति कुतश्चन' 'एतं ह वाव न तपति किमहं साधु नाकरवं

---

न्तरेऽथ तत्कालात् कालान्तरेऽथ विशिष्टतया गन्तव्य स्यादिति पृथिवीवयोर्दृष्टान्ताभ्यां शङ्कते । नन्विति । येन विनैव प्राप्तत्वमनन्यत्वं, अवस्थातद्वतोरभेदात् स्वात्मभूतत्वं । ननु युक्तं भूवयसोः प्राप्तयोरपि देशान्तरकालान्तरविशिष्टत्वेन गन्तव्यं तयोर्गन्तृभिन्नत्वात्, ब्रह्मणस्तु गन्तृभिन्नस्य कथं गन्तव्यत्वं तत्राह । सर्वशक्ति इति । या प्राप्ता भूः सा गन्तव्या यत्र गन्तव्यं देशान्तरं तत्प्राप्तं इति । कुतः प्राप्तस्य गन्तव्यता वयसोऽपि कालान्तरेऽभिव्यक्तिमात्रं नागन्तव्यत्वमिति वस्तुगतिः, अङ्गीकृत्य विशिष्टभूवयसोर्गन्तव्यतां परब्रह्मणो देशकालवैशिष्ट्याभावात् कथंचिदपि गन्तव्यतेत्याह । नेत्यादिना । यथादिमत् परं ब्रह्म इत्याद्या स्मृतिर्दृश्यविशेषस्य दृशि कल्पितत्वाद् दृगात्मनो निर्विशेषितेति न्यायः । सगुणमिव ब्रह्म स्वनात्मापेक्षया परं गन्तव्यं, निर्विशेषन्तु नाप्यैवेति शङ्कते । जगदुत्पत्तीति । किं निर्विशेषस्यासत्त्वं माना-

किमहं पापमकरवम्' इत्यादिश्रुतिभ्यः। तथैव च विदुषां तुल्यनुभवादिदर्शनात्, विकारानृताभिसन्ध्यपवादाच्च 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति। अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यं। नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थत्वप्रतिपादनसामर्थ्यमस्ति, प्रत्यक्षन्तु तासामन्यार्थत्वं समनुगम्यते। तथा हि 'तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति' इत्युपन्यस्योदर्के सत एव एकस्य जगन्मूलस्य विज्ञेयत्वं दर्शयति। 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इति च। एवमुत्पत्त्यादिश्रुतीनामैकात्म्यावगमपरत्वात् नानेकशक्तियोगो ब्रह्मणः, अतश्च गन्तव्यत्वानुपपत्तिः। 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति च परस्मिन् ब्रह्मणि गतिं निवारयति। तद्व्याख्यातं 'स्पष्टो ह्येकेषाम्' इत्यत्र। गतिकल्पनायाञ्च गन्ता जीवो गन्तव्यस्य ब्रह्मणोऽवयवो विकारोऽन्यो वा ततः स्यात् अत्यन्ततादात्म्ये गमनानुपपत्तेः। यद्येवं ततः किं स्यात्। उच्यते यद्येकदेशस्तेनैकदेशिनो नित्यप्राप्तत्वात् न पुनर्ब्रह्मगमनमुपपद्यते।

---

भावात् सविशेषश्रुतिविरोधाद्वा नाद्य इत्याह। नेति। द्वितीयं शङ्कते। उत्पत्त्यादीति। सविशेषश्रुतीनां निर्विशेषश्रुतिशेषत्वात् न विरोध इत्याह। नेति। निर्विशेषश्रुतीनामेव सविशेषत्वं किं न स्यादित्याह। कस्मादिति। तासां स्वार्थे फलवत्त्वेन निराकाङ्क्षत्वात् शेषिता विशेषश्रुतीनां त्वफलत्वात् निषेध्य विशेषसमर्पणादिद्वारेण शेषत्वं फलवत् सन्निधावफलं तदङ्गमिति न्यायादित्याह। उच्यत इत्यादिना। न

एकदेशैकदेशित्वकल्पना, च ब्रह्मण्यनुपपन्ना, निरवयवत्वप्रसिद्धेः । विकारपक्षेऽप्येतत्तुल्यं, विकारेणापि विकारिणो नित्यप्राप्तत्वात् । न हि घटो मृदात्मतां परित्यज्यावतिष्ठते, परित्यागेऽभावप्राप्तेः । विकारावयवपक्षयोश्च तद्वतः स्थिरत्वात् ब्रह्मणः संसारगमनमप्यनवकॢप्तं । अथान्य एव जीवो ब्रह्मणः सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति । व्यापित्वे गमनानुपपत्तिः । मध्यमपरिमाणत्वे चानित्यत्वप्रसङ्गः । अणुत्वेऽपि कृत्स्नशरीरवेदनानुपपत्तिः । प्रतिषिद्धे चाणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात् । परस्माच्चान्यत्वे जीवस्य 'तत्त्वमसि' इत्यादिशास्त्रबाधप्रसङ्गः । विकारावयवपक्षयोरपि समानो दोषः । विकारावयवयोस्तद्वतोऽनन्यत्वाददोष इति चेत् । न, मुख्यैकत्वानुपपत्तेः । सर्वेषु चैतेषु पक्षेष्वनिर्मोक्षप्रसङ्गः, संसार्यात्मत्वानिवृत्तेः । निवृत्तौ वा स्वरूपनाशप्रसङ्गः ब्रह्मात्मत्वानभ्युपगमात् । यत्तु कैश्चिज्जल्प्यते नित्यनैमित्तिकानि कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, सांप्रतदेहोपभोग्यानि च

---

केवलं न्यायात् शेषता किन्तु श्रुत्याऽपीत्याह । प्रत्यक्षन्त्विति । तत्र मूल-कारणे ब्रह्मण्येतत् सर्वं जगदात्मकं कार्यमुत्पन्नमित्युपक्रम्य तेन शुङ्गेन सन्मूलमन्विच्छेत्युपसंहारे सत एव ज्ञेयत्वमुक्तं छान्दोग्ये तथा तैत्ति-रीयकेऽपि जगज्जन्माद्यनुवादेन ब्रह्मण एव ज्ञेयत्वं दर्शितमतः स्मृति-श्रुतीनां श्रुत्यैव निर्विशेषधीशेषता भातीत्यर्थः । एवं ब्रह्मणो निर्वि-शेषत्वात् न गन्तव्यमिति फलितमाह । एवमिति । स्पष्टनिषेधाच्च परस्य न गमनमित्याह । न तस्येति । एवं गन्तव्यालोचनया गतिं निरस्य

कर्माण्युपभोगेनैव क्षप्यन्त इति, अतो वर्तमानदेहपातादूर्द्ध्वं देहान्तरप्रतिसन्धानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यति इति। तदसत्, प्रमाणाभावात्। नह्येतत् शास्त्रेण केनचित् प्रतिपादितं, मोक्षार्थी इत्थं समाचरेत् इति। स्वमनीषया त्वेतत् तर्कितं यस्मात् कर्मनिमित्तः संसारस्तस्मात् निमित्ताभावात् न भविष्यति इति। न चैतत् तर्कयितुं शक्यते निमित्ताभावस्य दुर्ज्ञानत्वात्। बहूनि कर्माणि जात्यन्तरसञ्चितानि इष्टानिष्टविपाकान्येकैकस्य जन्तोः सम्भाव्यन्ते तेषां विरुद्धफलानां युगपदुपभोगासम्भवात् कानिचिल्लब्धावसराणीदं जन्म निर्मिमते कानिचित्तु देशकालनिमित्तप्रतीक्षाण्यासत इत्यतस्तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासम्भवात् न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुं कर्मशेषसद्भावसिद्धिश्च। 'तद्य इह रमणीयचरणाः ततः शेषेण' इत्यादिश्रुतिस्मृतिभ्यः। स्यादेतत् नित्यनैमित्तिकानि

---

गन्त्रालोचनयापि निरस्यति। गतिकल्पनायां चेत्यादिना। भेदाभेदेन द्वौ कल्पावत्यन्तभेदस्तृतीयः कल्पः। नन्वत्यन्ताभेदकल्प किमिति नोक्तस्तत्राह। अत्यन्तेति। कल्पत्रये किं दूषणमिति पृच्छति। यद्येवमिति। कल्पद्वयेऽपि दोषान्तरमाह। विकारावयवपक्षयोश्चेति। विकारावयवरूपजीवविशिष्टस्य ब्रह्मणः स्थिरत्वात् जीवाना गत्यागती न स्याता। नह्यचलातिस्थूलप्रासादस्थयोर्मण्डूकपाषाणावयवयोश्चलनमस्ति इत्यर्थ। तृतीयकल्पमनूद्य विकल्प्य दूषयति। अथेत्यादिना। अभेदश्रुतिविरोधस्वाभाविकत्वज्ञानात् कल्पितोपाधिभिर्गत्यागतिविभ्रम इति भाव।

तेषां क्षेपकाणि भविष्यन्ति इति। तन्न, विरोधाभावात्। सति हि विरोधे क्षेप्यक्षेपकभावो भवति न च जन्मान्तरसञ्चितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः, शुद्धिरूपत्वाविशेषात्। दुरितानां त्वशुद्धिरूपत्वात् सति हि विरोधे भवतु क्षेपणं। न तु तावता देहान्तरनिमित्ताभावसिद्धिः। सुकृतनिमित्तत्वोपपत्तेः दुश्चरितस्याप्यशेषक्षपणानवगमात्। न च नित्यनैमित्तिकानुष्ठानात् प्रत्यवायानुत्पत्तिमात्रं न पुनः फलान्तरोत्पत्तिरिति प्रमाणमस्ति फलान्तरस्याप्यनुनिष्पादिनः सम्भवात्। स्मरति ह्यापस्तम्बः। तद्यथा 'आम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इति। नचासति सम्यग्दर्शने सर्वात्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित् प्रतिज्ञातुं शक्यं, सुनिपुणानामपि सूक्ष्मापराधदर्शनात्। संशयितव्यं तु भवति तथापि निमित्ताभावस्य दुर्ज्ञानत्वमेव। न चानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्यात्मनः कैवल्यमाकाङ्क्षितुं शक्यं अग्न्यौष्ण्यवत् स्वभावस्यापरिहार्यत्वात्। स्या-

---

रूपो दोषो मम नास्ति इति भेदवाद्याह। विकारावयवयोरिति। भिन्नयोरभेदो मुख्यो न युक्तो विरोधादिति परिहरति। नेति। किञ्च पक्षत्रयमप्ययुक्तं संसारित्वस्य तात्त्विकजीवभावस्य नाशः जीवस्वरूपनाशप्रसङ्गात्। नचास्माभिरिव त्वया ब्रह्मात्मत्वं जीवस्य तात्त्विकरूपमङ्गीकृतं यदस्य संसारनाशोऽपि न स्यादित्याह। सर्वेष्विति। ननु किं ब्रह्मत्वेन संसाराभावः किन्तु मोक्षः स च कर्माभावमात्रेण सेत्स्यति इति कर्मजडानां मतमुद्भाव्य निरस्यति। यत्त्वित्यादिना। तदिति

देतत्, कर्तृत्वभोक्तृत्व कार्यमनर्थो न तच्छक्ति तेन शक्त्यवस्थानेऽपि कार्यपरिहारादुपपन्नो मोक्ष इति। तच्च न शक्ति, *तद्भावे कार्यप्रसवस्य दुर्निवारत्वात्। तथापि स्यात् न केवला शक्तिः कार्यमारभतेऽनपेक्ष्यान्यानि निमित्तान्यत एकाकिनी सा स्थितापि नापराध्यति इति। तच्च न, निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन नित्यसम्बद्धत्वात्। तस्मात् कर्तृत्वभोक्तृत्वस्वभावे सत्यात्मन्यसत्यां विद्यागम्यायां ब्रह्मात्मतायां न कथञ्चन मोक्षप्रत्याशाऽस्ति। श्रुतिश्च 'नान्य पन्था विद्यतेऽयनाय' इति ज्ञानादन्य मोक्षमार्गं वारयति। परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः, प्रत्यक्षादिप्रमाणाप्रवृत्तेरिति चेत्। न, प्राक्प्रबोधात् स्वप्नव्यवहारवत् तदुपपत्तेः। शास्त्रञ्च 'यत्र हि द्वैतमिव भवति तदितर इतर पश्यति' इत्यादिनाऽप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा पुन प्रबुद्धविषये 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येत्' इत्यादिना तदभाव दर्शयति। तदेव परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वात् न कथञ्चन गतिरुपपादयितु शक्या। किंविषया पुनर्गतिश्रुतय इति।

---

एव वृत्त, मोक्षहेतुरित्यस्मिन् अर्थे मानाभावादित्यर्थ। तर्क एव मानमित्यत आह। न चैतत् तर्कयितुमिति। ननु तवाप्येतत् तर्कमात्रमेकस्मिन् जन्मन्यनेकविरुद्धफलाना कर्मणा भोगायोगादवशिष्ट कर्म जन्मान्तरस्य निमित्तमित्याशङ्क्य तन्मानमाह। कर्मशेषसद्भावसिद्धिश्चेति। सन्त्वनारब्धफलानि पुण्यपापानि तेषा नित्यानुष्ठानेन क्षयात् न जन्मान्तरमिति शङ्कते। स्यादेतदिति। पुण्येन पुण्यस्य न नाश अविरोधादन्यथाऽतिप्रसङ्गात पापस्यापि सर्वात्मना

---

* सद्भावे इति वर्ध०।

उच्यते। सगुणविद्याविषया भविष्यन्ति। तथा हि क्वचित् पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते क्वचित् पर्यङ्कविद्यां क्वचित् वैश्वानरविद्याम्। यत्रापि ब्रह्म प्रकृत्य गतिरुच्यते 'यथा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति तत्रापि च वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैवोपास्यत्वात् सम्भवति गतिः, न क्वचित् परब्रह्मविषया गतिः श्राव्यते। तथथा गतिप्रतिषेधः श्रावितः 'न तस्य प्राणा उत्क्रामन्ति' इति 'ब्रह्मविदाप्नोति परम्' इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे वर्णिते न्यायेन देशान्तरप्राप्त्यसम्भवात् स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रपञ्चप्रविलयापेक्षयाऽभिधीयते। 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिवच्च द्रष्टव्यम्। अपि च परविषया गतिर्व्याख्यायमाना प्ररोचनाय वा स्यादनुचिन्तनाय वा, तत्र प्ररोचनं तावत् ब्रह्म-

पुण्यनाशत्वे मानं नास्तीति सञ्चितपुण्यपापाभ्यां जन्मान्तरं दुर्वारमित्याह। तस्मेत्यादिना। क्रियमाणमित्यादिनापि जन्म स्यात्, कर्मणा पितृलोक इत्यविशेषश्रुतेः, स्मृतेश्चेत्याह। न च नित्येति। प्रत्यवायनिरासार्थं नित्याद्याचारे सत्यनु पश्चात् फलान्तरं निष्पद्यत इत्यत्र दृष्टान्तः। तत् यथेति निमित्ते आरोपिते सति इत्यर्थः। तथापि काम्यादिकर्मसत्तानिश्चयो नास्तीत्याह। संशयितव्यमिति। ज्ञानं विना देहपाते मोक्ष एवेति निश्चयालाभात् त्वत्पक्षे चातिरिति भावः। ब्रह्माभिन्नस्य जीवस्य कर्तृत्वादिस्वभावस्य मोक्षस्यापि न युक्तेत्याह। न चेति। कर्तृत्वादिरूपं कार्यं न स्वभाव किन्तु तच्छक्तिरिति शङ्कते। स्यादेतदिति। कार्यगम्याया शक्ते कार्यस्यासत्यतानुत्पादे सत्त्वमयुक्तं यतः शक्तिसत्त्वे तद्विषयस्य कार्यस्यादृष्टदेशकालादिनिमित्तानाश्वात्मना शक्तिद्वारा नि-

विदो न गत्युक्त्या क्रियते स्वसंवेद्येनैवाव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः। न च नित्यसिद्धनिःश्रेयसनिवेदनस्यासाध्यफलस्य विज्ञानस्य गत्यनुचिन्तने काचिदप्यपेक्षोपपद्यते, तस्मादपरविषयैव गतिः। तत्र परापरब्रह्मविवेकानवधारणेनापरस्मिन् ब्रह्मणि प्रवर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते। किं द्वे ब्रह्मणी परमपरञ्चेति। बाढं द्वे। 'एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः' इत्यादिदर्शनात्। किं पुनः परं ब्रह्म किमपरं इति। उच्यते। यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधेनास्थूलादिशब्दैर्ब्रह्म व्यपदिश्यते तत्परं। तदेव यत्र नामरूपादिविशेषेण केनचित् विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' इत्यादिशब्दैस्तदपरं। नन्वेवं सत्यद्वितीयश्रुतिरुपरुध्येत। न, अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्। तस्य त्वपरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाण 'स यदि पितृलोककामो भवति' इत्यादिजगदैश्वर्यलक्षण संसारगोचरमेव फलं भवति, अनिवर्तितत्वादविद्यायाः। तस्य च देश-

---

त्यसम्बन्धत्वान्मोक्षो न स्यादिति परिहरति। तच्चेत्यादिना। मोक्षसिद्ध्यर्थं जीवस्य ब्रह्मत्वाङ्गीकारे संसारानपपत्तिमाशङ्क्याज्ञानादुपपत्तिमसकृदुक्तां स्मारयति। परस्मादित्यादिना। प्रासङ्गिकं परिहृत्य परमं प्रकृतमुपसंहरति। तदेवमिति। ननु परविद्यायामप्याप्नोतिपदेन गतिः श्रुतेत्यत आह। ब्रह्मविदाप्नोतीति। वैफल्याच्च गतेर्न परविषयत्वमित्याह। अपि चेति। अनुचिन्तनपक्षं प्रत्याह। न च नित्यसिद्धेति। कथं तर्हि कैश्चित् परविषयत्वं गतेरुक्तमित्याशङ्क्य भ्रान्त्येत्याह। तत्र परापरेति। प्रश्नपूर्वकं *निवेदनस्यासाध्यफलस्य

---

* निवेदनस्येत्यादिः अनवधारणेनेत्यन्तः पाठः व०पु० नास्ति।

विशेषाववद्धत्वात् तत्प्राप्त्यर्थं गमनमविरुद्धम्। सर्वगतत्वेऽपि चात्मन आकाशस्येव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिरित्यवादिष्म 'तद्गुणसारत्वात्'(ब्र॰ सू॰) इत्यत्र। तस्मात् 'कार्यं बादरिः' इत्येष एव पक्षः स्थितः। 'परं जैमिनिः'(ब्र॰ सू॰) इति च पक्षान्तर*प्रतिपादनमात्रप्रदर्शनं प्रज्ञाविकाशनायेति द्रष्टव्यम्॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥ १५ ॥

स्थितमेतत् कार्यविषया गतिर्न परविषयेति। इदमिदानीं सन्दिह्यते, किं सर्वान् विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकमुत कांश्चिदेवेति। किं तावत् प्राप्तं सर्वेषामेवैषां विदुषामन्यत्र परस्मात् ब्रह्मणो गतिः स्यात्। तथा हि 'अनियमः सर्वासाम्' इत्यत्राविशेषेणैषा विद्यान्तरेष्ववतारितेत्येवं प्राप्ते प्रत्याह। अप्रतीकालम्बनानिति। प्रती-

---

गत्यनुचिन्तने काचिदपेक्षोपपद्येत तस्मादपरविषया गति। तत्र परापरब्रह्मविवेकानवधारणे परापरब्रह्मविभाग वदन्नपरब्रह्मणि गतेरर्थवत्त्वमाह। किं द्वे इत्यादिना। व्यापिनो जीवस्य कथं गतिस्तत्राह। सर्वगतत्वेऽपीति॥

एवं गन्तव्यं निरूप्य गन्तॄन्निर्धारयति। अप्रतीकेति॥ 'स एवैनान् ब्रह्म गमयति' इत्यविशेषश्रुते तत्क्रतुन्यायाच्च संशयमाह। इदमिति। अनियमाधिकरणे तत्त्वविदोऽन्यत्र सर्वोपासकानां मार्गोपसंहार उक्त, इदानीमप्रतीकोपासकानामेव मार्गो न सर्वेषां विकारोपासकानामित्युभयथा भावोक्तौ पूर्वोक्तविरोधः स्यात्, तस्मादुपासकमात्रस्योत्तरमार्गसिद्धिरिति पूर्वपक्षफलं, सि-

---

* प्रतिभानेति वध॰ का॰।

कालम्बनान् वर्जयित्वा सर्वानन्यान् विकारालम्बनान्नयति ब्रह्मलोकमिति बादरायणाचार्यो मन्यते। न ह्येवमुभयथा-भावाभ्युपगमे कश्चित् दोषोऽस्ति। अनियमन्यायस्य प्रतीकव्य-तिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्चास्योभयथाभावस्य सम-र्थको हेतुर्द्रष्टव्यः। यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्यमासीदे-दिति श्लिष्यते 'तं यथा यथोपासते तदेव भवन्ति' इति श्रुतेः। न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधानत्वादुपासनस्य। नन्वब्रह्मक्रतुमानपि ब्रह्म गच्छतीति श्रूयते, यथा पञ्चाग्नि-विद्यायां 'स एनान् ब्रह्म गमयति' इति। भवतु यत्रैवमाहत्य-वाद उपलभ्यते तदभावे औत्सर्गिकेन तत्क्रतुन्यायेन ब्रह्म-क्रतूनामेव तत्प्राप्तिर्नेतरेषामिति मन्यते॥

विशेषञ्च दर्शयति॥ १६॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात् पूर्वस्मात् फलविशेषमु-त्तरस्मिनुत्तरस्मिन्नुपासने दर्शयति 'यावन्नाम्नो गतं तत्रास्य यथा-

---

ङ्गान्ते तूभयथाभावसिद्धिः। अदोषादिति सूत्रे पदच्छेदः, अवि-रोधादित्यर्थः। अनियमः सर्वेषामिति सूत्रे सर्वशब्दस्य प्रतीकोपास-कान्यपरत्वादिति भाव। यद्यपि प्रतीकध्यायिना मित्यायाद्ब्रुतीय-स्थानयोरप्रवेशादर्चिरादिमार्गो वाच्यस्तथापि तेषां विद्युत्पर्यन्तमेव गमनमस्तु न ब्रह्मप्राप्तिर्ब्रह्मक्रतुत्वाभावात्। यो यत् ध्यायति स तत्प्रा-प्नोति इति हि तत्क्रतुन्याय· श्रुतिमूल', प्रतीकेषु च नामादिषु ध्येयेषु ब्रह्मणो गुणत्वात्, न ब्रह्मध्यायित्वमस्ति। अस्य च न्यायस्य पञ्चाग्निविद्यायामाहत्यवादात् प्रत्यक्षवचनाद्वाधं इष्ट इति सूत्र-भाष्यार्थ·॥

कामचारो भवति वाग्वाव नाम्नो भूयसी यावद्वाचो गतं तत्रास्य यथाकामचारो भवति मनो वाव वाचो भूयः' इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते, ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात् । तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छङ्करभगवत्पादकृतौ चतुर्थाध्यायस्य तृतीयः पादः ॥ * ॥

---

किञ्च प्रतीकतारतम्येन फलतारतम्यश्रुतेर्न प्रतीकध्यायिनां ब्रह्मप्राप्तिरित्याह । विशेषञ्चेति । तस्मादसति वचने ब्रह्मध्यायिन एव ब्रह्मगन्तार इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ भाष्यरत्नप्रभायां चतुर्थाध्यायस्य तृतीयः पादः ॥ ※ ॥

ॐ परमात्मने नमः ।



## सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥

'एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रूयते। तत्र संशयः, किं देवलोकाद्युपभोगस्थानेष्विवागन्तुकेन केनचिद्विशेषेणाभिनिष्पद्यते आहोस्विदात्ममात्रेणेति। किन्तावत् प्राप्तं स्थानान्तरेष्विवागन्तुकेन केनचिद्रूपेणाभिनिष्पत्तिः स्यात्, मोक्षस्यापि फलत्वप्रसिद्धेः, अभिनिष्पद्यत इति चोत्पत्तिपर्यायत्वात्। स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्ववस्थासु स्वरूपानपायाद्विभाव्येत। तस्माद्विशेषेण केनचिदभिनिष्पद्यत इत्येवं प्राप्ते ब्रूमः, केवलेनैवात्मनाविर्भवति न धर्मान्तरेणेति।

---

ॐ ब्रह्मणे नमः ।

पूर्वपादे ब्रह्मोपासकानां कार्यब्रह्मप्राप्तिरुक्ता, सम्प्रति तेषामैश्वर्यविशेषं वक्ष्यन् ब्राह्मलौकिकं पादस्योत्तरार्द्धेन प्रपञ्चयिष्यन्नादावभ्यर्हितपरविद्याप्राप्तं निर्विशेषब्रह्मभावमाह। सम्पद्याविर्भावः स्वेनशब्दात्। निर्गुणविद्याफलवाक्यमुदाहृत्य स्वशब्दस्य स्वीयागन्तुकरूपस्वात्मरूपवाचित्वाभ्यां संशयमाह। एवमिति। पूर्वपक्षे मोक्षस्य स्वर्गादविशेषः, सिद्धान्ते विशेष इति फलं, तत्र मोक्षं ह्यागन्तुकः फलत्वात् स्वर्गवदिति

कुतः स्वेन रूपेणाभिनिष्पद्यते इति, स्वशब्दात्, अन्यथा हि स्वशब्देन विशेषणमनवकॢप्तं स्यात्। नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति। न, तस्यावचनीयत्वात्। येनैव हि केनचिद्रूपेणाभिनिष्पद्यते तस्यैवात्मीयत्वापत्तेः स्वेनेति विशेषणमनर्थकं स्यात्। आत्मवचनतायान्तु अर्थवत् केवलेनैवात्मरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणापीति। कः पुनर्विशेषः पूर्व्वावस्थास्विह च स्वरूपानपायसाम्ये सति इत्यत आह॥

## मुक्तः प्रतिज्ञानात्॥ २॥

योऽत्राभिनिष्पद्यत इत्युक्तः स पूर्व्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते पूर्व्वत्रान्धो भवत्यपि रोदितीव विनाशमेवापीतो भवतीति च अवस्थात्रयकलुषितेनात्मना इत्ययं विशेषः, कथं पुनरवगम्यते मुक्तोऽयमिदानीं भवतीति। प्रतिज्ञानादित्याह। तथाहि 'एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय 'अ-

---

न्यायोपेतयाऽभिनिष्पत्तिश्रुत्या पूर्वपक्षमाह। किमित्यादिना। स्वशब्दश्रुतिबाधितो न्याय अभिनिष्पत्तिश्च साक्षात्कारवृत्त्यभिप्रायो बन्धध्वसजन्मन्यौपचारिक्येवेति मत्वा सिद्धान्तयति। एवमिति। मोक्षस्य फलत्वेन प्रागागन्तुकत्वनिरासार्थः स्वशब्द इति युक्तं स्वीयवाचित्वेऽनर्थकानुवाद स्यादित्यर्थः। सूत्रान्तरं गृह्णाति। क पुनरिति॥

जागरिते ह्यान्ध्यादिदेहधर्मवान् भवति स्वप्ने तु हत इव केन चित्। अपि च पुत्रादिनाशाद्रोदितीव भवति, सुषुप्तौ तु विशेषाज्ञानाद्वि

शरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति चोपन्यस्य 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति चोपसंहरति। तथाऽऽख्यायिकोपक्रमेऽपि 'य आत्माऽपहतपाप्मा' इत्यादिमुक्तात्मविषयमेव प्रतिज्ञानं। फलसिद्धिरपि मोक्षस्य बन्धननिवृत्तिमात्रापेक्षा नापूर्वोपजनापेक्षा। यदप्यभिनिष्पद्यत इति उत्पत्तिपर्यायत्वं तदपि पूर्वावस्थापेक्षं, यथा रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति तद्वत्। तस्माददोषः॥

आत्मा प्रकरणात्॥ ३॥

कथं पुनर्मुक्त इत्युच्यते 'यावता परं ज्योतिरुपसम्पद्य' इति कार्यगोचरमेवैनं श्रावयति। ज्योतिःशब्दस्य भौतिकज्योतिषि रूढत्वात्। न चानतिवृत्तो विकारविषयात् कश्चिद्विमुक्तो भवितुमर्हति विकारस्यार्तत्वप्रसिद्धेरिति। नैष दोषः। यत आत्मैवात्र ज्योतिःशब्देनावेद्यते प्रकरणात्। 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' इति प्रकृते परस्मिन्नात्मनि नाकस्मात् भौतिकं ज्योतिः शक्यं ग्रहीतुं, प्रकृतहान्यप्रकृतप्रक्रियाप्रसङ्गात्। ज्योतिःशब्दस्त्वात्मन्यपि दृश्यते 'तद्देवा ज्योतिषां ज्योतिः' इति। प्रपञ्चितश्चैतत् 'ज्योतिर्दर्शनात्' (ब्र०सू०) इत्यत्र॥

---

नष्ट इवेति, बन्धदशायां कलुषितात्मना तिष्ठति, मोक्षे तु विगलिताखिलदुःखः सन्नितः प्रद्योतमानपूर्णानन्दात्मनावतिष्ठत इति महान् विशेष इत्यर्थः। कार्यगोचरमिति कार्यप्राप्तमित्यर्थः॥
कार्यं प्राप्तोऽपि मुक्तः किं न स्यादित्यत आह। न चानतिवृत्त इति॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते यः स किं परस्मादात्मनः पृथगेव भवति उताविभागेनैवावतिष्ठत इति वीचायां 'स तत्र पर्येति' इत्यधिकरणाधिकर्तव्यनिर्देशात् 'ज्योतिरुपसम्पद्य' इति च कर्तृकर्मनिर्देशाच्छेदेनैवावस्थानमिति यस्य मतिस्तं व्युत्पादयति । अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते । कुतः दृष्टत्वात् । तथा हि 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'यत्र नान्यत् पश्यति' 'न तु तत् द्वितीयमस्ति' 'ततोऽन्यद्विभक्तं यत् पश्येत्' इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति । यथादर्शनमेव च फलं युक्तं तत्क्रतुन्यायात् । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' 'एवं मुनेर्विजानतः' 'आत्मा भवति गौतम' इति चैवमादीनि *मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति नदीसमुद्रादिनिदर्शनानि च । भेदनिर्देशस्त्वभेदेऽप्युपचर्यते । 'स भगवः कस्मिन् प्रतिष्ठितः' इति 'स्वे महिम्नि' इति 'आत्मरतिरात्मक्रीडः' इति चैवमादिदर्शनात् ॥

---

अविभागेन दृष्टत्वात् । स्वरूपस्थितमुक्तमुपजीव्य वादिविवादात् ब्रह्मभेदाभेदसंशये सत्यत्यन्तभेदे पूर्वपक्षमुक्त्वा सिद्धान्तमाह । य-स्येति ॥

---

* मुक्तिस्वरूपेति वर्धं० का० ।

## ब्राह्मेण जैमिनिरुपन्यासा-
## दिभ्यः ॥ ५ ॥

स्थितमेतत् 'स्वेन रूपेण' इत्यत्रात्ममात्रस्वरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणेति। अधुना तु तद्विशेषबुभुत्सायामभिधीयते। स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादि सत्यसङ्कल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वञ्च तेन स्वेन रूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते। कुत, उपन्यासादिभ्यस्तथात्वावगमात्। तथा हि 'एष आत्मापहतपाप्मा' इत्यादिना 'सत्यकामः सत्यसङ्कल्प.' इत्येवमन्तेनोपन्यासेनैवमात्मकतामात्मनो बोधयति। तथा 'स तत्र पर्येति जक्षन् क्रीडन् रममाण.' इत्यैश्वर्यरूपमावेदयति। 'तस्य सर्वेषु लोकेषु कामचारो भवति' इति च 'सर्वज्ञ. सर्वेश्वरः' इत्यादिव्यपदेशाश्चैवमुपपन्ना भविष्यन्ति इति ॥

---

ब्राह्मेण जैमिनि। उक्त ब्रह्मस्वरूपमुपजीव्य स किं सत्येन सर्वज्ञत्वादिधर्मेण युक्तस्तिष्ठति उत धर्मस्य शशशृङ्गवदत्यन्तासत्त्वात् चिन्मात्रात्मना तिष्ठति किं वा वस्तुतश्चिन्मात्रोऽपि जीवान्तरव्यवहारदृष्ट्या कल्पितसर्वज्ञत्वादिमानिति मुनिविप्रतिपत्ते संशये सत्याद्यसिद्धिरेव फल द्रष्टव्यं। पूर्वपक्षमाह। अधुनेत्यादिना। तत्तत्पक्षसिद्धिरेव फल द्रष्टव्यं। पूर्वपक्षमाह। अधुनेत्यादिना। य आत्मेत्यादिरुपन्यासशोऽन्वेष्टव्य इति विध्यर्थं उद्देश, य आत्मेत्यादिरुपन्यास। आदिपदात् विधिव्यपदेशग्रह। तत्राज्ञातज्ञापको विधिर्व्दार्थं। स तत्रेति। सर्वज्ञ इत्यादिस्तु व्यपदेशोऽयं हि स्तमाह। तथा स तत्रेति। नोद्देश विध्यभावान्नापि विधि सिद्धवन्निर्देशादित्यर्थ ॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ।

यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते तथापि शब्दविकल्पजा एवैते, पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते, चैतन्यमेव त्वस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता। तथा च श्रुतिः 'एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः' इत्येवंजातीयकाऽनुगृहीता भविष्यति। सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते सत्याः कामा अस्येति तथाप्युपाधिसम्बन्धाधीनत्वात् तेषां न चैतन्यवत् स्वरूपत्वसम्भवः अनेकाकारत्वप्रतिषेधात्। प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वं 'न स्थानतोऽपि परस्योभयलिङ्गम्' [ब्र॰ सू॰] इत्यत्र। अत एव च जक्षणादिसङ्कीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थमात्मरतिरित्यादिवत्। न हि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनिमित्तानि शक्यन्ते वर्णयितुं, द्वितीयविषयत्वात् तेषां। तस्मात् निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते॥

---

सत्यत्वादिधर्माणां सत्यत्वं दूषयन्नत्यन्तासत्यपक्षमाह। चिति तन्मात्रेणेति। चितिश्चैतन्यं, शब्दज्ञानात् यो विकल्पोऽसत्प्रत्ययस्तज्जा अत्यन्तमसन्त इति यावत्। अस्त्वभावधर्माणामसत्त्वं भावधर्माणान्तु सत्त्वमित्याशङ्क्य तेषामप्यौपाधिकत्वात् असत्त्वमित्याह। सत्यकामेति। चिन्मात्रे मुक्तौ जक्षणादिश्रुतिः कथं तत्राह। अत एव चेति। सर्वधर्मनिषेधादेवेत्यर्थः॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥

## सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

हार्दविद्यायां श्रूयते 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादि। तत्र संशयः किं सङ्कल्प एव केवलः पित्रादिसमुत्थानहेतुरुत निमित्ता-

---

धर्माणां सत्यत्वमन्यन्तासत्यत्वञ्चेति पक्षद्वयमुक्तम्। अद्वैतश्रुतीनां सर्वज्ञत्वादिश्रुतिव्यवहारयोश्च बाधापातादतस्तृतीयपक्षः श्रेयानिति सिद्धान्तयति। एवमपीति। अत्र केचित् मुह्यन्ति अखण्डचिन्मात्रज्ञानात् मुक्तस्याज्ञानाभावात् कुत आज्ञानिकधर्मयोग इति, ते इत्थं बोधनीयाः, ये ईश्वरधर्मास्त एव चिदात्मनि मुक्ते जीवान्तरैर्व्यवह्रियन्ते इति। न च मूलाविद्यैक्यात् तन्नाशे कुतो जीवान्तरमिति वाच्यं, न वयं तन्नाशे जीवान्तरे व्यवहारं ब्रूमः किन्तु तदंशनाशेनाप्रारब्धाध्यात्मिकशरीरद्वयाभिमानिनो मुक्तावशिष्टतरोपाधिका जीवा व्यवहर्तार इति वदामः। तर्हि नानाविद्यापक्ष एव कुतो नाद्रीयते जीवभेदस्यावश्यकत्वादिति चेत्, न। प्रकृतिनानात्वं प्रतिजीवं प्रपञ्चभेद इत्याद्यप्रामाणिकानेकार्थगौरवादिति सर्ववृद्धसम्मत एकविद्यापक्ष एव श्रेयान्, अंशभेदेन च बन्धमुक्तिर्व्यवस्थितेति सङ्क्षेपः ॥

एवं परविद्याफलमुक्तमिदानीं अपरविद्याफलं प्रपञ्चयति। सङ्कल्पादेव तु तच्छ्रुतेः। एवकारस्यायोगान्ययोगव्यवच्छेदसाधारण्यात्

न्तरसहित इति। तत्र सत्यपि सङ्कल्पादेवेति श्रवणे लोकवत् निमित्तान्तरापेक्षा युक्ता। यथा लोकेऽस्मदादीनां सङ्कल्पात् गमनादिभ्यश्च हेतुभ्यः पित्रादिसम्पत्तिर्भवत्येवं मुक्तस्यापि स्यात् एवं दृष्टविपरीतं न कल्पितं भविष्यति। सङ्कल्पादेवेति तु राज्ञ इव सङ्कल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते। न च सङ्कल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृम्भितवच्चञ्चलत्वात् पुष्कलं भोगं समर्पयितुं पर्याप्नुयुरित्येवं प्राप्ते ब्रूमः। सङ्कल्पादेव तु केवलात् पित्रादिसमुत्थानमिति। कुतः, तच्छ्रुतेः। 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत। निमित्तान्तरमपि तु यदि सङ्कल्पानुविधाय्येव स्यात्, भवतु, न तु प्रयत्नान्तरसम्पाद्यं निमित्तान्तरमिष्यते। प्राक् तत्सम्पत्तेर्वन्ध्यसङ्कल्पत्वप्रसङ्गात्। न च श्रुतिगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते। सङ्कल्पबलादेव चैषां यावत् प्रयोजनं स्थैर्योपपत्तिः प्राकृतसङ्कल्पविलक्षणत्वान्मुक्तसङ्कल्पस्य ॥

---

रभ्रय', ब्रह्मलोकं गतस्योपासकस्य सङ्कल्पो यत्नान्तरसापेक्षः', भोगसामग्रीसङ्कल्पत्वादस्मदादिसङ्कल्पवत्। न चैवकारविरोध सङ्कल्पेन सामग्र्याद्ययोगव्यवच्छेदेन सौलभ्यार्थत्वात्, यत्नानङ्गीकारे भोगपुष्ट्यसिद्धिश्चेति पूर्वपक्षार्थः। अत्र लोकदृष्टानुसरणं फलं, सिद्धान्ते तु विद्याबलेन सङ्कल्पस्यैव भोगपुष्टिकरत्वसिद्धिरिति भेदः। किञ्च यदि भोगसङ्कल्पानन्तरमपि यत्नान्तरसाध्यनिमित्तापेक्षा स्यात् तर्हि निमित्तप्राप्तेः प्राक् जातसङ्कल्पस्य वन्ध्यत्वं स्यात् भोगविलम्बात् ततः सत्यसङ्कल्पश्रुतेर्न यत्नान्तरापेक्षेत्याह। निमित्तान्तरमपि त्विति ॥

## अत एव चानन्याधिपतिः ॥९॥

अत एव चावन्ध्यसङ्कल्पत्वादनन्याधिपतिर्विद्वान् भवति, नास्यान्योऽधिपतिर्भवति इत्यर्थः। न हि प्राकृतोऽपि सङ्कल्पयन्नन्यस्वामिकत्वमात्मनः सत्यां गतौ सङ्कल्पयति। श्रुतिश्चैतत् दर्शयति 'अथ य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इति॥

## अभावं बादरिराह ह्येवं ॥ १० ॥

'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यतः श्रुतेर्मनस्तावत् सङ्कल्पसाधनं सिद्धं, शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न सन्तीति समीक्ष्यते। तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणाञ्चाभावं महीयमानस्य विदुषो मन्यते। कस्मात्, एवं ह्याहाम्नायः 'मनसैतान् कामान् पश्यन् रमते ब्रह्मलोके' इति। यदि मनसा शरीरेन्द्रियैश्च विहरेत् मनसेति विशेषणं न स्यात्। तस्मादभावः शरीरेन्द्रियाणां मोक्षे॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिराचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं

---

नन्वीश्वराधीनस्य विदुषः कथं सङ्कल्पमात्रात् भोगसिद्धिस्तत्राह। घत एवेति। ईश्वरधर्म एव विदुषाविर्भूत इति न सङ्कल्पभङ्ग इति भावः॥

एवकारवत् मनसेतिविशेषणेनान्ययोगव्यवच्छेदात् देहाद्यभाव इति पूर्वपक्षयति। अभावं बादरिराह ह्येवं। यत्रापि वादिविवादात्

मति मन्यते, यतः 'स एकधा भवति त्रिधा भवति' इत्यादिना-ऽनेकधाभावविकल्पमामनन्ति। न ह्यनेकविधता विना शरीरभेदेनाञ्जसी स्यात्। यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावे विकल्पः पठ्यते तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये सङ्कीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इत्युच्यते ॥

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते, यदा सशरीरतां सङ्कल्पयति तदा सशरीरो भवति यदि त्वशरीरतान्तदा अशरीरः इति । सत्यसङ्कल्पत्वात् सङ्कल्पवैचित्र्याच्च । द्वादशाहवत्, यथा द्वादशाहः सत्रमहीनश्च भवति उभयलिङ्गश्रुतिदर्शनात् एवमिदमपीति ॥

## तन्वभावे सन्ध्यवदुपपद्यते ॥ १३ ॥

यदा तु सेन्द्रियस्य शरीरस्याभावस्तदा यथा सन्ध्ये स्थाने

---

सम्भय, तत्र देहादयो न सन्त्येव सदा सन्त्येवेति च पक्षद्वयं पूर्वपक्षः, कालभेदेनेच्छया सन्ति न सन्ति चेति सिद्धान्तपक्षो द्रष्टव्य, फलन्त तत्तच्छ्रुतेर्मुख्यत्वमिति विवेकः ॥१०॥११॥

द्वादशाहवदिति। य एवंविद्वांस एवमुपयन्ति इत्युपायिचोदनागम्यत्वश्रुतेर्द्वादशाहस्य सत्रत्व, न य्यासतेति चोपयन्तीति वाचोदितस्वं

शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादि-
कामा भवन्त्येवं मोक्षेऽपि स्युः, एवं तदुपपद्यते ॥

## भावे जाग्रद्वत् ॥ १४ ॥

भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिका-
मा भवन्त्येवं मुक्तस्याप्युपपद्यन्ते ॥

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

'भावं जैमिनिर्विकल्पामननात्' [ब्र॰सू॰] इत्यत्र सशरीरत्वं
मुक्तस्योक्तं तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि
शरीराणि दारुयन्त्रवत् सृज्यन्ते किंवा सात्मकानि अस्मदादि
शरीरवदिति भवति वीक्षा। तत्रात्ममनसोर्भेदानुपपत्तेरेकेण
शरीरेण योगादितराणि निरात्मकानीत्येवं प्राप्ते प्रतिपद्यते,
प्रदीपवदावेश इति। यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते

---

सत्त्वलक्षणमिति स्थितं, तथा द्वादशाहेन प्रजाकामं याजयेदिति यज-
तिचोदनादर्शनात् नियतकर्तृकत्वावगमेन द्विरात्रादिवदहीनत्वमे-
त्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥

प्रदीपवदावेशः। सङ्कल्पमात्रात् निर्मितदेहाननुपजीव्य तेषूभयथादर्श-
नात् संशयमाह। भावमिति। अनादिलिङ्गशरीरस्यैकस्मिन्नेव शरीरे
भावात् निर्मितानेकदेहेषु भोगासिद्धिः पूर्वपक्षफलं, सिद्धान्ते तत्सि-
द्धिरिति मत्वा सूत्रं व्याचष्टे। यथेत्यादिना। स एकधा त्रिधा
पञ्चधेत्यादिश्रुत्या विदुष एवानेकधाभाव उक्तः विद्वांस्तु नादेहो नापि
चिन्मात्रः लिङ्गोपहितात्मा न च तस्य लिङ्गभेदं विनाऽनेकत्वं सम्भवति।
अतः श्रुतिबलादेकस्यैवानादिलिङ्गस्य लोकदेहेषु प्रवेशेन भेद एष्टव्यः।

विकारशक्तियोगात् एवमेकोऽपि सन् विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति। कुतः, तथाहि दर्शयति शास्त्रमेकस्यानेकभाव, 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' इत्यादि। नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते नापि जीवान्तरावेशे। न च निरात्मकानां शरीराणां प्रवृत्तिः सम्भवति। यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगाभम्भव इति। नैष दोष, एकमनोऽनुवृत्तीनि समनस्कान्येवापराणि शरीराणि सत्यसङ्कल्पत्वात् स्रक्ष्यति, सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्व योक्ष्यते। एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया, कथ पुनर्मुक्तस्यानेकश-

---

यद्यपि मूलप्रदीपस्य वर्त्यन्तरेषूत्पन्नदीपाना चात्यन्तभेदोऽस्ति लिङ्गस्य तु देहभेदकृतो भेदो न स्वत, स्वतो लिङ्गभेदेन तदुपहितजीवभेदात अनुसन्धानानुपपत्ते, आगन्तुकानेकसृष्ट्यावसत्कार्यवादापाताच्च, तथापि प्रदीपत्वजात्यैक्येन व्यक्त्यैक्यारोपात् दृष्टान्तदार्ष्टान्तिकयो साम्य द्रष्टव्य तथा च यथा प्रदीपोऽनेकवर्तिषु प्रविशति एव विद्यायोगबलात् विद्या तु लिङ्गस्य व्यापित्वादनेकदेहेषु युगपदावेश इति सूत्रार्थ। विदुषोऽनेकधात्व श्रुतमन्यथा न घटते इत्याह। नैतदिति। इतश्च सात्मकत्वमित्याह। न च निरात्मकानामिति। यदनादि मन एकदेहस्थ तदनुसारीणि देहान्तरस्थानि मनांसि भवन्ति तदवस्थाना तन्नियम्यत्वसम्भवादित्यत्र योगशास्त्रसम्मतिमाह। एषैवेति। निर्माणचित्तान्यस्मितामात्रात प्रवृत्तिभेदे प्रयोजक चित्तमेकमनेकेषामिति भगवत्पतञ्जलिना सूत्रित। योगिनोऽभिमानमात्रान्निर्माणचित्तानि निर्माणदेहेषु भवन्ति, तेषा नियामकमनादिचित्तमित्यर्थ। उत्तरसूत्रव्यावर्त्यशङ्कामाह। कथ पुनरिति। सलिलवत् सलिल, स्वच्छ इत्यर्थ॥

रीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते यावता 'तत् केन कं विजानीयात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् सलिल एको द्रष्टा द्वैतो भवति' इत्येवंजातीयका श्रुतिर्विशेषविज्ञानं वारयतीत्यत उत्तरं पठति ॥

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्ययः सुषुप्तं, 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' इति श्रुतेः। सम्पत्तिः कैवल्यं, 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतेः। तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनं क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते क्वचित् कैवल्यावस्थां। कथमवगम्यते, यतस्तत्रैव तदधिकारवशादाविष्कृतं, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति यत्र त्वस्य सर्वमात्मैवाभूत् यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति' इत्यादि श्रुतिभ्यः। सगुणविद्याविपाकस्थानन्त्वेतत् स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते तस्माददोषः ॥

---

न तु तद्द्वितीयमस्तीति क्वचित् सुषुप्तिमधिकृत्योक्तं 'तत् केन कम्' इत्यादि क्वचिन्मुक्तिं प्रकृत्योक्तं, एवं विशेषज्ञानाभाववचनं सुषुप्तिमुक्त्यन्यतमापेक्षं सगुणोपासकस्य भोगोक्तौ न विरुध्यते भिन्नविषयत्वादित्याह। स्वाप्ययेति। तत्रैव श्रुतौ, तदधिकारवशात् सुषुप्त्यादिप्रकरणबलात्, उक्तवचनानामन्यतरापेक्षत्वमाविष्कृतं, हि यतः स्वतोऽवगम्यत इत्यर्थः। यत्र समुत्थानादिवाक्यं मुक्तिविषयं यत्र सुप्त इति सुप्तिविषयमिति विभागः ॥

विकारस्थानियोगात् एवमेकोऽपि सन् विद्यानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति । कुतः, तथाहि दर्शयति शास्त्रमेकस्यानेकभाव, 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' इत्यादि । नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते नापि जीवान्तरावेशे । न च निरात्मकानां शरीराणां प्रवृत्तिः सम्भवति । यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासम्भव इति । नैष दोषः, एकमनोऽनुवर्त्तीनि समनस्कान्येवापराणि शरीराणि सत्यसङ्कल्पत्वात् स्रक्ष्यति, सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्व योक्ष्यते । एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया, कथं पुनर्मुक्तस्यानेकश-

---

यद्यपि मूलप्रदीपस्य वर्त्यन्तरेषूत्पन्नदीपाना चात्यन्तभेदोऽस्ति लिङ्गस्य तु देहभेदकृतो भेदो न स्वत, स्वतो लिङ्गभेदेन तदुपहितजीवभेदात् अनुसन्धानानुपपत्ते, आगन्तुकानेकद्रष्टावसत्कार्यवादापाताच्च, तथापि प्रदीपत्वजात्यैक्येन व्यक्त्यैक्यारोपात् दृष्टान्तदार्ष्टान्तिकयो साम्य द्रष्टव्य तथा च यथा प्रदीपोऽनेकवर्तिषु प्रविशति एव विद्यायोगबलात् विद्या तु लिङ्गस्य व्यापित्वादनेकदेहेषु युगपदावेश इति सूत्रार्थ । विदुषोऽनेकधात्व श्रुतमन्यथा न घटते इत्याह । नैतदिति । इतश्च सात्मकत्वमित्याह । न च निरात्मकानामिति । यद्यनादि मन एकदेहस्थ तदनुसारीणि देहान्तरस्थानि मनासि भवन्ति तदवस्थाना तन्नियम्यत्वसम्भवादित्यत्र योगशास्त्रसम्मतिमाह । एषैवेति । निर्माणचित्तान्यस्मितामात्रात् प्रवृत्तिभेदे प्रयोजक चित्तमेकमनेकेषामिति भगवत्पतञ्जलिना सूत्रित । योगिनोऽभिमानमात्रान्निर्माणचित्तानि निर्माणदेहेषु भवन्ति, तेषा नियामकमनादिचित्तमित्यर्थ । उत्तरग्रन्थस्याथर्वणशङ्कामाह । कथं पुनरिति । सलिलवत् सलिलः, स्वच्छ इत्यर्थ ।

रीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते यावता 'तत् केन कं विजानीयात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् सलिल एको द्रष्टा द्वैतो भवति' इत्येवंजातीयका श्रुतिर्विशेषविज्ञानं वारयतीत्यत उत्तरं पठति॥

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

स्वाप्ययः सुषुप्तं, 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' इति श्रुतेः। सम्पत्तिः कैवल्यं, 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतेः। तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनं क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते क्वचित् कैवल्यावस्थां। कथमवगम्यते, यतस्तत्रैव तदधिकारवशादाविष्कृतं, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति यत्र त्वस्य सर्वमात्मैवाभूत् यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति' इत्यादि श्रुतिभ्यः। सगुणविद्याविपाकस्थानन्त्वेतत् स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते तस्माददोषः॥

---

न तु तद्द्वितीयमस्तीति क्वचित् सुषुप्तिमधिकृत्योक्तं 'तत् केन कम्' इत्यादि क्वचिन्मुक्तिं प्रकृत्योक्तं, एवं विशेषज्ञानाभाववचनं सुषुप्तिमुक्त्यन्यतमापेक्षं सगुणोपासकस्य भोगोक्तौ न विरुध्यते भिन्नविषयत्वादित्याह। स्वाप्ययेति। तत्रैव श्रुतौ, तदधिकारवशात् सुषुप्त्यादिप्रकरणबलात्, उक्तवचनानामन्यतरापेक्षत्वमाविष्कृतं, हि यतः स्वतोऽवगम्यत इत्यर्थः। यत्र सुप्त इति सुप्तिविषयमिति विभागः॥ समुत्थानादिवाक्यं मुक्तिविषयं

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

ये सगुणब्रह्मोपासनात् सहैव मनसेश्वरसायुज्यं व्रजन्ति किन्त्वेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित् सावग्रहमिति संशयः। किन्तावत् प्राप्तं निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति, 'आप्नोति स्वाराज्यं' 'सर्वेऽस्मै देवा बलिमावहन्ति' 'तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादिश्रुतिभ्यः। इत्येवं प्राप्ते पठति। जगद्व्यापारवर्जमिति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः, तस्य तत्र प्रकृतत्वादसन्निहितत्वाच्चेतरेषां। पर एव हीश्वरो जगद्व्यापारेऽधिकृतः तमेव प्रकृत्योत्पत्त्याद्युपदेशान्नित्यशब्दनिबन्धनत्वाच्च। तदन्वेषणविजिज्ञासनपूर्वकमितरेषामादिमदैश्वर्यं श्रूयते, तेनासन्निहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैषामनैकमत्ये कस्यचित् स्थित्यभिप्रायः कस्यचित् संहाराभिप्राय इत्येवंविरोधोऽपि कदा-

---

जगद्व्यापारवर्जं। सङ्कल्पादेवेत्यादिनोक्तैश्वर्यस्य जगत्सृष्ट्यादिव्यतिरिक्तविषयत्वेनापवादात् सङ्गतिः, उभयथा दर्शनात् संशयः। ईश्वरनानात्वं पूर्वपक्षफलं, सिद्धान्ते तु विद्यायोगिनामीश्वरनियम्यत्वादेकस्य नित्यसिद्धस्येश्वरस्यैव जगत्कर्तृत्वसिद्धिरिति विवेकः। प्रलयात् सर्गसमये यस्येच्छापूर्वं कर्तृत्वं श्रुतौ प्रकृतं तस्यैव नियन्तृत्वादिर्जगद्व्यापारः। नह्युपासकानां देहं विनैश्वर्यं सम्भवति। किञ्चेश्वरस्य नित्यसिद्धत्वात् शब्दैकसमधिगम्यस्याज्जगत्स्रष्टृत्वं युक्तं, न तु तत्प्रसादलब्धसिद्धीनां जीवानामित्याह। नित्यशब्दनिबन्धनत्वाच्चेति। किञ्च

चित् स्यात्। अथ कस्यचित् सङ्कल्पमन्यस्य सङ्कल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराद्यत्ततन्त्वलमेवेतरेषामिति व्यवतिष्ठते॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्ड-लस्थोक्तेः॥ १८॥

अथ यदुक्तं 'आप्नोति स्वाराज्यम्' इत्यादिप्रत्यक्षोपदेशान्निरवग्रहमैश्वर्य्यं विदुषां न्याय्यमिति तत् परिहर्त्तव्यं, अत्रोच्यते। नायं दोषः, आधिकारिकमण्डलस्थोक्तेः। आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेषु व्यवस्थितः परमेश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते यत् कारणमनन्तरं आप्नोति मनसस्पतिमित्याह। यो हि सर्वमनसाम्पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोति। एतदुक्तं भवति, तदनुसारेण चानन्तरं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवतीत्याह। एवमन्यत्रापि यथासम्भवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्य्यं योजयितव्यं॥

---

विदुषां समप्राधान्ये मिथो विरोधः, एकं प्रत्यन्येषां गुणत्वे त्वेक एवेश्वर इत्याह। समनस्कत्वादिति॥

व्यधिकारे नियोजयत्यादित्यादीनित्याधिकारिकः, स चासौ मण्ड-लस्थश्च तस्य प्राप्यत्वोक्तेरित्यर्थः। मनसस्पतिः सूर्यमण्डलान्तस्थ पर-मात्मा 'तत् सवितुर्वरेण्यं धियो यो नः प्रचोदयात्' इति श्रुतेः। तथा च यदि पूर्वं निरङ्कुशं स्वाराज्यमुक्तं स्यात् तर्हि ईश्वरस्याग्रे प्राप्यतां न ब्रूयात्तौ भोगे स्वाराज्यं न जगज्जन्मादिष्विति भावः। वाक्-पतित्वादिकमपीश्वराधीनमित्याह। तदनुसारेणेति। उक्तन्यायं काम-चारादिवाक्येष्वतिदिशति। एवमिति॥

## विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानं । तथा ह्यस्य द्विरूपां स्थितिमाहाम्नायः 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इत्येवमादिः। न च तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुं, अतत्क्रतुत्वात्तेषां । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठते एवं सगुणेऽपि निरवग्रहमैश्वर्य्यमनवाप्य सावग्रह एवावतिष्ठत इति द्रष्टव्यं ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

दर्शयतश्च विकारावर्त्तित्वं परस्य ज्योतिषः श्रुतिस्मृती 'न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इति, 'न तद्भासयते सूर्य्यो न शशाङ्को न पावकः' इति च । तदेवं विकारावर्त्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः ॥

---

जगद्व्यापार उपासकप्राप्य तदुपास्यनिष्ठत्वात् सङ्कल्पसिद्ध्यादिवदित्याशङ्क्योपास्यस्य निर्गुणस्वरूपे व्यभिचारमाह । विकारावर्त्ति चेति ॥

निर्गुणस्वरूपे प्रमाणमाह । दर्शयतश्चेति । यथा ज्ञानाभावान्निर्गुणं न प्राप्तं तथा ध्यानाभावाज्जगत्स्रष्टृत्वादि न प्राप्यते । ध्यानाभावश्च विध्यभावादिति भाव ।

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते 'तमाहापो वै खलु मीयन्ते लोकोऽसौ' इति, 'स यथैतां देवतां सर्वाणि भूतान्यवन्ति एवं हैवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इत्यादिभेदव्यपदेशलिङ्गेभ्यः। नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान् बादरायणाचार्यः पठति ॥

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति, यस्मिन्नरश्च ह वै ण्यश्चार्ण-

---

तमुपासकं ब्रह्मलोकगतमाह हिरण्यगर्भः 'मया खल्विमा आपो ऽमृतरूपा मीयन्ते भुज्यन्ते न चाप्यसौ लोकोऽमृतोदकलक्षणः' इत्यर्थः। श्रुत्यन्तरमाह। स यथेति। भोगसाम्ये स दृष्टान्तो यथेत्यर्थः। तेनो इत्युशब्दोऽप्यर्थः। सलोकतामपीत्यन्वयः। सायुज्यं समानदेहत्वं क्रमेण मुक्तिर्वा। शास्त्रसमाप्तिं सूचयन् सूत्रकारं पूजयति। भगवानिति। भगवत्त्वं सर्वज्ञत्वं। सूत्रद्वारा शिष्याणामाचारे स्थापनात् आचार्यत्वं। बादरायणपदेन बदरिकाश्रमवासोक्त्या नित्यसर्वज्ञस्य परमगुरोर्नारायणस्य प्रसादद्योतनात्तत्प्रणीतशास्त्रस्य निरवद्यतामुद्योतयति ॥

सगुणविद्याया सातिशयफलत्वेऽपि ततो निर्गुणविद्ययाऽनावृत्तिरित्याह। अनावृत्तिः शब्दादनावृत्तिः शब्दात्। ये ब्रह्मलोकं गच्छन्ति ते त

वाँ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरम्मदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधामन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते तं ते प्राप्य न चन्द्रलोकादिवत् वियुक्तभोगा आवर्त्तन्ते। कुतः, 'तयोर्द्धमायन्नमृतत्व' इति, 'तेषां न पुनरावृत्तिः' 'एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते' 'ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते' इत्यादिशब्देभ्यः। अन्तवत्त्वेऽपि त्वैश्वर्य्यस्य यथाऽनावृत्तिस्तथा वर्णितं 'कार्यात्यये तदध्यक्षेण सहातःपरम्' [ब्र० सू०] इत्यत्र। सम्यग्दर्शनविध्वस्ततमसान्तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। त-

---

प्राप्य नावर्तन्ते इति सम्बन्धः। लोकं विशिनष्टि। यस्मिन्निति। इतोऽस्मात् पृथिवीलोकात् तृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नर इति ण्य इति चार्णवतुल्यौ सुधाह्रदावित्यर्थः। ऐरमन्नमयं, मदीयं मदकरं सरः, सोमसवनः अमृतवर्षी, यद्यपि तेषामिह न पुनरावृत्तिरिमं मानवमिति च श्रुतिष्विहेममितिविशेषणादस्मिन् कल्पे ब्रह्मलोकगतानां कल्पान्तरे आवृत्तिर्भाति, तथापीश्वरोपास्तिं विना पञ्चाग्निविद्याश्वमेधदृढब्रह्मचर्यादिसाधनैर्ये गतास्तेषां तत्त्वज्ञाननियमाभावादावृत्तिः स्यात्, ये तु दहरादीश्वरोपास्त्या गतास्तेषां सगुणविद्याफलक्षयेऽपि निरवद्येश्वरानुग्रहाल्लब्धात्मज्ञानान्मुक्तिरिति नियम इत्यभिप्रेत्याह। अन्तवत्त्वेऽपि त्विति। नन्वत्र सूत्रकृता सगुणविदामेवानावृत्तिरुक्ता न निर्गुणविदां तत्र को हेतुरित्याशङ्क्य तेषामावृत्तिशङ्काभावादित्याह। सम्यगिति। तदाश्रयणेनेति गुणविदामावृत्तिप्राप्तौ सम्यग्दर्शनाश्रयणेनैवानावृत्तिः साधिता, अतः स्वत एव सम्यग्दर्शिनामावृत्तिशङ्का नेति किमु वाच्यमित्यर्थः। अध्यायसमाप्तिसूचकं पदमात्रस्याभ्यासो दर्शितः, इह सूत्रस्यैवाभ्यासात् शास्त्रसमाप्तिर्द्योत्यत इत्याह। अनावृत्तिः शब्दादिति। एवं समन्वयोपपत्त्या प्रत्यगात्मैक्यस्य वेदान्तप्रमाणकत्वमवधारयितुं

दाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति। अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं दर्शयति ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीमद्गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्करभगवत्पूज्यपादकृतौ चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः।

समाप्तमिदं ब्रह्ममीमांसाशास्त्रं शङ्करभाष्ययुतम्।

---

वाक्यार्थज्ञाने स्मृतितर्कादिसर्वप्रकारविरोधः परिहृतः, साधनसम्पत्तिश्च दर्शिता, तस्माद्विवेकादिसाधनसम्पन्नस्य श्रवणाद्यावृत्तिनिरस्तसमस्तप्रतिबन्धस्याखण्डात्मसंबोधात् समूलबन्धध्वंसे सत्याविर्भूतनिष्कलङ्कानन्तस्वप्रकाशचिदानन्दात्मनावस्थानमिति सिद्धं ॥

नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति।
शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे ॥
अन्तर्यामी जगत्साक्षी सर्वकर्त्ता रघूद्वहः।
अतोऽत्र दोषोऽशक्यः स्यादेष ह्येवेतिशासनात् ॥

वक्षस्यङ्गोऽस्य पार्श्वे करतलयुगले कौस्तुभाभां दयाश्च,
सीतां कोदण्डदीक्षामभयवरयुतां वीक्ष्य रामाङ्गसङ्गः।
स्वस्याः क्व स्यादितीयं हृदि कृतमनना भाष्यरत्नप्रभाऽऽर्या,
स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमद्गोपालसरस्वतीपूज्यपादशिष्य श्रीगोविन्दानन्दभगवत्कृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥

समाप्तश्चायं ग्रन्थः।

ॐ तत्सत् ।

# व्यासाधिकरणमाला ।

भारतीतीर्थकृता ।



## प्रथमाध्याये प्रथमपादः—अनुक्रमणिका ।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणं ।
वैयासिकन्यायमाला श्लोकैः संगृह्यते स्फुटं ॥ १ ॥

॥ ॐ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तये, प्रचयगमनाय शिष्टाचारपरिपालनाय च विशिष्टदेवतातत्त्वं गुरुमूर्त्तिमाधियुक्तं नमस्कृत्य ग्रन्थं प्रतिजानीते, प्रणम्येत्यादिना । व्यासेनोक्ता वैयासिकी, वेदान्तवाक्यार्थनिर्णायकान्यधिकरणानि न्यायाः, तेषामनुक्रमेण ग्रथनं माला । यद्यप्येषा सूत्रभाष्यकारादिभिः प्रपञ्चिता तथापि सूत्रादीनामतिप्रज्ञविषयत्वात् मन्दबुद्ध्यनुग्रहाय श्लोकैरेषा माला स्फुटं संगृह्यते । एकैकमधिकरणं पञ्चावयवं, विषयः सन्देहः सङ्गतिः पूर्वपक्षः सिद्धान्तश्चेति पञ्चावयवाः ॥ १ ॥

एको विषयसन्देहपूर्वपक्षावभासकः ।
श्लोकोऽपरस्तु सिद्धान्तवादी, सङ्गतयः स्फुटाः ॥ २ ॥

तेषामवयवानां संग्रहप्रकारं दर्शयति, एक इति । एकस्याधिकरणस्य संग्राहकौ द्वौ श्लोकौ, तयोराद्यश्लोकस्य पूर्वार्द्धेन द्वाववयवौ संगृह्येते, उत्तरार्द्धेनैकः, द्वितीयश्लोकेन चैकः । यद्यपि सङ्गत्याख्य एकोऽवयवः शिष्यते तथापि प्रत्यधिकरणं न पृथक् संग्रहीतव्यो भवति, सम्यग्व्युत्पन्नस्य पुरुषस्य स्वयमेवोहितुं शक्यत्वात् ॥ २ ॥

शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा।
शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरुह्यताम्॥ ३॥

सङ्गतिं विभज्य व्युत्पादयति, शास्त्र इति। शास्त्रप्रतिपाद्यं अध्यायप्रतिपाद्यं पादप्रतिपाद्यश्चार्थमवगम्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति तिस्रः सङ्गतय ऊहितुं शक्यन्ते॥ ३॥

शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः।
समन्वयाविरोधौ द्वौ साधनञ्च फलं तथा॥ ४॥

शास्त्रप्रतिपाद्यं अध्यायप्रतिपाद्यञ्च दर्शयति, शास्त्रमिति। सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण पर्यवसानं प्रथमेनाध्यायेन प्रतिपाद्यते, द्वितीयेन सम्भावितविरोधः परिह्रियते, तृतीयेन विद्यासाधननिर्णयः, चतुर्थेन विद्याफलनिर्णय इत्येते अध्यायानामर्था इति॥ ४॥

समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगं।
ज्ञेयगं पदमात्रञ्च चिन्त्यं पादेष्वनुक्रमात्॥ ५॥

तत्र प्रथमाध्यायगतपादार्थान् विभजते, समन्वय इति। स्पष्टब्रह्मलिङ्गयुक्तं वाक्यजातं प्रथमपादे चिन्त्यं, तद्यथा 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र सार्वज्ञ्यसार्वात्म्यसर्वपापहरत्वादिकं ब्रह्मणोऽसाधारणतया स्पष्टलिङ्गं। अस्पष्टब्रह्मलिङ्गत्वे सति उपास्यविषयं वाक्यजातं द्वितीयपादे चिन्त्यं, तद्यथा प्रथमाधिकरणविषयशाण्डिल्योपास्तिवाक्ये मनोमयत्वप्राणशरीरत्वादिकं सोपाधिकं ब्रह्मणो जीवस्य च साधारणत्वादस्पष्टं ब्रह्मलिङ्गं। तृतीयपादे तु अस्पष्टलिङ्गत्वे सति ज्ञेयब्रह्मविषयं वाक्यजातं चिन्त्यं, तद्यथा प्रथमाधिकरणे मुण्डकगतब्रह्मात्मत्ववाक्ये द्युपृथिव्यन्तरीक्षाद्योतत्वं सूत्रात्मनः परब्रह्मणश्च साधारणत्वादस्पष्टं ब्रह्मलिङ्गं। यद्यपि द्वितीयपादे कठवल्ल्यादिगतब्रह्मतत्त्ववाक्यानि विचारितानि, तृतीयपादे तु दहरोपासनवाक्यं विचारितं, तथाप्यवान्तरसङ्गतिलाभेन तद्विचारस्य प्रासङ्गिकत्वात् न पादार्थयोः साङ्कर्यापत्तिः, इत्थं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे-ऽव्यक्ताजादिपदमजापदश्चेत्येवमादि सन्दिग्धं पदं चिन्त्यं॥ ५॥

द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता॥ ६॥

द्वितीयाध्यायगतपादार्थान् विभजते, द्वितीय इति। प्रथमपादे साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीयपादे साङ्ख्यादिमतानां दुष्टत्वं दर्शितं। तृतीयपादे पूर्वभागेण पञ्चमहाभूतश्रुतीनां परस्परविरोधः परिहृतः, उत्तरभागेण जीवश्रुतीनां। चतुर्थपादे लिङ्गशरीरश्रुतीनां विरोधपरिहारः॥ ६॥

तृतीये विरतिस्तत्त्वमपदार्थपरिशोधनं।
गुणोपसंहृतिर्ज्ञाने वहिरङ्गादिसाधनं॥ ७॥

तृतीयाध्यायगतपादार्थान् विभजते, तृतीय इति। प्रथमपादे जीवस्य परलोकगमनागमने विचार्य वैराग्यं निरूपितं। द्वितीयपादे पूर्वभागेण त्वंपदार्थः शोधितः, उत्तरभागेण तु तत्पदार्थः। तृतीयपादे सगुणविद्यासु गुणोपसंहारो निरूपितः, निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारश्च। चतुर्थपादे च निर्गुणज्ञानस्य वहिरङ्गसाधनभूताश्रमयज्ञादीनि अन्तरङ्गसाधनभूतानि शमदमश्रवणमनननिदिध्यासनादीनि च निरूपितानि॥ ७॥

चतुर्थे जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा।
ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसंग्रहः॥ ८॥

चतुर्थाध्यायगतपादार्थान् विभजते, चतुर्थ इति। प्रथमपादे श्रवणाद्यावृत्त्या निर्गुणं उपासनया सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यलेपविनाशलक्षणा मुक्तिरभिहिता। द्वितीयपादे म्रियमाणस्योत्क्रान्तिप्रकारो दर्शितः। तृतीयपादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः। चतुर्थपादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यमुक्तिरुक्ता, उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोकस्थितिर्निरूपिता। एवं पादार्थः संगृहीतः॥ ८॥

ऊहित्वा सङ्गतीस्तिस्रस्तथाऽवान्तरसङ्गतिं।
ऊहेदाक्षेपदृष्टान्तप्रत्युदाहरणादिकां ॥ ९ ॥

नन्वेवं शास्त्राध्यायपादप्रतिपाद्या. अर्थाः, किं तत्र इत्यत आह, ऊहित्वेति। तद्यथा ईक्षत्यधिकरणे 'तदैक्षत' इति वाक्यं प्रधानपरं ब्रह्मपरं वेति विचार्यते, तस्य विचारस्य ब्रह्मसम्बन्धित्वात् ब्रह्मविचार-शास्त्रसङ्गतिः। वाक्यं ब्रह्मणि तात्पर्यवदिति निर्णयात् समन्वयाध्याय-सङ्गतिः। ईक्षणस्य चेतनब्रह्मणोऽसाधारणत्वेन स्पष्टलिङ्गत्वात् प्रथ-मपादे सङ्गतिः, एवं सर्वेष्वप्यधिकरणेषु यथायोग्यं सङ्गतित्रितयं ऊहनीयं। अवान्तरसङ्गतिस्तु अनेकधा विभज्यते, आक्षेपसङ्गतिः दृष्टान्तसङ्गतिः प्रत्युदाहरणसङ्गतिः प्रासङ्गिकी सङ्गतिरित्येवमादिः। सेयं अवान्तरसङ्गतिः व्युत्पन्नेनोहितुं शक्यते ॥ ९ ॥

पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये।
पूर्वपक्षस्य युक्तिञ्च तत्राक्षेपादि योजयेत् ॥ १० ॥

ताः उत्पादयति, पूर्वन्यायस्येति। तद्यथा प्रथमाधिकरणे ब्रह्मविचा-रशास्त्रमारम्भणीयमिति सिद्धान्तः, तत्र युक्तिः ब्रह्मणः सन्दिग्धत्वा-दिति। द्वितीयाधिकरणस्य जगज्जन्मादि ब्रह्मलक्षणं न भवतीति पूर्व-पक्षः, तत्र युक्तिः जन्मादेर्ज्जगन्निष्ठत्वादिति। तदुभयमवलोक्य तयोरा-क्षेपसङ्गतिं योजयेत्। सन्दिग्धत्वात् ब्रह्म विचार्यमित्युक्तं, जन्मादेरन्य-निष्ठत्वेन ब्रह्मणो लक्षणाभावे सति ब्रह्मैव नास्ति कुतस्तस्य सन्दिग्धत्वं विचार्यत्वञ्चेत्याक्षेपसङ्गतिः। दृष्टान्तप्रत्युदाहरणसङ्गती चात्र योज-यितुं शक्येते, यथा सन्दिग्धत्वेन हेतुना ब्रह्मणो विचार्यत्वं तथा जन्मा-देरन्यनिष्ठत्वेन हेतुना ब्रह्मणो लक्षणं नास्तीति दृष्टान्तसङ्गतिः। यथा विचार्यत्वे हेतुरस्ति न तथा लक्षणसद्भावे हेतुं पश्यामः इति प्रत्युदाहरणसङ्गतिः। ते एते दृष्टान्तप्रत्युदाहरणसङ्गती सर्वत्र सुलभे, पूर्वाधिकरणसिद्धान्ते तदुत्तराधिकरणपूर्वपक्षहेतुमत्त्वसाम्यस्योत्त-राधिकरणसिद्धान्ते हेतुशून्यत्ववैलक्षण्यस्य च मन्दैरप्युत्प्रेक्षितुं शक्य-त्वात्। आक्षेपसङ्गतिर्यथायोग्यमूह्या। प्रासङ्गिकी सङ्गतिरुदाहृ-

यते, देवताधिकरणस्याधिकारविचारपरत्वात् समन्वयाध्याये ज्ञेयब्रह्मवाक्यविषये तृतीयपादे च सङ्गत्यभावेऽपि बुद्धिस्थावान्तरसङ्गतिरेवास्ति, तथाहि पूर्वाधिकरणे अङ्गुष्ठमात्रवाक्यस्य ब्रह्मपरवाक्यत्वात् अङ्गुष्ठमात्रत्वं ब्रह्मणो मनुष्यहृदयापेक्षं मनुष्याधिकारत्वात् शास्त्रस्य इत्युक्तं, तत्प्रसङ्गेन देवताधिकारो बुद्धिस्थः, सेयं प्रासङ्गिकी सङ्गतिः। तदेवं न्यायसङ्गतिर्व्युत्पादिता, इदानीं प्रत्यधिकरणमवयवचतुष्टयं श्लोकाभ्यां संगृह्यते ॥ १० ॥

---

अथातो ब्रह्मजिज्ञासा ॥ १ ॥ ब्रह्मसूत्रं।
प्रथमाध्यायस्य प्रथमपादे
प्रथमाधिकरणमारचयति।

अविचार्यं विचार्यं वा ब्रह्माऽध्यासानिरूपणात्?।
असन्देहाफललाभ्यां न विचारं तदर्हति ॥
अध्यासोऽहंबुद्धिसिद्धोऽसङ्गं ब्रह्म श्रुतीरितम्।
सन्देहान्मुक्तिभावाच्च विचार्यं ब्रह्म वेदतः ॥ १ ॥

जन्माद्यस्य यतः ॥ २ ॥ सूत्रं।
प्रथमाध्यायस्य प्रथमपादे
द्वितीयाधिकरणमारचयति।

लक्षणं ब्रह्मणो नास्ति किं वास्ति? नहि विद्यते।
जन्मादेरन्यनिष्ठत्वात्, सत्यादेश्चाप्रसिद्धितः ॥
ब्रह्मनिष्ठं कारणत्वं स्याल्लक्ष्यं स्रग्भुजङ्गवत्।
लौकिकानीव सत्यादीन्यखण्डं लक्षयन्ति हि ॥ २ ॥

शास्त्रयोनित्वात् ॥ ३ ॥ सूत्रं।
प्रथमाध्यायस्य प्रथमपादे
तृतीयाधिकरणस्य प्रथमवर्णकमारचयति।

न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ ? न कर्तृ तत्।
'विरूपनित्यया वाचे'त्येवं नित्यत्वकीर्त्तनात् ॥
कर्तृ, निश्वसितात् युक्तेर्नित्यत्वं पूर्वसाम्यतः।
सर्वावभासि वेदस्य कर्तृत्वात् सर्ववित्भवेत् ॥ २ ॥

प्रथमाध्यायस्य प्रथमपादे
तृतीयाधिकरणस्य द्वितीयं वर्णकमाह।

अस्त्यन्यमेयताऽप्यस्य किं वा वेदैकमेयता ?।
घटवत्सिद्धवस्तुत्वात् ब्रह्मान्येनापि मीयते ॥
रूपलिङ्गादिराहित्यान्नास्य मानान्तरयोग्यता।
'तन्त्वौपनिषदे'त्यादौ प्रोक्ता वेदैकमेयता॥ ३ ॥

तत्तु समन्वयात् ॥ ४ ॥ सूत्रं।
प्रथमाध्यायस्य प्रथमपादे
चतुर्थाधिकरणस्य प्रथमवर्णकमाह।

वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत ?।
अनुष्ठानोपयोगित्वात् कर्त्रादिप्रतिपादिकाः ॥
भिन्नप्रकरणाल्लिङ्गषट्काच्च ब्रह्मबोधकाः।
सति प्रयोजनेऽनर्थहानेऽनुष्ठानतोऽस्य किं ॥ ४ ॥

प्रथमाध्यायस्य प्रथमपादे
चतुर्थाधिकरणस्य द्वितीयं वर्णकमाह।

प्रतिपत्तिं विधित्सन्ति ब्रह्मण्यवसिता उत ?।
शास्त्रत्वात् ते विधातारो मननादेश्च कीर्त्तनात् ॥

नाकर्तृतन्त्रेऽस्ति विधिः, शास्त्रत्वं शंसनादपि।
मननादेः पुराबोधात् ब्रह्मण्यवसितास्ततः॥ ४॥

ईक्षतेर्नाशब्दं॥ ५॥ गौणश्चेन्नात्मशब्दात्॥ ६॥ तन्निष्ठस्य मोक्षोपदेशात्॥ ७॥ हेयत्वावचनाच्च॥ ८॥ स्वाप्ययात्॥ ९॥ गतिसामान्यात्॥ १०॥ श्रुतत्वाच्च॥ ११॥ सूत्रं।

प्रथमाध्यायस्य प्रथमपादे
पञ्चमाधिकरणमारचयति।

'तदैक्षतेति' वाक्येन प्रधानं ब्रह्म वोच्यते?।
ज्ञानक्रियाशक्तिमत्त्वात् प्रधानं सर्वकारणं॥
ईक्षणाच्चेतनं ब्रह्म, क्रियाज्ञाने तु मायया।
आत्मशब्दात्मतादात्म्ये प्रधानस्य विरोधिनी॥ ५॥

आनन्दमयोऽभ्यासात्॥ १२॥ विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १३॥ तद्धेतुव्यपदेशाच्च॥ १४॥ नेतरोऽनुपपत्तेः॥ १५॥ मान्त्रवर्णिकमेव च गीयते॥ १६॥ भेदव्यपदेशाच्च॥ १७॥ कामाच्च नानुमानापेक्षा॥ १८॥ तस्मिन्नस्य च तद्योगं शास्ति॥ १९॥ सूत्रं।

प्रथमाध्यायस्य प्रथमपादे
षष्ठाधिकरणमेकदेशिमतमारचयति।

संसारी ब्रह्म वाऽऽनन्दमयः? संसार्य्ययं भवेत्।
विकारार्थमयट्शब्दात्, प्रियाद्यवयवोक्तितः॥
अभ्यासोपक्रमादिभ्यो ब्रह्माऽऽनन्दमयो भवेत्।
प्राचुर्यार्थो मयट्शब्दः, प्रियाद्याः स्युरुपाधिगाः॥ ६॥

प्रथमाध्यायस्य प्रथमपादे
स्वमतानुसारेण षष्ठाधिकरणमारचयति।

अन्याङ्गं स्वप्रधानं वा ? 'ब्रह्मपुच्छमिति' श्रुतं।
स्यादानन्दमयस्याङ्गं, पुच्छेऽङ्गत्वप्रसिद्धितः ॥
लाङ्गूलासम्भवादत्र पुच्छेनाधारलक्षणा।
आनन्दमयजीवोऽस्मिन्नाश्रितोऽतः प्रधानता ॥ ६ ॥

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ भेदव्यपदेशाच्चान्यः ॥ २१ ॥ सूत्र।

प्रथमाध्यायस्य प्रथमपादे
सप्तमाधिकरणमारचयति।

हिरण्मयो देवतात्मा किं वाऽसौ परमेश्वरः ?।
मर्यादाधाररूपोक्तेर्देवतात्मैव, नेश्वरः ॥
सार्वात्म्यात् सर्वदुरितराहित्याच्चेश्वरो मतः।
मर्यादाद्या उपास्त्यर्थमीशेऽपि स्युरुपाधिगाः ॥ ७ ॥

आकाशस्तल्लिङ्गात् ॥ २२ ॥ सूत्रं।
प्रथमाध्यायस्य प्रथमपादे
अष्टमाधिकरणमारचयति।

'आकाश इति होवाचे'त्यत्र खं ब्रह्म वा?ऽत्र खं।
शब्दस्य तत्र रूढत्वात्, वाय्वादेः सर्जनादपि ॥
साकाशजगदुत्पत्तिहेतुत्वात् श्रौतरूढितः।
एवकारादिना चात्र ब्रह्मैवाकाशशब्दितं ॥ ८ ॥

अतएव प्राणः। २३। सूत्र।
प्रथमाध्यायस्य प्रथमपादे
नवमाधिकरणमारचयति।

मुख्यो वायुरीशो वा प्राणः प्रस्तावदेवता?।
वायुर्भवेत्, तत्र सुप्तौ भूतधारेन्द्रियक्षयात् ॥

सङ्कोचोऽत्यपरत्वे स्यात् सर्वभूतलयश्रुतेः।
आकाशशब्दवत् प्राणशब्दस्तेनेशवाचकः॥ ९॥

ज्योतिश्चरणाभिधानात्॥ २४॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनं॥ २५॥ भूतादिपादव्यपदेशोपपत्तेश्चैवं॥ २६॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नविरोधात्॥ २७॥ सूत्रं।

प्रथमाध्यायस्य प्रथमपादे
दशमाधिकरणमारचयति।

कार्यं ज्योतिरुत ब्रह्म 'ज्योतिर्दीप्यत' इत्यदः?।
ब्रह्मणोऽसन्निधेः कार्यं, तेजोलिङ्गबलादपि॥
चतुष्पात् प्रकृतं ब्रह्म यच्छब्देनानुवर्त्तते।
ज्योतिः स्यात् भासकं ब्रह्म, लिङ्गन्तूपाधियोगतः॥१०॥

प्राणस्तथानुगमात्॥ २८॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्॥ २९॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ ३०॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥ ३१॥ सूत्रं।

इति प्रथमाध्यायस्य प्रथमपादः॥ ※॥

---

प्रथमाध्यायस्य प्रथमपादे
एकादशाधिकरणमारचयति।

'प्राणोऽस्मी'त्यत्र वाय्विन्द्रजीवब्रह्मसु संशयः।
चतुर्णां लिङ्गसद्भावात् पूर्वपक्षस्त्वनिर्णयः॥
ब्रह्मणोऽनेकलिङ्गानि तानि सिद्धान्यनन्यथा।
अन्येषामन्यथासिद्धेर्व्युत्पाद्यं ब्रह्म, नेतरत्॥ ११॥

इति प्रथमाध्यायस्य प्रथमः पादः॥ ※॥

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ सूत्रं।

प्रथमाध्यायस्य द्वितीयपादे
प्रथमाधिकरणमारचयति।

मनोमयोऽयं शारीर ईशो वा? प्राणमानसे।
हृदयस्थित्यणीयस्त्वे जीवे स्वस्तेन जीवगाः॥
शमवाक्यगतं ब्रह्म तद्धितादिरपेक्षते।
प्राणादियोगश्चिन्तार्थश्चिन्त्यं ब्रह्म प्रसिद्धितः॥ १॥

अत्ता चराचरग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥ सूत्रं।

प्रथमाध्यायस्य द्वितीयपादे
द्वितीयाधिकरणमारचयति।

जीवोऽग्निरीशो वाऽत्ता स्याद्? ओदने जीव इष्यतां।
'स्वादत्तीति' श्रुतेर्वह्निर्वाग्निरन्नाद इत्यदः॥
ब्रह्मक्षत्रादिजगतो भोज्यत्वात् स्यादिहेश्वरः।
ईशप्रश्नोत्तरत्वाच्च संहारस्तस्य चात्तृता॥ २॥

गुहाम्प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥ सूत्र।

प्रथमाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति।

गुहाम्प्रविष्टौ धीजीवौ जीवेशौ वा हृदिस्थितौ?।
छायातपाख्यदृष्टान्तात् धीजीवौ स्तो विलक्षणौ॥

'पिबन्ताविति' चैतन्यद्वयं जीवेश्वरौ ततः।
द्वन्स्थानमुपलब्धौ स्याद्वैलचण्यमुपाधितः॥ ३॥

अन्तर उपपत्तेः॥ १३॥ स्थानादिव्यपदेशाच्च॥ १४॥ सुखविशिष्टाभिधानादेव च॥ १५॥ श्रुतोपनिषत्कगत्यभिधानाच्च॥ १६॥ अनवस्थितेरसम्भवाच्च नेतरः॥ १७॥ सूत्रं।

प्रथमाध्यायस्य द्वितीयपादे
चतुर्थाधिकरणमारचयति।

छायाजीवो, देवतेशौ वा?'एषोऽक्षिणि दृश्यते'।
आधारदृश्यतोक्तेश्च्छायाद्न्येषु त्रिषु कश्चन॥
कं खं ब्रह्म यदुक्तं प्राक् तदेवाक्षिण्युपास्यते।
वामनीत्वादिनाऽन्येषु नाम्टतत्वादिसम्भवः॥ ४॥

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्॥ १८॥ नच स्मार्त्तमतद्धर्माभिलापात्॥ १९॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते॥ २०॥ सूत्रम्।

प्रथमाध्यायस्य द्वितीयपादे
पञ्चमाधिकरणमारचयति।

प्रधानं जीव ईशो वा कोऽन्तर्यामी जगत् प्रति?।
कारणत्वात् प्रधानं स्याज्जीवो वा कर्मणो मुखात्।
जीवैकत्वाम्टतत्वादेरन्तर्यामी य ईश्वरः।
द्रष्टृत्वादेर्न प्रधानं न जीवोऽपि नियम्यतः॥ ५॥

अदृश्यत्वादिगुणको धर्मोक्तेः॥ २१॥ विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ॥ २२॥ रूपोपन्यासाच्च॥ २३॥ सूत्रम्।

प्रथमाध्यायस्य द्वितीयपादे
षष्ठाधिकरणमारचयति।

भूतयोनिः प्रधानं वा जीवो वा यदि वेश्वरः?।
आद्यौ पक्षावुपादाननिमित्तत्वाभिधानतः॥
ईश्वरो भूतयोनिः स्यात्, सर्वज्ञत्वादिकीर्तनात्॥
दिव्याद्युक्तेर्न जीवः स्यात्, न प्रधानं भिदोक्तितः॥ ६॥

वैश्वानरः साधारणशब्दविशेषात्॥ २४॥ स्मर्यमाणमनुमानं स्यादिति॥ २५॥ शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते॥ २६॥ अत एव न देवता भूतञ्च॥ २७॥ साक्षादप्यविरोधं जैमिनिः॥ २८॥ अभिव्यक्तेरित्याश्मरथ्यः॥ २९॥ अनुस्मृतेर्बादरिः॥ ३०॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति॥ ३१॥ आमनन्ति चैनमस्मिन्॥ ३२॥ सूत्रम्।

इति प्रथमाध्यायस्य द्वितीयपादः॥ * ॥

---

प्रथमाध्यायस्य द्वितीयपादे
सप्तमाधिकरणमारचयति।

वैश्वानरः कौक्षभूतदेवजीवेश्वरेषु कः?।
वैश्वानरात्मशब्दाभ्यामीश्वरान्येषु कश्चन॥
मूर्द्धत्वादिश्रवात् ब्रह्मशब्दाच्चेश्वर ईष्यते।
वैश्वानरात्मशब्दौ तावीश्वरस्याऽपि वाचकौ॥ ७॥

इति प्रथमाध्यायस्य द्वितीयपादः॥ * ॥

द्युभ्वाद्यायतनं स्वशब्दात्॥ १ ॥ मुक्तोपसृप्यव्यपदेशात्॥ २ ॥ नानुमानमतच्छब्दात्॥ ३॥ प्राणभृच्च॥ ४ ॥ भेदव्यपदेशात्॥ ५ ॥ प्रकरणात्॥ ॥ ६ ॥ स्थित्यदनाभ्याञ्च ॥ ७॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
प्रथमाधिकरणमारचयति।

सूत्रं प्रधानं भोक्तेशो द्युभ्वाद्यायतनं भवेत्।
श्रुतिस्मृतिप्रसिद्धिभ्यां भोक्तृवाचेश्वरेतरः॥
नाद्यो पत्तावात्मशब्दात् न भोक्ता मुक्तगम्यतः।
ब्रह्मप्रकरणादीशः सर्वज्ञत्वादितस्तथा॥ १॥

भूमा सम्प्रसादादध्युपदेशात्॥ ८ ॥ धर्मोपपत्तेश्च ॥ ९ ॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
द्वितीयाधिकरणमारचयति।

भूमा प्राणः परेशो वा? प्रश्नप्रत्युक्तिवर्जनात्।
अनुवर्त्यातिवादित्वं भूमोक्तेर्वायुरेव सः॥
विच्छिद्यैष त्विति प्राणं सत्यस्योपक्रमात्तथा।
महोपक्रम आत्मोक्तेरीशोऽयं, द्वैतवारणात्॥ २ ॥

अक्षरमम्बरान्तधृतेः॥ १० ॥ सा च प्रशासनात्॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
तृतीयाधिकरणमारचयति।

अक्षरं प्रणवः किं वा ब्रह्म? लोकेऽक्षराभिधा।
वर्णे प्रसिद्धा, तेनात्र प्रणवः स्यादुपास्तये॥

अव्याकृताधारतोक्तेः सर्वधर्मनिषेधतः।
शासनात् द्रष्टृतादेश्च ब्रह्मैवाक्षरमुच्यते ॥ ३ ॥

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
चतुर्थाधिकरणमारचयति।

त्रिमात्रप्रणवे ध्येयमपरं ब्रह्म वा परम्?।
ब्रह्मलोकफलाप्त्यादेरपरं ब्रह्म गम्यते ॥
ईक्षितव्यो जीवघनात् परस्तत्प्रत्यभिज्ञया।
भवेत् ध्येयं परं ब्रह्म, क्रममुक्तिः फलिष्यति ॥ ४ ॥

दहर उत्तरेभ्यः ॥ १४॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च ॥ १५॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥ १७ ॥ इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १८॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
पञ्चमाधिकरणमारचयति।

दहरः को वियज्जीवो ब्रह्म वा?ऽऽकाशशब्दतः।
वियत् स्यादथवाऽल्पत्वश्रुतेर्जीवो भविष्यति ॥
जन्माद्यकाशेपमानेन द्युमुख्यादिसमाहितेः।
आत्माऽपहतपाप्मत्वात् सेतुत्वाच्च परेश्वरः ॥ ५ ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९॥ अन्यार्थश्च परामर्शः ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
षष्ठाधिकरणमारचयति।

यः प्रजापतिविद्यायां स किं जीवोऽथवेश्वरः?।
जाग्रत्स्वप्नसुषुप्तोक्तेस्तद्वान् जीव इहोचितः॥
'आत्मापहतपाप्मेति' मक्रम्यान्ते स उत्तमः।
पुमानित्युक्त ईशोऽत्र जाग्रदाद्यनबुद्धये॥ ६॥

अनुकृतेस्तस्य च॥ २२॥ अपि च स्मर्यते॥ २३॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
सप्तमाधिकरणमारचयति।

'न तत्र सूर्यो भातीति' तेजोऽन्तरमुतापि चित्?।
तेजोऽभिभावकत्वेन तेजोऽन्तरमिदं महत्॥
चित् स्यात्, सूर्याद्यभास्यत्वात् तादृक्तेजोऽप्रसिद्धितः।
सर्वस्मात् पुरतोभानात् तद्भासा चान्यभासनात्॥ ७॥

शब्दादेव प्रमितः॥ २४॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
अष्टमाधिकरणमारचयति।

'अङ्गुष्ठमात्रो' जीवः स्यादीशो वा?ऽल्पप्रमाणतः।
देहमध्ये स्थितेश्चैव जीवो भवितुमर्हति॥
भूतभव्येशता जीवे नास्त्यतोऽसाविहेश्वरः।
स्थितिप्रमाणे ईशोऽपि स्तो हृदय्योपलक्षितः॥ ८॥

तदुपर्यपि बादरायणः सम्भवात्॥ २६॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥ २७॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानु-

मानाभ्यां ॥ २८ ॥ अतएव च नित्यत्वं ॥ २९ ॥ समाननामरूपत्वाच्चा-वृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥३१॥ ज्योतिषि भावाच्च ॥ ३२ ॥ भावन्तु वादरायणोऽस्तिति ॥ ॥ ३३ ॥ सूत्रम् ।

प्रथमाध्यायस्य तृतीयपादे
नवमाधिकरणमारचयति ।

नाधिक्रियन्ते विद्यायां देवाः किंवाऽधिकारिणः ? ।
विदेहत्वेन सामर्थ्यहानेनैषामधिक्रिया ॥
अविरुद्धार्थवादादिमन्त्रादेर्देहसत्त्वतः ।
अर्थित्वादेश्च सौलभ्याद्देवाद्या अधिकारिणः ॥ ९ ॥

शुगस्य तदनादरश्रवणात् तदा द्रवणात् सूच्यते हि ॥ ३४ ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥ सूत्रम् ।

प्रथमाध्यायस्य तृतीयपादे
दशमाधिकरणमारचयति ।

शूद्रोऽधिक्रियते वेदविद्यायामथवा न हि? ।
अत्रैवर्णिकदेवाद्या इव शूद्रोऽधिकारवान् ॥
देवाः स्वयंभातवेदाः, शूद्रोऽध्ययनवर्जनात् ।
नाधिकारी श्रुतौ, स्मार्ते त्वधिकारो न वार्यते ॥ १० ॥

कम्पनात ॥ ३९ ॥ सूत्रम् ।
प्रथमाध्यायस्य तृतीयपादे
एकादशाधिकरणमारचयति ।

जगत्कम्पनकृत् प्राणोऽशनिर्वायुरुतेश्वरः?।
अशनिर्भयहेतुत्वात्, वायुर्वा देहचालनात्॥
वेदनादमृतत्वोक्तेरीशोऽन्तर्यामिरूपतः।
भयहेतुश्चालनन्तु सर्वशक्तियुतत्वतः॥ ११॥

ज्योतिर्दर्शनात्॥ ४०॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
द्वादशाधिकरणमारचयति।

परं ज्योतिस्तु सूर्यस्य मण्डलं ब्रह्म वा भवेत्?।
'समुत्थायोपसम्पद्ये'त्युक्त्या स्याद्रविमण्डलम्॥
समुत्थानं लम्पदार्थशुद्धिर्वाक्यार्थबोधनम्।
सम्पत्तिरुत्तमत्वोक्तेर्ब्रह्म स्यादचिराचितः॥ १२॥

आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ ४१॥ सूत्रम्।

प्रथमाध्यायस्य तृतीयपादे
त्रयोदशाधिकरणमारचयति।

वियद्वा ब्रह्म वा'ऽऽकाशो वै नामेति' श्रुतं, वियत्।
अवकाशप्रधानेन सर्वनिर्वाहकत्वतः॥
निर्वोढृत्वं नियन्तृत्वं चैतन्यस्यैव तत् ततः।
ब्रह्म स्यादात्मशब्दे च 'ब्रह्मात्मेत्यादि'शब्दतः॥ १३॥

सुषुप्त्युत्क्रान्त्योर्भेदेन॥ ४२॥ पत्यादिशब्देभ्यः॥ ४३॥ सूत्रम्।

इति प्रथमाध्यायस्य तृतीयपादः॥ ०॥

---

प्रथमाध्यायस्य तृतीयपादे
चतुर्दशाधिकरणमारचयति।

आदिशानमयो जीवो ब्रह्म वा? जीव इष्यते।
आदिमध्यावसानेषु संसारप्रतिपादनात्॥
विविच्य लोकसंसिद्धं जीवं प्राणाद्युपाधितः।
ब्रह्मत्वमन्यतोऽप्राप्तं बोध्यते ब्रह्म नेतरत्॥ १४॥

इति प्रथमाध्यायस्य तृतीयपादः॥ ०॥

---

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति॥ १॥ सूक्ष्मन्तु तदर्हत्वात्॥ २॥ तदधीनत्वादर्थवत्॥ ३॥ ज्ञेयत्वावचनाच्च॥ ४॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात्॥ ५॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च॥ ६॥ महद्वच्च॥ ७॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

'महतः परमव्यक्तं' प्रधानमथवा वपुः।
प्रधानं साङ्ख्यशास्त्रोक्ततत्त्वानां प्रत्यभिज्ञया॥
श्रुतार्थप्रत्यभिज्ञानात् परिशेषाच्च तद्वपुः।
सूक्ष्मत्वात् कारणावस्थामव्यक्ताख्यां तदर्हति॥ १॥

चमसवदविशेषात्॥ ८॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ ९॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः॥ १०॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणमारचयति।

अजा हि साङ्ख्यप्रकृतिस्तेजोऽबन्नात्मिकाऽथवा?।
रजआदौ लोहितादिलच्छोऽसौ साङ्ख्यशास्त्रगा॥
लोहितादिप्रत्यभिज्ञा तेजोऽबन्नात्मलक्षणाम्।
प्रकृतिं गमयेत् श्रौतीमजाक्लृप्तिर्मधुत्ववत्॥ २॥

न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च॥ ११॥ प्राणादयो वाक्यशेषात्॥ १२॥ ज्योतिषैकेषामसत्यन्ने॥ १३॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति।

पञ्च पञ्चजनाः साङ्ख्यतत्त्वान्याहो श्रुतीरिताः।
प्राणाद्याः? साङ्ख्यतत्त्वानि, पञ्चविंशतिभासनात्॥
न पञ्चविंशतेर्भानमात्माकाशातिरेकतः।
संज्ञा 'पञ्चजने'त्येषा प्राणाद्याः संज्ञिनः श्रुताः॥ ३॥

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः॥ १४॥ समाकर्षात्॥ १५॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति।

समन्वयो जगद्योनौ न युक्तो युज्यतेऽथवा?।
न युक्तो, वेदवाक्येषु परस्परविरोधतः॥
सर्गक्रमविवादेऽपि नासौ स्रष्टरि विद्यते।
अव्याकृतमसत् प्रोक्तं युक्तोऽसौ कारणे ततः॥ ४॥

* जगद्वाचित्वात्॥ १६॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातं॥ १७॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके॥ १८॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति।

पुरुषाणान्तु कः कर्ता प्राणजीवपरात्मसु?।
'कर्मेति' चलने प्राणो, जीवोऽपूर्वे विवक्षिते॥
जगद्वाची कर्मशब्दः पुमान्तविनिवृत्तये।
तत्कर्ता परमात्मैव न मृषावादिता ततः॥ ५॥

वाक्यान्वयात्॥ १९॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य॥ २०॥ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः॥ २१॥ अवस्थितेरिति काशकृत्स्न॥ २२॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
षष्ठाधिकरणमारचयति।

'आत्मा द्रष्टव्य' इत्युक्तः संसारी वा परेश्वरः?।
संसारी, पतिजायादिभोगप्रीत्याऽस्य सूचनात्॥
अमृतत्वमुपक्रम्य तदन्तेऽप्युपसंहृतम्।
संसारिणमनूद्यात परेशत्वं विधीयते॥ ६॥

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्॥ २३॥ अभिध्योपदेशाच्च॥ २४॥ साक्षाच्चोभयाम्नानात्॥ २५॥ आत्मकृतेः परिणामात्॥ २६॥ योनिश्च हि गीयते॥ २७॥ सूत्रम्।

प्रथमाध्यायस्य चतुर्थपादे
सप्तमाधिकरणमारचयति।

निमित्तमेव ब्रह्म स्यादुपादानञ्च वेक्षणात्?।
कुलालवन्निमित्तं तत्, नोपादानं मृदादिवत्॥

'वक्तृ स्याम्' इत्युपादानभावोऽपि श्रुत ईयितुः।
एकबुद्ध्या सर्वधीश्च तस्मात् ब्रह्मोभयात्मकं ॥ ७ ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ सूत्रम्।

इति प्रथमाध्यायस्य चतुर्थः पादः ॥ ० ॥

---

प्रथमाध्यायस्य चतुर्थपादे
अष्टमाधिकरणमारचयति।

अण्वादेरपि हेतुत्वं श्रुतं ब्रह्मण एव वा?।
वटधानादिदृष्टान्तादण्वादेरपि तत् श्रुतं ॥
शून्याण्वादिष्वेकबुद्ध्या सर्वबुद्धिर्न युज्यते।
सुब्रह्मण्यपि धानाद्यास्ततो ब्रह्मैव कारणम् ॥ ८ ॥

इति प्रथमाध्यायस्य चतुर्थः पादः ॥ ० ॥

---

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥
इतरेषां चानुपलब्धेः ॥ २ ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
प्रथमाधिकरणमारचयति।

साङ्ख्यस्मृत्याऽस्ति सङ्कोचो न वा वेदसमन्वये?।
धर्मे वेदः सावकाशः सङ्कोचोऽनवकाशया ॥
प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः।
अमूला कापिली बाध्या न सङ्कोचोऽनया ततः ॥ १ ॥

एतेन योगः प्रत्युक्तः ॥ ३ ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
द्वितीयाधिकरणमारचयति।

योगस्मृत्याऽस्ति सङ्कोचो न वा? योगो हि वैदिकः।
तत्त्वज्ञानोपयुक्तश्च ततः सङ्कुच्यते तया॥
प्रमाऽपि योगे तात्पर्यादतात्पर्यान्न सा प्रमा।
अवैदिके प्रधानादावसङ्कोचस्तयाऽप्यतः॥ २॥

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ अपीतौ तद्वत् प्रसङ्गादसमञ्जसं ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
प्रथमाधिकरणमारचयति।

वैलक्षण्याख्यतर्केण बाध्यतेऽथ न बाध्यते?।
बाध्यते, साम्यनियमात् कार्यकारणवस्तुनोः॥
मृद्घटादौ समत्वेऽपि दृष्ट वृश्चिककेशयोः।
स्वकारणेन वैषम्यं तर्काभासो न बाधकः॥ ३॥

एतेन शिष्टापरिग्रहा अपि व्याख्याता ॥ १२ ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
चतुर्थाधिकरणमारचयति।

बाधोऽस्ति परमाण्वादिमतैर्नो वा? यतः पटः।
न्यूनतन्तुभिरारब्धो दृष्टोऽतो बाध्यते मतैः॥

शिष्टेष्टाऽपि स्मृतिस्त्यक्ता शिष्टत्यक्तमतं किमु।
नातो बाधो विवर्त्ते तु न्यूनत्वनियमो नहि ॥ ४ ॥

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
पञ्चमाधिकरणमारचयति।

अद्वैतं बाध्यते नो वा? भोक्तृभोग्यविभेदतः।
प्रत्यक्षादिप्रमासिद्धो भेदोऽसावन्यबाधकः ॥
तरङ्गफेणभेदेऽपि समुद्रेऽभेद इष्यते।
भोक्तृभोग्यविभेदेऽपि ब्रह्माद्वैतं तथाऽस्तु तत् ॥ ५ ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ भावे चोपलब्धेः ॥ १५ ॥ सत्त्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥ युक्तेः शब्दान्तराच्च ॥ १८ ॥ पटवच्च ॥ १९ ॥ यथाच प्राणादि ॥ २० ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
षष्ठाधिकरणमारचयति।

भेदाभेदौ तात्त्विकौ स्तो यदि वा व्यवहारिकौ?।
समुद्रादाविव तयोर्बाधाभावेन तात्त्विकौ ॥
बाधितौ श्रुतियुक्तिभ्यां तावेतौ व्यवहारिकौ।
कार्यस्य कारणाभेदादद्वैतं ब्रह्म तात्त्विक ॥ ६ ॥

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधिकन्तु भेदनिर्देशात् ॥ २२ ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
सप्तमाधिकरणमारचयति।

हिताक्रियादिः स्यान्नो वा? जीवाभेदं प्रपश्यतः।
जीवाहितक्रिया स्वार्था स्यादेषा नहि युज्यते॥
अवस्तुजीवसंसारस्तेन नास्ति मम क्षतिः।
इति पश्यत ईशस्य न हिताहितभागिता॥ ७॥

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि॥ २४॥ देवादिवदपि लोके॥ २५॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
अष्टमाधिकरणमारचयति।

न सम्भवेत् सम्भवेद्वा सृष्टिरेका द्वितीयतः?।
नानाजातीयकार्याणां क्रमाज्जन्म न सम्भवि॥
अद्वैतं तत्त्वतो ब्रह्म, तच्चाविद्यासहायवत्।
नानाकार्यकरं, कार्यक्रमोऽविद्यास्वशक्तिभिः॥ ८॥

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा॥ २६॥ श्रुतेस्तु शब्दमूलत्वात्॥ २७॥ आत्मनि चैवं विचित्राश्च हि॥ २८॥ स्वपक्षदोषाच्च॥ २९॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
नवमाधिकरणमारचयति।

न युक्तो युज्यते वास्य परिणामो? न युज्यते।
कार्त्स्न्याद्ब्रह्मनित्यतानेरंशात् सावयवं भवेत्।
मायाभिर्बहुरूपत्वं न कार्त्स्न्यान्नापि भागतः।
युक्तोऽनवयवस्यापि परिणामोऽत्र मायिकः॥ ९॥

सर्वोपेता च तद्दर्शनात्॥ ३०॥ विकरणत्वान्नेति चेत्तदुक्तं॥ ३१॥ सूत्रम्।

द्वितीयाध्यायस्य प्रथमपादे
दशमाधिकरणमारचयति।

नाशरीरस्य मायाऽस्ति यदिवाऽस्ति? न विद्यते।
ये हि मायाविनो लोके ते सर्वेऽपि शरीरिणः॥
बाह्यहेतुमृते यद्वन् मायया कार्यकारिता।
ऋतेऽपि देहं मायैव ब्रह्मणस्तु प्रमाणतः॥ १०॥

न प्रयोजनवत्त्वात्॥ ३२॥ लोकवत्तु लीलाकैवल्यं॥ ३३॥ सूत्रं।

द्वितीयाध्यायस्य प्रथमपादे
एकादशाधिकरणमारचयति।

दृप्तोऽस्रष्टाऽथवा स्रष्टा? न स्रष्टा, फलवाञ्छने।
अदृप्तः स्याद्,ऽवाञ्छायामुन्मत्तनरतुल्यता॥
लीलाश्वासवृथाचेष्टा अनुद्दिश्य फलं यतः।
अनुन्मत्तैर्विरच्यन्ते, तस्मात् दृप्तस्तथा सृजेत्॥ ११॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति॥ ३४॥ न कर्माविभागादिति चेन्नानादित्वात्॥ ३५॥ उपपद्यते चाप्युपलभ्यते च॥ ॥ ३६॥ सूत्रं।

द्वितीयाध्यायस्य प्रथमपादे
द्वादशाधिकरणमारचयति।

वैषम्याद्यापतेन्नो वा? सुखदुःखे नृभेदतः।
सृजन् विषम ईशः स्यान् निर्घृणश्चोपसंहरन्॥
प्राणनुष्ठितधर्मादिमपेक्ष्येशः प्रवर्तते।
नातो वैषम्यनैर्घृण्ये, संसारस्तु न चादिमान्॥ १२॥

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ सूत्रं

इति द्वितीयाध्यायस्य प्रथमपादः ॥ ※ ॥

---

द्वितीयाध्यायस्य प्रथमपादे
त्रयोदशाधिकरणमारचयति ।

नास्ति प्रकृतिता यद्वा निर्गुणस्याऽस्ति? नास्ति सा ।
मृदादेः सगुणस्यैवं प्रकृतित्वोपलम्भनात् ॥
भ्रमाधिष्ठानताऽस्माभिः प्रकृतित्वमुपेयते ।
निर्गुणेऽप्यस्ति जात्यादौ स्याद्ब्रह्म प्रकृतिस्ततः ॥ १३ ॥

इति द्वितीयाध्यायस्य प्रथमपादः ॥ ※ ॥

---

रचनानुपपत्तेश्च नानुमानं ॥ १ ॥ प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चेत्तत्राऽपि ॥ ३ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ विप्रतिषेधाच्चासमञ्जसं ॥ १० ॥ सूत्रम् ।

द्वितीयाध्यायस्य द्वितीयपादे
प्रथमाधिकरणमारचयति ।

प्रधानं जगतो हेतुर्न वा? सर्वे घटादयः ।
अन्विताः सुखदुःखाद्यैर्यतो हेतुरतो भवेत् ॥
न हेतुर्, योग्यरचनाप्रवृत्त्यादेरसम्भवात् ।
सुखाद्या आन्तरा बाह्या घटाद्यास्, कुतोऽन्वयः ॥ १ ॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां ॥ ११ ॥ सूत्रम्।

द्वितीयाध्यायस्य द्वितीयपादे
द्वितीयाधिकरणमारचयति।

नास्ति काणाददृष्टान्तः किं वास्त्यसदृशोद्भवे ?।
नास्ति, शुक्लः पटः शुक्लात् तन्तोरेव हि जायते ॥
अणु द्व्यणुकमुत्पन्नमनणोः परिमण्डलात्।
अदीर्घात् द्व्यणुकाद्दीर्घं त्र्यणुकं तन्निदर्शनम् ॥ २ ॥

उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ नित्यमेव च भावात् ॥ १४ ॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥ उभयथा च दोषात् ॥१६॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ सूत्रम्।

द्वितीयाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति।

जनयन्ति जगन्नो वा संयुक्ताः परमाणवः ?।
आद्यकर्मजसंयोगात् द्व्यणुकादिक्रमाज्जनिः ॥
सनिमित्तानिमित्तादिविकल्पेष्वाद्यकर्मणः।
असम्भवादसंयोगे जनयन्ति न ते जगत् ॥ ३ ॥

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ उभयथा च दोषात् ॥ २३ ॥ आकाशे चाविशेषात् ॥ २४ ॥ अनुस्मृतेश्च ॥ २५ ॥ नासतोऽदृष्टत्वात् ॥ २६ ॥ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ सूत्रम्।

द्वितीयाध्यायस्य द्वितीयपादे
चतुर्थाधिकरणमारचयति।

समुदायावुभौ युक्तावयुक्तौ वाऽणुहेतुकः।
एकोऽपरः स्कन्धहेतुरित्येवं युज्यते द्वयं॥
स्थिरचेतनराहित्यात् खयञ्चाचेतनत्वतः।
न स्कन्धानामणूनां वा समुदायोऽत्र युज्यते॥ ४ ॥

• नाभाव उपलब्धेः ॥ २८ ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ न भावोऽनुपलब्धेः ॥ ३० ॥ क्षणिकत्वाच्च ॥ ३१ ॥ सर्वथानुपपत्तेश्च ॥ ३२ ॥ सूत्रम्।

द्वितीयाध्यायस्य द्वितीयपादे
पञ्चमाधिकरणमारचयति।

विज्ञानस्कन्धमात्रत्वं युज्यते वा न युज्यते।
युज्यते, स्वप्नदृष्टान्तात्, बुद्धैव व्यवहारतः॥
अबाधात् स्वप्नवैषम्यं बाह्यार्थस्तूपलभ्यते।
'बहिर्वद्' इति तेऽप्युक्तिर्नाऽतो धीरर्थरूपभाक्॥ ५ ॥

नैकस्मिन्नसम्भवात् ॥ ३३ ॥ एवञ्चात्माकात्स्र्न्यं ॥ ३४ ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ सूत्रम्।

द्वितीयाध्यायस्य द्वितीयपादे
षष्ठाधिकरणमारचयति।

सिद्धिः सप्तपदार्थानां सप्तभङ्गीनयान्नवा?।
साधकन्यायसद्भावात् तेषां सिद्धौ किमद्भुतं॥

एकस्मिन् सदसत्त्वादिविरुद्धप्रतिपादनात्।
अपन्यायः सप्तभङ्गी, न च जीवस्य सांशता ॥ ६ ॥

पत्युरसामञ्जस्यात् ॥ ३७ ॥ सम्बन्धानुपपत्तेश्च ॥ ३८ ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ करणवच्चेन्न भोगादिभ्यः ॥४०॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ सूत्रम्।

द्वितीयाध्यायस्य द्वितीयपादे
सप्तमाधिकरणमारचयति।

तटस्थेश्वरवादो यः स युक्तोऽथ न युज्यते ?।
युक्तः, कुलालदृष्टान्तान् नियन्तृत्वस्य सम्भवात् ॥
न युक्तो, विषमत्वादिदोषाद्वैदिक ईश्वरे।
अभ्युपेते तटस्थत्वं त्याज्यं श्रुतिविरोधतः ॥ ७ ॥

उत्पत्त्यसम्भवात् ॥ ४२ ॥ न च कर्त्तुः करणं ॥ ४३ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ विप्रतिषेधाच्च ॥ ४५ ॥ सूत्रम्।

इति द्वितीयाध्यायस्य द्वितीयपादः ॥ * ॥

---

द्वितीयाध्यायस्य द्वितीयपादे
अष्टमाधिकरणमारचयति।

जीवोत्पत्त्यादिकं पाञ्चरात्रोक्तं युज्यते न वा ?।
युक्तं, नारायणव्यूहतत्समाराधनादिवत् ॥
युज्यतामविरुद्धोऽंशो जीवोत्पत्तिर्न युज्यते।
उत्पन्नस्य विनाशित्वे कृतनाशादिदोषतः ॥ ८ ॥

इति द्वितीयाध्यायस्य द्वितीयपादः ॥ * ॥

---

न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्यसम्भवात् ॥ ३ ॥ शब्दाच्च ॥ ४ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ यावद्विकारन्तु विभागो लोकवत् ॥ ७॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
प्रथमाधिकरणमारचयति।

व्योम नित्यं जायते वा? हेतुत्रयविवर्जनात्।
जनिश्रुतेश्च गौणत्वात् नित्यं व्योम, न जायते ॥
एकज्ञानात् सर्वबुद्धेर्विभक्तत्वाज्जनिश्रुतेः।
विवर्त्ते कारणैकत्वात् ब्रह्मणो व्योम जायते ॥ १ ॥

एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
द्वितीयाधिकरणमारचयति।

वायुर्नित्यो जायते वा? छान्दोग्येऽजन्मकीर्त्तनात्।
'सैषाऽनस्तमिता देवते'त्युक्तेर्न च जायते ॥
श्रुत्यन्तरोपसंहारात् गौणनस्तमयश्रुतिः।
वियद्वज्जायते वायुः, स्वरूपं ब्रह्म कारणम् ॥ २ ॥

असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
तृतीयाधिकरणमारचयति।

सद्ब्रह्म जायते नो वा? कारणत्वेन जायते।
यत्कारणं जायते तत् वियदाद्यादयो यथा ॥
असतोऽकारणत्वेन खादीनां सत उद्भवात्।
व्याप्तेरजादिवाक्येन बाधात् सन्नैव जायते ॥ ३ ॥

तेजोऽतस्तथाह्याह ॥ १० ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
चतुर्थाधिकरणमारचयति।

ब्रह्मणो जायते वह्निर्वायोर्वा ब्रह्मसंयुतात्।
'तत्तेजोऽसृजते'त्युक्तेर्ब्रह्मणो जायतेऽनलः ॥
'वायोरग्निर्' इति श्रुत्या पूर्वश्रुत्येकवाक्यतः।
ब्रह्मणो वायुरूपत्वमापन्नादग्निसम्भवः ॥ ४ ॥

आपः ॥ ११ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
पञ्चमाधिकरणमारचयति।

ब्रह्मणोऽपां जन्म किं वा वह्नेर्? नाग्नेर्जलोद्भवः।
विरुद्धत्वात्, नीरजन्म ब्रह्मणः सर्वकारणात् ॥
'अग्नेराप' इति श्रुत्या ब्रह्मणो वह्न्युपाधिकात्।
अपां जनिर्विरोधस्तु सूक्ष्मयोर्नाग्निनीरयोः ॥ ५ ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
षष्ठाधिकरणमारचयति।

'ता अन्नमसृजन्ते'ति श्रुतमन्नं यवादिकम्।
पृथिवी वा? यवाद्येव, लोकेऽन्नत्वप्रसिद्धितः ॥
भूताधिकारात् कृष्णस्य रूपस्य श्रवणादपि।
तथा'ऽद्भ्यः पृथिवी'त्युक्तेरन्नं पृथ्व्यत्र नेतरत् ॥ ६ ॥

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
सप्तमाधिकरणमारचयति।

व्योमाद्याः कार्यकर्तारो ब्रह्म वा तदुपाधिकं?।
'व्योम्नो वायुर्वायुतोऽग्निर्' इत्युक्तेः खादिकर्तृता॥
'ईश्वरोऽन्तर्यमयती'त्युक्तेर्व्योमाद्युपाधिकं।
ब्रह्म वाय्वादिहेतुः स्यात् तेजआदीक्षणादपि॥ ७॥

विपर्ययेण तु क्रमोऽत उपपद्यते च॥ १४॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
अष्टमाधिकरणमारचयति।

सृष्टिक्रमो लये ज्ञेयो विपरीतक्रमोऽथ वा?।
क्लृप्तं कल्प्यादरं तेन लये सृष्टिक्रमो भवेत्॥
हेतावसति कार्यस्य न सत्त्वं युज्यते ततः।
'पृथिव्यप्स्विति' चोक्तत्वात् विपरीतक्रमो लये॥ ८॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्॥ १५॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
नवमाधिकरणमारचयति।

किमुक्तक्रमभङ्गोऽस्ति प्राणाद्यैर्नास्ति वा?ऽस्ति हि।
प्राणाक्षमनसां ब्रह्मवियतोर्मध्य ईरणात्॥
प्राणाद्या भौतिका भूतेष्वन्तर्भूताः पृथक् क्रमं।
नेच्छन्त्यतो न भङ्गोऽस्ति, प्राणादौ न क्रमः श्रुतः॥ ९॥

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
दशमाधिकरणमारचयति।

जीवस्य जन्ममरणे वपुषो वाऽऽत्मनो हि ते।
'जातो मे पुत्र' इत्युक्तेर्जातकर्मादितस्तथा ॥
मुख्ये ते वपुषो, भाक्ते जीवस्यैते अपेक्ष्य हि।
'जातकर्म च लोकोक्तिर्जीवापेतेति' शास्त्रतः ॥ १० ॥

नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
एकादशाधिकरणमारचयति।

कल्पादौ ब्रह्मणो जीवो वियद्वत् जायते न वा?।
सृष्टेः प्रागद्वयत्वोक्तेर्जायते विस्फुलिङ्गवत् ॥
ब्रह्माद्वयं जातबुद्धौ जीवत्वेन विशेत् स्वयं।
औपाधिकं जीवजन्म, नित्यत्वं वस्तुतः श्रुतं ॥ ११ ॥

ज्ञोऽत एव ॥ १८ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
द्वादशाधिकरणमारचयति।

अचिद्रूपोऽथ चिद्रूपो जीवोऽचिद्रूप इष्यते।
चिदभावात् सुषुप्त्यादौ जाग्रच्चिन्मनसा कृता ॥
ब्रह्मत्वादेव चिद्रूपश्चित् सुषुप्तौ न लुप्यते।
द्वैतादृष्टिर्द्वैतलोपात् 'न हि द्रष्टुर्' इति श्रुतेः ॥ १२ ॥

उत्क्रान्तिगत्यागतीनां ॥ १९ ॥ स्वात्मना चोत्तरयोः ॥ २० ॥ नाणुर-तच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥ स्वशब्दोन्मानाभ्यां च ॥ २२ ॥ अविरोधश्चन्दनवत् ॥ २३ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृ-दि हि ॥ २४ ॥ गुणाद्वा लोकवत् ॥ २५ ॥ व्यतिरेको गन्धवत् ॥ २६ ॥ तथा च दर्शयति ॥ २७ ॥ पृथगुपदेशात् ॥ २८ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्श-नात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ नित्योप-लब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
त्रयोदशाधिकरणमारचयति।

जीवोऽणुः सर्वगो वा स्यात्? 'एषोऽणुर्' इति वाक्यतः।
उत्क्रान्तिगत्यागमनश्रवणाच्चाणुरेव सः ॥
साभासबुद्ध्यणुत्वेन तदुपाधित्वतोऽणुता।
जीवस्य सर्वगत्वन्तु स्वतो ब्रह्मत्वतः श्रुतम् ॥ १३ ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥ उपादा-नात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥ उप-लब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥ ३९ ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
चतुर्दशाधिकरणमारचयति।

जीवोऽकर्ताऽथवा कर्ता? 'धिय कर्तृत्वसम्भवात्।
जीवकर्तृतया किं स्याद्' इत्याहुः साङ्ख्यमानिनः ॥
करणत्वान्न धीः कर्त्री, योगश्रवणलौकिकाः।
व्यापारा न विना कर्त्रा, तस्मात् जीवस्य कर्तृता ॥ १४ ॥

यथा च तक्षोभयथा ॥ ४० ॥ सूत्रम्।

द्वितीयाध्यायस्य तृतीयपादे
पञ्चदशाधिकरणमारचयति।

कर्तृत्वं वास्तवं किं वा कल्पितं? वास्तवं भवेत्।
'यजेते'त्यादिशास्त्रेण सिद्धस्याबाधितत्वतः॥
'असङ्गो ही'ति तद्बाधात् स्फटिके रक्ततेव तत्।
अध्यस्तं धीचक्षुरादिकरणोपाधिसन्निधेः॥ १५॥

परात्तु तच्छ्रुतेः ॥ ४१ ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥ सूत्रं।

द्वितीयाध्यायस्य तृतीयपादे
षोडशाधिकरणमारचयति।

प्रवर्त्तकोऽस्य रागादिरीशो वा? रागतः कृषौ।
दृष्टा प्रवृत्तिर्, वैषम्यमीशस्य प्रेरणे भवेत्॥
शास्त्रेषु वृष्टिवज्जीवेष्वीशस्याविषमत्वतः।
रागोऽन्तर्याम्यधीनोऽत ईश्वरोऽस्य प्रवर्त्तकः॥ १६॥

अंशो नानाव्यपदेशादन्यथा चापि दासकितवादित्वमधीयत एके॥४३॥ मन्त्रवर्णाच्च ॥ ४४ ॥ अपि च स्मर्यते ॥ ४५ ॥ प्रकाशादिवन्नैवं परः ॥ ४६ ॥ स्मरन्ति च ॥ ४७ ॥ अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत् ॥ ४८ ॥ असन्ततेश्चाव्यतिकरः ॥ ४९ ॥ आभास एव च ॥ ५० ॥ अदृष्टानियमात् ॥ ५१ ॥ अभिसन्ध्यादिष्वपि चैवं ॥ ५२ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥ सूत्रं।

इति द्वितीयाध्यायस्य तृतीयपादः ॥ * ॥

द्वितीयाध्यायस्य तृतीयपादे
सप्तदशाधिकरणमारचयति।

किं जीवेश्वरसाङ्कर्यं व्यवस्था वा? श्रुतिद्वयात्।
अभेदभेदविषयात् साङ्कर्यं न निवार्यते ॥
'अंशोऽवच्छिन्न आभास' इत्यौपाधिककल्पनैः।
जीवेशयोर्व्यवस्था स्यात् जीवानाञ्च परस्परं ॥ १७ ॥

इति द्वितीयाध्यायस्य तृतीयपादः ॥ * ॥

---

तथा प्राणाः ॥ १ ॥ गौण्यसम्भवात् ॥ २ ॥ तत्प्राक्श्रुतेश्च ॥ ३ ॥ तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ सूत्रम्।

द्वितीयाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

किमिन्द्रियाण्यनादीनि सृज्यन्ते वा परात्मना?।
सृष्टेः प्राग्ऋषिनाम्नैषां सद्भावोक्तेरनादिता ॥
एकबुद्ध्या सर्वबुद्धेर्भौतिकत्वाज्जनिश्रुतेः।
उत्पद्यन्ते, ऽथ सद्भावः प्रागवान्तरसृष्टितः ॥ १ ॥

सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥ हस्तादयस्तु स्थितेऽतो नैवं ॥६॥ सूत्रम्।

द्वितीयाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणमारचयति।

सप्तैकादश वाचाणि 'सप्त प्राणा' इति श्रुतेः।
सप्त स्युर्मूर्द्धनिष्ठेषु छिद्रेषु च विशेषणात् ॥

अशीर्षण्यस्य हस्तादेरपि वेदे समीरणात्।
ज्ञेयान्येकादशाख्यानि तत्तत्कार्यानुसारतः ॥ २ ॥

अणवश्च ॥ ७ ॥ सूत्रम्।

द्वितीयाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति।

व्यापीन्यणूनि वाचाणि? साङ्ख्या व्यापित्वमूचिरे।
वृत्तिलाभस्तत्र तत्र देहे कर्मवशाद्भवेत्॥
देहस्थवृत्तिमद्भागेष्वेवाचत्वं समाप्यतां।
उत्क्रान्त्यादिश्रुतेस्तानि ह्यणूनि स्फुरदर्शनात्॥ ३ ॥

श्रेष्ठश्च ॥ ८ ॥ सूत्रं।

द्वितीयाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति।

मुख्यः प्राणः स्यादनादिर्जायते वा? न जायते।
'आनीद्' इति प्राणचेष्टा प्राक् सृष्टेः श्रूयते यतः॥
आनीदिति ब्रह्मसत्त्वं प्रोक्तं वातनिषेधनात्।
'एतस्माज्जायते प्राण' इत्युक्तेरेष जायते ॥ ४ ॥

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ अकरणत्वाच्च न दोषस्तथाहि दर्शयति॥ ११ ॥ पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥ १२ ॥ सूत्रम्।

द्वितीयाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति।

वायुर्वाऽक्षक्रिया वाऽन्यो वा प्राणः? श्रुतितोऽनिलः।
सामान्येन्द्रियवृत्तिर्वा साङ्ख्यैरेवमुदीरणात्॥

'भाति प्राणो वायुने'ति भेदोक्तेरेकताश्रुतिः।
वायुतत्त्वेन सामान्यवृत्तिर्वाचेश्वतोऽन्यता ॥ ५ ॥

अणुश्च ॥ १३ ॥ सूत्रम्।

द्वितीयाध्यायस्य चतुर्थपादे
षष्ठाधिकरणमारचयति।

प्राणोऽयं विभुरल्पो वा? विभुः स्यात्, श्रुत्युपक्रमे।
हिरण्यगर्भपर्यन्ते सर्वदेहे समोक्तितः ॥
समष्टिव्यष्टिरूपेण विभुतैवाधिदैविकी।
आध्यात्मिकोऽल्पः प्राणः स्याद्‌दृश्यस्य यथेन्द्रियं ॥ ६ ॥

ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥ १४ ॥ प्राणवता शब्दात् ॥ १५ ॥ तस्य च नित्यत्वात् ॥ १६ ॥ सूत्रं।

द्वितीयाध्यायस्य चतुर्थपादे
सप्तमाधिकरणमारचयति।

स्वतन्त्रा देवतन्त्रा वा वागाद्याः स्युः? स्वतन्त्रता।
नो चेद्भोगादिजो भोगो देवानां स्यान्न चात्मनः ॥
श्रुतमग्न्यादितन्त्रत्वं भोगोऽग्न्यादेस्तु नोचितः।
देवदेहेषु सिद्धत्वात् जीवो भुङ्क्ते स्वकर्मणा ॥ ७ ॥

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ भेदश्रुतेः ॥ १८ ॥ वैलक्षण्यात् ॥ १९ ॥ सूत्र।

द्वितीयाध्यायस्य चतुर्थपादे
अष्टमाधिकरणमारचयति।

प्राणस्य वृत्तयोऽन्याणि प्राणात् तत्त्वान्तराणि वा? ।
तद्रूपत्वश्रुतेः प्राणनाम्नोक्तत्वाच्च वृत्तयः ॥
श्रमाश्रमादिभेदोक्तेर्गौणे तद्रूपनामनी।
आलोचकत्वेनान्यानि प्राणो नेताऽत्र देहयोः ॥ ८ ॥

संज्ञामूर्त्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥ सूत्रम्।

इति द्वितीयाध्यायस्य चतुर्थपादः ॥ ※ ॥

---

द्वितीयाध्यायस्य चतुर्थपादे
नवमाधिकरणमारचयति।

नामरूपव्याकरणे जीवः कर्ताऽथवेश्वरः? ॥
'अनेन जीवेने'त्युक्तेर्व्याकर्त्ता जीव इष्यते ॥
जीवान्वयः प्रवेशेन सन्निधेः सर्वसर्ज्जने ।
जीवोऽशक्तः, शक्त ईश, उत्तमोक्तिस्त्ववेचितः ॥ ९ ॥

इति द्वितीयाध्यायस्य चतुर्थपादः ॥ ※ ॥

---

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यां ॥ १ ॥ त्र्यात्मकत्वात् तु भूयस्त्वात् ॥ २ ॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥ सूत्रम्।

तृतीयाध्यायस्य प्रथमपादे
प्रथमाधिकरणमारचयति।

अवेष्टितो वेष्टितो वा भूतसूक्ष्मैः पुमान् व्रजेत्?।
भूतानां सुलभत्वेन यात्यवेष्टित एव सः ॥
बीजानां दुर्लभत्वेन निराधारेन्द्रियागतेः।
पञ्चमाहुतियुक्तेश्च जीवस्तैर्याति वेष्टितः ॥ १ ॥

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेदमनेवञ्च ॥ ८ ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥ सूत्रं।

तृतीयाध्यायस्य प्रथमपादे
द्वितीयाधिकरणमारचयति।

स्वर्गावरोही क्षीणानुशयः सानुशयोऽथवा?।
'यावत्सम्पात'वचनात् क्षीणानुशय इष्यते ॥
जातमात्रस्य भोगित्वादैकभव्ये विरोधतः।
चरणश्रुतितः सानुशयः कर्मान्तरैरयं ॥ २ ॥

अनिष्टादिकारिणामपि च श्रुतं ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ स्मरन्ति च ॥ १४ ॥ अपि च सप्त ॥ १५ ॥ तत्रापि च तद्व्यापारादविरोध १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥ स्मर्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ तृतीयशब्दावरोध संशोकजस्य ॥ ॥ २१ ॥ सूत्रम्।

तृतीयाध्यायस्य प्रथमपादे
तृतीयाधिकरणमारचयति।

चन्द्रं याति नवा पापी? 'ते सर्वं' इति वाक्यतः।
पञ्चमाहुतिलाभार्थं भोगाभावेऽपि यात्यसौ ॥
भोगार्थमेव गमनमाहुतिर्व्यभिचारिणी।
सर्वश्रुतिः सुकृतिनां याम्ये पापिगतिः श्रुता ॥ ३ ॥

साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ सूत्रम्।

तृतीयाध्यायस्य प्रथमपादे
चतुर्थाधिकरणमारचयति।

वियदादिस्वरूपत्वं तत्साम्यं वा?ऽवरोहिणः।
'वायुर्भूत्वे'त्यादिवाक्यात्तत्तद्भावं प्रपद्यते॥
खवत् सूक्ष्मो वायुवशो युक्तो धूमादिभिर्भवेत्।
अन्यस्यान्यस्वरूपत्वं न मुख्यमुपपद्यते ॥ ४ ॥

नातिचिरेण विशेषात् ॥ २३ ॥ सूत्रम्।

तृतीयाध्यायस्य प्रथमपादे
पञ्चमाधिकरणमारचयति।

व्रीह्यादेः प्राग्विलम्बेन त्वरया वा?ऽवरोहति।
तत्रानियम एव स्यात्, नियामकविवर्जनात्॥
दुःखं व्रीह्यादिनिर्याणमिति तत्र विशेषितं।
विलम्बस्तेन पूर्वत्र त्वरार्थादवसीयते॥ ५ ॥

अन्याधिष्ठिते पूर्ववदभिलापात्॥ २४॥ अशुद्धमिति चेन्न शब्दात् ॥ २५॥ रेतःसिग्योगोऽथ ॥ २६ ॥ योनेः शरीरं॥ २७ ॥ सूत्रम्।

इति तृतीयाध्यायस्य प्रथमः पादः ॥ ※ ॥

---

तृतीयाध्यायस्य प्रथमपादे
षष्ठाधिकरणमारचयति।

व्रीह्यादौ जन्म तेषां स्यात् संश्लेषो वा? जनिर्भवेत्।
'जायन्त' इति मुख्यत्वात् पश्वहिंसादिपापतः॥

वैधान्न पापसंश्लेष, कर्मव्याप्त्यनुक्तित ।
अविप्रादौ मुख्यजनौ चरणव्याप्तिः श्रुतौ ॥ ६ ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥ * ॥

---

सन्ध्ये सृष्टिराह हि ॥ १ ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ देहयोगाद्वा सोऽपि ॥ ६ ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
प्रथमाधिकरणमारचयति।

सत्या मिथ्याऽथवा स्वप्नसृष्टिः ? सत्या, श्रुतीरणात्।
जाग्रद्देशाविशिष्टत्वादीश्वरेणैव निर्मिता ॥
देशकालाद्यनौचित्यात् बाधितत्वाच्च सा मृषा ।
अभावोक्तेर्द्वैतमात्रसाम्याज्जीवानुवादतः ॥ १ ॥

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
द्वितीयाधिकरणमारचयति ।

नाडीपुरीतद्ब्रह्माणि विकल्प्यन्ते सुषुप्तये ।
समुच्चितानि *वैकार्थ्यात् विकल्प्यन्ते यवादिवत् ॥
समुच्चितानि नाडीभिरुपसृप्य पुरीतति ।
ब्रह्मण्यप्ताणि यात्यैक्य, विकल्पे स्पष्टदोषता ॥ २ ॥

---

* वा ? + वैकार्थ्यादिति पदच्छेदः।

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति।

यः कोऽप्यनियमेनात्र बुध्यते सुप्त एव वा?।
उदबिन्दुरिवाशक्तेर्नियन्तुं कोऽपि बुध्यते ॥
कर्माविद्यापरिच्छेदादुदबिन्दुविलक्षणः।
'स एव बुध्यते' शास्त्रात्तदुपाधेः पुनर्भवात् ॥ ३ ॥

मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
चतुर्थाधिकरणमारचयति।

किं मूर्च्छैका जाग्रदादौ किं वाऽवस्थान्तरो भवेत्?।
अन्यावस्था न प्रसिद्धा तेनैका जाग्रदादिषु ॥
न जाग्रत्स्वप्नयोरेका, द्वैताभानान्न सुप्तता।
मुखादिविकृतेस्तेनावस्थाऽन्या लोकसम्मता ॥ ४ ॥

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ आह च तन्मात्रं ॥ १६ ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ अम्बुवदग्रहणात् तु न तथात्वं ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं ॥ २० ॥ दर्शनाच्च ॥ २१ ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
पञ्चमाधिकरणमारचयति।

ब्रह्म किंरूपि वाऽरूपि भवेन्नीरूपमेव वा?।
द्विविधश्रुतिसद्भावाद्ब्रह्म स्यादुभयात्मकं ॥

नीरूपमेव वेदान्तैः प्रतिपाद्यमपूर्वतः।
रूपं त्वनूद्यते भ्रान्तमुभयत्वं विरुध्यते ॥ ५ ॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ तदव्यक्तमाह हि ॥ २३ ॥ अपि संराधने प्रत्यक्षानुमानाभ्यां ॥ २४ ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ अतोऽनन्तेन तथा हि लिङ्गं ॥ २६ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ पूर्ववद्वा ॥ २९ ॥ प्रतिषेधाच्च ॥ ३० ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
षष्ठमधिकरणमारचयति।

ब्रह्माऽपि 'नेति नेती'ति निषिद्धमथवा नहि?।
द्वित्वात्त्वा ब्रह्मजगती निषिध्येते उभे अपि ॥
वीप्सेयमितिशब्दोक्ता सर्वदृश्यनिषिद्धये।
अनिदं सत्यसत्यञ्च ब्रह्मैकं शिष्यतेऽवधिः ॥ ६ ॥

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ सामान्यात् तु ॥ ३२ ॥ बुद्ध्यर्थः पादवत् ॥ ३३ ॥ स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥ उपपत्तेः ॥ ३५ ॥ तथान्यप्रतिषेधात् ॥ ३६ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ सूत्रम्।

तृतीयाध्यायस्य द्वितीयपादे
सप्तमाधिकरणमारचयति।

अस्त्यन्यद्ब्रह्मणो नो वा विद्यते? ब्रह्मणोऽधिकं।
सेतुलोन्मानवत्त्वाच्च सम्बन्धाद्भेदवत्त्वतः ॥
धारणात् सेतुतोन्मानमुपास्त्यै भेदसङ्गती।
उपाध्युद्भवनाशाभ्यां नान्यदन्यनिषेधतः ॥ ७ ॥

फलमत उपपत्तेः ॥ ३८ ॥ श्रुतत्वाच्च ॥ ३९ ॥ धर्मं जैमिनिरत एव ॥ ४० ॥ पूर्वं तु वादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ सूत्रम्।

इति तृतीयाध्यायस्य द्वितीयः पादः ॥ ※ ॥

---

तृतीयाध्यायस्य द्वितीयपादे
अष्टमाधिकरणमारचयति।

कर्मैव फलदं यद्वा कर्मावाधित ईश्वरः।
अपूर्वावान्तरद्वारा कर्मणः फलदातृता ॥
अचेतनात् फलासृतेः शास्त्रीयात् पूजितेश्वरात्।
कालान्तरे फलोत्पत्तेर्नापूर्वपरिकल्पना ॥ ८ ॥

इति तृतीयाध्यायस्य द्वितीयः पादः ॥ * ॥

---

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सरवच्च तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ४ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
प्रथमाधिकरणमारचयति।

सर्ववेदेष्वनेकत्वमुपास्तेरथवैकता?।
अनेकत्वं, कौथुमादिनामधर्मविभेदतः ॥
विधिरूपफलैकत्वादेकत्वं नाम न श्रुतं।
शिरोव्रताख्यधर्मस्तु स्वाध्याये स्यान्न वेदने ॥ १ ॥

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
द्वितीयाधिकरणमारचयति।

एकोपास्तावनाहार्या आहार्या वा गुणाः श्रुतौ।
अनुक्तत्वादनाहार्या उपकारः श्रुतैर्गुणैः॥
श्रुतत्वादन्यशाखायामाहार्या अग्निहोत्रवत्।
विशिष्टविद्योपकारः स्वशाखोक्तगुणैः समः॥ २॥

अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥ ६॥ नवा प्रकरणभेदात् परोवरीयस्त्वादिवत्॥ ७॥ संज्ञातश्चेत् तदुक्तमस्ति तु तदपि॥ ८॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
तृतीयाधिकरणमारचयति।

एका भिन्नाऽथवोद्गीथविद्या छन्दोग्यकाण्वयोः?।
एका स्यान्नामसामान्यात् संग्रामादिसमत्वतः॥
उद्गीथावयवोङ्कार उद्गातेत्युभयोर्भिदा।
वेद्यभेदेऽर्थवादादिसाम्यमाचाप्रयोजकं॥ ३॥

व्याप्तेश्च समञ्जसं॥ ९॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
चतुर्थाधिकरणमारचयति।

किमध्यासोऽथवा बाध ऐक्यं वाऽथ विशेष्यता?।
अचरस्याच नास्त्यैक्यं नियतं द्वैतभावतः॥
वेदेषु व्याप्त ओङ्कार उद्गीथेन विशिष्यते।
अध्यासादौ फलं कल्प्यं सन्निकृष्टांशलक्षणा॥ ४॥

सर्वाभेदादन्यत्रेमे॥ १०॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
पञ्चमाधिकरणमारचयति।

वशिष्ठत्वाद्यनाहार्यमाहार्यं *वैवमित्यतः।
उक्तस्यैव परामर्शादनाहार्यमनुक्तितः॥
प्राणद्वारेण बुद्धिस्थं वशिष्ठत्वादि नेतरत्।
'एवं'शब्दपरामर्शयोग्यमाहार्यमिष्यते॥ ५॥

आनन्दादयः प्रधानस्य॥ ११॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे॥ १२॥ इतरे त्वर्थसामान्यात्॥ १३॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
षष्ठाधिकरणमारचयति।

नाऽऽहार्या उत वा हार्या आनन्दाद्या अनाहृतिः।
वामनीसत्यकामादेरिवैतेषां व्यवस्थितेः॥
विधीयमानधर्माणां व्यवस्था स्याद् यथाविधि।
प्रतिपत्तिफलानान्तु सर्वशाखासु संहृतिः॥ ६॥

आध्यानाय प्रयोजनाभावात्॥ १४॥ आत्मशब्दाच्च॥ १५॥ सूत्रं।

तृतीयाध्यायस्य तृतीयपादे
सप्तमाधिकरणमारचयति।

सर्वा परम्पराऽऽद्यादेर्ज्ञेया पुरुष एव वा।
ज्ञेया, सर्वश्रुतत्वेन वाक्यानि स्युर्बहूनि हि॥
पुमर्थः पुरुषज्ञानं तत्प्रयत्नः श्रुतौ महान्।
तद्बोधाय श्रुतोऽन्यादिर्वेद्य एकः पुमांस्ततः॥ ७॥

आत्मगृहीतिरितरवदुत्तरात्॥ १६॥ अन्वयादिति चेत् स्यादवधारणात्॥ १७॥ सूत्रम्।

---

* वा' + 'एवम्' इत्यत्र इति पदच्छेदः।

तृतीयाध्यायस्य तृतीयपादे
अष्टमाधिकरणमारचयति।

'आत्मा वा इदम्' इत्यत्र विराट् स्यादथवेश्वरः?।
भूतासृष्टेर्नेश्वरः स्यात्, गवाद्यानयनाद्विराट्॥
भूतोपसंहृतेरीशः स्याद्द्वैतावधारणात्।
अर्थवादो गवाद्युक्तिर्ब्रह्मात्मत्वं विवक्षितं॥ ८॥

कार्याख्यानादपूर्वं॥ १८॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
नवमाधिकरणमारचयति।

द्वयोर्वस्त्वन्यदेकं वा काण्वच्छान्दोग्यपठयोः?।
उभयत्र पृथग्वस्तु, सदात्मभ्यामुपक्रमात्॥
साधारणोऽयं सच्छब्दः 'स आत्मा तत्त्वम्' इत्यतः।
वाक्यशेषादात्मवाची तस्मादस्त्वेकमेतयोः॥ ९॥

समान एवञ्चाभेदात्॥ १९॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
दशमाधिकरणमारचयति।

अनग्नबुद्ध्याचमने विधेये बुद्धिरेव वा?।
उभे अपि विधेयेते, द्वयोरत्र श्रुतत्वतः॥
स्मृतेराचमनं प्राप्तं, प्रायत्यर्थमनूद्य तत्।
अनग्नतामतिः प्राणविदोऽपूर्वा विधीयते॥ १०॥

सम्बन्धादेवमन्यत्रापि॥ २०॥ न वा विशेषात्॥ २१॥ दर्शयति च॥ २२॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
एकादशाधिकरणमारचयति।

शाण्डिल्यविद्याकाण्डानां द्विविधैकविधाऽथवा?।
द्विरुक्तेरेकशाखायां द्वैविध्यमिति गम्यते॥
एका मनोमयत्वादिप्रत्यभिज्ञानतो भवेत्।
विद्याया विधिरेकत्र स्यादन्यत्र गुणे विधिः॥११॥

सम्भृतिद्युव्याप्त्यपि चातः॥२३॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
द्वादशाधिकरणमारचयति।

संहारः स्याद्व्यवस्था वा नाम्नोरहरहस्त्विति?।
विद्यैकत्वेन संहारः स्याद,ध्यात्माधिदैवयोः॥
'तस्योपनिषद्' इत्येवंभिन्नस्थानत्वकीर्त्तनात्।
स्थितासीनगुरुपार्श्वयोरिव नाम्नोर्व्यवस्थितिः॥१२॥

पुरुषविद्यायामिव चेतरेषामनाम्नानात्॥२४॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
त्रयोदशाधिकरणमारचयति।

आहार्या वा नवा तत्र संभृत्यादिविभूतयः?।
आहार्या, ब्रह्मधर्मत्वात् शाण्डिल्यादाववारणात्॥
असाधारणधर्माणां प्रत्यभिज्ञाऽत्र नास्त्यतः।
अनाहार्या ब्रह्ममात्रसम्बन्धोऽतिप्रसञ्जकः॥१३॥

वेधाद्यर्थभेदात्॥२५॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
चतुर्दशाधिकरणमारचयति।

पुंविद्यैका विभिन्ना वा तैत्तिरीयकताण्डिनोः? ।
मरणावभृथत्वादिसाम्यादेकेति गम्यते ॥
बहुना रूपभेदेन किञ्चित् साम्यस्य बाधनात् ।
न विद्यैक्य, तैत्तिरीये ब्रह्मविद्याप्रशंसनात् ॥ १४ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्द स्तुत्युपगानवत् तदुक्तं ॥ २६ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
पञ्चदशाधिकरणमारचयति।

वेधमन्त्रप्रवर्ग्यादि विद्याङ्गमथवा नतु? ।
विद्यासन्निधिपाठेन विद्याङ्गे मन्त्रकर्मणी ॥
लिङ्गेनान्यत्र मन्त्राणां वाक्येनापि च कर्मणां ।
विनियोगात् सन्निधिस्तु बाध्योऽतो नाङ्गता तयोः ॥१५॥

साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥ छन्दत उभयाविरोधात् ॥ २८ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
षोडशाधिकरणमारचयति।

उपायनमनादार्यं हानात् आक्रियतेऽथवा? ।
अश्रुतत्वादनाक्षेपाद्विद्याभेदाच्च नाद्रति ॥
विद्याभेदेऽप्यर्थवाद आदार्थ स्तुतिसाम्यतः ।
हानस्य प्रत्यभिज्ञानादेकविशादिवादवत् ॥ १६ ॥

तृतीयाध्यायस्य तृतीयपादे
षोडशाधिकरणस्य द्वितीयवर्णकमाह।

विधूननं चालनं स्याद्धानं वा चालनं भवेत्?।
'दोधूयन्ते ध्वजाग्राणी'त्यादौ चालनदर्शनात्॥
हानमेव भवेद्वाक्यशेषेऽन्योपायनश्रवात्।
कर्त्ता न ह्यपरित्यक्तमन्यं स्वीकर्त्तुमर्हति॥ १६॥

तृतीयाध्यायस्य तृतीयपादे
षोडशाधिकरणस्य तृतीयवर्णकमाह।

कर्मत्यागो मार्गमध्ये यदि वा मरणात्पुरा।
उत्तीर्य विरजां त्यागः? तथा कौषीतकिश्रुतेः॥
कर्मप्राप्यफलाभावात् मध्ये साधनवर्ज्जनात्।
ताण्डिश्रुतेः पुरा त्यागो, बाध्यः कौषीतकिक्रमः॥१६॥

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः॥ २९॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्॥ ३०॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
सप्तदशाधिकरणमारचयति।

उपास्तिबोधयोर्मार्गः समो यद्वा व्यवस्थितः?।
सम एवोत्तरो मार्ग एतयोः कर्मदानवत्॥
देशान्तरफलप्राप्तौ युक्तो मार्ग उपास्तिषु।
आरोग्यवद्बोधफलं तेन मार्गो व्यवस्थितः॥ १७॥

अनियमः सर्वासामविरोधः शब्दानुमानाभ्यां॥ ३१॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
अष्टाविंशाधिकरणमारचयति।

मार्गः श्रुतस्थलेष्वेव सर्वोपास्तिषु वा भवेत्?।
श्रुतेष्वेव प्रकरणात्, द्विःपाठोऽस्य वृथाऽन्यथा॥
प्रोक्तो विद्यान्तरे मार्गो 'ये चेम' इति वाक्यतः।
तेन बाध्यं प्रकरणं, द्विःपाठश्चिन्तनाय हि॥१८॥

यावदधिकारमवस्थितिराधिकारिकाणाम्॥ ३२॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
ऊनविंशाधिकरणमारचयति।

ब्रह्मतत्त्वविदां मुक्तिः पाक्षिकी नियताऽथवा?।
पाक्षिक्य,ऽपान्तरतमप्रभृतेर्जन्मकीर्त्तनात्॥
नानादेहोपभोक्तव्यभोगोपास्तिफलं बुधाः।
मुक्ताधिकारपुरुषा मुच्यन्ते नियता ततः॥१९॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्॥ ३३॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
विंशाधिकरणमारचयति।

निषेधानामसंहारः संहारो वा? न संहृतिः।
आनन्दादिवदात्मत्वं नैषां सम्भाव्यते यतः॥
श्रुतानामश्रुतानाञ्च निषेधानां समा यतः।
आत्मलक्षणता तस्माद् दार्ढ्यायास्त्युपसंहृतिः॥२०॥

इयदामननात्॥ ३४॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
एकविंशाधिकरणमारचयति।

'पिबन्तौ द्वा सुपर्णे'ति द्वे विद्ये अथवैकधीः?।
भोक्तारौ, भोक्तृभोक्तारावितिविद्ये उभे इमे॥
पिबन्तौ भोक्तृभोक्तारावित्युक्तं च्छि समन्वये।
इयता प्रत्यभिज्ञानात् विद्यैका मन्त्रयोर्द्वयोः॥ २१॥

अन्तरा भूतग्रामवत् स्वात्मनः॥ ३५॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्॥ ३६॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
द्वाविंशाधिकरणमारचयति।

विद्याभेदोऽथ विद्यैक्यं स्यादुषस्तकहोलयोः?।
समानस्य द्विराम्नानाद्विद्याभेदः प्रतीयते।
सर्वान्तरत्वमुभयोर्नास्ति विद्यैकता ततः।
शङ्काविशेषनुत्त्यै द्विःपाठम् 'तत्त्वमसो'तिवत्॥ २२॥

व्यतिहारो विशिंषन्ति हीतरवत्॥ ३७॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
त्रयोविंशाधिकरणमारचयति।

व्यतिहारे स्वात्मरव्योरेकधा धीरुत द्विधा।
वस्त्वैक्यादेकधैक्यस्य दार्ढ्याय व्यतिहारगीः॥
ऐक्येऽपि व्यतिहारोक्त्या धीर्द्विधेशस्य जीवता।
युक्तोपास्त्यै वाचनिकी मूर्त्तिवद्दार्ढ्यमार्थिकं॥ २३॥

सैव हि सत्यादयः ॥ ३८ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
चतुर्विंशाधिकरणमारचयति।

द्वे सत्यविद्ये एका वा यचर्व्यादिवाक्ययोः?।
फलभेदादुभे लोकजयात् पापहतेः पृथक्॥
प्रकृताकर्षणादेका पापघातोऽङ्गधीफलं।
अर्थवादोऽथवा मुख्यो युक्तोऽधिकृतिकल्पकः॥२४॥

कामादीतरत्र तत्र चायतनादिभ्यः॥ ३९ ॥ सूत्रम्।

तृतीयाध्यायस्य तृयीयपादे
पञ्चविंशाधिकरणमारचयति।

असंहृतिः संहृतिर्वा व्योम्नोर्दहरहार्दयोः?।
उपास्यज्ञेयभेदेन तद्गुणानामसंहृतिः॥
उपास्ये क्वचिदन्यत्र स्तुतये वाऽस्तु संहृतिः।
दहराकाश आत्मैव हृदाकाशोऽपि नेतरः॥२५॥

आदरादलोपः॥ ४० ॥ उपस्थितेऽतस्तद्वचनात्॥ ४१ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
षड्विंशाधिकरणमारचयति।

न लुप्यते लुप्यते वा प्राणाहुतिरभोजने।
न लुप्यतेऽतिथेः पूर्वं भुञ्जीतेत्यादरोक्तितः॥
भुज्यर्थानोपजीवित्वात्तल्लोपे लोप इष्यते।
भुक्तिपक्षे पूर्वभुक्तावादरोऽप्युपपद्यते॥२६॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं ॥ ४२ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
सप्तविंशाधिकरणमारचयति।

नित्या अङ्गावबद्धाः स्युः कर्मस्वनियता उत?।
पर्णवत् क्रतुसम्बन्धो वाक्यान्नित्यास्ततो मताः॥
पृथक्फलश्रुतेर्नैता नित्या गोदोहनादिवत्।
'उभौ कुरुत' इत्युक्तं कर्मोपास्त्यनुपासिनोः॥ २७॥

प्रदानवदेव तदुक्तम् ॥ ४३ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
अष्टाविंशाधिकरणमारचयति।

एकीकृत्य पृथग् वा स्याद् वायुप्राणानुचिन्तनं?।
तत्त्वाभेदात्तयोरेकीकरणेनानुचिन्तनं॥
अवस्थाभेदतोऽध्यात्ममधिदैवं पृथक्श्रुतेः।
प्रयोगभेदो राजादिगुणकेन्द्रप्रदानवत्॥ २८॥

लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४५ ॥ अतिदेशाच्च ॥ ४६ ॥ विद्यैव तु निर्धारणात् ॥ ४७ ॥ दर्शनाच्च ॥ ४८ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तं ॥ ५० ॥ न सामान्यादप्युपलब्धेर्मृत्युवत् न हि लोकापत्तिः ॥ ५१ ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
एकोनत्रिंशाधिकरणमारचयति।

कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः।
कर्मशेषाः, प्रकरणात् लिङ्गन्त्वन्यार्थदर्शनं॥

उन्नेयं विधिगा लिङ्गादेव श्रुत्या च वाक्यतः ।
बाध्यं प्रकरणं तस्मात् स्वतन्त्रं वह्निचिन्तनं ॥ २८ ॥

एक आत्मनः शरीरे भावात् ॥ ५३ ॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
त्रिंशाधिकरणमारचयति ।

आत्मा देहस्तदन्यो वा? चैतन्यं मदशक्तिवत् ।
भूतमेलनजं देहे नान्यत्रात्मा वपुस्ततः ॥
भूतोपलब्धिर्भूतेभ्यो विभिन्नाविषयित्वतः ।
सैवात्मा भौतिकाद्देहादन्योऽसौ परलोकभाक् ॥ ३० ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
एकत्रिंशाधिकरणमारचयति ।

उक्थादिधीः स्वशाखाङ्गेष्वेवान्यत्रापि वा भवेत्? ।
सान्निध्यात् स्वस्वशाखाङ्गेष्वेवासौ व्यवतिष्ठते ।
उक्थोद्गीथादिसामान्यं तत्तच्छब्दैः प्रतीयते ।
श्रुत्या च सन्निधेर्बाधस्ततोऽन्यत्रापि यात्यसौ ॥ ३१ ॥

भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
द्वात्रिंशाधिकरणमारचयति ।

ध्येयो वैश्वानरांशोऽपि ध्यातव्यः कृत्स्न एव वा?।
अङ्गेषूपास्तिफलयोरुक्तेरस्त्यंशधीरपि॥
उपक्रमावसानाभ्यां समस्तस्यैव चिन्तनं।
अङ्गोपास्तिफले स्तुत्यै प्रत्येकोपास्तिनिन्दनात्॥ ३२॥

नानाशब्दादिभेदात्॥ ५८॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
त्रयस्त्रिंशाधिकरणमारचयति।

न भिन्ना उत भिद्यन्ते शाण्डिल्यदहरादय.?।
समस्तोपासनश्रैष्ठ्यात् ब्रह्मैक्यादप्यभिन्नता॥
कृत्स्नोपास्तेरशक्यत्वाद् गुणैर्ब्रह्मपृथक्त्वतः।
दहरादीनि भिद्यन्ते पृथक् पृथगुपक्रमात्॥ ३३॥

विकल्पोऽविशिष्टफलत्वात्॥ ५९॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
चतुस्त्रिंशाधिकरणमारचयति।

अहंग्रहेष्वनियमो विकल्पे नियमोऽथवा।
नियामकस्याभावेन याथाकाम्यं प्रतीयतां॥
ईशसाक्षात्कृतेस्त्वेकविषयैव प्रसिद्धितः।
अन्यानर्थक्यविक्षेपौ विकल्पस्य नियामकौ॥ ३४॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्॥ ६०॥ सूत्रं।

तृतीयाध्यायस्य तृतीयपादे
पञ्चत्रिंशाधिकरणमारचयति।

प्रतीकेषु विकल्पः स्याद् याथाकाम्येन वा मितिः?।
अहंग्रहेष्ववितेषु साक्षात्कृत्यै विकल्पनं॥
'देवो भूत्वे'तिवचनाच काचित् साक्षात्कृतो मितिः।
याथाकाम्यमतोऽमीषां समुच्चयविकल्पयोः॥ ३५॥

अङ्गेषु यथाश्रयभावः॥ ६१॥ शिष्टेश्च॥ ६२॥ समाहारात्॥ ६३॥ गुणसाधारण्यश्रुतेश्च॥ ६४॥ न वा तत् सहभावाश्रुतेः॥ ६५॥ दर्शनाच॥ ६६॥ सूत्रम्।

इति तृतीयाध्यायस्य तृतीयपादः॥ ✻॥

---

तृतीयाध्यायस्य तृतीयपादे
षट्त्रिंशाधिकरणमारचयति।

समुच्चयोऽङ्गबद्धेषु याथाकाम्येन वा मितिः?।
समुच्चितत्वादङ्गानां तद्बद्धेषु समुच्चयः॥
'यद्ध गृहीत्वा स्तोत्रस्यारभ' इत्यादिवन्नहि।
श्रूयते सहभावोऽत्र याथाकाम्य ततो भवेत्॥ ३६॥

इति तृतीयाध्यायस्य तृतीयपादः॥ ✻॥

---

पुरुषार्थोऽतः शब्दादिति वादरायण॥ १॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनि॥ २॥ आचारदर्शनात्॥ ३॥ तच्छ्रुतेः॥ ४॥ समन्वारम्भणात्॥ ५॥ तद्वतो विधानात्॥ ६॥ नियमाच॥ ७॥ अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनात्॥ ८॥ तुल्यन्तु दर्शनं॥ ९॥ असार्वत्रिकी॥ १०॥ विभाग शतवत्॥ ११॥ अध्ययनमात्रवत॥ १२॥ नाविशेषात्॥ १३॥ स्तुतयेऽनुमतिर्वा॥ १४॥

कामकारेण चैके ॥ १५ ॥ उपमर्दं च ॥ १६ ॥ ऊर्द्ध्वरेतःसु च शब्दे हि ॥ १७ ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

क्रत्वर्थमात्मविज्ञानं स्वतन्त्रं वाऽऽत्मनो यतः।
देहातिरेकमज्ञात्वा न कुर्यात् क्रतुगं ततः॥
नाद्वैतधीः कर्महेतुर्हन्ति प्रत्युत कर्म सा।
आचारो लोकसंग्राही स्वतन्त्रा ब्रह्मधीस्ततः॥ १॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणमारचयति।

नास्त्यूर्द्ध्वरेताः किं वास्ति? नास्त्यभावविधानतः।
वीरघाते विधेः क्लृप्तावन्धपङ्ग्वादिगा स्मृतिः॥
अस्त्यपूर्वविधेः क्लृप्तिर्वीरहाऽनग्निको गृही।
अन्यादेः पृथगुक्तत्वात् स्वस्थानां श्रूयते विधिः॥ २॥

तृतीयाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणस्य द्वितीयं वर्णकमारचयति।

लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा नवा?।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात्॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथं।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः॥ २॥

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्॥ २१॥ भावशब्दाच्च॥२२॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति।

स्तोत्रं रसतमत्वादि ध्येयं वा गुणवर्णनात्?।
'जुह्रादित्य' इत्यादाविव कर्माङ्गसंस्तुतिः॥
भिन्नप्रकरणस्थत्वान्नाङ्गविध्येकवाक्यता।
'उपासीतेति' विध्युक्तेर्ध्येयं रसतमादिकं॥ ३॥

पारिप्लवार्था इति चेन्न विशेषितत्वात्॥ २३॥ तथा चैकवाक्यतोपबन्धात्॥ २४॥ सूत्रं।

तृतीयाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति।

पारिप्लवार्थमाख्यानं किं वा विद्यास्तुतिः? श्रुतेः।
व्याख्याऽनुष्ठानशेषत्वं तेन पारिप्लवार्थता॥
'मनुर्वैवस्वतो राजे'त्येवं तत्र विशेषणात्।
अत्र विद्यैकवाक्यत्वभावाद्विद्यास्तुतिर्भवेत्॥ ४॥

अत एव चाग्नीन्धनाद्यनपेक्षा॥ २५॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति।

आत्मबोधः फले कर्मापेक्षो नो वा ह्यपेक्षते?।
अङ्गिनोऽङ्गेष्वपेक्षायाः प्रयाजादिषु दर्शनात्॥
अविद्यातमसोर्ध्वंसो दृष्टं हि ज्ञानदीपयोः।
नैरपेक्ष्यं ततोऽत्रापि विद्या कर्मानपेक्षिणी॥ ५॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
षष्ठाधिकरणमारचयति।

उत्पत्तावनपेक्षेयमुत कर्माण्यपेक्षते ?।
फले यथाऽनपेक्षैवमुत्पत्तावनपेक्षता ॥
यज्ञशान्त्यादिसापेक्षं विद्याजन्म श्रुतिद्वयात्।
हलेऽनपेक्षितोऽप्यश्वो रथे यद्वदपेक्ष्यते ॥ ६ ॥

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्यते ॥ ३० ॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
सप्तमाधिकरणमारचयति

सर्वान्नविधिः प्राणविदोऽनुज्ञाऽथवाऽऽपदि ?।
अपूर्वत्वेन सर्वान्नभुक्तिर्ध्यातुर्विधीयते ॥
श्वाद्यन्नभोजनाशक्तेः शास्त्राच्च भोज्यवारणं।
आपदि प्राणरक्षार्थमेवानुज्ञायतेऽखिलं ॥ ७ ॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ सहकारित्वेन च ॥ ३३ ॥ सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥ अनभिभवञ्च दर्शयति ॥ ३५ ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
अष्टमाधिकरणमारचयति

विद्यार्थमाश्रमार्थञ्च द्विःप्रयोगोऽथवा सकृत् ?।
प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते ॥

आङ्गान्नभुक्त्या तृप्तिः स्यादिष्यार्थेनाश्रमस्तथा ।
अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मतः ॥ ८ ॥

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ अपि च स्मर्यते ॥ ३७ ॥ विशेषानुग्रहश्च ॥ ३८ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥ सूत्रं ।

तृतीयाध्यायस्य चतुर्थपादे
नवमाधिकरणमारचयति

नास्त्यनाश्रमिणो ज्ञानमस्ति वा ? नैव विद्यते ।
धीशुद्ध्यर्थाश्रमित्वस्य ज्ञानहेतोरभावतः ॥
अस्त्येव, सर्वसम्बन्धिजपादेश्चित्तशुद्धितः ।
श्रुता हि विद्या रैक्वादेराश्रमे त्वतिशुद्धता ॥ ९ ॥

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
दशमाधिकरणमारचयति ।

अवरोहोऽस्त्याश्रमिणां नवा ? रागात्, स विद्यते ।
पूर्वधर्मश्रद्धया वा यथारोहस्तथैच्छिकः ॥
रागस्यातिनिषिद्धत्वाद्विहितस्यैव धर्मतः ।
आरोहनियमोक्त्यादेर्नावरोहोऽस्त्यशास्त्रत. ॥ १० ॥

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत्तदुक्तं ॥ ४२ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
एकादशाधिकरणमारचयति ।

भ्रष्टोर्द्ध्वरेतसो नास्ति प्रायश्चित्तमथास्ति वा? ।
अदर्शनोक्तेर्नास्त्येवं व्रतिनो गर्द्दभः पशुः ॥
उपपातकमेवैतत् व्रतिनो मधुमांसवत् ।
प्रायश्चित्ताच्च संस्कारात् शुद्धिर्यत्नपरं वचः ॥ ११ ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
द्वादशाधिकरणमारचयति ।

शुद्धः शिष्टैरुपादेयस्त्याज्यो वा दोषहानितः? ।
उपादेयोऽन्यथा शुद्धिः प्रायश्चित्तकृता वृथा ॥
आमुष्मिके च शुद्धिः स्यात्ततः शिष्टास्त्यजन्ति तं ।
प्रायश्चित्तादृष्टिवाक्यादशुद्धिर्लौकिकीष्यते ॥ १२ ॥

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
त्रयोदशाधिकरणमारचयति ।

अङ्गध्यानं याजमानमार्त्विज्यं वा? यतः फलं ।
ध्यातुरेव श्रुतं, तस्मात् याजमानमुपासनं ॥
'ब्रूयादेवंविदुद्गाते'त्यार्त्विज्यत्वं स्फुटं श्रुतं ।
क्रीतत्वादृत्विजस्तेन कृतं स्वामिकृतं भवेत् ॥ १३ ॥

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥ कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
चतुर्दशाधिकरणमारचयति।

अविधेयं विधेयं वा मौनं? तन्न विधीयते।
प्राप्तं पाण्डित्यतो मौनं, ज्ञानवाच्युभयं यतः॥
निरन्तरज्ञाननिष्ठा मौनं पाण्डित्यतः पृथक्।
विधेयं तद्भेददृष्टिप्राबल्ये तन्निवृत्तये॥१४॥

अनाविष्कुर्वन्नन्वयात्॥५०॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
पञ्चदशाधिकरणमारचयति।

बाल्यं वयः कामचारो धीशुद्धिर्वा, प्रसिद्धितः।
वयस्तस्याविधेयत्वे कामचारोऽस्तु नेतरत्॥
मननस्योपयुक्तत्वाद्भावशुद्धिर्विवक्षिता।
अत्यन्तानुपयोगित्वाद्विरुद्धत्वाच्च न द्वयं॥१५॥

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥५१॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
षोडशाधिकरणमारचयति।

इहैव नियतं ज्ञानं पाक्षिकं वा? नियम्यते।
तथाभिसन्धेर्यज्ञादिः श्रौणी विविदिषाजनौ॥
असति प्रतिबन्धेऽत्र ज्ञानं जन्मान्तरेऽन्यथा।
'श्रवणाये'त्यादिशास्त्राद्वामदेवोद्भवादपि॥१६॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते॥५२॥ सूत्र।

तृतीयाध्यायस्य चतुर्थपादे
सप्तदशाधिकरणमारचयति।

मुक्तिः सातिशया नो वा? फलत्वाद्ब्रह्मलोकवत्।
स्वर्गवत् फलभेदेन मुक्तिः सातिशयैव हि ॥
ब्रह्मैव मुक्तिर्न ब्रह्म क्वचित् सातिशयं श्रुतं।
अत एकविधा मुक्तिर्वेधसो मनुजस्य वा ॥ १७ ॥

इति तृतीयाध्यायस्य चतुर्थपादः ॥ ❀ ॥

---

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥ २ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
प्रथमाधिकरणमारचयति।

श्रवणाद्याः सकृत्कार्या आवर्त्त्या वा? सकृद्, यतः।
शास्त्रार्थस्तावता सिध्येत् प्रयाजादौ सकृत्कृते ॥
आवर्त्त्या दर्शनान्तास्ते तण्डुलान्तावघातवत्।
दृष्टे च सम्भवत्यर्थे नादृष्टं कल्प्यते बुधैः ॥ १ ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
द्वितीयाधिकरणमारचयति।

ज्ञात्रा स्वात्मतया ब्रह्म ग्राह्यमात्मतयाऽथवा?।
अन्यत्वेन विजानीयाद्दुःखदुःखिविरोधतः ॥
औपाधिको विरोधोऽत आत्मत्वेनैव गृह्यतां।
गृह्णन्त्येव महावाक्यैः स्वशिष्यान् ग्राहयन्ति च ॥ २ ॥

न प्रतीके न हि सः ॥ ४ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
तृतीयाधिकरणमारचयति।

प्रतीकेऽहन्दृष्टिरस्ति न वा, ब्रह्माविभेदतः।
जीवप्रतीकयोर्ब्रह्मद्वाराऽहन्दृष्टिरिष्यते ॥
प्रतीकत्वोपासकत्वहानिर्ब्रह्मैक्यवीक्षणे।
अवीक्षणे तु भिन्नत्वान्नास्त्यहन्दृष्टियोग्यता ॥ ३ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
चतुर्थाधिकरणमारचयति।

किमन्यधीर्ब्रह्मणि स्यादन्यस्मिन् ब्रह्मधीरुत?।
अन्यदृष्ट्योपासनीयं ब्रह्मात्र फलदत्वतः ॥
उत्कर्षेतिपरत्वाभ्यां ब्रह्मदृष्ट्याऽन्यचिन्तनं।
अन्योपास्त्या फलं दत्ते ब्रह्म तिथ्याद्युपास्तिवत् ॥ ४ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेश्च ॥ ६ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
पञ्चमाधिकरणमारचयति।

आदित्यादावङ्गदृष्टिरङ्गे रव्यादिधीरुत?।
नोत्कर्षो ब्रह्मजत्वेन द्वयोस्तेनैच्छिकी मतिः ॥
आदित्यादिधियाऽङ्गानां संस्कारे कर्मणः फले।
युज्यतेऽतिशयस्तस्मादङ्गेष्वर्कादिदृष्टयः ॥ ५ ॥

आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच ॥ ८ ॥ अचलत्वापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
षष्ठाधिकरणमारचयति।

नास्त्यासनस्य नियम उपास्त्यावुत विद्यते?।
न देहस्थितिमापेक्ष्य मनोऽतो नियमो न हि ॥
शयनोत्थानगमनैर्विक्षेपस्यानिवारणात्।
धीसमाधानहेतुत्वात् परिशिष्यत आसनं ॥ ६ ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
सप्तमाधिकरणमारचयति।

दिग्देशकालनियमो विद्यते ऽथ न विद्यते?।
विद्यते, वैदिकत्वेन कर्मस्वेतस्य दर्शनात् ॥
एकाग्रस्याविशेषेण दिगादिर्न नियम्यते।
'मनोऽनुकूल' इत्युक्तेर्दृष्टार्थं देशभाषणं ॥ ७ ॥

आप्रयाणात्तत्रापि हि दृष्टं ॥ १२ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
अष्टमाधिकरणमारचयति।

उपास्तीनां यावदिच्छमावृत्तिःस्यादुताऽऽमृति?।
उपास्त्यर्थाभिनिष्पत्तेर्यावदिच्छं न तूपरि ॥
अन्त्यप्रत्ययतो जन्म भाव्यतस्तत्प्रसिद्धये।
आमृत्यावर्त्तनं न्याय्यं सदा तद्भाववाक्यतः ॥ ८ ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ सूत्रं।

चतुर्थाध्यायस्य प्रथमपादे
नवमाधिकरणमारचयति।

ज्ञानिनः पापलेपोऽस्ति नास्ति वाऽनुपभोगतः? ।
'आनाश' इति शास्त्रेषु दोषाश्लेषोऽस्य विद्यते ॥
अकर्त्रात्मधिया वस्तुमहिम्नैव न लिप्यते ।
अश्लेषनाशावप्युक्तावङ्गे दोषस्तु सार्थकः ॥ ८ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
दशमाधिकरणमारचयति।

पुण्येन लिप्यते नो वा? लिप्यते, ऽस्य श्रुतत्वतः ।
न हि श्रौतेन पुण्येन श्रौतं ज्ञानं विरुध्यते ॥
अलेपो वस्तुसामर्थ्यात् समानः पुण्यपापयोः ।
श्रुतः पुण्ये पापतया तरणञ्च समं श्रुतं ॥ १० ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
एकादशाधिकरणमारचयति।

आरब्धे नश्यतो नो वा? सञ्चिते इव नश्यतः ।
उभयत्राप्यकर्तृत्वतद्बोधौ सदृशौ खलु ॥
आदेहपातं संसारश्रुतेरनुभवादपि ।
इषुचक्रादिदृष्टान्तात् नैवारब्धे विनश्यतः ॥ ११ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
द्वादशाधिकरणमारचयति।

नश्येन्नोवाऽग्निहोत्रादि नित्यं कर्म ? विनश्यति,।
यतोऽयं वस्तुमहिमा न क्वचित् प्रतिहन्यते॥
अनुपक्तफलांशस्य नाशोऽप्यन्यो न नश्यति।
विद्यायानुपयुक्तत्वाद्बाह्यलेपस्तु काम्यवत्॥ १२॥

यदेव विद्ययेति हि ॥ १८ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
त्रयोदशाधिकरणमारचयति।

किमङ्गोपास्तिसंयुक्तमेव विद्योपयोग्युत ?।
केवलञ्च प्रशस्तत्वात् सोपास्त्यैवोपयुज्यते॥
'केवलं वीर्य्यवद्विद्यासंयुक्तं वीर्य्यवत्तरं'।
इति श्रुतेस्तारतम्यादुभयं ज्ञानसाधनं॥ १३॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य प्रथमपादः ॥ *॥

---

चतुर्थाध्यायस्य प्रथमपादे
चतुर्दशाधिकरणमारचयति।

बहुजन्मप्रदारब्धयुक्तानां नास्त्युतास्ति मुक् ?।
विद्यालोपे कृतं कर्म फलदं, तेन नास्ति मुक्॥

आरब्धं भोजयेदेव न तु विद्यां विलोपयेत्।
सुप्तबुद्धवदक्लेशतादवस्थ्यात् कुतो न मुक्॥ १४॥

इति चतुर्थाध्यायस्य प्रथमपादः॥ * ॥

---

वाङ्मनसि दर्शनाच्छब्दाच्च॥ १॥ अतएव च सर्वाण्यनु॥ २॥ सूत्रं।

चतुर्थाध्यायस्य द्वितीयपादे
प्रथमाधिकरणमारचयति।

वागादीनां स्वरूपेण वृत्त्या वा मानसे लयः।
श्रुति'र्वाङ्मनसी'त्याह स्वरूपे विलयस्ततः॥
न' लीयतेऽनुपादाने कार्यं वृत्तिस्तु लीयते।
वह्निवृत्तेर्जले शान्तेर्वाक्शब्दो वृत्तिलक्षकः॥ १॥

तन्मनः प्राण उत्तरात्॥ ३॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
द्वितीयाधिकरणमारचयति।

मनः प्राणे स्वयं वृत्त्या वा लीयेत स्वयं ततः?।
कारणान्नोदकद्वारा प्राणो हेतुर्मनः प्रति॥
साक्षात् स्वहेतौ लीयेत कार्यं प्राणादिके न तु।
गौणः प्राणादिको हेतुस्ततो वृत्तिलयो धियः॥ २॥

सोऽध्यक्षे तदुपगमादिभ्यः॥ ४॥ भूतेषु तच्छ्रुतेः॥ ५॥ नैकस्मिन् दर्शयतो हि॥ ६॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति।

असोर्भूतेषु जीवे वा लयो? भूतेषु, तच्छ्रुतेः।
'स प्राणस्तेजसी'त्याह न तु जीव इति क्वचित्॥
'एवमेवेममात्मानं प्राणा यन्ती'ति च श्रुतेः।
जीवे लीला सहैतेन पुनर्भूतेषु लीयते॥ ३॥

समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य॥ ७॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
चतुर्थाधिकरणमारचयति।

ज्ञान्यज्ञोत्क्रान्तिरसमा समा वा? नहि सा समा।
मोक्षसंसाररूपस्य फलस्य विषमत्वतः॥
आसृत्यूपक्रमं जन्म वर्त्तमानमतः समा।
पश्चात्तु फलवैषम्यादसमोत्क्रान्तिरेतयोः॥ ४॥

तदापीतेः संसारव्यपदेशात्॥ ८॥ सूक्ष्मं प्रमाणञ्च तथोपलब्धेः॥ ९॥ नोपमर्देनातः॥ १०॥ अस्यैव चोपपत्तेरेष उष्मा॥ ११॥ सूत्रं।

चतुर्थाध्यायस्य द्वितीयपादे
पञ्चमाधिकरणमारचयति।

स्वरूपेणाथ वृत्त्या वा भूतानां विलयः परे?।
स्वरूपेण लयो युक्तः स्वोपादाने परात्मनि॥
आत्मज्ञस्य तथात्वेऽपि वृत्त्यैवान्यस्य तल्लयः।
न चेत् कस्यापि जीवस्य न स्याज्जन्मान्तरं क्वचित्॥ ५॥

प्रतिषेधादिति चेन्न शारीरात्॥ १२॥ स्पष्टो ह्येकेषां॥ १३॥ स्मर्यते च॥ १४॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
षष्ठाधिकरणमारचयति।

किं जीवादथवा देहात् प्राणोत्क्रान्तिर्निवार्यते?।
जीवान्निवारणं युक्तं, जीवेद्देहोऽन्यथा सदा॥
तप्ताश्मजलवद्देहे प्राणानां विलयः स्मृतः।
उच्छ्वयत्यत्र देहोऽतो देहात् सा विनिवार्यते॥ ६॥

तानि परे तथाह्याह॥ १५॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
सप्तदशाधिकरणमारचयति।

अस्य वागादयः स्वस्वहेतौ लीनाः परेऽथवा?।
'गताः कला' इति श्रुत्या स्वस्वहेतुषु तल्लयः॥
नद्यब्धिलयसाम्योक्तेर्विद्वद्दृष्ट्या लयः परे।
अन्यदृष्टिपरं शास्त्रं गता इत्याद्युदाहृतं॥ ७॥

अविभागो वचनात्॥ १६॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
अष्टमाधिकरणमारचयति।

तल्लयः शक्तिशेषेण निःशेषेणाथवाऽऽत्मनि?।
शक्तिशेषेण युक्तोऽयावज्ञानिष्वेतदीक्षणात्॥
नामरूपविभेदोक्तेर्निःशेषेणैव संलयः।
अज्ञे जन्मान्तरार्थन्तु शक्तिशेषलमिष्यते॥ ८॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
नवमाधिकरणमारचयति।

अविशेषो विशेषो वा स्यादुत्क्रान्तेरुपासितुः ?।
स्रुत्युपक्रमयोर्ध्योरविशेषोऽन्यनिर्गमात् ॥
मूर्द्धन्ययैव नाड्याऽसौ व्रजेन्नाडीविचिन्तनात् ।
विद्यासामर्थ्यतस्तापि विशेषोऽस्त्यन्यदर्शनात् ॥ ८ ॥

रश्म्यनुसारी ॥ १८ ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १९ ॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
दशमाधिकरणमारचयति।

अहन्येव मृतो रश्मिं याति निश्यपिवा निशि ?।
सूर्यरश्मेरभावेन मृतोऽहन्येव याति तं ॥
यावद्देहं रश्मिनाड्योर्युक्तो ग्रीष्मे क्षपास्वपि ।
देहदाहात् श्रुतत्वाच्च रश्मीन्निश्यपि यात्यसौ ॥ १० ॥

अतश्चायनेऽपि दक्षिणे ॥ २० ॥ योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य द्वितीयपादः ॥ * ॥

---

चतुर्थाध्यायस्य द्वितीयपादे
एकादशाधिकरणमारचयति।

अयने दक्षिणे मृत्वा धीफलं नैत्यथैति वा ?।
नैत्युत्तरायणाख्योक्तेर्भीष्मस्यापि प्रतीक्षणात् ॥
आतिवाहिकदेवोक्तेर्वरस्यात्ये प्रतीक्षणात् ।
फलैकान्त्याच्च विद्यायाः फलं प्राप्नोत्युपासकः ॥ ११ ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥ * ॥

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
प्रथमाधिकरणमारचयति।

नानाविधो ब्रह्मलोकमार्गो यद्वार्चिरादिकः ?।
नानाविधः स्याद्विद्यासु वर्णनादन्यथान्यथा ॥
एक एवार्चिरादिः स्यान्नानाश्रुत्युक्तपूर्वकः।
यतः पञ्चाग्निविद्यायां विद्यान्तरवतां श्रुतः ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्यां ॥ २ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
द्वितीयाधिकरणमारचयति।

सन्निवेशयितुं वायुरत्राशक्योऽथ शक्यते ?।
न शक्यो वायुलोकस्य श्रुतक्रमविवर्जनात् ॥
वायुश्छिद्रादिनिष्क्रम्य स आदित्यं व्रजेदिति।
श्रुतेरर्वाग्रवेर्वायुर्देवलोकस्ततोऽप्यधः ॥ २ ॥

तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ सूत्रम्।
चतुर्थाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति।

वरुणादेः सन्निवेशो नास्ति तत्राथ विद्यते ?।
नास्ति, वायोरिवैतस्य व्यवस्थाश्रुत्यभावतः ॥
विद्युत्सम्बन्धिवृष्टिस्थनीरस्याधिपतित्वतः।
वरुणो विद्युतस्तूर्ध्वं तत इन्द्रप्रजापती ॥ ३ ॥

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात् तत्सिद्धेः ॥ ५ ॥
वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ सूत्रम्।

चतुर्थाध्यायस्य तृतीयपादे
चतुर्थाधिकरणमारचयति।

मार्गचिह्नं भोगभूर्वा नेतारो वार्चिरादयः ?।
आद्यौ स्यातां, मार्गचिह्नसारूप्याल्लोकशब्दतः।
'अन्ते गमयती'त्युक्तेर्नेतारस्तेषु चेदृशः।
निर्द्देशोऽस्त्यत्र लोकाख्या तन्निवासिजनान् प्रति ॥ ४ ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ सूत्रम्।

चतुर्थाध्यायस्य तृतीयपादे
पञ्चमाधिकरणमारचयति।

परं ब्रह्माथ वा कार्यमुदङ्मार्गेण गम्यते।
मुख्यत्वादमृतत्वोक्तेर्गम्यते परमेव तत् ॥
कार्यं स्यात्, गतियोग्यत्वात् परस्मिंस्तदसम्भवात्।
सामीप्याद्ब्रह्मशब्दोक्तिरमृतत्वं क्रमाद्भवेत् ॥ ५ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥ १६ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य तृतीय पादः ॥ ※ ॥

---

चतुर्थाध्यायस्य तृतीयपादे
षष्ठाधिकरणमारचयति।

प्रतीकोपासकान् ब्रह्मलोकं नयति वा नवा।
अविशेषश्रुतेरेतान् ब्रह्मोपासकवन्नयेत् ॥

ब्रह्मप्रतेरभावेन प्रतीकार्थफलश्रवात्।
न तन्नयति पञ्चाग्निविदो नयति तच्छ्रुतेः ॥ ६ ॥

इति चतुर्थाध्यायस्य तृतीयपादः ॥ * ॥

---

सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

नाकवन्नूतनं मुक्तिरूपं यद्वा पुरातनं?।
अभिनिष्पत्तिवचनात् फलत्वादपि नूतनं ॥
'स्वेन रूपेणेति' वाक्ये स्वशब्दात्तत् पुरातनं।
आविर्भावो ऽभिनिष्पत्तिः फलस्याज्ञानहानितः ॥१॥

अविभागेन दृष्टत्वात् ॥ ४ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणमारचयति।

मुक्तरूपाद्ब्रह्म भिन्नमभिन्नं वाऽथ भिद्यते?।
'सम्पद्य ज्योतिरि'त्येवं कर्मकर्तृभिदोक्तितः ॥
अभिनिष्पन्नरूपस्य 'स उत्तमः पुमानिति'।
ब्रह्मत्वोक्तेरभिन्नं तद् भेदोक्तिरुपचारतः ॥ २ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति।

क्रमेण युगपद्वाऽस्य सविशेषाविशेषकौ ?।
विरुद्धत्वात् कालभेदाद्व्यवस्था श्रुतयोस्तयोः॥
मुक्तामुक्तदृशोर्भेदाद्व्यवस्था सम्भवे सति।
अविरुद्धं यौगपद्यमश्रुतं क्रमकल्पनं॥ ३॥

सङ्कल्पादेव तु तच्छ्रुतेः॥ ८॥ अत एव चानन्याधिपतिः॥ ९॥
सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति।

भोग्यसृष्टावस्ति बाह्यो हेतुः संकल्प एव वा ?।
आशामोदकवैषम्याद्धेतुर्बाह्योऽस्ति लोकवत्॥
'संकल्पादेव पितर' इति श्रुत्यावधारणात्।
संकल्प एव हेतुः स्याद्वैषम्याद्ध्यानुचिन्तनात्॥ ४॥

अभावं बादरिराह ह्येवं॥ १०॥ भावं जैमिनिर्विकल्पामननात्॥ ११॥ द्वादशाहवदुभयविधं बादरायणोऽतः॥ १२॥ तन्वभावे सन्ध्यवदुपपद्यते॥ १३॥ भावे जाग्रद्वत्॥ १४॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति।

व्यवस्थितावैच्छिकौ वा भावाभावौ तनोर्यतः ?।
विरुद्धौ तेन पुंभेदादुभौ स्यातां व्यवस्थितौ॥
एकस्मिन्नपि पुंस्येतावैच्छिकौ कालभेदतः।
अविरोधात् स्वप्नजाग्रद्भोगवद् युज्यते द्विधा॥ ५॥

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
षष्ठाधिकरणमारचयति।

निरात्मनोऽनेकदेहा सात्मका वा? निरात्मका।
अभेदादात्ममनसोरेकस्मिन्नेव वर्त्तनात्॥
एकस्मान्मनसोऽन्यानि मनांसि स्युः प्रदीपवत्।
आत्मभिस्तदवच्छिन्नैः सात्मकास्तुस्तिधेत्यत॥ ६॥

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥ दर्शयतश्चैव प्रत्यक्षानुमाने ॥ २० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य चतुर्थपादः ॥ ※ ॥

चतुर्थाध्यायस्य चतुर्थपादे
सप्तमाधिकरणमारचयति।

जगत्स्रष्टृत्वमस्त्येषां योगिनामथ नास्ति वा?।
'अस्ति स्वाराज्यमाप्नोति' त्युक्तैश्वर्यानवग्रहात्॥
सृष्टावप्रकृतत्वेन स्रष्टृता नास्ति योगिनाम्।
स्वाराज्यमीशे भोगाय स्वेद्भुक्तिश्च विद्यया॥ ७॥

इति चतुर्थाध्यायस्य चतुर्थपादे ॥ * ॥

चतुर्थाध्याय समाप्त।
समाप्तश्चाय ग्रन्थ।